श्री

# दक्षिणामूर्तिदेवस्तुतिः

श्लो॥ शक्त्या य श्चिदचिद्विशेषयुतया युक्तो जगद्रूपया
ज्ञानेच्छाकृतिरूपया सहजया सन्तिष्ठते केवलः ।
जन्मादीनि करोति पञ्च जगतः कृत्यानि यो लीलया
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ १

सर्गाऽवस्थजगच्छरीरकतया य स्तत्प्रकारः परः
सूक्ष्मस्थूलदशाविशेषितजगद्रूपेण विद्योततं ।
इत्यावेदयितु वदति निगमाः कार्यंच, यं कारणं ।
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ २

यत्राऽऽन्तर्गणिकं विशेष मितरे कैवल्यमेवाऽन्ततो
मन्वाना विवदंति मुख्य मपरे देवं विशिष्टे श्रुतं ।
ऐक्यं यस्यच यद्विशेषणगत भेदं ब्रवीति श्रुति
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ३

बह्वचो नैगमसूक्तय श्चिदचितो रीशस्य यस्यैवच
भोक्तृत्वेनच भोग्यभाववशात स्तत्प्रेरकत्वादपि ।
वैलक्षण्य मवार्यमेव सहजं संचक्षते सादरं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ४

शास्तेऽन्त स्समनुप्रविश्य सततं यश्चेतनाचेतनौ
तौ यस्यैव नियम्यभाववशात स्तन्वा बुवाच श्रुतिः ।
एवं य श्चिदचिद्विभागकलनोदंचज्जगद्विग्रह
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ५

सार्वज्ञ्यप्रमुखं शुभं गुणगणं ब्रूते गुणित्वाऽर्थिका
क्षुत्तृष्णादि मभव्यमेव नुदते किंचाऽगुणत्वाऽर्थिका ।
यस्यै वोभयलिंगतां पशुपते र्वक्तुं प्रवृत्ता श्रुति
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ६

तादात्म्यं त दसीति बोधयति य स्येशस्य शिष्यं गुरुः
ब्रह्माऽस्मीति विभाव्य याति य मनन्येनैव भावेन हि ।
पत्यु र्यस्य पशो रुपासनविधा वद्वैत माह श्रुति
स्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥ ७



एतद्भाष्यलेखन – मुद्रण द्रव्यदाता

शिवपूजाधुरंधरः

**म ॥ रा ॥ श्री आकारं नरसिंगं गुप्तः**



नरसिंगगुप्तस्य मातापितरौ

**म॥ रा॥ श्री॥ की॥ शे॥ आकारपु चेन्नरय श्रेष्ठी**

**श्रीमति राजमांबाच्च**



श्री निरतगौरीपूजासक्ताभ्यां, अनंतलक्ष्मी सुशीला धर्मपत्नीभ्यां समेत·

**म ॥ रा ॥ श्री आकारपु नरसिंग गुप्तः**



आकारपु नर्सिंगरावुस्य पालकपुत्र

राजचंद्रविश्वेश्वररावु

तस्य भार्या

सौ॥ शरच्चंद्रिकादेवी



श्रीमदुद्भटाराध्यवंश पयःपारावार राकासुधाकराः निगमागमाथर्वण पदवाक्यप्रमाण पारीणाः संस्कृतांध्रकवितारचनाधुरीणाः नीलकंठभाष्यस्थित शिवचिंतामणिप्रभानामक व्याख्यालेखन मुद्रणहेतुभूताः एतद्भाष्यपिठिका रचयितारः निखिलभारतीय शैवमहापीठ मठधर्मादाय पर्यवेक्षणाधिकारिणः पाशुपतव्रतदीक्षाप्रदानाचार्यस्वामिनः शैवमहापीठाधिपतयः विद्याप्रवीण विद्वान् जगद्गुरु लोकाराध्येत्यादि बिरुदांविताः

**शिवयोगि मुदिगोंड वीरेशलिंगाराध्य सद्गुरुस्वामिनः**

# पीठिका

ओं नम शिवाय

श्लो ॥ श्रीशिवं दक्षिणा मूर्तिं । नत्वाच गुरु जंगमान् ।
श्रीनीलकंठ भाष्यस्य । ब्रुवे तत्व विनिर्णयम् ।
शिव तत्व विजिज्ञासा । पराणां सुखबोधिनी ।
मुमुक्षूणा मियंकल्पलता भाष्यस्यपीठिका ।
मदुक्त मार्ग पथिकाः । निश्चितार्था नशंकिताः ।
दीक्षिता स्सौख्य मासाद्य । शिवानुग्रह माप्नुयुः ॥

## निवेदनम्

अयि निष्पक्षपात धिषणाः गुणैक लोलुपाः यथार्थ विषय परिज्ञान कुतुकाः वाचक महाशयाः नीलकंठ भाष्य प्रमेय भूत पदार्थ त्रयं तत्प्रतिपादक शैव दर्शन मधिकृत्य किंचिन्निवेदयामि ॥

## शैव दर्शनम्

दृश्यते साक्षात्क्रियते अनेनेति दर्शनम् । शैवानां दर्शनं शैवदर्शनं शैवंचतत् दर्शनंच शैवदर्शनमितिवा व्युत्पत्तिः । इदमेव मीमांसा दर्शन मिति कथ्यते ॥

मीमांसा च पूर्वोत्तर भागेन द्विविधा । अथातो धर्म जिज्ञासेत्यारभ्य अनावृत्ति श्शब्दा दित्यंत मेकवाक्यतैव भाष्यकरेण प्रतिपादिता । पूर्व मीमांसा जैमिन्याचार्येण, उत्तर मीमांसा बादरायणेनच विरचिता । कर्म ज्ञान समुच्चयवादिना पाशुपतव्रत धारिणा नीलकंठा राध्येन, पूर्वोत्तर मीमांसा द्वयं शैवदर्शनत्वेन प्रत्यपादि । इदंच शैवं दर्शनं सर्वदर्शनेभ्यः प्राचीनमिति निश्चप्रचमेव ॥

## दर्शनाधिपतिः

अइउण् इत्यादिचतुर्दशसूत्राणि माहेश्वराण्येव । तस्मादीशान स्सर्वविद्यानामिति श्रुतिरपि सर्वदर्शनानां माहेश्वरोपज्ञत्वमेव कथयति । एतेन सर्वविद्याधिपति रीश्वरएवेति निश्चीयते अतएवोक्तं नीलकंठभाष्ये ८८ पृष्टे । अष्टादशाना मेतासां विद्यानां भिन्नवर्त्मनां । आदिकर्ता शिव स्साक्षाच्छूलपाणिरिति स्मृत इति ॥

## शिवः

अगोचर [illegible] समस्त भुवन [illegible] पञ्चभूत [illegible] शिव सदाशिव महेश्वर रूप तत्व त्रयाणां गुणानां [illegible] कारणभूतः परशिव परब्रह्म - महालिंग नामभि वेदेषु पठ्यते। शिव [illegible] शिवंकर स्मार्त मन्यत्परित्यज्य - "[illegible] भस्तु" शिवलिंगा [illegible]। ज्योतिर्लिंग [illegible] लिंगरूपत योपासकानां हृदय मध्ये तिष्ठतीति देवाधिकरणे [illegible] ॥

## शिवलिंगम्

नहि, भारतदेशे, आसेतु हिमाचल पर्यंतं काशीरामेश्वरादिक्षेत्रप्वेन शिवलिंग पूजा शिवलिंग प्रतिष्ठाच दृश्यते। किंतु विदेशेष्वपि। रोमकदेशे शिवलिंगानां प्रियफसफल्लस नामधेयानां फाल्गुणमासे वसंतोत्सव नाम्ना शिवपूजा प्रवर्तते। फलेश शब्दात् फल्लस शब्दोत्पत्ति र्बभूवेति कर्नल ताड महाशय जगाद। अरेबियानां लातनामक शिवलिंगस्योन्नत्यं पंचाशन्मानवौन्नत्येन सदृश मुच्यते। कांचनगर्यां मक्केश्वर लिंग वर्ततइति भविष्यत्पुराणे ब्रह्मपर्वण्यस्ति ॥

अमेरिका फ्रान्सु स्काटलेंडु ग्रीसु देशेषु शिवलिंगार्चना वर्तते। ईजिप्टु समीपस्थित मेफिन् असीरिन् क्षेत्रेषु शिवलिंगानां क्षीरेण अभिषेक बिल्वदलैश्च पूजा भवति। हेलू पोलीसुनगरस्य शिवालये त्रिशत पादौन्नत्यवच्छिवलिंग मस्ति तस्य खर्जूरपत्रे पूजा भवति। बाबलीनगरं द्वादश शत पादोन्नत्यवत् महाशिवलिंगं वर्तते। नकुश्राच्ये तत्सदृश लिंग मस्ति ॥

इंडोचयना स्थित अनामदेशे मीसोन् ग्रामो वर्तते। प्राचीनकाले चैतस्य चपा इति नाम। भद्रवर्म महाराजेन शिवालय निर्माण कृतम्। एतस्य शासनेप्वादौ "ॐ नम शिवायेति पञ्चाक्षरी महामंत्रो लिखितः ॥

राजा जयेंद्र वर्मा क्रीस्तोः पश्चात् १०८० संवत्सरे शंगुभद्रेश्वर स्वामिनः विंशत्युत्तर पंचदश तुलापरिमितसुवर्णेन सुवर्ण कवच कारयामास ॥

क्रीस्तोः पूर्वं बैक्ट्रियन् राजानः शकाः कुषाणाः कानिष्काश्च स्वपरिपालन मुद्रासु [ सिक्का ] शिव विग्रहा नलिखन्। एवमेव सकल प्रपंच सृष्टि कर्तुः शिवलिंगरूपस्य परशिवस्य पूजा सर्वत्र विधत इत्यत्र नास्ति विचिकित्सा ॥

## शिव स्वरूपम्

शिवस्य परब्रह्मण "द्वेवाव ब्रह्मणोरूपे मूर्त चा मूर्त मेवच" इति निर्गुणरूप मेकं सगुणरूप मेकञ्च वर्तते। मूर्तामूर्त मितीदमेव कथ्यते। निर्गुण रूपं नाम अप्राकृत दिव्यमंगळ विग्रहवत् संकोच विकासावस्था रहितं, अग्नौ दाहक शक्तिवत् सूर्याचंद्रमसो रातप चंद्रिका विव, अपृथक्सिद्ध चिदचिदात्मक शक्ति विशिष्ट ममूर्त्यात्मकं महालिंग स्वरूप मेव। सगुणरूपं नाम मूर्त्यात्मकं कार्य ब्रह्म रूपं भवति। मूर्तरूपाणां वेराणां पूजा ध्यानलंकाराः अमूर्तरूपाणां शिवलिंगानामभिषेक पूजादयश्चभवंति। द्वे ब्रह्मणी वेदितव्ये परंचापरंचेति श्रुत्या महालिंगगर्भक शिवस्य परापरनाम्ना द्वैविध्यं श्रूयते। परशिवः कारणब्रह्मा केवलो निर्गुणोऽभूर्तइति कार्यब्रह्मा शिवो मूर्त स्सगुण इत्युच्यते अतएव शिवलिंगाकृतिरेव मानवः। सुखासनस्थेन पुंसाबाहुद्वय प्रसारे पुरतःकृते सति लिंगाकारः। पुंसस्तस्योत्थानेच मूर्त्याकारोभवति। शिवस्यैकस्यैव रूपद्वयं वर्तते नत्वन्यदेवतानां ॥

## परशिव सृष्टिः

वातूले सृष्ट्यर्थं सर्वतत्वानां लोकस्योत्पत्तिकारणं ॥ योगिना मुपकाराय स्वेच्छयाचिंत्यते शिवः। तस्य चिंता पराशक्ति सहस्रांसेन जायते। तच्छक्तेस्तु सहस्रांशा दादिशक्ति समुद्भवः। आदिशक्ते स्सहस्रांशा दिच्छाशक्ति समुद्भवः। इच्छाशक्तिसहस्रांशात् ज्ञानशक्ति समुद्भवः। ज्ञानशक्ति सहस्रांशा त्क्रियाशक्ति समुद्भवः। इत्यादिना पराशक्त्यादि पंचशक्तिसमेत शिवसाद अमूर्तसाद - मूर्तसाद - कर्त्तृसाद - कर्मसाद वत्सदाशिवत्वेन परशिवः समवातरत् ॥

सृष्टि स्थिति लयावहः पंचविंशति भेद विशिष्टस्सकलो महेश्वर स्सदाशिव तत्वांतर्गत कर्मसादा दाविर्भूतः ॥

सृष्टि कर्तृत्वाऽधिकारिणः रुद्र भट्टारक-अनंतेश-श्रीकंठादयो महेश्वरादेव समुद्भूताः। आकाश नामक महेश्वरादेवभूतसृष्टि स्संजाता। परशिवकारणत्वा त्सृष्टेः, सर्वापिसृष्टिः परब्रह्मण स्समुत्पन्नैवेतिप्रथा जगतिवर्तते ॥

## शैवाः

शिवलिंग मिष्ट प्राण भावलिंगात्मना, आचारलिंग गुरुलिंग शिवलिंग चरलिंग प्रसादलिंग महालिंगात्मनाच, पाशुपत व्रत दीक्षां गृहीत्वा ये ध्यान पूजादिभि रुपासते त एव शैवाः। एतएवाराध्या इत्युच्यंते। चातुर्वर्ण्य गुरुत्वं - वर्णाश्रमधर्मः - शिवलिंग धारणं परमेश्वरोपासनं चैषां प्रधान धर्माः। पूर्वस्मिन् काले, शैवेषु बहुषु पाशुपतव्रतधारिषु सत्स्वपि विमतप्रचाराधि

क्यात स्वमतप्रचाराभावात् कलिम्वगावाच [illegible] [illegible] [illegible]
परिदृश्यंते ।

अष्टादशवर्णेषु शिवलिंगधारिण सति [illegible] [illegible] [illegible] भवति यथापौंडरीकादि यज्ञकर्तारः । एते, आंध्र कर्णाटक महाराष्ट्रादि देशेषु [illegible] काश्मीरा द्युत्तर हिंदूस्थानेच निवसतीति विज्ञायंते ॥

## शैवेष्वाचार्यमुख्याः

रेवणो मरुल श्चेको राम स्सिद्धाश्च स्मृताः
श्वेताचार्यो लाकुलीशो । नीलकंठो जगद्गुरु ।
उद्भटः कोटिपल्लिश्च । वेमाराध्य प्रकीर्तित
श्रीपति र्मंचन श्चैवमाल्लिकार्जुनपंडित ॥

एते द्वादश शैवाचार्या स्वस्तत्कालेषु शिवाद्वैत भक्त्युद्धरणार्थं [illegible] कृतावतारा श्शैवमत व्याप्तिचक्रु ॥

## रेवणाराध्यः

अयंच कुल्यपाकपुरे सोमेश्वर लिंगा त्प्रादुरासीत् । शिवाद्वैत सिद्धांतप्रचार मकरोत । अगस्त्यमहर्षे श्शिवतत्व मुपादिशत् । शंकराचार्यस्य चंद्रमौळीश्वरलिंग प्रादात् । [illegible] गोत्रजः भुवनेश्वरपरिपालकस्य विश्ववर्मभूपालस्य तनय चंद्रकेतु मुज्जीवयामास । स्वेष्टलिंग महिमानं प्रदर्श्य नागरिकाणां दिव्यलोचनानिदत्वा कैलासमदर्शयामास । [illegible] इत्युच्यते॥ चतुर्दश शत वत्सरान् भूमौ प्रचारमकरोत् । अस्य भार्या दुर्गादेवी पुत्रा [illegible] बभूवु. ॥

## मरुळाराध्यः

भारद्वाजसगोत्रः सदाशिवांशादुद्भूय शैवसिद्धांतव्याप्ति चकार । गोकर्णेतपस्तेपे । एतस्य जाया शिवज्ञानांबिका । स्वेष्टलिंगधारी चायं श्रीनगरसमीपे वीरकाल महीपाले तटाकनिर्माणाय भृतिमदत्वैव शिवलिंगधारिभिः मृत्कल्लोल वहनकर्मकारयतिसति स्वहस्त धृत सुवर्ण दंडेनेव तत्कर्म कारयन् सर्वानपि तान् मोचयामास । भस्मोदकेन वीरकालंजीवयामास । आत्मानं प्रतारयितुं समागतमिंद्रंशशास ।

## एकोरामाराध्यः

जगद्गुरु रेकोरामाराध्यः रामनाथलिंगे अप्राकृतदिव्यदेहधारी अवततार एतस्य घंटाकर्ण नामांतरं । हिमालये निवासः घंटाकर्णह्रदइति नाम्ना, एकस्तटाकः केदारमंडलेविद्यते.।

सर्वजंतू न्स्वाधिकारे निवेशयामास । मांधाता - बाणासुरपुत्री उषादेवीचै तस्माद्विज्ञानं समुपार्जया मासुः । केदारपीठस्योत्तरदेशे भूपाला शिशष्या बहवोवर्तते । काश्यां विश्वेश्वरानुग्रहा ज्जातस्य हारीतपुत्रस्य विश्वेश्वरस्य हारीतगोत्रज स्यैकोराम इतिपुत्रोजातः । एकोरामएवदीक्षामेतस्यददौ । एकोरामस्य पुत्रः पल्लिनाथः । अयंच ग्रीष्मे तपश्शक्तया तटाकं सोमेश्वरक्षेत्रे कल्पयित्वा राज्ञः दाहापनोदनेन मल्लमपल्लि नामकाग्रहारं तस्माल्लब्धवान् ॥

## श्वेताचार्यः

सर्ववेदांत तत्वदर्शी पदवाक्यप्रमाणज्ञ श्वेताचार्यो बहूनामंतेवासिनां शिवाद्वैतसिद्धांत प्रतिपादकब्रह्मसूत्राणि शास्त्राणिचोपदिश्य योगाचार्येषु प्रधानस्थान मध्यरोहत् ॥

## लकुलीशाचार्यः

अस्य नकुलीशइतिनामांतर मस्तीतिकेचित । वामहस्ते बीजपूरफलं दक्षिणहस्ते लकुली शिरसि त्रिनेत्रंच यस्य वर्तते सएव लकुलीशः । एतस्य कुशिक - गर्ग - मित्र - कौरुष्य नामक शिष्याश्चत्वारो वर्तते ॥

अथ मत्युग्रं तपः कृत्वा बरोडादेशा दारभ्य मधुरापर्यतं प्राचीनं पाशुपतं प्रचारयामास। मधुरानगर्यां पाशुपतशैवस्तंभ स्सांप्रतमप्येको वर्तते । क्रीस्तोःपूर्वद्वितीय शताब्द्यांवर्तते ॥

## जगद्गुरु नीलकंठशिवाचार्यः

पाशुपतव्रतधारिणा मष्टादशवर्णाना मयमेव शिवाद्वैत सिद्धान्त बोधक शारीरक ब्रह्मसूत्र मीमांसा भाष्य मरी रचत् । एतस्यैव नीलकंठभाष्यमितिनामांतरम् ॥

नीलकंठशिवाचार्यः भारद्वाजगोत्रिकः । हैदराबाद राष्ट्रांतर्गत काळेश्वरक्षेत्रवासी । केचन काळहस्तिक्षेत्रवासीतिकथयंति । पिताचास्यविश्वेश्वराराध्यः । माताच गौरीदेवी । नीललोहित रुद्रांशेन संभूतः । बोधायनमहर्षि कृतोपनयनश्श्वेताचार्यलब्ध शांभववेधादीक्षा प्राप्त महा प्रतिभाशाली शैवमतप्रचारमकरोत् ॥

नीलकंठाराध्यस्यभार्या सर्वमंगळा । इयंच हारीतगोत्रोद्भवस्य वीरभद्राराध्यस्य सुता । काळेश्वर वर प्रादुर्भूतस्य नीलकंठ शिवाचार्यस्य सोमेश्वर - अघोरनाथ - काळेश्वर श्रीगिरीश्व राभिधेयाश्चत्वारः पुत्रा समुद्भूवन् ॥

धनदांशेन काळेश्वरवरप्रसादेन नागपुरीनाथो विक्रमांकस्समजनि । सच नीलकंठाराध्यस्य गुरुभक्त्याऽनंतं धनं प्रादात् ॥

श्वेताचार्यं स्वांतेवासिनो नीलकंठाराध्यस्य [illegible] जगद्गुरु पट्टाभिषेकपदव्यां प्रतिष्ठापयामास । नीलकंठाराध्यस्य चत्वारः शिष्या हरदत्त सोमशेखर भवदेव भीमेश्वर नामांकिता समभवन् ॥

एतेषु हरदत्तो दाक्षिणात्य । सोमशेखरः प्रतीच्य । उदीच्यो भवदेवः । प्राच्यो भीमेश्वर ॥ नीलकंठाराध्यः नकेवल [illegible] प्रस्थान [illegible] ॥

ओं नमोऽहं पदार्थाय लोकानां सिद्धिहेतवे सच्चिदानंदरूपाय शिवाय परमात्मनेति प्रार्थनाश्लोकेनैव नीलकंठाराध्य गृहीत शांभवव्रतइतिज्ञायते । [illegible] शिवलिंगधारणप्राशस्त्यमनेकधा [illegible] ॥

नमश्श्वेताभिधानाय नानागमविभागिने कैवल्यकल्पतरवे कल्याणगुरवेनमइति नीलकंठ भाष्योक्त्या श्वेताचार्यएवाऽस्यगुरुरिति निर्णीयते ॥

## श्रीकंठ नीलकंठौ द्वावप्येकएव

नीलकंठाराध्यस्य श्रीकंठइतिनामांतरं वर्तते । श्रीकंठ नीलकंठौ द्वावप्येकएव । अत एवोक्तंभाष्ये नीलकंठो विवृणुते श्रीकंठोपरनामाह्वयइति ॥

## कालनिर्णयः

ब्रह्मसूत्राणि क्रीस्तोः द्वितीयशताब्द्यां व्यासमहर्षिणा विरचितानि । क्रीस्तोः पूर्व तृतीयशताब्द्यां भगवद्गीतारचितेति तिलकमहाशयः । चतुर्थशताब्द्या मितिभंडारकर महाशय श्चावादीत् ॥

दर्शयामास पार्थाय परमं रूपमैश्वरं । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति । तमेव शरणंगच्छ सर्वभावेन भारत । इत्यादि भगवद्गीताश्लोकाना भाष्ये उदाहृतत्वात् बौद्धसांख्यवाद खंडनाच्च क्रीस्तोः पूर्वं पचमशताब्द्यां नीलकंठाराध्यो विद्यतइत्यभ्यूह्यते ॥

## बहवो नीलकंठनामधेयाः

नीलकंठनामांकिताः बहवः परिदृश्यंते । शिवोत्कर्षमंजरी - शिवलीलार्णव - नीलकंठ विजयचंप्वादि ग्रंथकर्ता, अप्पय्यदीक्षित सोदर्य श्रीमदाचार्यदीक्षित पौत्रः नारायणदीक्षितात्मजो नीलकंठदीक्षितः, एकोवर्ततेक्रीस्तोःपश्चात् सप्तदशशताब्द्यां ॥

क्रियापादे श्रीमद्द्विगिद्राद्वैत सिद्धांत रहस्यैकोत्तरशतस्थलाभिज्ञ श्रीनीलकंठकृते निगमागमागम सारसंग्रहे क्रियासारे द्वितीयोपदेशइति कथनेन क्रियासारकर्ता नीलकंठोऽपरोवर्तते । इति सर्वमतोत्कृष्टा शैवसिद्धांत दीपिका श्रीनीलकंठ रचिता मुद्रिता त्सुधियामिय मितिशैव सिद्धांतदीपिका कर्ता कश्चन नीलकंठः विद्यते ॥

महाभारतस्य भारतदीपव्याख्यानकर्ता गोदावरीतीरस्थो नीलकंठनामांकितः एकः क्रीस्तोः पश्चात् षोडशशताब्द्यां वर्तत इति बर्नेल्महाशयोलिलेख ॥

माधवीये शंकरविजये पंचदशसर्गे अन्यो नीलकंठनामा ब्रह्मसूत्रभाष्यकर्ता शंकराचार्येण विवदमानः पराजितः स्वभाष्यंपरित्यज्य शरणंगतइतिविज्ञायते । बहुषुविद्यमानेष्वयमेवनीलकंठो भाष्यकर्तेत्युच्यते ॥

## शंकराचार्यादपि प्राचीनो नीलकंठाराध्यः

एतेन नीलकंठ श्शंकराचार्यसमकालिकइति केचन वदंति । तदसत् । शंकरविजय ग्रंथ कर्ता माधवाचार्यः शंकराचार्यस्य भाष्यरचनाया मग्रतांबूलं दिदित्सुः तत्पूर्वस्थित भट्टभास्कर नीलकंठादीन् स्वग्रंथे पराभूतान् प्रकटयामास । चरित्र विरुद्धत्वात् नतद्ग्राह्यम् ॥

नीलकंठाराध्य भाष्यस्थित विषयान् स्वभाष्ये अनूद्य शंकरः खंडयामास तस्मात् शंकराचार्यात्पूर्वः । भेदव्यपदेशादितिसूत्रे जीवेश्वरयोः भेदे कथितेसति शंकराचार्येण अभेदः, प्रतिपादितः ॥

आत्मकृतेः परिणामादिति सूत्रेण परिणामकारणवादे राद्धांतिते ब्रह्ममीमांसा सूत्राऽप्रतिपादितो विवर्तवादः शंकरेणनिगदितः । कर्ता शास्त्रार्थवत्वादिति जीवस्य कर्तृत्वंनीलकंठभाष्यकारेणोक्तेसति, अकर्तृत्वं कथितं । जन्माद्यस्ययत इतिसूत्रेण जगज्जन्मादिकारणत्वं ब्रह्मणःप्रतिपाद्य ईक्षतेर्नाशब्दमितिजगत श्चेतनकर्तृकत्वे अचेतनप्रधानस्य स्वजगत्कारणनिषेधेच प्रतिपादिते, शंकरेण जगन्मिथ्यात्वं सिद्धांतितं ॥

वैधर्म्याच्चनस्वप्नादिवदिति जगतः स्वप्नतुल्याऽभावत्वं सर्वधर्मोपपत्तेश्चेतिब्रह्मणःसर्वज्ञत्वादि सर्वधर्मत्वं नीलकंठाराध्येननिगदिते जगतस्स्वप्नतुल्यत्वंच ब्रह्मणो निर्धर्मकत्वं शंकरेण प्रकटितं । उत्क्रांति गत्यागतीनामिति जीवस्याऽणुपरिमाणत्वं गुहांप्रविष्टावात्मानौतद्दर्शनादिति हृदयाकाशस्थितौ जीवेश्वराविति, आनंदमयोभ्यासादित्यानंदमयोब्रह्मेति, निर्णीतेनीलकंठाराध्येन, जीवो विभुरिति हृदयगुहावासिनौबुद्धिजीवाविति आनंदमयोजीवइति शंकरेणनिगदितं । कार्यंबादरिरस्यगत्युपपत्ते रिति सूत्रेण अमानवपुरुषः मुक्तान्कार्यब्रह्मण स्सकाशं गृहीत्वा गच्छतीति बादरेरभिप्राय इति पूर्वपक्षमुक्त्वा परंजैमिनिर्मुख्यत्वादिति सूत्रेण परब्रह्मण स्समीपमेव मुक्तान्

गृहीत्वा गच्छन्तीनिगिद्धांतितं नीलकंठेन, [illegible] [illegible] [illegible] [illegible]ाद्वैर रितिसूत्रं पश्चादुक्त्वा तदनंतरसूत्रव्याख्यानं [illegible] [illegible] [illegible] ॥

[illegible]शब्दादिति [illegible] [illegible] [illegible] [illegible] नीलकंठाचा र्येण । सगुणगुनतावेवं [illegible] [illegible] [illegible] [illegible] [illegible] [illegible]दर्शनविध्वस्त तमसा सिद्धैवाऽनानृजगि [illegible] [illegible] [illegible] । उपसंहारे स्सह ब्रह्ममीमांसाशास्त्रस्यापिसगुणपरत्वं । [illegible] [illegible] [illegible] निर्गुणाऽद्वैतमतसिद्धांतस्य [illegible] [illegible] [illegible] । “ [illegible] निष्प्रपंचं प्रकल्प्यतइत्य[illegible] । श्रुति[illegible] सगुण[illegible] नील[illegible]भाष्यं सर्वमपि खंडयित्वा निर्गुणपरत्वेन शंकराचार्येणाकृतत्वात् शंकराचार्य[illegible] नीलकंठाचार्य इत्यत्र नास्ति संशयः ॥

शांकरभाष्यश्रुतिसूत्र [illegible] भगवद्गीता[illegible]दीपिका ऽद्वैतसिद्धि ग्रंथ कर्ता मधुसूदनसरस्वतिरेव दश[illegible]व्याख्यानसूत्रसिद्धांतबिंदुग्रंथे “[illegible] [illegible] सम्यक्सूत्रैरपि योबबंध । [illegible] [illegible] [illegible] । ” इत्युक्तत्वात् अपिच भामतीग्रंथकारेण वाचस्पतिमिश्रेणापि श्रुतिसूत्र विरुद्धता, [illegible] प्रति पादिता । एतेन शंकरभाष्यादपि प्राचीनं श्रुतिसूत्राऽविरुद्धभाष्यं नील[illegible]मिति निर्णीतं ॥

अपिच शिवार्कमणिदीपिकासहित नीलकंठभाष्यमुद्रापका' कुंभकोणनगरस्थाः हालास्य नाथ शास्त्रिण' स्वविरचितभाष्यभूमिकायां तत्तत्कालेषु क्रमेणकृतावतारे [illegible] श्रीकंठ शंकर रामानुजानंदतीर्थाद्यैरिति “ पं त्यादिमन्त्यंपात्रभाणामिद् श्रीकंठीयं शैवाद्वैत परंभाष्य ” मितिच कथयामासुः । एतेनच शांकरभाष्यादपि [illegible] नीलकंठभाष्यस्य [illegible] ॥

वाराणस्यां सर्वभाष्याणामुत्तमभाष्यविषये विवादे सर्वेमति विशालाक्षीदेव्याः पादमूले भाष्याणि निक्षिप्यकवाटंपिधाय सर्वे बहिरागत्यक्षणं स्थित्वापुन कवाटमुद्घाटयामासु. । तदा देव्याश्शिरसि नीलकंठभाष्यमवर्ततेत्याख्यायिका विद्यते ॥

## उद्भटाराध्यः

अयंच शिवलिंगधारिब्राह्मणो जगद्गुरुः काशीविश्वेश्वरलिंगा त्प्रादुरासीत । एतस्य जनको विश्वेश्वरः । जननीचान्नपूर्णा । नल्लूरीपुरपालकस्य भोजराजस्य गुरोरुद्भटाराध्यस्य जाया लीलावती । एतस्यास्सुंदरीत्यपरंनामवर्तत ॥

गंधर्वभूतसमासन्नक शापमोक्षदानप्रभावेन जगत्यद्भुतयशश्शाली बभूव । [illegible]सहस्राग्रहारा नार्जयामास । चातुर्वर्णगुरुत्वेन विराजमानश्शिवाद्वैत मतप्रचार चकार ॥

गंधर्वभूतशनसप्तक शापपोक्षदानप्रभावेन जगत्यद्भुत यशश्शाली बभूव। त्रिसहस्राग्र हारानार्जयामास। चातुर्वर्ण्यगुरुत्वेन विराजमानश्शिवाद्वैत मतप्रचारं चकार ॥

भारद्वाजगोत्रजः। घूर्जरदेशवासी। एतस्य चतुष्षष्टिभूपाला शिशाष्या अभूवन्। यजुर्वेदभाष्य - काव्यालंकारसंग्रहादि ग्रंथा नरचय। ॥

एतद्वंशीयो मुदिगोंडेतिगृहनामधेयो मल्लिकार्जुनाराध्यः प्रतापरुद्रेणाऽस्मनो ब्रह्महत्यादोष निवृत्त्यर्थं काशीनगरा दाह्वानितः। क्रीस्तोःपश्चा दष्टमशताब्द्या मुद्भटाराध्य स्समवर्तत। जयापीडमहाराज सभायां विद्यापतिपदवी मलङ्चकार। सराजा प्रत्यह सूर्योदयात्प्राक् लक्षदीनारा न्प्रापयतिस्मे त्यनेन श्लोकेन विजानीमः ॥

श्लो ॥ विद्वा न्दीनार लक्षेण प्रत्यहं कृतवेतनः
भट्टोऽभू दुद्भट स्तत्र जयापीड सभापतिः ॥

## विश्वाराध्यः

एष कोटिफली पुरीश्वर शिवपामादवासी। तस्मा त्कोटिपल्याराध्य इत्युच्यते। अस्य पिता सोमेश्वरः। जननी भवानी। क्रीस्तोःपश्चा द्वादशशताब्द्यां वर्तते। काश्यपगोत्रजः ॥

चतुर्वेदसार - वृषभाधिपशतक - बसवराजीयादि ग्रंथा नलेखीत्। शैवधर्मान् शाश्व तस्थापयामास। शिष्याः प्रशिष्याश्च बहवो विद्यंते। पालकाश्रमं गत्वा विश्वाराध्यस्तत्र न्यवसत्। नीत्वा कानिचिद्दिनानि तदेवाश्रमं पालकुरिकि ग्रामत्वेन परिणतिं प्रापयामास। अयमेव ग्रामः पालकुर्तीति व्यवह्रियते। विश्वाराध्य संतति रिवटूरिगृहनाम्ना सांप्रत माहूयते ॥

## वेमनाराध्यः

बेल्लिदेवि ग्राम निवासी। जनको मल्लिकार्जुनः। दीक्षागुरु स्त्रिपुरांतकेश्वरः। श्रीशैल मल्लिकार्जुन लिंगगर्भसंभूतः। विष्णुदेवभूपालात् बेल्लिदेविप्रभृत्यग्रहारा न्प्रपेदे। बहून्यज्ञा नकरोत् ॥

अस्य भार्या शर्वाणी। ज्योतिर्नाथ भीमनाराध्य घंटानाथादयो बहवश्शिष्या स्संति। यागीय मृतपशून् पुनरुज्जीवयामास। माहेश्वर पादतीर्थ प्रोक्षणेन सर्पदष्ट भूपालस्य प्राणदानं चकार। कौंडिन्य गोत्रसंजातः ॥

एतद्वंशीया मुलुगु गृहनाम्ना व्यवह्रियंते। वेमनाराध्यइति व्यवहारनाम। गीर्वाण्यां व्योमाराध्यइति व्यवहारः। मल्लिकार्जुनपंडिताराध्येन लब्धगुरुपट्टाभिषेकः शिवाद्वैतमतप्रचारं चक्रे। रक्षसुकेतोःपुत्रं। सुंदरेश्वरंच भावयामास दक्षिणदेशे मधुरानगर्याम् ॥ द्वादशशताब्द्यां वर्तते ॥

## श्रीपतिपंडिताराध्यः

श्रीकर भाष्यकर्ता । अस्यजनकः मल्लिकार्जुन । जननीभ्रमरांबादेवी । श्रीशैले निवासः। विजयवाटिकायां कतिचिद्वत्सरान्यापयामास । जातवेदसं वस्त्रणचर्नामित्वा गांगकृत्वा शमीशाखा या बबंध । जगद्गुरु । बहुशिष्याणासंति ॥

अनंतपालभूपालस्य गुरुः । एषोऽनंतपाल भ्रातुस्य विक्रमादित्यस्य सन्मानितवति । एत द्विक्रमादित्य जामातु श्चक्रेन्द्रराजस्य द्राक्षारामालय स्थित शासन मनुसृत्य क्रीस्तो पश्चादेकादश शताब्द्या मयं स्थितवानिति निर्णीयते ॥

## मंचनपंडिताराध्यः

ब्रह्मा शिवाज्ञया मंचनपंडितनाम्ना बदरीकेदारे गौरीकेदारेश्वर्यो पुत्रस्समजनि । एतस्य शांभवदीक्षा कृता महात्मनोपमन्युना । वाराणसीवास्तव्यस्य त्र्यंबक सोमयाजिन कुमारीं चंडिकानाम्नी मुपयेमे । सांख्यायन गोत्रजात ॥

मंचनपंडितस्यैतस्य पितामह स्सोमशंभुः । गौडदेशस्थितस्य महत ईशानाचार्यमठस्य गोळकी नामधेय स्याऽऽधिपत्य मवह दस सोमशंभु ॥

मंचनपंडितस्य गृहनामधेयं शिवल्लेक इत्युक्त । काळहस्तिनगरे कियत्काल मतिवाहया मास । श्रीशैलेच तपस्तेपे । क्रीस्तो.पश्चा देकादश शताब्द्यां वर्तते । बौद्धजैनादिमतखंडनं चकार । पाशुपत व्रतनिष्ठो मंचनपंडित स्स्वगृह बहिर्द्वारि "शैवेतरवादि घोषण भद्रस" इति स्वबिरुदं लेखयामास । काशीनगरे माधवं विश्वेश्वरालयपर्यंत मटयित्वा "जगत्कर्ता शिव एवेति" न्य रूपयत् । अतएवोक्त मभियुक्तैः "काशीविश्वेशलिंगा मटाय्य त्राहठाद्धरिं । चभजंस्पष्ट ॥" न्यस्त । वंदे मंचन पंडितमिति ॥

## मल्लिकार्जुनपंडिताराध्यः

द्राक्षारामनिवासी । अस्यजनको भीमनपंडितः जननीच गौरांबा । गौतमगोत्रजो मल्लिकार्जुनपंडित स्स्वेष्टलिंगधारी । चातुर्वर्ण्यपदवी मधिष्ठितोऽलोकगुरु बिरुद मुवाह ॥

यःकोपिवा शिवादन्यमधिकं ब्रवीति स्वपादेन तच्छिर स्ताडयामीति प्रतिज्ञांचक्रे । बौद्धैस्साकं शपथंकृत्वा शिवपारम्यंप्रतिष्ठापयामास । संसदि मतविवादे स्वनेत्रो शलाकया बहिराकृष्य पुनरीश्वरकृपया नेत्रंप्राप ॥

शिवतत्वसार - लिंगोद्भवदेवगद्य - अमरेशकादिग्रंथान् विरचयामास । क्रीस्तोःपश्चा द्वादशशताब्द्या मवर्तत । शिवपूजापात्रेषु प्रमादेन स्वपादस्पृष्टेषु रात्सु तदपराधनिवृत्तये लिंगाय

सायित नामक स्वकरवालच्छेदित पादद्वयस्य वेल्लगोंड महदेवाराध्यस्य स्वमहिम्ना यथापूर्वंतस्यपादा वनुजग्राह ॥

वेलनाटिभूपालानां बौद्ध पदपद्माचार्याणां राजधान्यां गुंटूरु मंडलांतर्गतायां धनद पुर्यां [चंदवोलु] मल्लिकार्जुनपंडिताराध्यसंबंधि शिलाशासन मेकंवर्तते । तच्च शिवतत्वसारग्रंथे मुद्रितमेव ॥

## पाशुपतव्रतं

एतादृशै द्वादशाचार्यै रवलंबितं पाशुपतव्रतं "अत्याश्रमं पाशुपतं शांभवं तच्छिरोव्रतं । इतीदं नामभिः पुण्यैर्निगमांतेषु गीयतइतिकारणोत्तरेनिगदितं ॥

अत्याश्रमिभ्यः परमंपवित्रं । अत्याश्रमीसर्वदा सकृद्वाजपेत् । व्रतमेतच्छांभव मितिवेदेच प्रतिपादितम् अतएव भाष्यकारेण सहकार्यंतर - अंगावबद्ध मौनवदधिकरणेषु सूचितम् ॥

श्लो॥ वेदा मनु क्रियाभिख्य दीक्षात्रय सुशोभितम् । षडध्वशुद्धि कलितं गुरुकारुण्य संभृतम् । भस्मरुद्राक्ष श्रीलिंगधारणात्मक मुत्तमं । शांभवव्रतमेतद्धि वेदशास्त्रैकबोधितमिति चंद्रज्ञानेकथितं ॥

ब्राह्मणस्य समाख्यातं लिंगधारण मुत्तममिति लिंगपुराणे । अंतर्धारण शक्तोवा ह्यशक्तोवा द्विजोत्तमः । संस्कृत्य गुरुणा दत्तमिष्टलिंगं हृदिस्थले । धार्यं विप्रेण मुक्त्यर्थं मिति स्कांदेचाभिहितं ॥

श्लो॥ गतांतै रध्यवसित मत्याश्रम मिदंव्रतं । मया पाशुपतं दक्ष शुभमुत्पादितं पुरेति महाभारते प्रथमं पाशुपतव्रतमेव उत्तममितिसुस्पष्ट मभिहितं ॥

भस्म रुद्राक्ष शिवलिंगधारणात्मकं प्रथमं । भस्म रुद्राक्ष धारणात्मकं द्वितीयं । भस्म धारणात्मकं तृतीयमिति पाशुपतव्रतं त्रेधानिगमांतैरुपपादितं ॥ यावदायुषं पाशुपतव्रत धारिणां मुक्तिरेवफलं । तदन्येषां भोगएवफलमिति नीलकंठभगवत्पादेन कंठरवेणैवोक्तं ॥ अतःपाशुपतव्रतं सर्वैरवश्य माचरणीयं ॥

## प्रमाणं

शैवमते प्रत्यक्षाऽनुमानाऽगमानां त्रयाणां प्रमाणत्वोपपत्त्या यथासंभव मितरेषा मत्रैवां तर्भावः ॥

## आगमाः

शैवे आगमप्रामाण्यं वेदप्रामाण्यवदंगीकृतं । यत भाष्यकारेण पाशुपताधिकरणे वेदशिवागमयोरर्थं नपश्याम उभयोरेक एव शिव कर्ता । आगमशास्त्राणि निखिलान्यपि साक्षाच्छिवेनैव । आदिकर्ता कवि स्साक्षाच्छूलपाणि रितिस्मृतरप्युक्तम् ॥ आगमानाम प्रामाण्यं । कामिकाद्यष्टाविंशत्यागमानाञ्च वेदानामिव शिवोक्तत्वमेव । एतागमेण श्रुत्युक्तविधानमाना भस्मरुद्राक्ष शिवलिंगधारण शिवपूजा शिवलिंग प्रतिष्ठापनादीनां तत्कार्यानुष्ठान साधन कुंड मंटप शिवालय शिवपूजाविधि शांभवदीक्षादिपरिज्ञानम्यागमशास्त्रे विधानानि उपपन्नः ॥

अष्टा विंशत्यागमेषु कामिकादयः दशशैवागमा सदाशिवपञ्चमुखेभ्य शिवस्वरूपेभ्यः प्रणवादिभ्यः उपदिष्टाः । विजयादय अष्टादश रौद्रागमाः ईश्वरतत्त्वाभिमानिभ्य अनन्तरुद्रादिभ्य उपदिष्टाः । प्रत्यागमञ्चत्वारः पादाः । शैवसिद्धांततत्त्व ज्ञानपादे । तत्त्वप्रकाशिदेवता विज्ञान तद्वशीकरणोपायौ क्रियापादेच प्रतिपादितौ । तत्त्वानिसशोध्य आत्ममूर्तीसान्निध्य शिवज्ञान प्राप्तये अवशास्यमनस योगेनवशीकृतान्यशिवे संयोजन योगपादे ऽभिहितं । कर्मबाहुल्या त्तनुकरण भुवनभोगानामनैककंठ्यात् मनसश्चांचल्यातिशयाच्च ज्ञानयोगमाप्तु सदाचारानुष्ठानचर्या पादे वर्णितं ॥

आगमाश्च पूर्वोत्तरभेदेन वेदोपनिषदा विव द्वेधा दृश्यंते । उपनिषत्सु, उपासनाज्ञान कांडस्य यथाप्राधान्यमागमांतिपुच परशिवानुग्रह मुख्यपाशहेतुभूत पाशुपतव्रतादीनां श्रौतानां तथा प्राधान्यं प्रामाण्यञ्च स्पष्टतयाप्रतिपादितं परशिवेन ॥

तत किंचिज्ञ प्रोक्त स्मृतिभ्य स्सर्वज्ञ शिवप्रोक्तानामागमानां वेदवत्प्रामाण्य मंगीकृतं ॥

## प्रमेयः

पति· पशु'पाशइति पदार्था स्त्रयईरिताः ॥ एतेषु पतिनिरूपणं क्रियते ॥

## पतिः

एषामीशो पशुपतिः पशूनां चतुष्पदामुतच द्विपदामिति जन्माधिकरणे पाशसंबंधेन जीवानां पशुत्व व्यवहाराज्जीवाना चिदचिदात्मनां नियामकं ब्रह्म परशिव एवेति प्रतिपादितं ॥

अयंच पति ष्षट्त्रिंश तत्त्वात्मक ष्षडध्वकलितो ऽष्टत्रिंशत्कलोपेतो भवति ॥

मंत्रमूर्तीनां गुणत्रयाऽधिष्ठित ब्रह्माविष्णुरुद्राणा मतीतः " चतुर्थ शिवमद्वैत " मिति चतुर्थ पुरुषत्वेन श्रूयमाण स्तनुकरणादि जगत्कर्तृत्वादिनापतिरिति प्रमीयते ॥

उपादान विलीन समस्त कार्य जनन शक्तिमात्र युक्ततया "शक्त" इति, कार्य जननाभिमुख शक्ति युक्ततया "उद्युक्त" इति, जनित कार्य शक्ति युक्ततया "प्रवृत्त" इति, त्रेधा कथ्यते ॥

इयंच शक्ति रेकैव। साच कार्यानुकूलाऽदृष्टादि परामर्शिनी "ज्ञानस्वभावेति" एवं भवत्वित्याकारिकेच्छया तत्तत्कार्य जनक कृतिनाच इच्छाकृतिस्वभावात्मिकेति शिवसमवेता चिदचिन्मयी, मूर्धादि भावकल्पनया, मननत्राणयोगेन च मंत्रपदवाच्यशिवशरीरमिति कथ्यते। एतच्छक्ति विशिष्टः षट्त्रिंशत्तत्वात्मकः पति रित्युच्यते ॥

## षट्त्रिंशत्तत्वानि

१ शिव, २ शक्ति, ३ सदाशिव, ४ ईश्वर, ५ शुद्धविद्या, ६ माया, ७ कला ८ विद्या, ९ राग, १० काल, ११ नियति, १२ पुरुष, १३ प्रकृति, १४ बुद्धि, १५ अहंकार, १६ मनः, १७ श्रोत्र, १८ त्वक्, १९ चक्षुः, २० जिह्वा, २१ घ्राण, २२ वाक्, २३ पाणि, २४ पाद, २५ पायु, २६ उपस्थ, २७ शब्द, २८ स्पर्श, २९ रूप, ३० रस, ३१ गंध, ३२ आकाश, ३३ वायु, ३४ वह्नि, ३५ सलिल, ३६ भूमयः ॥

## पशुः

देहेंद्रियादि व्यतिरिक्तः नित्य श्चिदात्मकोऽ नेकोऽनादिमलावृतोऽस्वतंत्रः कर्ताच पशु रित्युच्यते। एवच पशु रुपाधिभेदेन सकलः प्रलयाकलः विज्ञानाकलश्चेति त्रिविधः ॥

## सकलः

मलोपरुद्ध दृक्छक्तित्वे सति तत्प्रसादहेतुक कलादि मत्वेसति भोगाय कर्मसंबद्धत्वं सकलस्य लक्षणं। केवल स्सकलश्शुद्ध स्त्रयवस्थः पुरुष स्मृतइतिकिरणे अवस्था त्रय मुक्तं। एतेषां सकलाना मवस्थान मशुद्ध मायाधोभागे ऽशुद्धाध्वनि भवति ॥

## प्रलयाकलः

प्रलये उत्सितकलत्वेसति दीक्षाप्रायश्चित्त भोगकृतावशुद्धाध्व विषय कर्मपरिक्षयवत्वेसति भोक्ष्यमाण मिश्राध्व कर्मणा स्ववशीकृत कला संबंधवत्वं प्रलयाकलस्य लक्षण। पक्वमला अपक्व मलाश्चेति एतेपि द्विविधाः। शिवः पक्वमला ननुगृह्य तेभ्यो भुवनपतित्वं ददाति। अपक्वमलानां प्राकृत भोग कर्मवशात्पुर्यष्टक देहं दत्वा सकलत्वं ददाति। एतेषा मवस्थान मशुद्धमाया मध्य भूत मिश्राध्वनि भवति ॥

## वि[illegible]ः

विज्ञानाकला सर्वकर्माणि [illegible] मुक्ता विज्ञान कलो भवति। एतच्च प्रशांतकलुषा अप्रशांतकलुषा इति द्विधा। [illegible] मलपरिपाक निरीक्ष्यैव शुद्धाध्वन्यधिकारे शिव [illegible]। [illegible] तत्रै [illegible] ॥

श्लो॥ कांश्चिद्योगाद्दयेतत्वे सदाशिवान् [illegible]
सदाशिवगुणोपेता भोगाख्ये तत्व माश्रिता ॥
येप्राप्ता स्तत्व मैशानं विशेषेण क्रियाधिका
अधिकार गुणोपेता महात श्चक्रवर्तिन ॥
अष्टौ वर्गत सूक्ष्माद्या यथापूर्वं गुणाधिकाः
विद्याविद्या द्वय प्राप्ता स्संख्यया सप्तकोटय
प्रशांतकलुषा स्सर्वे महात्मानोऽमितौजस ॥ -- शैवपरिभाषायां

एतेषां मध्ये यस्य स्वाधिकारे वैराग्यं जायते तं मलपरिपाकानुगुण्येनेश्वरोनुगृह्यपरमां मुक्तिं प्रापयति। सादाख्य तत्वगताना पदे ईश्वरतत्वगतान् तत्पदे विद्यातत्वगतान् तत्रत्यानां पदे मायामस्तक गतांश्च योजयति ॥

## षडध्वानः

कला तत्व भुवन वर्ण पद मंत्रस्वरूपाः। निवृत्ति प्रतिष्ठा विद्या शांति शांत्यतीताख्या पंच कलाध्वेत्युच्यंते। पृथिव्यादिनादांतानि षट्त्रिंशत्तत्वानि तत्वाध्वा। काल ज्ञानाद्यनाश्रि तांत चतुर्विंश त्युत्तर शतद्वय भुवनानि भुवनाध्वा। अकारादि क्षकारांता न्येक पंचाश द्वर्णानि वर्णाध्वा व्योमव्यापि मंत्र रूपे काशीपतिपदानि पदाध्वा। ब्रह्मांग रूपकादशमंत्राः मंत्राध्वे त्युच्यते। एतेषां षडध्वनां परमकारणं वस्तु कुंडलिनीशुद्धनिर्धांत परमशिवइति चोच्यंते। षडध्व व्यतिरिक्ता आत्मान· नित्याः व्यापका श्चेतनाः प्रतिशरीरंभिन्ना मलिनाः कर्मकर्तारः कर्मफलभोक्तारः किंचिज्ञा· किंचित्कर्तार स्सेश्वराश्च भवंति ॥

शिवादिशुद्धविद्यांतानि पंचतत्वानि शुद्धाध्वेति रागतत्व मारभ्य कलातत्वांतानि पंच तत्वानि मिश्राध्वेति पृथिवीतत्व मारभ्य प्रकृतितत्वांत पंचविंशते रशुद्धाध्वेति कथ्यते। अतएवोक्त मनुत्तर प्रकाश पंचाशिकायां शिवादि क्षितिपर्यंतं विश्वं वपु स्सृंचयन् पंचकृत्य महानाट्य रसिकः क्रीडति प्रभुरिति। परशिवस्वरूपमहालिंगे अप्राकृत दिव्यमंगळ विग्रहे चित्रपटे संतः दृष्टिं दत्वा "लिंगगर्भे जगत्सर्वं" लीयते गम्यतेयेन जगदेतच्चराचरमितिसूक्ते रनुभवं यथार्थतया परिजानंतु ॥

## पाशः

पाशत्वं नाम शिवानंदाभिव्यक्ति विरोधित्वं। तच्चाणव मलस्याच्छादकतया तिरोधायकशक्तेस्तु तच्चोदयितृत्वेन बिंदु माया कर्मणामपि भोग भोग्य संपादनद्वारा वैषयिक सुखादिजनकत्वेन आणव-तिरोधायकशक्ति-बिन्दु - माया - कर्मनामभिः पंचविधः। तत्रचत्वारः पदार्थाः जडरूपाः। तिरोधायक शक्तिस्तु चिद्रूपापि पाशाऽनुग्राहाकत्वात् पाशमध्ये प्रवेशः। तत्र, आणवत्वं नाम आत्मनो दृक्क्रिया रोधकत्वम्। अस्य चाणवोक्ति विंऽभोरात्मनोणुत्व संपादनार्थं॥ अतएवोक्तं शिवज्ञानशेखरे "अथानादि मलः पुंसां। पशुत्वं परिकीर्तितं। तुषकंचुकवद्ज्ञेयमायाबीजांकुरस्य तदिति ताम्राश्रितकळंकवदितिच॥

## तिरोधायिशक्तिपाशः

इयमेव चिद्रूपा शिवसमवेता माहेश्वरीशक्तिः भोगमोक्षानुग्रह कारणत्वात् सर्वानुग्राहकत्ववती। मलशक्तीः चित्क्रियासंनिरोधकत्वान्तं परिणामयति। शिरसिस्थितेश्वररूपादित्य चित्विषा चैतन्यप्रकाश माधत्ते॥

## बिन्दुपाशः

विश्वसारोत्तरसूत्रे। याधः कुंडलिनीशक्तिः मायाकर्मानुसारिणी। नादबिंद्वादिकं कार्यं तस्या इति जगत् स्थितिः। नाद शिवतत्वं बिंदुश्शक्तितत्वं। अयंच वैखरीमध्यमा पश्यंती सूक्ष्मासंज्ञितः शिवतत्वादि शुद्धविद्या पर्यंत सृजति। शिवस्य लयादिकं रुद्राणूनां बंधः विमुक्तिश्चास्मिन्नेव भवति॥

## मायापाशः

कलादि पृथिव्यंत कार्यजातस्य उपादानभूता जडाच भगवतः परिग्रहशक्तिः। इयंचैका नित्याच प्रळ्ये कर्मणा माश्रयभूता। शिवस्य मायाक्षोभकत्वं बिंदौ साक्षाद्भवति। मायायांतु अनंतेश्वरद्वारेण। विचित्र शक्तिमती माया निखिलप्रपंचजननहेतुः! एतदशुद्धमायातत्वारब्धानि शरीराणि पुंसां सुखदुःखभोग साधनानि भवंति॥

लोकांतर गत्यागतिरूपं पुर्यष्टकाख्यं सूक्ष्मशरीरंच भवति। एतच्च तन्मात्र पंचकमनो बुध्यहंकारात्मकं॥

## कर्मपाशः

एतच्छरीरप्राप्तिः कर्मपाशेन भवति। मनोवाक्कायभेदेन त्रिविधमपिकर्म आध्यत्मिकाधिभौतिकाधि दैविकभेदेन पुनस्त्रिविधं भवति। वैषयिक सुखदुःखादिहेतुत्वात् पाश इत्युच्यते॥

भगवान्:

प्राचीनकाले प्रथमं भारतीयानां [illegible] शिवोपासना रूप मुक्ति मार्गोऽभवत् । [illegible] भूतल [illegible] नाद्य मार्गांतर मत्त्यज्यत ॥

स्वाभिमान पूरिताः केचन [illegible] शैवं [illegible] । [illegible] पर्यंत अतिसूत्रानुगुणं शि[illegible]तमत मेव तदा अगद्गुरु मागीत् । तदानीं [illegible] नीलकंठाचार्यः चिद्‌चिच्छक्ति विशिष्ट शिवाद्वैतपर भाष्यमरीरचत् । "[illegible]" शिवानन्द शिवकरः । न तस्मादधिक स्समानश्च । वैदिक शिवागमत सिद्धांत [illegible] [illegible] शिवोपासनेवमुक्तिदायिनी त्युपन्यस्यति नीलकंठाचार्य [illegible], [illegible] "ॐ ॐ" इति [illegible] । तत [illegible] शिवो पासकानांच सर्वेषा नीलकंठभाष्यमेव शरणं [illegible] ॥ [illegible] भेदेन शैवं द्विविध मुच्यत इति वायुसंहितायां [illegible] ॥ तत्राप्युत्तरदेश [illegible] परि दृश्यते ॥

## उत्तरदेश शैवं

शंकराचार्यां त्पश्चात् पञ्चविंशत्युत्तर द्विशततमं [illegible] २२८ अभिनवगुप्त पादाचार्याः प्रादुरासन् । तेच स्पंदशास्त्र रचयामासुः । शंकराचार्यात् प्राक् उत्तरदेशेऽपि नीलकंठभाष्यानुसारेण चिदचिद्विशिष्ट शिवाद्वैत मतमेवासीत ॥

तत इदं शैवं "शिवशक्ते स्तन्मयस्य [illegible] शिवादि पृथिव्यंत जगदुज्जृंभण निरूपणा त्तयो स्सर्वरूपत्व प्रत्यभिज्ञात्मकत्व [illegible] सदा शिवादि पृथिव्यंत जगत्प्रवर्तन प्रतिपादनाच्च स्पंद शास्त्र [illegible] तत्र स्वतंत्र शिवाद्वैत नामभिर्व्यवह्रियते चोत्तरस्यां दिशि काश्मीर देशे श्रीनगरे ॥

एतत्सिद्धांतस्य मूलं शिवसूत्राणि । एतानि पूर्वस्मिन्काले आत्मेश्वरत्वनिरासकैर्नास्तिक सिद्धै स्समाक्रांते स्मिन् जीवलोके रहस्य संप्रदायस्या विच्छेदेच्छया स्वेच्छया शंकरो महादेव गिरे शिलातले शिवसूत्राणि समालिख्य स्वप्ने वसुगुप्ताय महेश्वरशिवामणये नोपदिदेशेत्यास्त्या यिका वर्तते । काश्मीर संस्कृत ग्रंथावळ्यां ७७ सप्तसप्ततिसंख्या न्येतानि शिवसूत्राणि प्रकाशितानि ॥

वसुगुप्ताचार्या छब्धोपदेशो भट्टकल्लट स्स्पंदकारिकां प्रणिनाय । उत्पलाचार्य क्षेमराजा दय.स्पंदकारिका व्याचख्युः । उत्पलाचार्यगुरुस्सोमानंदनाथः । तदंतेवासि लक्ष्मणगुप्त शिष्यः

परम माहेश्वराचार्य बिरुदांकितोभिनवगुप्त पादाचार्यः क्रिस्तब्दीय दशम शताब्द्यां प्रत्यभिज्ञा सूत्र विमर्शिन्यादिग्रंथान् विरच्य शैवमत प्रचार मकार्षीत् । इदं प्रत्यभिज्ञा शैवमेव स्वतंत्र शिवाद्वैत मित्युत्तर देशेव्यवहारः ॥

## दक्षिणदेशशैवं

इदं शैवं सदाशिव स्कंद नंदि परंपरा प्रवर्तितं शैवागममूलकं शिवादि पृथिव्यंत षट् त्रिंशत्तत्व बोधकं तत्वशोधनतः पुरुषस्य शिवाऽनन्यत्व बोधनेन शिव स्वरूपत्व प्रापकंसत् स्वतंत्र शिवाद्वैतात्प्रभिन्नक्रमं तिरुवाडुतुरै धर्मपुर सूर्यवान् कोयिल् इत्यादि द्रविडदेश शैवमठेष्वतीव व्याप्तं । शक्तिविशिष्टाद्वैतनाम्ना चकास्ति । महाराष्ट्रांध्र कर्णाटकेषु सदाशिव परंपरागत शिवाद्वैत नामक शैवमेव वर्तते ॥

## कल्याणदेशिकपरंपरा

सदाशिव गुरुपरंपरागत कल्याणदेशिक करुणा कटाक्ष लब्धशांभव दीक्षादीक्षित द्वादशाराध्य संप्रदायप्रवर्तकाः वर्णाश्रमधर्म शिवोपासना शिवलिंगधारणभाजः जगद्गुरु त्रिलोकगुरु लोकाराध्येत्यादि बिरुदांकिता श्चाराध्यब्राह्मणाएव सदाशिवगुरुसंप्रदायकाः ॥ अतएवोक्त । सदाशिव समारंभां नीलकंठाख्य मध्यमां । अस्मदाचार्य पर्यंतां वंदे गुरु परंपरामिति । इयमेव शिवचिंतामणि प्रभाया मस्मद्गुरुवर्यैं रुक्तासदाशिव गुरुपरंपरा ॥

श्लो॥ सदाशिवं शिवं स्कंदं केशवं पद्मसंभवं । नंदीश्वरं कुंभयोनिं भरद्वाजात्रि गौतमान् । दधीचि मुपमन्युंच मार्कंडेयं पराशरं । श्वेतंचलकुलीशंच नीलकंठशिवाह्वयम् । रेणुकं मरुळं चैकोराम मुद्भटदेशिकम् । श्रीपतिं मंचनंचैव मल्लिकार्जुन पंडितं । विश्वाराध्यं वेमनंच । प्रणमाम्याभिमताप्तये ॥

## स्कंदगुरुपरंपरा

स्कंदो वामदेव मुनये, स नीलकंठशिवाचार्याय सच मणिकर्णिकातीरस्थित महामठालंकृत विश्वेश्वरशिवाचार्याय सच सदाशिवमार्गप्रकाशिक देशिकाय सच शिवाप्रयोगि शिवक्कोळुंदु शिवाचार्याय चोपादिशत् ॥

अयंच द्रविडदेशांतर्गतार्कवनेमठं संस्थाप्य शिवकाम सुंदरी समेत ज्ञान नटराजं श्रीकाळहस्तीश्वरंचार्चयन् शैवसिद्धांत प्रचार मकरोत् ॥

अपिच स्वाचार्योपदिष्ट वर्त्मना सदाशिवोहंभावनया शिवानंदनिष्ठायां निषण्णः अतिगतवर्णाश्रमः अतिवर्णाश्रम शिवयोगीति पप्रथे ॥

श्रीमत्स्कंदगुरो शिवेन कथितेति सिद्धांतसारावळ्यां गस्कन्ना स्वामिगुरु रमतः शिव एवेतिसिद्धम् ॥

## नंदिकेश गुरुपरंपरा

नंदिकेश्वर स्सनत्कुमाराय सः सत्यज्ञानदर्शिने सः परज्योतिमुनये सः श्रीकंठाय शैव मुपदिदेश । धर्मपुरादि शैवमठप्रतिष्ठित मिद शैवम् ॥

## उपदेशक्रमः

शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः । शक्तिस्तु शक्तिमद्रूपा व्यतिरेकं नवांछति । तादात्म्य मनयोर्नित्य वह्निदाहिकयोरिव नवह्नेर्दाहिकाशक्ति र्व्यतिरिक्ता विभाव्यते ॥ शक्ते स्संकोचभावेन निर्गुणश्चेति गीयते । इत्यादिना शक्ते स्संकोचविकासाभ्यां निर्गुण सगुणरूपेण कीर्तनीयस्य शिवतत्त्वस्य महाप्रवाहवदविच्छिन्नगुरुपरंपरोपदेशक्रम मनौपक्रमइति शास्त्रोपदेशक्रमः प्रतिसंहिताक्रमइति द्विधा कथ्यते ॥

## शिवाद्वैतः

सर्वविद्याधिपतिना सर्वानुग्रहतत्परेण जगदीश्वरेण निगमागमांतप्रतिपादितोयं शिवाद्वैत सिद्धांतः जगद्गुरु नीलकंठाराध्येन स्वभाष्ये प्रकटितः । सर्वप्रपंचमेकेन मार्गेण चालितं सकल्पनता शिवाचार्याणामयमेव प्रथमः ॥

एतदीय शारीरकब्रह्ममीमांसा सुत्रभाष्ये उपास्यश्शिवः । उपासको जीवः । शिवोऽहं भावनारूपाद्वैतमार्गेण पाशुपतदीक्षां गृहीत्वा ईश्वरदर्शनहेतुभिः श्रवणमननिदिध्यास नगतभाव द्वयत्वगवधानत्रयमनोवधानपंचकपटस्थलस्यपद्धिमात्मक पंचत्रिंशदुपचारपूजाभिः र्मरणांत मिष्ट प्राणभावात्मक शिवलिंगोपासनया भ्रमरकीटन्यायेन शिवसारूप्य सायुज्यंच गत्वा शिवानंदानु भव एव शिवाद्वैत इति प्रतिपादितः ॥

## शिवाद्वैत मार्गः

श्लो॥ माहेश्वर सत्संगा
दीक्षां त्यक्त्वाच संस्तुतौ धीमान् ।
कळ्याणदेशिकेक्षा
कारुण्याल्लब्ध शांभवोपेतः ॥

श्लो॥ प्रारब्धकर्मभोगा
त्प्रक्षीणाघो महानंदः ।

आवरणाष्टकसहित
स्त्वप्राकृतदिव्यविग्रहंचेशाम् ॥

श्लो॥ षल्लिंगांगविवेकी
षट्स्थलपूजारतो ध्यात्वा ।
निरतार्चित शिवलिंग
स्तदनुग्रहधूतमायिको जीवः ॥

श्लो॥ आयुर्वित्तसुतादिसौख्य मधिकं मुक्त्वा क्षिता वंतनः
सारूप्यं लभते निरंतर मुमाकांतस्य संपूजनात् ।
हार्दानुग्रहलब्धमध्यधमनीद्वारा बहिर्निर्गतः
मुक्तोर्चिर्दिन पूर्वपक्ष षडुदङ्मासाब्दवातांशुमत् ॥
ग्लौ विद्युद्वरुणेंद्र धातृमहित स्सीमांत सिंधु मह
त्तीर्वा विष्णुपदोर्ध्वभानमजडं नित्यं महानंदम्
श्रीकैलासमुपेत्य नंदति चिरं तस्मिन्परब्रह्मण·
सायुज्यं समवाप्य तेन सह लब्धानतभोगो व्रती ॥

## शिवएव परंब्रह्म

गुणमूर्तिभ्यः ब्रह्मविष्णुरुद्रेभ्यः परं परब्रह्मैव शिवनामशब्दितं भवति । शिवएवकेवल इत्याद्युपनिषद्वचनानि शिवमेव परात्परं शक्तिविशिष्टं कार्यकारणरूपं निमित्तोपादानभूतं निरूप यंति। ऋतगं सत्यं परंब्रह्मेति श्रुतिरपि शिवमेव परब्रह्मपदवाच्यं वदति ॥

श्रीकंठभाष्यस्य शिवार्कमणिदीपिकाकर्तारः अप्पय्यदीक्षिता अपि ब्रह्मतर्कस्थले उच्चावचै रुपनिषद्वचनप्रकांडैः तद्ब्रह्म शंकरभवानिति तर्कयाम इति शिवएव परंब्रह्मेति निश्चिक्युः ॥

## शिवतत्त्वं

अहमेकः प्रथम मासम् । वर्तामिच भविष्यामि नान्यः कश्चन मत्तो व्यतिरिक्तः। ध्यायी तेशानम् । इत्यादिना निखिलजगज्जन्मादिकारणमनितरसाधारण शिवेशेशानेश्वर मृत्युंजयाष्ट मूर्त्यादि शब्दवाच्यं शिवतत्त्वमेकमेव चतुर्वर्णाश्रमस्थै स्समुपास्यम् ॥

नतत्समश्चाभ्यधिकश्च दृश्यते । खद्योतो यदि चंडभानुसदृशस्तुल्यो हरिश्शंभुना । निंबाको यदि चंदनेन सदृशस्तुल्यो हरिश्शंभुना सूतसंहितायाम् । जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्तौ रुद्रः तुरीयमक्षर मिति ब्रह्मोपनिषदि । अकारं ब्रह्माणं नाभौ उकारं विष्णुं हृदये

मकार रुद्र भ्रूमध्ये ओंकार सर्वेश्वरं द्वादशांत इति । ब्रह्मविष्णुरुद्रेशा भवमृगत [illegible] शिव मद्वैतं चतुर्थं प्रतिपादयंति । सदाशिवपदानां [illegible] शिव [illegible] ॥

## घंटापथः

इदानीं ब्रह्मपथेषु तत्स्वपि बहुषु नीलकण्ठाराध्येन राजमार्गतया निर्णीतोयं शिवाद्वैतपथः । शुद्धाद्वैत विष्णु विशिष्टाद्वैतादीनां [illegible] ब्रह्मपथं निरूपितमेव ॥

## शक्तिविशिष्टत्वम्

मायांतु प्रकृतिं विद्यान्मायिनतु महेश्वरमिति चिदचिदाकार मायाशक्तिविशिष्टसकल जगदीशत्वेपति: ॥

अयमीश्वर: जगतो निमित्त मुपादानश्च । चेतनाचेतनात्मक समस्तजगत: शिवादाविर्भा वोक्त्या शिवस्यैवोपादानत्वम् । प्रवृत्ताशेष शक्तिक: शिवएव प्रथमसृष्टौ कर्ता [illegible] । अनंतेश श्रीकंठादयश्च शिवशक्त्यैव विभिन्नाः पतिपदार्थएवांतर्भवंति ॥

चिदचिच्छक्तिविशिष्टेश्वरस्य जगदुपादानत्वेपि विशेषणीभूतमायाया एव विकारित्वम् । आरंभणाधिकरणे ब्रह्मप्रपंचयो नैक्यमत्यंतभेदवादिन: घटपटयोरिव तदनन्यत्वादिश्रुतिविरोधात् । नच अत्यंताभेदवादिन नवा शुक्तिरजतयोरिव एकतरत्वमिथ्यात्ववादिन, तत्स्वाभाविक गुणभेदपरश्रुति विरोधात् । किंतु शरीरशरीरिणो रिव गुणगुणिनोरिवच विशिष्टशिवाद्वैतवादिन इत्युक्तत्वात् नविकारित्व परशिवस्य ॥

सविशेषाद्वैतमेव शिवाद्वैतम् । अनंतकल्याणगुणैकनिधित्वं हेयगुण प्रत्यनीकत्वंच सप्रपंचस्य परब्रह्मणो लक्षणम् । नित्यनिर्मलगुणाश्रयविशिष्टं शिवरूपमेव ब्रह्म मुक्तप्राप्यम । ननिर्विशेषंब्रह्मास्तीति " उपस्थितेतस्तद्वचनात् " त्यधिकरणे निर्णीतम् । अतो मुक्तप्राप्यंब्रह्म शिवादन्यं नभवति । किंतु सगुणं सविग्रहं सप्रपंचं सविशेषं शिवस्वरूपमेव ॥ आकाशवत्सर्वगतोपि नकोपि दोषस्स्पृशति परशिवम् रूपगुणनिषेधश्रुतीनां रूपगुणवत्येव शिवे परब्रह्मणि हेयरूप गुण निषेधपरत्वात् । स्वतंत्रस्य शिवस्य शरीरसाम्येसत्यपि जीववत् नतद्गतदोषोपपत्ति: ॥

## जगदुभयकारणत्वम्

कूटस्थस्य जगदाकारेण परिणामे सत्यपि नामरूपविभागानर्ह सूक्ष्म चिदचिच्छक्ति विशिष्टस्य परमेश्वरस्य कारणत्वं नामरूपविभागार्ह स्थूलचिदचिच्छक्ति विशिष्टस्य कार्यत्वंच निगदितम् । ईश्वरे जगदुभयकारणत्वंच श्रुतिसिद्धमेव यथोर्णनाभि सृजते गृह्णतेच । तदात्मानम् स्वयमकुरुतेत्यादिना ॥

## मुक्तिः

अनादिना कर्मनिगुडेन बद्धो जीवः तत्तत्फलभोगानुगुण मायामयबहुकळेबरप्रविष्टः दुर्वारतापमंधानं पारवश्येन व्यपोहितुमकुशलएव मुह्यमानश्शोचति । तत शांभवदीक्षितोय शिव पूजाध्यानादिभि शिवप्रसादं प्राप्य अपहृतशोकः उपासनया भ्रमरकीटन्यायेन शिवसाम्यं सायुज्यंच प्राप्नोति । अतएवोक्तं निरंजनः परमंसाम्य मुपैतीतिकीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् । मानवश्शिवयोगेन शिवरूपत्वमाप्नुयादिति लिंगपुराणेचाभिहितम् ॥

## उपासना

उपासनाविधिपराः निषदः । उपासनामंतरा परमेश्वरमुक्ते रसंभवः । शांकारभाष्ये निषदामुपासनाविधिपरत्वस्य निराकृतत्वेन तन्मतानुसारिणां परमेश्वरोपासनाविश्वासानुपपत्ते. । येच मुमुक्षव स्तैरवश्यं नीलकंठभाष्यमेव पठितव्यम् ॥

शास्त्रदृष्टयातूपदेशो वामदेववदिति सूत्रेषूपासकस्योक्त शिवाभेदभावनायाः आरोपिता भेदभावनापरत्वात् । ब्रह्मभावाभ्यासेन विश्वामित्रागस्त्यादीनां स्वर्गनरकरण जलधिकबळनादि सामर्थ्यमिव मंत्रिणां गरुडाभावनया गरुडासाधारणधर्ममिव शिवोहंभावनया शिवसादृश्य प्राप्नो त्युपासकः । अतएवोक्तं सुदर्शनाचार्यचरणैः । मंत्री यथा गरुडभावनया गरुत्मानिति - अद्वैत मागमशिरोभिरुपासनायामुक्तं तदेव परमार्थतया नवाच्यमितिच ॥

निरन्वयोपासकानामत्रैव मुक्तिरित्यनियमाधिकरणादि सूत्रभाष्योक्तवाक्यानां स्वमत पोषणाय केचित्काराभिमतत्वेन परिकल्पितत्वाभ्युपपत्त्या न तानि नीलकंठाराध्याभिमतानीति ज्ञायते । यतः श्रुते "एषसंप्रसादोस्माच्छरीरात्समुत्थाय परज्योतिरुपसंपद्य स्वेनरूपेण निष्पद्यत" इत्युक्तम् ॥

## नकेवलाद्वैतमेव शिवाद्वैतम्

न निर्विशेषं ब्रह्म । तद्भावापत्तिर्नमुक्तिः । अंशाधिकरणे आभासाएव चेति सूत्रभाष्ये युक्तय आभासा एवेति शुद्धाद्वैतस्य निराकृतत्वात् । केचन निर्गुणब्रह्मणएव शिवशब्दितत्व मभ्युपेत्य केवलाद्वैतमेव शिवाद्वैतमिति कथयंति । तादृशतत्त्वप्रतिपादकसूत्रभाष्यविरहात्तन्नोप पद्यते ॥

केवलाद्वैतबोधकशांकरभाष्ये परतत्त्वस्य नामरूपरहितत्वात्केवलाद्वैतस्य शिवाद्वैतपद व्यवहार्यत्वानुपपत्तेश्च न शांकरभाष्यं शिवाद्वैतभाष्यमितिवक्तुं शक्यते ॥

अतएव जगद्गुरु नीलकंठाराध्य विरचित नीलकंठभाष्यस्यैव शिवाद्वैतभाष्यमिति व्यवहार स्संगच्छते । तस्माद्वर्णानुयायिनामाष्टावरण पंचाचारशीलव्रतानां स्वेष्टलिंगधारिणां शैवानामिद मेव भाष्यमित्यूरीकर्तव्यम् ॥

## इष्टलिंगधारणम्

यथा त्रिवृत्सूत्रं शरीरांतःस्थितं यद्यपि बहिर्भागेण निर्गीयते तथा प्राणलिंगमेतत्। शिवा माहुर्लिंगे सुषुप्तिरित्यादिश्रुतिभिः विद्यमानेपि प्राणलिंगधारणे बाह्यशरीरे इष्टलिंगधारणस्या प्यावश्यकत्वात्। यथा तृणादिदानेन प्रसन्नागोस्तनतस्सार क्षीरं ददाति तथा बाह्य शिवलिंगपूजाया निराकरणं स्वमनोरथसिद्धं रक्षकत्वात्। अतो यन्मनसा सकल्पते तद्वाचा वदति तत्कर्मणा करोतीति श्रुतिरपि बाह्यलिंगपूजाया आवश्यकत्वं निर्धारयति। यत मनआदिप्रतीकमेव ब्रह्मेत्युपासते तद्धि प्रतीकोपासनम। नहि मनआदेर्ब्रह्मगुणत्वाभावात् निराकारत्वात् प्रतीकालम्ब नानां ब्रह्मप्राप्तिः। दहराद्युपासकानां साक्षाद्ब्रह्मोपासकत्वेन न प्रतीकालम्बनत्वम् ॥ तथा शिवलिंगोपास कानाम्। अन्यथा काशी श्रीशैल रामेश्वरादिक्षेत्रवासिनां विश्वेश्वर मल्लिकार्जुन रामलिंगेश्वरादि देवानां सर्वेषां पूजाया निष्फलकत्वाच्च। निरर्थकत्वाच्च ॥ शिवलिंगपूजाभ्यासादिना विना पशुत्वानिवृत्तेः। आत्मनः पशुत्वनिवृत्तिमन्तरेण शिवत्वं नजायते। ततश्चोत्तममध्यमाधमयोः त्रयसहित पाशुपतव्रतधारणस्यानिवार्यत्वापत्तेश्च ॥

तस्माद्भस्मरुद्राक्ष शिवलिंगधारणात्मक पाशुपतव्रताचरणपूर्वक श्रवणमननादिभ्यासेन परशिवंप्रसन्नानामेव तत्साक्षात्कारद्वारा परममुक्ति रिति ॥

अणोरणीयानित्यपरिच्छिन्नस्याप्यणवादिपरिमाणकलिंगरूपत्वस्यासंभावितत्वेन विश्वेश्वरादि लिंगानां नास्तिकता प्रसक्त्या अंतरिबाह्यमपिलिंगोपासनं साक्षाद्ब्रह्मोपासनमेव ॥

प्रमिताधिकरणे शब्दादेव प्रमितः। अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य नततोविजुगुप्सतेत्यादिना ईश्वरएव ब्रह्मपदवाच्य इत्या निर्णीतत्वेन शिवलिंगो पासनैव सर्वेषां कर्तव्यं नह्यन्यदेवतार्चनमिति ब्रह्मसूत्रकारस्य व्यासमहर्षेराशय इत्यभिरूपमणीनां मनसि प्रस्फुरतीत्यत्र नास्तिशकाशुक्लेशोपि ॥

श्लो॥ यथा न्यग्रोधबीजस्थ श्शक्तिरूपो महाद्रुमः
तथा हृदयबीजस्थं विश्वमेतच्चराचरं ॥
वह्निरूप्मेव विज्ञेया रश्मिरूपा रवेरिव
सर्वस्यजगतोवापि सा शक्तिः कारणात्मिका ॥

शक्तिसंधाने शरीरोत्पत्तिः ॥ चैतन्यमात्मा इच्छाशक्ति रुमाकुमार। सुप्ते जगत्यन्त रात्मरंगस्थलस्य: ससारनाट्यप्रवर्तयिता जागरूकः परमेश्वरएकएवेत्यादिना अभिनवगुप्तपादाचार्यः काश्मीरे स्वतंत्रशिवाद्वैतं प्रकल्पयामास ॥

प्रत्यभिज्ञा दर्शनशब्देन प्राचीनकाले वसुगुप्तेन प्रचारित स्पंदशास्त्र, सोमानंदेन प्रकटितं प्रत्यभिज्ञाशास्त्रच गृह्यते। त्रिकदर्शनं माहेश्वरदर्शन मित्यादिनामभिः शाक्तं काश्मीरशैवं व्याप्तमासीत् ॥

## अद्वैतम्

अद्वैतवादिनः बहवः वर्तते। तेच ब्रह्माद्वैत - शून्याद्वैत - शब्दाद्वैत - शाक्ताद्वैत - ईश्वराद्वैता शिवाद्वैत नामभिर्व्यवह्रियंतेच ॥

ईश्वाराद्वैतमेव शिवाद्वैतम्। काश्मीरशिवाद्वैते स्पंदशास्त्रस्य प्राधान्यं दीयते। स्पदोनाम शक्तिरेव। शिवप्रधानावस्थायां विश्वबीजशक्ति र्विलीना भवति शिवे। शक्तिप्रधानावस्थायामपि शिवाभावः वर्तते। चिदंशःशिवभावः। अनंदांशश्शक्तिभावः। इयंच ज्ञानभक्तयोस्सामंजस्या वस्था। शिवशक्तयोर्भेदो नास्ति। ज्ञानमार्गभक्तिमार्गयोरधिकरणं शिवाद्वैतमेव ॥

षट्पंजरिकास्तोत्रे श्रीशंकराचार्येणापि कथितम्

> सत्यपि भेदापगमे। नाथ तवाहं नमामकीनस्त्वं।
> सामुद्रोहि तरंगः। क्वचन समुद्रो नतारंगः ॥

अतएवोक्तं संविदुल्लासेप्यद्वैतमपि द्वैते पर्यतस्यतीति तदित्थम् ॥

> तादन्य दमत्यकल्पमपरैरद्वैतमाख्यायते
> तद्द्वैते बत पर्यवस्यति कृतं वाचाट दुर्वैद्यया।
> एते ते वयमेव मभ्युदयिनोः कस्यापि कस्याश्चिद
> प्यालस्योत्सितमेकरस्य मुभयो रद्वैतमाचक्ष्महे ॥

शैवे शिवजीवैक्य — लिंगांगसामरस्य — शिवसायुज्यनामभि श्शिवशक्तयो [शिव जीवयो] रैक्यं भ्रमरकीटन्यायेन समभिहितम् ॥

## ईश्वराद्वैतब्रह्माद्वैतयोर्भेदः

ब्रह्मवादे सदसद्भिलक्षणत्वमनिर्वचनीयत्वञ्च मायायाः प्रतिपाद्यते। शुद्धब्रह्मा विवर्तात्मकः। आनादिप्रवर्तमान व्यवहारस्याधिष्ठानभूतः। एतस्य कर्तृत्वं स्वातंत्र्यंच कल्पितम्। यथार्थतया नास्ति। स्रष्टृत्वादिधर्मा आरोपिताश्चाध्यस्ताश्च भवंति। विश्वं दर्पणदृश्यमाननगरीवद्भाति। बौद्धशास्त्रोक्त संवृतिरेव मायाशब्देन कथ्यते। एषा स्वाभाविकी नहि। साक्षीभूतः भावाभावविहीनः सृष्टि स्थितिसंहारहेतुरात्मा कर्ता नहि। ज्ञानस्य क्रियायाश्च कर्तृता वर्तते। ज्ञानक्रिययोरुन्मुखतैवेच्छा कथ्यते। इच्छादिशक्तित्रयसहितस्स्वातंत्र्यमयः कथ्यते ॥

ब्रह्मव्यतिरिक्तजीवपदार्थो नास्तीति शङ्कराद्वैतमेव ब्रह्माद्वैतेन व्यवह्रियते ॥

## ईश्वराद्वैतम्

ईश्वराद्वैते माया - अज्ञानं च भवति । किन्तु तत्पदार्थः स्वातन्त्र्यशक्तिः । यथा नटः बहुभूमिकास्स्वेच्छया गृहीत्वा नानाप्रकाराभिनयं करोति तथा परमेश्वरः नानाविधाः लीला विलासान्प्रदर्शयति ॥

स च स्वतन्त्रः । स्वरूपस्य प्रकटनाप्रकटनयोः समर्थः । यथा नटः स्वस्वरूपेणाच्छादितोऽप्यनाच्छादित एव भवति तथैव परमेश्वरोऽपि क्रीडापरायणः लीलाविलासान् नानाविध लीलां स्वसृष्टशक्त्या प्रदर्शयति । स्वातन्त्र्यशक्तिविजृम्भणमेवाज्ञानमित्युच्यते । सा स्वाभाविकी शक्तिः ॥

> इच्छा सैव स्वच्छा । संतत समवायिनी सती शक्तिः ।
> सचराचरस्य जगतो । बीजं निखिलस्य निजनिलीनस्य ॥
> स्वेच्छाशक्त्युद्गीर्णं जगदात्मतया समाच्छाद्य
> निवसन् मणर निखिलानुग्रहनिरतस्सदाशिवो भाति ॥

एवं षट्त्रिंशत्तत्त्वसन्दोहे भोजराजेन कथितम् ॥

शक्तिविशिष्टशिवः प्रपंचात्मना परिणमति । अतएवोक्तं प्रत्यभिज्ञाकारिकायामुत्पलदेवेन । भाष्ये च ॥

> "चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः ।
> योगीव निरुपादानमर्थजातं प्रकाशयेत्" इति ॥
> शक्तयोऽस्य जगत्सर्वं । शक्तिमांस्तु महेश्वरः ।
> शक्त्यादिचपृथिव्यन्तं । शिवतत्त्वसमुद्भवम् ॥

## परिणामवादः

काश्मीरदेशस्थितशिवाद्वैते विवर्तवादोऽङ्गीकृतः चिच्छक्तिरेव प्राधान्यम् । शिवशक्ती एव तस्यकारणभूतानि । ब्रह्माद्वैतपदे वर्तमानस्य ब्रह्मशब्दस्य शिवशब्दत्वमुक्तम् । प्रपञ्चस्य परमेश्वर प्रतिबिम्बत्वं प्रतिपादितम् । यथा सुवर्णमयानि कुंडलानि तथैवेदं जगत् ब्रह्ममयं कारणस्यैव सत्यत्वं तथाभासित्वमुच्यतेति प्रायशः शक्तिप्राधान्येन शङ्कराद्वैतमेवानुसरतीव । विवर्त परिणामाभ्यां द्वाभ्यामप्युपपद्यतेति संवित्प्रकाशे यदुक्तं तदयुक्तमेव । शिवश्च शिवश्च शिवौ तयो रद्वैतं शिवाद्वैतमित्युत्पत्त्या कारणब्रह्मैव कार्यब्रह्मात्मना परिणमति ॥

चिदचिदाकारेण परिणत' परमेश्वरः स्वशरीरभूत सूक्ष्मचिदचिद्वस्तु स्वस्माद्विभज्य तत्स्सृष्ट्वा तदेवानुप्रविशदिति श्रुत्या स्वतो विभक्तं चिदचिद्वस्तुनी स्वयमात्मतया प्रविश्य सच्चत्यच्चाभवदिति सदसत्प्रपंचरूपेण बहुधा परिणतोभवेदिति सूत्रभाष्योक्त्या परिणामवाद एव प्राचीन' ॥

प्रकृत्यधिकरणे भाष्यकारेण "अपित्र कारणरूपविकारोहि परिणामः पूर्वरूप परित्यागेन रूपांतरापत्तिः परिणाम इति" परिणामलक्षणमुक्त्वा परिणामवादस्यैव स्वीकृतत्वात् विवर्तवादस्य नाम्नाप्यनुल्लेखितत्वाच्च विवर्तवादप्रतिपादकश्रुतिसूत्रविरहा न्नविवर्तवादो भाष्यकाराभिमत: ॥

निगमागमप्रतिपादितपरिणामवाद एव स्वीकरणीयः ॥

## विवर्तवादः

अप्रच्युतपूर्वस्वरूपस्याऽसत्यनानाकारावभासो विवर्तः । तदुक्तम् ॥

सतत्वतोऽन्यथाप्रथा विकार इत्युदीरित. ।
सतत्वतोऽन्यथाप्रथा विवर्त इत्युदाहृतः ॥

विवर्तवादो मायावादि वेदान्तिनाम् । तन्मते कारणमेव कार्यस्वरूपेण भासते । इति कारणस्यैव सत्यत्वम् । नतु कार्यस्य सत्यत्वम् । यथा शंकरभारतीमते शुक्तौ - इदं रजतमिति ज्ञानानंतर मधिष्ठानभूतशुक्तिज्ञाने जाते बाधज्ञानेन पूर्वज्ञातं रजतं यथा निवर्तते तद्वत् ब्रह्मज्ञाने जाते सति जगदादिभेदप्रपंचो निवर्तते ॥ तदुक्तम् ॥

ततो निरंश आनंदे विवर्तो जगदिष्यतां ।
अवस्थांतरभानंतु विवर्तो रज्जुसर्पवदिति ॥

## विवर्तवादखंडनम्

तदिदं वेदांतिमतमपि नसमीचीनता मर्हति । असतिबाधे प्रत्यक्षसिद्धपदार्थस्य मिथ्यात्वासंभवात् । यत्रहि बाधज्ञानं किंचिदन्यत्कारणंवा भवति तत्रैव मिथ्यात्वस्य वक्तुं शक्यत्वात् । तथाच कापिलसूत्रम् । जगत्सत्यत्व मदुष्टकारणजन्यत्वात् बाधाकाभावादिति । तत्र दुष्टकारणजन्यं यथा पीतशंखज्ञानम् । बाधकंच नेदं रजतमितिज्ञानम् । नचेदं तथा । प्रकृत्यादीना मदुष्टत्वात् । नेदं जगदिति प्रत्ययाभावात् बाधकंच नास्ति । तस्माज्जगतो मिथ्यात्वासंभवात् विवर्तवादोऽसङ्गत एव ॥

## तृतीयपादे

द्युभ्वाद्याधारतयाऽङ्गुष्ठमात्रतया, ईक्षतिकर्मत्वेन श्रूयमाणो भूमाऽऽकाशदहरशब्दवाच्यो जगत्कंपनहेतुः परमेश्वरएव मुक्तप्राप्यं परज्योतिः परमशिवाभिधानं परब्रह्मेत्युक्तम् ॥

## चतुर्थपादे

आत्मावाऽरे द्रष्टव्य इत्यादौ द्रष्टव्यत्वादिना विधीयमानो जगतो निमित्तोपादान कारणभूतो जगत्कार्यवानात्मा परमेश्वर एव । शतरुद्रीयपुरुषसूक्तागमस्मृतीतिहासपुराणादीनां तात्पर्यलिंगसमन्वयेन परब्रह्मबोधकत्वमुक्त्वा महतः परत्वेनोच्यमानमव्यक्तशब्दवाच्यं शरीरत्वेन प्रतिपाद्यच सर्वप्रपंचकारणत्वेन जन्मरहितत्वादजेति श्रूयमाणा प्रकृतिः परमेश्वरकारणिकेत्युक्तम् ॥

## द्वितीयाध्यायस्य प्रथमपादे

सत्कार्यवादेन कार्यकारणयोर्जगद्ब्रह्मणोर्वस्त्वेकत्वे समन्वयस्य तर्कबाध्यत्वं नास्ति । विशिष्टशिवाद्वैतस्य समन्वयसिद्धस्य स्मृतिविरोधोत्पत्तिर्नास्तीत्युक्त्वा कार्यकारणयो र्जगद्ब्रह्मणो स्समन्वयसिद्ध मनन्यत्वं कणभक्षाऽक्षपादादीनां पक्षनिराकरणं ब्रह्मणो जगदाकारेण परिणामित्वं विचित्रजगत्कारणत्व मवाप्तसमस्तकामस्येश्वरस्य लीलया जगत्सृष्ट्यादिव्यापारत्वं परिपूर्णतया रागद्वेषविहीनस्य परब्रह्मणो विषमसृष्टेः कर्मसापेक्षत्वाद्वैषम्यनैर्घृण्याऽभावश्च प्रतिपादितः ॥

## द्वितीयपादे

सांख्य वैशेषिक बौद्ध जैन केवलनिमित्तब्रवादि पांचरात्र सिद्धांता निराकृताः ॥

## तृतीयपादे

आकाशस्य तस्माद्वायोश्च समुत्पत्तिस्संभवति किंतु सर्वकारणस्य ब्रह्मणो नकुतश्चिदुत्पत्तिः ॥

चराचरवस्तुवाचकनिखिलशब्दानां ब्रह्मणि मुख्यवृत्या व्यवस्थापनम् । जीवानामुत्पत्तिर्नास्ति । तेषां स्वाभाविकं ज्ञानमस्ति । अणुत्वं कर्तृत्वंच वर्तते । तत्कर्तृत्वंच परमेश्वरायत्तमेव । तेच जीवात्मानः परमेश्वरांशभूता इत्युक्तम् ॥

## चतुर्थपादे

विभून्येकादशेन्द्रियाणि ब्रह्मणस्समुत्पद्यन्ते । अणुः पंचवृत्यात्माप्राणवायुरपि ब्रह्मणस्संजायते । आदित्यादीनामिंद्रियाद्यधिष्ठानं परमेश्वरायत्तमेव । मुख्यप्राणादन्यान्येवेन्द्रियाणि । मूलकारणात्परब्रह्मणस्संज्ञामूर्तिक्लुप्तिर्भवतीत्युक्तम् ॥

## तृतीयाध्यायस्य प्रथमपादे

जीवो देहांतरप्राप्तये भूतसूक्ष्मैः परिष्वक्तो याति । शुक्लगत्या स्वर्गादिगमनम् । कर्मशेषेणैवागच्छति । इष्टापूर्तान्यकुर्वता चंद्रगमनं नास्ति । किंतु यमालये तत्कर्मफलमनुभूय प्रत्यवरोहणमेव । स्वर्गादवरोहतो जीवस्याऽऽकाशादिदशापत्तिः । व्रीह्यादिप्राप्तेः प्रागाकाशादिषु नातिचिरं तिष्ठति जीवः । अन्यजीवाधिष्ठितव्रीह्यादौ जीवस्य संश्लेषमात्रम् । न जन्मेति स्थितम् ॥

## द्वितीयपादे

स्वप्नेऽनुभूयमानं रथादिकमर्थजातं परमेश्वरसृष्टं न जीवसृष्टम् । तस्य सुषुप्तौ नाडीपुरीतति ब्रह्मणि च शयनमवगम्यते । सुषुप्तो जीव एव प्रतिबुध्यते नान्यः ॥

जागरस्वप्नसुषुप्तिभ्यो भिन्ना मूर्छानामावस्था मरणार्धसंपत्तिः । सर्वावस्थासु सर्वान्तर्यामितया स्थितिमतोऽपि परमेश्वरस्य न तद्दोषकलंकप्रसंगः । परशिवात्परं किंचिदपि वस्त्वंतरं नास्ति । सदृशमपि नास्ति । उभयतालिंगयुक्तः परमेश्वर एव सर्वानुष्ठातॄणां सर्वानुष्ठानफलदाता भवतीत्युक्तम् ॥

## तृतीयपादे

दहरप्रणवाद्युपासनं परशिवमुद्दिश्यैव कर्तव्यम् । ब्रह्मप्राप्तुर्विदुषः पुण्यपापयोः केवलहानं केवलमुपायनं च क्वचित् क्वचित् श्रूयते । इदं च पुण्यपापविमोचनं देहवियोगकाले विरजानद्यतिक्रमणकाले च जायते । आधिकारिकपुरुषाणां देहपातादूर्ध्वमपि प्रारब्धकर्मपरिसमाप्तिपर्यंतं फलांतरानुभव एव । ततश्च मुक्तिः ॥

अर्चिरादिः सर्वास्वप्युपासनासु भवति । नीलकंठत्वोमापतित्वादयो धर्माः परशिवस्य स्वरूपधर्माः ॥

सविशेषमेव मुक्तप्राप्यं न निर्विशेषम् । परब्रह्मणः स्वरूपभेदाभावेऽपि गुणविशेषणभेदेन भेदात् पृथक् पृथक् तदुपासनाप्रयोगो भवति । सर्वास्वपि परविद्यासूपास्यं लिंगमूर्तिस्त्वुमासहितं परंब्रह्मैव । भस्मरुद्राक्षशिवलिंगधारणादयः उपासनांगाववद्धास्सर्वैरप्युपासकैः ग्राह्याः । इति भणितम् ॥

## चतुर्थपादे

गृहस्थाश्रमवदाश्रमांतरमप्यनुष्ठेयम् । गृहस्थाश्रमिणां त्वग्निहोत्रादिकं विद्यांगत्वेनानुष्ठेयमेव । गृहस्थो विहितकर्मव्यासक्तो निषिद्धकर्मपरित्यागी शमदमादिसंसक्तो वर्तेत । यज्ञादिकं विद्याहीनेन विद्यावताच विद्यांगत्वेन सकृदेवानुष्ठेयम् । अथर्वशिरस्सु पुराणागमेषु सुप्रसिद्ध भस्मरुद्राक्षशिवलिंगधारणात्मकपाशुपतव्रतनिष्ठानां विद्या मुक्तिश्च संभवत्येव । प्रबलकर्मांतर

प्रतिबंधकाभावे परोपासनाफल मिहजन्मनि भवति । तत्सद्भावेतु जन्मांतरे संभवति । पाशुपत व्रतधारी आचारलिंग गुरुलिंगि शिवलिंग चरलिंग प्रसादलिंग महालिंग नामक षड्लिंगांगविवेकी भक्तमाहेश्वर प्राणलिंगि शरणैक्यरूपषस्थलज्ञः श्रेष्ठलिंगधारी कृतषट्कालशिवपूजः शिवोहंभावनया शिवोपासनेन ब्रह्मस्वरूपं प्राप्नोतीति कथितम् ॥

## चतुर्थाध्याये प्रथमपादे

मोक्षसाधनतया वेदांतप्रतिपादित भस्मरुद्राक्ष षडक्षरमंत्रजप शिवलिंगार्चनादि पाशुपत धर्माः मुहुर्मुहुरनुष्ठेयाः । उपास्योपासकयोर्भेदेसत्यपि शिवोहमित्यद्वैतभावनया परशिवोपासनं कर्तव्यम् । आसन एव ब्रह्मोपासीत, उपासनायाश्चित्तैकाग्रता मुख्या । जीवितपर्यंत महरह मीश्वरोपासनं कार्यम् । ज्ञानं नाम उपासानारूपमेव, तच्च यदा प्रारभ्यते तदा तत्सामर्थ्यादेवोपास कानां पापं क्षीयते । उपासनादेव पूर्वाघनाशः उत्तराघाश्लेषश्च भवति । विद्यावतामधिकारपदस्थि तानां प्रारब्धकर्मभोगानंतरं मुक्तिरेवफलं नजन्मपरंपरेतिनिगदितत् ॥

## द्वितीयपादे

उत्क्रांतिसमये प्रथमं वाक् मनसि सपद्यते । ततस्सर्वाणींद्रियाणि मनसि संपद्यन्ते । ततः प्राणे मनोवृत्तिर्लीयते । सच प्राणः जीवेन इंद्रियाध्यक्षेण सयुज्यते । नतस्य तेजसि लयः । विद्वदवि दुषोस्समानैव जीवोत्क्रांतिः । देहाद्युत्क्रांतस्य विदुषोऽर्चिरादिगतिरुपपद्यते । भूतांतरसंसृष्टस्य जीवयुक्तस्य तेजसः परदेवतायांलयोऽविभागापत्तिमात्रम्, नस्वरूपलयः । अर्चिरादिगत्युपक्रम पर्यंतं विद्वदविदुषोरुत्क्रांतौसाम्येपि विद्वान् मूर्धन्यनाड्या निष्क्रामति, अविद्वानितरया कयाचि न्नाड्या उत्क्रांतो विद्वान् निशि दिवाच कर्मसंबंधादेवोर्ध्वंगच्छतीत्युक्तम् ॥

## तृतीयपादे

विद्वानर्चिरादिनैव ब्रह्मप्राप्नोति । छांदोग्यश्रुतार्चिरादिक्रमस्य मध्ये श्रुत्यंतरसिद्धः संवत्सरा दूर्ध्वमादित्यात्पूर्वं वायुर्निवेशनीयः । कौषीतक्युपनिषदि श्रूयमाणा वरुणादयोपि विद्युल्लोकादूर्ध्वं यथाक्रमं सन्निवेश्याः । अर्चिरादयो मार्गाभिमानिनो विदुषांगमयितारो देवताविशेषाएव । अमानवः पुरुषः परशिवोपासकान् साक्षात् सदाशिवमेव गमयति, नतु हिरण्यगर्भम्, नवा नारायणम् ॥

## चतुर्थपादे

ब्रह्मप्राप्तस्य जीवस्य मलतिरोहितं ब्रह्मसदृशगुणं स्वरूपं पूर्वसदेव मलावरणापगमादाविर्भवति । तत्स्वरूपं स्वयंप्रकाशं अपहतपाप्मत्वादिविशिष्टंच भवति । मुक्तस्य संकल्पमात्रेण सकल भोग्यवस्तुसिद्धिरस्ति । स्वेच्छया सशरीरत्वमशरीरत्वंच भवति । मुक्तस्य स्वशक्तितिरोधायक मलापगमे शिवानुग्रहेण संवृत्तेसति स्वशक्त्या विश्वव्याप्तिस्संभवति । मुक्तस्य परमेश्वरसाम्यं

जगद्व्यापारवर्ज्यमेव । साक्षात्कारशिवज्योतिषां तत्पदानुप्रविष्टानां [illegible] इति भणितम् ॥

## पिण्डितार्थः

भक्तानुग्रहार्थं ध्यानपूजानिमित्तान् शिवो महालिङ्गरूपो भवति । पाशुपतयोगेन पुमान् भ्रमरकीटन्यायेन परशिवमुपास्य शिवसायुज्यमाप्नोतीति [illegible] महाभाष्यं विरच्य तत्त्वस्मानेवानुजग्राह जगद्गुरुपरमाचार्यश्रीनीलकण्ठाचार्य, [illegible] भारतीयान् ॥

## श्रीनीलकण्ठभाष्यम्

इतःपूर्वमिदं भाष्यं चेन्नपट्टणस्थ नृपालानुग्रहेण श्रीमदप्पय्यदीक्षितेन कृतया शिवार्कमणि दीपिकाव्याख्यया श्रीकण्ठभाष्यमितिनाम्ना कुम्भकोणवास्तव्येन [illegible] मुद्रापितम् । श्री श्रीनिवासाचार्येण मैसूरुनगर्यां भूतपूर्वमेव मुद्रापितम् ॥

सांप्रतं नीलकण्ठभाष्यनाम्ना शिवचिंतामणिप्रभाव्याख्यया [illegible] राकारपु नरसिंगगुप्तेन मुद्रापितम् । आदौ श्री मुदिगोंड [illegible] राध्येनच प्रेरिताः नागलिङ्गशास्त्रिणः तद्द्रव्यसहायेन [illegible] । पश्चात्सर्वं मुद्रणंच यावद्धनमुख्यं तावद्धनं दशसहस्ररूप्यकाणि दत्वा [illegible] व्याख्यानकर्तुः नागलिङ्गशास्त्रिणश्च जीवितचरित संग्रहेण मया कथ्यते ॥

## महोपाध्याय शिवयोगि मुदिगोंड नागलिङ्गशिवाचार्यः

जगद्गुरु नीलकंठाचार्यकृत प्रस्थानत्रयस्य व्याख्यानकर्ता [illegible] वास्तव्यः यजुश्शाखाया मयं भारद्वाजसगोत्र समुद्भूत् । आपस्तम्बसूत्र भोजराजगुरु [illegible] एतेषां मूलपुरुष. ॥

एतस्य नागलिङ्गशास्त्रिण पिताऽघोरमंत्रोपासकोऽघोराराध्यः । माताच [illegible] । जायाच लिंगांबिका । ज्येष्ठभ्राता नागमल्लयाराध्यः । कनिष्ठभ्राता रामलिङ्गशास्त्री । दीक्षागुरुः मल्लपल्लि वीरेशलिंगाराध्यः । षष्ठसप्तत्युत्तराष्टादश हूणशके [१८७६] निजजन्मनामलमकार्षीत् । एतस्य तिस्रः कन्यका द्वौ सुब्रह्मण्यशास्त्री अघोरमल्लिकार्जुन नामधेयौ पुत्रौच वर्तेते । पंचनदक्षेत्र प्रांत नदुकावेरीग्रामवास्तव्य श्चिदंबरनगरप्रचारित ब्रह्मविद्यादिपत्रिकाधिपतिः परसमयपंचानन पांचजन्यबिरुद श्रीनिवासदीक्षितो वेदांतविद्यागुरुः ॥

रामनाथनगरसंस्थाने व्याकरणशास्त्र परीक्षां ददुः । तेनाधिनगरनिवासे क्रमशः समस्कृत कलाशालायां व्याकरणसाहित्योपाध्यायपदवी मलंकुर्वाणस्यैतस्यैकादशवत्सराः गताः । ततः

नीलकंठभाष्यस्य शिवचिंतामणिप्रभानामकव्याख्यां रचयामास । अन्यथादिग्रंथरत्नानि बहूनि व्यरचयत् । एतस्य पांडित्यस्यानभिज्ञाः नकेपि संत्यस्मिन् देशे ॥

श्रौतशैवमतप्रकाशिका — शैवरहस्यबोधिनी — ज्ञानबोधिनीतिनामभिः पत्रिकास्तिस्रः स्थापयित्वा मतसेवां भाषासेवांच चकार । १९२९ संवत्सरे महोपाध्यायबिरुद मांध्रसारस्वत समाजामवाप । गोमाहात्म्यं लिखित्वा प्रथमबहुमति लेभे ॥

आत्मकूरुसंस्थानपंडितेन बालसरस्वती तर्कतीर्थेत्यादि बिरुदांकितेन श्रीनिवासाचार्येण वेणुवंकग्रामनिवासिना कंदाळ वरदाचार्येणच मतविवादं कृत्वा विजयंप्राप । तथैव चेन्नपुर्यां डि. गोपालाचार्यकृत वैष्णवसभायामप्यन्यान्विमतपंडितान्समजयत् ॥

बहुवारं शैवसभाध्यक्षपदवी मलंकृत्य शैवमतप्राशस्त्य मुद्घोषयामास । १९३७ वत्सरे षष्ठिपूर्तिमहोत्सवो महोत्सवेन सवृत्तः । भाष्यचर्चासु स्वमतविमतपंडितान्विजित्य नीलकंठभाष्य मेव सर्वेषां मोक्षमार्गदर्शकमिति निश्चिकाय । विजयवाटिकास्थितस्य शैवमहापीठस्याधिपत्यं प्रथम मवाप्य शिवयोगि शैवमहापीठाधिपतिः नागलिंगशिवाराध्य इतिप्रथां तन्मूलककीर्तिंचालभत ॥

## म॥ रा॥ आकारपु नरसिंगगुप्तः

जगद्गुरु नीलकंठभाष्य व्याख्यालेखनमुद्रणद्रव्यदाता वरंगल्नगरवास्तव्यो महाराजश्री आकारपु नरसिंगगुप्तः । अयञ्च शिवपूजाधुरंधर. । वैश्यशिरोमणिः । वरंगल्नगरे विश्वेश्वरालयं महांत शिवलीलासंकलितं निर्माय श्री. लो. निगमागमाचार्यैः मुदिगोंड पापयाराध्यैः वीरभद्रा राध्यैश्च शिवलिंगप्रतिष्ठां कारयामास ॥

आकारपु नरसिंगगुप्तस्य श्रीमत्यावनंतलक्ष्मीदेवी सुशीलादेवी नामधेये द्वेभार्ये वर्तेताम् । एतस्य पिता चेन्नयगुप्तः । माताच राजमांबा । औरसपुत्र.पद्मनाभो दशमवत्सरे ममार । अतः द्वितीयविवाहं चक्रे । तस्या अपि तथैवसंतानाभावात् सौ॥ सुशीलानाम्नीं बालिकां राजचेन्न विश्वेश्वरनामक पुत्रंच दत्ततयास्वीचकार । एतां सुशीलां म॥ चकिलं नागभूषणाख्यस्य दत्तवान् । एतयोर्द्वयोरपत्यभूतां चिरंजीविनीं सौभाग्यवतीं शरच्चंद्रिकाभिधां आत्मनः दत्तपुत्रस्य राजचेन्न विश्वेश्वरस्य दत्वा परिणयं चकार आकारपु नरसिंगगुप्तः ॥

स्वेष्टलिंगधारी नरसिंगगुप्तः प्रतिसोमवासरं सौवर्णपूजापरिकरैः तद्व्यतिरिक्तदिनेषु राजत पात्रैश्च महातीं शिवपूजां करोति । पूजासमये शतरुद्रीयपाठकानां मुलुगु वीरमल्लयाराध्य मधु महादेवघनपाठिप्रभृतीनां गुरोः मुदिगोंड रामलिंगाराध्यस्यच प्रत्यहं सत्कारंच करोति ॥

अयंच नरसिंगगुप्तः कन्यकापरमेश्वरी धर्मकर्ता । पितृस्थापितधर्मसत्रं वर्धयामास । विश्वेश्वर संस्कृतकळाशालां स्थापयित्वा प्रतिवत्सरं पंचसहस्ररूप्यादायप्रदायकान्भवनादीन्

दत्वा निर्माय पाल्कराधं शिखरनिर्माणं कृतवान । शैलगंगन्वत्र [illegible] । शंकराराध्य चरित मल्लंपल्लि वीरेश्वरशर्मकृत कृतिरत्नं [illegible] । श्री नागलिंगाराध्यकृत [illegible] मणि प्रभायाश्च कृतानिरयमेव । बहूना विद्यार्थिना [illegible] । [illegible] कारयामास । अनेकेषा मर्थिनां यथाशक्ति [illegible] चकार । [illegible] पोषयामास । सुंदरतम प्रासादं निर्मंग । अन्नत्र स्थापयामास । [illegible] सेवनया पूतात्मागं महद्धन व्ययीकृत्य [illegible] कारयामास ॥

कृतिदातारो श्री ब्रो. मदिगोंड नागलिंगशास्त्रिण, [illegible] नरसिंगगुप्ताश्च सांप्रतं कैलासवासिन. ॥

गतेपि भर्तरि तदाज्ञापरिपालिन्यौ श्री अनन्तलक्ष्मीदेवी सुशीलादेवीन [illegible] नीलकंठभाष्य मुद्रणकार्यं निर्वाह्य सरस्वतीदेव्याः नूतन [illegible] मणि प्रभानामक माभरण मर्पयतीदानीमित्यग विषयः प्रमोदस्य पराकाष्ठा [illegible] ॥

आचंद्रार्क मेतद्वंश श्री अन्नपूर्णाविशालाक्षीसमेत काशीविश्वे[illegible] पुत्रपौत्रैः कीर्तिप्रतिष्ठाकर. अभिवर्धतामित्याशास्महे वयम् ॥

## भाष्यप्रतिकृतय:

अस्माभिश्चतस्रो भाष्यप्रतिकृतय स्संगृहीता. । तासामन्ये [illegible] कीर्तिशेषिण· कंकुकूरि बालसूर्यप्रसाद भूपालाल्लब्ध नीलकंठभाष्यस्य बहुपुस्तकेषु [illegible] वर्तंत । दिङ्मात्र मुदाहरामः ।

यत्र यत्र केचिदन्येचेत्यादिना पदान्युक्तानि तत्र तत्र तादृश पदानि [illegible] नसंति । अतः स्वमतपोषणाय पदकल्पितत्व मभ्यूह्यते । प्रथमपादस्थित षोडशपुटे [illegible] मक त्रिविधस्वरूपतापत्रस्येत्यादि वाक्यानि भाष्यांतरेषु नसंति ॥

देविडीसंस्थानभाष्ये नवत्युत्तरशतसंख्याकान्यधिकरणानि । श्रीकंठभाष्ये द्व्यशीत्युत्तर शतसंख्याकानि । चतुष्षष्ठ्युत्तरपंचशतसंख्याकानि सूत्राणि देविडीभाष्ये । पंचचत्वारिंशदुत्तर पंचशतसंख्याकानि सूत्राणि श्रीकंठभाष्ये ॥

अतः नीलकभाष्यं प्राचीनं संस्कृतमिति विज्ञायते ॥

> रेणुकं मबुलं चैकोराममुद्भटदेशिकं
> श्रीपति मंचनंचैव मल्लिकार्जुनपंडितं
> विश्वाराध्यं वेमनंच प्रणमाम्यभिमताप्तये ॥

एते नीलकंठभाष्ये वर्तंते । नान्यत्र ॥

## धन्यवादः

एतद्भाष्यव्याख्या लेखने मुद्रणे मुद्रार्पणेच साह्यकारिणां मुलुगु वीरमल्लयाराध्य शिवपुरं मल्लयाराध्य मूलेपल्लि राजशेखरशास्त्रि मुद्दिगौंड सुब्रह्मण्यशर्म प्रभृतीनामन्येषां ग्रंथकर्तॄणांच धन्यवादानर्पयाम । मुद्रणद्रव्यदातॄणामन्वयमाचंद्रतारकमभिवर्धतामिति पौनःपुन्येन परशिव मभ्यर्थयामः ॥

श्रेयांसि बहुविघ्नीनीति प्राचीना भाणकानुसारेणैतद्भाष्यलेखन मुद्रण मुद्रार्पणेषु महती प्रतिबंधपरंपरा समाजगाम । तथापि परब्रह्मणः परशिवस्य कृपया भाष्यमुद्रणं समाप्त मासीदिति निवेदयामि सहृदयेभ्य इति सर्वं शिवम् ॥

शिवं मूर्तित्रयातीत
मष्टमूर्तिं सशक्तिकम् ।
मूर्तामूर्तं महं वंदे
निर्गुणम् परमेश्वरम् ॥

एकशिलापुरी
१२—६—५३

विद्वच्छिरोमणिः
मुद्दिगौंड वीरेशलिंगशास्त्री
एकशिलानगरीस्थित
विश्वेश्वर संस्कृतांध्रकळाशाला प्रधानाध्यापकः

श्री शिवाय गुरवे नमः

# भूमिका

अयि भोः पण्डितमणयः ?

किञ्चि दिहावधत्त

विदितमेवहि श्रीमतां दुरन्तसंसारार्णवमग्नचेतनजातसमुत्तितारयिषुणा नारायणेषुणा समवतारितं बृन्द मुपनिषदां । अथाऽपि तदीयंहृदय कलुषीकृत मनेकैर्मुनिवरै विविधदर्शन प्रणयनपरैरि त्यौपनिषदर्थनिर्दिधारयिषो र्जगदीशुतुराज्ञया तादर्थ्यपरिगृहीतनारायणापरावतांरण भगवता पराशरकुमारेण समारचित मिद मुत्तर मीमांमाशास्त्रम् ॥

ततश्चैत त्परमबोधरत्नखनिना श्रीबोधायनमुनिना समनुगृहीतयावृत्त्या समलंकृत मासीत्। तथाऽपि बहुभिः पूर्वाचार्यैः कलुषीकृतभाव मासीदिति भगवता श्रीनीलकण्ठशिवा राध्येन श्रुतिसूत्रवृत्तिसामरस्याऽदूष्येणभाष्येण भूषित मासीदिति "व्याससूत्र मिद नेत्रं विदुषां ब्रह्मदर्शने । पूर्वैः कलुषितं नीलकण्ठे नाद्य प्रसाद्यते । नीलकण्ठो विवृणुते श्रीकण्ठोप समाह्वयः । बोधायनोक्तिमालम्ब्य ब्रह्मसूत्रं यथाश्रुतिः" इति पद्याभ्यां विज्ञायते ॥

ततोऽपि कलिमहाराजकलितकलहकोलाहलाकुलिते शैवादिमतजाते सङ्ग्रीभाव मापि पादयिषुणा श्रीशङ्कराचार्येण मतभेदनोदक शुद्धाद्वैतपरभाष्यं विरच्य प्रख्यापित मासीत् ॥

अथाऽपि श्रीहरिभक्ति मुद्दिधीर्षुणा श्रीरामानुजाचार्येण श्रीभाष्यं विरच्य प्रचारित मासीत् ॥

ततश्च पृथगाचार्यपीठमधिरुरुक्षुणा पूर्णप्रज्ञेन भाष्यान्तरकल्पने नाकल्पितम् ॥

एव मन्यैरपि भास्करनिम्बार्कप्रभृतिभि र्विरचितानि भाष्या ण्युपलभ्यन्ते । विद्यमानेषु ब्रह्मसूत्रभाष्येषु श्रीनीलकण्ठीयमेव प्राचीनमिति विज्ञायते । तथाहि — शंकरविजये "शिव तत्परसूत्रभाष्यकर्ता यमिनामृषभेण नीलकण्ठ" मित्यादिपद्याभ्यां श्रीनीलकण्ठाराध्यस्य शंकराचार्यसमकालिकत्वोक्तावपि तत्र शंकाचार्यात्प्राचीनानामेव भट्टभास्करादीनां तत्समकालि कत्वग्रहणेन भाष्यकर्तु र्नीलकण्ठाराध्यस्याऽपि ततः प्रचीनत्व मवगम्यते ॥

किञ्चि — श्रीमदप्पयदीक्षितेन्द्रै शिवार्कमणिदीपिकायाम् । "व्याससूत्र मिदं नेत्र" मितिपद्यविवरणे एव मर्वाचीनभाष्यप्रणेतृणांतु पूर्वपूर्वोपदेष्टार आसंस्तानुद्दिश्य पूर्वाचार्यैरित्युक्तिरि त्यनेनाऽन्येषां भाष्यप्रणेतृणा मर्वाचीनत्वोक्त्याऽपि भाष्यकर्तु र्नीलकण्ठस्य तेभ्यःप्राचीनत्व माविष्कृतम् ॥

परमतात्पर्यमिति प्रख्यापनेन प्राकृतजनावर्जनस्यैव परमाभिमतत्वेनावगम्यमानत्वात् । नकेवल मिदंभाष्यं तै स्स्वाभिमतशुद्धाद्वैतसाधकवाक्यप्रक्षेपेण व्यत्यासितम् । किन्तु स्वाऽनभिमतलिङ्गधार णोपपादकवाक्यानां मुत्क्षेपेणाऽपि व्यत्यासितम् । अतएव नीलकण्ठभाष्ये देशान्तरेषूपलभ्यमानानि क्रियासारादिप्राचीनग्रन्थेषु नीलकण्ठभाष्ये "मौनवदितरेषा" मित्याद्यधिकरणे सूक्ततयोदा हृतानि महालिङ्गधारणोपपादकानि वाक्यानि तैस्संस्कृते श्रीकण्ठीये नोपलभ्यन्ते ॥

नह्यभिमतानि प्रक्षिपता मनभिमतानां मुत्क्षेपण मकिञ्चित्करमिति नतत्रवक्तव्यंवञ्च । नकेवलं कतिपयवाक्यसंयोजनवियोजनाभ्यामेव व्यत्यासितम् । अपितु भाष्यकर्तुः पौरुषनाम मात्रपरिग्रहपूर्वकं निजनामोत्सर्जनेन नाम्नाऽपि परिवर्तितमिति ॥

"नीलकण्ठो विवृणुते श्रीकण्ठापरसमाह्वय" इति वचनेन श्रीकण्ठनामपौरुषेयमितिव्यक्त मेव। वास्तव मेवंविधं व्यत्यास मजानन्तः कतिचि दिदं श्रीकण्ठभाष्य नीलकण्ठभाष्या दन्यदिति भ्रान्तिमुपजग्मिरे । अन्ये प्येवंविधभ्रान्तिमेव मूलीकृत्य नीलकण्ठभाष्यं नष्टमितिच मन्यन्ते । नेद मत्यन्तविस्मयावहं यतश्च दीक्षितवर्याणा मप्रतिमविद्यानिधितया निस्तुलप्रशस्तिशालित्वा त्तेषु ग्रन्थव्यत्यासकरणा द्यल्पदोषाणां हठाद्विश्वसनीयत्वात् । एवमपि वस्तुवृत्त विमृश्य निश्चि न्वतां विपश्चिता मत्र — नकिमपि संशयास्पद मित्यास्ताम् ॥

वस्तुतस्तु 'शिवतत्परसूत्रभाष्यकर्ता यमिनाम्रूपमेण नीलकण्ठ' मित्यादि शङ्करविजयपद्य पर्यालोचनया शैवसूत्रभाष्यकर्तु र्नीलकण्ठसमाख्यैव मुख्येतिविज्ञायते ॥

अतएव प्राञ्चः श्रीकण्ठसंज्ञया विकृतमपिभाष्य "मेकदेशविकृत मनन्यवद्भव" तीति न्यायेन नीलकण्ठभाष्यमित्येव व्यवहरन्ति । अमुमंश नीलकण्ठभाष्यं नष्टमिति विवदन्तः परेप्यभ्यनुयन्त्येव ॥

ये तावन्नीलकण्ठभाष्यं नष्टमिति मन्वते तै रवश्यं शैवसूत्रभाष्ये प्राचीनें द्वे-शैवभाष्य कर्तारौच प्राज्ञा वुभा ववर्तिषातामिति नकेवल मवश्यं गौरवमेव सोढव्य मपितु तदुपापादनाय परंरौरवमपि ॥

तथाहि — यदि नीलकण्ठश्रीकण्ठनामानां वुभावाचार्यौ पुराऽभूतांचे त्तर्हि शङ्करविजये श्रीकण्ठाख्यः कुतो नोदाह्रियत । तदाऽयमप्रतीतइतिवा, अजातइतिवा, जनित्वाम्रुतइतिवा किल प्रतिवक्तव्यम् तैः ॥

किञ्च ये खलु नीलकण्ठोपज्ञंभाष्यं नष्टमिति विवदन्ते ते सर्वेऽपि श्रीकरभाष्यावलम्बिन एव । ते काम मवलम्बन्तु । प्रभूतापभ्रंशापऽसिद्धादिभिः ह्रीकरमपि तदेव यथाविधि यथारुचि यथामतिच । तयाऽपि श्रीकरभाष्यकृतापि बहुधाबहूकृतं नीलकण्ठीयंभाष्यं द्रष्टुं नावकाशइ त्यास्ताम् । अथ यदि ते नीलकण्ठभाष्ये प्रचारिते श्रीकरभाष्यस्य प्रचारोऽस्तमियादिति

श्री शिवाय गुरवे नमः

# कृतिपति वंशानुक्रमः

श्लो ॥ हैदराबादभिख्याक पुरीप्रान्तेऽतिविश्रुते ।
शंपाबा न्नगरे ह्यास गुरवार्यो गुणाग्रणीः ॥ १

आकारपाख्य सद्वंशमुक्तामणि रिति श्रुतः ।
नागमांबासमाख्याकदेवीशो नयभूषणः ॥ २

तस्यसूनु स्सूनृतपर स्सिगयाख्यो दृढव्रतः ।
यल्लमांबाख्यया देव्या वरंगलपुर मागतः ॥ ३

तस्यात्मज श्चेन्नयाख्यो विख्यातगुणवैभवः ।
राजमाम्बाख्यया देव्यासह कीर्ति मुपार्जयत् ॥ ४

य श्चामेधधिया जहास धिषणं राया धनेशं तथा ।
भोगेनाऽपि पुरन्दरं ह्यचलया वैकुण्ठनाथं श्रिया ।
तस्यार्यस्य गुणावळिं गणयितुं कोनु क्षितौ स्यात् क्षमः ।
तस्य स्या त्सदृश स्सइ त्यभिदधु र्याथार्थ्यसम्मानिनः ॥ ५

सोऽयं प्रातिष्ठिप द्देवीं कन्यकापरमेश्वरीम् ।
धर्मशालामपि तथा विशालां चारुवैभवः ॥ ६

श्री राजमाम्बाख्यतदीयदेव्यां
चेन्नय्यगुप्तस्य सुतोऽजनिष्ट ।
गुणप्रदीप्तो नरसिंगगुप्त ।
स्सुरापगायामिव बाहुलेयः ॥ ७

अनेन भूयो जनकप्रतिष्ठिता
सा धर्मशाला बहुधा हि संस्कृता ।
यथा त्वसंख्या जनता वसे च्चिरम् ।
समस्तसौकर्यकृतानुमोदना ॥ ८

एनेन विश्वेश्वराख्यलिङ्गं सर्वाङ्गमङ्गलम् ।
अन्नपूर्णा विशालाक्षी देवीभ्यां सुप्रतिष्ठितम् ॥ ९

मद्रकाळीरमेताथ वीरभद्रो प्रतिष्ठित. ।
तथा वल्ली देवसेना देवीभ्यां क्रौञ्चदारण· ॥

आसी त्प्रतिष्ठितो नागराजा श्चागम प्रतिष्ठिता ।
नरसिंगगुप्तमज्जन भक्त्या निर्मापित यथा ॥

विश्वेश्वरमहालिङ्गमहाप्रासादमेवच ।
तत्र प्रतिष्ठिता न्देवविग्रहानपि शोभनान् ॥

सुवर्णरत्नखचितनानालङ्कार भासुरान् ।
तत्र नित्यं त्रिकालञ्च प्रचरन्त सुशोभनम् ॥

भजनंश्रीवेदपाठगीतावाद्यादिसंयुतम् ।
महाभोगं बहुविध भक्ष्यभोज्यादिमंदुरम् ।

द्रष्टव्यमेव तद्वक्तुं नहि केनाऽपिशक्यतं ।
नरसिंगगुप्तसंज्ञस्य विनयादिगुणोत्तमः ॥

सत्यावत्यन्तलालित्य भासिताऽमलविग्रहं ।
अनन्तलक्ष्मीदेवी सुशीलादेवीति मज्ञितं ॥

अन्वर्थनाम्न्या वन्योन्यनित्यसांगत्यभूषितं ।
ज्येष्ठपत्नी सुत श्चासी त्किल सर्वाङ्गसुन्दरः ॥

अनन्तपद्मनाभाख्यो विनयाभरणोज्ज्वलः ।
स्वभोगा योग्यतायाऽयंलोको नालमितीर्वहि ॥

द्वादशाब्दाढ्यएवाऽयं सुतो दिव मुपागमत् ।
पित्रो र्बंधुजनस्यऽपि तद्वाश्रयवता मपि ॥

शुचमापादय न्तीव्रा मपारां चारुदर्शनः ।
नरसिंगगुप्तबन्धूना मखिलानाञ्च मूर्तयः ॥

शिलामय्यः प्रदृश्यन्ते विश्वेश्वर महालये ।
अनेन गुप्तवर्येण प्रेरितेनैव य न्मया ॥

शिवचिन्तामणिप्रभासमाख्या निर्मिताकृतिः ।
नीलकण्ठशिवाराध्यभाष्यव्याख्या सुविस्तृता ॥

नरसिंगगुप्तवर्य त्वं शंभौ माहेश्वरेषु च ।
विद्वत्सु मयि चात्यन्तं भक्तिमा न्पात्र मित्यपि ।। २३

दत्तेय भवते शंभुमाहात्म्यभरिताकृतिः ।
श्रेयसे यशसे प्यस्तु पुत्रपौत्रादिसंपदे ॥ २४

आवाभ्यां शिवभक्तेभ्य श्शिवंभूया दनारतम् ।
स्वस्त्यस्तु सर्वलोकेभ्य स्सुखिन स्सन्तु जन्तवः ॥ २५

महेशपादाम्बुजभावनादृते
व्यतीर्य तेय भवते सुधीमते ।
अशेषवेदार्थसमाहृतिः कृतिः
यशो दिशन्ती जयता त्सदैव ॥ २६

चन्द्रार्कताराद्युतिमावहन्त्यो
यावद्रसेयुस्स्म तमोनिहन्त्यः ।
तावत्कृतिश्च ज्ज्वलता ज्जनानां
हार्दं महासन्तमसं नुदन्ती ॥ २७

शिवं भूयात्

एवं

**मुदिगौंड नागलिंगाराध्यः**

## षट्काल शिवपूजा परायणानां स्वेष्टलिंगधारिणां शिवभक्तानां परशिवं भक्तिद्रढीकरणार्थं नित्यपठनीयानि शिवाद्वैतबोधकानि परशिवत्वस्वरूप निर्णायकानि कानिचिदुपनिषद्वाक्यान्येतद्भाष्यस्थितान्यत्र लिख्यन्ते ॥

---

शिवएकोध्येयशिशंकरस्सर्वमन्यत्परित्यज्य । —अथर्व

विविक्तदेशेतु सुखासनस्थः शुचिस्समग्रीवशिरश्शरीरः
अत्याश्रमस्थस्सकलेंद्रियाणि निरुध्य भक्त्यास्व गुरुं प्रणम्य
हृत्पुंडरीकं विरजं विशुद्धं विचिंत्यमध्ये विशदं विशोक
अनंतमव्यक्तमचिंत्यरूप शिवं प्रशांत ममृत ब्रह्मयोनिम्
तदादिमध्यांत विहीनमेकं विभुं चिदानंदमरूपमद्भुतम् ।
उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशांतं
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ —कैवल्योपनिषत

यदातमस्तन्नदिवा नरात्रि र्नसन्नचासच्छिवएवकेवलः
तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञाच तस्मात् प्रसृता पुराणी ।
ऋतनगं सत्यं परंब्रह्म पुरुषं कृष्णपिंगळं
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमोनमः । —महानारायणोपनिषत्

नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतये अंबिकापतये
उमापतये पशुपतये नमोनमः ॥ —म । ना ।

नमोहिरण्यबाहवे सेनान्ये दिशांचपतये नमोनमः । —शतरुद्रीये

हिरण्मयः पुरुषः । सर्वलिंगगस्थापयति पाणिमंत्रं पवित्रम् । —म । ना ।

यदा पश्यः पश्यते रुक्मवर्णं कर्तारं मीशं पुरुषं ब्रह्मयोनिं
तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्य मुपैति । —मुं । ३-१-३

आत्मानमरणिं कृत्वा प्रणवंचोत्तरारणिं
ध्याननिर्मथनादेव पाशं दहति पंडितः । —छांदोग्यम्

ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपति र्ब्रह्मणोधिपतिर्ब्रह्मा
शिवो मे अस्तु सदाशिवोम् ॥ —म । ना ।

त्रियंबकं यजामहे सुगंधिं पुष्टिवर्धनं उर्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ —शतरुद्रीयम्

यो देवानां प्रथमं पुरस्तात् विश्वाधिको रुद्रो महर्षिः
हिरण्यगर्भं पश्यत जायमानं स नो देवश्शुभया स्मृत्या संयुनक्तु ॥

सर्वोह्येषरुद्रस्तस्मै रुद्राय नमो अस्तु । —म । ना ।

पुरुषो वै रुद्रः ,,

लिंगे सुषुप्तिः —हंसोपनिषत्

परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञानबलक्रियाच —श्वे

कारणंतुध्येयस्सर्वैश्वर्यसंपन्नः शंभुराकाशमध्ये

द्वासुपर्णौ सयुजो सखायौ समानं वृक्षं परिषस्वजातौ
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति ॥ —म

अपिवा यश्चांडालश्शिवइति वाचंवदेत् तेनसहसंवदेत् तेनसहसंवसेत् तेनसहभुंजीत
यातेरुद्रशिवातनूः स्घोरापापकाशिनी तयानस्तनुवा शंतमया गिरिशंताभिचाकशीहि —शत

घोरान्या शिवान्या यच्छतरुद्री जुहोति यैवास्यशिवातनूस्तांतेनप्रीणाति ॥ - -यजु ९कां

आत्मावारे द्रष्टव्यश्श्रोतव्योमंतव्यो निदिध्यासितव्यः ॥ —बृह ६-५-६

यथोर्णनाभिस्सृजते गृह्णतेच यथापृथिव्यामोषधयस्संभवति ॥ —मुंडकोपनिषत्

ब्रह्मविद्ब्रह्मैवभवति ॥ —आनंदवल्ली

नायमात्मा प्रवचनेन लभ्यः नमेधया नबहुना श्रुतेन ।

यमेवैष वृणुते तेनलभ्यस्तस्यैषआत्मा वृणुते तनूं स्वाम् ॥ —कठोपनिषत्

सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः सर्वव्यापीच भगवान् तस्मात्सर्वगतश्शिवः ॥

ईशानः पितृरूपेण महादेवो महेश्वरः प्रियतां भगवानीशः परमात्मा सदाशिवः
मायांतु प्रकृतिं विद्यात् मायिनंतु महेश्वरं तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्

यो वेदादौ स्वरः प्रोक्तो वेदांतेच प्रतिष्ठितः
तस्य प्रकृतिलीनस्य यःपरस्समहेश्वरः ॥ —म । ना ।

यो रुद्रो अग्नौ यो अप्सु य ओषधीषु
यो रुद्रो विश्वाभुवनाविवेश तस्मै रुद्राय नमो अस्तु ॥ —शत

नचास्यकश्चिज्जनिता नचाधिपः नतत्समश्चाभ्यधिकश्च दृश्यते
ब्रह्मविदाप्नोति परम् ॥ —आनंदवल्ली

सर्वाश्रये मरुतो मर्जयन्त स्वयंतेजानम चाग्निमन्त्र
पश्यन्निरूणांरूपं निधाय तेनपाणि गृह्णनामगोनाम ॥ ऋग्वेदः

सदेवसौम्येदमग्रआसीदेकमेवाद्वितीयम सत्यंज्ञानमनन्तं ब्रह्म ॥ तैत्तरीयम

तेषामेवैतां ब्रह्मविद्या वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम ॥ अथर्ववेद:

सएवाग्निष्णुस्सप्राणस्सकालोग्निस्सचन्द्रमा

द्वेवाव ब्रह्मणोरूपे मूर्तञ्चामूर्तमेवच ॥

अमृतस्य देवधारणो भूयासम तैत्तरीयम

वेधामनुक्रियादीक्षाभि: कारणादितनुत्रये भानप्राणेष्टाख्य महालिङ्गत्रयं विभ्रयात् ॥

नमो ब्रह्मणे धारणेमे अस्त्वनिराकरण धारयिता भूयासं कर्णयोश्श्रुत
माच्योढ्वममामुष्य ओम ॥ -म । ना ।

समानेवृक्षे पुरुषोनिमग्नः अनीशया शोचति मुह्यमान. ।

जुष्टयदापश्यत्यन्यमीशमस्यमहिमान मामोतिवीतशोक ॥

तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नोरुद्र. प्रचोदयात् ॥

श्रद्धाभक्तिध्यानयोगादवेहि ॥ श्रुता

दहर विहप परमेश्मिभूतं हृत्पुण्डरीक पुरमध्यसगस्थं
तत्रापिदहृ गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम ॥ - महानारायणम

अहमेकः प्रथममास वर्तामिच भविष्यामिच नान्यः कश्चन मत्तोव्यतिरिक्त: ॥ अथर्व

सोश्नुते सर्वान्कामान्सहब्रह्मणाविपश्चिता ॥ —तैत्तरीयम् २-१-१

व्रतंपाशुपतंचीर्ण यद्भिर्नेरादरेणतु तेषामेवोपदेष्टव्यमिति वेदानुशासनम् ॥ सुतसंहिता

व्रतमेतत्पाशुपत व्रतमेतच्छांभवं तत्समाचरेत् मुमुक्षुर्नपुनर्भवाय ॥ ---अथर्ववेद:

शिवएव केवलः — शिवादन्यन्न किंचन ॥

चतुर्थं शिवमद्वैतम्

---

## जगद्गुरु नीलकंठाराध्य स्तुतिः

श्लो॥ निगमशिखरसिंधौ स्वीयपांडित्यशैलो
न्मथनजनितभाष्याख्यां सुधां चावितीर्य
भवविषयविभीता न्प्राणिनो पुपुष त्र
स्स जयतु गुणसिंधु नीलकंठा बुधेंद्र ॥ १

दुर्वादि दर्वीकर नील कंठः
तपःक्रिया तर्पित नीलकंठः
शास्त्रार्थवादे कृतसिंहकंठः
जीयात् स साक्षा द्भुवि नीलकंठः ॥ २

कृपासमुद्रः खलु नीललोहितः
भवांबुधौ मग्नजनोद्दिधीर्षु
स्वनामधेयांकित भाष्यपोतं
निर्मातु मेवावततार भूमौ ॥ ३

श्रितजन हृदयाब्ज भास्करोसौ
कलुष विषद्रुम भेदने कुठारः
करकलित निजात्मतत्त्वबोधः
स जयतु मेचककंठदेशिकेंद्र ॥ ४

योऽद्वैतमत्तगजकुंभभिदा मृगेंद्रः
बौद्धादि दुर्मतगिरींद्रमहेंद्रवज्र
वेदागमांभोनिधि कुंभयोनिं
तं नीलकंठबुधदेशिक मानतोस्मि ॥ ५

भस्मत्रिपुंड्रांकित दिव्यमूर्तिः
रुद्राक्षकंकण लसत्करदंड युग्मः
षट्काल संपूजित स्वेष्टलिंगः
तं नीलकंठबुधदेशिक मानतोस्मि ॥ ६

# विषय सूचिनी

श्रीकंठीय ब्रह्ममीमांसा सूत्रभाष्ये अध्यायपादाधिकरणानां संग्रहेण विषयसूजिनी :–

तत्र प्रथमाध्याये निखिलवेदान्तवाक्यानां तदनुगुणस्मृतीतिहामानांच तात्पर्येण ब्रह्मणि समन्वयः ॥

प्रमेयस्वरूपम प्रतिपाद्यतें॥

प्रथमपादे स्पष्ट लिङ्गवाक्य विचार:
द्वितीयपादे अनतिस्पष्ट लिङ्गवाक्य विचार:
तृतीयपादे स्पष्टाऽस्पष्ट लिङ्गवाक्य विचारः
चतुर्थपादे अस्पष्टलिङ्गवाक्य विचारश्च क्रियते ॥



## प्रथमाध्यायस्य द्वितीयपादे

## प्रथमाध्यायस्य तृतीयपादे

पृष्ठसंख्या

## प्रथमाध्यायस्य चतुर्थपादे

# ब्रह्मसूत्राणां वर्णक्रमेण सूचिनी

## श्री नीलकंठभाष्य व्याख्या प्रकटित प्रमाणग्रंथपट्टिका

श्री शिवाय गुरवे नमः
श्री महागणाधिपतये नमः
श्री मेधादक्षिणामूर्तये नमः

# श्री नीलकण्ठभगवत्पादाराध्यकृतौ शारीरकब्रह्ममीमांसा सूत्रभाष्ये प्रथमाध्यायस्य

## प्रथमः पाद आरभ्यते

ॐनमोऽहंपदार्थाय लोकानां सिद्धिहेतवे
सच्चिदानन्दरूपाय शिवाय परमात्मने ॥

## शिवचिन्तामणिप्रभा आरभ्यते ॥

मङ्गलं दिशतु मे गजाननो मङ्गलं दिशतु मे षडाननः
मङ्गलं दिशतु मे महेश्वरी मङ्गलं दिशतु मे महेश्वरः॥ १

यो विश्वप्रभवो य मति निखिलं ये नेद मारक्षितम्
यस्मै च श्रुतयो नमो विदधते यस्मा त्परं नेक्ष्यते
भूम्ना यस्य परिभ्रम त्यनुकलं ब्रह्माण्डभाण्डावलि
र्यस्मिं स्तामपि प्रतिष्ठित मिदं तस्मै नम श्शम्भवे ॥ २

गर्भे निवेश्य कल्यन् प्रतिमञ्चरेषु संश्लिष्य सर्गनिचये सुखयन् सुषुप्तौ
पुत्रं पितेव परिरक्षति सर्वदा मां य स्तं मुमुक्षु रभवं शरणं गतोऽस्मि ॥ ३

यत्कृपाप्रसरणा त्पुरातना लेभिरे हि गुरवोऽपि गौरवम्
भावये सतत मादिमं गुरुं दक्षिणाभिमुख मेव दैवतम्॥ ४

सदाशिवं शिवां स्कन्दं केशवं पद्मसम्भवम्
नन्दीश्वरं कुम्भयोनिं भरद्वाजात्रिगौतमान् ॥ ५

दधीचि मुपमन्युं च मार्कण्डेयं पराशरम्
व्यासं श्वेतं च तच्छिष्यं नीलकण्ठशिवाह्वयम् ॥ ६

तस्य शिष्यान् हरदत्तभवदेवमुख्यान् गणा
प्रणमामि ब्रह्मविद्यासम्प्रदायप्रवर्तकान् ॥ ७

कृतदीक्षोऽघोरगुरुं कुलकरम्यो भरद्वाज
विद्यक्षेत्रेषु विदितो य स्तं वन्दे महर्षिगुरुम् ॥ ८

नमोऽस्तु गुरवे नीलकण्ठाय शिवयोगिने
श्रुतिसारशिवाद्वैतपरभाष्यविधायिने ॥ ९

व्यासं सूत्रकृतं वृत्तिकृतं बोधायनं तथा
नीलकण्ठं भाष्यकृतं प्रणमामि मुनित्रयम् ॥ १०

सदाशिवसमारम्भां नीलकण्ठाख्यमध्यमाम
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥ ११

महापाशुपतज्ञानसम्प्रदायप्रवर्तकान
अंशावतारा नीशस्य योगाचार्या नुपास्महे ॥ १२

श्वेतादिलकुलीशान्तां योगाचार्यपरम्पराम्
सद्वादशोत्तरशतशिष्यसंख्यां स्मरा म्यहम ॥ १३

नम त्र्यष्टिमहागणेभ्य त्रयोदशभ्यो दशा ऽऽदशभ्य.
गणेश्वरेभ्यो गणनायकेभ्यो नमो नमः शङ्करकिङ्करेभ्य. ॥ १४

ये रुद्र लोका दवतीर्य रुद्रा मानुष्य माश्रित्य जगद्धिताय
चरन्ति नानाविधचारुवेषा स्तेभ्यो नम स्त्र्यम्बकपूजकेभ्यः ॥ १५

अस्तङ्गता न्यखिलनास्तिककहृत्समांसि फुल्लानि वैदिकसमाजमनोम्बुजानि
य स्योदयेन भुवि भानुसमानुभा। तं श्रीनिवाससरविनं गुरु मानतोऽस्मि॥ १६

द्विशावलीद्विश्रुतनागरिकसमाख्य माराध्यकुलाब्धिसोमम
मतान्तराम्भोनिधिकुम्भयोनि पितामहं लोकगुरुं प्रपद्ये ॥ १७

त्रयोविंशत्यूनपञ्चसहस्रगणितेषु हि
कलिवर्षेषु वृत्तेषु वत्सरे धातृनामनि ॥ १८

मासि चैत्रे वलक्षे हि पक्षे च दशमीतिथौ
पुष्यर्क्षे इन्दुवारे च लग्ने कर्कटकाह्वये ॥ १९

केतौ कन्यागते चैव मन्दे कुम्भस्थितेऽपि च ॥
भगुरौ वृश्चिके मीने रविराहुबुधे युते ॥ २०

वृषस्थे सति शुक्रे च भौमेन सहिते तथा
कृष्णवेणीसरित्प्रान्ते ताडिकोण्डाह्वये पुरे ॥　　२१

मल्लिकार्जुनदेवस्य क्षेत्रे योऽजनि विश्रुते
मोक्षधर्मैकनिलयं न्यबन्धी द्धर्मसंग्रहम् ॥　　२२

प्राचारी त्वत्रिकां शैवरहस्यार्थविबोधिनीम्
कृतनानाविधकृति श्रीर्णपाशुपतव्रतः ॥　　२३

भारद्वाजकुलोद्भूत उद्धटाराध्यवंशजः
ज्वालाम्बिकाघोरनाथदाम्पत्यफलितोदयः ॥　　२४

श्रीमद्गीरीश्वराराध्यकल्याणगुरुसेवकः
श्रीश्रीनिवाससखिराट्कृपाधिगतसत्कलः ॥　　२५

त्रैलिङ्गो नागलिङ्गाख्यः शिवध्यानपरायणः
भगवच्छ्रीनीलकण्ठशिवाराध्यविनिर्मितम् ॥　　२६

शारीरकब्रह्मसूत्रभाष्यं मार्जवदुर्जयम्
तत्त्वत्रयार्थनिक्षेपं विवृणोति यथामति ॥　　२७

कुमतध्वान्तसन्दोहविनाशाय प्रसार्यते
लब्धर्कदीपिकोपेता शिवचिन्तामणिप्रभा ॥　　२८

तत्त्वं य च्छिवशब्दितं श्रुतिगतं व्यासेन मीमांसितम्
सञ्चिन्त्यैव परिष्कृतं भगवता भाष्यप्रणेत्रा पुनः
व्याख्याय प्रतिबोधितं गुरुवरैः सत्यार्थसिद्धान्दैः
स्तस्याऽमर्त्यमणेः प्रमाणकषणा दुद्दीप्यते सुप्रभा ॥　　२९

अतिगम्भीरवाग्गुम्भं भगवत्पादभाषितम्
भाष्य मम्भोनिधि मिव क स्तितीर्षे दमूढधीः ॥　　३०

मद्गृहीततदीयार्थबोधलब्धप्रयोजना
अनियत्तावबोधार्थो न दोषाय भवे त्कृतिः ॥　　३१

भाष्यं यद्यपि विस्तरेण विवृतं विज्ञै रनेकैः पुरा
न व्यक्तीकुरुते तथापि हि निजं भावं निगूढं परम्
व्यख्याता विमतो भवे द्यदि कथं भाष्याशयः स्यात् स्फुटो
लब्धो मेऽवसर स्ततो विवरणे भाष्यस्य विज्ञाः पुनः ॥　　३२

परात्मना दक्षिणदिङ्मुखेन यथा नियुक्तोऽस्मि तथा ब्रवीमि
ततः प्रबन्धावलिसङ्कलेन गुणेन दोषेण न संस्पृशामि ॥ ३३

स्वाज्ञानविस्मृततनुः स्विह संसरामि क्वाप्यहं मेव हि भव निति नादरे यो
माया विमोहयति शाम्यतु सा नितान्त तत्त्वावबोधपरमार्थनिरूपणया ॥३४

संसारमोक्षस्थितिबन्धहेतोः सर्वात्मनोऽश्रान्त कृपानिधेर्य
पत्युः पशूनां परमप्रमादान्मुक्तेर्गतिस्त्वस्मदचला मतिर्मे ॥ ३५

सविशेष. शिवाद्वैतो नीलकण्ठप्रतिष्ठित·
तत्र च तत्सविशेषत्वं शङ्करेण विखण्डितम् ॥ ३६

मण्डयामास तद् भूयो रामानुजयति· परम्
तदीयं शिवपारम्यं रामानुजार्यदूषितम् ॥ ३७

मण्डयामास त त्सर्वं श्रीमा नप्पयदेशिक·
एव मावरणापाया च्छिवाद्वैतप्रभाकर. ॥ ३८

यथान द्वा त्यपहरन् धीमता मान्तरं तम·
रामानुजाप्पयज्वानौ वैदुष्यानुपमा वपि ॥ ३९

यत स्तौ हरिपारम्यशुद्धाद्वैताभिमानिनौ
तत्यजुः शिवपारम्यमविशेषत्मके ततः ॥ ४०

तदुक्तिसारं संगृह्णन तत्त्यक्त परत्र ह्यपि
संक्षेपा देव च कस्यत्र विस्तरोऽन्यत्र दृश्यताम् ॥ ४१

प्रस्थानानि विमोक्षशास्त्रगहनेऽनेकानि वीक्ष्य भ्रमा
द्वान्तध्येऽध्वनि संशया च्छिन्नरतां विज्ञात्मनां धीमताम्
पन्थानं श्रुतिसम्मतं प्रकटितुं निर्वर्ति तेयं कृतिः
नै वोपक्रमिता बुधा ननु मया वैदुष्यदर्पोद्धतं· ॥ ४२

ये लोका बहुभाष्यदर्शनवशा च्छिक्षिप्तनैजान्तरा·
ये भूयः किल पक्षपातविरहा न्यायैकसत्त्वादराः
श्रद्धाभ्याहिकया परं श्रुतिगतं तत्त्वं जिघृक्षन्ति ये
तेषा मेव कृते विभातु रचिता संक्षिप्तभाषा कृतिः ॥ ४३

गाढोपगूढवितताक्षमताभिमान
च्छेक्षणाः कृति मिमां न विलोकयेयुः

याथार्थ्यसंग्रहणलोलुपताधुरीण
निष्पक्षपातधिषणा न किं माद्रियेरन् ॥ ४४

मत्यालिङ्दुर्विधिवशा द्धत तत्त्वशास्त्रे प्युच्चावचाध्वनिचयं रचयन्ति केचित्
सर्वार्थवि त्सकलचेतनबुद्धिसाक्षीत्र्यक्ष स्सदा नयतु मा मृजुना पथैव ॥ ४५

धीमन्द्रेण मथिता न्निगमान्तसिन्धो रभ्युद्धृतेन सरसद्युतिनिस्तुलेन
ग्रीवा मलङ्कुरुत ग्रन्थवरेण विज्ञा ये नेक्षितेन सुधियोऽभय माप्नुवीरन् ॥ ४६

भाष्यं श्रीभवदेवमुख्यविबुधै र्व्याख्यात मे वाऽद्य त
त्त्वेकं वाऽपि समग्र मीक्षणपथं कुत्रापि नारोहति
यत्र प्यप्पयदीक्षितै र्विरचिता संलभ्यते दीपिका
पृथ्वी भाति तथापि तै र्हि विमतै र्व्यत्यासितं भूरिशः ॥ ४७

तस्मा दस्य विधेहि सद्विवरणं मूलानुसा रीति हि
प्राज्ञै रायसपाशतोऽतिबलया दुर्लङ्घ्य येवाज्ञया
मादृग्दुस्तरसूत्रभाष्यविवृतिव्यापारघोराम्बुधा
वाबद्धो विनिपातितो नहि बुधा वैदुष्यदर्पोद्धतः ॥ ४८

तथापि शिवनिष्ठानां प्रसादः कृतसंविदाम्
उत्तारयिष्यति कथं पोतीभूय न मा मयम् ॥ ४९

विश्वस्थे त्येव कृत्येऽस्मिन् लेखिनीं चालया म्यहम्
लिखितुं वोपेक्षितुं वा मम नाऽस्ति स्वतन्त्रता ॥ ५०

परात्मा दक्षिणाशाम्यः स्वेहितं कारयिष्यति
समाप्तौ साधुतायां वा सुधीजनबहूकृतौ ॥ ५१

यद्य प्यस्ति नमे वाञ्छा तथाऽपि मम लेखिनी
आर्जवे पथि गम्येति प्रार्थये बुद्धिसाक्षिणम् ॥ ५२

इह ख ल्वभीष्ट मभीप्सता मनिष्टं च परिजिहीर्षतां पुरुषाणा मप्रत्यक्षानुमानगम्येऽलौकिकपुरुषार्थरूपे वस्तु न्यशङ्कितपौरुषेयत्वदोषतया भवति वेदराशि रेव प्रमाणम्। तत्र च पशुपुत्रस्वर्गाद्यैहिकामुष्मिकफलसाधककर्मपरेऽपि पूर्वभागे परमपुरुषार्थप्रतिपादनसमर्थो जागर्त्ये वोपरिभागः। अथाऽय 'मनिवृत्तसंशयः स्वाशयं न प्रयच्छे' दिति तदर्थनिर्णिनीषयैव कृतावतरणे भगवति बादरायणे निर्णोद्य विशयजाल मारचयत्यपि शारीरकब्रह्ममीमांसां हन्त कलिदोषकलुषित शेमुषीकाः कतिचन कुपथगामिन स्तां स्वस्वपथ माचकर्षुः। ततश्च प्रथमचरमपुरुषार्थनिर्धारणे

अथ उपास्यं नमस्कार्यं वस्तु निर्दिशति शिवा येति। एतेन 'विद्यासु श्रुति रुत्कृष्टा रुद्रैकादशिनी श्रुतौ। तत्र पञ्चाक्षर स्तत्र शिव इत्यक्षरद्वय' मिति, 'नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे द्विज। तावत्पापानि कर्तुं वै शक्तः कोवा कलौ युग' इत्यादिस्मृतिवचनैः श्रीशिव नाम्नः परमोत्कर्षस्य व्यञ्जकत्वेन श्रोतॄणां श्रवणादिप्रतिबन्धकसकलदुरितनिवृत्ति र्भवतीति प्रथमं शिवनामसङ्कीर्तनस्य प्रयोजन मुन्नेयम ॥

किञ्च 'शिव एको ध्येय श्शिवङ्करः सर्व मन्य त्परित्यज्य' इति सकलनिगमान्तपर्यव सानभूताथर्वशिखान्तावतंसितमन्त्रेण सकलेतरदेवतापरित्यागपूर्वकं शिव एव ध्येय इत्यर्थो दर्शितः॥

कथं ध्येय इत्याकाङ्क्षायां विशिनष्टि परमात्मन इति — भावलिङ्गरूपा येत्यर्थः। युक्त श्चैतत्। तैत्तिरीयोपनिषदि 'तस्या श्शिखाया मध्ये परमात्मा व्यवस्थित' इति ध्येयस्य भावलिङ्गस्य परमात्मशब्देन व्यवहारात्।

अपिच, चतुर्भि रोमित्यादिविशेषणै र्व्याख्येयचतुरध्यायीप्रतिपाद्यमुख्यार्थसूचकै श्शिवो विशेष्यते। तथाहि, ओमि त्यनेन तद्वाच्ये परब्रह्मणि शिवे सर्वेषां वेदान्तानां समन्वयः प्रथमाध्यायप्रतिपाद्यः सूचितः ॥

अथ परमेश्वरस्याऽद्वितीयत्वाङ्गीकारे द्वैतश्रुतीनां व्याकोपः। सद्वितीयत्वाङ्गीकारे अद्वैत श्रुतीनां व्याकोपः। तस्मा दशेषप्रपञ्चाकारशक्तिविशिष्टस्य परमेश्वरस्याऽद्वितीयत्वात्, विशेषणगत भेदाप्रतिक्षेपाच्च न कश्चिदपि विरोध इति द्वितीयाध्यायप्रतिपादितविरोधपरिहाररूपोऽर्थः अहंपदा र्थाये त्यनेनाऽवेदितः। अह मिति पदं सकलप्रपञ्चाकारशक्तिविशिष्टशिवाद्वैतवाचक मिति भाष्यकारेणैव जगद्व्यापाराधिकरणे वक्ष्यमाणत्वात्॥

लोकयन्ति इष्टप्राणादिरूपं परमात्मान मिति लोकाः लिङ्गाङ्गसंयोगभाजः। तेषां सिद्धिः मुक्तिलाभ स्तस्य हेतव इत्यर्थः। तेन शिवानुसन्धानपराणां पञ्चकृत्यपरः शिव एव मोक्षलक्ष्मीं ददाती त्यनेन मुक्तिसाधनस्य निगदिततया तृतीयाध्यायप्रतिपाद्योऽर्थो दर्शितः ॥

सच्चिदानन्दरूपायेति— 'ब्रह्मविद् ब्रह्मैव भव' तीति मुक्तिफलस्य ब्रह्मरूपत्वश्रवणा दनाद्यपचारेण तिरोहितं स्वीयं निरतिशयं सच्चिदानन्दरूप मेव मुक्तिफलं मुक्ताना माविर्भव तीति चतुर्थाध्यायनिरूपितार्थो बोधितः ॥

अन्यच्च - ओमिति ब्रह्मवाचिना पदेन जगत्कारणत्वस्य विवक्षितत्वा दण्वादिकारणवा दिनो व्युदस्ताः। अहंपदार्थाये त्यनेन परब्रह्मण श्शिवस्य शक्तिवैशिष्ट्यप्रतिपादना न्निर्विशेष वादिनां व्युदासः। लोकानां सिद्धिहेतव इत्यनेन सकलस्य कर्मज्ञानफलस्य विवक्षितत्वेन केवल कर्मादिवादिनां निरासः। सच्चिदानन्दरूपाये त्यनेन शून्यवादिनो व्युदस्यन्ते। शिवा येतिपदेन

निजशक्तिभित्तिनिर्मितनिखिलजगज्जालचित्रनिकुरुम्बः
स जयति शिवः परात्मा सकलागमसारसर्वस्वम् ॥ २

भवतु स भवतां सिद्ध्यै परमात्मा सर्वमङ्गलोपेतः
चिदचिन्मयः प्रपञ्चः शेषोऽशेषोऽपि यच्छेषः ॥ ३

---

पाञ्चरात्राद्यः प्रतिक्षिप्यन्त इत्यप्यूहनीयम् ॥

अथ वस्तुनिर्देशरूपं मङ्गलमाचरयति निजशक्तीति — परात्मा जीवकर्मातिरिक्तात्मा जीवाद्यर्थान्तरमित्यर्थः। शिवः नित्यनिरस्तनिखिलमलो निरवशेषकल्याणगुणाकरः। तदुक्तं — 'अनादिमलसंश्लेषप्रागभावात् स्वभावतः। अत्यन्तपरिशुद्धात्मा शिव इत्यभिधीयते' 'अथवाऽनन्तकल्याणगुणैकनिधिरीश्वरः। शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः' इति वचनसिद्धं मुक्तविशेषणार्थं ध्वनयति। जयति सर्वोत्कर्षेण वर्तते। युक्तं चैतत्। नित्यनिरस्तनिखिलदोषस्य, निखिलकल्याणगुणाकरस्य च शिवस्य सर्वस्मात् चेतनाचेतनप्रपञ्चात् उत्कर्षस्य सहजसिद्धत्वात्। उक्तार्थे लक्षणप्रमाणे दर्शयति निजेत्यादिविशेषणद्वयेन ॥

निजा सहजा न तु कल्पितेत्यर्थः। शक्तिरेव भित्तिः, तस्यां निर्मितं निखिलं सकलावान्तरभेदयुक्तं जगज्जालमेव चित्रनिकुरुम्बं येन स तथोक्तः। अनेन जगत्कारणत्वं लक्षणमावेदितम्। सकलानामागमसाराणामुपनिषदां सर्वस्वं सर्वस्वमिव आदरणीयं तन्महातात्पर्यविषय इति हृदयम्। अनेनोपनिषदस्तत्र प्रमाणमित्युक्तं भवति ॥

अथाऽऽशीर्वचनरूपं मङ्गलं निबध्नाति भवत्विति — सर्वमङ्गलया श्रीगौर्या सर्वैः कल्याणगुणैश्चोपेतः। सः 'यदा तमस्तन्न दिवा न रात्रिर्न सन्नचासच्छिव एव केवलः', 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति च प्रसिद्धः। परमात्मा परा निरतिशया मा लक्ष्मीः यस्य तथाभूत आत्मा शिवः भवतां श्रोतॄणां सिद्ध्यै अभिलषितपदावाप्त्यै भवतु। निरतिशयैश्वर्यशालिनः सर्वाभिलषितफलप्रदानसामर्थ्यं युज्यत एवेति भावः। निरतिशयैश्वर्यशालित्वमुपपादयति चिदचिन्मय इत्यादिना — चिदचिन्मयः स्वरूपार्थे मयट्। चेतनाऽचेतनात्मकः अशेषः निरवशेषोऽपि प्रपञ्चो यस्य शेषः तदाराधनोपयोगितया तदर्थः। स भवत्विति पूर्वेणान्वयः। अपिशब्देनाऽनन्तशेषप्रपञ्चग्रहणम् ॥ अशेषोऽपि शेष इति विरोधाभाससूचनं न क्रियते। शेषः परार्थत्वादिति शेषलक्षणमुक्तम्। कृत्स्नस्याऽपि जगतः शिवाराधनोपयोगितया तच्छेषत्वमुपपन्नम् ॥ तदुपयोगित्वं च चेतनवर्गस्य तत्तदधिकारानुगुण्येन शिवाराधनरूपज्ञानकर्मानुष्ठातृत्वेन तादृशकर्मोपकरणसम्पादकत्वेन च सम्भवति। अचेतनवर्गस्य तु तदाराधनस्थानत्वेन तदुपकरणादि

नमः श्वेताभिधानाय नानागमविधायिने
कैवल्यकल्पतरवे कल्याणगुरवे नमः ॥ ४

भावेन च सम्पद्यत इत्यनवद्यम् ॥ पशुपाशपतेः शिवस्य सर्वशेषित्वं तु 'ब्रह्मादिस्तम्बपर्यन्ता न्पशून्बध्वा महेश्वरः । पाशै रेतैः पति र्देवः कार्यं कारयति स्वक" मित्यादिपुराणवचनै रवगम्यते। एतेन जगतां नियन्तु रैश्वर्यं नान्येषा मिव गजतुरगाभरणादिकतिपयचेतनाऽचेतनाऽत्मकम् । किंतु निरतिशय मिति भावः ॥

अ श्वेताख्यभाष्यविरचनोपयोगिसकलनिगमान्तार्थबोधकं महापाशुपतव्रतदीक्षाप्रदं च देशिकं नमस्करोति नम इति — नानाविधा ननेकप्रकारा नन्योन्यविरुद्धार्थत्वेनाऽवभासमाना नागमान् निगमान्तान् विधातुं अविरुद्धैकार्थवत्तया निर्धारयितुं शील मस्येति नानागम विधायी । सुप्यजाता विति ताच्छील्ये णिनिः । एवं वेदान्ताना मशेषाणा मविरोधेन शिवे तात्पर्य मुपदिश्य लोका ननुग्रहीतु मवतीर्ण इत्याकूतम् । एतेन विद्यागुरुत्व मावेदितम् । अथ पाशुपतदीक्षाप्रदत्वं ध्वनयति कैवल्यकल्पतरव इति—कैवल्यस्य मुक्तेः कल्पतरु रिव तत्तुल्य इत्यर्थः । यथा कल्पतरु रर्थिना ममोघाभ्यर्थन स्तथा कैवल्यार्थिना मय मिति भावः । तथा कैवल्यप्रदानोपयोगिज्ञानभक्तिवैराग्यादिकल्यणगुणसमृद्धि मुपपादयति कल्याणगुरवे नम इति — कल्याणा न्यस्य सन्तीति कल्याणशब्दो मत्वर्थीयाऽच्प्रत्ययान्तः । अपिच, कल्याणगुरुपदं दीक्षा प्रदगुरौ साम्प्रदायिकम् । तथाहि 'जन्तो रपश्चिमतनो स्सति कर्मसाम्ये निश्शेषपाशपटल च्छिदुरा निमेषात् । कल्याणदेशिककटाक्षसमाश्रयेण कारुण्यतो भवति शाम्भववेधदीक्षा' इत्या गमिकसूक्तौ वेधाभिधशाम्भवदीक्षाप्रदातुः सद्गुरोः कल्याणदेशिकपदेन व्यवहारात् ॥

अन्य च, श्वेतपदेन शैवशास्त्रप्रचारणार्थ मवतीर्णाना मष्टाविंशते र्योगाचार्याणा माद्यस्य श्वेताचार्यस्याऽपि नमस्कारः सूचितः । एवं लिङ्गाङ्गिशैवजनाऽनादिसम्प्रदायानुस्यूतशैवाचार्यप्रणामे नाऽस्य भाष्यकर्तु र्लिङ्गाङ्गसङ्गित्व मविप्रतिपन्न मिति ज्ञेयम । द्वितीयो नमश्शब्द आदरार्थः । 'नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नम' इतिवत् । यथा श्रीरुद्रप्रतिपादकवाक्ये षूभयतो नमस्कारा दृश्यन्ते तथा 'यथा देवे तथा गुरा' विति श्रुत्यनुरोधेन श्रीकल्याणगुरुप्रतिपाद केऽपि वचन इत्यनुसन्धेयम् ॥

ननु 'ॐ नमोऽहंपदार्था'येति परशिवप्रतिपादकेऽपि वचन एकत एव नमस्कारः कृतः। गुरुस्तुतिविधायके कथ मुभयतो नमस्कार इतिचे न्न जानासि शैवसमयरहस्यम् । सिद्धान्ते हि शिवा दपि गुरौ राधिक्यं भावनीय मिति ध्वनित मिति हृदयम् ॥

कृत्स्नशास्त्रप्रतिपादितजीवेश्वरभेदकथापवादैकप्रयोजनतयाऽस्य प्रामुख्येन वाचनिकत्व मन्तरेण ग्रहीतु मयुक्तत्वात् ॥

नचाऽत्र शास्त्रे न जीवेश्वरभेदकथा निगदि तेति वाच्यम्। प्रायशः प्रत्यधिकरण मपि तत्त दौपनिषदं वाक्यं विषयीकृत्य कि मिदं जीवपर मुत परमेश्वरपर मिति संशयं, जीवपर मिति पूर्वपक्षं च प्रदर्श्य नेदं जीवपरं, किंतु परमेश्वरपर मेवेति सिद्धान्तीक्रियमाणतयाऽस्य शास्त्रस्य जीवपरभेदप्रतिपादकत्वाऽवगमात् ॥

किंच—'भेदव्यपदेशा च्चाऽन्यः', 'अधिकन्तु भेदनिर्देशात्', 'नेतरोऽनुपपत्तेः', 'अनुपपत्ते स्तु न शारीरः', 'इतरपरामर्शा त्स इतिचे न्नाऽसम्भवात्', 'शारीर श्चोभयेऽपि हि भेदे नैन मधीयते' इत्यादिसूत्रेषु जीवपरभेदस्य कण्ठरवे णैव निगदितत्वा च्च ॥

नचाऽयं जीवपरभेदोऽविद्याकल्पित इति वाच्यम्। तत्कल्पनस्य भवद्वचन मन्तरा प्रकृत शास्त्राऽगदितत्वेन अविश्वसनीयत्वात्। तत्कल्पकाऽविद्याया एव दुर्निरूपत्वाऽवधारणेन तन्मूल कत्वस्य सुतरां मनुपपन्नत्वा च्च ॥

अपिच, जीवपरभेदस्याऽविद्याकल्पितत्वेन तदपवादपूर्वक मभेदनिश्चयस्यैव शास्त्रप्रतिपाद्यत्वे एतादृशनिर्णयस्यैव विस्पष्टं कथनीयतया तादृशनिश्चयस्य प्रकृते कुत्राऽप्यकथनेनाऽतात्त्विक त्वावगमा च्च ॥

तस्मा दविद्याकल्पितभेदप्रतिपादकतयाऽस्य शास्त्रस्य य ज्जीवब्रह्मैक्यविषयत्वसाधनं, तत्सिसाधयिषया शास्त्रारम्भे य दध्यासप्रवेशनं जलनिधिमथनारम्भ इव हालाहलप्रवेशनं परेषां तत्कलुषीकरणविधान्तर मेवेति हृदयम् ॥

तथा आनन्दमयाधिकरणे 'आनन्दमयोऽभ्यासा'दित्यानन्दमयस्य ब्रह्मत्वे सूत्रकृता सिद्धान्तिते आनन्दमय इत्यत्र 'ब्रह्मपुच्छं प्रतिष्ठा' इति स्वप्रधान मेव ब्रह्मोपदिश्यत इत्यादिक मध्याहृत्य आनन्दमयस्य जीवत्व मेव परै राद्धान्तितम् ॥ अत्र यद्वक्तव्यं तदधिक मुपरिष्टा द्द्रष्टव्यम् ॥

एव मन्यै र प्यनीश्वर स्येश्वरतासाधन मपि श्रुतिसूत्रविरुद्ध मेव। नच नारायणपरत्वं ब्रह्ममीमांसासम्मत मिति वाच्यम्। 'शब्दा देव प्रमित' इत्यधिकरणे ईशानशब्दादे वाङ्गुष्ठमात्रस्य परतत्त्वतया प्रमितत्वनिबन्धनात्। वक्ष्यमाणरीत्या ईशानशब्दस्य योगरूढत्वाङ्गीकारस्याऽऽवश्य कत्वेन तदनङ्गीकरणे सूत्राऽसामञ्जस्यस्य तदङ्गीकरणे नारायणपरत्वव्याहते श्च समुस्थिततया नारायणपरत्वस्याऽशास्त्रसम्मतत्वसिद्धे र्दुर्वारत्वात्।

ब्रह्मसूत्रं पयो गाङ्गं मलत्रयविशोधकम्
परैः पङ्किलितं नीलकण्ठाराध्येन शोध्यते ॥ ६

नीलकण्ठो विवृणुते श्रीकण्ठोपसमाह्वयः
बोधायनोक्तिमालम्ब्य ब्रह्मसूत्रं यथाश्रुति ॥ ७

श्रीमतां व्याससूत्राणां श्रीकण्ठीयः प्रकाशते
मधुरो भाष्यसन्दर्भो महार्घो नाऽतिविस्तरः ॥ ८

---

यद्यप्यनेकविधव्याख्यानकर्तारोऽस्माद्भाष्यात्पूर्वं सन्ति । तथाप्येतन्निजमार्गानुयायिनां ये पूर्वपूर्वोपदेष्टारस्ते पूर्वाचार्यशब्देनोदाहृयन्त इति ज्ञेयम् ॥

अथ व्यासनिरूपितं ब्रह्मसूत्रं बन्धविमोचनदक्षमिति रूपकनिरूपणेनाऽवतारयति ब्रह्मसूत्रमिति ॥

यथा मन्दाकिनीपयः समस्तपापापनोदनक्षमं, तथेदमपि शैवशास्त्रप्रसिद्धाऽऽणवमायिककार्मिकरूपत्रिविधमलसंशोधनमुखेन नित्यनिर्वाणप्रदमित्यर्थः । परैः पङ्किलितमित्यनेन मतान्तरप्रवर्तकपरभाष्यसम्पर्कसङ्कलितविपरीतार्थरूपपङ्कापनिवर्तनद्वारा निर्मलीक्रियत इति व्यज्यते ॥

अथ स्वीयोपनामाख्याविशेषप्रख्यापनद्वारा स्वीयनामविशेषमूलं भाष्यकर्तृभेदाभेदविषयं संशयं निर्वापयति नीलकण्ठ इति ॥

बोधायनोक्तिमिति—एतेन श्रीभाष्यकृता बोधायनवृत्तिमालम्ब्यैव भाष्यमारब्धमिति यदुक्तं तदयथार्थमिति निर्व्यापितम् । तथाहि, यद्यपि महर्षेर्बोधायनस्य सविशेषतत्त्वनिर्धारकत्वेऽपि तदीयवृत्तौ चिदचिदात्मकसकलजगद्रूपपरमशक्तिविशिष्टस्य तत्त्वस्य 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर' मित्यादिश्रुतिशतमतानुसारेण शिवरूपत्वनिर्णयेन श्रीभाष्यकृदभिमतश्रीपतिपारम्यस्य निर्धूतत्वात् ॥

श्रीमहान्यासरुद्रयागकल्पादिशिवाराधनपरकृतिशतप्रथनेन बोधायनस्य परमशैवत्वस्य जगत्प्रसिद्धत्वेन श्रीभाष्यगतनारायणपरत्वस्य बोधायनमतविरुद्धत्वादित्यलमधिकेन ॥

एवं चिकीर्षितप्रतिज्ञाया मेव स्वचिकीर्षितं परविस्तरणेभ्य उत्कर्षं निर्वक्याऽत्र गुणान्तरमपि दर्शयति श्रीमतामिति—

सर्ववेदान्तसारस्यसौरभास्वादमोदिनाम्
आर्याणां शिवनिष्ठानां भाष्य मेत न्महानिधिः ॥ ९

श्रीः वेदत्रयी 'सा हि श्री रमृता सता' मिति श्रुतेः। तद्वतां सकलवेदार्थनिर्णयार्थाना मित्यर्थः। यद्य प्येता न्यधिकरणसूत्रा ण्येकैकविषयवाक्यार्थनिर्णयार्थं प्रवृत्ता नीति ज्ञायते, तथाऽपि तानि न्यायसाम्यात् बहुश्रुत्यर्थनिर्णायकानी त्यवगम्यते। सकलवेदतदर्थविदा भगवता बादरायणेन प्रणीतानां सूत्राणा मखिलनिगमार्थनिर्णयार्थत्वस्य समुचितत्वात्। एवंविधानां व्याससूत्राणां श्रीकण्ठनिर्मितो भाष्यसंदर्भः प्रकाशते प्रकर्षेण विराजते॥ श्रीकण्ठीय इति साभिप्रायं विशेषणम्। श्री स्त्रिवेदी कण्ठे यस्येति विग्रहेण सकलवेदतदर्थाभिज्ञत्वस्य प्रतीय मानत्वात्। सकलवेदार्थविदा कृतानां सूत्राणां तादृशेनैव विरचितं विवरणं सार्थक्य मश्नुत इति भावः। एवंविधार्थविशेषलोभेनै वोषाह्वयग्रहण मिति ज्ञेयम्। मधुरः सरस इत्यर्थः। माधुर्य चेह 'रसो वै स' इत्यादि श्रुतिनिर्धारितनिरतिशयानन्दरूपपरशक्तिविशिष्टपरब्रह्मप्रतिपादकत्वम्। अथाप्ययं न काव्य मिव परब्रह्मगुणवर्णनमात्रविश्रान्तः। किन्तु तन्निर्णयोपयोगिन्यायसहस्रभरित इत्याह महार्थ इति। अप्येव मत्र नाऽस्त्येव शब्दप्रपञ्चो भूयान्। तथापि, व्याख्यानतो विशेषप्रति पत्ति रिति न्यायेन तदभिप्रायस्य सुगमत्वा दित्याशये नाऽह नातिविस्तर इति। नञः समासा ऽभावो नशब्देन समासो वाऽत्राऽनुसन्धेयः॥

एतादृशगुण म प्येतद्भाष्यं केषांचि दनादरणीय मिति सर्वोपादेयत्वविरहं दोष माशङ्क्य नाऽयंदोषः, किन्तु गुणए वेत्याह सर्वेति—सर्वेषां वेदान्तानां य त्सारस्य मनवधिकास्वादनीय रसात्मके परमात्मनि तात्पर्य तत्सौरभ मिवे त्युपमितसमासः। एवं दिव्यपुष्पसौरभव द्व्यापिनो वेदान्तबृन्दतात्पर्यस्य आस्वादः साकल्येनाऽनुभवः, तेन मोदितुं शील मेषा मिति ताच्छील्ये णिनिः। एवंविधानां शिवनिष्ठानां 'तन्निष्ठस्य मोक्षोपदेशा' दिति सूत्रानुसारेण सर्वाङ्गलिङ्ग साहित्येन शिवं प्रपन्नाना मार्याणां पूज्याना मिति। अत्राऽय माशयः। केचि न्नारायणप्रपदनपरा दृश्यन्ते। ते हि पाञ्चरात्रसमयमात्रनिष्णाता अपि 'वय मपि वेदप्रामाण्यवादिन इति जना न्विश्वासयितुं क्वचि त्कोणे श्रुतां काञ्चित् 'एको ह वै नारायण आसी' दित्यादिकां श्रुति मवलम्बमानाः 'यदातम स्त न्न दिवा न रात्रि र्न स न्नचाऽस च्छिव एव केवल' इत्यादिनाना शाखापठितपरमेश्वरपारम्यप्रतिपादनपरा श्श्रुतिगिर स्समन्वेतु मक्षमाः समुपनीक्ष्यन्ते। तत्त्व मग्रे व्यक्तीभविष्यति॥

अन्येत्व परमेशितु स्स्वसमानाधिकराहित्यरूपमहामहिमप्रख्यापनपरां 'एक मेवाऽद्वितीयं ब्रह्म' इति कांचि च्छ्रुति मवलम्ब्य शुद्धाऽद्वैत मेव तत्त्वं निर्दिधीर्षन्तो द्वासुपर्णेत्यादिश्रुतिशतानि

अथ जिज्ञासाऽधिकरणम्

## इ हौपनिषदी मीमांसा समारभ्यते ॥

समन्वेतु मशक्नुवाना: सर्वप्रमाणाधिगतं द्वैतं मिथ्याज्ञानानां [illegible] भानं [illegible] दृश्यन्ते। एवंविधानां श्रुत्येकदेशप्रामाण्यवादिना मत्राऽनादरं गन्तुं [illegible] भोगिनः शिवनिष्ठा जगति [illegible] परमादरभाजन [illegible]॥

एतेन सर्वश्रुतिप्रामाणिकानां शैवानाम् अस्य भाष्यस्य परमादरणीयत्वेन श्रुत्येकदेशप्रामाणिकापरिग्रहो न दोषाय। किन्तु गुणायैवेति सर्ववेदान्तेत्यादि [illegible] सूच्यते॥

महानिधि रिति—यथा महानिधिः पुराकृतसुकृताना मेव [illegible] भाग्य [illegible] मात्रेणैव निरतिशयानन्दकर स्तदभीप्सितसर्वार्थप्रदश्च, तद्वदिद मपि भाष्यं [illegible] दर्शनमात्रेण महानन्दकरं, सकलवेदान्तार्थनिर्णयेन निरन्तरशिवध्यानोपयुक्त [illegible] रूपविशेषसमर्पकं चेति वेदनीयम्॥

एतेन यथा निधान मकृतसुकृतानां वृश्चिकभाजन मिव, [illegible] भूष्य मेव भवति नतु दूष्यं तद्व [illegible] मनर्थप्रद मिव दृश्यमान मपि न दूष्यं भवतीति गम्यते। अपि च, [illegible] दुर्धर्भ्यो विरुद्धवादिभ्य श्चोरेभ्यो महानिधिरिव [illegible] यत्नेन [illegible] मस्मदुपेक्षणीय मेवेति भावः॥

### अथ जिज्ञासाऽधिकरणम्

इह कर्मब्रह्मपरभागद्वयात्मके वेदे य उपनिषद्भाग स्तत्र मीमांसा तदर्थनिर्धारणोपयुक्त न्यायप्रकाशनपरसूत्रनिकुरुम्बरूपा समारभ्यत इत्यर्थः॥

ननु, इयं हि मीमांसा वेदान्तार्थप्रकाशनार्थं प्रवृत्ता। तदर्थप्रकाशनार्थं न पृथक् शास्त्रारम्भः समुचितो भवति। तद्विवरणेनैव तदवबोधसिद्धौ तादर्थ्येन पृथङ् मीमांसारम्भस्य निरर्थकत्वात्॥

न च सर्ववेदान्तानां ग्रन्थविस्तर मन्तरेण विवरीतु मशक्यतया तादृशविवरणस्य गौरवाश्रयत्वेन सर्ववेदान्तविषयवाक्यगतविशयनिनिवारणार्थं लघूपायेन न्यायग्रथनरूपमीमांसाकरण मेव समुचित मिति वाच्यम्॥ सर्ववेदान्तविवरणापेक्षया मीमांसायां ग्रन्थलाघवसम्भवेऽपि मीमांसा सूत्राणां संग्रहरूपत्वेन विवरणापेक्षिततया परस्परविरुद्धनानार्थावकाशाश्रयित्वेन तादृशबहुविध

विवरणसम्पत्त्या तत्त्वार्थाधिगमस्य दुर्लभत्वात्। तत्तद्विवरणार्थनिर्धारणार्थं मसंङ्ख्याकानां विवरणादीनां सम्भावितत्वेन प्रकृतेऽपि ग्रन्थगौरवस्याऽनपायाच्च। त दुक्त मभियुक्तैः 'सूत्रात्मा पारिजातः सकल मभिमतं मह्य मर्थं स दद्या' दिति। एवं प्रकृतमीमांसासूत्रजातस्य पारिजातव त्तत्तद्विद्वदभिमतार्थदायित्वेन स्फुटतया तत्तद्विद्वन्निर्णीतनानार्थेषु तत्त्वार्थस्य दुरवगमतया नैत न्मीमांसा निरर्थि केतिचे न्न॥

सर्ववेदान्तविवरणस्य दुष्करतया दुर्दर्शतया च तदपेक्षया सर्ववेदान्तविषयगतविशय विनिवारणार्थं लघूपायेन मीमांसाकरणस्यैव समुचितत्वात्॥

नच, सूत्राणां संग्रहरूपत्वेन अन्योन्यविरुद्धनानार्थावकाशदायित्वेन च तादृशबहुविवरण सम्पत्त्या तत्त्वार्थाधिगमो दुर्लभ इति वाच्यम्। सूत्राणां संग्रहरूपत्वेन विवरणापेक्षायां सत्या मपि विरुद्धार्थावकाशदायित्वाऽभावेन सद्विवरणवशात स्तत्त्वार्थाधिगमस्य सुलभत्वात्॥

नच, परस्परविरुद्धेषु विवरणेषु बहु ष्विद मेव सद्विवरण मिति निर्णेतु मशक्यत्वेन तद्व शात स्तत्त्वार्थाधिगमो दुष्प्राप इति वाच्यम्। मतान्तराभिनिवेशवता मल्पमेधसां चेदं सद्विवरण मिति निर्णेतु मशक्यत्वेपि तटस्थानां सुमेधसां च सद्विवरण मिद मिति निर्णेतुं शक्यत्वात्॥

तथाहि, सू॥ 'शब्दा देव प्रमित' इत्यधिकरणे 'अङ्गुष्ठमात्रः पुरुष' इति कठवल्ली मन्त्रश्रुतः पुरुषः जीवो वा ब्रह्म वेति संशय्य अल्पपरिमाणत्वा ज्जीव एवेति पूर्वपक्षं कृत्वा शब्दा देव 'ईशानो भूतभव्य' स्येति चरमश्रुतेशानशब्दस्य ब्रह्माभिधानश्रुतित्वेन ईशानशब्दा देव ब्रह्मेति राद्धान्तितम्॥

ननु, तत्र भूतभव्यस्ये त्यैश्वर्यप्रतिसम्बन्ध्युपादानेन रूढ्युन्मेषो न सम्भवति। योगरूढि मतां शब्दानां यौगिकार्थप्रतिसम्बन्ध्युपादाने यौगिकार्थपरत्वात्। अतएव 'पद्मानि यस्याग्र सरोरुहाणि प्रबोधय त्यूर्ध्वमुखै र्मयूखै' रिति श्लोके सरःप्रतिसम्बन्ध्यग्रपदोपादानवति सरोरुह शब्दे स्थितेपि पद्मशब्दप्रयोगो दृश्यते। अन्यथा 'उत्फुल्लस्थलनलिनीवना दमुष्मा दुद्धूत स्सरसिरुहोद्भवः परागः' इत्यत्र सरसिरुहशब्द स्येवाऽत्र सरोरुहशब्दस्य रूढ्युन्मेषे पद्मपदस्य पौनरुक्त्यं प्रसज्येत। तस्मा दिह ईशानो भूतभव्यस्येति पदद्वयसमभिव्याहाररूपवाक्येन ब्रह्मलिङ्ग मेव बोध्यत इति चेत्। उच्यते। शब्दश्रवणमात्रेण समुपलभ्यमानो रूढ्युन्मेषो यौगि कार्थप्रतिसम्बन्धिपदेन न प्रतिबद्धुं शक्यते। नहि तत्प्रतिसम्बन्धिपदानुपादान एव रूढ्युन्मेष इति राजाज्ञाऽस्ति। यद्येवं तर्हि पूर्वोदाहृतश्लोके पद्मपदं स्या त्पुनरुक्त मिति चे दत्रेद मवधेयम्। व्यङ्ग्यार्थ प्रधानेषु काव्येषु यस्य पदस्य यौगिकार्थो व्यञ्जनाव्यापारानुकूल स्तत्पदं यौगिकार्थ ए वोपक्षीणं

मत्वा तदीयरूढ्यर्थसमर्पकं पदान्तरं ननन्दि दुपादीयत इति न तत्रोपादानं यौगिकार्थप्रतिसन्धानेन्ध्यु पादानस्य रूढ्युन्मेषविरोधित्वप्रयुक्तम्। तदनुपादानेऽपि 'तव प्रसादात् कुसुमायुधोऽपि सहाय मेकं मधु मेव लब्ध्वा। कुर्यां हरस्याऽपि पिनाकपाणे र्धैर्यच्युतिं के मम धन्विनोऽन्ये' इत्यत्र तद्दर्शनात्। अत्रहि कैमुतिकन्यायोपयोगिनि सारतरायुधत्वस्य तत्तात्पर्ये यौगिकार्थ एव पिनाकपाणिशब्द मुपक्षीणं मत्वा तद्रूढिविषयशिवसमर्पणार्थं पदान्तरं प्रयुक्तम्॥

किंच - यस्य योगरूढिमतः पदस्य समभिव्याहृतात् कस्याचित् तद्विशेषणस्य विशेषणं किमपि प्रथम मुपादीयते, यथा 'पद्मानि यस्याग्रसरोरुहाणी'ति, यथा वा 'त्वत्पादपद्म मेकाऽस्या लावण्यसरसी रुह' मिति तत्पदं तद्विशेषितयौगिकार्थवशीकृत मिति तेनापि हेतुना तत्र रूढ्युन्मेषो न भवतीति वक्तुं शक्यम्। इह तु सङ्कोचकाभावा दीशानपदयौगिकार्थतया तद्रूढ्युन्मेषोऽपि 'भूतभव्यस्ये' त्यनेन पश्चा दनुवदिष्यत इति नाऽत्र तदनुन्मेषशङ्काविकाशः। एवञ्च ईशानशब्दस्याभिधान श्रुति रशब्दशब्देन विवक्षिता। भूतभव्ययोः प्रकरणोपपदाभिलापात्मकाभावेन असङ्कुचितभूत भविष्यद्वस्तुजातपरत्वा त्तन्नियन्तृत्व मपि श्रद्धालिङ्गम। एतस्मा द्धेतुद्वयस्मात् अङ्गुष्ठप्रमितः परमेश्वर इति निश्चीयते॥

अत्रैव मुभयोः श्रुतिलिङ्गयो रुपपत्तावपि श्रुतं लिङ्गस्य दुर्बलत्वेन भूतभव्येशितृत्व रूपलिङ्ग मास्ताम्। शब्दा दीशानशब्दरूपाभिधानश्रुतिमात्रा देव अङ्गुष्ठप्रमित परमेश्वर एवेति शब्दा देवेति भगवता बादरायणेन राद्धान्तितम्॥

अत्र केचि दीशानशब्दस्याऽभिधानश्रुतित्वाऽभ्युपगमे अस्य शास्त्रस्य नारायणपरत्वं व्याहन्येतेति मन्यमानाः यौगिकार्थपरत्व मेवाङ्गीकृत्य 'ईशानो भूतभव्य' स्येति पदद्वय समभिव्याहाररूपवाक्या दिति व्याचक्षते। तदिदं विवरण सूत्रविरुद्धम्। तथा हि, सूत्रकृता भूतभव्येशितृत्वरूपलिङ्ग मपि शब्दा द्दुर्बल मिति ततः प्रबलया श्रुत्या अन्यानि निर्णीयमाणे परैः लिङ्गा दपि दुर्बलस्य वाक्यस्य प्रमाणीकरणात्। शब्दः श्रुतमात्र स्वत्रर्थावगम मन्तरे णैव अङ्गुष्ठमात्रः परमेश्वर इति निश्चिनोतीती त्येवकारेण ईशानशब्दगतरूढिं व्यञ्जयति भगवति बाद रायणे तदनभ्युपगमा देवकारवैयर्थ्या च्च परेषां विवरणं सूत्राऽननुगत मिति विशद मेव। एतादृश मपि विवरणं तत्राऽभिमानवता मल्पमेधसां च स दिव प्रतिभासमान मपि निरभिमानिनां सुमेधसा मस देवेति स्फुटं विज्ञायत एव॥

अन्ये च 'परिणामा' दिति भगवति सूत्रकृति परिणामकारणवादं निश्चिन्वति हन्त त मिराकृत्य विवर्तवाद मुपनिबध्नन्ति। इदं पूर्वपक्षसूत्र मित्यपि न ते रुच्यते। येन विवर्तः सम्मतः सूत्रकर्तु रि त्यभ्युपगन्तुं युज्येत। त एव हि परस्तात् सूत्रकृत् परिणामकारणवादं माश्रयति

सगुणे घूपासने घूपयोक्ष्यत इति ब्रवते। एतेन परिणामवाद स्सूत्रकृत स्सम्मत इति तदुक्त्याऽपि स्फुटीभवति। एवं 'कर्ता शास्त्रार्थवत्वा' दिति जीवस्य कर्तृत्वं सिद्धान्तितं त दवधूय तद्विरुद्ध मकर्तृत्व मूरीकुर्वते ॥

तथा 'उत्क्रान्तिगत्यागतीना' मिति जीवस्याऽणुत्वे सूत्रकृता सिद्धान्तितं तन्निरा कृत्य तस्य विभुत्व मापादयन्ति। त देत त्सूत्रविरुद्धम्। तथाहि, उत्क्रान्तिगत्यागतीना मिति उत्क्रान्तिगत्यागतिश्रवणेन जीवः परिच्छिन्न इति प्रतिज्ञाय, ततः 'नाऽणु रतच्छ्रुते रितिचे न्नेत राधिकारा' दित्यत्र श्रुतिषु 'महा नज आत्मा' इत्यादिना जीवस्य महत्त्वं श्रुतं व्याकुप्ये दि त्याक्षिप्य, इतराधिकारात् तद्विभुत्वं ब्रह्मप्रकरणे निबद्ध मनो नेदं जीवगत मिति कण्ठरवेणैव विभुत्वं निराकृत्य, ततोऽपि 'स्वशब्दोन्मानाभ्यां च' इत्यादिभि र्बहुभि स्सूत्रै रणुत्वं निर्धारितम्। एवं सति 'तद्गुणसारत्वा त्तद्व्यपदेशः प्राज्ञव' दिति सूत्रे 'तद्गुणसारत्वा तु' इति तुशब्द मेकं प्रक्षिप्य 'तुशब्दः पक्षं व्यावर्तय' तीत्यारभ्य आदित स्सूत्रेषु निर्धारितं सिद्धान्तं स्ववचनैः प्रतिक्षिपन्ति। इदं सूत्रविरुद्ध मिति विशदम्। तथाच, पूर्वोदीरितपक्षव्यावृत्ति स्सूत्रकृदभिमत इ त्यभ्युपगन्तुं न युज्यते। यदि विभुत्व मेव जीवस्य सूत्रकृदभिमतं स्या त्तर्हि तेन तदेव कण्ठरवेण प्रतिज्ञायाऽणुत्वं निराक्रियेत। न तथा क्रियते। अथ कण्ठरवेण बहुभिः स्सूत्रै र्विभुत्व निराकरणपूर्वक मणुत्वं निर्धार्य परस्ता त्तुशब्देन पूर्वोक्तपक्षव्यावर्तने तस्य प्रतारकत्व मेव सिद्ध्येत्। तुशब्दोहनीयेन सिद्धान्तेन कण्ठरवेण बहुसूत्रसमर्थित स्याऽर्थस्य व्यावर्तनीयत्वात् सूत्रकृता कण्ठ रवे णोदीरित स्सर्वोऽपि व्यावर्त्यः। तुशब्देन मयोन्नीत एव सिद्धान्त इति वक्तुं हन्त कोनु क्षमेत। विमर्शने, तुशब्द एव न दृश्यत इत्यत श्चित्रं किं मपरम् ॥

अन्य च्च 'कार्यं बादरि रस्य गत्युपपत्ते' रित्यधिकरणे कार्य मित्यादिना निगदितं पूर्वपक्ष मेव सिद्धान्तीकृत्य तदनन्तरं सिद्धान्ततया निबद्धं 'परं जैमिनि र्मुख्यत्वा' दित्यादिकं पूर्वपक्ष तया विवृतम्। एवं वैयासिकं सिद्धान्त मेव पूर्वपक्षीकर्तुं कं पुनः पूर्वपक्ष माशङ्क्याऽयं सिद्धान्तः प्रतिष्ठापितः। कार्यं बादरि रित्यादिनेति स इदानीं सूत्रै रे वोपदर्श्यते। परं जैमिनि र्मुख्यत्वा दित्युक्तम्। यदि सूत्रकृ त्परं जैमिनि रित्यादिकं पूर्वपक्षतयाऽभिप्रेयात् त र्हीदं सूत्रं पुरस्ता देव निबध्नीयात्। अथ यदि स पूर्वतः सिद्धान्त मुत्तरत श्च पूर्वपक्षं निबध्नीयात् तर्हि नूनं स जना न्वञ्चयेत्। न तेन हि भगवता प्रतारकेण भाव्यम्। तस्मा दय मर्थो न सूत्रकृदभिमत इति विज्ञायते। एतेन हन्त वैयासिकौ पूर्वोत्तरपक्षौ परमते व्यत्यासं गता विति विशदम्। एव मेतादृशविवरणानि सूत्रविरोधे नाऽसद्विवरणा नीति सुविज्ञेयतया सद्विवरणत स्तत्त्वार्थवेदनं सुलभ मि त्यलं बहुना ॥

## तदारम्भो ह्यत्र, किं पुरुषार्थः। पुरुषार्थौ हि निरुपाधिकप्रेमद्वेषास्पदयोः

ननु,अन्ये किल वेदान्तानां कश्चिदर्थं स्वबुद्धिबलेनैव निर्णीय 'यथा नाम मर्थं सर्वेषां वेदान्तानां तथा वय मस्यां शारीरकब्रह्ममीमांसायां प्रदर्शयिष्याम इति वदन्ति। अत्र हि भाष्यकारः 'इहौपनिषदी मीमांसा समारभ्यत'इति वदति। एतं नाऽस्य भाष्यकर्तुः वेदान्तार्थं निर्धारणपटीयसी शेमुषी न स्थित इति गम्यते। यतश्चाऽस्य मीमांसानुमतेन। यथा वेदान्ताना मर्थं निर्धारयितु मीहते। परोक्तदिशा तु मीमांसासम्मति मनपेक्ष्य वेदान्ताना मर्थं स्वय मेव निर्णेतु मुज्यत इतिच प्रतिभा' तीतिचे दुच्यते। यद्यपि यथा नाऽस्य मर्थं मित्यादिवचनेन वेदान्तानां स्वबुद्धिनिर्धारित मेव कश्चि दर्थं मीमांसायां प्रदर्शयितु मेवाऽन्येषा मुद्यम इति तदु दीरितदिशया वेदान्तार्थं स्वय मेव निर्णेतु मुज्यत इति न प्रतिभा त्येन। तथापि न तदीयो मार्गः प्रामाणिकानां हृदयङ्गमः। तथाहि - श्रुत्यन्तार्थनिर्धारणार्थ मेव समारब्धमिद मुत्तरं मीमांसाशास्त्रं भगवता बादरायणेन। श्रुत्यन्तसूक्तीना मापाततः परस्परविरोधादिना संशय जनकत्व मन्तरा नेदं शास्त्रं प्रवृत्ति मर्हति। संशयादे र्मीमांसाङ्गत्वात्। तन्निर्णयस्तु विद्य तेऽस्मि न्नेव शास्त्रे। अतश्च श्रुत्यन्तानां स्वाभिमतार्थं मानिश्चित्यैर्युभि रपीद मेवाऽवश्यतो व्याख्येय मासी च्छास्त्रम्। यतश्च वैदिका स्सर्वे वेदान्तार्थं न्यायमिश्रमीमांसाऽननुगतं नाऽनुमोदन्ते। अतएव किलाऽन्यै रपि यथा नाऽस्य मित्यादिना निगद्य स्वाभिमतार्थं स्यत्रैव प्रदर्शनीय आसीत्। अतश्च, यथा धर्ममीमांसानुगतो वेदार्थ स्तथा न्यायमिश्रमीमांसासम्मत एव वेदान्तार्थः परमार्थ इत्यभिप्रेत्य 'इहौपनिषदी मीमांसा समारभ्यत' इत्याह। एतं नास्या मीमांसायाः स्वरससिद्ध एव वेदान्तार्थ आदर्तव्य इति विशदम्। अन्यमीमांसां हि विवरणाना मसूत्रानुसारित्वं प्रायः प्रत्यधिकरण व्यक्तीभविष्यति॥

ननु, तर्हि ब्रह्मणः स्वरूपप्रमाणसाधनफलं विचारार्थं 'जन्माद्यस्य यत' इत्याद्येव शास्त्र मारम्भणीयम्। किं माद्यसूत्रे णेत्याशङ्क्य तद्व्यावृत्त्यर्थं शङ्कामुद्दिश्य प्रदर्शयति तदारम्भ इत्यादिना॥

ननु, अनुबन्धचतुष्टयं शास्त्रस्यैव नतु तदारम्भस्य। कथ मत्र 'तदारम्भो ह्यत्र किंपुरुषार्थ' इत्यादिना निगद्यत इतिचे दुच्यते। शास्त्रगत मेव तत्तदारम्भ उपचारेण व्यपदिश्यते। अनुबन्ध चतुष्टय मन्तरा शास्त्रारम्भ स्यैवाऽनुपपन्नतया यच्छास्त्रस्य प्राकृत तत्प्रथमप्रवृत्तिरूपस्याऽऽरम्भ स्याऽपि भवती त्यारम्भगततया निर्देशो न विरुध्यते। किंपुरुषार्थ इति। निष्प्रयोजनक इत्यर्थः। ननु विचारशास्त्रस्य विचार्यनिर्णयः प्रयोजन मिति विदितम्। किमत्र प्रष्टव्य मित्याशङ्क्याह पुरु षार्थौ हीति॥ मुख्यपुरुषार्थभूतयोः सुखदुःखनिवृत्त्यो रन्यतरपर्यवसायित्वे नैव विचार्य

सुखदुःखयोः प्राप्ति रत्यन्तनिवृत्तिर्वा। क श्चेहाधिकारी, यस्यार्थित्वादयो धर्माः; कि मस्य विषयः, यत्प्रसिद्ध मनतिप्रसिद्धं च सन्देहजालसमारूढं वर्तते; कस्याऽनन्तर मस्यारम्भः यस्य नियतप्रयोजकतया पूर्वभावित्व मवगम्यत

---

निर्णयस्य प्रयोजनत्व मुपपादनीयम्। न ह्येत दुपपद्यते। तथाहि - सांसारिकं सुखदुःख निवृत्त्यो रन्यतर दस्य प्रयोजन मुत संसारनिवृत्तिरूपापवर्गकालभावित्वे नाभिमतम्। नाद्यः, तत्र प्रमाणाभावात्। न द्वितीयः, अनादेः संसारस्य निवर्तयितु मशक्यत्वा दिति भावः। कश्चेति॥ अर्थी समर्थो विद्वान् शास्त्रे रपर्युदस्तो वैदिककर्म ण्यधिकारी त्यर्थित्वादयो गुणा स्ताव द्व्याख्याः। न ताव दे वाऽत्राधिकारिविशेषणम्। किन्तु 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेद माया न्नाऽस्त्यकृतः कृते'नेत्यादिवचनै र्नित्यानित्यवस्तुविवेकादयो पीत्यभिमतम्। त न्नोपपद्यते। 'अक्षय्यं ह वै चातुर्मास्ययाजिन स्सुकृतं भव' तीत्यादिवाक्यैः कर्मफलाना मपि नित्यत्वावगमेन तद्विवेकाऽसम्भवा दिति भावः॥

कि मस्येति—य त्सामान्यतः प्रसिद्धं विशि ष्याऽप्रसिद्धं च संशयास्पदं भवति स एव विषयः। ततश्च, यदि 'अय मात्मा ब्रह्मे' त्यादिश्रुत्यनुसारेणाऽह मि त्यनुभूयमानो जीव एव ब्रह्मेति मतं तदाऽतिप्रसिद्धत्वा न्न तस्य विषयत्वम्। यदि 'य न्मनसा न मनुत' इत्यादि श्रुत्यनुसारेण वाङ्मनसातीतं ब्रह्मेति मतं तदाऽत्यन्ताप्रसिद्धत्वा न्न तस्य विषयत्व मितिभावः॥

कस्याऽनन्तर मिति — न कर्मविचार स्याऽनन्तर मस्याऽरम्भः। तस्याऽत्र प्रयोगाभावा दिति भावः॥

ननु, अनुबन्धचतुष्टयाक्षेपप्रस्तावे प्रयोजनाधिकारिविषये ष्वनुपपन्नत्वाशयविशिष्टतया पृष्टे ष्वनेन प्रयोजनेन विषयेण वाऽस्य शास्त्रस्य कः सम्बन्ध इति प्रष्टव्येऽत्र पूर्ववृत्तविशेषप्रश्नो न सङ्गच्छते। किं च विषयप्रयोजनवतः शास्त्रस्याऽरम्भे पूर्ववृत्तविशेषो नाऽपेक्ष्यत एव। 'अथ योगानुशासनम्', 'अथ शब्दानुशासन' मित्यादौ पूर्ववृत्तविशेषस्याऽदृष्टत्वा दितिचे न्न। अस्याऽयं विषय इत्युक्ते तेन प्रतिपाद्यप्रतिपादकभावः सम्बन्ध इति, अस्येदं प्रयोजन मि त्युक्ते तेन कार्यकारणभावः सम्बन्ध इति च तत एवाऽवगन्तुं शक्यत्वेन शास्त्रस्य विषयप्रयोजनाभ्यां सम्बन्धस्य पृथक्प्रतिपादनीयत्वाऽनपेक्षणात्।

अथ तत्तत्सम्बन्धानुपपत्तिशङ्काया अपि विषयत्वप्रयोजनत्वाऽनुपपत्तिशङ्कारूपत्वेन न पृथङ्निरूपणावश्यकता। नच, विषय एवाऽनन्यलभ्यत्वाकारो विषयत्वरूपः। प्रारीप्सितशास्त्रेण शक्यप्रतिपादनत्वं सम्बन्ध इत्यवान्तरभेदस्य विद्यमानतया पृथक्सम्बन्धनिरूपण मावश्यक मिति

इति श्रोतृजनमनश्शङ्काशूकसमुन्मूलनाय सर्वज्ञशिखामणिना भगवता व्यासेन समवतारित मिदं सूत्रम् ॥

## अथाऽतो ब्रह्मजिज्ञासा

इति इद मेक माधिकरणम् ॥

वाच्यम्। य त्प्रसिद्ध मनतिप्रसिद्धं च तच्छास्त्रस्य विषय इति प्राकथितत्वेन शक्यप्रतिपादनत्वविशिष्टस्यै वाऽनन्यलभ्यत्वस्य विषयत्वरूपत्वात्। अत्र हि सामान्यत प्रसिद्धया शक्यप्रतिपादनत्वम्। विशिष्याऽप्रसिद्ध्याऽनन्यलभ्यत्वं च व्यज्यते ॥

यद्यपि पूर्ववृत्तं न सार्वत्रिकम्, तथाऽपि त यत्र तत्रैव शास्त्रेऽनुबन्धचतुष्टय मन्यत्र तु तत्त्रय मेवाऽस्तु। यद्येवम् तर्हि पूर्ववृत्ताभावेनाऽत्र शास्त्रारम्भाक्षेपः कथं घटत इतिचे त्तत्रेद माकूतम्। धर्मविचारं पूर्वभाविन मपेक्ष्याऽस्य शास्त्रस्यारम्भ इति सिद्धान्ती मन्यते। त न्न युज्यते। धर्मविचारस्याऽत्राऽनुपयोगात्। नच तस्य चित्तशुद्धा वुपयोग इति वाच्यम्। जन्मान्तरानुष्ठितं नैव कर्मणा तत्सिद्ध्या तदर्थं कर्मविचारस्याऽनपेक्षितत्वात्। अतः सिद्धान्त्यभिमतपूर्ववृत्त संबन्धाक्षेपोऽपि ब्रह्मविषयाक्षेपव दुपपद्यत एव ॥

ननु, पूर्ववृत्तविषये नियमाभावेन सिद्धान्तिनो धर्मविचारस्य पूर्ववृत्तत्वाभिमानो व्यसङ्गत इतिचे दुच्यते। यदि पूर्ववृत्तं योगानुशासनादा विव न विवक्षितं तर्हि तथैव स्यात्। प्रकृते 'परीक्ष्य लोका न्कर्मचिता' नित्यादिना जिज्ञासाधिकरणविषयवाक्येन तत्र तत्र तत्त्वनिर्णयार्थं परिगृहीतैः श्रुतिलिङ्गादिभि श्च तद्वुत्पादकस्य धर्मविचारस्य पूर्ववृत्ततया विवक्षितत्वा दिति। एतच्छङ्काचतुष्टयपरिजिहीर्षयैव शास्त्रकृता प्रवर्तित मिद माद्रिमं सूत्र मि त्याशये नाऽऽह श्रोतृजनेत्यादिना ॥

अ त्रैकैकशङ्काश्रयपूर्वपक्षनिराकरणार्थं कि मिद मधिकरणचतुष्टय मित्याशङ्क्याह 'इद मेक मधिकरण' मिति ॥

इदं शास्त्रं नाऽऽरम्भणीय मिति शास्त्रानारम्भरूपपूर्वपक्ष स्यैकार्थाश्रयत्वेन पूर्वपक्षहेतूनां 'नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात् शास्त्रान्तरं कर्मभेदः स्या' दिति जैमिनिसूत्रदर्शितानां नामरूपादीना मिव भिन्नत्वे प्यैकाधिकरणत्व मेव त्याशयः॥

विषयसंशयपूर्वपक्षसिद्धान्तनिर्णयसंगतीना माधारत्व मिहाऽधिकरणत्वम् ॥

अत्राऽथशब्दोऽय मानन्तर्यार्थः। ननु 'अथ योगानुशासन' मित्यादावि वाऽधिकारार्थः। अधिकारो हि प्रारम्भः। न खलु ब्रह्मज्ञानेच्छा कर्तव्यत्वेन प्रारम्भयोग्या भवति। सा किल विषयरामणीयकमात्रसंभाव्या। 'ओङ्कार श्चाऽथ शब्दश्च द्वा वेतौ ब्रह्मणः पुरा। कण्ठं भित्वा विनिर्यातौ तस्मा न्माङ्गळिका वुभौ' इति स्मृते रय मथशब्दो मङ्गळार्थो न वर्णनीयः। जिज्ञासायां मङ्गळार्थ स्यान्वयाऽसम्भवात्। शास्त्रारम्भे शिष्टाचारपरिपालनार्थं मङ्गळाचरणं तु

ननु आधारोऽधिकरणम् (पाणि १-४-४५) इति विदितम्। इदं केषा माधार इ त्यधिकरणशब्देन निगद्यत इ त्याशङ्क्य तत्प्रवृत्तिनिमित्तविवरणमुखे नाऽधिकरणगता नवयवा न्प्रतिपादयति विषयसंशयेत्यादिना—सिद्धान्तस्य निर्णयावसानत्वरूपविशेष मभिप्रेत्य सिद्धान्तनिर्णये त्युक्तम्। केचि त्प्रयोजनेन सहाऽधिकरणस्य पञ्चावयवान् वदन्ति। अन्ये सङ्गत्या सह। तदुभय सङ्ग्रहार्थं वा। निर्णीयते नितरां प्राप्यत इति व्युत्पत्त्या निर्णयशब्देन प्रयोजनं विवक्षितम्। सङ्गतिः शास्त्रद्विकाऽध्यायपादपेटिकापूर्वाधिकरणरूपप्रतियोगिभेदात् षोढा भिद्यते। पूर्वाधिकरण सङ्गति राक्षेपापवाददृष्टान्तप्रत्युदाहरणादिभेदेन भवति बहुविधा। सा तत्रतत्राऽधिकरणे व्यक्ती भविष्यति। इह प्रथमं सूत्रपदानि विवृणोति अत्राऽथशब्द इति ॥

अथशब्दस्याऽनेकार्थत्वेपि 'प्रसिद्धतरार्थग्रहणे सम्भव त्यप्रसिद्धार्थग्रहणं न कार्यं' मिति न्याये नाऽनन्तर्यार्थकत्व मुचित मित्याशयः ॥

ननु 'अथ योगानुशासन' मित्यादिना शास्त्रारम्भे ऽथशब्द स्याऽधिकारार्थत्वं दृष्टचरम्। ततोऽत्राऽपि तदेव युज्यत इत्याशङ्क्याह ननु 'अथयोगानुशासन' मित्यादा विति—नच जिज्ञासाशब्दस्य 'धर्मं ज्ञातु मिच्छेत्', 'त द्विजिज्ञास' स्वेत्यादिलौकिकवैदिकप्रयोगप्राचुर्या द्विचारपरत्वोपलब्ध्या तादृशा स्य ग्रहणे विचारस्य प्रारम्भयोग्यतया स्वरूपप्रमाणादिमुखेन प्रत्यधिकरणं विचारस्य क्रियमाणत्वा च्च। 'योगानुशासनम्', 'शास्त्र मधिकृतं वेदितव्य' मित्यादिव द्ब्रह्मविचारात्मकं शास्त्र मधिकृत मिति विवरणे नाऽसामञ्जस्य मिति वाच्यम्। आनन्तर्यार्थकत्वेन विशिष्टाधिकारलाभे सम्भव त्यधिकृतत्वमात्रद्योतक स्याऽधिकारार्थत्व स्याऽनुचितत्वात् ॥

अन्वयाऽसम्भवा दिति—जिज्ञासां प्रति मङ्गळस्य कर्तृकरणादिभावे नाऽनन्वया दित्यर्थः। यद्यपि 'अथैवं मन्यस' इत्यादौ पक्षान्तरपरिग्रहो प्यथशब्दार्थतया दृश्यते तथापि तादृशार्थोऽत्र

वर्णध्वनिमात्रेण कल्प्यते। न चायं पक्षान्तरपरिग्रहार्थः। पूर्वमेक स्याऽनुक्ततया तत्प्रसङ्गासम्भवात्। नच भोजनगमनादिव दनियतं यत्किंचित् पूर्ववृत्त मपेक्ष्याऽथ मथशब्दप्रयोगः। नियतसामग्रीभूतस्य कस्यचि दत्र विवक्षितत्वात्। यस्यसंपत्ति रिहाऽधिकारिविशेषणतया ब्रह्मविचारस्य साधनं तत्पूर्वभावीति विज्ञायते। अथाऽष्टवर्षत्वादियुक्तब्राह्मणाद्युपयुक्तोपनयनसंस्कारपूर्वकस्य स्वाध्यायोऽध्ये

न सम्भवति। पूर्वं वस्यचि दपि पक्षस्याऽनुपन्यासा दि त्याशय्र त्याऽह नचाऽय मिति—एव मथशब्दस्याऽर्थान्तर निक्षेपे णाऽनन्तर्यपरत्वे व्यवस्थापितं नियतसामग्रीभूतं किंचि त्पूर्ववृत्तं निर्दिधारयिषुः पक्षान्तरं निराकरोति नचाऽय मिति। अनियतस्य निष्प्रयोजनस्य न कस्यचि दर्थस्य विवक्षायां सूत्रकृतोऽनर्थकवचनत्वप्रसङ्गा दिति भावः। तर्हि अध्ययन पूर्ववृत्त मस्त्वि त्याशङ्क्याह अथेति ॥

ननु 'अध्यापनविधि रध्ययनस्याऽनुष्ठापकः, नस्वाध्यायविधि नियोज्यत्वा' दिति प्राभाकरा वदन्ति। तथाहि- उपनयनपूर्वकाध्ययना दाचार्यकं निष्पद्यते। 'उपनीय तु यः शिष्य' मित्यादिस्मरणात्। तदनुसारेण 'अष्टवर्षं ब्राह्मण मुपनयीत। त मध्यापयीत' इत्यात्मनेपदबला दुपनयने प्रतीयमान स्याऽऽचार्यकहेतुत्वस्य तस्मि न्नध्यापनद्वारकत्वकल्पनौचित्यात्। न चाऽऽचार्यक माधाननिष्पाद्य माहवनीयत्वादिक मिवाऽलौकिकातिशयरूपत्वेन न स्वतः पुरुषार्थरूप मिति वाच्यम्। तस्य तथाविधत्वेपि 'आचार्याय प्रियं धन माहृत्ये' ति श्रुतं दक्षिणादानादिहेतुतया गौणपुरुषार्थरूपत्वात्। ततश्च तत्कामोऽध्यापनविधौ नियोज्य इति सनियोज्यकेन तेन विधिनाऽध्यापनं ताव त्प्रयुज्यते। त च्चापि लौकिकेना प्यध्ययनेन सम्भवति तथा प्युपनयनद्वारा विहि तस्यैवाऽध्ययनस्य तेन प्रयुक्ति रि त्येष्टव्यम्। कथ मितिचेत्। उपनयन ताव दध्यापनाङ्गम्। 'उपनीय तु यः शिष्य' मिति स्मृता वुपनयनाध्यापनयो स्समानकर्तृकत्वप्रतिपादनात्। 'अष्टवर्षं ब्राह्मण मुपनयीत त मध्यापयी' तेतिश्रुतौ तच्छब्दगृहीतोपनीतस्याध्यापनान्वयावगमात्। उपनयीतेत्यात्मनेपदश्रुत्याऽध्यापनफलस्याचार्यक स्योपनयनफलत्वप्रतिपादना च्च। एव मध्ययनस्याऽध्यापनविधिप्रयुक्तत्वे अध्यापनविधिना लब्धानुष्ठानस्याऽध्ययनस्याऽधिकार्यपेक्षाभावा दर्थज्ञान कामस्याऽधिकारिणोऽ कल्पनीयत्वे नाऽर्थज्ञानस्याऽध्ययनं प्रति फलोपकार्यङ्गत्वाभावात्। विचारे वेदाध्ययनस्य नियतसामग्रीत्वेन पूर्ववृत्तत्वं न सिद्ध्ये दित्याशङ्क्याऽध्ययनस्याऽध्यापनविधिप्रयुक्तत्वं निराकर्तुं माह अष्टवर्षत्वादियुक्तब्राह्मणाद्युपयुक्तोपनयनसंस्कार स्येति ॥

अत्रेद मवधेयम्। उपनयन मुपनेयब्राह्मणाद्यर्थम्। 'वसन्ते ब्राह्मण मुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्य' मिति द्वितीयाश्रुतिभि स्तथाऽवगमात्। तदर्थत्वं च तस्य तन्नीय

कार्याध्ययनाङ्गत्वे नाऽन्योपयुक्तत्वे इति युक्तिं सूचयितुं ब्राह्मणाद्युपयुक्ते त्युपनयनविशेषणम्। किंच, 'भूतभाव्युपयोगं हि द्रव्यं संस्कार मर्ह' तीति न्यायेन संस्काररूपक्रियायाः कर्मार्थत्वस्य कार्यान्तराङ्गत्वेनैव निर्वाह्यतया उपनयनसंस्कृतस्य भूतोपयोगाभावात्। भाव्युपयोगे वक्तव्ये तस्याऽध्यापनाङ्गत्ववादिनाऽपि 'अध्ययनं कुर्वन्माणवक स्तद्द्वारा तस्याऽङ्गं भव' तीति वक्तव्यतया उपनयनं पूर्ववृत्ते सति प्रथमोपस्थित मुपनेयगतत्वे ना न्तरङ्गं चाऽध्ययनं प्रत्येवा ऽङ्गत्वं युक्तम्। न त्वध्यापनं प्रती त्यमु मर्थं युक्त्यन्तरं च सूचयितु मुपनयनाङ्गकस्ये त्यनुक्त्वा उपनयनसंस्कारपूर्वकस्ये त्युक्तम् ॥

अनेन उपनयनाध्ययनयो राम्नानपौर्वापर्य मप्यत्र साधकं विवक्षितम्। 'स्वाध्यायोऽध्येतव्य'इ त्युत्तरवाक्यान्वयिनोऽध्ययनविधिग्रहणस्य काकाक्षिन्यायेन पूर्ववाक्ये प्यन्वयात्। एवं च उपनयनस्य द्वितीयाश्रुत्या उपनेयार्थत्वेऽवगते 'किमर्थ महं मुपनयनसंस्कारे णाचार्यसमीपं प्रापित' इति कार्याकाङ्क्षा उपनयनविध्यनन्तर मकर्तृकतया विहितस्याऽध्ययनस्य कर्त्राकाङ्क्षया चोप नयनाध्ययनयो रेकवाक्यता भव तीति वाक्यप्रमाणं नाऽपि तस्याऽध्ययनाङ्गत्व मिति तेन सूचितम्।

ननु, उपनयीते त्यात्मनेपदश्रुति र्वाक्यप्रमाणा द्बलव तीतिचे न्न। तस्या वाक्येन विरोधाऽभावात्। तथाहि, आचार्यकहेतुत्ववैशिष्ट्यं समीपप्रापणरूपे धात्वर्थे न प्रत्याय्यते। नत्वाहत्य धात्वर्थं स्याऽध्यापनाङ्गत्वं बोध्यते। 'संमाननोत्संजनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' (पाणि १-३-३६) इत्याचार्यकरणविशिष्टे धात्वर्थे नयते रात्मनेपदविधानात्। त त्त्वाचार्यकहेतुत्वं साक्षा दुपनयनस्य न सम्भवति। 'उपनीय तु य श्शिष्यं वेद मध्यापये द्द्विजः। सकल्पं सरहस्यं च त माचार्यं प्रचक्षत' इति तस्योपनयनपूर्वका ध्यापनफलकत्व स्मरणात्। किं त्वध्यापनद्वारे त्यनया प्रणाडिकया तस्याऽध्यापनाङ्गत्वं प्रत्याय्यत इ त्युपपाद नीयम्। एवंच, द्वारविचारे तस्याऽध्ययनाङ्गत्व मेव सिध्यति। कथं - उपनयन स्याऽध्यापन निर्वर्तकत्व मपि न साक्षात्। कि न्तूपनयनेन विना नोपनेय स्याऽऽचार्यसमीपप्राप्तिः। तां विना नाऽध्ययनम। अध्ययनं विना नाऽध्यापन मिति तदपि परम्परयोपपादनीयम्। एवं चास्यां परम्पराया मध्ययनस्य प्रथमनिविष्टत्वा दुपनेयगतत्वे नान्तरङ्गत्वा दुपनेयसंस्कारप्रतिपादक द्वितीयाश्रुत्यनुग्रहात्। 'उपनयनं विद्यार्थस्य श्रुतित संस्कारः' (आपस्तम्बधर्मसू॥ प्र. १-१-४-१-९) इतिस्मृत्यनुग्रहा च्च तस्याऽध्ययनाङ्गत्व मेव सिद्ध्यति ॥

किंच आत्मनेपदश्रुत्यै वाऽध्ययनाङ्गत्व मुपनयनस्य सिद्ध्यति। सम्माननेत्यादिसूत्रेण आत्मनेपदविधानस्याऽकर्त्रभिप्रायार्थत्वात्। क्रियाफलस्य कर्तृगामितायां नयते रात्मनेपदस्य 'स्वरित ञित' इत्यादि सूत्रेणैव सिद्धत्वात्। नच उपनयनं प्र त्यङ्गित्वेन उद्देश्य स्याऽध्यापनस्य

तव्य ' इति स्वविधिप्रयुक्ततया नित्यप्राप्तस्य नियमोपारितायामुपलब्धाक्षर

तत्फल स्याऽध्यार्थकस्य च कर्तृगतत्वेऽपि तस्याऽध्यापनाङ्गतायां द्वारभूतोपनयनजन्यसंस्कार स्याऽकर्तृगतत्वा दात्मनेपदं नोपपद्यत इति वाच्यम्। यत्प्रधान फल मुद्दिश्य क्रियारम्भ स्तस्य कर्तृगतत्वाऽकर्तृगतत्वयो रेव पदव्यवस्थापकत्वविषयत्वात्। अत एव वृत्तिकारेण ' स्वरित ञित' इत्यादिसूत्रे यस्य कस्यचित् फलस्य कर्तृगामित्वमात्रेण आत्मनेपदाभावे ' पचन्ति पाचकाः ', ' यजन्ति याजकाः ' इत्य त्राऽऽत्मनेपदं स्यात्। तत्राऽपि दक्षिणादे कर्तृगामित्वा दिति शङ्कानिराकरणा योक्तं ' क्रियायाः फल प्रधानभूतं यदर्थ मसौ क्रिया आरभ्यते ' इति। तस्मा त्संस्कारमात्र स्योद्देशफलत्वासम्भवा त्किमर्थं वय मुपनयनेन संस्कृता इति संस्कार्य कैमर्थ्याकाङ्क्षाया मर्थज्ञानफलक मध्ययन मेव तस्योद्देश्य फल मिति युक्तम्। न त्वाचार्यक फलक मध्यापनम्। अकर्त्रभिप्रायार्थात्मनेपदश्रुतिविरोधात्॥

ननु, ' उपनीय तु यश्शिष्य ' मिति स्मृतिगतक्त्वाश्रुत्या उपनयनाध्यापनयोः समान कर्तृकत्व मवगम्यते। तच्च नैकप्रयोगतां विनेति प्रयोगैक्येन उपनयन स्याऽध्यापनाङ्गत्वं सिध्यति। उपनयन मुपनेयासक्ति सम्पाद्य तदर्थे नाऽध्ययनं नाऽध्यापनं निर्वर्तयितु क्षम मिति दृष्टद्वारत्वा दुपनयन स्याऽध्यापनाङ्गत्वे नैव प्रयोगैक्यनिर्वाह इति वाच्यम्। श्रुत्यन्तगतस्य उपनयनाऽध्यय नाङ्गत्वस्य यच्छब्दयोगा दनुवादकरूपया स्मृत्या बाधितु मशक्यत्वेन स्मृतिगतक्त्वाप्रत्ययस्य ' दर्शपूर्णमासाभ्या मिष्ट्वा सोमेन यजेत ' इत्यत्र क्त्वाप्रत्यय स्येव पौर्वापर्यमात्रपरतया नेतव्य त्वात्। तस्मा दुपनेयार्थत्वेन श्रुत मुपनयन मध्ययनाङ्ग मेव भाति। न त्वध्यापनाङ्ग मितिसिद्धम्॥

अपि चाऽत्र अष्टवर्षत्वाऽऽदीत्यादिशब्देन काम्यकल्पमपि आचार्याः गृह्णन्ते। यथा 'गर्भाष्टमेषु ब्राह्मण मुपनयीत, गर्भैकादशेषु राजन्य, गर्भद्वादशेषु वैश्य' मिति प्रकृत्य 'अथ काम्यानि, सप्तमे ब्रह्मवर्चसकाम, मष्टम आयुष्कामं, नवमे तेजस्कामं, दशमे अन्नाद्यकाम, मेका दश इन्द्रियकामं, द्वादशे पशुकाम 'मिति। अत्र उपनयनाश्रितानां वयोविशेषरूपाणां गुणाना मुपनेयार्थत्वेन तदाश्रयस्य प्रधानभूत स्योपनयनफलस्याऽपि तदर्थत्वसम्प्रतिपत्तेः। एवं काम्य कल्पपर्यालोचनया प्युपनेयार्थं स्वाध्ययन रथैवोपनयन मङ्ग मिति सिद्धयती त्याशयः॥

एव मुपनयनस्याऽध्ययनाङ्गत्वे सिद्धे विहिताध्ययन स्याऽध्यापनविधिप्रयुक्तत्वाऽभावा त्स्वविधिप्रयुक्त मेव अध्ययनं भवति। अध्ययनस्य स्वविधिप्रयुक्तत्व एव नित्यव दनुष्ठानं सिद्धयेत, न त्वध्यापनविधिप्रयुक्तत्वे इत्याशयेनाह— स्वविधिप्रयुक्ततया नित्यप्राप्त स्येति॥

अध्ययनं हि नित्यम्। तदङ्ग स्योपनयनस्य नित्यत्वात् ' अत ऊर्ध्वं त्रयो प्येते यथा काल मसंस्कृताः। सावित्रीपतिता व्रात्या भव न्त्यार्यविगर्हिताः', 'योऽनधीत्य द्विजो वेदा नन्यत्र

ग्रहणरूप स्याऽर्थज्ञानफलस्य वेदाध्ययनस्य ब्रह्मविचारा त्पूर्वभावित्वं युक्तम् ।

कुर्वंत श्रमम् । स जीव न्नेव शूद्रत्व माशु गच्छति सान्वय' इति तदभावे दोषस्मरणात् । अध्यापनविधे स्तु काम्यतया तत्प्रयुक्तत्वे त्वध्ययनस्य न नित्यत्वं सिद्ध्ये दिति ज्ञेयम् ॥

न त्वध्ययनविधेः सर्वशाखाविषयत्वे स्वविधिना प्यध्ययनस्य प्रयुक्ति र्न सम्भव त्यशक्यानुष्ठानत्वा दित्याशङ्क्य स्वशाखामात्रविषयोऽध्ययनविधिः, नतु सर्वशाखाविषय इत्याशयेन 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधि रुदाहृत. ॥

नियमोपाधि रेति—अनेना प्यध्ययनस्य स्वविधिप्रयुक्तत्व मूरीकरणीय मित्याशयः । तथा हि, यावद्वेदपरिसमा प्त्याचार्याधीनेन शुश्रूषादिनियमै स्तदुपासनापरेण माणवकेन कर्तव्यतया भव त्यध्ययन मतिक्लेशसाध्यम् । एतादृशं कर्म ह्यन्यपुरुषगाम्याचार्यकसिद्ध्यर्थं कथ मन्यः प्रवर्तेत । दक्षिणां च कथं दद्यात् । तस्मा दिदं स्वविधिप्रयुक्त मेवेति ग्राह्य मिति ॥

ननु फलरहितोऽध्ययनविधि र्न प्रवर्तक इ त्याश ङ्क्याह अर्थज्ञानफलक स्येति—अत्रेदं बोध्यम् । अध्ययनानन्तर मक्षरग्रहणपदावधारणपदार्थज्ञानमुखेन समुपलभ्यते वाक्यार्थज्ञानम् । तदेव भव त्यध्ययनस्य फलम् । तत्कामोऽधिका रीति ॥

ननु अध्ययनविधौ तत्कामोऽधिकारी न श्रूयत इतिचे न्न । अध्यापनविधा वश्रूयमाणस्याऽचार्यककामस्ये वाऽध्ययनविधा वर्थज्ञानकामस्य कल्पनीयत्वात् । न च बालस्याऽर्थज्ञानकामना न सम्भव तीति तादृशोऽधिकारी न लभ्यत इति वाच्यम् । बालस्य तादृशकामनाया असम्भवेऽपि बालहितकारिषु तत्सम्भवेन तत्प्रेरणयाऽधिकारिलाभात् । नन्वेवं बालस्य स्वाधिकारः प्रवर्तको न स्या दितिचे न्न । रुग्णं बाल मुद्दिश्य भिषग्भिः पित्रादिभिः सामदानाद्युपाये नाऽनुष्ठाप्यमानाया मौषधसेवाया मिवाऽध्ययनेऽनुष्ठाप्यमाने बालस्यैव विध्युक्तं फलं भवत्विति पित्राद्याशयस्य विद्यमानतया तदधिकार स्यैव प्रवर्तकत्वनिश्चयात् । अन्यथा पित्रादिभि रनुष्ठाप्यमाने सन्ध्यावन्दनादा वपि बाल स्याऽधिकारः प्रयोजको न स्यात् । एव मध्ययन स्याऽर्थज्ञानफलकतया स्वाधिकारेण स्वविधिनैव प्रयुक्तत्वेन नाऽध्यापनविधिप्रयुक्तत्वम् । ततोऽस्य पूर्ववृत्तत्व मुपपन्न मित्याह ब्रह्मविचारा त्पूर्वभावित्वं युक्त मिति ॥

अध्यापनविधिप्रयुक्तत्वे त्वस्य आचार्यककामे नाऽन्ये नानुष्ठाप्यमानतया तस्मि न्नर्थज्ञानकाम स्याधिकारिणोऽनपेक्षणा दित्याशयः ॥

धर्मवत् ब्रह्मणोऽपि वेदैकसिद्धत्वा दनधीतवेदस्य तद्विचारानुपपत्तेः । ततः केवलाऽध्ययनानन्तरं ब्रह्मविचार इतिचेत, भवतु नाम तादृशा ध्ययनम्। तदनन्तरं तु धर्मविचारः। तस्य तदभिसन्धौ निश्चयभावात । तथा चाचार्यैः प्रति पादित ' मथातो धर्मजिज्ञा ' सेति प्रथमत स्वाध्याया ध्ययनानन्तरं धर्म विचारप्राप्ति रिति ॥

ननु जग त्सकर्तृकं कार्यत्वा द्घटव दिति कार्यलिङ्गानुमानेनाऽपि ब्रह्मणोऽवगन्तुं शक्यत्वेन वेदैकगम्यत्वाभावा न्नियमेन वेदाध्ययनं पूर्ववृत्त मिति वक्तुं न युज्यत इत्याशङ्क्याह धर्मव दिति — यद्यपि कार्यलिङ्गेन सामान्यतः कर्तृ प्रतीति र्भवति, तथापि विशिष्य त ल्लिङ्गशब्दित मिति तु ' यदाऽतम स्त न दिवा न रात्रि र्न स न्नचास च्छिव एव केवलः ' इत्यादिश्रुत्यर्थावगम मन्तरा न निर्णयते । अतो वेदैकार्थावगतत्वाद्ब्रह्मणो वेदाध्ययनं नियतपूर्ववृत्तं भवितु मर्हति । यथा लोके प्राणिना भोगस्य नानाविधत्वेन दृश्यमानतया तल्लिङ्गन कारणस्य धर्म स्याऽनुमानगम्यत्वेऽपि यागदानादिरूपस्य धर्मस्य वेदैकगम्यत्व मित्याशयः । तस्मा द्ब्रह्मविचारस्याऽध्ययनानन्तर्यं युक्त मि त्युपसंहरति तत इति — त त्परि हरति भवतु नामेति — स्वविधिप्रयुक्तत योपनयनाङ्ग मध्ययन मर्थज्ञानफलक मपि तदनन्तरं न ब्रह्मविचार स्सम्पद्यते । तदा धर्मविचारस्यैव प्राप्ते रित्याशय ॥

अथ अध्ययना त्प्रागपि धर्मविचारः कर्तु शक्यत इति शङ्कां वारयितु माह तस्य तदभिसन्धौ निश्चयभावादिति— अस्येदं हृदयम् । यसन्त उपनीतो हि ब्राह्मणः श्रावण्यां प्रोष्ठपद्यां वा उपाकर्म निर्वर्त्य वेद मध्येतु मुपारभते । कथ मतः पुरस्ता देव कृत्स्नस्याम्नायार्थनिर्णयोपयुक्तन्यायविचारं धीमा नपि कर्तुं शक्नुयात् । किञ्च वैदिकपदतदर्थावगमो व्याकरणादिभिर्भवति नियतः । अन्यथा तस्य तदङ्गत्व मच्छिद्येत । अङ्गाध्ययनं तु वेदपाठोपक्रमानन्तरं कृष्णपक्षे व्यनुष्ठेय मि त्यध्ययना त्पूर्वं न्यायविचार स्सुतरां न सम्भवति । तस्मा दुपनीतो धर्माधर्मौ महाफलौ विति वृद्धजना दाकर्ण्य तज्ज्ञान मन्विच्छन् स्वाऽध्यायविधिना साङ्गवेदाध्ययने प्रवृत्त स्तदध्ययनेनैव वैदिक पदतदर्थावगमं च सिद्धेऽपि वाक्यार्थविशेषेषु सन्दिहानः तत्तद्वाक्यार्थविशेष मवजिगमिषु रध्ययनानन्तर मेव धर्मविचारे प्रवर्तत इति । एव मभिप्रेत्यैव जैमिनिना धर्मविचारशास्त्रं प्रणीत मि त्याह तथा चेति ॥

ननु ' अथाऽतो धर्मजिज्ञा ' सेत्यत्राऽथशब्दस्य वेदाध्ययनानन्तर मित्यर्थो न वक्तुं शक्यते, वेदाध्ययनस्य धर्मब्रह्मविचारसाधारणकारणतया प्रथमं धर्मविचारप्रवर्तकत्वरूपविशेषपक्षपात कल्पनायोगा दित्याशङ्क्य तस्य तथात्वेऽपि विरक्ताऽविरक्तसाधारण्येन कर्मानुष्ठानस्याऽवश्यकतया तदपेक्ष्यधर्मविचार एव प्रथमं प्रवर्तत इ त्याशयेनाह प्रथमत इति— अथशब्द स्याऽनन्तर्यार्थ

तर्हि किमनन्तर मस्याऽरम्भः? धर्मविचारानन्तरम्। कथम्? न वयं धर्मब्रह्म विचाररूपयोः शास्त्रयो रत्यन्तभेदवादिनः। किं त्वेकत्ववादिनः। धर्मब्रह्मणो राराधनाराध्यभूतयोः प्रतिपादकं 'अथातो धर्मजिज्ञासा 'इत्यारभ्य 'अनावृत्ति

कर्तव्यं निर्णीयाऽध्ययनानन्तर्यं निराकृतम्। अथ यदनन्तर मस्यारम्भो वा त न्निरूपयितुं प्रश्नं प्रवर्तयति तर्हीति —तदुत्तर माह धर्मविचारानन्तर मिति—ननु ब्रह्मविचारस्य धर्मविचारानन्तर कर्तव्यत्व मुक्तम्। त न्न युक्तम्। धर्मब्रह्मविचारयोः पौर्वापर्ये हेतुसम्बन्धविरहा दि त्यभिप्रेत्य शङ्कते कथ मिति—काण्डद्वयात्मके वेदे कर्मकाण्डव्याख्यानरूपो धर्मविचारः। ब्रह्मकाण्डविवरण रूप श्च ब्रह्मविचार इ त्यविवादम्। एव मुभयो रपि विचारयो र्वेदात्मकैकग्रन्थविवरणरूपत्वे नैकशास्त्रत्वस्य समुचिततया काण्डद्वयगतपौर्वापर्य मेव धर्मब्रह्मविचारद्वयगतपौर्वापर्ये हेतुसम्बन्ध इत्याशयेनाह न वय मिति—धर्मविचारशास्त्रे पूर्वापरपङ्क्त्यो रिव विचारशास्त्रयो रवान्तरविषय भेदेन किञ्चिद्भेदानुमत्यर्थ मत्यन्तपदम् ॥

ननु पूर्वोत्तरमीमांसयो रेकशास्त्रत्व मनुपपन्नं प्रधानप्रतिपाद्यभेदा,त्कर्तृभेदा,त्प्रयोजनभेदा, दर्थविरोधा च्चे त्याशङ्क्याह धर्मब्रह्मणो रिति—धर्मपरस्याऽपि वेदभागस्य तत्समाराध्ये ब्रह्मण्येव महातात्पर्यम्। 'सर्वे वेदा यत्पद मामन ' न्तीति 'वेदै रशेषै रह मेव वेद्यः ' इति च श्रुति स्मृतिभ्यां ब्रह्मणः सर्ववेदप्रतिपाद्यत्वाऽवसायात्। तस्मा त्तद्विवरणरूपयो रपि विचारशास्त्रयो र्व्याख्येयमहातात्पर्यविषयैकार्थपर्यवसायित्वेन प्रतिपाद्यभेदाभावा देकशास्त्रत्व मविरुद्धम् ॥

तथा न कर्तृभेद एकशास्त्रत्वविघटकः। पाणिनीयसूत्रपूर्वोत्तरवृत्त्यो र्वामनजयादित्य कृतयो र्मूलग्रन्थैक्या देकव्याख्यानत्वस्य दृष्टत्वात्। नाऽपि प्रयोजनभेदः शास्त्रभेदसाधक इति वाच्यम्। द्वादशलक्षणीपूर्वोत्तरपङ्क्त्योः प्रकृतिविकृतिरूपप्रयोजनभेदे सत्य प्येकशास्त्रत्वस्य दृष्टत्वात् ॥

ननु एकशास्त्रत्वविघटकोऽर्थविरोधो दुष्परिहरः। तथाहि, जैमिनिना 'आम्नायस्य क्रियार्थत्वा दानर्थक्य मतदर्थानां तस्मा दनित्य मुच्यते ' (जै. सू ॥ १–२–१ ) इति सूत्रे णाऽर्थवादादीना मक्रियार्थाना मानर्थक्यं पूर्वपक्षीकृत्य 'विधिना त्वेकवाक्यत्वा त्स्तुत्यर्थेन विधीनां स्यु ' (जै. सू ॥ १–२– ) रिति सूत्रेण विध्येकवाक्यतया क्रियार्थत्वोपपादने नैव तेषा मानर्थक्यं परिहृतम्। भगवता बादरायणेन तु 'शास्त्रयोनित्वा' दिति सूत्रेण ब्रह्मणि वेदान्तानां प्रामाण्यं प्रतिज्ञाय 'तत्तु समन्वया ' दिति सूत्रेण अक्रियारूपे ब्रह्मणि कथं तेषां प्रामाण्य मित्याशङ्काया माम्नायस्य क्रियार्थत्वनियमं तिरस्कृत्य सर्वत्र यत्किंचिद्विध्यन्वितानां

स्शब्दा' दित्येतावत्पर्यन्त मेक मेव शास्त्रम्। तत्र 'अथात श्शेषलक्षण' मित्यादिव दवान्तरपरिच्छेदार्थोऽय 'मथातो ब्रह्मजिज्ञा' सेत्यारम्भः ॥

अथवा, धर्मस्य ब्रह्मबोधहेतुत्वा त्तद्विचारोपयुक्तानां श्रुतिलिङ्गादीनां वेदचोदनार्थवादस्मृत्यादिप्रामाण्यप्रतिपादनादीनां च ब्रह्मविचारोपयुक्तत्वा च्च धर्मविचारानन्तरं ब्रह्मविचारः। साधनं विना साध्यानिष्पत्तेः। ब्रह्मबोधं प्रति

- - - - - - -

रयत्नलभ्येति जैमिने राशय उक्तयः। अन्यथा 'सम्पत्ते रिति जैमिनिः', 'परं जैमिनि र्मुख्यत्वात्', 'ब्राह्मेण जैमिनि रुपन्यासादिभ्य' इत्यादिब्रह्मसूत्रे ष्वेव जैमिने र्ब्रह्मस्वरूपतद्गुण तदुपासन तत्फलाद्यभ्युपगमो विरुध्येत। एवं विरुद्धार्थे तात्पर्याभावा न्नार्थविरोधः ॥

न न्वेव मपि जैमिनिना 'द्रव्यदेवतासाम्ये द्रव्यं बलीय' इति देवताप्राधान्यं निराकृतम्। तेन देवतानिरासे तात्पर्य दरीदृश्यत इतिचे न्न। अत्र द्रव्यदेवतयो स्सद्भावाऽसद्भावाभ्यां प्राधान्याऽप्राधान्ययो रविवक्षितत्वात्। द्रव्य स्याऽविलम्बितप्रत्यक्षगम्यतया, देवताया विलम्बितशास्त्रगम्यतया च विलम्बिताऽविलम्बितप्रवृत्तिप्रमाणविषयत्वे नैव प्राधान्याऽप्राधान्ययो र्विवक्षितत्वेन तावता देवतानिरासे तात्पर्याभावात् ॥

नन 'धर्मं जैमिनि' रिति जैमिन्युक्तापूर्वगतफलप्रदत्वस्य बादरायणेन निराकृतत्वेन विरोधो दुष्परिहर इति वाच्यम्। जैमिनिना श्रुततर्कोपपत्तिभ्यां कालान्तरभाविफलसाधनमात्रेऽभिहिते, ताभ्या मेवाऽत्र फलसाधनविशेषसिद्धे र्बादरायणेन प्रदर्शितत्वेन तयोः परस्परविरोधानुपलम्भात्। तस्मा त्पूर्वोत्तरमीमांसयो रेकशास्त्रत्व मक्षतम्। अत एवोक्तं वृत्तिकारेण 'वृत्तात्कर्माधिगमा दनन्तरं ब्रह्मविविदिषेति' संहित मेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति चैकशास्त्रत्व मुक्तम्। शारीरक मिति ब्रह्ममीमांसा। जगच्छरीरः परमात्मा शारीरः। 'तस्यैष एव शारीर आत्मा' इतिश्रुतेः। एव मेकशास्त्रत्वे बहुप्रमाणसम्मतिप्रदर्शनेऽपि ये मनःप्रत्यय मलभमाना स्ता नुद्दिश्याह, अथवेति — धर्मविचारस्य ब्रह्मविचारपूर्ववृत्तत्वे अर्थज्ञानपूर्वकानुष्ठानद्वारा विचारसाध्यस्य धर्मस्य ब्रह्मावबोधहेतुत्व मेको हेतुः। धर्मविचारशास्त्रे धर्मनिर्णयोपयुक्ततया व्युत्पादितानां श्रुतिलिङ्गादीनां तत्रत्यानां वेदप्रामाण्यादिप्रतिपादनानां च ब्रह्मविचारोपयुक्तत्व मपरो हेतु रिति ज्ञेयम्। अत्राऽदिशब्देन वाक्यप्रकरणस्थानसमाख्यानां शेषशेषिभावादिप्रमाणानां च ग्रहण मिष्यते ॥

ननु, धर्मस्य ब्रह्मबोधहेतुत्वोक्ति रयुक्ता। मेयसिद्धि र्हि मानाधीना। नतु यज्ञाद्यनुष्ठानाधीना। ततश्च यज्ञाद्यनुष्ठानं विनाऽपि प्रमाणप्रवृत्तौ सत्यां ब्रह्मबोधः संपद्यते। तस्मा न्न तदर्थं धर्मविचारापेक्षे त्याशङ्क्याह साधनं विनेति ॥

धर्मस्य साधनत्वे 'त मेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति श्रुति रेव भगवती प्रमाणम् ॥

नच कर्मणो ब्रह्मबोधसाधनत्वे तदेव विचार्यं मनुष्ठेयं च, किमनेन वेदान्तवाक्यविचारप्रयासेनेति वाच्यम् । तस्य फलाभिसन्धिरहितस्य पापापनयनरूपचित्तशुद्धिसम्पादनद्वारा बोधहेतुत्वात् । तथा चाभियुक्तस्मृतिः 'यस्यैते चत्वारिंशत्संस्कारा' इत्यादिना 'स ब्रह्मणः सायुज्यं सालोक्यं च गच्छ' तीत्यन्तेन गर्भाधानादिसकलकर्मणां पापमलापकर्षसंस्कारहेतुतां प्रकाशयति ॥

प्रमाणत्वाभिमतस्याऽपि प्रमेयसिद्धौ साधनत्वं साधनत्वग्राहकप्रमाणाधीनम् । तद्यज्ञाद्यनुष्ठानं प्यविशिष्ट मिति तस्याऽपि ब्रह्मबोधे साधनता तद्विना ब्रह्मबोधो न निष्पद्यत इत्यर्थ.। तादृशं प्रमाणं कि मित्याकाङ्क्षाया माह धर्मस्येति ॥

यद्येवं तर्हि श्रुतिप्रामाण्यात्तपश्चर्यायेन यज्ञाद्यनुष्ठानेनेव परमेश्वरसन्निधानपूर्वकं तत्त्वदर्शनं, तत एव मोक्षश्च भविष्यती त्यलं वेदान्तविचारेणे त्याशङ्क्य निराकरोति न चेति ॥

यथा ऐहिकामुष्मिकवरदानार्थं शिवसन्निधानपूर्वके तद्दर्शने तपश्चर्यायाः कारणत्व मभिहितं तथा मोक्षप्रदानार्थं शिवसन्निधानपूर्वके तद्दर्शने यज्ञादिश्रुतेः कारणत्व मभिहित चे त्तथुज्येत । न त्वेवम् । किन्तु तया श्रुत्या पापापनयनरूपचित्तशुद्धिद्वारा वेदान्तविचारादिप्रामाण्य सम्पादनेन तद्बोधनहेतुत्वस्यै वोक्ततया न वेदान्तविचारनिरपेक्षे त्याशयः ॥ न नूदाहृतश्रुतौ द्वारविशेषो न प्रतीयते तदवगतिः कुत इत्याशङ्क्याह तथा चेति ॥

'यस्यैते' इत्यादिना गौतमस्मृतौ गर्भाधानादिषु कर्मसु संस्कारशब्दः प्रयुक्तः । तेनैतेषां कर्मणां व्रीहिप्रोक्षणादिव त्कार्यान्तरोपयुक्तकिञ्चिद्द्रव्यगतातिशयाधानार्थताऽवगम्यते । त त्किं मतिशयवद्द्रव्यसाध्यं कार्यम्? किञ्च तदतिशयवत् द्रव्यं? कश्च तत्राऽतिशय इत्याकाङ्क्षायां 'स ब्रह्मण स्सायुज्यं सालोक्यं च गच्छती' त्युपसंहारवाक्येन मोक्षः कार्य मिति परिज्ञायते । एवञ्च शिवसाक्षात्कारैकसाध्ये मोक्षे द्रव्यस्य साक्षा ज्जनकत्वाभावेन साक्षात्कारजनकं चित्त मेव साक्षात्कारद्वारा तदुपयोगि द्रव्यम् । तत्कार्यप्रतिबन्धनिवृत्तिरपेक्षिततया तद्गत पापापनयन मेव परिगणितकर्मजन्यो मलापकर्षरूपोऽतिशय इत्यवसीयते 'धर्मेण पाप मपनुदति', 'ज्ञानप्रसादेन विशुद्धचित्त स्ततस्तु तं पश्यते निष्कलं ध्यायमान' इत्यादिश्रुतिसंवादात् । तस्मा दुदाहृतश्रुतौ स्मृत्यनुसारेण द्वार मूह्य मित्याशयः ॥

अथ व्रीहिप्रोक्षणवत् सर्वकर्मणां संस्कारकत्वे सर्व एते पुण्यलोका भवन्तीति श्रुत्युक्ताश्रमफलस्वातन्त्र्यं न स्या दितिचे न्न। पुण्यलोकफलाभिसन्धिपूर्वककर्मणां स्वातन्त्र्येऽपि तदभिसन्धिरहितेन पुंसाऽनुष्ठितकर्मणां चित्तशुद्ध्यादिसंस्कारजनकत्वोपपत्तेः। तथा च तस्य पुंसो यदेव ज्ञानफलं तदेव कर्मफलं च। यथा व्रीहिप्रोक्षणं दर्शपूर्णमासोत्पत्त्यपूर्वहेतुतया स्वर्गे समुच्चीयते तथा कर्माणि ज्ञानप्रयोजकतया मोक्षे समुच्चीयन्ते। अतो गुणकर्मत्वा दङ्गत्व मेतेषाम्॥

ननु नित्यविधिप्राप्तस्य ज्योतिष्टोमादे रितिकर्तव्यतात्वविरोधा न्न संस्कारकतासिद्धि रितिचे न्न। कारणतया स्वतन्त्रविध्यन्तरविहितस्य सौत्रामणिबृहस्पतिसवादे रग्निचयनवाजपेयाद्यङ्गत्ववदुभयविधिबला दुभयासिद्धेः। अतो याव दुत्पद्यते ज्ञानं ताव दनुष्ठेयानि कर्माणि॥

ननु यज्ञादीनां प्रोक्षणादिव द्गुणकर्मत्वे अर्थकर्मत्वं न स्या त्तदा द्रव्योपसर्जनत्वं न सिद्ध्येत्। तदसिद्धौ स्वातन्त्र्येण पुण्यलोकप्राप्तिफलकत्वं श्रूयमाणं विरुद्ध्येते त्याशङ्क्य समाधत्ते अथ व्रीहिप्रोक्षणव दित्यादिना॥

ननु विद्याञ्चाऽविद्याञ्चेतिश्रुतेः कर्मणा मपि ज्ञानव त्साक्षान्मोक्षफलत्वे नाऽर्थकर्मत्वमेवाऽङ्गीकर्तुं युक्त मिति ज्ञानकर्मसमुच्चयवादिशङ्कां निराकरोति तथाचेति॥

ननु, गुणकर्मत्वेनाऽङ्गत्वे पुण्यलोकसाधनत्वेन प्राधान्यं न सम्भवति स्विष्टकृदादिष्वङ्गेषु गुणकर्मत्वार्थकर्मत्वयो रिवाऽङ्गत्वस्य फलसाधनत्वरूपप्रधानत्वस्य च क्वचिद प्येकस्मिन्कर्मणि समावेशादर्शना दित्याशङ्क्य समाधत्ते नन्वित्यादिना॥ कारणतयेति॥

यथा 'यजे त्सौत्रामण्या अपत्नीको प्यसोमपः। मातापितृभ्या मृणार्थी यजे'तेति वचनात्। 'ब्रह्मवर्चसकामो बृहस्पतिसवेन यजे' ते त्यादिभिः श्रुतिभिः स्वातन्त्र्येण फलकारणतया विहितस्यापि सौत्रामणिबृहस्पतिसवादेः 'अग्निं चित्वा सौत्रामण्या यजेत। वाजपेये नेष्ट्वा बृहस्पतिसवेन यजेत। ते नेष्ट्वा राजा राजसूयेन यजे'ते त्यादिवचनै रग्निचयनवाजपेयाङ्गत्वेनापि विधानं दृश्यत इत्यर्थः॥

एते य एता रात्री रुपयन्ती ' त्यर्थवादसिद्धफलान्वयस्थले प्रतिष्ठादीनां फलत्वावगतये सत्यर्थाध्याहार मभ्युपगम्य ' ये प्रतितिष्ठासन्ति त एता रात्री रुपेयु ' रिति यत्तदो र्व्यत्यासेन मनर्थाध्याहारेण पूर्वमीमांसके र्वाक्यार्थो दर्शितः । य स्त्वत्र राजपुरुष मानये त्यत्र वस्तुतः प्रधानस्याऽपि राज्ञः पुरुषशब्दोपसर्जनतया नानयनं, तथा प्रकृते वेदनस्य प्रधानत्वेपि प्रत्ययार्थस्य प्रधानतया यज्ञादिक मिच्छाया मेवाऽन्वेतीति न तन्न युक्तम् । यज्ञेन विविदिषन्ती त्येतत्समानाकारे 'अश्वेन जिगमिषति', 'असिना जिघांस ' तीत्यादिलौकिकवाक्ये सन्प्रत्ययवाच्येच्छाविषयगमनादे रेव फलत्वेनान्वयदर्शनात् । प्रकृते पीच्छाविषयत्वेनाऽवगताया विद्याया एव यज्ञादिफलत्व मुचित मित्याशयः । एतेन कर्मणा मिच्छासाधनत्ववादो निरस्तः ॥

तथा कर्मणां कर्मज्ञानसमुच्चयवाद्यभिमतः साक्षा दङ्गभावोपि न युक्तः । प्रकृतौ कल्मषोपकाराणां विकृतौ तदतिरिक्तोपकारकल्पन इव ज्ञाने विनियुक्तयज्ञादीनां कल्मषपापक्षयातिरिक्त कल्पने गौरवापत्तेः ॥

तथा च श्रुतिः ' सहवा आत्मयाजी, यो वेद इदं मेऽने नाङ्गं संस्क्रियत इदं मेऽने नाङ्ग मुपधीयत ' इति । अनेनेति प्रकृतं यज्ञादिकं परामृश्य तस्योपात्तदुरितनिबर्हणेन पुरुषसंस्कारकत्व मावेदयति । तथाऽऽथर्वणश्रुति रपि । ' विशुद्धसत्व स्ततस्तु तं पश्यति निष्कळं ध्यायमान ' इति । स्मृति श्च ' ज्ञान मुत्पद्यते पुंसां क्षया त्पापस्य कर्मण ' इत्यमुमे वाऽर्थं विशदयति ॥

यत्तु, अननुष्ठितकर्माऽपि प्राग्भवीयकर्मवशा द्यो विशुद्धसत्त्वः संसारासारतादर्शनेन निष्पन्नवैराग्यः कुतं तस्य कर्मानुष्ठानेन वैराग्योत्पादोपयोगिना, प्राग्भवीयकर्मानुष्ठाना देव तत्सिद्धे रिति त दसमञ्जसम् । प्राग्भवीयस्यापि कर्मानुष्ठानस्यैव चित्तशुद्धिसन्धायकत्वाभ्युपगमेन चित्तशुद्धिकर्मानुष्ठानयोः कार्यकारणभावाक्षतेः ॥

नहि प्राग्भवीयसुकृतवशा त्कस्यचि दयत्नोपलब्धो महार्थ इति तावता वाणिज्यादे रर्थसाधनत्व मनुपपन्नं भवति । तदभ्युपगमे पुराकृतसुकृतपरिपाकसुप्रसन्नपरमेश्वरप्रसादविशेषवशात् । ' प्रसन्ने सति कीटो वा पतङ्गो वा विमुच्यत ' इति पुराणवचनप्रामाण्येन, गर्भस्थवामदेवस्याऽपि ज्ञानोत्पत्तिश्रवणेन च ब्रह्मविचारस्याऽपि ज्ञानसाधनत्वभङ्गप्रसङ्गा च्च । एतेन जन्मान्तरीय कर्मवशा च्चित्तशुद्धिसम्भवेन कर्मानुष्ठानविद्ययोः कार्यकारणत्वविरहसमर्थनं विरुद्ध मिति सिद्धम् ॥

अत्रेदं तत्त्वम् , ' धर्मेण पाप मपनुद ' तीतिश्रुतिप्रामाण्येन ज्ञानोत्पत्तये फलाभिसन्धिरहितेन कर्मानुष्ठानेन पापं कर्माऽपनोद्य मिति विज्ञायते । तस्मा द्ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वम प्याश्रमकर्माऽपेक्षत इति निष्पद्यते । अमुमे वाशय मभिव्यनक्ति भगवान् सूत्रकारः

ननु कर्मब्रह्मविचारयोः क्रमनियमः कथ मुपपद्यते ? कर्त्रैक्या दितिचे न्न। कर्त्रैक्य मिहाधारदर्शपूर्णमासव दङ्गाङ्गित्वेन वा ? पञ्चप्रयाजव देकाङ्गिप्रयुक्ता नेकाङ्गत्वेन वा ? गोदोहनादिव दधिकारान्तरप्रयुक्तयुपजीवित्वेन वा ? षड्यागव त्फलैक्येन वा ? भवति। तथात्वे विचारयोः श्रुत्यादिप्रमाणं नोपलभ्यते।

'शरीरदृशा च यत्राद्विश्रुतं स्थव' दिति। अतो ज्ञानाधिकारकर्मक्रमप्रतिपादनार्थी धर्ममीमांसा ब्रह्ममीमांसायाः पूर्ववृत्तेति श्रुति सूत्रानुरोधा त्प्रतिपद्यते ॥

किं च श्रुत्यादिबलीयस्त्वा च न बाधः। लिङ्गसूत्रम् इत्यादिना श्रुत्यादीनां प्रकृतेऽर्थनिर्धारकत्वावगमेन तेषां च कर्ममीमांसाया मेव निर्णीतस्वरूपत्वेन तस्या ब्रह्म मीमांसोपकारकत्वा त्पूर्ववृत्तत्व मुचितम् ॥

ननु, नाय मुपपद्यते क्रमनियमः। तथाहि, एककर्तृकाणा मनेकेषा कर्मणा मेकेनैकेन कर्त्रा समनुष्ठातु मशक्याना मनुष्ठानार्थं क्रमापेक्षायां सत्यां श्रुत्यादिभिः क्रमविशेषो युज्येत नियन्तुम्। न ह्यत्र विचारयोः कर्त्रैक्य मस्ति। अङ्गाङ्गिभावादीना मेव तत्प्रयोजकतया तेषा मत्राऽविद्यमानत्वात्। किन्तु, यागस्वर्गयो रिव कर्मज्ञानयो र्धर्मादिश्रुतिसिद्ध चित्तशुद्धिद्वारं करणफलभावमात्रं विद्यते। तस्मा ज्जन्मान्तरीयैः कर्मभि श्शुद्धचित्तस्य विरक्तस्य मुमुक्षो र्विचारे प्रवृत्ति र्न कर्मविचारापेक्षा भवितु मर्हति। कल्पपूर्वं युक्तस्या प्याहननस्य तुषविमोक स्वपद्वारासिद्धिपर्यन्त मेवाऽनुष्ठेयतया यावत्फलोदय मनुष्ठेयत्वा निरहा दित्याशये नाक्षिपति नन्विति॥

ननु, येन चित्तशुद्ध्यर्थकर्मानुष्ठानार्थं धर्मविचारः कृतः, तेनैव पुरुषे णोपासनारूपज्ञान लाभार्थं ब्रह्मविचारस्याऽपि कर्तव्यत्वात्। फलकरणभावेऽपि कर्त्रैक्यं विद्यत इति शङ्कते कर्त्रैक्या दिति ॥

ज्ञानकर्मणोः कर्तृत्वाधिष्ठानपुरुषैक्यमात्रं न कर्तृकारकैक्यं, तत्प्रयोजकरूपाभावात्। प्रयोगाङ्गकर्त्रैक्यं हि प्रयोगैक्ये सति तदन्तर्गतपदार्थानां भवति। एकप्रयोगान्तर्गति श्च। अङ्ग प्रधानत्वेन वा? एकप्रधानसिद्ध्यर्थानेकाङ्गत्वेन वा ? अधिकृताधिकारेण वा ? एकफलसाधनत्वेन वाऽनुष्ठेयानां फले भवति। नचैषा मन्यतमरूप मिह श्रुत्यादिभिः प्रमाणै रुपलभ्यते। अतो न युक्तोऽयं क्रमनियम इति। परिहरति न कर्त्रैक्य मिति ॥

ननु, इहाऽपि तदन्यतमरूप मस्ति। यथा व्रीहिप्रोक्षण मित्यादिसाम्येण कर्मज्ञानयो रङ्गाङ्गितया मोक्षोपयोगित्वस्य प्रा गुक्तत्वात्। एवं च कर्मब्रह्मज्ञानसाधकयो स्तद्विचारयो रपि प्रधानतदङ्गाङ्गित्वरूप मेकाङ्गिप्रयुक्तानेकाङ्गत्वेनैव त्वंन नोपलक्षितं कर्त्रैक्यप्रयोजन मस्ती त्याशङ्क्याह तथात्व इति ॥

ततः कर्मब्रह्मविचारयोः क्रमनियममो न युक्त इति। यदि श्रुत्यादिप्रमाणं न संभवति तदा खलु तथा स्यात्। 'विद्यां चाऽविद्यां च य स्तद्वे दोभयं सह। तेनैति ब्रह्मवि त्पुण्यकृ च्च सत्येन लभ्य स्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्य' मित्यादिका ज्ञानकर्मसमुच्चयवादिनी श्रुति रुपलभ्यते। ततः कर्मज्ञानयो र्मोक्षैकफलत्वात् तद्विचारयो रपि क्रमनियमो युक्तः।

अत्राऽय माशयः। कर्मज्ञानयो रङ्गाङ्गित्वे प्रमितेऽपि तद्विचारयो रङ्गाङ्गित्वे न प्रमाण मुपलभामहे। अध्ययनविधे रर्थज्ञानफलकत्वपक्षे विचारयो रध्ययनाङ्गत्वे सम्मतेऽपि तस्याऽक्षरावाप्तिफलकत्वरूपमुख्यपक्षे तयोः स्वतन्त्रत्वेन चाङ्गाङ्गित्वविरहा दिति। आक्षेप मुपसंहरति तत इति। समाधत्त यदीति॥

ननु, विचारयोः क्रमाकाङ्क्षाजनककर्त्रैक्यसाध केऽङ्गाङ्गित्वादौ न प्रमाण मस्ती त्याक्षिप्य तत्समाधानार्थं प्रमाणास्तित्वं प्रतिज्ञाय ज्ञानकर्मणो स्समुच्चये प्रमाण मुपन्यस्तम्। कथ मिद मुपपन्नम्? किञ्च - व्रीहिप्रोक्षणदर्शपूर्णमासन्यायेन प्रागपि तयो स्समुच्चयो दर्शितः। स तु जन्मान्तरानुष्ठितचित्तशुद्ध्यर्थकर्माश्रयतयाऽपि सङ्गच्छत इति ज्ञानानुष्ठाना त्पूर्वं ब्रह्मविचार स्येव धर्मविचारस्य नियतकर्तव्यत्वाभावा त्तयोः क्रमनियमो न युज्यत इ त्याक्षिप्ते सति प्राङ्निरू पित एव कर्मज्ञानसमुच्चये पुन रपि प्रमाणोपन्यासेन किं लभ्यत इ त्याश ङ्क्याहततः कर्मज्ञा नयो रिति॥

अत्रेद मवधेयम्। विविदिषन्तीति वाक्येन चित्तशुद्धिविविदिषादिसम्पादकः श्रवण मननसम्पादनद्वारा ज्ञानानुष्ठाने प्रवर्तको जन्मान्तरानुष्ठितकर्मसाधारण स्तस्य क्रमसमुच्चयः प्रा ग्दर्शितः। इह तु ज्ञानानुष्ठानसमकाल मनुष्ठेयैः कर्मभि स्तस्य समुच्चये श्रुति रुपन्यस्यते। विद्या ञ्चेति मन्त्रे हि सहश्रुतिः कर्मज्ञानवेदनयो र्यौगपद्यं प्रतिपादयन्ती ज्ञानानुष्ठानकाले कर्मा नुष्ठानं बोधयति। 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृत मश्नुत' इ त्युत्तरार्धं तदुपयोगं च ब्रवीति। प्राचीनकर्मभि रुपासनानुष्ठानप्रतिबन्धकनिवृत्ता वपि तत्र प्रवृत्तस्य आप्रायणं प्रत्यह मनुवर्तनीयायां तस्यां प्रतिबन्धकतया स्थितं तत्काल एव प्रामादिकतया जातं वा सम्भावित दुरितजातं सर्व मप्युपासनासमकाल मनुष्ठितेन कर्मजातेन तीर्त्वा ततो निर्विघ्न मविच्छिन्न मनुवृत्तया विद्यया मुक्तिं प्राप्नोतीति तस्यार्थः॥

इदं विद्यानुष्ठानप्रवृत्तिप्रतिबन्धकतया समारब्धविद्यस्य विद्यानुष्ठानानुवृत्त्यादिप्रतिबन्धक दुरितनिवर्तकतया च विद्योपकारककर्मद्वैविध्यं 'विहितत्वा च्चाश्रमकर्मा' पीति तृतीयाध्यायाधि

# यद्य प्यक्षरग्रहणमात्रपर्यवसायित्व मध्ययनविधे स्तथापि विचारयो र्न प्रवृत्त्य

करणं भाष्य एव स्पष्टीकरिष्यते। एतेन आद्यप्रकारकर्मणां जन्मान्तरीयसाधारणत्वेऽपि द्वितीयप्रकारकर्मणां विद्यानुष्ठानसमकाल मनुष्ठेयत्वा त्तदर्थं धर्मब्रह्मविचारयोः कस्मिंश्चो विद्या नुष्ठानारम्भा त्प्रागपि श्रवणादिकाले प्यनुष्ठातुमशक्यानां कर्मणा मनुष्ठानसिद्धये धर्मविचारप्राथम्य मर्थादापत तीति विचारयोः क्रमनियमसिद्ध्युपयोगित्वा द्विद्यानुष्ठानकालानुष्ठेयकर्मसमुच्चये प्रमाणप्रदर्शनं कृताक्षेपसमाधानाय कल्पत एवेति ॥

ननु, विचारयोः कर्तव्यत्वे प्रमिते क्रमनियमचिन्तावकाशो लभ्येत। तदेवाऽप्रमितम्। न च, अध्ययनविधे रर्थज्ञानफलकत्वेन विचार मन्तरेणाऽर्थज्ञानासिद्ध्याऽसम्भवात् काण्डद्वयस्याऽपि विचार माक्षिपतीति वाच्यम्। तस्याऽक्षरावाप्तिफलकत्वेनाऽर्थज्ञानफलकत्वानुपपत्तेः। तथाहि, 'स्वाध्यायोऽध्येतव्य' इति तव्यप्रत्ययेन स्वाध्याय स्याध्ययनप्राप्यत्व मवगतम् ॥

नच, अक्षरावाप्ते रपुरुषार्थत्वेन अध्ययनेन स्वाध्याय स्याऽवाप्तिरूप संस्कारः, अवाप्तेन स्वाध्यायेनाऽर्थावबोध इति क्रमा दर्थज्ञान फलत्वेनाऽध्ययनविधि र्गृह्णातीति वाच्यम्। अर्थज्ञानस्या प्यपुरुषार्थत्वात्। नचाऽर्थज्ञानं गौणपुरुषार्थरूप मिति वाच्यम्। पशुपुत्रादिव त्पुरुषार्थोपयोगितया गौणपुरुषार्थत्व स्याक्षरावाप्ते रपि तुल्यत्वात्। आदृत्य चाऽर्थज्ञानं फल मभ्युपगच्छताऽपि क्वचित्क्वचि दक्षरावाप्ति रपि फलत्वेनाऽभ्युपगन्तव्या। अन्यथा हुंफडादीनां स्तोभाक्षराणा मनर्थकत्वेन तत्राध्ययनस्य निष्फलत्वापत्तेः। नच तान्यपि सिद्धवदर्थ मभिदधति मपि सम्भवस्थले त्वध्ययनफलत्वे नाऽभ्युपगन्तव्य मिति वाच्यम्। लोकव्युत्पत्तिसिद्धस्य शब्दाना मर्थपरत्व स्यौत्सर्गिकस्य क्वचित्क्वचि ल्लौकिकवाक्ये वक्तृदोषा दपवादे प्यपौरुषेये वेदे तदभावा दपवादस्य स्वत एव सत स्तस्याऽर्थज्ञानोद्देश्यकशब्दोच्चारणविधिनिरपेक्षतया तत्सिद्ध्यर्थं तव्यप्रत्ययोपात्तत्वेन श्रुत मक्षरावाप्तिफल मुल्लङ्घ्य तत्फलभूतस्याऽर्थज्ञानस्याऽपि वैधफलत्वकल्पनायोगात् ॥

ननु, अध्ययनविधे रर्थज्ञानफलकत्वाभावे तदुपयोगिनां व्याकरणादीना मङ्गत्वं न स्या दितिचे न्नैवम्। तेषांहि वेदाङ्गत्व मेव स्मृतं, न त्वध्ययनाङ्गत्वम्। तदीयं हि वेदाङ्गत्व मध्ययन स्यार्थज्ञानफलकत्वाभावेऽपि युज्यते। आधानसंस्कृत स्याऽग्नेः क्रतु ष्विव अध्ययनविधि रक्ष रावाप्तिफल एव, नाऽर्थज्ञानफलः। तस्मा दध्ययनविधिना तावद्विचारो नाक्षिप्यते ॥

नच, स्वाध्याय स्याऽर्थज्ञान मन्तरा क्रतुविधीनां दुरनुष्ठेयतया क्रतुविधिभि र्विचार आक्षिप्यतइति वाच्यम्। तत्तत्क्रत्वनुष्ठानकालापेक्षितस्य तत्तज्ज्ञानस्य कल्पसूत्रोपदेशप्रवचनादिभि रपि सम्भावनीयत्वेन तद्विचार स्यानपेक्षितत्वात्। एवंच वेदार्थविचारकर्तव्यताया मेव प्रमाण विरहेण धर्मब्रह्मविचारयोः क्रमनियमे सुतरां प्रमाणानुपलम्भ इत्याशङ्क्याह यद्यपीति ॥

**संभवः। साङ्गाध्ययने नाऽऽपाततः पदार्थमात्रप्रतीतेः। तदनु ब्रह्मस्थूलोपासनज्योतिष्टोमादिविधायकानां वाक्यानां सूक्ष्मोपासनभूतदहरादिविद्याविधाय**

स्थूलोपासनानि बाह्यत्वा न्मुक्तौ ज्ञानद्वारकत्वा च्च बहिरङ्गसाधनानि। सूक्ष्मोपासनानि तु आन्तरत्वा त्क्रमेण व्यवहितसाधनत्वाभावा दन्तरङ्गसाधनानि ॥

परस्परेति—' अक्षय्यं ह वै चातुर्मास्ययाजिन. सुकृतं भवति। तद्यथेह कर्मचितो लोकः क्षीयते। पुत्रं ब्रह्माण मिच्छध्वम्। स वै लोको वदावदः। किं प्रजया करिष्यामो येषां नोऽय मात्मा ' इत्यादीनां कर्मब्रह्मकाण्डगतवाक्यानां वास्तविकविरोधरहितानां म प्यापाततो विरोधस्य प्रतीयमानत्वा त्तस्याऽऽभासत्वम् ॥

इद मेकैकस्मि न्नपि काण्डे उदितानुदितहोमादिविधायकवाक्याना मेकैकस्मि न्वाक्येऽपि पूर्वपक्षसिद्धान्तसाधकयुक्तिसङ्कलिताना मर्थानां च दृश्यमानविरोधाभास स्योऽपलक्षणम् ॥

ननु, एतादृशविरोधाभासनिरासैकप्रयोजने विचारे निर्वृत्तेऽपि न कोऽपि पुरुषार्थः सेत्स्यति। न च, क्रतुविद्यानुष्ठानरूपपुरुषार्थसिद्धि रस्तीति वाच्यम्। सकलवेदार्थनिर्णायकन्यायविद्भि र्महर्षिभिः प्रणीतेषु कल्पसूत्रेषु वासिष्ठादिषु च कल्पेषु प्रतीयमानविरोधानां परिहृतत्वेन तद्विश्वासेनैव क्रतुषु विद्यासु च प्रवृत्तिसम्भवा दिति चे न्न। अध्ययनसंस्कृत स्स्वाध्यायः ' भूतभाव्युपयोगं हि द्रव्यं संस्कार मर्हति ' ति न्यायेन, आधानसंस्कृतोऽग्नि रिव भूतोपयोग विरहात्। क्वचि द्भाव्युपयोग मपेक्षमाणः फलान्तरोपयोगिनि भृतकाध्यापनादिव त्प्रतिषेध रहिते यत्रयत्र कार्ये समर्थत्वे नाऽवधार्यते तत्र सर्वत्राऽपि वस्तुसामर्थ्यलक्षणेन लिङ्गेन विनियुज्यते। तस्मा त्कर्मज्ञानानुष्ठानद्वाराऽभ्युदयनिःश्रेयसोपयोगि न्यर्थज्ञाने सम्भवद्वेदार्थसंग्राहकपौरुषेयग्रन्थाद्युपायान्तरे प्यस्य लिङ्गेन विनियुज्यमानत्वात् ॥

अपि च - पदतदर्थावधारणादिद्वाराऽर्थज्ञानैकोपायानां वेदाध्ययनकालेऽध्येतव्यानां व्याकरणादीनां वेदाङ्गत्वान्यथानुपपत्त्या प्यधीतस्वाध्यायस्याऽर्थज्ञाने विनियोगस्य सिद्धत्वा च्च ॥

अकिञ्चित्कर स्याऽङ्गत्वायोगेन नित्यवेदस्वरूपेऽनुपकारकाणा मङ्गानां फलोपकारकत्व स्यैवोचितत्वा च्च। एवं च अङ्गाध्ययनं स्वाध्याया दापाततो ज्ञानस्य तन्निर्णय एव पुरुषार्थावगते श्चोत्पादनेन तन्निर्णिनीषा मुत्पादयति। न्यायविचार मन्तरेण वेदा त्तदर्थनिर्णयासम्भवा त्तन्निर्णयार्थं विचिचारयिषा मुत्पाद्य विचारे प्रवर्तयती त्यध्ययनविधे रक्षरग्रहणपर्यन्तत्वेऽपि नियमेन विचारे प्रवृत्ति स्सिध्यति ॥

कानां च परस्परविरोधाभासं पश्यं स्तद्विचारे पुरुषार्थाकांक्षी पुमानः स्वयमेव प्रवर्तते। ततो नाऽनिबन्धनो विचारः ॥

ननु, 'श्रोतव्य' इतिवाक्येन वेदान्तश्रवणं साक्षाद्विधीयत इतिचेन्न। विधित्वप्रयोजकरूपसम्पत्त्यभावात्। तथाहि, वेदान्तश्रवणं नाऽपूर्वविधि

नच, अध्ययनविधे रक्षरग्रहणमात्रपर्यन्तत्वाभ्युपगमेन अङ्गाना मध्ययनाङ्गत्वाऽनभ्युपगमेन चाऽर्थज्ञानं न सिध्य तीति वाच्यम्। तथापि तेषा मध्ययन स्याङ्गत्वेऽपि ज्ञानोपयोगित्वे नव वेदाङ्गत्वस्याऽनपायया त्तदेत न्मनसि निधाय विचारं प्रवर्तकाभावशङ्कापरिहारं पूर्णहिर्गत। नत इति ॥

एवं विचारं प्रवर्तक मुपपाद्य श्रवणविधि स्तत्र प्रवर्तक इति वेदान्ति न्याय निराकर्तु माशङ्कते नन्विति—वेदान्तश्रवण मिति ॥

श्रवणविधिवाक्ये यद्यपि वेदान्तग्रहणं नास्ति, तथा प्यात्मा श्रोतव्य इति निर्भागमानं ब्रह्मणि तात्पर्यावधारणरूपं श्रवणं ब्रह्मणो वेदान्तैकप्रमाणकतया तत्तात्पर्यावधारणरूपं पर्यवस्य तीति द्रष्टव्यम ॥

श्रवणे विधे रेवाऽसम्भवेन तस्य प्रवर्तकत्व मसिद्ध मि त्याशयेन तत्र विध्यसम्भवे हेतु मुदाहरति नेति—विधित्वेति ॥

विधित्वे प्रयोजकानि रूपाणि त्रैकालिकाप्राप्तिपाक्षिकाप्राप्तिसमुच्चितप्राप्तयः। यथा— व्रीही न्प्रोक्षती त्यत्र दार्शपूर्णमासिकेषु व्रीहिषु प्रोक्षणं विहितम। एतद्विध्यभावे कालत्रये प्यस्याऽन्यतः प्राप्त्यभावा त्तत्प्राप्तिफलकोऽयमपूर्वविधिः। व्रीही नवहन्ती त्यत्र पुरोडाशप्रकृति भूताना मेव व्रीहीणां पुरोडाशनिर्वर्तनार्थ मपेक्षितं तण्डुलीभावे एतद्विध्यभावेऽपि लोकावगत साधनत्वेन यद्य प्यवहनन स्याक्षेपतः प्राप्ति सम्भवति, तथापि तत्र लोकावगतसाधनत्वाविशेषा न्नखविदलन मपि प्राप्नुया दित्यवहननस्य पाक्षिकी प्राप्तिः। अतोऽवहननं तदप्राप्तांशपरिपूरण फलो नियमविधिः। 'इमा मगृभ्ण न्रशनामृतस्ये त्यश्वाभिधानी मादत्त' इत्यभिचयनप्रकर णाम्नातस्य मन्त्रस्य तत्र कर्तव्येऽश्वरशनाग्रहणे रशनाग्रहणप्रकाशनसामर्थ्यरूपा ल्लिङ्गा त्प्राप्तिः। यद्यपि 'अश्वाभिधानी मादत्त' इति विध्यभावेऽपि सम्भवत्येव, तथापि लिङ्गाविशेषा त्तत्रत्ये गर्दभरशनाग्रहणेऽपि प्राप्तिः स्या दिति तन्निवृत्त्यर्थः परिसङ्ख्याविधिः। एव मपूर्वविधित्वादि प्रयोजकरूपाणां मध्येऽन्यतम स्याऽत्र सम्पत्त्यभावा दित्यर्थः ॥

गोचरम्, प्राप्तत्वात्। प्राप्ति श्च वेदान्तश्रवणं स्वविषयोपात्तावगतिसाधनम् शास्त्रश्रवणत्वा द्वैधशास्त्रश्रवणव दित्यादिभिः। नचाऽस्य नियमविधिगोच रत्वम्। अवघातादिव त्कस्यचि द्दृष्टफल स्योपायान्तर स्याऽप्राप्तेः। नच परिसङ्ख्याविधिविषयत्वम्। एवं हि वेदान्ताः श्रोतव्या एव, नाऽध्येतव्या इति पर्यवस्येत्। तथा स त्यनधीतवेदान्तानां विचारायोगात् पुरुषार्थाऽसंभवः। यदि वेदान्तश्रवणस्य परिसङ्ख्यापरत्वं कर्मकाण्डश्रवणनिषेधपरत्वरूप मिति विचार स्तदा विचाराऽभावात् कर्मानुष्ठानाऽसम्भवः। तदभावे चित्तशुद्ध्य भावात् ज्ञानानुत्पत्तिः स्यात्। तस्मात् पूर्वोक्त मेव समीचीनम्॥

तत स्सकलचिदचित्प्रपञ्चाकारपरशक्तिविशिष्टाद्वितीयवैभवस्य सकल निगमसारसामरस्यनिधानस्य भव शिव शर्व पशुपति परमेश्वर महादेव रुद्र शम्भु प्रभृतिपर्यायवाचकशब्दसारप्रकाशितपरममाहिमविलासस्य स्वशेष भूतानिखिलचेतनसमुपासनानुगुणसमुदितनिजप्रसादसमर्पितपुरुषार्थसार्थस्य पर ब्रह्मणः प्रतिपादक मुपनिषच्छास्त्रं विचारणीयम्। तन्नियोगरूपचोदनालक्षणस्य तदाराधनविशेषसाधनरूपस्य तत्तदर्थवादप्रकाशितप्राशस्त्यविलासस्य श्रुत्यादि सम्पादितसकलाङ्गपुङ्खितस्य स्वप्रमाणानुगुणस्मृतीतिहासपुराणाभियुक्तसूक्ति संदर्भकृतोपबृंहणस्य विधिनिषेधविकल्पसमुच्चयोत्सर्गापवादबाधाभ्युच्चयादिमतो निखिलपुरुषार्थरत्नाकरस्य परमप्रबोधसाधनस्य भगवतो धर्मस्य विचारान्तर मित्यथशब्दार्थो दर्शितः॥

---

तत्त्वं निरूपयति तथाहीत्यादिना—एवं श्रवणविधौ निराकृते सति तद्विचारे पुरुषार्थाकाङ्क्षी पुरुषः स्वय मेव प्रवर्तेत इति पूर्वोक्तसरणि रे वाऽङ्गीकर्तव्ये त्याह तस्मा दिति॥

इयता प्रबन्धे नोपपादित मथशब्दस्य धर्मविचारानन्तर्यार्थत्व मुपसंहरन् ब्रह्मजिज्ञासेति सूत्रशेषलब्ध स्वार्थ स्योपात्तधर्मविचारानन्तरं कर्तव्यतयाऽन्वयं दर्शयति तत इत्यारभ्य अथ शब्दस्याऽर्थो दर्शित इत्यन्तेन॥

ब्रह्मजिज्ञासेत्यस्य ब्रह्मप्रतिपादकोपनिषद्वाक्यस्य विचार इत्यर्थः । तत्र विचारं प्रति विषयसमर्पकेण सौत्रेण ब्रह्मपदेन शिवोऽभिधीयत इति निरूपयितुं सकलेत्यादिविशेषणद्वयेन विशिनष्टि ॥

बृहत धातो र्मन्प्रत्यये निष्पन्नस्य ब्रह्मशब्दस्य धात्वर्थानुगमात्, प्रकरणोपपदादि सङ्कोचकाभावाच्च त्रिविधपरिच्छेदरहित य स्तदर्थ इत्येतव्यम् । देशकालपरिच्छेदराहित्यस्याऽपि शिवस्य तत्र सम्भवति । तस्य चेतनाचेतनात्मकप्रपञ्चविलक्षणत्वाभ्युपगमेन वस्तुपरिच्छेद सद्भावा दि त्याशङ्कां परिहर्तु माह सकलेत्यादिना ॥

सकलप्रपञ्चाकारया तद्रूपपरिणामिन्या परमशक्त्या जडशक्तिरूपया मायया नियाम कत्वेन तत उत्कृष्टया चिच्छक्त्या विशिष्टस्य अत एवाऽद्वितीयवैभवस्य विजातीयाश्रयरहित बृहत्त्व मस्येत्यर्थः ॥

वृक्षे पत्रपुष्पाद्यान्तर्गणिकभेदे सत्य प्येक एवाऽत्र वृक्ष इत्यत्र तत्समानजातीयवृक्षान्तरा भाववच्चेतनाचेतनप्रपञ्चविशिष्टस्य शिवस्य तद्विशेषणयो श्चेतनाचेतनयो स्तस्य ताभ्यां चान्तर्गणिकभेदे विद्यमानेऽपि तत्समानजातीयवस्त्वन्तराभावोऽस्तीति त देव वस्तुपरिच्छेदराहित्यम् । नतु सर्वथा वस्त्वन्तरराहित्य मित्याशयः ॥

ननु, शक्तिविशिष्टाद्वितीयवैभवस्यै त्यनुपपन्नम् । वेदान्तेषु निर्विशेष स्यैव ब्रह्मणः परमार्थत्वेन श्रूयमाणत्वात् ॥

तथाहि, 'स देव सौम्येद मग्र आसीत्', 'एकमेवाऽद्वितीयम्' 'अथ परा यया तदक्षर मधिगम्यते । यत्त दद्रेश्य मग्राह्य मगोत्र मवर्ण मचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं त दव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः', 'सत्यं ज्ञान मनन्तं ब्रह्म', 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं प्रत्यस्तमितभेदं य त्सत्तामात्र मगोचरम् । वचसा मात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् । यत्र नान्यत्पश्यति नान्य च्छृणोति नान्य द्विजानाति स भूमा', 'नेह नानास्ति किञ्चन', 'मृत्योः स मृत्यु माप्नोति य इह नानेव पश्यति', 'यत्रहि द्वैत मिव भवति तदितर इतरं पश्यति', 'यत्र त्वस्य सर्व मात्मैवाभूत् तत्केन कं पश्ये त्केन कं विजानीयात्', 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्', 'यदा ह्येवैष एतस्मि न्नुदर मन्तरं कुरुते । अथ तस्य भयं भवति', 'तत्त्वमसि' । इत्याद्यनन्तश्रुतिभि र्निरस्त समस्तविशेष मेव ब्रह्म प्रतिपाद्यते ॥

नच, चेतनाचेतनात्मकस्य जगतः सत्यतया प्रत्यक्षादिप्रमाणविषयत्वेन ब्रह्मणः सप्रपञ्चत्वं सिद्ध्य तीति वाच्यम् । 'अनृतेन हि प्रत्यूढाः', 'मायामात्रं तु कार्त्स्न्येनाऽनभिव्यक्त

स्वरूपत्वात्', इत्यादिभि स्तत्वोपदेशपरैः श्रुतिसूत्रै र्निर्विशेषचिन्मात्रं ब्रह्मैव सत्यम्। तदन्य ज्ञातृज्ञेयज्ञानभेदादिसर्वं तस्मि न्नेव रज्जौ सर्प इव परिकल्पितं मिथ्याभूत मिति प्रतीयमानत्वात्॥

ननु, रज्जौ सर्पकल्पनकारणभूतस्याऽज्ञानरूपदोषस्य विद्यमानत्वेन तत्र तत्कल्पन सम्भवेऽपि ब्रह्मणि तादृशदोषस्याऽसम्भावितत्वे नाऽत्र तत्कल्पन मसिद्ध मिति वाच्यम्॥

ब्रह्मण्यपि स्वरूपतिरोधानविविधविचित्रविक्षेपकारिण्या स्सदसदनिर्वचनीयाया अनाद्य विद्याया अभ्युपगतत्वेन तादृशदोषमूलस्य जगत्कल्पनस्य कारणत्वेन सिद्धत्वात्॥

नच, ब्रह्म ण्यविद्यारूपदोषाभ्युपगमोऽप्रमित इति वाच्यम्। 'अनृतेन हि प्रत्यूढाः', 'मायामात्रं तु कात्स्न्येनाऽनभिव्यक्तस्वरूपत्वा' दित्यादिश्रुतिसूत्रै र्दोषसद्भावस्य प्रमितत्वात्॥

ननु, 'य स्सर्वज्ञ स्सर्ववित्। सत्यकाम स्सत्यसङ्कल्प' इत्यादिभिः श्रुतिभि स्सगुणत्वाव गमेन तस्य निर्विशेषत्व मप्रमित मितिचे न्न। 'अस्थूल मन ण्वह्रस्वम्। केवलो निर्गुण श्च' इत्यादिश्रुतिशतै स्तस्य निर्गुणत्वनिर्धारणेन सगुणत्वबोधकवचनाना मुपासनार्थकल्पितगुणपर त्वावसायात्। 'सदेव सौम्येद मग्र आसीत्। एकमेवाऽद्वितीयं ब्रह्म' इत्यादि वचनानां सजातीयविजातीयस्वगतभेदरहितसन्मात्रब्रह्मैकत्वप्रतिपादनपरत्वेन गुणतोपि सद्वितीयत्वस्य श्रुति विरुद्धत्वा दितिचे न्न॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादा नत्व, जगन्निमित्तत्व, सर्वज्ञत्व, सर्वशक्तिमत्व, सत्यसङ्कल्पत्व, सर्वान्तरत्व, सर्वाधारत्व, सर्व नियामकत्व, सर्वजगदात्मकत्वाद्यनन्तमाङ्गल्यगुणप्रतिपादनपूर्वक मेवंभूतब्रह्मात्मक स्त्व मसीति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वा त्सद्विद्याया निर्विशेषत्वप्रतिपादकत्वा भावात्॥

तथाहि, उपक्रमे तावत् 'उत त मादेश मप्राक्ष्य' मित्यत्रादेऽऽदेशशब्देन प्रशासितृ ब्रह्माऽभिधीयते। एव मुपक्रमे निरुपाधिकप्रशासनगुणयोग उक्तः। तथा 'येनाऽश्रुतं श्रुतं भव' तीत्यनेन जगदुपादानत्वं निमित्तत्वं तदनुगुणसर्वज्ञत्वसर्वशक्तिमत्त्वादिकं चाऽवगतम्॥

उपसंहारे च, तत्त्व मसीति सामानाधिकरण्येन जीवान्तर्यामित्वं विज्ञायते। अस्यै वाऽर्थ स्याऽऽवर्तितत्वा दभ्यासः सम्पद्यते। एवं ब्रह्मणो जगत्कारणत्वजगदन्तरात्मत्वादि गुणानां प्रमाणान्तराऽप्रतिपन्नत्वा दपूर्वता सिद्धा। एव मुपासकस्य, 'तस्य ताव देव चिरम्। याव न्न विमोक्ष्ये। अथ सम्पत्स्य' इति मोक्षश्रवणा त्फल मपि सिद्धम्। पितुः पुत्रं प्रति प्रतिवचनरूपत्वा दर्थवादः समुचितः। मृत्पिण्डादिदृष्टान्तोपपादना दुपपत्ति श्च। तस्मा दियं

सद्विद्या षड्विधतात्पर्यलिङ्गैः सविशेषपरमेश्वरपरं वेति विज्ञायते। अत्र दृष्टान्तत्रयेऽपि विवर्तपक्षानुगुणः कोऽपि न दृश्यते दृष्टान्तः। अपि तु परिणामपक्षानुगुण एव दृश्यते॥

दार्ष्टान्तिकविषयवाक्येऽपि 'तत्तेजोऽसृज' तेत्येवोक्त, नतु तद्भ्रम इति। अतोऽस्यां श्रुतौ विवर्तपक्षप्रसङ्ग एव नास्ति। श्रुत्यन्तरेषु च 'तदात्मानस्स्वयमकुरु' तेत्यादिकं श्रूयते, नतु व्यवर्त तेति। सूत्रं च 'परिणामा' दिति, नतु विवर्ता दिति। अतः श्रुतिसूत्रस्वारस्यात्परिणाम एवाऽभ्युपगम्यते। स च परिणाम स्सद्वारक एव भवितु मर्हति। निर्विकारत्वनिर्देशात्वानुप्रवेशशरीरशरीरिभावादिविषयानेकश्रुतिस्वारस्या, दन्यथा तद्विरोधप्रसङ्गा च॥

नच, 'अथ परा यया तदक्षर मधिगम्यते', 'य त दद्रेश्य मग्राह्य मगोत्र मवर्ण मचक्षु श्श्रोत्र' मित्यादिना सकलविशेषनिषेधश्रवणेन ब्रह्मणो निर्विशेषत्वं सिद्ध्यतीति वाच्यम्॥

तत्र अद्रेश्य मित्यादिना प्राकृतान् हेयगुणा न्प्रतिषिद्ध्य 'नित्यं विभुं सर्वगतं सुसूक्ष्म' मित्यादिना नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वभूतयोनित्वसर्वज्ञत्वादिमाङ्गल्यगुणयोगस्य श्रूयमाणत्वात्। सत्यं ज्ञान मित्यादिना सत्यज्ञानादिगुणविशेषस्ये वाऽवगतत्वा च॥

ननु, 'एक मेवाऽद्वितीय' मित्यत्राऽद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते। अतः सर्वशाखाप्रत्ययन्यायेन कारणवाक्याना मद्वितीयवस्तुप्रतिपादनपरत्व मङ्गीकरणीयम्। कारणतयोपलक्षितस्याऽद्वितीयब्रह्मणो लक्षण मिद मुच्यते 'सत्यं ज्ञान मनन्तं ब्रह्म' इति। अतो विवक्षितं ब्रह्म निर्गुण मेव। अन्यथा निर्गुणं, निरञ्जन मित्यादिश्रुतिविरोधो दुष्परिहर इतिचेन्न॥

जगदुपादानस्य ब्रह्मण स्स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वा दद्वितीयपदस्य। तथैव विचित्रशक्तियोग मेवाऽवगमयति 'त दैक्षत बहु स्यां प्रजायेयेति', 'त त्तेजोऽसृज' तेत्यादि। एवं श्रुतिजातस्य सविशेषब्रह्मप्रतिपादनपरत्वाऽवगमात्॥

नचाऽद्वितीयपदस्य निमित्तान्तरनिषेधपरत्व मननुगत मिति वाच्यम्। सिसृक्षो ब्रह्मणः 'सदेव सोम्येद मग्र आसी देकमे' वे त्यनेन उपादानकारणत्वं प्रतिपाद्य कार्योत्पत्त्यावश्यकतया बुद्धिस्थनिमित्तान्तरवारणस्याऽद्वितीयपदेन करणीयतयाऽनुगतत्वात्। अन्यथा सर्वनिषेधे स्वाभ्युपगतनित्यत्वादीनां च निषेधापत्तेः॥

सर्वास्वपि शाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणाना मुपसंहरणीयत्वेन सर्वशाखाप्रत्ययन्यायस्य निर्विशेषपक्षे विरुद्धत्वा च॥

अतश्च कारणवाक्यस्वभावेनाऽपि 'सत्यं ज्ञान मनन्त' मित्यनेन सविशेष मेव ब्रह्म प्रतिपाद्यत इति विज्ञायते॥

ननु, सविशेषत्वाभ्युपगमे 'निर्गुणं, निरञ्जनं, निष्कळं, निष्क्रियं, शान्त' मित्यादि निर्गुणवाक्यानि व्याकुप्येयु रितिचे न्न। तेषां वाक्यानां प्राकृतहेयगुणविषयत्वात्॥

नच, ज्ञानस्य ज्ञानादिगुणाश्रयत्वादर्शनेन ब्रह्मणो ज्ञानमात्रत्वाऽऽज्ञानेन च निर्गुणत्वं फलित मिति वाच्यम्। ज्ञातु रेव ज्ञानस्वरूपत्वाऽविरोधात्। प्रकाशस्वरूपाणा मेव मणि, द्युमणि, दीपादीनां प्रकाशाश्रयत्वव, जलरूपस्यै वाऽर्णवस्य जलनिधित्वव्यपदेशव च्च ज्ञानस्वरूप स्यैव तस्य ज्ञानाश्रयत्वस्य रामुचितत्वा च्च॥

नच, सगुणवाक्यानां निर्गुणवाक्यानां च विरोधेन सगुणवाक्यानां मिथ्याविषयताश्रयण मुचित मिति वाच्यम्। अपहतपाप्मेत्याद्यपिपासइत्यन्तेन हेयगुणा न्प्रतिषिध्य 'सत्यकाम स्सत्यसङ्कल्प' इति ब्रह्मणः कल्याणगुणान् विदधत्या श्रुत्यैव निर्गुणवाक्यानां सगुणवाक्यानां च विषयस्य विविक्तत्वात्॥

ननु, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति वाङ्मनसनिवृत्त्यभिधाना द्ब्रह्मणो निर्गुणत्वस्य सिद्धत्वेन श्रुत्यन्तराणा मपि निर्विशेषपरत्व मुपपद्यत इतिचे न्न॥

'भीषास्मा द्वातः पवत' इत्यादिना प्रशासकत्वादिब्रह्मगुणा नारभ्य 'ते ये शत' मि त्यनेन क्षेत्रज्ञा दानन्दातिशय मुक्त्वा 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वा' निति ब्रह्मणः शुभगुणाऽऽनन्त्यस्यै वाऽत्यादरेण श्रुत्या निगदितत्वात्॥

अत्र निर्विशेषत्वं प्रतिपिपादयिषितं चे द्गुणानां क्रमेण न्यूनतां प्रतिपाद्य सर्वाभावे पर्यवसानस्य दर्शनीयतया तद्व्यतिरेकेण प्रकृते क्रमेण गुणाना माधिक्य मुक्त्वा वाङ्मनस निवृत्त्यभिधानेन माङ्गल्यगुणाना मानन्त्या देवेति स्फुटतर मवगम्यमानत्वात्॥

ननु, 'यस्याऽऽमतं तस्य मतम्। अविज्ञातं विजानता' मित्यादिना ब्रह्मणो ज्ञाना विषयत्व स्योक्ततया निर्विशेषत्व मवगम्यत इतिचे न्न॥

'ब्रह्मवि दाप्नोति परं', 'ब्रह्मवेद ब्रह्मैव भव' तीति ब्रह्मज्ञाना न्मोक्षोपदेशस्य श्रूय माणत्वेन ब्रह्मण उपासनारूपज्ञानविषयत्वसम्प्रतिपत्त्या तस्य गुणत्वावश्यम्भावात्॥

नच, 'न दृष्टे र्द्रष्टारं न मते र्मन्तार' मिति श्रुत्या ब्रह्मणो ज्ञातृत्वस्य निषिद्धतया तस्य सविशेषत्वं निराकृत मिति वाच्यम्। तया श्रुत्या द्रष्टारं, मन्तार म प्यात्मानं दृष्टिमति रूप मेव पश्ये दितिवा, दृष्टे र्द्रष्टारं, मते र्मन्तारं जीवात्मानं प्रतिषिध्य सर्वभूतान्तरात्मानं पर मात्मान मे वोपास्वेति वाऽभिहितत्वेन तस्य ज्ञातृत्वनिषेधकत्वाऽसम्प्रतिपत्तेः। अन्यथा 'विज्ञातार

मरे केन विजानीया' दित्यादिज्ञातृत्वप्रतिपादका श्रुतयो विरुध्येरन् ॥

ननु, 'यत्रहि द्वैत मिव भवति', 'नेह नानास्ति किञ्चन' 'मृत्योः स मृत्यु माप्नोति य इह नानेव पश्यति', 'यत्र त्वस्य सर्व मात्मैवाऽभू त्त त्केन कं पश्ये' दिति भेदनिषेधस्य बहुधा श्रूयमाणत्वेन निर्विशेषत्व मेव ब्रह्मणः श्रुतिसम्मत मिति चे न्न ॥

कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया तदात्मकत्वेन चैक्यात् तद्विरुद्ध मेव नानात्वं प्रतिषिद्ध्यत इ त्यवगम्यमानत्वात् ॥

नच, एकधैवानुद्रष्टव्य' मित्यनेन भेदो निषिध्यत इति वाच्यम् । एकधा एकतया पर मेश्वरशरीरत्वेन एकप्रकारेण त्यर्थात् । तथा 'अह मेकः प्रथम मासम । वर्तामि च भविष्यामि च । नान्यः कश्चि न्मत्तो व्यतिरिक्त'इति, 'आत्मा वा इद मेक एवाग्र आसीत । नान्य त्किचन मिषत्' इत्यादिषु च ऐक्यविधिशेषतया भेदनिषेधो दृश्यते । शेषत्वं च विहितैकत्व स्थिरीकरणलक्षणम् । तस्मा त्परमेश्वरे यादृश मैक्यं विहितं निषेधस्य तादृशैक्यविरोधिभेदविष यत्व एव तत्स्थिरीकरणार्थत्वेन तच्छेषत्वं सिद्ध्येत् । नत्वविरोध्यर्थान्तरनिषेधे सार्थक्य मश्नुते । नहि मृदेव घट इत्युक्ते घटद्वित्वनिषेधो मृद्धटैकत्वोपकारको भवेत् । ना प्येकं ो घट इत्युक्ते घटगतरूपपरिणामादिभेदनिषेधो घटाख्यधर्म्यैक्यविधे र्भव त्युपकारकः । रूपपरिणामादिभेदस्य घटव्यक्त्यैक्याऽविरोधित्वात् । किंतु विधेयविरोध्यर्थनिषेध एवहि भवे द्विध्युपकारकः ॥

किं च, न केवल मुपकाराभावः । परं त्वैक्यविधिविरुद्धं च कृत्स्नभेदनिषेधपरत्वम् । समानाधिकरणवाक्ये नैक्यविधानात् । भिन्नविशेषणाभिप्रायिशब्दाना मेकविशेष्यवृत्तित्वं हि सामानाधिकरण्यम् । नच प्रकारभेदे तिष्ठति कृत्स्नभेदनिषेध उपपद्यते ॥

इदं च 'नचाऽस्य कश्चि ज्जनिता न चाधिपः । न तत्सम श्चाप्यधिक श्च दृश्यते', 'एकः सन् बहुधा विचारः', 'एको देवो बहुधा निविष्टः', 'त्व मेकोपि बहू ननुप्रविष्टः', इति प्रकारनानात्वस्य प्रकार्यैकत्वस्य स्पष्टं श्रूयमाणतया सविशेष मेव परम्ब्रह्मेति सिद्धम् ॥

ननु, नानात्वनिषेधा इद्धुम्भनसङ्कल्पश्रुति रपरमार्थविष येति चे न्न । सकलप्रमाणावगतं नानात्वं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इति वादस्य हासावहत्वात् । तस्मा च्छक्तिविशिष्टा द्वितीयवैभवस्येति सूपपन्नम् ॥

ननु, ब्रह्मणः प्रतिपादक मुपनिषच्छास्त्रं विचारणीय मिति प्रतिज्ञायां यस्योपनिषच्छास्त्रं प्रतिपादकं स एव ब्रह्मशब्दार्थतया स्वीकरणीयः । न शिवस्य त त्प्रतिपादकम् ॥

तथा हि, 'सर्वे वेदा यत्पद मामनन्ति तपांसि सर्वाणि च य द्वदन्ति । य दिच्छन्तो ब्रह्मचर्यं चरन्ति त त्ते पदं संग्रहेण ब्रवी ' मीत्युपक्रम्य, 'सोऽध्वनः पार माप्नोति त द्विष्णोः परमं पद ' मिति कठवल्लीश्रुत्या, 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्या ' मिति मुण्डकश्रुत्या च विष्णुपुरुषादिशब्दाभिधेयस्य नारायणस्यैव तत्प्रतिपादक मिति शङ्कां निवारयितुं सकलनिगमेतिविशेषणम् । विष्णोः परमं पद मित्यत्र पदशब्दो न स्थानवाचकः । पूर्वं 'अव्यक्ता त्पुरुषः पर ' इति निर्दिष्टस्य पुरुषस्यैव स्थानप्रमाणतः पदशब्दवाच्यत्व बोधात् । तथा च, पद्यते प्राप्यत इति व्युत्पत्त्या तत्रत्यपदशब्दस्य प्राप्यपुरुषपरत्वेन न विष्णु वाचकत्वं सिध्यति । विष्णोः परमं पदं प्राप्य मिति तत्प्राप्यत्वाऽऽम्नानात् ॥

किन्तु, 'एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले । भोगे भवानी पुरुषे तु विष्णुः क्रोधे च काली समरे तु दुर्गा ' इति स्मृतेः शक्त्यवस्थाविशेषरूपस्य विष्णोः पुरुषावस्थाविलये साक्षा त्प्राप्या स्वस्वरूपात्मिका शैवी शक्तिः तद्द्वारा प्राप्यत्वपर्यवसानभूमिः शिव इति तस्यैव विष्णोः परमपदत्वस्य युक्तत्वात् । नच, विष्णो रिति षष्ठ्यन्तत्वं युक्त मिति वाच्यम् । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीया ' निति न्यायव्याकोपात् । तस्मात् 'सर्वे वेदा य त्पद मामन ' न्तीत्युपक्रमस्याऽपि शिवविषयत्व मुचितम् ॥

अथवा, पदशब्द एव शिववचन । 'शिवो रुद्रो महादेव श्शङ्करो ब्रह्म स त्पदम् । एव मादीनि नामानि विशिष्टानि परस्य तु ' इति स्कान्दोक्तेः । एतेन 'तत्ते पदं सङ्ग्रहेण ब्रवी ' मीत्युपक्रमः पदश्रुत्यैव शिवविषय इति विज्ञायते । विष्णो रिति पदस्य परमशब्दोक्तोत्कर्षप्रतियोगि परत्वेन पञ्चम्यन्तत्व मेव युक्तम् । 'येनाक्षरं पुरुषं वेद सत्य' मित्यत्राऽक्षरपुरुषपदेऽपि शिव मे वाऽभिधत्तः । न क्षर तीतियोगेन चेतनमात्ररूढ्या च साधारणयो रेतयोः पूर्वं 'यः सर्व यः सर्वज्ञः सर्ववि ' दितिमन्त्रे सर्वज्ञपदेन रूढ्या बोधिते शिवे समन्वय स्योचितत्वात् ॥

नच, तत्र सर्वज्ञपदं यौगिक मिति वाच्यम् । तस्य यौगिकत्वे सर्ववि दिति पदस्य नैरर्थ क्यात् । तस्य रूढत्वे तु तस्य प्राकरणिकाना मक्षरादिपदानां देवताविशेषपर्यवसानाकाङ्क्षायां रूढ्याकृष्टतात्पर्य एवोपक्षीणं स्या दिति तदीययौगिकार्थसमर्पणार्थं सर्ववि दिति पदं सार्थक्य मश्नुते । यथा 'तव प्रसादा त्कुसुमायुधोऽपि सहाय मेकं मधु मेव लब्ध्वा । कुर्यां हरस्याऽपि पिनाकपाणे र्धैर्यच्युतिं के मम धन्विनोऽन्ये ' इति पद्येपि पिनाकपाणिपदं सारतरायुधत्वद्योत नोपयोगितया यौगिकार्थवशीकृतं स त्तत्रै वोपक्षीणं स्या दिति मत्वा तदीयरूढ्यर्थप्रत्यानयनार्थं हरशब्दः प्रयुक्तः । तस्मा दुदाहृतानि श्रुत्यन्तवचनानि शिवपराण्येव ॥

ननु, तथापि सर्व मप्युपनिषज्जातं न शिवपरं भवितु मर्हति। 'हिरण्यगर्भः समवर्तताग्रे', 'एको ह वै नारायण आसी' दित्यादिवाक्यैरन्यपरत्वस्य प्रतीयमानत्वा दित्याशङ्कां निराचिकीर्षु राह सामरस्यनिधानस्येति ॥

तथाविधाना मापाततोऽन्यपरत्वेन प्रतीयमानाना मेषामपि वाक्यानां श्रूयमाणानामपि विचार्यमाणानि तानि शिव एव तात्पर्य मावेदयन्ति ॥

तथाहि, वेदेषु, तदन्तेषु, पुराणादिषु चान्यपरत्वेन प्रतीयमान मपि पञ्चकृत्यान्तर्गत चरितवर्णन मखिलं तत्तदन्तर्यामिणि शिवे पर्यवस्यतीति केनोपनिषद् द्योतयति ॥

यथा 'ब्रह्म हि देवेभ्यो विजिग्ये' इत्यारभ्य देवाना मसुराणां च समरे देवाना मन्तर्यामि प्रसादेन लब्धे जये तं जयं स्वशक्तिसमुपार्जितं मन्यमानानां निलिम्पानां दर्पापनोदनाय यक्षरूप तयाऽऽविर्भूते शिवे दहनपवनयो र्गर्व मपहृत्य तिरोभूते भगवत्या हैमवत्या उपदेशेनाऽन्तर्यामिण शिवस्यैव प्रसादेनाऽस्माकं जयः संवृत्त इति महेन्द्रादयो बुबुधिर इति वर्णितम् ॥

नच, तत्र यक्षरूपेण प्रादुर्भूतोऽन्तर्यामी देवतान्तर मिति वाच्यम्। तस्य शिवा दन्यत्वे उमादेव्या दर्शनस्याऽसम्भावितत्वात्। अनेनै वाशयेन वेदान्तादिरूपः कृत्स्नोऽपि शब्द राशिः शिव मेव बोधयती त्यमु मर्थ 'इमा रुद्राय स्थिरधन्वने गिर' इतिमन्त्रभागो निर्धारयति॥

अत एवाह भगवा न्पराशरोऽपि ।

स्मृतय श्च पुराणानि भारतादीनि सत्तम ।
शिव मेव सदा साम्बं हृदि कृत्वा भ्रमन्ति हि ॥ इति।

अय मर्थः स्कान्देऽपि निबद्धः ।

कानिचि द्वेदवाक्यानि ब्राह्मणा वेदवित्तमाः
रुद्रमूर्तिं समाश्रित्य शिवे परमकारणे ॥
पर्यवस्यन्ति विप्रेन्द्रा स्तथा वाक्यानि कानिचित्
विष्णुमूर्तिं समाश्रित्य ब्रह्ममूर्तिं च कानिचित् ॥
आग्नेयीं मूर्ति माश्रित्य श्रुतिवाक्यानि कानिचित्
सूर्यमूर्तिं मुनिश्रेष्ठा स्तथै वान्यानि कानिचित् ॥
एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः
प्रतिपाद्यो महादेवः स्थितः सर्वासु मूर्तिषु ॥ इति

तस्मा त्सकलनिगमसारसामरस्यनिधानस्येति समुन्नितम्। सामरस्यं नाम सर्वेषां वेदा न्तानां तात्पर्य णैककण्ठ्यम ॥

ननु, सर्ववेदान्ततात्पर्यपर्यवसानत्। शिवे प्रतिज्ञातम्। त न्न सङ्गच्छते। तथा हि, कानिचि द्वेदान्तवाक्या न्यनन्तमाङ्गल्यगुणरत्नाकर मावेदयन्ति। यथा 'य स्सर्वज्ञ स्सर्ववि' दित्यादि। कानिचि ज्जगज्जन्मादिकारणता ब्रह्मणः प्रतिपादयन्ति। यथा 'यतो वा इमानि भूतानि जायन्त' इत्यादीनि। अन्यानि च सर्वनियन्तृत्व मभ्युपयन्ति। यथा 'तत्सृष्ट्वा तदेवा नुप्राविशत्', 'अन्तः प्रविष्ट श्शास्ता जनाना' मित्यादीनि। इतराणि चानन्दात्मकतां निरूप यन्ति। 'आनन्दा द्ध्येव खल्विमानि भूतानि जायन्त' इत्यादीनि। अपराणि च तदानन्दस्य निरतिशयत्वं विशदयन्ति। 'स एको ब्रह्मण आनन्द' इत्यादीनि। एत त्सर्वं शिवे कथं सम्भ वती त्याशङ्कानिवारणार्थं लोकवेदप्रसिद्धतन्नामप्रवृत्तिनिमित्ततयैव तत्सर्वं तस्मिन् सम्भावयितुं भव शिवेत्यादिविशेषणम् ॥

भव त्यस्मा ज्जग दिति भवः। शिवं जगतः क्षेमं करो तीति शिवः। अथवा, शिवाः सर्वे कल्याणगुणा अस्य सन्तीति च शिवः। शृणाति हिनस्ति जग दिति शर्वः। पशून् जीवान् गवाश्वादिव त्पाशै र्बध्वा स्वकार्यं कारय तीति पशुपतिः। सकलजगदीशनशील ईश्वरः। तत्र पूजार्थस्य परमपदस्य समासः। महति सर्ववैषयिकानन्दातिशायिनि स्वात्मानन्दे दीव्यति रमत इति महादेवः। भक्तानां संसाररुजं द्रावय तीति रुद्रः। शं सुख मस्मा द्भव तीति शम्भुः। अत्र शिवनाम्ना सकलमाङ्गल्यगुणाकरत्वं, भवशिवशर्वपशुपतिरुद्रनामभि र्ब्रह्मण स्तटस्थलक्षणं पञ्चकृत्यपरायणत्वं, परमेश्वरनाम्ना तदाक्षेपक मन्तर्यामित्वं, शम्भुनाम्ना तदानन्दस्य निरति शयत्वं च प्रवृत्तिनिमित्तत योपनीयते। तस्मा त्सर्ववेदान्तप्रतिपाद्यब्रह्मलक्षणलक्षितमुख्याभिधान निधानत्वा च्छिव एव सर्वश्रुतितात्पर्यविषय इति युक्तम् ॥

ननु, श्रवण, मनन निदिध्यासनसाक्षात्कारैः प्रसन्नस्य मोक्षप्रद स्यैव सूत्रगतब्रह्मशब्द विषयत्वयोग्यतया 'मोक्ष मिच्छे ज्जनार्दना' दिति तदन्य स्यैव मोक्षप्रदत्वस्मृते र्न शिवस्य प्रकृतब्रह्मपदवाच्यत्व मिति शङ्कानिवारणाय विशिनष्टि स्वशेषभूतेति ॥

सर्वपुरुषार्थप्रदत्वस्य 'फल मत उपपत्ते' रित्यधिकरणे, मोक्षप्रदत्वस्य 'तन्निष्ठस्य मोक्षोपदेशा' दित्यादिसूत्रेषु समर्थयिष्यमाणत्वा न्नेह मोक्षप्रदत्वमात्र स्यैव प्रकृते प्रदर्शनीय त्वेऽपि सामान्याभिधानरूपेणाऽप्रस्तुतप्रशंसालङ्कारेण प्रस्तुतो विशेष एव विवक्षितः। पुरुषार्थान्तरवर्णन मत्रैव दृष्टान्ततया पर्यवस्यति ॥

ननु, यदि प्रसादेन पुरुषार्थः सिध्यति तर्हि [illegible] सकलपुरुषार्थसिद्धिः स्यात्। निर्व्याजकृपानिधेः सर्वानुग्राहकस्य शिवस्य [illegible] प्रसादसम्भवा दित्याशङ्का निवारणाय प्रसादं विशिनष्टि समुपासनानुगुणसमुदितेति ॥

सर्वानुग्राहकतया शिवस्य सदा सर्वत्र [illegible] कृपा [illegible] व्यक्ततया कर्मज्ञानभक्त्यादिसदाराधनानुगुण्येन तत्र तत्र [illegible] तत्तत्पुरुषार्थप्रदानेच्छा रूपः प्रसादः समुदेतीति भावः ॥

ननु, निखिलेति चेतनविशेषण मयुक्तम्। तिर्यगादीनां कर्मज्ञानाद्यनधिकारा दिति चेन्न। सर्वेषां चेतनानां पर्यायेण मनुष्यदेहपरिग्रहणं सति तदधिकार स्यावश्यकत्वात्। किं च 'महादेवे महानन्दे महाकारुणिकोत्तमे। प्रसन्ने सति कीटो वा पतङ्गो वा विमुच्यते' इत्यादि स्मृतिप्रामाण्येन तिर्यगादिष्वपि प्रसादभाजनत्वसम्भवात्। श्रीकालहस्त्यादि [illegible] पूर्वाभ्याससञ्चितज्ञानानुभवस्य तिर्यक्ष्वपि सम्भावितत्वाच्च ॥

ननु, पत्रपुष्पादिसमर्पणरूपाराधन मल्पीयः। तावता [illegible] कथं महतः पुरुषार्थान् दद्या दित्याशङ्क्य स्वगेशभूतेति चेतनविशेषणं कृतम् ॥

दारादीना मिव सर्वेषां चेतनानां शिवस्य [illegible] तेन [illegible] स्वल्प मपि भक्तिपूर्वक माराधनं दृष्ट्वा प्रसीदतीति भावः ॥

ननु, त्रिविधपरिच्छेदराहित्या द्गुणसामग्र्या, जगज्जन्मादिकारणत्वलक्षणयोगा [illegible] शिवस्यैव ब्रह्मत्वे कथं 'तस्माद्देत ब्रह्म नामरूप मन्नं च जायते' इत्यादिषु [illegible] ब्रह्मशब्दप्रयोगो युज्येते त्याशङ्कानिवारणाय परब्रह्मण इति परत्वविशेषणं गृहीतम्। अ [illegible] माशयः। कार्यभूतहिरण्यगर्भ स्याऽपि श्रुतिप्रामाण्या द्ब्रह्मत्वव्यवहारे [illegible] ब्रह्मैव, ब्रह्मशब्दप्रवृत्तिनिमित्तौष्कल्याऽभावात्। शिव स्तु परं ब्रह्म [illegible] प्रमितत्वात्। अतएव 'ऋतम् सत्यं परं ब्रह्म' इत्याम्नायते। अथर्वशिखो [illegible] निर्धार यति। यथा 'अथ कस्मा दुच्यते परं ब्रह्म, यस्मा दुच्चार्यमाण [illegible] बृंहति बृंहयति तस्मा दुच्यते परं ब्रह्मेति' ॥

नच, अत्रत्यनामनिर्वचनं प्रणवविषय मिति वाच्यम्। 'य ॐकार स्स प्रणवो, यः प्रणवः स सर्वव्यापी, यः सर्वव्यापी सोऽनन्तो, योऽनन्त स्तत्तारं, यत्तारं तत्सूक्ष्मं, यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं, तद्वैद्युतं तत्परम्ब्रह्म। स एकः स एको रुद्रः स ईशानः स भगवा न्स महेश्वरः स महादेव' इ त्योंकारादिमहादेवान्तानां नाम्ना मेकविषयत्वे नाऽनुक्रम्य, तेषा मेकैकनिर्वचनस्य प्रदर्शनेन ॥

'शिवो वा प्रणवो ह्येष: प्रणवो वा शिव स्तथा
वाच्यवाचकयो र्भेदो नात्यन्तं विद्यते क्वचित् ॥

इति शिवपुराणोक्तरीत्या प्रणवनाम्नां निर्वचने प्राक्प्रकृतेऽपि शिव एव पर्यवसानौचित्यात् । अत एव वाथर्वशिखाया मपि 'ओङ्कार: प्लव्य: प्रणव: सर्वदेववेदयोनि: सर्ववाच्यं समुद्धर्ता तारो विष्णु र्ब्रह्म प्रकाशो विद्यु द्व्यापि' इति नाम्नां महादेवो वाच्यत्वेन दर्शित: ॥

एवं च 'तदेव ब्रह्म परमं कवीना' मित्यन्तेन प्रजापते: परब्रह्मभाव: । यथा च, 'नारायण परं ब्रह्म' इति नारायणस्य, तथा हिरण्यगर्भादे रपि क्वचित्क्वचि दुच्यमानं गौण मेव भवितु मर्हती त्यनवद्यम् ॥

एवं ब्रह्मप्रतिपादकस्य वेदान्तभागस्य ब्रह्मजिज्ञासेति सूत्रशेषेण यद्विचारणीयत्वं प्रदर्शितं तस्य धर्मविचारानन्तर्य मथशब्दोऽभिदधाती त्यावेदयन् धर्मं द्वादशलक्षणीप्रतिपाद्यै: प्रमेय विशेषै र्विशिनष्टि तन्नियोगेत्यादिना ॥

तत्र धर्मे चोदनाया: प्रामाण्यं तन्नियोगरूपेत्यादिविशेषणेन, मन्त्रार्थवादयो स्तत्र प्रामाण्यं तत्तदर्थवादेत्यादिविशेषणेन, स्मृत्यादीनां तत्र प्रामाण्यं स्वप्रमाणानुगुणेत्यादिविशेषणेन च दर्शितम् । तदाराधनेत्यादिविशेषणेन द्वितीयाध्यायार्थ: कर्मभेदो दर्शित: । वेदचोदनानां 'श्रुतिस्मृती ममै वाज्ञे' इति स्मृत्युक्तरीत्या परमेश्वराज्ञारूपत्वं, 'भोक्तारं सर्वयज्ञाना' मित्या द्युक्तिरीत्या सर्वकर्मणां परमेश्वराराधनरूपत्वं च प्रमित मि त्यनेन कृतस्यैव धर्मविचारस्य कर्मा नुष्ठानपूर्वकं परमेश्वरप्रसादद्वारा चित्तशुद्धिसम्पादनेन ज्ञानहेतुत्वात् तथाभूत स्यैव धर्मविचारस्य ब्रह्मविचारापेक्षितपूर्ववृत्तत्वं युक्तम् । न त्वर्वाचीनव्याख्यात्रभिमतं निरीश्वरवाद मवलम्ब्य कृतस्य धर्मविचार स्येत्याशयेन तन्नियोगरूपेति, तदाराधनरूपेति च विशेषितम् ॥

अर्थवादशब्देन मन्त्र स्याऽपि ग्रहणम् । इतिहास उपाख्यानप्रधाना महाभारतादय: । अभियुक्तसूक्तयो हैरण्यगर्भाद्यागमा: । श्रुत्यादीतिविशेषणेन तृतीयपञ्चमसप्तमाष्टमनवमाध्याय प्रमेयजातं प्रदर्शितम् । तत्रादिशब्देन श्रुतिलिङ्गादीनां वचननामधेयादीनां, प्रत्यक्षादिकार्यापत्ति प्रमाणानां च सङ्ग्रह: । विधिनिषेधादिविशेषणेन दशमाद्यवशिष्टाध्यायचतुष्टयप्रमेयजातं दर्शितम् । निखिलपुरुषार्थरत्नाकरस्ये त्यनेन षष्ठाध्यायप्रमेयजातं दर्शितम् । एवं सर्वेणाऽपि रूपेणाऽनुष्ठानोपयोगिना द्वादशलक्षण्या विचारितस्य धर्म स्यानुष्ठानद्वारा ज्ञानसाधनत्व मुचित मित्यभिप्रे त्याऽह परमेति ॥

न चैतावतां विशेषणाना मानर्थक्यं शङ्कनीयम् । धर्मानुष्ठानं प्रति द्वादशलक्षण्या कृत धर्मविचार स्यैव शास्त्रान्तरविचार स्याऽनपेक्षितत्वद्योतनद्वारा करिष्यमाणब्रह्मविचारं प्रति धर्म विचारस्य पुष्कलकारणत्वबोधनपरतया सार्थक्यात् ॥

अतःशब्दोऽयं वृत्तस्य हेतुभावे वर्तते। यतोऽधीतवेदेन धर्मो विचारितोऽत

ततः सूत्रगत मतश्शब्दं व्याचष्टे अतश्शब्द इति — ननु, पूर्ववृत्तस्य धर्मविचारस्य हेतुत्व मथशब्देनैव द्योतितम्। तस्य नियतसामग्रीरूपत्वाभावेन पूर्ववृत्तत्वेन ग्रहणायोगा दि त्याशङ्क्य तस्य साफल्यं निरूपयति यत इति॥

अत्रेदं वाच्यम्। धर्मविचारस्य ब्रह्मविचारं प्रति पूर्ववृत्तत्वेन ग्रहण मयुक्तम्। तस्य तद्धेतुत्वायोगात्॥

न च, अनुष्ठितै धर्मैः सम्पादिताया श्चित्तशुद्धेः ब्रह्मविचारसाधनतया तद्द्वारा धर्मविचारस्य हेतुत्वसिद्धि रिति वाच्यम्। विचारितधर्माणां सर्वेषां चित्तशुद्ध्यर्थ मनुष्ठानाभावेन अनुष्ठित धर्माणां च नियमेन ब्रह्मविचारोपयुक्तचित्तशुद्धिप्रदत्वादर्शनेन च तद्धेतुत्वानुपलम्भात्॥

न च, एतावता ब्रह्मविचारस्य धर्मविचारानन्तर्यनियमभङ्गेऽपि धर्मविचारस्य ब्रह्मविचार पूर्ववृत्तत्वनियमोऽक्षत इति वाच्यम्। यदनन्तरं नियमेन ब्रह्मविचारो भवति, तथाभूतस्य तत्पुष्कलकारणस्यै वाऽथशब्देन पूर्ववृत्ततया ग्राह्यत्वात्। अन्यथा, उपनयनादे रपि पूर्ववृत्ततया ग्रहणौचित्या च्च। तस्मा द्धर्मविचारस्य पूर्ववृत्तत्वेन ग्रहण मयुक्त मित्याशङ्कानिवर्तनार्थोऽय मतःशब्दः॥

ननु, गृहीते नाऽनेन कथं तन्निवृत्ति रिति चे दुच्यते। धर्मानुष्ठानजन्य चित्तशुद्धिद्वारैव धर्मविचारस्य ब्रह्मविचारोपयोग इति तदर्थं धर्मविचारे क्रियमाणे वेदानां प्रामाण्यं श्रुत्यादि स्वरूपबलाबलं च पूर्वतन्त्रोक्तमर्यादया परिज्ञात मेतच्छास्त्रसम्पादनीयतात्पर्यनिर्णयादौ न्युप युज्यत इति तद प्यानुषङ्गिकं प्रयोजन मित्यभिप्रेत्य धर्मविचारापेक्षायां तस्यापि प्रयोजनतोक्तिः। नतु ब्रह्मविचारप्रयोजकतया॥

एवं च धर्मविचारस्य तन्निर्णयजन्यधर्मानुष्ठानचित्तशुद्ध्यादिकं द्वार मिति स्थिते सौ रपि कृतस्य धर्मविचारस्य तद्द्वारा ब्रह्मविचारनिष्पादकत्वाऽदर्शनेन तस्य पुष्कलकारणत्वा भावात्। अथशब्देन पूर्ववृत्ततया ग्रहण मनुपपन्न मि त्याशङ्कावारणायैव सूत्रकृता तत्प्रभवानां धर्मानुष्ठानादीनां ब्रह्मविचारं प्रति हेतुत्व मतश्शब्देन कीर्त्यते। तेन द्वारभूतेन सर्वेषु कारणेषु स त्स्वयं धर्मविचारः पुष्कलकारणं भवति। नतु तेषां मध्ये प्रतिबन्धकदुरितादिबला त्कस्यचि दनिवृत्ता वपी त्येतदर्थस्य लाभः॥

न च, अथशब्देन यत्पूर्ववृत्ततया गृहीतं तेनाऽन्य दनपेक्ष्यैव पुष्कलकारणेन भाव्य मिति वाच्यम्। तादृशनियमाऽभावात्। अन्यथा अध्ययनानन्तरं माणवकबुद्धिभेदतन्मान्द्यादिना

स्तदनुष्ठानसम्पन्नचित्तशुद्धिना तत्कालसम्पन्नविवेकादिगुणसहकृतपरमभक्ति संभावितेनाऽनेन ब्रह्माऽपि निरतिशयनिःश्रेयसकरं विचारणीय मिति।

---

गुरो र्माणवकस्य वा विघ्नेन वा धर्मविचाराऽनिष्पत्तिदर्शनेन 'अथातो धर्मजिज्ञा' सेत्यत्र अध्ययनस्याऽपि पूर्ववृत्तत्वाऽभावप्रसङ्गात्। तस्मा द्धर्मविचारस्यै वाऽत्र पूर्ववृत्तत्वं युक्त मिति ॥

विवेको - मोक्षफलं नित्य, मभ्युदयफल मनित्य मिति नित्यानित्यवस्तुविवेकः। धर्म विचारानन्तरं परमेश्वराराधनधियाऽनुष्ठितैः कर्मभि श्चित्तशुद्धि स्सम्भवती त्यभिप्रेत्य तत्काल सम्पन्नेति विशेषणं कृतम् ॥

अत्रेद मवधेयम्। जन्मप्रभृति,

हिंस्राऽहिंस्रे मृदुक्रूरे धर्माधर्मौ वृतानृते
तद्भाविताः प्रपद्यन्ते तस्मा त्त त्तस्य रोचते ॥

इति स्मृत्युक्तरीत्या पूर्वजन्मवासनानुवृत्त्या ये सहजशिव भक्तिभाविताः समाचरित पाशुपतव्रता स्तएवाऽस्मिन् शास्त्रे वस्तुतोऽधिकारिणः ॥

ननु, पाशुपतव्रतस्य ब्रह्मविद्याग्रहणयोग्यताप्रदत्वं न प्रमित मितिचे न्न। 'तेषा मेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिव द्यै स्तु चीर्णं' मिति श्रुत्यनुशासितत्वात् ॥

नच, तत्रत्यशिरोव्रतपदस्य पाशुपतव्रतबोधकत्व मसिद्ध मिति वाच्यम्।

व्रतं पाशुपतं चीर्णं यै र्द्विजै रादरेण तु
तेषा मे वोपदेष्टव्य मिति वेदानुशासनम् ॥

इति सूतसंहितावचनेन शिरोव्रतपदस्य पाशुपतव्रतपरत योपबृंहितत्वात् ॥

नच, शिरोव्रतस्य आथर्वणिकमात्राधिकारिकतया मीमांसायां नियमितत्वेन ब्रह्मविचा राधिकारप्रदत्वं न सिध्य तीति शङ्क्यम्। सूतसंहिताविवरणे 'अत्र एकर्षिहोमशिरोव्रतादिक मध्ययनधर्मत्वा दाथर्वणिकाना मेव। अन्येषां तु शिरोव्रतपदपर्यायं पाशुपतं पूर्वोक्तं सर्वश्रोतृ साधारण' मिति माधवाचार्यै र्व्याख्यातत्वात् ॥

ननु, पाशुपतव्रतस्य भगवता भाष्यकृताऽप्रतिपादितत्वेन तस्याऽधिकारसमर्पकतया भाष्य तात्पर्यवर्णन मयुक्त मितिचे न्न। अङ्गावबद्धास्त्वि त्यधिकरणे भाष्यकृद्भि स्सर्वै रपि ब्रह्मोपा सकैः कार्या इति पाशुपतव्रतधर्माणां भस्मोद्धूलनादीनां सर्वविद्यासमनियतत्वस्य समर्थितत्वात्। सहकार्यन्तरविध्यधिकरणे पाशुपतव्रतस्य मुक्तिफलकतया समर्थितत्वा च्च ॥

ननु, भाष्यकृद्भि र्निरूपितं पाशुपतव्रतं भस्मोद्धूळनादिरूपमेव, न तु शिवलिङ्गधारणात्मकम्। तस्मा ल्लिङ्गधारणव्रतस्य न ब्रह्मविद्याधिकारप्रयोजकत्वं सिद्ध मिति चेन्न। प्रकृत भाष्यस्य कारिकारूपं विवरणं समाचरिता श्रीनीलकण्ठशिवाचार्येण क्रियासारापरपर्याये निगमागमसारसङ्ग्रहे भाष्योक्तपाशुपतव्रतस्य लिङ्गधारणदीक्षापरतया बहुधा निर्णयेन राद्धान्तितत्वात् ॥

ननु, सूतसंहितायां युक्तं पाशुपतव्रतं भस्मरुद्राक्षधारणात्मक मिति चेन्न। पाशुपतव्रतस्य भस्मरुद्राक्षधारणात्मकतया बहुषु श्रुतिस्मृतिपुराणेषु निरूपितत्वेन तस्यैव लिङ्गधारणसर्वस्वे ब्रह्मपर्यन्तेऽपि च निपुणतर मस्माभि र्निरूपितत्वा त्सूतसंहितानिगदितस्यापि तत्परत्वावसायात ॥

ननु, सूतसंहितायां विशिष्य भस्मधारणमेव पाशुपतव्रतमिति निगदित मिति न तस्य लिङ्गधारणपरत्वं युज्यत इतिचेन्न। प्रमाणान्तरानुरोधेन तत्रत्यभस्मपदस्य रुद्राक्ष शिवलिङ्गयो रप्युपलक्षकत्वावगमा दित्यन्यत्र विस्तरः कृत इति नेह पुनः ॥

एवंविधा अधिकारिणो धर्मविचारेण धर्मस्वरूपं विचार्य शिवाराधनाभिधेय कर्मा ण्यनु तिष्ठन्त श्चित्तशुद्धि मधिगम्य परब्रह्मणः शिवस्य स्वरूपप्रमाणादिनिर्णयार्थं प्रवृत्तस्याऽस्य शास्त्रस्य विषयप्रयोजनसम्बन्धाधिकारिणां न्यायतो निर्णयार्थं प्रवृत्तस्याऽस्य सूत्रस्याऽर्थपरिज्ञाने प्रवृत्ता अनेनै वाऽतःशब्देन विवक्षितं कर्मफलानित्यत्व मित्थं परामृशन्ति—'परीक्ष्य लोका न्कर्मचितान् ब्राह्मणो निर्वेद मायात्' इतिश्रुतौ कर्मफलेभ्यो वैराग्यार्थं तेषा मनित्यत्वं श्रुत्यर्थ साधकयुक्तिपरामर्शरूपया परीक्षयाऽवगन्तव्य मिति। सात्र युक्तिः 'तद्यथेह कर्मचितो लोक' इत्यादिवाक्ये नोपन्यस्यते। सा तु राजसेवादिन्याये नामुष्मिककर्मणोऽपि फलं क्षीयत इ त्युपपादयन्ती य द्यत्कर्मफलं तत्त त्सर्व मनित्य मिति व्याप्तिमूलतया कस्याऽपि कर्मफलस्य नित्यत्वं न सहते। एव मुपपत्तिरूपतात्पर्यलिङ्गोपबृंहितया 'प्राप्यान्तं कर्मण स्तस्य यत्किं चेह करो त्ययम्। तस्मा ल्लोका त्पुन रे त्यान्यस्मै लोकाय कर्मण' इत्यादि रागानार्थकश्रुत्यन्तर सहकृतया 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति', 'हिरण्यदा अमृतत्वं भजन्ते', 'इन्द्रस्य सख्य ममृतत्व मस्याम्। दिवि ज्योति रजर मारभेता' मित्यादिका मन्त्रार्थवादा बाधिताः सन्तः प्रशंसामात्रपराः पर्यवस्य न्तीति ॥

ननु, आद्यसूत्रार्थपरिज्ञाना त्प्राक् विषयप्रयोजनाधिकारिनिर्णये चित्तशुद्धिः कथमुप युज्यत इतिचे दुच्यते ॥

अध्ययने नाऽक्षरावाप्त्यनन्तरं परस्परविरुद्धं द्वयं युगप दुपतिष्ठते। 'आचार्यकुला द्वेद मधीत्य कुटुम्बे शुचौ देशे स्वाध्याय मधीयानो धार्मिका न्विदध' दित्यादिश्रुत्या समावर्तनम्,

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा सेति कर्मणि षष्ठी। 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेद मायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरु मेवाभिगच्छेत समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ' मित्यादिवाक्यं विषयः ॥

तदनन्तर मेव दारपरिग्रहं कृत्वा समारब्धव्याना मग्निहोत्रादीना मनुष्ठानार्थं वेदार्थनिर्णयाय धर्मविचार श्च अनयोः कस्य प्रवर्तितव्य मिति डोलायमाना स्तन्निर्णयार्थं प्रवृत्त मिदं सूत्र मित्युपकृत्य धर्मजिज्ञासासूत्रार्थपरिज्ञानं स्वयमेव प्रवर्तन्त इति न तत्र चित्तशुद्ध्यपेक्षाऽस्ति। इह तु चित्तशुद्धिरहिताः प्रथमं धर्मविचारशास्त्राभ्यासा दक्षय्यादिवाक्य मपि फलपरं मन्यमाना स्तद्विरोधिन्यायं च तत्राव्युत्पादितं परामष्टु मक्षमाः सन्तः अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्तं बालाः। 'यत्कर्मिणो न प्रवेदयन्ति रागा त्ते नातुराः क्षीणलोका श्च्यवन्ते। इष्टापूर्तं मन्यमाना वरिष्ठं नान्य च्छ्रेयो वेदयन्ते प्रमूढाः। नाकस्य पृष्ठे सुकृतेऽनुभूत्वा इमं लोकं हीनतरं चाविश' न्तीति मन्त्रविषयता मनतिवर्तमानाः स्वय मेव ब्रह्मजिज्ञासासूत्रार्थे न प्रवर्तन्ते। ये तु प्राग्जन्मानुष्ठितै रेव तथाभूतैः कर्मभिः सम्पन्नचित्तशुद्धय स्त एवैतत्सूत्रपरिज्ञाने प्रवर्तन्ते। तेषां विद्यासाधनस्य विद्यासहकारिण श्च कर्मणोऽनुष्ठानार्थं धर्मविचारापेक्षेति सर्वथा धर्मानुष्ठानानन्तरं शुद्धचित्ता एवैतत्सूत्रपाठेन नित्यानित्यवस्तुविवेकं लब्ध्वा तन्मूल मादिशब्द गृहीत मैहिकामुष्मिकफलेभ्यो वैराग्यं, शमादिसाधनम्, मुमुक्षुत्वं च प्राप्य सहजसिद्धाया शिवभक्ते रतिशयं च प्राप्य ब्रह्मविचारे प्रवर्तन्त इति युक्त मुक्तम् ॥

परीक्ष्येति—अस्याऽयमर्थः,

यो ब्राह्मणः वेदाध्ययनधर्मविचारपूर्वकं धर्मानुष्ठानेन विशुद्धचित्तः कर्मफलभूतान् लोकान्परीक्ष्य धर्मविचारशास्त्राभ्यासतः अक्षय्यादिवाक्यानां फलसमर्पकत्वं क्षिपन्त्या तद्यथेहेत्यादि श्रुतिप्रदर्शितयुक्त्या क्षयिष्णू न्निर्धार्य 'अकृतो नित्यो लोकः कृतेन कर्मणा नास्ति' इति निर्वेदं कर्मफलेभ्यो वैराग्यं प्राप्नुयात्। स समित्पाणित्वनियमयुक्तः सन् तद्विज्ञानार्थं तस्य प्रकृतस्य ब्रह्मणो विज्ञानं मे स्या दिति ब्रह्मज्ञानेच्छया श्रोत्रियत्वादिगुणयुक्तं गुरु मभिगच्छेदेव। नतु स्वसमीप मानयेत्। एवं विधिव दुपपन्नाय, प्रशान्तचित्ताय, शमान्विताय, अति सूक्ष्मब्रह्मविचारापेक्षितमनःसमाधानहेत्वान्तरबाह्येन्द्रियवते तस्मै स गुरु र्येन प्रकारेण अक्षरं 'अथ परा यया तदक्षर मधिगम्यते' इत्यारभ्य प्रकृत मक्षरशब्दितं सत्यं पुरुषम्, 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गल' मित्यादिश्रुतिप्रसिद्धं परमेश्वरं वेद सम्यग्जानाति, तेन प्रकारेण तां स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा मवधार्य ज्येष्ठपुत्राय प्राह—इति मा गुपक्षिप्तां ब्रह्मविद्यां प्रोवाच ब्रूयादिति ॥

ब्रह्म विचारार्हं भवति न वेति संदेहः। पूर्वपक्षस्तु ब्रह्म विचारयोग्यं न भवति। तत्र सन्देहाऽभावात्। कथं सन्देहाऽभावः? अयमात्मा ब्रह्मेति श्रुति

अत्र ब्राह्मणशब्दप्रदर्शितान्तःशुद्धिहेतुधर्मानुष्ठानात् परीक्ष्यपदेन कर्मफलानित्यत्वाऽनित्यत्वप्रापकविधिवाक्यजन्यकर्मविचारपूर्वकत्वं ... ... धर्मविचारस्य पूर्ववृत्ततया आक्षेपात् ... लब्ध। परीक्ष्येत्यनेन नित्यानित्यवस्तुविवेको लब्धः। निर्वेदमायादित्यनेन विरागः। ... शमादिनाताये त्यत्र वादतः शमदमसम्पत्ति र्लब्धा। 'नास्त्यकृतः कृतेन' ... मुमुक्षुत्वं लब्धम्। एतावता अतःशब्दार्थो लब्धः॥

तद्विज्ञानार्थ मित्यनेन तु ब्रह्मजिज्ञासाशब्दार्थः। तत्रार्थशब्दः स्यादर्थे वर्तते। तद्धिता र्थोत्तरपदेत्यादिसूत्रभाष्ये 'दारा... रस्मात्म मिति भिक्षामहे' इत्यर्थे 'दारार्थं भिक्षामहे' इति प्रयोग मुदाहृत्य स्यादर्थे र्थशब्दोऽस्तीति भगवता पतञ्जलिना समर्थितत्वात्। स्यादर्थश्च तत्र इच्छैव। इच्छाया मपि लिङ्गविधानात्। एवञ्च तत्र विषयवाचकं गुरूपसदनमात्र ... ब्रह्म ज्ञानलाभात् द्वारतया विचार आक्षेप्य इति सूत्राक्षरानुगुण्या दिद मेव विषयवाक्य मिति युक्तम्॥

विचाराङ्गसंशयं दर्शयति ब्रह्मेति—अथ मिह संशयक्रमः। मुमुक्षूणां ब्रह्मविचा रोपयोगीति सूत्रकृता समारभ्यमाण मिदं शास्त्र मारम्भविषयतायोग्य नवेति प्रथमं संशयः। तदर्थ मियं चिन्ता ब्रह्मविषयत्वयोग्यं सप्रयोजनज्ञानं च नवेति। तदर्थ मियं चिन्ता आह मित्यनु भूयमानो जीव एव ब्रह्म। अथवा ततोऽन्य दिति। यदि जीवा दन्य त्तदाऽपि ब्रह्म परिच्छेद्य नवेति। यदा जीव एव ब्रह्म तस्याऽहमनुभवसिद्धत्वा न्न विषयत्वयोग्यता। यदि जीवा दन्य द प्यपरिच्छेद्यं तदा तस्याऽशक्यप्रतिपादनत्वा न्न विषयत्वयोग्यता। पक्षत्रयेऽपि न तस्य सप्रयो जनज्ञानता। जीवान्यब्रह्मगोचरज्ञाने सत्यपि संसारनिवृत्तिपूर्वकनित्यफलप्राप्ति रदर्शनात्, अनादि संसारस्य दुरपह्नवत्वा च्च। यदा ब्रह्मणो न विषयतार्हत्वं, सप्रयोजनज्ञानत्वं वा तदा न तस्य विचारार्हता। तदा उक्तार्थं वाक्य मुक्त मर्थं विधातुं न शक्नोति। यदा न शक्नोति, तदा विचार स्याकर्तव्या त्तदर्थ मिदं शास्त्रं नारम्भणीय मिति पूर्वपक्षे फलफलिभावः॥

एवं संशयपरम्परोपलक्षणत्वेन मध्यगत स्संशयो भाष्ये दर्शितः। अत एव सिद्धान्तोप क्रमभाष्ये सर्वथा समारम्भणीय मिद मिति प्राथमिकसंशयैककोटिविषयतया सिद्धान्तप्रतिज्ञा दर्श यिष्यते। सकलशास्त्रोपोद्घातत्वा दस्याऽधिकरणस्य नाऽध्यायपादसङ्गतयः॥

सन्देहाभावा दिति- अयमात्मा ब्रह्मेति श्रुत्या जीव एव ब्रह्म त्यवगमा त्तस्य चाऽहमनुभव सिद्धत्वा दिति भावः॥

रय मिति प्रत्ययेन प्रत्यक्षसिद्ध मेवाऽत्मानं ब्रह्मे त्युपदिशति। ततः कुतोऽत्र सन्देहकळङ्कप्रसङ्गः? किं च विचारस्य फलं हि तद्विषयज्ञानम्। ज्ञानं च ज्ञेयपरिच्छेदः। वेदान्तविचारजन्यं ज्ञानं ब्रह्म परिच्छिनत्ति वा नवा? यदि परिच्छिनत्ति तदा तस्य परिच्छेदातीतत्वभङ्गप्रसङ्गः। यदि न परिच्छिनत्ति ब्रह्म तदा यथावन्न प्रकाशेत। अय मिति हि परिच्छिन्नो घटोऽवगम्यते। ततो ब्रह्मविषयं ज्ञान मपि न संभवति। तथापि प्रयोजनं च न किंचि त्पश्यामः।

ननु, सा श्रुतिः जीवस्याऽहमनुभवसिद्धेन कर्तृत्वभोक्तृत्वाद्यनेकानर्थव्रातकलुषितेन रूपेण ब्रह्मभावं न प्रतिपादयति नित्यशुद्धत्वादिरूपब्रह्मशब्दार्थानुगमविरोधात्। किन्तु कर्तृत्वादि कल्पिताकाररहितेन निर्विशेषचैतन्यरूपेण। तत्तु संसारदशाया मावृतं न प्रकाशत इति तत्र सन्देहो घटत इत्याशयेन पृच्छति कथ मिति॥

उत्तर माह अय मात्मेति—अय माशयः। अय मात्मा ब्रह्मेति श्रुतिः जीवस्य यावद्रूप महमनुभवे प्रकाशते तावद्युक्त मेव त मिदंशब्देन परिगृह्य ब्रह्मे त्युपदिशति॥

नच, ब्रह्मशब्दस्वारस्यानुरोधा दिदंशब्दस्य प्रसिद्धार्थपरत्वं हातव्यं, प्रथमचरमश्रुतयोः प्रथमश्रुतस्यैवाऽनुरोध्यत्वात्॥

नच, ध्यायतीव, लेलायतीव इत्यादिश्रुतिभि र्जीवे कर्तृत्वादे रपारमार्थिकत्वप्रतिपादना द्वस्तुतो निर्विशेष मेव जीवस्वरूपं, तदेव च ब्रह्म प्रतिपाद्यत इति वाच्यम्। करोमि, भुञ्जे इत्यादिप्रत्यक्षविरुद्धानां तासां श्रुतीनां जीवस्य कर्माद्यधीनकर्तृत्वादिमत्तया तत्पारतन्त्र्यमात्र परत्वा दिति। निर्विशेषं ब्रह्मस्वरूपं जीव इति पक्ष मभ्युपेत्यापि तस्य विषयत्वाऽसम्भव माह किञ्चेति॥

परिच्छिद्यतेऽनेनेति परिच्छेदो विशेषणरूपो विशेषः। तथा च निर्विशेषत्वभङ्गप्रसङ्ग इत्यर्थः। तस्मा ज्जीवस्य निर्विशेषत्वे तस्य शब्देनाऽपि प्रतिपादनाऽसम्भवा दय मात्मा ब्रह्मेति श्रुत्या सविशेष मेव जीवस्वरूपं ब्रह्मतया प्रतिपाद्यत इति तस्याऽहमनुभवसिद्धस्य न विचार विषयतेति प्रागुक्त मेव स्थित मिति भावः॥

तथापीति- यदि ब्रह्मज्ञाना त्किञ्चित्प्रयोजन मभविष्य त्तदाऽहमनुभवरूपा द्वेदान्तजन्या द्वा तज्ज्ञाना ज्जायमानं तद् द्रक्ष्यामः। न त दिदानीं पश्यामः। अतो ज्ञायते, न प्रसिद्धजीव रूपस्य निर्विशेषजीवरूपस्य तदन्यस्य वा ब्रह्मणः परिज्ञाना त्किञ्चि त्प्रयोजन मस्तीति॥

न मुक्तिः प्रयोजनम्। अनादिसिद्धसंसारस्य दूरपह्नवत्वा दित्येवं प्राप्ते ब्रूमः॥

सर्वथा समारम्भणीयं शास्त्रम्। प्रमाणैः संदिग्धतया विषयत्वसंभवात्। तन्निर्णयस्य सप्रयोजनत्वा च। यत् 'अयमात्मा ब्र'ह्मेत्यादिश्रुति रगु मेवाऽहङ्कारबद्धं ससारिणं ब्रह्मे त्यभिधत्ते तत एव संदेहः॥

निरस्तसमस्तोपप्लवकलङ्कनिरतिशयज्ञानानन्दादि शक्तिमहिमातिशयवत्वं हि ब्रह्मत्वम्। अनाद्यज्ञानत्रासनात्रष्टम्भादि जृंभितविचित्रकर्मफलभोगानुगुण

- -- --

अनादिसिद्धेति—संसारनिवृत्तिपूर्विका हि निरतिशयानन्दा वाप्ति. प्रयोजन मित्यभ्युप गम्यते। नचाऽनादे र्निवृत्तिः। द्रव्यस्य ज्ञानमात्रा न्न निवृत्तिः। सर्वजीवगतानर्थनिदान स्यैक पुरुषमोक्षकारणा न्निवृत्ति श्च न सम्भव तीति भावः। तस्मा द्विषयप्रयोजनासम्भवा दिदं शास्त्रं नारम्भणीय मित्याशयः॥

अनाद्यज्ञानेति—एवं विरुद्धधर्माधिकरणत्वा द्भाव्यं ब्रह्मणा जीवा दन्येन। तत श्च केनाऽभि प्रायेण जीवब्रह्मणोः सामानाधिकरण्यनिर्देश इति तद्वृत्ति र्वक्तव्या। एवं विषय मुपपाद्य प्रयो जन मुपपादयति तत्रेति—अय मिह क्रमः। विशिष्टाधिकारी 'मुमुक्षुणा ज्ञातव्यं ब्रह्म हि' मिति बहुविधवाक्यश्रवणाशा त्सन्देहे सति तज्जिज्ञासया तन्निर्णायक स्यास्य शास्त्रस्य श्रवणे प्रवृत्तः, तेन तदनुकूलयुक्त्यनुसन्धानात्मकेन मननेन च तन्निश्चित्य स्वरूप, प्रमाण, साधन फले स्तन्निश्चयतो लब्धेन भक्त्यतिशयेन निरन्तरसंचिंतेन तदुपासनेन तज्ज्ञानाकारे णाराधिततया स्वमुमुक्षोन्मुखस्य नित्यसिद्धापारकरुणासागरतया सर्वानुग्रहैककार्यस्य अत एव ब्रह्मविद्योपदेष्टृस्वमहादेशिकरूपेण स्वस्य श्रवणमननादिकं सम्पादितवत स्तस्यैव परब्रह्मणः प्रसा दातिशयेन पाशपटलप्रध्वंसपूर्विकां निरतिशयप्रकाशमानानन्दरूपां तदत्यन्तमाहश्यात्मिकां मोक्ष लक्ष्मीं प्रतिपद्यत इति। अत श्शाब्दज्ञानमात्रेण परमप्रयोजनस्याऽनभ्युपगमा त्प्रयोजनं च न पश्याम इति दूषणस्य नाऽवकाशः॥

पाशनिवृत्तौ 'प्रधानक्षेत्रज्ञपति र्गुणेशः', 'संसारमोक्षस्थितिबन्धहेतु' रिति प्रमाण सिद्धस्य हेतो स्सन्यासा दनादि र्न निवर्तत इति दूषणस्याऽपि नाऽवकाशः। निवृत्तौ प्रमाण सद्भावोऽपि निवृत्त्यभ्युपगमे तन्त्रम्। नतु सादित्व मनादित्वं वा। इदानी मुत्पन्नव्यक्ति विशेषानुभवेन तदज्ञानस्याऽनादे रपि निवृत्त्यभ्युपगमात्। गौतमसूत्रे प्यनादेः संसारस्य निवृत्तौ, 'प्रागुत्पत्ते रभावा नित्यत्वव' दिति प्रागभावनिवृत्तिं दृष्टान्तीकृत्य प्रागभावा

बहुशरीरप्रवेशनिर्गमव्यापारपरवशानिस्सीमतापसहिष्णुत्वं तु जीवत्वम्। कथ मेतयोः परस्परविलक्षणयो रेकभाव माहुः श्रुतय इति संशयः किं न स्यात्? अपि चैवमपि संदिह्यते। अन्नं ब्रह्म, प्राणो ब्रह्म, मनो ब्रह्म, विज्ञानं ब्रह्म, आदित्यो ब्रह्म, नारायणपरं ब्रह्म इत्यादयोऽन्य मन्य मर्थं ब्रह्मे त्याहुः। तत्र किंवा ब्रह्मेति बहुधा संदिग्धं ब्रह्म विचारार्हं भवति। तत्र श्रवणमननादिनिश्रि तस्य भक्तिज्ञानविशेषाभिमुखस्य परमकारुणिकस्य महादेशिकस्य सर्वानुग्राह कस्य शिवस्य परब्रह्मणः प्रसादातिशये नाऽस्याधिकारिणः प्रध्वस्तपाशपटला

संप्रतिपत्ता वनादिभावनिवृत्तौ दृष्टान्तेन भाष्य मि 'त्यनुशयेचाऽणुश्यामतानित्यत्वव' इति परमाणुश्यामतानिवृत्तिदृष्टान्तेनाऽनादिभावनिवृत्ति रभ्युपगता। एतेन द्रव्यस्य ज्ञानमात्रा न्निवृत्तिः। सर्वजीवगतानर्थनिदान स्यैकपुरुषमोक्षकारणा न्निवृत्ति श्च न सम्भव तीति दूषणान्तर मप्यनवकाशीकृतम्। तत्तन्मुच्यमानजीवावरणभूतानां मलशक्तीना मेव निवृत्त्यभ्युपगमात्। श्रवणमननध्यानसाक्षात्कारै रुपनीयमानभक्त्युपबृंहितैः प्रसन्नस्य शिवस्यैव मोचकत्वाभ्युप गमेन तस्य द्रव्यनिवर्तकत्वसम्भवा च्च। तदभ्युपगमप्रदर्शना यैव सर्वानुग्राहकस्येति विशेषणम्। प्रसादातिशयस्तु तद्व्यापारत्वे नोपन्यस्तः। ननु प्रसादातिशयो मुक्तिसाधनं, न परमेश्वर इत्यभिप्रायेण 'फल मत उपपत्ते'रि त्यधिकरणे परमेश्वरस्य फलसाधनत्वेन व्यवस्थापयिष्यमाण त्वात्। प्रसादेन परमेश्वरस्य सव्यापारीकरणे च श्रवणमननादिपुरुषप्रयत्न स्योपयोगः। लोके हि साधनं द्विविधं सिद्ध मसिद्धं चेति। तत्राऽसिद्धं कृष्यादिफलकामै नोत्पादनीयम्। सिद्धं कुठारादि सव्यापारीकरणीयम्। परमेश्वर श्च मोक्षे सिद्धरूपं साधन मिति मुमुक्षुणा निगलमोचनार्थिना राजेव सप्रसादेन सव्यापारीकरणीय इति॥

एवं शिवस्य मोचकत्व माविष्कर्तु मेव ब्रह्मविद्योपदेष्टृगुरुमूर्ति मभिष्ठाय स एव श्रवणा दीना मपि सम्पादक इति प्रदर्शनाय महादेशिकस्येति। पारम्यं करुणाया नित्यसिद्धत्वेन निरतिशयत्वेन च विवक्षितम्। एवं परमकारुणिक स्सर्वज्ञ स्सर्वशक्ति श्च सर्वा नपि युगप त्किमिति न मोचयती त्याशङ्कापरिहाराय प्रध्वस्तपाशपटले त्यत्र पाशः पटल मिवे त्युपमितसमा सेन मलाख्यस्य प्राथमिकसंसारपाशस्य नयनपटलसादृश्यं प्रदर्शितम्। यथा नयनानां पटलावरण मतिकारुणिकेनाऽपि भिषजा पक्वभावं प्रती क्ष्यैवाऽपास्यते। एवं परमेश्वरेणाऽपि पुंसां मलावरण मिति भावः। मलमायाकर्मरूपपाशसमूहार्थो वा पटलशब्दः। पाशपटलप्रध्वंसमात्रं नैयायिक मुक्तिव न्न स्वतः प्रयोजन मिति प्रयोजनरूपताप्रदर्शनाय प्रत्यक्षीभूतेत्यादिविशेषणम्। मुक्तौ

प्रत्यक्षीभूतनिरतिशयज्ञानानन्दस्वरूपा तत्समानगुणभागे कैवल्यलक्ष्मीः प्रयोजनं

ब्रह्मानन्दानुभवरूपपरमपुरुषार्थसद्भावप्रदर्शनार्थं प्रत्यक्षीभूतेत्यादि । ब्रह्मगुणानभिनिवेशप्रदर्श नार्थं तत्समानगुणभागेति विशेषणम् ॥

ननु, प्रथमसूत्रे ब्रह्मणो जीवादिरूपतया सन्दिग्धत्वप्रदर्शनेन विषयत्वोपपादकमितिचेत्, न । प्रथमसूत्रतः शास्त्रस्य प्रयोजनवत्त्वसिद्धिः । तत्र जीवादन्यत्वव्यवस्थापनेन तत्प्रसादलभ्य प्रयोजनोपपादकं चेत् ततो न विषयसिद्धिरितिचेदुच्यते । ब्रह्मणो जिज्ञास्यत्वे, सप्रयोज नत्वं च सूत्रकृता तस्य जिज्ञासाकर्मतानिर्देशेन सूचितम् । तस्मिन् ब्रह्मशब्दनिर्देशेन तदुभयोप पादनं कृतम् । तन्निर्देशे न हि किं तद्ब्रह्म यत्सामान्यतोऽवगतं विशेषतोऽनवगतं जिज्ञास्य मि त्याकाङ्क्षाया मधीतसाङ्गसशिरस्कवेदस्य 'अय मात्मा ब्रह्म', 'अन्नं ब्रह्म', 'मनो ब्रह्म', 'आदित्यो ब्रह्म', 'तपसा चीयते ब्रह्म', 'नारायणपरंब्रह्म', 'ऋतं सत्यं परं ब्रह्म' इत्यादीनि सर्वाणि ब्रह्मनिर्देशवन्ति वाक्यान्युपतिष्ठन्ते । न त्वय मात्मा ब्रह्मे त्येक मेव वाक्यम् । विनिगमनाविरहात् । एवं ब्रह्मशब्दनिर्देशेन न्यायागतसन्देहस्मारकेण सन्दिग्धत्वसूचनया विषयत्व मुपपादितं भवति । तस्य ब्रह्मशब्दस्याऽवगतशक्तिपर्यालोचनया श्रुतिप्रदर्शितनिरुक्त्यनुसन्धानेन तदर्थे निर्दोषत्वादिप्रतिपादकानेकवाक्यप्रदर्शनेन च लभ्यस्य भाष्योक्ततत्प्रवृत्तिनिमित्तस्य प्रदर्शकेन तेनैव ब्रह्मशब्दनिर्देशेन ब्रह्मणो जीवादन्यत्वसूचनया तत्प्रसादलभ्यपाशनिवृत्तिपूर्वक मनुभाव्यस्य तस्य प्रयोजनत्व मप्युपपादितं भवति । भाष्य प्रदर्शितायां हि ब्रह्मशब्दप्रवृत्तिनिमित्तभूतब्रह्मत्वनिरुक्तौ निर्दोषमङ्गलगुणत्वं ज्ञानानन्दनिद्ध निरतिशयज्ञानत्वं दुःखाननुविद्धनिरतिशयसुखादिमत्त्वं च ॥

ननु सर्वदा तापत्रयातुरस्य जीवस्य तत्सम्भवति । नाऽपि सर्वशक्तिमत्तया सकलतापप्रति क्षेपसमर्थस्य ब्रह्मण स्तापक्लेशासहिष्णुत्व मपि । एवं यस्य निरतिशयज्ञानानन्दादिगुणकस्य जीव रूपत्व मपि न सम्भवति, दूरं तस्याऽचेतनादिरूपत्वम् ॥

एवं निर्दोषनिरतिशयज्ञानानन्दादिमति ब्रह्मणि जीवादचेतनाच्चाऽन्यत्वेन प्रथम सूत्रगतब्रह्मशब्ददर्शितन्यायतः सिद्धे जीवादीना मन्यतम मन्यद्वेति सन्देहनिवृत्ता वपि नारायणपरंब्रह्मे त्यादिश्रुतिविप्रतिपत्तित स्तद्ब्रह्म नारायणः शिवो वेत्यादिसन्देहस्य अय मात्मा ब्रह्मे त्यादिवाक्यानां का गति रित्यादिसन्देहस्य चाऽनुवृत्ते रेवंभूतसन्देहसन्दोहप्रतिक्षेपाय जन्मादिसूत्रप्रभृति शास्त्रं प्रवर्तत इति नोक्तदोषावकाशः ॥

न न्वेवं ब्रह्मणो जीवान्यत्वनिश्चयेन प्रयोजनोपपादने तस्याऽपरिच्छेद्यत्व मापतति सोयं मयूरनृत्तन्यायः । यथा मयूरस्य नृत्यत एक एव पादो भूमौ प्रतिष्ठितो भवति । एव मिहाऽपि

च भवति। तत स्सविषयं सप्रयोजनं वेदान्तश्रवणम्॥

यदुक्तं ज्ञेयपरिच्छेदरूपत्वात् ज्ञानस्य तदपरिच्छिन्नब्रह्म विषयं न संभव तीति, त दज्ञानाविलसितम्। इद मिद मिति ब्रह्मणः परिच्छेदाऽसंभवेपि लक्षण मुखे नेतरव्यावृत्ततामात्रेण परिच्छेदसंभवात्। लक्षणेन परिच्छेदोहि सर्वत्र लक्ष्यविषय मितरव्यावृत्ततया ज्ञानम्। उद्दिष्टस्य ब्रह्मणो लक्षणे वेदान्तवाक्यै र्निरूपिते परीक्षिते च तल्लक्षणशून्येभ्यः सजातीयविजातीयेभ्य स्तदितरसकल

---

यदि जीव एव ब्रह्माऽभ्युपगम्येत तर्हि शक्य स्तस्य परिच्छेदः। तदपरिच्छेद्यत्वश्रुतीना मर्थवाद मात्रत्वप्राप्तेः प्रयोजनं तु नोपपद्यते। यदि ब्रह्म जीवा दन्यत् अनन्तमङ्गलगुणशक्तियुक्त मिह प्रसाध्येत तदा प्रयोजन मुपपद्यते। अपरिच्छेद्यन्तु ब्रह्म स्यात्। तदपरिच्छेद्यत्वश्रुतीनां तस्मि न्नर्थे बाधाभावा दित्यपु दोषं परिहर्तुं पूर्वपक्षदर्शिता मपरिच्छेद्यत्वशङ्का मनुवदति यदुक्त मिति॥

द्विविधः परिच्छेदः। करतलामलकव दीद मिद मिद मित्थ मिति परिच्छेद एकः। तदभावेपि लक्षणमुखे नेतरव्यावृत्ततामात्रेण परिच्छेदो द्वितीयः। त त्राऽद्यस्य ब्रह्म ण्यसम्भवेपि द्वितीयः सम्भवति। यथा, महासेनामध्ये रथगजतुरगभटवरविभूषणादियुक्तेषु बहुषु प्रभुषु दृश्यमानेषु सर्वत्राऽनिर्धारणे न राजबुद्धिप्रसक्तौ 'श्वेतच्छत्रं राजलक्षण' मित्युपदिष्टे यस्य श्वेतच्छत्रं तदाकारविशेषणादीनां दूरत्वादिदोषा दनिश्चियेऽपि अयं राजेति विशिष्य निर्धार यति। एवं वेदराशिमध्ये तत्तन्मन्त्रार्थवादादि प्रसिद्धमहिमातिशयेषु बहुषु विबुधेषु श्रूयमाणेषु सर्वत्राऽनिर्धारणेन परब्रह्मबुद्धिप्रसक्तौ यज्जगत्कारणं त ब्रह्मे त्युपदिष्टे यत्र जगत्कारणत्वं श्रुणोति तदेव ब्रह्मेति निर्धारयति। अतो नाऽपरिच्छेद्यत्वेनाऽविषयत्वप्रसङ्गः॥

ननु, ब्रह्मणः सर्वात्मना परिच्छेद्यत्वाभावे 'वेदान्तविज्ञानसुनिश्चितार्थाः', 'भक्त्या मा मभिजाना' तीत्यादिश्रुतिस्मृतिभ्यां सर्वात्मना परिच्छेदरूपेण ज्ञानेन प्राप्यतया वर्णितं प्रयोजनं न सिद्ध्ये दिति स दोष स्तदवस्थ इतिचे न्न। इतरव्यावृत्तत्वपरिच्छेदमात्रावलम्बनेनश्रवण मननयो रेकैकविद्योपसंहार्यगुणमात्रावगत्या निदिध्यासनस्य च निवृत्तौ साक्षात्कारकाले सर्वात्मना परिच्छेदसम्भवात्॥

नच, तथास त्यपरिच्छेद्यत्वभङ्गप्रसङ्गो दोषः। अपरिच्छेद्यत्वश्रुतीनां 'यतो वाचो निव र्तन्त' इत्यादिश्रुत्यन्तरानुसारेण मनोवागतीतत्वविषयत्वात्। नहि साक्षात्कारकाले ब्रह्म मनसा तद्गुणेयत्तादिप्रतिपादकशब्देन वा परिच्छिद्यते। किंतु निवृत्तावरणेन सर्वतः प्रसृतेन स्वाभाविक ज्ञानेनैव। य दाहुः—

पदार्थेभ्यो व्यावृत्तरूपं यत्, तदधीति जिज्ञास्यत। अत सामीचीनाय्यं ब्रह्म विषयः शास्त्रारम्भः। यदसन्दिग्ध मप्रयोजनं च तत्र खलु न प्रेक्षावतां विचार कक्ष्या मारोहति। अस्य तु वेदान्तशास्त्रविचारस्य प्रमाणयुक्त्याभासप्रतिभास वशात् सन्देहास्पदं ब्रह्म विषयो भवति। 'ब्रह्मविदाप्नोति परम','ज्ञात्वा शिवं शान्ति मत्यन्त मेति', 'ईशं तं ज्ञात्वा अमृता भवन्ति,' 'त मक्रतुं पश्यति वीतशोको धातुः प्रमादा न्महिमान मीशम', 'आत्मान मरणिं कृत्वा प्रणवं

शिवार्कशक्तिदीधित्या समर्थीकृतनिर्दृशा।
शिव शास्त्राचार्यैभि. मार्थ पश्य त्यात्मगताकृति. ॥ इति

तस्मा द्विषयप्रयोजनयो स्सिद्धिंन सिद्धं स्मपत्र. शास्त्रारम्भ इ त्याशये नोपसंहरति अत इति॥

एव मिह सूत्रगतब्रह्मशब्दशारिताप्यर्यालोचनालभ्येन ब्रह्मणो जीवा दन्यत्वाभिधानेन शास्त्रस्य प्रयोजनवत्ताया विधान्तरेण ब्रह्मणः सन्दिग्धतया तेन निर्णयनाय श्च उपपादनं सिद्धान्त भाष्यस्य तात्पर्य ग्राह्यम्। ब्रह्मणो जीवा दन्यत्वसन्देहेनैव शास्त्रस्य विषयप्रयोजनवत्त्वोपपादनं वाक्यस्य तात्पर्य मुन्नेयम्॥

प्रमाणयुक्त्याभासप्रतिभासवशा दिति—

प्रमाणाभासाः—नैयायिकाद्युक्तीता न्यष्टगुणत्वादिना ईश्वरादिसाधका न्यनुमानादीनि केवलाद्वैत्याद्युदाहृताः 'मायाभासेन जीवेशौ करोति। मायया चाविद्या च स्वय मेव भवति' 'नारायणपरं ब्र' मित्यादीनि वचनानि॥

युक्त्याभासाः—तत्तदनुग्राहककल्पनतर्कादयः। यदृश्यं तन्मिथ्या इत्याद्यनुमानानि। पूर्व श्रुतिविप्रतिपत्त्या ब्रह्मणि सन्देहो दर्शितः। इदानीं वादिविप्रतिपत्त्येति विशेषः। प्रयोजनस्याऽर्थप्राप्त्यनर्थनिवृत्तिरूपतया द्वैविध्यम्। प्रयोजनोपयुक्तानां ध्यान, साक्षात्कार, परमेश्वर प्रसादादीनां द्वारद्वारिभावस्य प्रापकानि श्रुतिवाक्या न्युदाहरति ब्रह्मवि दित्यादिना—ब्रह्मवित् हृदयगुहायां ब्रह्मोपासकः, परं महेश्वरं निरतिशयब्रह्मानन्दरूपं प्रयोजन मिति केचित्। तदसत्। परममुक्तेः परमेश्वरसायुज्यरूपत्वात्। 'त देपाम्युक्ता' इत्युदाहृतया ऋचा तथा विवृतत्वात्। अनेनाऽर्थप्राप्तिरूपं प्रयोजन मुक्तम्। ईशं तं ज्ञात्वे त्यनेन अमृता अमरणधर्माण इति पुनरावृत्तिराहित्योक्त्या ब्रह्मानन्दानुभवरूपस्य प्रयोजनस्य स्थायित्व मुक्तम्। अनेनाऽनर्थनिवृत्ति रूपं द्वितीय मपि प्रयोजनं व्यञ्जितम्। 'त मक्रतुं पश्य' ती त्यनेन, 'अणोरणीया न्महतो महीया' नि त्यल्पाधिकशरीरतत्तत्प्राणिहृदयगुहोपाध्यनुसारेणाऽणुमहत्तया ,अप्राकृतमहिमवन्त

च्चोत्तरारणिम्। ध्याननिर्मथना देव पाशं दहति पण्डितः', 'ज्ञात्वा देवं मुच्यते सर्वपाशै' रित्यादिश्रुत्यनुसारेण तदुपासनयाऽस्याऽधिकारिणः पाशविच्छेदलक्षणा मुक्तिः प्रयोजनं चास्तीति प्रथमाधिकरणेऽत्र प्रतिपादितम ॥

इति जिज्ञासाधिकरणम ॥१॥

मीशं धातु र्जगद्धारकस्य तस्यैव प्रसादा द्वीतशोकः सन् पश्यतीति ब्रह्मलोकप्राप्त्यनन्तरभाविनी 'स एतस्मा ज्जीवघना त्परात्परं पुरिशयं पुरुष मीक्षत' इति श्रुत्यन्तरप्रसिद्धं निरतिशयानन्दात्मकब्रह्मदर्शनरूपं सकलदुःखनिवृत्तिपूर्वकं परमप्रयोजनं साक्षात्कारणं तस्यैव परब्रह्मणः प्रसाद इत्याकूतम्। 'ज्ञात्वा देव' मित्यनेन मलमायाकर्मरूपतया पाशबहुत्वं दर्शितम्। आदिशब्देन 'भिद्यते हृदयग्रन्थि' रित्यादीनि श्रुत्यन्तराणि सङ्गृहीतानि। 'परीक्ष्य लोका' नित्यादौ, पूर्वपक्ष्युत्प्रेक्षितार्थपरत्वकल्पन मयुक्तम्। ततः 'तद्य थेह कर्मचितो लोकः क्षीयत' इत्यादिश्रुतिदर्शित कर्मप्राप्यस्वर्गाऽऽदिसकललोकाऽनित्यत्वप्रतिपादनपरताया एव तदर्थप्रत्यभिज्ञयाऽवधार्यमाणत्वादिति ग्राह्यम् ॥

इदं सूत्रं केवलाद्वैतिनां पक्षे न सङ्गच्छते। तन्मते विषयप्रयोजनयो रनुपपत्त्या शास्त्रस्याऽनारम्भणीयत्वात्। तथाच, विषयः किम्—ब्रह्म? उत भेदमिथ्यात्वम्? आहोस्वित् जीवब्रह्मणो रैक्यम? न प्रथमः, ब्रह्मणो वेद्यत्वानभ्युपगमात्। वेद्यत्वे घटादे रिवाऽननुभूतित्वप्रसङ्गात्। व्यावहारिकं वेद्यत्व मस्तीति चेत् घटस्याऽपि वेद्यत्वं व्यावहारिक मिति तद्वदेवाऽननुभूतित्वप्रसङ्गो दुर्वारः स्यात्। वेद्यत्वेऽननुभूतित्वप्रसङ्ग मनादृत्य ब्रह्मणो वेद्यत्वाङ्गीकारेऽपि तस्य शास्त्रविषयत्व मयुक्तम्। ब्रह्मण स्सन्मात्रत्वं, सन्मात्रस्य प्रत्यक्षग्राह्यत्वं चाऽभ्युपगच्छत स्तव मते शास्त्रानर्थक्यस्य दुर्वारत्वात्। अप्राप्तेऽहि शास्त्र मर्थवत्। न द्वितीयः। दृश्यत्वादिना लिङ्गेन भेदमिथ्यात्व मभ्युपगच्छत स्तव मते शास्त्रानर्थक्यस्याऽपरिहार्यत्वात्। तत्तद्धर्मिग्राहकप्रत्यक्षादिप्रमाणविरुद्धस्य प्रपञ्चमिथ्यात्वस्य यूपादित्यैक्य स्येव शास्त्रेण प्रतिपादनाऽयोगात् शास्त्रस्य निर्विषयत्वं स्यात्। अप्राप्ते हि शास्त्र मर्थवत् ॥

तृतीय श्च कल्पोऽनुपपन्नः। ब्रह्मणोऽपि वेद्यत्वप्रसङ्गात्। नहि घटपटयो रेकत्व मुच्यते शास्त्रेण। अपितु जीवब्रह्मणो रेकत्वम्। तदानीं ब्रह्मशब्देन ब्रह्म ण्यनवबोधिते कथं तस्य जीवस्य चैक्यं वक्तुं शक्यते। नहि जीव एक इत्युक्ते जीवब्रह्मणो रैक्यं सिध्यति। घट एक इत्युक्ते घटपटैक्यवत्। किं च, उपदिश्यमान मैक्यं किम्—ब्रह्मस्वरूपानतिरिक्तम्, उताऽतिरिक्तम्? अनतिरिक्तत्वे स्वरूपवेद्यत्वपक्ष एव स्यात्। तथा चोपदेशवैयर्थ्यादिदोषप्रसङ्गः, स्वरूपमात्रस्य प्रतिपन्नत्वात्। अतिरिक्तत्वे त त्किं परमार्थभूतम्? उताऽपरमार्थभूतम्? प्रथमे निर्विशेषत्व

सङ्गः। द्वितीये ज्यौतिक्यदेहात्मैक्यापारमार्थ्ये ज्यात्मभेदः देहात्मभेदः पारमार्थ्येन जीवब्रह्मभेद पारमार्थ्यं स्यात् ॥

किञ्च, जीवब्रह्मणोरैक्यं नाम किं सन्तःकरणस्य जीवस्य ब्रह्मणा ? उत जीवत्वच्छिन्नान्तःकरणस्य संनिहस्य, आहोस्वित् अन्तःकरणावच्छिन्नजीवत्व कल्पितस्य ? न प्रथमः अनभ्युपगमात्, तदनुपपत्तेश्च। अभिन्नत्वे ज्ञातप्रतीति रस्ति वा ? न वा ? नेत्येकत्वोपदेशवैयर्थ्यम्। अस्तित्वे द्वन्द्वमिथ्यात्वोपदेश एव वाक्योपदेश स्यात्। भेदमिथ्यात्वस्य अनुमान मिथ्यात्वाभिमानात् शास्त्रस्य निर्विषयत्वं स्यात्। भेदपारमार्थ्यं दृश्यत्वानुपपत्ति रित्यादितर्कानुगृहीतं शास्त्रं भेदमिथ्यात्वे प्रमाण मिति न शास्त्रस्य निर्विषयत्व मिति चेन्न। धर्मश्च द्विमात्रं न स्या दिति तर्कानुगृहीतेन 'न हिंस्या' दिति शास्त्रेण वैषम्यात्कर्मतस्याऽधर्मत्वप्रतिपादनानुपपत्तिव च्छास्त्रसिद्धभेदस्य शास्त्रेण मिथ्यात्वप्रतिपादनानुपपत्तेश्च ॥

एवं प्रयोजनं च न घटते। तथा हि, प्रयोजनं द्विविधं शास्त्रस्य। अवान्तरप्रयोजनं, तत्साध्यं परमप्रयोजनं चेति। तत्र बन्धनिवर्तकज्ञानमवान्तरम्। मोक्षस्तु परमप्रयोजनम्। तत्रेदानी मुपजायमान वाक्यजन्यं ज्ञान मनिवर्तक मित्यभिप्रायः। वसिष्ठ पराशरद्वैपायनादीना मप्युत्पन्नं ज्ञान मन्येषा मुत्पत्स्यत इत्यसम्भावितम्। तेषा मुत्पन्नं चेद् द्वन्द्वप्रतिभासो न स्यात्। स निवर्तिष्यत इतिचेत्, तत एव तदभिन्नाना मन्येषा मपि निवर्तिष्यत इति न शास्त्र मारम्भणीयं स्यात्। प्रपञ्चस्य सत्यत्वा देव ज्ञाननिवर्त्यत्वाभावात् ज्ञाननिवर्तक ज्ञान नाऽवान्तरफल मिति न तदर्थं शास्त्र मारम्भणीयम्। परमप्रयोजनं च न सिध्यति। ज्ञातृज्ञेय भेदस्य सत्यस्य निवृत्ते रसम्भावितत्वात् ॥

किञ्च, शास्त्रश्रवणाधिकारो ज्ञप्तिमात्रस्य वा ? ज्ञातु र्वा ? न प्रथमः। ज्ञप्तिमात्रस्य श्रोतृत्वायोगात्। न द्वितीयः। ज्ञातुः स्वनाशस्याऽपुरुषार्थत्वेन श्रवणादौ प्रवृत्त्यनुपपत्तेः। यत्सम्बन्धि सुखं दुःखनिवृत्तिश्च पुरुषार्थः स स्व अहमर्थः। अहं निर्दुःख स्सुखी स्या मिति हि प्रतीतिः। तस्य पुरुषार्थयतो नाशः कथं पुरुषार्थः ? पुरुषार्थान्तरं वा कथ मर्थयितु स्तस्याऽभावे पुरुषार्थो भवेत्। एवं विषयप्रयोजनयो रनुपलम्भा न्निर्विशेषत्ववादिनां पक्षे प्रकृतमत्र समञ्जस मेवेति सिद्धम् ॥

इदं सूत्रं शिवेतरदेवतापरत्ववादिनां मध्वरामानुजादीनां मतेऽपि न समञ्जसं। तथा च प्रकृतसूत्रे निबद्धस्य निरुपपदस्य ब्रह्मपदस्य शिवासाधारणाभिधानत्वेन तत्तदभिमतदेवतानां ब्रह्म पदवाच्यत्वं न सिध्यति। तथाहि, 'एक मेवाऽद्वितीयं ब्र' ह्मे त्यादिना श्रुतिषु श्रूयमाणस्य ब्रह्मशब्दस्य 'एक एव रुद्रो न द्वितीयाय तस्थु' रित्यादिना समानार्थकवाक्येषु निरुपपदस्य ब्रह्मशब्दस्य शिव एव वाच्य इति भगवती श्रुति रेव स्पष्टीकरोति ॥

अथ जन्माद्यधिकरणम् २

इहोद्दिष्टस्य ब्रह्मणो य न्निश्चायकं तल्लक्षणं कि मित्याकाङ्क्षायां तल्लक्षणाऽभिधायक द्वितीयाधिकरणमत्र मवतारयति भगवान् सूत्रकारः ॥

## जन्मा द्यस्य यतः ॥ १–१–२ ॥

ज्ञाते लक्ष्ये लक्षणवैयर्थ्या दज्ञाते तदाकाङ्क्षानुपपत्तेः कथ मत्र ब्रह्मणो लक्षणकथनप्रसङ्ग इति न शङ्कनीयम। अध्ययना दापाततो ज्ञाते ब्रह्मणि

---

किंच, प्रकृतमीमांसारचयिता भगवा न्पाराशर्योऽपि स्वकृतौ महाभारते

युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः
माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणा श्च ॥

इति धर्ममयमहावृक्षमूलतयाऽभिमतं शिवं निरुपपदब्रह्मपदं प्रयुञ्जानः स्वीयायां मीमांसायां निबद्धस्य ब्रह्मपदस्य शिव एवाऽभिधेय इति विशदीकरोति ॥

ननु, ब्रह्मपदं शिवपर मिति नाऽद्यापि सम्प्रतिपन्नम्। अस्ति हि ब्रह्मपदस्य विष्णौ ब्राह्मणजातौ, वेदे, तपसि च व्यवहार इतिचे दुच्यते। तत्र विष्णो र्द्विजानां च पृथग्ग्रहणात्, वेदतपसो रचेतनयो श्चेतनमध्ये पाठाङ्गीकारे प्रायपाठविरोधेन च नैतेषां ग्रहणं युक्तम्। किन्तु तेभ्योऽन्यस्यैव कस्यचि द्वृक्षस्थितौ मूलस्येव राजभावोपगूढधर्ममययुधिष्ठिरस्थितौ कारण भूतस्य ग्रहणं युक्तम्। अत स्तादृशस्य शिवस्यैव पारिशेष्या द्ब्राच्यत्व मत्रार्थम। एवं श्रुत्यन्तव्यव हारेण प्रकृतमीमांसाकर्तृव्यवहारेण च ब्रह्ममीमांसानिबद्धस्य ब्रह्मपदस्य शिवैकान्तिकत्वावगमेन शिवेतरदेवतापरत्ववादिना मिदं सूत्र मसङ्गत मेवं त्यलम् ॥

इति जिज्ञासाधिकरणम्

—————

अथ जन्माद्यधिकरणम् २

द्विविधो लक्षणदोषः, लक्षणसामान्यदोषः, लक्षणविशेषदोष श्चेति। तत्र लक्षणसामान्ये तद्दोषनिराकरणेन लब्धोन्मेषे विशिष्य ब्रह्मलक्षण मुदाहृत्य तस्य दुष्टत्वाऽदुष्टत्वचिन्तन मवकाशं लभत इ त्यभिप्रेत्य लक्षणसामान्यदोषं ताव न्निराकर्तु मुद्भावयति ज्ञात इत्यादिना—अध्ययना दिति ॥

धर्मरूपाणि पञ्चकार्याणि। यद्य प्यनुग्रहः परमेश्वरधर्मः, तथा प्यत्राऽनुग्रहशब्देन तत्साध्या संसारिवर्गधर्मरूपा बन्धनिवृत्ति र्लक्षणीया। प्रपञ्चधर्मसाहचर्यात्। किं च, अनुगृह्णातिः कृतार्थी भवननिदानं कृतार्थीभावनं वर्तते। एवं चात्राऽनुग्रहस्य परमेश्वरधर्मत्वेऽपि कर्मणः कर्तृत्वविवक्षया प्रपञ्चधर्मत्व मप्युपपद्यते। तथा च, अनुगृह्णाति भक्तं परमेश्वरः। कृतार्थीभवन्तं कृतार्थीभावय तीत्यर्थः। यदा तु भक्तस्य भक्तियोगयादिसौकर्यातिशयवशा त्परमेश्वरव्यापारो न विवक्ष्यते तदा कृतार्थीभवनमात्रेऽनुगृह्णाति र्वर्तते। एवं चानुग्रहस्य प्रपञ्चधर्मत्व मप्युपपद्यते॥

ननु, अनाद्यावरणरूपस्य तिरोभावस्य कथं परमेश्वरकर्तृकत्वम्? उच्यते। अनादित्वेऽपि तस्य तत्कर्तृकत्वं युक्तम्। तथा हि, सर्वज्ञत्वेन सर्वेषां संसारिणां दुःखं जानतः सर्वशक्तिकत्वेन सर्वा नपि ता न्युगप देव मोचयितुं शक्तस्य परमेश्वरस्य शिवशङ्करादिनामख्यापिता सर्वभूत विषयिणी करुणा निरुपाधिः परदुःखप्रहाणेच्छारूपा तेषा मनादिभवसञ्चितनानाविधदुःखजनक कर्मबृन्दसामर्थ्यं परिभूय सर्वानर्थमूलावरणोच्छेदपूर्विका मात्यन्तिकदुःखनिवृत्तिं तेषां युगप देव कथं न कुर्यात्। यदि तस्य तत्तत्कर्मानुवर्तनस्वभावतया तेषां सकलकर्मबृन्ददाहकस्वविषय साक्षात्कारोदयपर्यन्तेषु सहजकरुणोन्मेषविरोधिनस्तदावरणानुवृत्तिसङ्कल्पो न स्यात्। तत स्तथा भूतसङ्कल्पावश्यम्भावे तदधीनानुवृत्तिक स्याऽवरणस्य यस्मि न्सत्य त्यग्रिमक्षणे यस्य सत्त्वं यद्व्यति रेके चाऽसत्त्वं त त्तज्जन्य मिति लक्षणानुसारेण तस्य तज्जन्यत्वसिद्धौ परमेश्वरकर्तृकत्व मपि तस्य सिध्यति। कार्यानुकूलसङ्कल्पवत्त्व स्यैव कर्तृलक्षणत्वात्॥

ननु, स्थितिः कथं परमेश्वरकार्येषु परिगण्यते। सृष्टं याव न्न संहरति ताव त्तस्य स्थितिः स्वत एव सिद्धः। यदि हि संहर्ताऽन्यः प्रसक्तः स्या त्तदा संहारे प्रवृत्तस्य तस्य निवारणं कार्य मिति राज्यस्थितौ राज्ञ इव प्रपञ्चस्थिता वीश्वरस्याऽपेक्षा स्यात्। परमेश्वरः स्वयं याव न्न संजि हीर्षति ताव त्तस्य नान्यो नाशकः प्रसज्यते। सत्यम्। घटादिस्थितौ कुलालादिकर्त्रपेक्षाभावेऽपि मृदाद्युपादानापेक्षाऽस्त्येव। परमेश्वरः प्रपञ्च स्योपादान मपीति प्रपञ्चस्थितौ तदपेक्षा केन वा वार्यते। किंच जन्मवतः प्रपञ्चस्य यावन्नाशं स्थिति रुह्यमानजलकुम्भस्य स्थिति र्देवदत्तस्येव परमेश्वरस्य धारणव्यापार मपेक्षते। स च व्यापारो जन्मव दिदं यावन्नाश मित्थं तिष्ठ त्वित्याज्ञा रूप स्तस्य सङ्कल्प एव। 'एतस्यैवाऽक्षरस्य प्रशासने गार्गि! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। द्यावापृथिव्यौ विधृते तिष्ठत' इत्यादिश्रुतेः। 'अक्षर मम्बरान्तधृतेः', 'सा च प्रशासना' दिति सूत्रयो स्तथैव प्रतिपादयिष्यमाणत्वा च्च। अपि च, 'परा तु तच्छ्रुतेः', 'अन्तर्या म्यधिदैवादिषु तद्धर्मव्यपदेशा' दित्यधिकरणयोः सर्वस्याऽपि चेतनाचेतनव्यापारस्य परमेश्वर प्रेरणाधीनत्वस्य व्यवस्थापयिष्यमाणत्वा च्च। तस्मा त्सौत्रेण जन्मादिशब्देन परमेश्वरकर्तृकं जन्मादिप्रपञ्चधर्मपञ्चकं ग्राह्य मिति युक्त मेव। जन्मादीति नपुंसकनिर्वाहार्थं भाष्ये कृत्स्न

प्रपञ्चविलासस्य यतो यस्मात्तत् ब्रह्मेति शेषः ॥

यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद् ब्रह्मेति ', ' प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ', ' सत्यं ज्ञानमनन्तं ब्रह्म ', ' ऋतं सत्यं परं ब्रह्म पुरुषं

मिति बहुव्रीहिलभ्यान्यपदार्थप्रदर्शनम् । एवं सौत्रं जन्मादिपदं व्याख्यातम् । अथास्येति पदं व्याख्येयम् । चेतनेति — चेतनाचेतनयोः सम्मेलनं शरीरशरीरिभावेन सम्बन्धः । तेन समरसीभूतस्य विशिष्टात्मनैकीभावं प्राप्तस्येत्यर्थः । प्रपञ्चविलासस्येति — प्रपञ्चो विलास इव प्रपञ्चविलासः । तस्य लीलाकृतमन्दस्मितादिवदनायासपूर्वकस्य प्रपञ्चस्येत्यर्थः । एतस्यास्येत्येकवचनमेककार्यत्वं परमेश्वरं प्रत्ययत्नसाध्योऽयं विचित्रानन्तकार्ययुक्तः प्रपञ्च इत्येतत्सूचनार्थमित्ययत्नसाध्यत्वलक्षकेन विलासशब्देन दर्शितं भवति । तेनापि परमेश्वरस्यापरिच्छेद्यानन्तशक्तिमत्स्वरूपमहिमविशेषसिद्धिः । एवमस्येति पदं व्याख्यातम् । यत इति पदं व्याख्येयम् ॥

' विभाषा गुणेऽस्त्रियाम् 'मिति गुण एव हेतौ पञ्चमीविधानेन द्रव्ये ब्रह्मणि हेतौ पञ्चम्यसम्भवादितीमां शङ्कां निराकर्तुं व्याचष्टे यतो यस्मादिति — ' पुत्रात्प्रमोदो जायते ' इत्यादिप्रयोगदर्शनात् ' विभाषा गुणेऽस्त्रियाम् 'मिति सूत्रे विभाषेति योगविभागेनाऽगुणवचनेभ्योऽपि हेतौ पञ्चमी समर्थनीयेति भावः । हेताविति सूत्रविहितहेतुतृतीयान्ताद्व्यत्र तसिल्प्रत्यय उपपद्यते । ' इतराभ्योऽपि दृश्यन्ते ' इति तृतीयान्तादपि तद्विधानादित्यपि द्रष्टव्यम् । सूत्रस्यापेक्षितं पूरयति । तद्ब्रह्मेति शेष इति — यत्पदाक्षिप्ततत्पदाध्याहारेण पूर्वसूत्रगतब्रह्मपदानुषङ्गेण योजनीयमित्याशयः । एवं प्रदर्शितस्य लक्षणस्य पूर्वपक्षसिद्धान्ताभ्यां शिवैकान्त्यव्यवस्थापनार्थमधिकरणशरीरप्रदर्शनाय विषयवाक्यमुदाहरति यतो वेति ॥

प्रधानेति — ' स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः ' इति मन्त्रस्य पूर्वभागः । आत्मयोनिः स्वयम्भूः । आत्मनां योनिर्वा । कालकालः कालस्य क्षणादिनिचयस्य वैवस्वतस्य वा नियन्ता । गुणी सत्यसङ्कल्पत्वादिकल्याणगुणसम्पन्नः । सर्वा विद्या अस्येति सर्वविद्यः सर्वविद्याधिष्ठाता । ' ईशानः सर्वविद्याना 'मिति श्रुतेः । प्रधानक्षेत्रज्ञयोः प्रकृतिपुरुषयोः पतिः पालकः । गुणेशः त्रैगुण्यनियन्ता । संसारः संततं सरणमिह परत्र च गताऽऽगतम् । तेन जन्मप्रलययोर्ग्रहणम् । बन्धः तिरोभावः । सूत्रे कृत्यपञ्चकं गृहीतमित्यस्य यत इति पञ्चम्या हेत्वर्थकत्वस्य स्पष्टीकरणार्थं विषयवाक्यान्तरोदाहरणम् । अनपायगुणद्वारकं तथाभूतविग्रहद्वारकं च स्वरूपलक्षणमप्यनेन सूत्रेण विवक्षितमिति दर्शयितुं ' सत्यं ज्ञानं ', ' ऋतं

कृष्णपिङ्गलम । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नम ' इत्यादिवाक्यं विषयः॥

अत्र जगतो जन्मादिकं ब्रह्मणो लक्षणतया संभवति नवेति सन्देहः । न संभवति, सम्बन्धाभावात् । किञ्च, ' आनन्दो ब्रह्मेति व्यजाना ' दित्यत्राऽऽनन्दस्य जगज्जन्मादिलक्षणं पर्यवस्यति । अन्यत्र ' सदेव सोम्येद मग्र आसी ' दिति सतो जगत्कारणत्व मवगम्यते । ' सत्यं ज्ञान मनन्तं ब्र' ह्मेति ज्ञान मेवाऽपरिच्छिन्नं जगत्कारणं ब्रह्मे त्येकत्र विज्ञायते । अपरत्र च ' यदाऽतम स्त न्न दिवा न रात्रि र्न स न्न चास च्छिव एव केवल' इति शिवशब्दवाच्यं वस्तु कारण त्वेन सकलपूर्वभावि ब्रह्मेति विज्ञायते । अत्रानन्दादीनां ब्रह्मत्वे विकल्पो वा ? समुच्चयो वा? विकल्पे श्रुतहान्यादिदोषप्रसङ्गोऽव्यवस्था च । व्यवस्थितविकल्पेऽपि ब्रह्मानेकत्वप्रसङ्गः । समुच्चयपक्षे तेषां धर्मरूपत्वा न्निखिलजगन्निर्माणोपाय ज्ञानविशेषविशिष्टब्रह्मत्वाऽसंभवः । अपि च ' मायां तु प्रकृतिं विद्या ' दिति श्रुति र्मायाया अचेतनाया जगत्कारणत्व मभिधत्ते तदेव युक्तम् । ब्रह्मणो ज्ञान रूपस्य जगत्कारणत्वे तस्य विकारापत्त्या ' निष्कलं निष्क्रियं शान्त ' मित्यादि श्रुतिभङ्गप्रसङ्गः । अतः सर्वथाऽपि ब्रह्मणो जगत्कारणत्वादिलक्षण मभिधातु मशक्य मित्येवमादौ पूर्वपक्षविक्षेपे प्राप्ते ब्रूमः ॥

यद्यपि जन्मादे र्जगन्निष्ठत्वेन ब्रह्म ण्यसम्बन्धः, तथापि ताटस्थ्येन

सत्य ' मिति मन्त्रयो रुदाहरणम् । ताटस्थ्येनेति — यथा शाखाग्रस्य चन्द्रलक्षणत्वं तद्व दिति भावः । एतेन लक्षणसामान्यप्रयोजनासम्भवशङ्का निराकृता । अथ विशिष्य ब्रह्मलक्षणस्य विवक्षितं प्रयोजनं न सम्भव तीति शङ्कां परिहर्तु मुपक्रमते य दित्यादिना ॥

शिवो निरतिशयबृहत्त्वशाली । जगज्जन्मादिसमुदायादिहेतुभावेन प्रकृतलक्षणस्य विशिष्य विवक्षित मपि प्रयोजनं सम्भवति । बहुषु कारणत्वप्रतिपादकवाक्यानां मुख्यार्थाऽसम्भवेन किंचिद्विषयाणा मेव तेषां मुख्यार्थपरत्वे वक्तव्ये किं विषयवाक्यानां त द्युक्त मिति तत्र न्यायगवेषणायां शिवस्य पञ्चकृत्यकारित्वोपपादकसर्वज्ञत्वादिरूपषडङ्गप्रसिद्ध्या जन्मादिकारणत्व

लक्षणत्वं युज्यते। यत् सर्वज्ञत्वादिविशिष्टं महाभिधानाधिकरणं शिवतत्त्वं तदेव जगत्कारणं ब्रह्मेत्युच्यते। आनन्दादीना मत्रैव धर्माणां पर्यवसानं भवति। सर्वज्ञत्वं, नित्यतृप्तत्व, मनादिबोधत्वं, स्वतंत्रत्व, मलुप्तशक्तित्व, मनन्तशक्तिमत्त्वं चेत्येतानि सर्वज्ञतादीनि। नित्यापरोक्षानपेक्षितसाधककरणादिकज्ञानानुभव विषयनिखिलवस्तुत्व मिह सर्वज्ञत्वम्। 'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं

तदुपपादकप्रवृत्तिनिमित्तशिवाऽऽदिनामाऽष्टकाऽभिधेयत्वप्रसिद्ध्या च नारायणादीनां कारण वाक्यानां यथाश्रुतार्थपरत्वस्य न्याय्यत्वाऽवधारणात्। जन्मादिकारणत्वोपपादकगुणजातस्य तत्र कल्पनया तदाक्षेपाऽनपेक्षणेन बुद्धिलाघवम्। जन्मादिकारणत्वप्रवृत्तिनिमित्तकनामाष्टक संवाद एवेत्याशयेन सर्वज्ञत्वादिविशिष्टं महाभिधानाधिकरण मिति निरूपणक्रम गृणन्यगाम्। शिवशब्दप्रवृत्तिनिमित्तपर्यालोचनया प्युक्तार्थसिद्धि मभिप्रेत्य तेन शिवतत्त्वनिर्देशः कृतः। शिव एव तत्त्वं शिवतत्त्वम्। तत्त्वशब्देनाऽत्र कालत्रयवर्ति शाश्वतं वस्तूच्यते। अत एव 'ब्रह्म वेदा ब्रह्मतपो ब्रह्मज्ञानं च शाश्वत' मिति प्राचीननानार्थकोशमङ्खाख्ये, 'वेद स्तत्त्वं तपो ब्रह्म' त्यमर कोशे शाश्वतज्ञानशब्दस्थाने तत्त्वशब्दप्रयोगः। एवं चाऽत्र तत्त्वशब्दप्रयोगेण शिवस्य 'न सन्न चाऽसच्छिव एव केवल' इति मन्त्रोक्तसर्गाद्यकालावस्थायित्वप्रदर्शनेन कारण वाक्यान्तरेभ्यः प्रबलेन तेनाऽपि जगत्कारणत्वस्य शिवैकान्त्यसिद्धि रिति सूच्यते। एवं षडङ्गनामाष्टकशिवशब्दप्रवृत्तिनिमित्त यदातमोमन्त्रप्राबल्यपर्यालोचनया सर्वकारणरूपताऽपि छागपशुन्यायेन शिव एवाऽवतरतीत्याह आनन्दादीना मिति—एवं च सर्वज्ञत्वादिविशिष्ट मित्यादिना संक्षिप्त मर्थजातं प्रपञ्च नोपपादयति सर्वज्ञत्व मित्यादिना, 'अत आनन्दादीनां विकल्पादिचिन्ता निरर्थिके' त्यन्तेन ग्रन्थसन्दर्भेण। तत्र सर्वज्ञत्वादिषट्कं प्राणिनिकायस्य तत दनुष्ठितकर्मज्ञानानुसारेण वैषम्यनैर्घृण्ये विनाऽनादिकालप्रवृत्तपञ्चकृत्यकर्तृताया मुपयुज्यते। यः खलु सृज्य, पालनीय, संहार्य, तिरोभावनी, यानुग्राह्यजात मशेषविशेषसंहित मनादिसिद्ध बोधेन सदा प्रत्यक्ष मनुभवति तदनुकूलाऽनाद्यमलुप्तैश्वर्यशक्तिशाली च भवति, सर्वं च प्रपञ्च मभितिष्ठति, स्वयं निरतिशयानन्दनित्यतृप्ततया स्वतःसिद्धतत्त्वात्मनोऽभोपहतभक्ताऽभक्तविषय रागद्वेषोन्मेषतया च स्वार्थपरार्थप्रयुक्तसृष्ट्यादि वैषम्यनैर्घृण्यरहित श्च भवति, स एवाऽस्य प्रपञ्च स्योक्तविधया पञ्चकृत्यानि कर्तुं शक्नोति। अलुप्तशक्तिकत्व मनन्तशक्तिमत्त्वं च प्रपञ्चोपादानभावे प्युपयुज्येते। भाष्ये सर्वज्ञतादिषु कस्यचि त्क्वचि दुपयोगवर्णनं यथार्ह मन्यत्रा प्युपयोग स्योपलक्षणम्। एवं नामाष्टके शिवशब्दे च यथासम्भवं जन्मादिकारणत्वतदुपपादक प्रवृत्तिनिमित्तके भाष्यकृतां कस्यचि त्कयाचि द्व्युत्पत्त्या प्रवृत्तिनिमित्तप्रदर्शनं व्युत्पत्त्यन्तरेण

तप' इत्यादिभि रिदं ब्रह्मग स्सिद्धम्। अनेन सकलचेतनबहुविधकर्मफलभोगानुकूलतत्तच्छरीरनिर्माणोपायसामग्रीविशेषज्ञं ब्रह्म निमित्तं भवति। निरस्तसमस्तोपप्लवकलङ्कनिरतिशयानन्दपरिपूर्णत्व मिह नित्यतृप्तत्वम्। अत एव आनन्दो ब्रह्मेति श्रूयते। यः खलु 'अन्योऽन्तर आत्माऽनन्दमय' इति प्रस्तुत्य 'सैषाऽनन्दस्य मीमांसा भव' तीत्यारभ्य अभ्यासा न्निरतिशयानन्दशिरस्कत्वेन 'स एको ब्रह्मण आनन्द' इति निरूपितः, परब्रह्मधर्मत्वेन च स एव आनन्दो ब्रह्मेति प्रचुरत्वात् ब्रह्मत्वे नोपचर्यते। तादृशानन्दभोगरसिकं ब्रह्म नित्यतृप्त मित्युच्यते। ब्रह्मणो मनसैव महानन्दानुभवो न बाह्यकरणद्वारा। तथाहि श्रुतिः 'आकाशशरीरं ब्रह्म सत्यात्म प्राणारामं मनआनन्दम्। शान्तिसमृद्ध ममृतम्' इति। आकाशत इत्याकाशः, प्रकाश श्चिदम्बर मुच्यते न भूताकाशः, विशेषाभावात्। निखिलजगदण्डषण्डबुद्बुदनिकुरुम्बजलधिस्था

सम्भवतां प्रवृत्तिनिमित्तान्तराणा म प्युपलक्षणम्। प्रस्तुत्येति — 'अन्योन्तर आत्माऽनन्दमयः। तस्य प्रिय मेव शिरः' इत्यादिप्रियमोदाद्यात्मकसुखविशेषरूपशिरः पक्षाद्यवयवयुक्तत्वेनानन्दमयं प्रस्तुत्ये त्यर्थः। तेन सैन्धवखिल्ये लवणरसविरोधिनो रसान्तर स्ये वाऽनन्दमये प्रमोदादिरूपसर्वावयवयुक्ते सुखविरोधिनो दुःख स्याऽनुप्रवेशो नास्ती त्याद्यविशेषणार्थसद्भावः सूचितः। निरतिशयशिरस्कत्वे नाभ्यासा दित्यनेन द्वितीयविशेषणाऽर्थो दर्शितः। ब्रह्मण आनन्द इति श्रुतिभागोदाहरणेन आनन्दस्य ब्रह्मधर्मत्वं दर्शितम्॥

ननु, ब्रह्मधर्म स्तथाभूतानन्दः कथ मिह वाक्ये ब्रह्मेति व्यपदिश्यत इ त्याशङ्क्य 'तद्गुणसारत्वा' दिति वक्ष्यमाणन्यायेनाऽभेदोपचारा दित्याह प्रचुरत्वा द्ब्रह्मत्वे नोपचर्यत इति॥

सर्वज्ञत्वनिरुक्ता वनपेक्षितबाह्यकरणेति करणे बाह्यत्वविशेषणेन सूचितं ब्रह्मणो मनःसद्भाव मिहाऽनन्दानुभवोपयोगितया निरूपयति मन सैवेति, न बाह्येति — स्रक्चन्दनादिविषयसुखानुभववद्बाह्यकरणं परम्परयाऽपि नाऽपेक्ष्यत इत्यर्थः॥

न न्वाकाशशब्दः प्रसिद्धिप्राचुर्या द्भूताकाशपरः स्या दित्याशङ्क्याह विशेषाभावादिति— सर्वप्रपञ्चशरीरकस्य भूताकाशशरीरप्रतिपादनमात्रेण न कश्चि दतिशयो वर्णितो भव तीत्यर्थः। प्रसिद्धभूताकाशरूपाम्बरव्यतिरेकेण कि मिदं चिदम्बरं नामे त्याकाङ्क्षाया माह निखिलेति—

बाह्यकरणनिरपेक्ष मन्तःकरण मस्तीति। अतो बाह्यकरणनिरपेक्षेण शुद्धबोध शक्तिरूपेण मनसा स्वरूपानन्द मनन्त मनुभवत् ब्रह्म नित्यतृप्तम्। न तस्य कदाऽपि बाह्यमांसारिकसुखलवाऽपेक्षा भवतीत्यर्थः। स्वतःसिद्धनिरतिशयज्ञानवत्त्व मनादिबोधत्वम्। यत्स्वरूपानन्दानुभवसाधन मन्तःकरणं ज्ञानं त दनादिसिद्ध मेव। अतोऽनादिबोधं ब्रह्म संसारनिवर्तकस्य ज्ञानस्याऽनादिसिद्धत्वात् नित्यनिवृत्तसंसारदोषं शान्तिसमृद्ध ममृत मिति श्रूयते। अन्यप्रेष्यताकार्पण्यरहितत्वेन स्ववशीकृतस्वेतरसकलवस्तुत्वं स्वातन्त्र्यम्। 'ज्ञाज्ञौ द्वा वजा वीशानीशौ', 'भोक्ता भोग्यं प्रेरितारं च मत्वा', 'विद्याविद्ये ईशते यस्तु सोऽन्य' इत्यादिषु ब्रह्मणो जडाजडप्रपञ्चप्रेरकत्वेन स्वतन्त्रत्वं सिद्धम्। सर्वविषयस्वातन्त्र्येण ब्रह्मण स्सर्वकर्तृत्वसिद्धिः। स्वाभाविकशक्तिमत्त्व मलुप्तशक्तिमत्त्वम्। तथाहि श्रवणम् 'परास्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया' चेत्यादि। चिदचित्प्रपञ्चरूपशक्तिविशिष्टत्वं स्वाभाविक मेव ब्रह्मणः कदाचिदपि न निर्विशेषत्व मि त्यनेन सिद्धम्। अपरिच्छिन्नशक्तिविशिष्टत्व मनन्तशक्तिमत्त्वम्। अनन्ताभि रेव शक्तिभि र्जगतो जनकं शासकं ब्रह्म भवति। तथाहि श्रूयते, एक एव रुद्रो न द्वितीयाय तस्थु स्तुरीय मिमं लोक मीशत

तत्कृते' रितिसूत्रेणा प्ययमेवाऽर्थोऽवधारितः। मुक्तात्मनां मनसोऽभावे सङ्कल्पस्यै वाऽसिद्धेः। एतेन लिङ्गशरीरभङ्ग मेव मोक्ष माचक्षाणाः परे पराहताः। अनादिबोधस्य परार्थप्रवृत्तपृष्ठिवैपम्या पादकरागादिदोषाभावसिद्धा वुपयोग माह अतोऽनादिबोध मिति—'ज्ञाज्ञौ द्वा' विति, 'भोक्ता भोग्य' मिति, 'विद्याऽविद्ये' इति च श्वेताश्वतरोपनिषदि पशुपाशपतिनिर्णायकाना मेकैकः पादः। ज्ञाज्ञौ सर्वज्ञकिञ्चिज्ज्ञौ, द्वाऽवजौ सनातनौ, ईशाऽनीशौ नियन्तृनियम्यौ, भोक्ता भोग्यं पशुः पाशश्चेति द्वयं तयोः प्रेरकं परमेश्वरं च मत्वा ब्रह्मभाव मेती त्युत्तरत्राऽन्वयः। यस्तु, विद्याऽविद्ये पशुपाशौ, ईशते ईष्टे, स ताभ्या मन्यः। इत्यादि ष्विति — आदिशब्देन 'क्षरं प्रधान ममृताक्षरं हरः। क्षरात्मानावीशते देव एकः', 'वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च', 'प्रधानक्षेत्रज्ञपति र्गुणेशः' इत्यादिमन्त्रसंग्रहः। एक एव रुद्र इति—एक एव रुद्रः। द्वितीयाय द्वितीय स्तत्सदृशः। प्रातिपदिकार्थे छान्दस श्चतुर्थीप्रयोगः। न तस्थुः न तस्थौ। छान्दसं बहुवचनम्। इमं लोकं शुद्धमिश्राऽशुद्धाऽध्वरूपं लोकत्रयम्। तुरीयमुक्तलोकापेक्षया चतुर्थम्।

ईशनीयु र्जननीयु र्यैः सर्वान् लोका नीशत ईशनीभि र्जननीभिः परमशक्तिभि रित्यादि। अनन्तशक्तिमत्त्वा द्ब्रह्मणोऽपरिच्छिन्नत्वप्रपञ्चमनावर्तिपरमात्मत्वं सिध्यति

अष्टाभिधानाधिकरण मिति, भवशर्वेशानपशुपतिरुद्रोग्रभीमहादेवाऽभिधानाष्टक स्याधिकरणं वाच्यं परं ब्रह्म। तस्य सकलशब्दवाच्यत्वेऽपि परमाव बोधकत्वेन मुख्यतया भवादिशब्दाभिधेयत्वेन, नाऽन्यशब्दाऽभि धेयत्वाऽभाव प्रसङ्गः॥

सर्वत्र सदा भव तीति भवशब्दवाच्यं ब्रह्म। भूधातो स्सत्तार्थत्वात् सर्व त्रानुवर्तमानं सद्रूपं ब्रह्मेति विज्ञायते। तथाहि श्रुतिः, 'स देव सोम्येद मग्र आसी देक मेवाऽद्वितीयम्', 'सत्यं ज्ञान मनन्तं ब्रह्म', 'सत्यात्म प्राणारामं मनआनन्दम्','स न्महद्' इत्यादि। सन् घटः, सन् पटः इति सर्ववस्तु ष्वनु गतवृत्त्या सद्रूपस्य ब्रह्मण स्सर्वोपादानत्वं सिध्यति। मृदुपरक्तं हि घटा दिकं मृदुपादान मिष्यते। तत स्सद्रूपं ब्रह्म भवशब्दवाच्यं भवति॥

ईशनं ईष्टे। ईशनीयुः ईशनानुकूलेच्छाशक्तिमान्। जननीयुः जननानुकूलेच्छाशक्ति मान्। ईशन मैश्वर्यम्। जननं जनयितृत्वम्। ईशनीभिः ईशनकारिणीभिः। जननीभिः जननकारिणीभिः। पूर्वोदाहृतश्रुता वीशनजनननानुकूलेच्छाशक्तिमत्त्व मुक्तम्। इह तदनुकूल क्रियाशक्तिमत्त्व मिति भेदः। न न्वष्टाभिधानाधिकरण मिति कि मुच्यते। सन्ति हि शम्भु शङ्करादी न्यन्या न्यपि शिवस्य नामानि। किं बहुना। 'इमा रुद्राय स्थिरधन्वने गिर' इति श्रुतिः प्रत्यक्षादिसन्निवापितसकलशब्दवाच्यत्वं शिवस्य प्रतिपादयति। आश्वलायनोपि शिवं प्रस्तु त्याह 'सर्वाणि ह वा एतस्य नामधेया' नीति। तस्मा दिद मनुपपन्न मि त्याशङ्क्याह सकलशब्देति— परमावबोधकत्वेनेति— विशिष्य जन्मादिकारणत्वतदुपपादकगुणबोधकत्वे नेत्यर्थः। इद मुपलक्षणं भवादिनामाष्टकस्य। आपस्तम्बीयानां मन्त्रे प्राम्नानेन आपस्तम्बसूत्रे ईशानबलौ, बोधायनाश्वलायनसूत्रयोः शूलगवहोमे, बोधायनसूत्रे महादेवस्य प्रतिष्ठाविधौ नित्य पूजाविधौ होमतर्पणार्चनेषु विनियोगवर्णनेन च मुख्यत्वं द्रष्टव्यम्॥

भवशब्द स्ताव द्भूधातो रसधातो र्वा पचाद्यच्प्रत्ययान्त इ त्युभयथाऽपि सत्तार्थकत्वा विशेषा त्तस्याऽस्तिधातोः शत्रन्तस्य सच्छब्दस्य चैकार्थ्य मस्तीति भावः। न केवलं सच्छब्द

शर्वशब्देन शॄ हिंसाया मिति धात्वर्थवशात् सकलसंहर्तृ ब्रह्म प्रतिपाद्यते। 'तस्मा उपसंहर्त्रे महाग्रासाय वै नमः', 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः' इति सर्वहर्तृ ब्रह्म श्रूयते॥

निरुपाधिकपरमैश्वर्यविशिष्टत्वा दीशानशब्दवाच्यं ब्रह्म। 'य इमान् लोकानीशत ईशनीभि' रिति श्रवणात॥

ईश्वर स्येशितव्यापेक्षतया पशुपतिशब्दवाच्यं ब्रह्म। तथाहि श्रूयते, 'एषा मीशे पशुपतिः पशूनां चतुष्पदा मुत च द्विपदा' मित्यादि। पाशसंबन्धेन पशुत्वव्यवहारात पशुग्रहणात पशुपाशद्वयं च गृहीतं भवति। अनेन चिदचिन्नियामकं ब्रह्मेति विज्ञायते॥

भवशब्दयोः शक्तिपर्यालोचन यैकार्थ्यम्। किन्तु 'स देव सौम्येद मग्र आसी' दिति वाक्यश्रुतसच्छब्दस्य 'पुरुषो वै रुद्रः स न्महः' इति श्रुत्यन्तरे शिवपर्यवसायित्वस्य कण्ठतः प्रदर्शितत्वादपि शिवनाम्नो भवशब्दस्य तदैकार्थ्य मि त्यभिप्रायेण सन्महः इति श्रुत्युदाहरणम्॥

ईशानशब्दवाच्य मिति — ईशानशब्दः 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति सूत्रविहितचानश्प्रत्ययान्तः। स्वाभाविक ममङ्कुचितं शिव स्यैश्वर्य माचष्ट इति भावः॥

तदैश्वर्यस्य सकलचेतनाचेतनविषयत्वं पशुपतिनाम्नाऽपि सिध्यती त्याह ईश्वरस्येति॥

ननु, तेन पशुशब्दोक्तचेतनविषयत्व मैश्वर्यस्य सिध्यति न त्वचेतनविषयत्व मपी त्याशङ्कयाह पशुग्रहणा दिति॥

ब्रह्माद्याः स्थावरान्ता श्च देवदेवस्य शूलिनः
पशवः परिकीर्त्यन्ते संसारवशवर्तिनः॥

तेषां पतित्वा द्देवेशः शिवः पशुपतिः स्मृतः
मलमायादिभिः पाशैः स बध्नाति पशून् पतिः॥

स एव मोचक स्तेषां भक्त्या सम्य गुपासितः
चतुर्विंशति तत्त्वानि मायाकर्मगुणा अमी॥

संसाररुग्द्रावकत्वा द्रुद्रशब्दवाच्यं ब्रह्म। 'तरति शोक मात्मावि' दिति श्रवणात्॥

परंतेजोभि रनभिभवनीयत्वा दुग्रशब्दवाच्यत्वं ब्रह्मणः। 'न तत्र सूर्यो भाति न चन्द्रतारक' मिति श्रवणात्॥

नियामकत्वेन निखिलचेतनाचेतनतया भीमशब्दाभिधेयं ब्रह्म। 'भीषाऽस्मा द्वातः पवत' इत्यादिश्रुतेः॥

महत्त्वेन दीव्यमानतया महादेव इत्युच्यते शिवः। तथाऽथर्वशिरसि. 'अथ कस्मा दुच्यते महादेवः? यः सर्वान् भावान् परित्यज्य आत्मज्ञान योगैश्वर्ये महति महीयते तस्मा दुच्यते महादेव' इति॥

विषया इति कथ्यन्ते पाशा जीवनिबन्धना.
ब्रह्मादिस्तम्बपर्यन्ता न्पशून् बद्ध्वा महेश्वरः॥

पाशै रेतैः पति र्देवः कार्यं कारयति स्वकम्॥

इति हि पुराणेषु श्रूयते। अनेन तित्सद्धं भवति। पशुपतिनामान्तर्गतः पशुशब्दो न गवाश्वादि प्रसिद्धपशुवाची। नाऽपि 'प्रमथेऽपि पशुः पुमा' निति निघण्टूक्तरीत्या प्रमथवाची, किन्तु ब्रह्मादिस्थावरान्तसकलचेतनवाची। 'एषा मीश' इति मन्त्र द्विपाच्चतुष्पादग्रहण मपि सकल चेतनोपलक्षणम्। तद्वाचित्वं च न शक्त्या, किन्तु गवा श्वमहिषादय स्तत्स्वामिभि. पाशै राबध्य स्ववशीकृत्य वाहनदोहनादिकर्म स्विव सर्वेऽपि चेतनाः शिवेन मलमायादिभिः पाशै राबध्य स्ववशीकृत्य स्वाराधकरूपतया यथाकथंचि त्स्वाराधनोपयोगितया वा स्वकीयेषु तत्तद्वस्तु सामर्थ्याधीनेषु कार्येषु विनियुज्यन्त इ त्यनेन सादृश्येन गौण्या वृत्त्येति। एवं च पश्वधिष्ठानं पाशाधिष्ठानाधीन मिति तदुक्त्यैव पाशाधिष्ठानम प्यर्थतो लभ्यत इति भावः॥

रुजं द्रावयती त्यस्मि न्नर्थे रुद्रशब्दः।

रुग्दुःखं दुःखहेतु र्वा तद्द्रावयति नः प्रभुः।
रुद्र इ त्युच्यते तस्मा च्छिवः परमकारणम्॥

इति पौराणिकै र्व्युत्पादितः पृषोदरादिः॥

निरस्तसमस्तसंसारकलङ्कतया निखिलमङ्गलाधारतया शिवतत्त्वं यदवगम्यते तदुक्तस्वभावतया सकलजगज्जन्मादिकारणं भवति । तत्र तादृशमहिम्नि जगदुभयकारणत्वसंभवात् तदेतादृशमहिमत्वात् ब्रह्मे त्युच्यते।

शाम्य न्त्यस्मि न्दोषा इ त्यर्थे ' सर्वनीघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वा ' इ त्यौणादिसूत्रे शमिधातो र्वन्प्रत्ययेन इत्वमलोपाभ्यां च शिवशब्दो निपातितः । समस्तसांसारिकदोषराहित्यवाची । निखिलानि शिवशब्दवाच्यानि माङ्गल्या न्यस्य सन्तीति मत्वर्थीयाऽच्प्रत्ययान्तः शिवशब्दः सकलमङ्गलगुणवत्त्ववाची । तदुक्तस्वभावत येति — त त्प्रकृतं शिवतत्त्वं जगत्कारणत्वोपपादकसर्वज्ञत्वसर्वशक्तिकत्वादिगुणस्वभावतया सृष्टिवैषम्यनैर्घृण्यापादकदोषरहितस्वभावतया च जगदुभयकारणं भवितु मर्ह तीति कृत्वा परस्परविरुद्धानेककारणवाक्यसमवायेऽपि त देव जगजन्मादिकारण मङ्गीकर्तु युक्त मित्यर्थः ॥

त दिति — त च्छिवतत्व मेतादृशमहत्वा त्सर्वज्ञत्वादिक मङ्गषट्क मष्टाभिधानप्रवृत्तिनिमित्तजात मि त्येवंप्रकारा न्महत्वा त्कारणत्वाक्षेपकलिङ्गात् जगज्जन्मादिकारणत्वरूपब्रह्मलक्षणयोगीति तदेव ' ब्रह्मवि दाप्नोति पर ' मि त्यादिश्रुतिषु ब्रह्मे त्युच्यत इत्यर्थः ॥

अत्र पूर्वपक्षे ' यदा तम स्त ' दिति मन्त्रोदाहरणात् सिद्धान्ते शिवतत्त्व मिति तत्रत्यशिवशब्देन व्यवहारा त्तत्त्वशब्देन तदुक्ततमोमात्रावशिष्टकालविशेषावस्थायित्वप्रतिपादना देतादृशशब्दे नैवंप्रकारवाचिना ' त दक्षरं त त्सवितु र्वरेण्यं प्रज्ञा च तस्मा त्प्रसृता पुराणी ' इति तदुत्तरार्धप्रतिपादिताक्षरशब्दप्रवृत्तिनिमित्तसवितृवरेण्यत्वबहुभवनसङ्कल्परूपजगत्कारणत्वाक्षेपकलिङ्गान्तरसङ्ग्रहा च्च सर्वज्ञत्वादिषट्काष्टाभिधानप्रवृत्तिनिमित्तसद्भावरूपस्य सर्वकारणवाक्यानां शिवे पर्यवसानोपपादकस्य न्यायजातस्याऽनुग्राह्यं प्रमाणं सर्वेषां कारणवाक्यानां शिवे पर्यवसान माहत्य प्रतिपादयितु मेव प्रवृत्तो ' यदा तमो ' मन्त्र इति सूचितं भवति । त दयं भाष्यसूचितोऽर्थः स्पष्टीक्रियते । यदा तम इति पूर्वार्धेन तमोवशेषाङ्कितं काल मनूद्य तत्कालवर्ती शिव इति विधीयते । तेन ' तमो वा इद मेक मास तत्परे णेरितं विषमत्वं प्रयाति । प्रजापतिर्वा इद मेक आसीत् । नाह रासी न्न रात्रि रासीत् । सोऽस्मि न्नन्धे तमसि प्रासर्पत् । नाऽस दासी न्नो सदासी त्तदानीं तम आसीत् तमसा गूढ मग्रे प्रकेतः ' इत्यादिषु तत्पुरोवादेषु तथाभूतकालविशेषावस्थायिकारणवस्तुसमर्पकाणां परप्रजापत्यादिशब्दानां शिवे पर्यवसानं दर्शितं भवति । तृतीयपादेन मुण्डकादिश्रुतकारणवाक्येषु कारणवस्तुसमर्पकाणा मक्षरादिपदाना मादित्यमण्डलवर्तिनि पुरुषे कारणत्वाक्षेपकलिङ्गं सर्वान्तर्यामित्व मुपवर्णयन्त्या गायत्र्या अ तस्मि न्पर्यवसानं दर्शितम् । चतुर्थपादेन ' त दैक्षत बहु स्यां प्रजायेे ' येति, ' स ईक्षत लोका

नारायणपरत्वं स्यात्। मन्त्रवाक्यवैयर्थ्यापत्ते रुक्तत्वात्। योगा द्रूढिपूर्वकल्लक्षणाया एवाऽभ्य र्हितत्वा च्च। यदि तु 'सर्वाणि ह वा एतस्य नामधेया' नीत्याश्वलायनस्मरणात्,

नामानि तव गोविन्द! यानि लोके महन्ति च
ता न्येव मम नामानि नात्र कार्या विचारणा ॥

इति हरिवंशे शिववचनेन विष्णुनाम्ना मन्येषां च प्रकृष्टप्रवृत्तिनिमित्तानां नाम्नां 'घनसार श्चन्द्रसंज्ञ' इति वचनेन चन्द्रनाम्नां कर्पूरनामत्ववत् शिवनामत्वस्य विधानात्, कूर्मपुराणे

वशित्वा द्व्यवश्यत्वा दीश्वरः परिभाषितः
ऋषिः सर्वगतत्वेन हरिः सर्वगणे युतः ॥

अनुत्पादा च्च पूर्वत्वा त्स्वयम्भू रिति स स्मृतः
नारा अ प्ययनं यस्मा त्तेन नारायणः स्मृतः ॥

हरः संसारहरणा द्विभुत्वा द्विष्णु रुच्यते
भगवान् सर्वविज्ञाना दवना दो मिति स्मृतः ॥

सर्वज्ञः सर्वविज्ञाना त्सर्वः सर्वमयो यतः
शिवः स निर्मलो यस्मा द्विभुः सर्वगतो यतः ॥

इति साक्षा देव नारायणशब्दस्य शिवनामसु निर्वचना च्च तन्नामत्व म पीष्यते, तदा न कश्चि च्छङ्कावकाशः ॥

ननु, नारायणशब्दस्य विष्ण्वैकान्तिकत्व मस्ति।

एकार्णवे तदा तस्मि न्नष्टे स्थावरजङ्गमे
तदा समभव द्ब्रह्मा सहस्राक्षः सहस्रपात् ॥

सहस्रशीर्षा पुरुषो रुक्मवर्णो ह्यतीन्द्रियः
ब्रह्मा नारायणाख्य स्तु सुष्वाप सलिले तदा ॥

इमं चोदाहर न्त्यत्र श्लोकं नारायणं प्रति
ब्रह्मस्वरूपिणं देवं जगतः प्रभवाप्ययम् ॥

आपो नारा इति प्रोक्ता आपो वै नरसूनवः
अयनं तस्य ता यस्मा त्तेन नारायणः स्मृतः ॥

इति कूर्मपुराणे विरिञ्चिनामत्वेनाऽपि तन्निर्वचनदर्शनात्। तस्मात् 'यदा तम' इति मन्त्रगते शिवपदे विष्णुविषयत्वशङ्काऽनवकाशा त्सर्वेषां कारणवाक्यानां शिवे पर्यवसानं प्रतिपादयन् मन्त्रोऽय मिहाऽनुग्राह्यप्रमाणत्वेन विवक्षित इति युक्त मेव ॥

त देव शिवशब्दवाच्य मानन्दादिधर्माश्रयतया सिद्धम्। अत आनन्दादीनां विकल्पादिनिन्दा निरर्थिका। 'मायां तु प्रकृतिं विद्या' दिति मायायाः प्रकृतित्व मोश्वरस्य मायाया एव, 'मायिनं तु महेश्वर' मिति मायाप्रयोगात्।

एवं नेदं निरवद्यम्, जगत्कारणं वस्तु 'स देव सोम्येद मग्र आसी' दित्यादिकारण वाक्येषु सद्ब्रह्मात्मशब्दैः उत्तरोत्तर विशेषपर्यवसायिभिः सद्रूपं बृह चेतनं चेत्येतावत्पर्यन्तबुद्धि गृहीत 'एको ह वै नारायण आसी' दित्यादि प्रतिनियतसामानाधिकरण्येन नारायणशब्देन निर्दिष्टा च्छागपशुन्यायेन नारायण एवेति निश्चीयत इति। सर्वेषां कारणवाक्यानां शिवे पर्यवसानं साक्षादेव प्रतिपादयति मन्त्रे। अस्मदादीना मिव पूर्व मपीणां मसानं जगत्कारणं ब्रह्म किमा तात्मक मिति संशय प्रदर्श्य स्वयं निर्णेतु मशक्नुवन्त स्तं ध्यानयोगप्रसादितपरमेश्वरकटाक्ष महिम्ना शिव एवेति निश्चयं लेभिर इति मन्त्रजातं जाग्रति क्षुद्रबुद्धिकल्पितन्यायसञ्चारेणाऽन्यत्र पर्यवसानाऽसम्भवात्। तस्मा न्मन्त्रोपनिषन्मन्त्रजातबला च्छिव एव जगत्कारण मि त्येत दुपपन्नम्॥

अवधारणादिबला त्तादानन्दज्ञानानां भेदा नारायत्र तेषां विकल्पेन समुच्चयेन वा कारणत्व मनुपपन्न मिति य च्छङ्कितं तद् पर्यवसति नावकाशं लभत इत्याह तदेवेति — य त्सर्व ज्ञत्वनित्यतृप्तत्वाद्यावाश्रयतया प्रतिपन्नं त देव सामान्यतः सकलमङ्गलगुणतत्त्वप्रतिपादकस्य शिव शब्दस्य वाच्य मिति तस्य सामान्यतो विशेषत श्च ज्ञानानन्दादिधर्माश्रयत्वसिद्धे स्तत्र कारण वाक्यश्रुता न्यवधारणानि न शास्त्रान्तरगतकारणवाक्यश्रुतरूपान्तरव्यावर्तनार्थानि। किंतु आनन्दाद्यंचेवे त्यवधारणं स्थूलारुन्धतीन्यायेन ब्रह्मणि क्रमेण पूर्वप्रतिपन्नाना मन्नादिविज्ञानान्त रूपाणां व्यावर्तकम्। स देवे त्यवधारण मिदानीं पृथिव्यादिषु दृश्यमानस्य स्थूलरूपस्य सर्गाऽग्र समये व्यावर्तकम्। प्रज्ञानघनवाक्यं त्वत्युज्ज्वलस्य रश्म्याऽन्तर्बहि श्च प्रभ येव ब्रह्मणः प्रज्ञानगुणेन व्याप्तिप्रतिपादकं न कस्यापि ब्रह्मणि व्यावर्तकम्। अतो नाऽवधारणादिविरोधो पीति भावः। मायै वोपादान मिति शङ्कां निरस्यति मायाया इति — सत्यं। मायोपादान मिति ब्रह्माऽप्युपादान मेव। अपृथक्सिद्धकार्यावस्थाश्रयत्वं हि मायाया उपादानत्वं समर्थनीयम्। तत्समर्थ्यमान मेव ब्रह्मपर्यन्त मायाति। नित्ययोगे खलु मायिन मिति मायाशब्दा दिनिप्रत्ययः। तत श्च मायायाः ब्रह्माऽपृथक्सिद्धचैव तदपृथक्सिद्धायाः कार्यावस्थाया अपि ब्रह्माऽपृथक्सिद्धिः सिध्यति॥

एवं च यद्यपि ब्रह्माश्रया माया वियदाद्यचेतनरूपेण परिणमति, ब्रह्माश्रया तदीयजीवा श्रया च चिच्छक्ति र्ज्ञानरूपेण, नतु ब्रह्म केना प्याकारेण परिणमति। तथापि तथा तथा

सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणं स्थूलचिदचिद्विशिष्टं तत् कार्यं भवति। अतो जगज्जन्मादिलक्षणं ब्रह्मेति सिद्धान्तः ॥

इति जन्माद्यधिकरणम्

---

अथ शास्त्रयोनित्वाधिकरणम् ३

लक्षणप्रमाणाधीना हि वस्तुसिद्धिः। जगत्कारणं ब्रह्म किंप्रमाणक मित्यत आह ॥

## शास्त्रयोनित्वात् ॥१-१-३॥

यतः शास्त्रं योनिः प्रमाण मत एव जगज्जन्मादिलक्षणं ब्रह्म भवतीति

---

परिणममानानां मायादीनां ब्रह्मैवाऽयुतसिद्धाश्रयत्वपर्यवसानभूमि रिति ब्रह्मपर्यन्त मुपादानत्व मायातीति भावः ॥

ननु, यद्येवं कार्यावस्थाश्रयत्वरूप मुपादानत्व मिष्यते तदा यथा मृदो भाविघटावस्थाश्रय भूतायाः पिण्डावस्थाविशिष्टत्वेन कारणत्वेऽपि घटावस्थाविशिष्टत्वेन कार्यत्व मपि, एवं ब्रह्मणः सर्गाद्यसमये सूक्ष्मचेतनाचेतनविशिष्टत्वेन कारणत्वेऽपि स्थूलचेतनाचेतनविशिष्टत्वेन कार्यत्व मपी त्याशङ्क्याऽभ्युपगमेन परिहरति सूक्ष्मेति ॥

एवं व्यक्तिविशेषव्यवस्थितब्रह्मत्वनिर्धारणरूपप्रयोजनपर्यवसायित्वा जगज्जन्मादिब्रह्म लक्षण मित्येत दुपपन्न मित्यधिकरणार्थ मुपसंहरति अत इति — एवं तटस्थलक्षणव्यवस्थितौ तदुपलक्षितस्य गुणविग्रहविशेषरूपं स्वरूपलक्षण मपि व्यवतिष्ठत इति भावः ॥

इति जन्माद्यधिकरणम्

---

अथ शास्त्रयोनित्वाधिकरणम् ३

अवतारिका मारचयति लक्षणेत्यादिना — जन्मादिसूत्रेण लक्षणनिरूपणानन्तरं प्रमाणस्य तत्साधक स्याऽऽक्षिप्तत्वा देते नाक्षेपसङ्गति रपि प्रदर्शिता। ब्रह्मणि प्रमाणप्रदर्शनार्थ मिद मधिकरण मारभ्यत इत्यर्थः। ननु, यतो वेत्यादिश्रुति स्तत्र प्रमाण मिति पूर्वाधिकरण एवोदाहृतत्वा त्पुनः प्रमाणनिरूपण मनावश्यक मितिचे न्न। तस्य वाक्य स्याऽनुमानसिद्धजगत्कर्तृ रूपार्थानुवादरूपत्वेन प्रामाण्यं न युज्यत इति पूर्वपक्षनिरसनद्वारा जगत्कारणं ब्रह्म शास्त्रप्रामाण्या देव सिद्ध्यति न त्वनुमानप्रामाण्या दिति निर्धारयितु मस्याऽधिकरणस्य प्रवृत्तत्वात् ॥

सूत्रं विवृणोति यत इति — शास्त्रस्य योनित्व मिति षष्ठीसमासः। शास्त्रप्रामाण्या

शेषः। अत्र जगत्कारणं ब्रह्म शास्त्रैकगम्य मुत प्रमाणान्तरेणाऽपि गम्य मिति सन्देहः॥

जग दिदं सावयवं कार्य मेव। तच्च विचित्ररचनात्वेन सर्वज्ञकर्तृक मिति कश्चि त्कल्पनीयः सर्वज्ञत्वादिमान्। नासौ शास्त्रैकगम्य इति नाऽस्मिन् शास्त्रस्य प्रामाण्यम्। शास्त्रस्य प्रमाणान्तराप्राप्तविषयत्वा दिति पूर्वः पक्षः॥

सिद्धान्तस्तु जगत्कारणं ब्रह्म वेदान्तशास्त्रैकगम्यम। 'नाऽवेदवि न्मनुते तं बृहन्त' मित्यादिषु वेदान्तशास्त्र मन्तरेण ब्रह्मणो बोधासम्भवश्रवणात्॥

य दुक्तं सावयवत्वात् कार्यत्वसिद्धौ प्रपञ्चस्य कर्ता समुचितः कल्प्य एक इति, त दसत्। विचित्ररचनस्य गोपुरप्रासादादे र्बहुकर्तृकत्वदर्शनात्। तथा च नाऽनुमानेन एककर्तृकत्वसिद्धिः। व्याप्तिबलेन तस्य कर्मपार

---

दित्यर्थः। शास्त्रप्रामाण्या दय मर्थः सिध्यति न त्वनुमानप्रामाण्या दित्यर्थोऽत एवं त्येव कारेण दर्शितः। अत्र यतोवे त्यादिवाक्यं ब्रह्मणि प्रमाणं न वे त्यधिकरणाङ्गसंशयं मनसि निधाय तदर्थसंशय माह अत्रेति — तथा च यदि शास्त्रमात्रगम्यं ब्रह्म तदा तत्र तच्छास्त्रं प्रमाण 'मप्राप्ते हि शास्त्र मर्थव' दिति न्यायात्। अथ यदि प्रमाणान्तरेणाऽपि गम्यं तदा त न्न प्रमाण मित्येतेन यतोवेत्यादि वाक्यं ब्रह्मणि प्रमाणं न वेति संशयः सिध्य तीत्यर्थः। शास्त्रस्य प्रमाणान्तराप्राप्तविषयत्वा दिति प्रत्यक्षप्रमाणसिद्धार्थानुवादरूपस्य 'अग्नि र्हिमस्य भेषज' मितिवाक्यस्ये वाऽप्रामाण्या दित्यर्थः। एवं च अङ्कुरादिकं सकर्तृकं कार्यत्वा द्घटव दित्यनुमानरूपप्रमाणान्तरप्राप्तविषयत्वा द्यतोवेत्यादिवाक्यं जगत्कर्तरि न प्रमाण मिति पूर्वपक्षे प्राप्ते तस्य ब्रह्मणि प्रामाण्य मुपपादयितुं जगत्कर्तुः प्रमाणान्तरप्राप्तत्वं निराकुर्वन् सिद्धान्तयति सिद्धान्त स्त्विति॥

इत्यादि ष्वित्यादिपदेन 'नैषा तर्केण मति रापनी' येत्यादिवाक्यान्तरं गृह्यते। ननु 'नाऽवेदवि' दित्यादिवाक्यजातं मुमुक्षुज्ञेयसकलविशेषणवैशिष्ट्येन ब्रह्मावगतिः प्रमाणान्तरेण न सम्भव ती त्येतत्पर मि त्याशङ्क्याह य दुक्तमिति विचित्रेति॥

अत्राऽयं भावः। महीमहीध्रमहार्णवादीना मेकेन कर्त्रा युगपन्निर्मितत्वेनैव सकर्तृकत्वं निर्वाह्य मि त्यत्र न विद्यते प्रमाणम्। महतो देवालयस्य क्रमेण बहुभिः कृतत्वेनाऽपि सकर्तृकत्व

वश्यादिप्रसङ्ग श्च । हेतोः पक्षधर्मताबला दनुमानेन जगतो विलक्षणैककर्तृ कत्वसिद्धा वपि निमित्तोपादानशक्तियुक्तैककर्तृकत्वसिद्धि र्नाऽस्ति। ततो वेदान्तशास्त्रैकगम्यं तत्प्रमाणकं ब्रह्मेति सिद्धम् ॥

अनेन सूत्रेण पूर्वाधिकरणप्रतिपादितजगत्कारणत्वसिद्ध्युपयोगि सर्व ज्ञत्वं ब्रह्मणः शास्त्राणां वेदानां योनित्वात् कारणत्वा दिसद्ध्यतीत्यपि प्रति पाद्यत इति केचि दाहुः । सूत्रस्य सूचनात्मक स्यार्थद्वयाभिधाने श्लेषकाव्यव द्वाक्यभेदादिदोषाभावात् पुन रधिकरणानन्तरप्रस्तावः ॥

अत्र ' अस्य महतो भूतस्य निश्वसित मेत द्य दृग्वेदो यजुर्वेदः सामवेद ' इत्यादि श्रूयते विषयः । ब्रह्मणो वेदकर्तृत्वं युक्तं नवेति सन्देहः । न युक्त

---

निर्वाहा देककर्तृकत्वं न सिध्यतीति एककर्तृकत्वसिद्धा वपीति —' तुष्यतु दुर्जन ' इति न्यायेन एककर्तृकत्वाभ्युपगमे पीत्यर्थः । वेदान्तप्रतिपाद्ययावद्धर्मवैशिष्ट्यनिर्वाहाय शुष्कतार्किकरीति मपहाय वेदान्तै रेव जगत्कर्तृसिद्धे रङ्गीकर्तव्यतया ब्रह्म शास्त्रप्रमाणक मेव भवति, न त्वनुमान प्रमाणक मि त्यवशा दोऽङ्गीकर्तव्य मिति भावः । अत्र सूत्रे कैश्चि त्प्रदर्शितं वर्णकान्तर म प्यङ्गी कृत्य त दुपपादयितु मारभते अनं नेति ॥

ननु, जगत्कारणत्वोपयोगिसर्वज्ञत्वं जगत्कारणत्वेनै वाक्षिप्तम् । ' यः सर्वज्ञः सर्ववि दिति साक्षा देव श्रुतं चेति नात्र हेतुगवेषणं युक्तम् । अथ य दीद मुचितं तर्हि जगत्कारणत्व एवोपयोगिनि सर्वशक्तिकत्वेऽपि हेतो रन्वेष्यत्वा दितिचे न्न । ' वाचा विरूपनित्य ' येत्यादि श्रुत्या वेदनित्यत्वस्यै वाम्नातत्वेन ब्रह्मणो वेदकर्तृत्वाऽसिद्ध्या सर्वजगत्कारणत्वरूपलक्षणं न सम्भव तीति शङ्कानिरासायाऽन्यतः सिध्यत्यपि सर्वज्ञत्वे हेत्वन्तरप्रदर्शनस्य समुचिततरत्वा च्छ्लेष काव्यव दिति ।

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः
भवन्ति कस्यचि त्पुण्यै र्मुखे वाचो गृहे स्त्रियः ॥

इति श्लिष्टपद्ये यथा श्लेषकृतविच्छित्तिविशेषसिद्धये वक्तु रनेकार्थविवक्षावशा त्स्वतन्त्रानेकार्थत्व कृतवाक्यभेदोऽनेकार्थप्रतीत्यर्था वाक्यावृत्ति श्च न दुष्यति तथाऽत्रा प्यनेकार्थसूचनसिद्धये सूत्रकृत स्तदनुकूलानेकार्थविवक्षासत्त्वा त्तत्कृतो वाक्यभेदो वाक्यावृत्ति श्च न दुष्यत इत्यर्थः ॥

' अस्य महतो भूत ' स्येति वाक्येन ब्रह्मणो वेदकर्तृत्वस्य सिद्धतया तेन ब्रह्मणः सर्वज्ञत्वं सिध्यति नवे त्यधिकरणाङ्गसंशयं सिद्धवत्कृत्य तदर्थसंशय माह ब्रह्मण इति ॥

मिति पूर्वपक्षः। वाचा विरूपनित्ययेत्यादि श्रौतो नित्यत्वप्रतिपादिकायाः श्रुते र्विरोधात्। वेदानां शब्दकार्यत्वे पौरुषेयत्वा दप्रामाण्यप्रसङ्गाच्च।

पूर्वपक्षहेतुं दर्शयति वाचेति— ननु, वर्णानां नित्यत्वेन नित्यता [illegible] स्योपपन्नत्वेन तेन ब्रह्मणो वेदकर्तृत्व मविरुद्ध मिति शङ्क्यम्। वर्णानां नित्यत्वेन [illegible] गताना मपि नित्यतया विशिष्य वेदवाचि नित्यत्वप्रतिपादकश्रवणेन वेदानां स्वरूपतो ऽपि नित्यत्वस्य सिद्धत्वात्। नाऽपि आनुपूर्वीविशिष्टवर्णरूपस्य वेदस्य नित्यत्व मयुक्तम्। आनुपूर्व्याः कृतकत्वा दिति शङ्क्यम्। अविच्छिन्नप्रवाहत्वरूपस्य प्रवाहनित्यत्वस्यैव तत्त्वेन वेदनित्यत्व श्रुतेः स्वरूपनित्यत्व मर्थ इत्यनभ्युपगमात्। ननु, निश्वसितश्रुतितो वेदनित्यत्वश्रुतेः प्राबल्य स्याऽसिद्धतया वेदनित्यत्वश्रुतिविरोधा न्निश्वसितश्रुतिसिद्धं ब्रह्मणो वेदकर्तृत्व मयुक्त मिति वक्तुं न युज्यत इतिचेन्न। निरवकाशत्वरूपस्य तत्प्राबल्यकारणस्य सिद्धत्वात्॥

तथाहि, निश्वसितश्रुते र्ब्रह्मण इव प्रजापते रग्न्यादीना ञ्च वेदकर्तृत्व श्रूयते। 'प्रजापति र्भूत्वा प्रजापति रिदं सर्व मसृजत। ऋचो यजूंषि सामानि। ऋग्वेद एवाऽग्ने रजायत। यजुर्वेदो वायोः सामवेद आदित्या' दित्यादिश्रुत्यन्तरेषु एकस्मि न्नर्थे बहूनां स्वातन्त्र्यकर्तृत्वासम्भवा द्वेदाभिमानिदेवतानां प्रजापते रग्न्यादिभ्य श्च जननप्रतिपादकानि तानि श्रुत्यन्तराणी त्युक्तम्। एव मेव निश्वसितश्रुतेरपि योजना सङ्गच्छते। पृथिव्याद्यभिमानिदेवता। तत्तदभिमानिन्योऽपि देवताः सन्ति इति विज्ञायते। अत एव तन्त्रवार्तिके ब्रह्मैकत्वाधिकरणे,

शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्य मुच्यते
तदप्यधिष्ठितं सर्व मेकेन परमात्मना॥

ऋग्वेदादयो वेदाः प्रोक्ता येऽपि पृथक् पृथक्
भोग्यत्वे नात्मनां तेपि चैतन्यानुगताः सदा॥

इति तासां च देवतानां ब्रह्मणो जाताना मपि कालक्रमेण नष्टानां समयान्तरे पुनः प्रजापति भ्योऽपि प्रवर्तितत्वं युज्यते। यथैव ब्रह्मणो मानसपुत्राणां दक्षनारदवसिष्ठभृग्वादीना मिव समयान्तरे पुन रन्यतो जननं ततो वेदनित्यत्वश्रुतिविरोधा द्ब्रह्मणो वेदकर्तृत्व मयुक्त मिति युक्त मेव॥

बाधकान्तर माह वेदाना मिति— पौरुषेयत्वा दिति— स्वतन्त्रपुरुषप्रणीतत्वे तत्प्रणेतरि भ्रमप्रमादविप्रलिप्साकरणापाटवादिशङ्काना मपरिहार्यत्वेन बुद्धाद्यागमव देव तेषा मप्रामाण्यं

तस्मात् ब्रह्मणो वेदकर्तृता कथ मिति प्राप्ते ब्रमः ॥

युक्त मेव ब्रह्मणो वेदकर्तृत्वम्। 'अस्य महतो भूतस्य निश्वसित मेत यदृग्वेदो यजुर्वेदः सामवेद' इत्यादिश्रुते र्निश्वसितव द्वेदराशे रप्रयत्नेन ब्रह्मणः प्रादुर्भावावगमात्,

'अष्टादशाना मेतासां विद्यानां भिन्नवर्त्मनाम्
आदिकर्ता कविः साक्षा च्छूलपाणि रिति श्रुतिः ॥

---

प्रसज्ये तेत्यर्थः। न चेश्वरे सार्वज्ञ्यादिनिश्चया दुक्तशङ्का नाऽवतर तीति शङ्क्यम्। वेदा दन्यत स्तन्निश्चयासम्भवा द्बुद्धादीना मपि सार्वज्ञ्यादे स्तदागमतो निश्चयसम्भवस्य तुल्यत्वात् ॥

ननु, वेदस्य स्वतन्त्रवक्तृप्रमितत्वाभावे शुकः पट इ त्यन्धवाक्यस्य चक्षुष्मत्प्रमिति पूर्वकत्वाभाव इव न प्रामाण्यं सम्भव तीतिचे न्न। अपौरुषेयत्वेन वक्तृदोषाभावसिद्धौ शुक बालादिप्रमाणवाक्यसाधारण्येन योग्यवाक्यत्वेनैव प्रामाण्यसम्भवात्। अन्धवाक्यन्यायेन मूला पेक्षा तु पौरुषेयवाक्य एव। अर्थ मुपलभ्य रचितं हि वाक्यम् पौरुषेयम्। त त्स्वप्रामाण्य निर्वाहार्थं शुकः पट इ त्यन्धवाक्यं तन्मूलभूत स्योपदेष्टु श्चक्षुष्मत्ता मिव स्वमूलोपलम्भस्य नियमेन प्रामाण्य मपेक्षते। अपौरुषेयं तु वाक्यं मूलप्रमाणनिरपेक्षं त देव चक्षुष्मत्स्थानीय मिति न तत्र लौकिकन्यायोऽवतरति। नहि शुकः पट इ त्यन्धवाक्ये चक्षुष्मद्वाक्यमूलकत्वं दृष्ट मिति चक्षुष्मद्वाक्येपि चक्षुष्मद्वाक्यान्तरापेक्षकत्वं सम्भवति। तस्मा द्वेदनित्यत्वश्रुति विरोधा दुक्त भ्रमप्रमादादिसम्भवेन तत्प्रामाण्यसंशयप्रसङ्गा च्च न ब्रह्मणो वेदकर्तृत्व मतो न तेन सार्वज्ञ्यं च सिध्य तीति पूर्वपक्ष मुपसंहरति तस्मा दिति — सूत्रसूचितं सार्वज्ञ्यहेतु मुप पादयितुं प्रतिजानीते युक्त मेवेति — ननु, ब्रह्मणो वेदोपादानत्वेन आधुनिकाध्यापकविषया सर्ववेदाध्यापकत्वेन वा निश्वसितश्रुति रुपपन्ना। ततो न तस्याऽर्थ मुपलभ्य रचयितृत्वरूपं वेद कर्तृत्वं वा तन्मूलं वा सार्वज्ञ्यं सिध्यती त्याशङ्कयोपबृंहणानुसारा त्तत्प्रतिपादकश्रुत्यन्तरा च्चोक्त विधं वेदकर्तृत्वं निरूपयितु मुपबृंहण मुदाहरति अष्टादशाना मिति ॥

चत्वारो वेदाः, शीक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा कल्प श्चेति षडङ्गानि, पुराणन्यायमीमांसाधर्मशास्त्राणि चत्वारि, आयुर्वेद धनुर्वेद गान्ध र्वार्थशास्त्रात्मका ऋग्वेदाद्युप वेदा श्चत्वार श्चे त्यष्टादश विद्यास्थानानि। एतानि विद्योत्पत्तिस्थानत्वा द्विद्याशब्देन लक्ष्यन्ते। तत्र परमेश्वराराधनभूतकर्मोपासनाद्वारेण साक्षा च्च परमेश्वरप्रतिपादका श्चत्वारो वेदाः प्रधान

इति परमेश्वरस्य सकलविद्याकर्तृत्वप्रतिपादना च। सृष्टेः प्राक् स्वात्मनि विलीनानां वेदानां पूर्वपूर्ववर्णानुपूर्व्यनुरूपरचनया पुनः कर्ता

भूताः। तदीयस्वरवर्णपदतदर्थविचारणसाधनानि शिक्षाव्याकरणनिरुक्तानि। तत्तद्विनियोगादि कर्मानुष्ठानविधाविधायकः कल्पः। कर्माङ्गमन्त्रेषु ज्ञातव्यानां गायत्र्यादिच्छन्दसां निर्णायकं छन्दः। कर्माङ्गकालविशेषनिर्णायकं ज्योतिषम्। सृष्ट्यादिकथाप्रपञ्चनेन परमेश्वरमहाविभूत्युपबृंहणार्थानि पुराणानि ॥

वेदान्ततात्पर्यनिर्णयानुकूलं षड्विधशङ्कान्तर्गतोपपत्तिरूपानुमानतत्परिकरशोधनसाधनं न्यायशास्त्रम्। वेदार्थनिर्णयानुकूलन्यायविचारात्मिका मीमांसा। वर्णाश्रमानुगुणानां तत्तदाचारणधर्मप्रतिपादकं धर्मशास्त्रम्। सकलानुष्ठानसाधनदेहपाटवार्थं आयुर्वेदः। राज्यपालनोपयोगियन्त्रजातपरिज्ञानार्थो धनुर्वेदः। सकलदेवताप्रीणनगीतिज्ञानार्थं गान्धर्वम्। दृष्टादृष्टार्थयोः साधनार्जनोपायज्ञानार्थं मर्थशास्त्रम्। वैदिकहरिश्चन्द्रोपाख्यानादिप्रपञ्चनपराणा मितिहासानां पुराणशब्देनैव संग्रहः। वैदिकदेवताराधनप्रकारविशेषप्रतिपादकानां शिवागमानां धर्मशास्त्रशब्देन ग्रहणम्। अधिकं विद्यास्थानविनिर्णयेऽस्माभिः प्रपञ्चित मिति नेह। एषां सर्वेषां विद्यास्थानाना मादिकर्ता सृष्ट्यादौ प्रथमकर्ता शूलपाणिः। इम मर्थं श्रुतिर प्याभाषयति 'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति। अस्मा न्मायी सृजते विश्व मेत' दिति। न चाय मध्यापकवत् तत्तद्विद्यास्थानगतवर्णावलीमात्ररचयिता। किंतु साक्षात्कविः। कवयो ह्यर्थविशेष मुपलभ्य श्लोकादिनिर्मातारः। ते तु परमेश्वरा दन्ये पूर्वपूर्वकविच्छायापत्त्या कवयः। अयं तु स्वय मेव तत्तदर्थ मुपलभ्य सर्वविद्यास्थाननिर्मातृत्वा त्साक्षात्कविः। अत्रापि श्रुतिः। 'त देव ब्रह्म परमं कवीना' मिति। त त्परब्रह्मैव कवीनां मध्ये परमं सर्वोत्कृष्टम्। अन्ये हि तत्तद्विद्यास्थानैकदेशनिर्मातारो देवमनुष्यादयः कवयः। अयं तु सकलविद्यास्थानप्रथमनिबन्धृत्वा त्सर्वोत्कृष्टः कवि रित्यर्थः। 'कविं कवीना मुपमश्रवस्तमम्', 'उदीरयं कवितमं कवीना' मित्यादीनि श्रुत्यन्तराण्य प्युक्त मर्थं निर्धारयन्ति। न न्वेवं कविशब्देन व्यवहारा दीश्वर स्याऽर्थ मुपलभ्य वेदादिरचयितृत्व मङ्गीकार्येत। तेन स्वेच्छाधीनयाऽऽनुपूर्व्या तद्रचयितृत्वं प्रसज्येत प्राक्सिद्धानुपूर्वीसहितं प्राचीनश्लोकं कीर्तयतः कविव्यवहाराभावात्। एवं च आनुपूर्व्यनन्यथात्वरूपस्य वेदनित्यत्वस्याऽभावेन वेदनित्यत्वश्रुतिः सर्वथा व्याहन्येते त्याशङ्कां परिहरति सृष्टेः प्रा गिति ॥

अत्राऽय माशयः। सर्वानुग्राहकः सर्वज्ञः परमेश्वरः प्रळये स्वस्मि न्विलीना न्वेदान् सृज्यमानाः प्राणिन एतेभ्यो वेदवाक्येभ्यः कर्मोपासनादिक मवगम्य तदाचरणेन कृतार्थाः स

भवति सर्वज्ञः परमेश्वरः। अत एव वेदाना मपौरुषेयत्व मीश्वरकार्यत्वं च। येषां रागद्वेषादय स्तेषां वचन मप्रमाण मपि भवति। निरस्तसमस्तदोषकल

न्त्वित्याशयेन हि विरचयति। एवंविधभावमूलं वाक्यविरचन मर्थानभिज्ञाध्यापकोच्चरितवेद वाक्य मिवाऽर्थोपलब्धि मनपेक्ष्य वर्णानुपूर्वीज्ञानमात्रेण न सम्भव तीत्यर्थ मुपलभ्य रचयितृत्व मेव कविशब्देन विवक्षित मिति ॥

ननु, आनुपूर्वीव्यत्यासाभावेन वेदनित्यत्वश्रुतौ सङ्गतायाम प्यर्थ मुपलभ्य रचयितृत्व रूपस्य पौरुषेयत्व स्याभ्युपगमेन तत्र भ्रमप्रमादादिशङ्कासम्भवेन वेदप्रामाण्यं शङ्काकलङ्कित मेव स्या दि त्याशङ्कां निराकरोति अत एवेति — वेदगतानां वर्णपदवाक्यप्रकरणतदानुपूर्वीतदर्थाना मनादिसिद्धत्वा देतेषु पुरुषबुद्धिकृतस्य व्यत्यास स्याऽभावा देव वेदस्य प्रामाण्य मविशङ्क मिति, अर्थाभिज्ञाध्यापकोच्चरितवेदवाक्यस्ये वाभिप्रायनिर्वाहार्थं मस्मा द्वाक्या दय मर्थः प्रत्ये त्वि त्याशयवत्त्वमात्रे णैव अर्थं मुपलभ्य रचयितृत्वस्य सम्भवा च्च, अर्थोपलम्भपूर्वकसकलवेदकर्तृत्वेन परमेश्वरस्य सार्वज्ञ्यलाभा च्च सर्वं सुसङ्गत मिति च भावः। एवं च वेदाना मपौरुषेयत्वं परमे श्वरकृतित्वं चाऽविरुद्ध मिति सिद्धम्। एतेन तार्किकाणां वेदपौरुषेयत्वानुमानानि, पूर्वमीमांस कानां वेदापौरुषेयत्वानुमानानि च निरस्तानि। तथाच, तार्किका स्ताव देव मनुमानानि कल्प यन्ति — वेदः सजातीयोच्चारणानपेक्षोच्चारितजातीयः, वाक्यत्वा ल्लौकिकवाक्यव दित्यादिना। पूर्वमीमांसका स्ताव द्वेदापौरुषेयत्वाधिकरणे काठकं, कौथुमं, तैत्तरीयक मित्यादिसमाख्या तत्त द्वेदविषया लोके दृष्टा। तद्धितप्रत्यय श्च तेन प्रोक्त मित्यर्थे वर्तते। तथा सति व्यासेन प्रोक्तं वैयासिकं भारत मित्यादा विव पौरुषेयत्वं प्रतीयते। किं च विमतं वेदवाक्यं पौरुषेयं, वाक्य त्वात् कालिदासादिवाक्यव दिति प्राप्ते ब्रूमः। अध्ययनसम्प्रदायप्रवर्तकत्वेन समा ख्योपपद्यते। कालिदासादिग्रन्थेषु तत्तत्सर्गावसाने कर्तार उपलभ्यन्ते। तथा वेदस्याऽपि पौरुषेयत्वे तत्क र्तोप लभ्येत। न चोपलभ्यते। अतो वाक्यत्वहेतुः प्रतिकूलतर्कपराहतः। तस्मा दपौरुषेयो वेदः। तथा सति पुरुषबुद्धिदोषकृत स्याप्रामाण्य स्याऽऽनाशङ्कनीयत्वा द्विधिवाक्यस्य धर्मे प्रामाण्यं सुस्थित मिति एवमादयः परेषां पक्षाः 'छन्दांसि यज्ञाः क्रतवो व्रता' नीत्यादिश्रुतिपुराणविरोधा दुपेक्ष्याः ॥

ननु, अनादिवर्णपदानुपूर्वीभङ्गाभावेन वेदाना मपौरुषेयत्व मङ्गीकृत्याऽपि तेषां प्रलये लयं सृष्टौ पुनः परमेश्वरेण समुद्धरण मित्येवं परमेश्वरकर्तृकत्वाभ्युपगमेऽपि समुद्धर्तुः भ्रमप्रमा दादिः सम्भावनीयः। तेषां प्रामाण्य माशङ्कित मेव स्या दि त्याशङ्क्याह येषा मिति — येषां विप्रलिप्सादिहेतवो रागादिदोषाः सम्भवेयु स्तेषा मेव वचनं कदाचि दप्रमाणं भवेत्। परमेश्वरस्य

ङ्कस्य निरुपप्लवनिरतिशयज्ञानप्रत्यक्षाऽनुभूयमानत्रैकालिकवस्तुजातस्य स्वतः प्रमाणस्य परमेश्वरस्य परमाप्तस्याऽवाप्तसमस्तकामस्य शिवस्य ब्रह्मणो वचनं तु प्रमाण मेव भवति। ‘ईशानः सर्वविद्याना मीश्वरः सर्वभूतानां’, ‘स नो देवः शुभया स्मृत्या संयुनक्तु’ त्विति परमेश्वरस्य सर्वविद्याप्रवर्तकत्वं शुभस्मृतिहेतुत्वं च श्रूयते। अतः सर्ववस्त्ववभासकानां वेदानां परमेश्वरकर्तृकतया परमेश्वरस्य सर्वज्ञता निश्चीयते। अज्ञातस्य वक्तु मशक्यत्वात्। यद्यपि सर्वगतस्य परमेश्वरस्य सर्ववस्तुसंयोगेन सर्वज्ञत्वं सिध्यति, तथापि सर्ववस्त्ववभासकानां वेदानां प्रणेतृता विशेषं दर्शयति। यथा दीपः स्वप्रभासंयुक्तेष्वपि रूपादिषु रूप मेव प्रकाशयति न रसादि, तथा न परमेश्वरः। किंतु स्वशक्तिसंयुक्तं सकल मपि प्रकाशय तीति ॥

ननु, परमेश्वरस्य सर्वज्ञत्वं नाम वेदोक्तसकलार्थाभिज्ञत्वम्। तर्हि

-

तु न कदाचि दपि तादृशदोषसम्बन्ध इति तेनोक्तेषु वेदेषु तदप्रामाण्यशङ्का न सम्पद्यत इत्यर्थः। निरस्तसमस्तदोषकलङ्कस्येति सामान्यतो निगदितो दोषाभाव उत्तरविशेषणै र्विशिष्य तत्तद्दोषराहित्यप्रदर्शनेन समर्थ्यते। तत्र निरुपप्लवेति भ्रमाभाव उक्तः। स्वतःप्रमाणस्येति प्रमादाभावः। परमेश्वरस्ये त्यनेन स्ववशीकृताकलप्रपञ्चत्ववाचकेन करणाऽपाटवाऽसम्भव उक्तः। परमाप्तस्येति विप्रलिप्साभावः। तत्र कारणभूतरागाद्यसम्भव स्तु अवाप्तसमस्तकामस्ये त्यनेन समर्थितः। समर्थितं शिवस्य भ्रमाद्यभावं श्रुत्युदाहरणेन स्थिरीकरोति ईशान इति -- ‘ईशानः सर्वविद्याना’ मिति श्रुतिः शिवस्य सकलविद्यैश्वर्यं प्रतिपादयन्ती तस्य विद्यासम्प्रदायप्रवर्तनविरोधिनां भ्रमादीना मभावं बोधयति। अन्यथा तदैश्वर्यानुपपत्ते रिति भावः। ननु, तत्त्व मुपदेष्टुं शक्तोऽपि विप्रलिप्सया विपरीत मुपदिशे दित्याशङ्क्य तदभावे श्रुत्यन्तर मुदाहरति सनो देव इति -- निरतिशयानन्दप्रापकतत्त्वबोधप्रदत्वं शिवस्य प्रतिपादयन्ती सनोदेव इति श्रुति स्तस्मिन् विप्रलिप्सासम्बन्धं न सहत इति भावः। एवं शास्त्रयोनित्वहेतु मुपपाद्य तस्याऽध्याहृतेन साध्ये नाऽन्वयं दर्शयति अतइति — ननु, ब्रह्मणो वेदकर्तृत्वं सिद्धं तेन महर्षीणां सार्वज्ञ्या दीश्वर स्याऽधिकं सार्वज्ञ्यं सिद्ध्येत्। तदेव न सिद्धम्। निश्वसितादिश्रुतिभि र्ब्रह्मण इव पञ्चोतादिवाक्यैः प्रजापत्यादीना मपि वेदकर्तृत्वस्य श्रूयमाणत्वा दिति शङ्कते नन्विति — प्रजापतेः परमेश्वरा द्वेदप्राप्तिश्रवणेन तस्य वेदकर्तृत्व मनुपपन्नम्। अथ प्रजापतिसृष्टाना मग्न्यादीनां कैमुत्यन्यायेनाऽसिद्ध

महर्षीणा मपि वेदार्थवेदिनां सर्वज्ञत्वं सिद्धम्, कि मत्र वैषम्य मितिचे न्न ॥

तत्कर्तु रीश्वर स्याऽधिकं ज्ञान मस्ति । व्याकरणादे रधिकार्थविदां हि पाणिनिप्रभृतीनां तत्प्रणेतृत्वं दृश्यते । वेद श्च सर्वार्थावभासकोऽपि न सर्वं मुख्यतः प्रकाशयति, किंतु किमपि लक्षणया, किमपि सामान्येन, किमपि विशेषेण । परमेश्वरः सर्वसाक्षी सर्वं प्रत्यक्षय तीति वेदेश्वरयो रेताव द्वैषम्य मिष्यते ॥

ननु, परमेश्वर स्यैव वेदकर्तृत्व मिति न नियमः । 'षड्ढोता वै भूत्वा प्रजापति रिदं सर्व मसृजत ऋचो यजूंषि सामा' नीत्यादि श्रवणा द्धिरण्य गर्भादे रपि तत्कर्तृत्वाऽवगमा दितिचे न्न ॥

हिरण्यगर्भोत्पत्तेः प्रागपि वेदानां सद्भावात् । श्रूयते हि, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदां श्च प्रहिणोति तस्मै' इति । यः सर्वदेवाना मादि मस्य हिरण्यगर्भ स्याऽपि कर्ता तस्मै सर्वान् वेदा नुपदिशति स एव सर्वा धिको वेदकर्ता परमदेशिकः । तथाहि श्रुत्याऽभिव्यज्यते, 'यो देवानां प्रथमं पुरस्ता द्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुन' क्त्विति । महर्षि वेदकर्ता यः सर्वज्ञत्वा दिना विश्वस्मा त्त्रिदशनिष्प्रपञ्चा दधिको रुद्रः परब्रह्मभूतः सर्वेषां देवाना

---

मित्याशयः । सृज्यमानाय प्रजापतये वेदप्रदानाम्नानेन ततः प्रागेव परमेश्वरेण वेदाः प्रणीता इति सिद्धत्वा दि त्याशयेन परिहरति नेति — स्मृत्येति — प्राणलिङ्गानुसन्धानरूपा स्मृति सन्तति रुच्यते । तज्जन्यसाक्षात्कार स्तद्वाचकेन लक्ष्यते । स्मृतिलाभे सति सर्वग्रन्थीनां विप्रमोक्ष इति श्रुत्यन्तरेऽपि मोक्षजनकज्ञाने स्मृतिपदं प्रयुज्यते । मन्त्रं व्याचष्टे महर्षिरिति — तस्मिन् जन्म न्यन्यस्मा दध्ययनमनपेक्ष्य स्वय मेव सूक्तविशेषरूपवेदैकदेशद्रष्टारो हि वसिष्ठादय ऋषय उच्यन्ते । अतः परमेश्वरः कदाचिद ध्ययन मनपेक्ष्य सकलवेदप्रणेतृत्वा न्महर्षि रिति निर्दिश्यते । एतेन यद्रुद्रस्य महर्षिपदेन ऋषिभ्यो विशिष्टत्वं प्रलपित मवैदिकै स्त न्निरस्तम् ॥

रुद्रशब्दोऽत्र संसाररुजां द्रावके परब्रह्मणि वर्तते, नतु संहाररुद्रादा विति विवृणोति रुद्र इति — परमामृतेति — परम ममृतं ब्रह्म तल्लक्ष्मीसमावेशः सत्यसङ्कल्पत्वादिना तदीयपरम

महर्षीणा मपि वेदार्थवेदिनां सर्वज्ञत्वं सिद्धम्, कि मत्र वैषम्य मितिचे न्न ॥

तत्कर्तु रीश्वर स्याऽधिकं ज्ञान मस्ति। व्याकरणादे रधिकार्थविदां हि पाणिनिप्रभृतीनां तत्प्रणेतृत्वं दृश्यते। वेद श्च सर्वार्थावभासकोऽपि न सर्वं मुख्यतः प्रकाशयति, किंतु किमपि लक्षणया, किमपि सामान्येन, किमपि विशेषेण। परमेश्वरः सर्वसाक्षी सर्वं प्रत्यक्षय तीति वेदेश्वरयो रेताव द्वैषम्य मिष्यते ॥

ननु, परमेश्वर स्यैव वेदकर्तृत्व मिति न नियमः। 'षड्ढोता वै भूत्वा प्रजापति रिदं सर्व मसृजत ऋचो यजूंषि सामा' नीत्यादि श्रवणा द्धिरण्य गर्भादे रपि तत्कर्तृत्वाऽवगमा दितिचे न्न ॥

हिरण्यगर्भोत्पत्तेः प्रागपि वेदानां सद्भावात्। श्रूयते हि, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदां श्च प्रहिणोति तस्मै' इति। यः सर्वदेवाना मादि मस्य हिरण्यगर्भ स्याऽपि कर्ता तस्मै सर्वान् वेदा नुपदिशति स एव सर्वा धिको वेदकर्ता परमदेशिकः। तथाहि श्रुत्याऽभिव्यज्यते, 'यो देवानां प्रथमं पुरस्ता द्विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुन' क्त्विति। महर्षि र्वेदकर्ता यः सर्वज्ञत्वा दिना विश्वस्मा द्विरञ्चिप्रपञ्चा दधिको रुद्रः परब्रह्मभूतः सर्वेषां देवाना

मित्याशयः। सृज्यमानाय प्रजापतये वेदप्रदानाम्नानेन ततः प्रागेव परमेश्वरेण वेदाः प्रणीता इति सिद्धत्वा दि त्याशयेन परिहरति नेति— स्मृत्येति—प्राणलिङ्गानुसन्धानरूपा स्मृति सन्तति रुच्यते। तज्जन्यसाक्षात्कार स्तद्वाचकेन लक्ष्यते। स्मृतिलाभे सति सर्वग्रन्थीनां विप्रमोक्ष इति श्रुत्यन्तरेऽपि मोक्षजनकज्ञाने स्मृतिपदं प्रयुज्यते। मन्त्रं व्याचष्टे महर्षिरिति—तस्मिन् जन्म न्यन्यस्मा दध्ययनमनपेक्ष्य स्वय मेव सूक्तविशेषरूपवेदैकदेशद्रष्टारो हि वसिष्ठादय ऋषय उच्यन्ते। अतः परमेश्वरः कदाचि दप्यध्ययन मनपेक्ष्य सकलवेदप्रणेतृत्वा न्महर्षि रिति निर्दिश्यते। एतेन यद्रुद्रस्य महर्षिपदेन ऋषिभ्यो विशिष्टत्वं प्रलपित मवैदिकै स्त न्निरस्तम् ॥

रुद्रशब्दोऽत्र संसाररुजां द्रावके परब्रह्मणि वर्तते, नतु संहाररुद्रादा विति विवृणोति रुद्र इति—परमामृतेति—परम ममृतं ब्रह्म तल्लक्ष्मीसमावेशः सत्यसङ्कल्पत्वादिना तदीयपरम

## अथ समन्वयाधिकरणम् ४

प्रथमाधिकरणे जिज्ञास्यतया प्रतिपादितस्य परब्रह्मणः शिवस्य परिज्ञाने लक्षणापेक्षायां द्वितीयाधिकरणेन लक्षणं जगज्जन्मादिरूप मभिहितम्। तस्मिन् किं प्रमाण मित्याकाङ्क्षायां तृतीयाधिकरणेन वेदान्तशास्त्रस्य तद्विषये प्रामाण्यं तन्मूलत्वं च निरूपितम्। येन य दव्यभिचारेण सिध्यति, तद्धि तस्य प्रमाण मुच्यते। वेदान्तवाक्यानां कथं वा ब्रह्मसाधकत्व मित्याकाङ्क्षायां चतुर्थाधिकरण मवतार्यते ॥

## अथ समन्वयाधिकरणम् ४

ननु, प्रथमाधिकरणे शास्त्रानारम्भहेतुशङ्कानिराकरणेन शास्त्रारम्भ मुपपाद्य जन्मादिसूत्रादिशास्त्रं प्रवर्तितम्। समन्वयाधिकरणे तु सिद्धरूपे ब्रह्मणि वेदान्तानां प्रामाण्यं न सम्भवतीति पूर्वपक्षनिराकरणेन ब्रह्मणि वेदान्तानां प्रामाण्य मुपपाद्यते। तस्मा च्छास्त्रारम्भोपपादकतया जन्माधिकरणा त्प्रागेव समन्वयाधिकरणं निवेशनीयम्। वेदान्तानां ब्रह्मणि प्रामाण्ये सिद्धे हि तन्निर्णयफलकवेदान्तविचारोपयोगिन्यायग्रथितं शास्त्र मारम्भणीयं स्यात्। ननु तेषां ब्रह्मणि प्रामाण्ये सिद्ध। तत श्चाऽस्याधिकरणस्य शास्त्रयोनित्वाधिकरणानन्तर्यं मयुक्त मिति शङ्कां निराकर्तुं वृत्तसङ्कीर्तनेन समन्वयाधिकरणस्य शास्त्रयोनित्वाधिकरणानन्तर्यं सङ्गतिविशेषेण प्राप्त मित्युपपादयितु माह प्रथमाधिकरण इति — प्रथमाधिकरणे ब्रह्म विचार्य मिति प्रतिज्ञातम्। अपरिच्छेद्यत्वा द्ब्रह्म न विचारार्ह मिति शङ्कानिराकरणार्थ मिद मित्थ मिति परिच्छेत्त मशक्यत्वेऽपि लक्षणमुखे नेतरव्यावृत्त्या परिच्छेत्तुं शक्य मिति तेन सूचितम्। तत स्तत्किंलक्षणं, येन त त्तथा परिच्छेत्तुं शक्य मि त्याकाङ्क्षायां जगज्जन्मादि तल्लक्षण मिति निगद्य, तस्य तल्लक्षणत्वं तदनुपपत्तिशङ्कानिराकरणेन निरूपितम्। ततो जगज्जन्मादिकारणे ब्रह्मणि किं प्रमाण मित्याकाङ्क्षायां शास्त्रं प्रमाण मिति प्रतिज्ञा यानुमानगम्ये ब्रह्मणि शास्त्रस्य न प्रामाण्य मिति शङ्कानिराकरणेन तस्य तस्मि न्प्रामाण्य मुपपादितम्। ततोपि शब्दानां कार्य एव व्युत्पत्तेः सिद्धरूपब्रह्मबोधकत्वं न सम्भव तीति तस्य तस्मि न्प्रामाण्य मसिद्ध मिति शङ्काया ब्रह्मणः शास्त्रप्रमाणकत्वनिर्णयानन्तरप्रसक्तत्वेन शास्त्रयोनित्वाधिकरणानन्तर्य मेवाऽस्याधिकरणस्य प्राप्त मित्यर्थः। एव मस्याऽधिकरणस्य प्राङ्निवेश्यत्वशङ्कां परिहृत्य, शास्त्रयोनित्वाधिकरणानन्तर्य मेव समर्थितुं ते नाऽऽक्षेपिकीं सङ्गतिं प्रदर्शयति येनेत्यादिना — ननु, येन य त्सिध्यति तस्य तत्प्रमाण मि त्येतावत एव लक्षणत्वसम्भवा द्व्यभिचारे णेति विशेषणं किमर्थ मितिचे दुच्यते। अनेन भाष्येण न्यायमतेन वा मतान्तरेण वा सिद्धं प्रमाणसामान्यलक्षणं न निगद्यते। किंतु अप्राप्ते शास्त्र मर्थव दिति मीमांसकमर्यादाप्रसिद्धं शास्त्रप्रामाण्यप्रयोजकं निगद्यते। वेदान्तानां ब्रह्मणि प्रामाण्यस्य पूर्वसूत्रकथित स्याऽऽक्षेपे तदनन्तरवाक्येन करिष्यमाणे तत्कथन स्योपयोगित्वात्। एवं वेदान्तानां ब्रह्मणि प्रामाण्यप्रयोजकं निगद्य तदभावा द्वेदान्तानां ब्रह्मणि प्रामाण्यं न सिध्य तीत्याक्षेपं दर्शयति वेदान्तवाक्याना मिति — कथ मिति करिष्यमाणाक्षेपो निगद्यते॥

## तत्तु समन्वयात् ॥ १-१-४ ॥

तच्छब्देन प्रकृतं ब्रह्म परामृश्यते । तुशब्देन सर्वाणि वेदान्तवाक्यानि समाह्रियन्ते । समन्वयशब्देन तात्पर्येण संबन्ध उच्यते । तत ब्रह्म वेदान्त वाक्यानि तात्पर्यलिङ्गसंबन्धा द्बोधयन्तीति सूत्रार्थः ॥

अत्र सर्वाणि वेदान्तवाक्यानि विषयः ॥

वेदान्तवाक्यानां ब्रह्मबोधकत्वं युक्तं नवेति संशयः ॥

सर्वत्र संबन्धग्रहणसापेक्षं शब्द स्याऽर्थावबोधकत्वम् । शब्दार्थयोः संबन्धज्ञान मन्तरेण हि पुरुषस्य शब्दार्थप्रत्ययो न भवति । संबन्धज्ञानं च वृद्धव्यवहारसापेक्षम् । व्यवहार श्च कार्यैकगोचरः । तथाहि, गा मानय, गां बधा नेति वृद्धवाक्यश्रवणसमनन्तरं प्रवर्तमानं प्रयोज्यवृद्ध मवगम्य पार्श्वस्थो व्युत्पित्सु रेव मवधारयति, सर्वथाऽयं कार्यावगतिसमनन्तर मेव प्रवर्तते । सा च कार्यावगति रेतस्मा देव वाक्या त्समुत्पन्ना । अन्यथा कथ म स्यैतद्वाक्यश्रवणसमनन्तरं प्रवृत्ति रिति । पुन र्गवानयनबन्धन दर्शना त्कार्यविशेषं निश्चिनोति । त देवं कार्यार्थत्वा द्व्युत्पत्ते र्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यम् । किं च कार्यविशेषत्वा ज्जगतः कर्तृविशेषस्य ब्रह्मणोऽनुमाना दपि सिद्धेः । कथ मसि न्नप्रमितविषयाणां वेदान्तवाक्यानां प्रामाण्यम् । अथवा विधिपरा ण्येव वेदान्तवाक्यानि, न ब्रह्मपराणि । उभय

---

सूत्रे द्वितीयान्तेन त दिति पदेन प्रकृतं ब्रह्म परामृश्यते । तु रवधारणार्थः । तस्याऽध्या हारेन वेदान्ताः साधयन्ती त्यनेन सम्बन्धः । तत श्च साधकत्वलक्षणविशेषणसङ्गत स्याऽवधारण स्याऽयोगव्यवच्छेदपरत्वात् , कुमुदं श्वेत मवेति वाक्ये विशेषणगतावधारणबला त्सर्वेषां कुमुदानां श्वैत्य मिव सर्वेषां वेदान्तानां ब्रह्मसाधकत्वं लभ्यते । सम्य गन्वयः समन्वयः, उपक्रमादिलिङ्ग बोधिततात्पर्यसङ्गतिः । पञ्चमी हेत्वर्था । एवं च सर्वे वेदान्ता ब्रह्म साधयन्ति । उपक्रमादिलिङ्ग बोधिततात्पर्यकत्वा दिति सूत्रार्थः । सूत्रं व्याचष्टे तुशब्देनेति — एवं सूत्रार्थं निगद्य सूत्रार्थ सूचिता नधिकरणावयवा न्प्रदर्शयति अत्रेति ॥

परत्वे वाक्यभेदः स्यात् । अतो वेदान्तवाक्यानां न ब्रह्मबोधकत्वं युक्त मिति पूर्वः पक्षः ॥

युक्त मिति सिद्धान्तः । वेदान्तवाक्यानां तात्पर्यलिङ्गसमन्वयेन ब्रह्म बोधनसमर्थत्वात् । य दुक्तं कार्यार्थत्वा द्व्युत्पत्ते र्न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्य मिति त दसत् । 'पुत्र स्ते जात' इत्यादिषु सिद्धार्थे ष्वपि वाक्येषु संबन्धग्रहणदर्शना द्वृद्धव्यवहारेऽपि व्युत्पित्सुः स्वस्य प्रवृत्तिहेतुभूतायाः कार्यावगतेः पदार्थज्ञानपूर्वत्वावगमात् । प्रयोज्यवृद्धस्य प्रयोजकवाक्यं पदार्थज्ञान मुत्पादय तीति निश्चिनोति । ततः सिद्धार्थेष्वपि शब्द स्याऽभि धाननिश्चयः ॥

अथवा किं मिह वृद्धव्यवहारेण । व्युत्पत्तेः प्रकारान्तरेणाऽपि सिद्ध त्वात् । तथाहि बाला मात्रादिभिः शिशुपशुप्रभृती नर्था नङ्गुल्यादिना निर्दिश्य तत्तच्छब्दां स्तेषु ते ष्वर्थेषु प्रयुञ्जानै र्बहुशः शिक्षिता स्तेषु ते ष्वर्थेषु व्युत्पाद्यन्ते । काव्यनाटकानभिज्ञाः पुरुषा स्तदभिज्ञपुरुषसमीप मेत्य पदविच्छेदं कृत्वा अस्य शब्द स्याऽय मर्थ इति सर्वशब्दाना मर्थ मव गच्छन्ति । अतः सिद्धार्थेऽपि व्युत्पत्तिसंभवा त्तत्र शब्दस्य प्रामाण्य मस्ति । ततो वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यम् ॥

य दुक्तं जगतः कार्यविशेषत्वा त्कर्तृविशेषस्य ब्रह्मणोऽनुमाना दपि सिद्धि रिति त न्न संभवति । विचित्ररचनस्य रथप्रासादादे रनेककर्तृकत्व

---

शब्दानां सिद्धार्थे शक्तिग्रहनिरूपणेन निष्पन्नं प्रथमपूर्वपक्ष मुपसंहरति अत इत्यादिना ॥

द्वितीयपूर्वपक्ष मनूद्य पूर्वाधिकरणनिरूपितजगत्कर्त्रनुमानदूषणोद्घाटनेन निरस्यति यदुक्त मित्यादिना — एवं तर्हि पूर्वाधिकरण एव निराकृत स्याऽनुमानस्य पुन रुत्थाने किं कारण मि त्याशङ्क्य साङ्ख्याधिकरणपर्यालोचनया वेदान्तानुगुणं तदनुमानप्रामाण्यं सिद्धान्ते व्यूरीकार्य मि त्येत देव निदान मिति सूचय न्ननुमानप्रामाण्याभ्युपगमस्य वेदान्तानुगुण्य

दर्शनादनुमाने नाऽस्य ज्ञानं पुरुषार्थोपयोगात्। तत्कर्मवश्यत्वादीनां कर्तरि ज्ञाने अपर्यवसानात्। अतो नानुमानगम्यं ब्रह्म भवति। किञ्च श्रुत्यानुगुण्यादनुमानमपि ब्रह्मणि प्रमाणं भवतु नाम। यत्र वाक्यानां तात्पर्यं तत्र हि तेषां प्रामाण्यम्, न प्रत्यक्षादीनामिव सर्वत्र। वेदान्तवाक्यानां ब्रह्मणि तात्पर्यनिर्णायकानि तानि लिङ्गानीति चेदुपक्रमादीनि। तथा पठन्ति,

> उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्
> अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ इति।

तदिह उपक्रमादिभिर्लिङ्गैर्वेदान्तवाक्यानां ब्रह्मणि तात्पर्यं निश्चीयते। य उपक्रमादिभिस्तात्पर्यनिर्णयस्तदेव वेदान्तवाक्यानां श्रवणमित्युच्यते। तथा ह्युच्यते,

---

कृतत्वेन स्वातन्त्र्यकृतत्वाऽभावाद्वेदान्तप्रामाण्यबाधको न भवतीत्याशयेनाह किञ्चेति—अथ ब्रह्मपराणां वेदान्तानामुपासनाविधावपि तात्पर्ये वाक्यभेदप्रसङ्ग इति तृतीयपूर्वपक्षनिराकरणपूर्वकं तेषामुभयत्रापि तात्पर्यमुपपादयति यत्र वाक्यानामित्यादिना —तज्ज्ञाननिर्विषयपरा अपि ज्ञायन्त इत्यन्तेन वेदान्तानां ब्रह्मणि तात्पर्यं तत्प्रमाणप्रश्नमुखेन निरूपयितुमुपक्रमते वेदान्तवाक्यानामिति— ननु, उपक्रमादिलिङ्गनिर्णीततात्पर्ये णाऽन्वयस्य सिद्धत्वमेतूकरणेनाऽत्राऽधिकरणे उपक्रमादिभिस्तात्पर्यनिर्णयोक्तिरसङ्गतेत्याशङ्क्याह तदिहेति ॥

यतोऽस्मिन्नधिकरणे समन्वयस्य सिद्धवत्करणमुपक्रमादिलिङ्गानां तात्पर्यप्रसाधनं विना न सम्भवति, ततः शास्त्रेऽस्मिन्नीक्षत्यधिकरणे स्थालीपुलाकन्यायेन केषांचिद्वाक्यानामुदाहरणे सर्वेषां वेदान्तवाक्यानां तात्पर्यं निर्णीयत इत्यर्थः। तत्प्रवर्तकमिति तस्य ज्ञानस्य प्रवर्तकमित्यर्थः ॥

ननु, उपक्रमादयः प्रमाणश्लोके सप्त परिगणिताः। कथं षड्विधं तात्पर्यलिङ्गमिति प्रसिद्धिरित्याशङ्क्याह उपक्रमेति — किं तत्तात्पर्यं यस्योपक्रमादिभिर्निर्णय इत्याशङ्क्याह तात्पर्यमिति—परशब्द इष्टवाची। 'तत स्तदालोकनतत्पराणाम्' मित्यादिप्रयोगदर्शनात्। तदर्थरूपं वस्तु परमिष्टमस्येति तत्परं वाक्यम्। वाक्यस्येच्छाभावात्तद्वक्तुरर्थविवक्षारूपेच्छा तदीयत्वे नोपचर्यते ॥

[illegible]

अज्ञानप्रभवं दुःखं ज्ञानं तस्य निवर्तकम्
सर्ववेदान्तवाक्यानां श्रवणं त त्प्रवर्तकम् ॥
श्रवणं नाम वाक्यानां वैदिकानां परात्परे
उपक्रमादिभि र्लिङ्गैः शिवे तात्पर्यनिर्णयः ॥ इति

उपक्रमोपसंहारा वेकं लिङ्गं वेदान्तशब्दानां ब्रह्मणि शिवे तात्पर्य निर्णये । तत्र तात्पर्यं नाम तत्स्वरूपोपासनाविषयत्वम ॥

उपक्रमोपसंहारौ—' स देव सौम्येद मग्र आसी ' दित्युपक्रमः। ' त त्त्व मसी ' त्युपसंहारः । ' धातुः प्रसादा न्महिमान मीश ' मित्युपक्रमः । ' यः परः स महेश्वर ' इत्युपसंहारः । एव मन्यत्रापि द्रष्टव्यम् ॥

---

ननु, वेदे स्वतन्त्रवक्तु रभावा त्त स्येच्छा न सिद्ध्य तीतिचे दुच्यते। कल्पादौ सकल वेदप्रवर्तकस्य शब्दब्रह्माधिष्ठातुः परमेश्वरस्य प्रत्येक मृग्वेदाद्यभिमानिनां देवताविशेषाणां चेच्छा प्रवाहानादिन्यायसिद्धा अर्थविषयिणी विद्यत एव। यथोक्तं ब्रह्मैकत्वाधिकरणवार्तिके,

शब्दब्रह्मेति य च्चेदं शास्त्रं वेदाख्य मुच्यते
तद प्यधिष्ठितं सर्वं मेकेन परमात्मना ॥
त थर्ववेदाद्यो वेदाः प्रोक्ता येऽपि पृथ क्पृथक्
भोग्यत्वे नात्मनां तेऽपि चैतन्यानुगताः सदा ॥
तेषा मन्तर्गतच्छानां वाक्यार्थप्रतिपादने
विवक्षा चाऽविवक्षा च ज्ञायते शब्दशक्तिनः ॥
विधिशक्त्या गृहीतं य त्त त्सर्वं हि विवक्षितम
तयैव तु परित्यक्तं व्याख्येय मविवक्षतम् ॥ इति

एतेन च य द्वाक्यं वक्त्रा यदर्थविवक्षया प्रणीतं तद्वाक्यं तत्पर मिति पर्यवस्यति । एत च्छ्लोके वक्तृविवक्षयाऽवगम्यते । वेदे न्यायेन । तत्स्वरूपोपासनाविषयत्व मिति — तस्य ब्रह्मणः स्वरूपं चोपासना च ते विषया येषा मिति तत्स्वरूपोपासनाविषया वेदान्ताः । तेषां भाव स्तत्त्वं । एव मन्यत्रापीति — आनन्दमयाद्यधिकरणे षूदाहरिष्यमाणे विषयवाक्य इत्यर्थः । त त्त्व मसीति नवकृत्वो जीवशरीरकत्वाभ्यासः । ' सर्वो वै रुद्रः ', ' पुरुषो वै रुद्रः स न्महः ', ' सर्वो ह्येष रुद्रः ' इति सर्वात्मत्वाभ्यासः । ' यो वै रुद्रः स भगवा न्य श्च ब्रह्मे ' त्यादिषु

अज्ञानप्रभवं दुःखं ज्ञानं तस्य निवर्तकम्
सर्ववेदान्तवाक्यानां श्रवणं त त्प्रवर्तकम् ॥

श्रवणं नाम वाक्यानां वैदिकानां परात्परे
उपक्रमादिभि र्लिङ्गैः शिवे तात्पर्यनिर्णयः ॥ इति

उपक्रमोपसंहारा वेकं लिङ्गं वेदान्तशब्दानां ब्रह्मणि शिवे तात्पर्य निर्णये । तत्र तात्पर्यं नाम तत्स्वरूपोपासनाविषयत्वम ॥

उपक्रमोपसंहारौ—'स देव सौम्येद मग्र आसी' दित्युपक्रमः। 'त त्त्व मसी' त्युपसंहारः । 'धातुः प्रसादा न्महिमान मीश' मित्युपक्रमः । 'यः परः स महेश्वर' इत्युपसंहारः । एव मन्यत्रापि द्रष्टव्यम् ॥

---

ननु, वेदे स्वतन्त्रवक्तु रभावा त्त स्येच्छा न सिद्धय तीतिचे दुच्यते। कल्पादौ सकल वेदप्रवर्तकस्य शब्दब्रह्माधिष्ठातुः परमेश्वरस्य प्रत्येक मृग्वेदाद्यभिमानिनां देवताविशेषाणां चेच्छा प्रवाहानादिन्यायसिद्धा अर्थविषयिणी विद्यत एव। यथोक्तं ब्रह्मैकत्वाधिकरणवार्तिके,

शब्दब्रह्मेति य च्चेदं शास्त्रं वेदाख्य मुच्यते
तद प्यधिष्ठितं सर्वं मेकेन परमात्मना ॥

त थर्ववेदादयो वेदाः प्रोक्ता येऽपि पृथ क्पृथक्
भोग्यत्वे नात्मनां तेऽपि चैतन्यानुगताः सदा ॥

तेषा मन्तर्गतेच्छानां वाक्यार्थप्रतिपादने
विवक्षा चाऽविवक्षा च ज्ञायते शब्दशक्तिनः ॥

विधिशक्त्या गृहीतं य त्त त्सर्वं हि विवक्षितम
तयैव तु परित्यक्तं व्याख्येय मविवक्षतम् ॥ इति

एतेन च य द्वाक्यं वक्त्रा यदर्थविवक्षया प्रणीतं तद्वाक्यं तत्पर मिति पर्यवस्यति । एत च्छ्लोके वक्तृविवक्षयाऽवगम्यते । वेदे न्यायेन । तत्स्वरूपोपासनाविषयत्व मिति — तस्य ब्रह्मणः स्वरूपं चोपासना च ते विषया येषा मिति तत्स्वरूपोपासनाविषया वेदान्ताः । तेषां भाव स्तत्त्वं । एव मन्यत्रापीति — आनन्दमयाद्यधिकरणे षूदाहरिष्यमाणे विषयवाक्य इत्यर्थः । त त्त्व मसीति नवकृत्वो जीवशरीरकत्वाभ्यासः । 'सर्वो वै रुद्रः', 'पुरुषो वै रुद्रः स न्महः', 'सर्वो ह्येष रुद्रः' इति सर्वात्मत्वाभ्यासः । 'यो वै रुद्रः स भगवा न्य श्च ब्रह्मे' त्यादिषु

रूपप्रत्यायकेन चक्षुषा यथा द्रव्यस्याऽपि सिद्धि स्तथा विधिपरै रपि वेदान्तै ब्रह्मसिद्धि रिति नोभयपरत्वविरोधः । शाब्दं हि ब्रह्मज्ञानम् , तत् ब्रह्मवादि शब्दा देव प्राप्तम । तद्विधिना किं प्रयोजन मिति चेत् , प्राप्तावपि मन्त्रादि ष्विव विधे रविरोधः । यथा द्रव्यदेवतादिप्रकाशकेषु मन्त्रे ष्वधीय मानेषु द्रव्यादिज्ञाने जातेऽपि पुन रनुष्ठानकाले मन्त्रै रनुस्मर्तव्य मिति प्रयोगविधि र्ज्ञानान्तर मनुष्ठापयति तथाऽत्राऽपि ॥

न चोत्पत्तिविनियोगाधिकारविधीना मभावा त्प्रयोगविध्यसंभव इति शङ्कनीयम् । उत्पत्तिविधे रध्याहारेण सिद्धौ प्रकरणवशा च्छमादिकं विनि योजयन् आत्मानं पश्ये दिति विनियोगविधि रुपपद्यते । तत श्च रात्रिसत्र न्यायेन ' ज्ञात्वा देवं मुच्यते सर्वपाशै ' रित्याद्यर्थवादावगतमोक्षका मोऽधि कारी कल्पनीयो भवति । अतो मोक्षकामः शमादियुक्तो ब्रह्मज्ञानं संपादये दिति प्रयोगविधिलाभः ॥

यथा रूपग्राहकं चक्षु स्तत्संयुक्तं द्रव्य मपि तत्संसर्गवशा द्ग्राहयति तथा ज्ञानविधिपरा वेदान्ता स्तज्ज्ञेयं ब्रह्माऽपि तत्संसृष्टं बोधयेयुः । न चोभयपरत्वे दोष इति शङ्क्यम् । स्वतन्त्रो भयपरत्वस्याऽनङ्गीकारादि त्याशये नाह रूपेति — शमादिक मिति — शान्तो दान्त उपरत स्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदिति विधिः । फलसाधन मात्मज्ञानं प्रति शमादी न्यङ्गत्वेन विनियोजय न्विनियोगविधिः सम्पद्यत इ त्यर्थः । एव मेव ' ज्ञात्वा देवं मुच्यते सर्वपाशै ' रित्यर्थवादप्रतीतमोक्षकामाधिकारिकज्ञानविधि रुत्पत्तिविधि र्भवति । एवंच ' पाशमोक्षकामः शमादियुक्तो वेदान्तै र्ब्रह्म जानीया ' दिति प्रयोगविधि रुपपद्यते । रात्रिसत्रन्यायेनेति — अष्टमे चिन्तितम् । सत्रकाण्डे प्रत्येकं श्रूयते । ' प्रतितिष्ठन्ति ह वा एते, य एता रात्री रुपयन्ति ' इति । ' ब्रह्मवर्चस्विनोऽन्नादा भवन्ति । य एता उपयन्ति । ' इतिच । तादृशे रात्रिसत्रे विश्वजिन्न्यायेन स्वर्गः फलत्वेन कल्पनीय इति प्राप्ते ब्रूमः । अस्य रात्रिसत्रविधेः स्वावकेऽर्थवादे प्रतिष्ठा श्रुता । सा चाऽस्मि न्वाक्येऽत्यन्त मश्रुता त्स्वर्गा त्प्रत्या सन्ना । तस्मात् ' प्रतिष्ठाकामो रात्रिसत्रं कुर्या ' दि त्येवंप्रतिष्ठैव फलत्वेन कल्पनीया इति ॥

तेन प्रयोगविधिना प्रा ग्वेदान्तैः परोक्षब्रह्मज्ञाने स्वतो जातेऽपि पुन रपि वेदान्त करणक मपरोक्षज्ञानं फलयाऽनुष्ठाप्यत इति युक्त मित्याह अत इति — ज्ञाने विध्यसम्भवा

ननु, ब्रह्मज्ञानस्य विधेयत्व मनुपपन्नम्, ' आत्मा वा अरे द्रष्टव्य ' इत्यादौ नित्ये ब्रह्मणि निर्विकारे विशुद्धे चात्मनि न कर्मकारकभावो युज्यते, येन विधिसंभवः । उत्पत्तिप्राप्तिविकारसंस्काराणा मत्राऽसंभवात् । नच, स्वतन्त्र फलाय सक्तुन्यायेन कर्मकारकतां परित्यज्य करणत्वविपरिणामेन आत्मना पश्ये दिति विधातुं शक्यं, वैषम्यात् । तथा हि, क्रियाकृताऽतिशयस्य भस्मीभावलक्षणस्य सक्तुषु संभवात् तेषु शब्दतः करणत्वे ऽप्यर्थतः कर्मत्व मस्ति । न तस्याऽऽत्मनि संभवः । अतो वेदान्तानां न ब्रह्मज्ञानविधिपरत्व मितिचेत्, न ॥

तत्र चतुर्विधविध्युपन्यासो न सङ्गच्छत इत्याशङ्कते नन्विति — कि मत्र स्वतन्त्रफलाय भावार्थं कर्मरूपज्ञानविधि रभ्युपगम्यते ? उत कर्मकारकगतफलाय गुणकर्मरूपज्ञानविधि ? रिति विकल्प्य आद्यं विधायकत्वाभिमतवाक्योदाहरणेन निराकरोति आत्मा वा अरे इति— 'आत्मा वा अरे द्रष्टव्यः' आत्मानं पश्ये दित्यादिवाक्येषु ज्ञानविधि मभ्युपगच्छता कर्मोपसर्जनक्रियाविधान मेवाऽभ्युपगन्तव्यम् । न स्वतन्त्रक्रियाविधान मित्याशयः । द्वितीयं निराकरोति — नित्यइति । इह कर्मोपसर्जनक्रियाविधान मपि नाऽभ्युपगन्तुं युज्यते । आत्म न्युत्पत्त्यादीनां क्रियाजन्यफलाना मसम्भवेन तस्य विधेयक्रियाकर्मत्वासम्भवा दित्याशयः । वेदिं करोती त्यत्र वेद्या इ वोत्पत्त्य सम्भवे हेतुः नित्य इति विशेषणम् । ब्रह्मणीति बृहत्वा द्व्यापकत्वेन नित्यप्राप्तत्वा 'त्पयो दोग्धी' त्यत्र पयस इव प्राप्तत्वासम्भवे हेतुगर्भविशेषणम् । निर्विकार इति ' बर्हि र्लुना ' तीत्यत्र बर्हिष इव विकार्यत्वासम्भवे 'व्रीही न्प्रोक्ष' तीत्यत्र व्रीहीना मिव गुणाधानलक्षणसंस्कारा सम्भवे च हेतुगर्भ विशेषणम् । विशुद्ध इति गृहं सम्मार्ष्टी त्यत्रेव शुद्ध्याधानलक्षणसंस्काराऽसम्भवे हेतुगर्भ विशेषणम । ननु, सक्तुन्यायेन विपरीतो गुणप्रधानभावोऽस्तु । तथाच, सक्तून् जुहो तीत्यत्र अघटमानं गुणकर्मत्वं परित्यज्य सक्तुभि रिति तृतीयाश्रयणेन क्रियाप्राधान्य मुपादायाऽर्थकर्मत्व माश्रितम् । एव मिहा प्यस्त्वि त्याशङ्क्याह वैषम्या दिति — होम करणतया विवक्षिताना मपि सक्तूनां प्रक्षेप्यत्वेनाऽर्थकर्मत्वापरित्यागा दस्ति जुहोतेः सकर्मकत्वनिर्वाहः । आत्मनि कर्मत्वनिर्वाहकाना मुत्पत्त्यादीना मसम्भवा त्तयाऽत्राऽनिर्वाह इत्याशयः । नेति — होमेन सक्तूनां प्रक्षेप्यत्वेनेव ज्ञाने नात्मनोऽवभास्यत्वेन व्यवहार्य त्वेन चार्थतः कर्मत्व मिहापि सम्भव तीति भावः । ननु, ज्ञानप्रसादितस्य परमेश्वरस्य मोक्ष प्रदानेऽस्त्युपयोग इति सिद्धान्तदृष्ट्या गुणकर्मत्व मपि सिध्य तीतिचे त्सत्यम् । एव मिहैक

आत्मनि कर्मत्वप्रयुक्तोत्पत्त्याद्यभावेऽपि कर्तृस्थमोक्षफलाय विध्युप पत्तेः। प्राप्ते कथं विधि रिति चेत्, प्राप्तिः पाक्षिकी नित्या वा ? उभय थाऽपि नियमादिविधिः संभवति। ननु, तथा सति वेदान्तानां विधिपरत्वेन ब्रह्मपरत्व मनुपपन्नम्। यदुक्तं रूपप्रत्यायकेन चक्षुषा द्रव्यसिद्धिव द्विधिपरै रपि वेदान्तै र्ब्रह्मसिद्धि रिति, त दयुक्तम्॥

चक्षु र्हि संप्रयोगे सति निरपेक्ष मेव प्रतिवस्तु प्रमापकम्। न तथा शब्दः। किंतु यत्र तात्पर्यं तत्र प्रमाणम्। तस्मा द्वेदान्तानां ब्रह्मप्रमाप कत्वं ब्रह्मज्ञानविधायकत्वं च न संभव तीतिचे न्न। समिधो यज तीत्या दीनां वाक्यानां पञ्चप्रयाजविधायकत्वं तदनुष्ठानक्रमविधायकत्वं चे त्युभय

देशिमतेन समाहितत्वा द्दोषः। सफलत्वा द्विधेः सिद्धि मुपपादयति कर्तृस्थमोक्षफलाय विध्युपपत्ते रिति— एतेन य त्परैः 'विकार्यत्वे च तयोः पक्षयो र्मोक्षस्य ध्रुव मनित्यत्वं नहि दध्यादिविकार्यं उत्पाद्यं वा घटादिनित्यं दृष्टं लोके' इत्यादिना वेदान्तानां विधिपरत्वं व्याहन्तुं य दकाण्डताण्डव मारचितं त त्सर्वं प्रकृते नित्ये निर्विकार इत्यादिना निर्धूतत्वा त्कुणप मवलम्ब्य नीरधिनिस्तरण मनुकरोति॥

यदपि ध्यानविधिनिरासाय परै रधिकं निगदित मत्राऽधिकरणे तद प्यशेषं वेदा न्तार्थपरिष्कारे, ध्यानविधिपरिष्कारेऽस्माभिः प्रत्युक्त मिति तत एवावगन्तव्य मिति नेह। एकदेशिमत मेव मुपन्य स्येदं निराकृत्य वेदान्ताना मुभयत्र तात्पर्यं मुपपादयिष्यन् चक्षुर्दृष्टान्त मयुक्त मिति शङ्कते नन्विति॥

चक्षुर्हि सन्निकर्षवशा त्सर्वं मपि प्रमापय तीति युक्तं तस्य रूपं तत्संयुक्तद्रव्ये च प्रामा ण्यम्। नैवं शब्दः, स्वस्य यत्र यत्र शक्ति रस्ति न त त्सर्वं प्रमापयति। किन्तु यत्र तात्पर्यं तदे वेति प्रकृते तादृशशब्द एव दृष्टान्तीकरणीयो नतु चक्षु रित्याशयः। शब्द मेव दृष्टान्तीकुर्व न्त्समाधत्ते नेति॥.

ननु, समिदादिवाक्यानां न तदनुष्ठानक्रमेपि तात्पर्यं, किन्तु केवलं तद्विधान एव। तथापि तेषां पाठक्रमेण तदर्थानुष्ठानक्रमो लभ्यत इति नेद मेक स्योभयत्र तात्पर्यवत्वे समीचीन मुदा हरण मितिचे न्न। समिदादिवाक्यानि पाठक्रमे णाऽध्येतृणां तदर्थानुष्ठानक्रमं प्रत्यायय न्त्वि

परत्वदर्शनाद्वेदान्तवाक्यानां नाऽपि ब्रह्मप्रमापकत्वम् । ब्रह्मज्ञानं मोक्षोपकारकं प्रति विधायकत्वं च श्रुतावेव ॥

ननु, ब्रह्मणि वेदान्तवाक्यादेव ज्ञाते ज्ञानविधिरप्रयोजनः । न प्रयोजनस्य पूर्वज्ञानादेव संभवादिति चेन्न ॥

वाक्येन परोक्षत्वेन ज्ञाते ब्रह्मणि तत्साक्षात्काराय ज्ञानविधेरुपपत्तेः । कथं भेद इति चेत्, शब्दजन्यं न तत् साक्षात्कारहेतुः । किंतु उपासनारूपं ज्ञानमेव । तथा च श्रूयते, 'ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्', 'ज्ञाननिर्मथनाभ्यासात् पाशं दहति पण्डितः' इत्या

तीच्छया परमेश्वरेण क्रमविशेषेणोच्चारिता नीति तेषां यथा तद्विधाने क्रमविशेषेऽपि तत्र तात्पर्यमनिवार्यं, तथा प्रकृतेऽपीति तात्पर्यं स्यात् । अत एव शिवाराधने गन्धो लेपनीयः, धूपः प्रसारणीयः, पुष्पाणि विन्यसनीयानीति ब्रुवन्तं प्रति नायं क्रमः किन्तु गन्धो लेपनीयः, पुष्पाणि विन्यसनीयानि, धूपः प्रसारणीय इति प्रत्युक्तिः सङ्गच्छते ॥

इह यदि क्रमेणोच्चारितानां विधिवाक्यानां तदनुष्ठानक्रमे तात्पर्यं न स्यात्, तर्हि तदभिमतक्रमनिषेधपूर्वकं क्रमान्तरोपदेशपरनिषेधप्रत्युक्तिर्न युज्येत । एवं वेदान्तवाक्यानां ब्रह्मणि विधौ च तात्पर्यनिर्णये एकदेश्युक्तदृष्टान्तं निरस्य स्वाभिमतशब्दरूपदृष्टान्तः समर्थितः । अथ तेषां वेदान्तकरणकज्ञानविधौ तात्पर्यमिति तन्मतं निरस्य तन्मूलकोपासनाविधौ तात्पर्यमिति स्वमतं समर्थयितुं तत्राऽनुपपत्तिमाशङ्कते नन्विति — अत्रायं भावः । यदि वेदान्तकरणकं शाब्दं ब्रह्मज्ञानं मोक्षं जनयेत् तर्हि वेदान्तेभ्यः स्वतः प्राप्तस्य तस्यैव मोक्षजनकत्वसिद्धेस्तत्र विधिकल्पनं व्यर्थमेवेति । न खलु स्वतोऽशक्तं विधियोगेन शक्तिं लभत इति एतां शङ्कां निराकरोति नेति — शाब्दज्ञानमूलकं यद् ज्ञानमत्यन्तविलक्षणमभ्यासाख्यं तदेव मोक्षाङ्गमभ्युपगन्तव्यम् । न तु शाब्दज्ञानमात्रमिति भावः । स्वयं तथाभूतज्ञानानन्तरं विधेयं प्रदर्शयन् समादधाति वाक्ये नेति — यत्साक्षात्कारं जनयितुं शक्नुयाच्छाब्दज्ञानविलक्षणं तत्किमिति पृच्छति कथमिति — ध्यानोपासनादिशब्दवाच्यं निरन्तरस्मृतिसन्तानरूपं ज्ञानं तदित्याह यदिति — एतेन 'अहं ब्रह्मास्मीति' महावाक्यजन्यज्ञानेनैव कार्तार्थ्यं मन्वानाः परे परास्ताः । उपासनारूपमेव ज्ञानं वेदान्तेषु फलाय विधेयमित्युपासनावाचिपदविशेषघटितवाक्योदाहरणेन निरूपयति तथा च श्रूयत इति — इत्यादि ब्विन्त्यनेन 'परं पुरुषमभिध्यायीत',

दिषु, 'ज्ञात्वा देवं मुच्यते सर्वपाशैः', 'ईशं तं ज्ञात्वा अमृता भव' न्तीत्यादिषु च। तथा हि,

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्य श्चोपपत्तिभिः
ज्ञात्वा च सततं ध्येय एते दर्शनहेतवः ॥

इत्यत्र श्रवणमननसंपन्नज्ञानाऽविनाभूतं निदिध्यासनं ब्रह्मणः साक्षात्कारे निमित्त मिति स्मर्यते। अत उपासनारूपज्ञानं मोक्षफलं विधीयते 'आत्म न्येवाऽत्मानं पश्येत्', 'शम्भु राकाशमध्ये ध्येयः', 'तज्जलानिति शान्त उपासी', तेति, 'प्राचीनयोग्योपा' स्वेत्यादिषु च। तथा, 'ब्रह्मवि दाप्नोति

' निदिध्यासितव्यः ' इति ध्यानोपासनादिपदघटितानि फलयुक्तवाक्यानि गृह्यन्ते। एतेन फल वाक्येषु श्रुतानां ज्ञानसामान्यवाचिपदानां छागपशुन्याये नोपासनारूपज्ञाने पर्यवसान मि त्याशयेन तथाभूतानि वाक्यानि पृथ गुदाहरति ज्ञात्वेति — उक्तार्थं मुपबृंहणेन द्रढयति तथा हीति—श्रवणेन जात मुपपत्त्यनुचिन्तनरूपेण मननेन स्थिरं च ज्ञानं श्रवणमननसम्पन्नज्ञानं, तेना विनाभूतं निदिध्यासनं ध्यानम्। अत इति—मोक्षजनकसाक्षात्कारसाधनत्वा देव उपासनारूपं ज्ञानं मोक्षफलं विधीयते। नतु साक्षा न्मोक्षसाधनत्वा दित्याशयः। पूर्वं फलयुक्ता न्युपासना वाक्या न्युदाहृतानि। इदानीं गुणयुक्ता न्युदाहरति आत्मनीति ॥

शरीरे हृदयाकाशमध्य इत्यर्थः। परमेश्वरस्य प्राणलिङ्गरूपेण तत्रैव विद्यमानत्वात्। तत एव हंसोपनिषदि 'लिङ्गे सुषुप्ति'रिति हृदयाकाशमध्यवर्तिनःशिवस्य लिङ्गरूपत्व मुक्तम्। 'तदो कोग्रज्वलन' मित्यादिसूत्रे 'हार्दानुगृहीतः शताधिक' येति सूत्रकारेण च हृदयगुहावर्तिप्राण लिङ्गोपासनापराणा मेव तदनुग्रहेण ब्रह्मनाड्या निष्क्रमणं निर्धारितम्। अथ ब्रह्मस्वरूपं तदुपा सनाप्रकारं तत्फलविशेषं च निर्धारयन्तीं श्रुति मुदाहरेति तथेति—'ब्रह्मवि दाप्नोति पर' मित्युप क्रम्य किं त ब्रह्म? कथं त द्वेदनीयम्? तद्वेदनेन प्राप्यं च फलं कीदृ? गित्याकाङ्क्षायां तन्निरूपणार्थ मृक्सद्भावं त देषाभ्युक्तेति प्रतिज्ञाय सा ऋ गुदाहृता। 'सत्यं ज्ञान मनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वा न्कामां त्सह ब्रह्मणा विपश्चितेति' अत्र प्रथम पादेन ब्रह्मस्वरूप मुक्तम्। द्वितीयपादेन प्राणलिङ्गरूपतदुपासनाप्रकारः। तृतीयपादेन निरति शयानन्दरूपं फल मुक्तम्। चतुर्थपादेन ब्रह्मविद्यया तत्सारूप्यपूर्वकसायुज्यप्राप्तिः। अत्र ब्रह्मणा सहे त्यनेन सायुज्य मेव निगद्यते। अत्र य त्परै न्यीयरक्षामण्यादौ विपरीत मुक्तं त

पर ' मित्यादिषु ब्रह्मस्वरूपोपासनातत्फलादिकं प्रतिपाद्यते । अन्यथा, सत्य त्वादिविशिष्टब्रह्मणा सह कथं सकलकामावाप्तिः फलं, तादृशब्रह्मसाक्षा त्करणं च सिध्यति । तस्मात्, ' सत्यं ज्ञान मनन्तं ब्रह्म ', ' आनन्दो ब्रह्म ', ' आकाशशरीरं ब्रह्म ', ' सत्यात्म प्राणारामं मनआनन्दं शान्ति समृद्ध ममृतम् ', ' ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्ष ' मिति सत्यज्ञानानन्दरूपं स्वात्मारामं मुपशान्तसकलोपद्रव कलङ्कं सकलमङ्गलात्मकं परमशक्त्याऽविनाभूतया शबलरूपत्वेन कृष्ण पिङ्गलं विरूपाक्षं त्रिलोचनं ब्रह्म उपक्रमादितात्पर्यलिङ्गै र्निरूप्यते । ' यो वेद निहितं गुहाया ' मिति ' प्राचीनयोग्योपा ' स्वेति ज्ञानाविनाभूतं तदुपा सनं च विधीयते । ' सर्वान् कामा ' नित्यादिषु सकलकामावाप्ति र्ब्रह्मणा सहोपासकाना मवगम्यते । अतो निष्काम निजधर्मो पेत श्रीर्णशिरोव्रता

---

वस्थित मस्माभि र्बहुधा प्रत्युक्त मिति नेह पुनः । ननु, वेदान्ते षूपासनादिविधय स्तत्र तत्र सन्तु नाम, तेषां ब्रह्मण्येव प्रामाण्य तात्पर्यलिङ्गराहित्येन तोपासनाविधि ष्विलाशङ्कय तं त्वपि तात्पर्यलिङ्गसद्भाव मुपपादयति अन्यथेति — य द्युपासना न विधीयेरन् तत्तत्फलावाप्ति स्तदुपयोगिब्रह्मसाक्षात्कारसिद्धि श्च न स्यात् । तदभावे वेदान्तै रखिलै रपि महातात्पर्येण ब्रह्मणः प्रतिपादन मपि वैयर्थ्य मे वापद्येत । तत्प्राप्त्युपायोपदेशाभावे ब्रह्मणः प्रतिपादनस्य विफलत्वात् । तस्मा द्ब्रह्मपरवाक्यानां पुरुषार्थप्रदत्वं तत्प्राप्त्युपायभूतोपासनाविधानं विना न सिध्य ती त्युपपत्तिरूपं तात्पर्यलिङ्ग मुपासनाविधि ष्वप्यस्तीति भावः । एवं वेदान्तानां ब्रह्मणि विधौ च तात्पर्यसत्त्वा दुभयत्राऽपि प्रामाण्यं सिद्ध मि त्युपसंहरन् ब्रह्मपरवाक्या न्युपासनाविधिपरवाक्यानि च विवि च्योदाहरति ' सत्यं ज्ञान मनन्तं ब्रह्म 'त्यादिना — उदा हृतब्रह्मपरवाक्येषु सिद्धं रूपं विवृणोति सत्यज्ञानेत्यादिना — उपक्रमेति — उपक्रमादि तात्पर्यलिङ्गानि येषां तै र्वेदान्तवाक्यै र्निरूप्यते उक्तरूपं परंब्रह्म निर्धार्यत इ त्यर्थः । ज्ञानाविना भूतं श्रवणमननसम्पन्नज्ञानसहित मित्यर्थः । सकलकामावाप्ति र्ब्रह्मणा स होपासकाना मिति— उपासकाना मेव ब्रह्मणः सारूप्यपूर्वकसायुज्यावाप्ति रिति वेदान्ताना मुपासनाविधिषु तात्पर्य लिङ्गसद्भावं पूर्वोक्तदृढीकरणाय स्मारयित्वा ब्रह्मपरेषु वेदान्ते षूपासनाविधि रप्युपपन्न इ त्युपसंहर न्नुपासनाविधौ यावदुक्तविशेषणविशिष्ट मधिकारिणं दर्शयति अत इ त्यादिना—चीर्णशिरोव्रत इति—' व्रत मेत त्पाशुपतं त त्समाचरे ' दिति, ' तेषा मेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिव द्यै स्तु चीर्ण ' मित्यादिश्रुतिभिः ॥

निषिद्धकाम्यकर्मरहितो यथाश्रुतिस्मृतिचोदितकर्मानुष्ठानसंपन्नचित्तशुद्धिः शमाद्यनुगृहीतपरमशिवभक्तिभावित एव मुमुक्षुः श्रुतिसारेऽथः शिवाभिधेयं परं ब्रह्म विदित्वा त दुपासो तेति ज्ञानोपासनविधि रुपपन्नः ॥

अत्र शिवोपपदग्रहणं विरूपाक्षस्य ब्रह्मणः परमविशुद्धिमङ्गलभाजनत्वा न्मुमुक्षूणा मुपासनैकविषयत्वद्योतनार्थम् । तथाऽथर्वशिखायां 'शिव एको ध्येयः शिवङ्करः सर्व मन्य त्परित्य' ज्येति श्रूयते शिवशब्दवाच्यस्य वस्तुन एव ध्येयत्व मिति । अन्यथा कथं संसारनिवृत्तिः ? निरस्तसमस्त दोषकलङ्कनिरतिशयमङ्गलाधारत्वं हि शिवत्वं, यद्विज्ञाना न्मोक्षरूपं फल मुच्यते । 'यदा चर्मव दाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिव मविज्ञाय दुःख स्यान्तो भविष्यति' इति, 'शिव एको ध्येयः शिवङ्करः सर्व मन्य

व्रतं पाशुपतं चीर्णं यै र्द्विजै रादरेण तु
तेषा मे वोपदेष्टव्य मिति वेदानुशासनम् ॥

इति सूतसंहितावचनेन चानाचरितपाशुपतव्रतानां ब्रह्मविद्याया मनधिकारावगमा च पाशुपत दीक्षासम्पन्न एवाधिका रीति भावः । ज्ञानोपासनाविधि रिति — ज्ञानाविनाभूतोपासनाविधि रित्यर्थः । उपासनायाः श्रवणमननसम्पन्नज्ञानाभावोक्त्या उपासनाविध्यपेक्षितज्ञानोत्पत्त्यर्थे श्रवणे मनने च स्वतःप्राप्तिसम्भवेन तस्य विध्यनपेक्षा सूचिता। शिवाभिधेयं परं ब्रह्मेति भाष्य कारः शिवोपपदग्रहणं कृत्वा 'स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु' रिति भाष्यलक्ष णानुसारेण अत्रेति विवृणोति ॥

संसारमलनिवृत्तिरूपा परमविशुद्धिः सत्यसंकल्पत्वादिमङ्गलगुणवत्त्वं च मुमुक्षुणा प्रेप्सितम् । त दुभय मपि शिवशब्दार्थ इति प्रा ग्वायुसंहितावचनोदाहरणेन दर्शितम् । तस्मा त्तत्क्रतुन्यायेन मुमुक्षोः शिव ए वोपास्य इत्यर्थे श्रुति मुदाहरति तथेति — एते नाऽनामक तत्त्वपरा, ण्यन्यनामकदेवतापराणि च भाष्यणि निर्धूतानि । तथाभूतस्य शिवस्योपासनां विना मुक्ति र्न सम्भव ती त्याह अन्यथेति — प्रकृतार्थसाधिकां श्रुति मुदाहरति यदेति — अत्र यदापदं यद्यर्थकम् । एवं च शिवोपासनां विना मुक्ते रसम्भवात्, देवतान्तरेषु मुमुक्षुप्रेप्सितस्य नित्यसिद्धस्य शिवत्व स्याऽभावा च्च सकलेतरपरित्यागेन मुमुक्षुभिः शिव एव ध्येय इति निर्धारय न्त्यथर्वशिखाश्रुतिः. सर्वोपपन्नार्थे त्याह शिव एक इति — तस्मा न्मोक्षार्थिभिः शिव एव

त्परित्य ' इत्येति शिवव्यतिरिक्तस्य मुमुक्षूणां ध्येयत्वं परिगृह्यते । अतः शिव एव परं ब्रह्म मोक्षकामैः ध्यातव्यो ज्ञातव्य इति । अत शास्त्रार्थैर्निखिल समन्वयेन ब्रह्मपरा वेदान्ता इत्यद्वैतापरम इत्याशयः ॥

इति समन्वयाधिकरणम्

ध्यातव्यः साक्षात्कर्तव्य इत्याह अतः शिव एवेति —— परमप्रकृत मुपसंहरति अत इति ॥

  

शास्त्रारम्भसाधिकेयं चतुस्सूत्री शुद्धाद्वैतिनां न सङ्गच्छते । तत्पक्षे विषयप्रयोजनयोरनुपलम्भात् । तथा च, सामान्येन ज्ञातो विशिष्य न ज्ञातो हि विषयः । केवल मज्ञाते, विशिष्य ज्ञाते च जिज्ञासाऽनुपपत्तेः । एवं च निर्विशेषस्य ब्रह्मणः सामान्ये नाऽज्ञातता विशिष्य ज्ञातु मशक्यत्वा च तस्मिन् जिज्ञासाऽनुपपन्ना ॥

किं च विषयः किं ब्रह्म ? उत भेदमिथ्यात्वम् । आहोस्वि जीवब्रह्मणो रैक्यम् ? न प्रथम', ब्रह्मणो वेद्यत्वानभ्युपगमात् । वेद्यत्वे घटादे रिवाऽननुभूतित्वप्रसङ्गात् । व्यावहारिकं वेद्यत्व मस्तीति चे द्घटस्याऽपि वेद्यत्वं व्यावहारिक मिति तद्वदे वाननुभूतित्वप्रसङ्गो दुर्वारः ॥

न द्वितीयः, दृश्यत्वादिना लिङ्गेन भेदमिथ्यात्व मभिमन्यमानस्य शास्त्रानर्थक्यप्रसङ्गात् । तत्तद्धर्मिग्राहकप्रत्यक्षादिप्रमाणविरुद्धस्य प्रपञ्चमिथ्यात्वस्य यूपादित्यैक्य स्येव शास्त्रेण प्रतिपादनायोगात् शास्त्रस्य निर्विषयत्वं स्यात् ॥

तृतीय श्च कल्पोऽनुपपन्नः, ब्रह्मणो वेद्यत्वप्रसङ्गात् । ब्रह्मशब्देन ब्रह्म ण्यवबोधिते कथं तस्य जीवस्य चैक्यं वक्तुं शक्यते ? नहि जीव एक इत्युक्ते जीवब्रह्मणो रैक्यं सिध्यति । घट एक इ त्युक्ते घटपटैक्यवत् । य द्यैक्योपदेशवाक्येषु 'अय मात्मा ब्रह्म' त्यादिषु शब्दवो ध्यत्वं सोढव्यं , तर्हि प्राधान्येन ब्रह्मण एव शास्त्रप्रतिपाद्यत्वं किमिति नाऽभ्युपगम्यते ?

तथा प्रयोजनं च न घटते । तथाहि, प्रयोजनं द्विविधं शास्त्रस्य । उपायभूत मवान्तर प्रयोजनं, तत्साध्यं परमप्रयोजनं चेति । तत्रेदानी मुपजायमानं वाक्यजन्यज्ञान मनिवर्तक मि

त्यविगीतम्। वसिष्ठपराशरकृष्णद्वैपायनादीना म प्यनुत्पन्नं ज्ञान मन्येषा मुत्पत्स्यत इ त्यत्य न्तासम्भावितम्। तेषा मुत्पन्नं चे द्भेदप्रतिभासो न स्यात्। स निवर्तिष्यत इति चे त्तत एव तदभिन्नाना मन्येषा मपि निवर्तिष्यत इति न शास्त्र मारम्भणीयं स्यात्॥

परमप्रयोजनं च न सिध्यति। ज्ञातृज्ञेयभेदस्य सत्यस्य निवृत्त रसम्भावितत्वात्॥

किं च तत्पक्षे प्रथमसूत्रं न सङ्गच्छते। त जीवब्रह्मणो रैक्यस्य शास्त्रविषयतया अङ्गी कृतत्वेन ब्रह्मजिज्ञासापद स्याऽसङ्गतत्वात्। ब्रह्मणो जिज्ञास्यत्वं हि शब्दा दवगम्यते, न जीव ब्रह्मणो रैक्यस्य। यथा धर्मजिज्ञासापदं धर्ममात्रस्य जिज्ञास्यतां वक्ति, नतु धर्माधर्मयो रैक्यस्य जिज्ञास्यत्वं तद्वदेव हि ब्रह्मजिज्ञासापदम्॥

अपिच, लक्षणसूत्रं द्वितीय मपि निर्विशेषपक्षे विरुद्धम्। तथाहि, जगत्कारणत्व लक्षणविशेषो लक्ष्यस्य निर्विशेषत्वं न सहते, सार्वज्ञ्यादिगुणाक्षेपकत्वा त्तस्य। आक्षिप्त मपि सार्वज्ञ्यादिकं वस्तुमात्रोपलक्षण मितिचे न्न। अज्ञत्वादे रपि वस्तुमात्रोपलक्षकत्वेन सर्वज्ञत्वादे रनुपयोगात्। अतो युक्त मुक्तम्॥

तथा तृतीयं सूत्र मपि न घटते। निर्विशेषवस्तुनि तात्पर्यविषये सति कारणत्वाक्षिप्त सर्वज्ञत्वादिसमर्थनं क्वोपयुज्यते? सर्वज्ञत्वसमर्थन एव हि तत्सूत्रस्य प्रवृत्तिः। प्रसङ्गा दपि तत्समर्थनं न न्याय्यम्, निर्विशेषत्वविरोधात्॥

एवं चतुर्थं च सूत्रं न सङ्गच्छते। अत्र हि वेदान्तवाक्यानां भ्रमनिवर्तकवाक्यार्थज्ञान जनकतया प्रयोजनपर्यवसायित्व मुक्तम्। न त द्युक्तम्। वाक्यार्थज्ञानमात्रेण बन्धनिवृत्तेः शास्त्र प्रत्यक्षविरोधविध्वस्तत्वात्। विस्तर स्तु व्यासपथे द्रष्टव्य इति ततो युक्त मुक्तम्॥

अथ शिवेतरदेवतापराणि पाञ्चरात्रभागवतादितान्त्रिकाणां भाष्याणि यानि, तान्यपि श्रुतिसूत्रविरुद्धा नीति व्यासपथे निरूपिता नीति नेह पुनः॥

तत श्च श्रीकराभिधं य द्भाष्यं तदपि न समञ्जसम्। तथाहि, तत्र सिद्धान्तो हि भेदाभेदः परस्परविरुद्धः। तथा ब्रह्मापि सगुणनिर्गुणम्। जीव श्च खद्योतव त्प्रकाशाप्रकाशरूप इत्यादिनाऽन्योन्यविरुद्धसर्वपदार्थबन्धुरत्वा, द्धेतुकर्तृकत्वा, दतिनवीनत्वा, दपभ्रंशनिर्भरगर्भत्वा च्चे त्यल मनर्हकृतिगर्हणेन॥

इति समन्वयाधिकरणम्

अथ ईक्षत्यधिकरणम् ५

उक्तस्य ब्रह्मलक्षणस्य प्रधानेऽतिव्याप्तिमाशङ्क्याह ॥

## ईक्षतेर्नाशब्दम् ॥ १-१-५ ॥

छान्दोग्ये श्रूयमाणस्य विषयः, 'सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्', 'तदैक्षत बहुस्यां प्रजायेये' त्यादि ॥

इह पूर्वभावितया सकलस्य प्रपञ्चस्य कारणत्वेन श्रूयमाणं सदिति वस्तु ब्रह्म प्रधानं वेति सन्देहः ॥

प्रधानस्यैव जगत्कारणत्वं युक्तम्, 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपा' मिति श्रुत्यन्तरे श्रवणात् । अत्र हि, बहुप्रजाजनकत्वं लोहितादिवर्णानुमितरजःसत्त्वतमोरूपायाः साङ्ख्यप्रकृतेरेव गम्यते । तदानुगुण्ये नात्माऽपि सच्छब्दवाच्यम् । जगत्कारणं प्रधानमेव ।

### अथ ईक्षत्यधिकरणम् ५

पूर्वस्मि न्नधिकरणे वेदान्ताना मखिलानां तात्पर्यलिङ्गयुक्ततया ब्रह्मणि प्रामाण्यं निरूपितम् । त दसङ्गतम् । सद्विद्यायाः प्रधानपरत्वा दिति समन्वयाधिकरणं नाक्षेपसङ्गति रिह यद्यपि प्रसजति, तथा पीयं प्रकृताधिकरणपूर्वपक्षप्रदर्शनेनैव व्यक्तीभविष्यती त्येना मगृहाय तत्फलरूपां प्रमाणेन लक्षणे प्रदर्शिते तत स्तत्परीक्षायाः कर्तव्यतयाऽवसरलक्षणा मतिव्याप्ति मिदं लक्षण मसिद्ध मि त्याक्षेपरूपां सङ्गतिं दर्शय न्नुत्तराधिकरण मवतारयति उक्तस्येति ॥

आत्मपुरुषशिवशम्भ्वादिपदयुक्तकारणवाक्यानां सत्तासामान्यवाचिसत्पदयुक्तसद्विद्याया इव पूर्वपक्षे प्रधानपरत्वसाधकत्वाऽभावेन सद्विद्यै वाऽस्याऽधिकरणस्य विषयः, न सर्वाणि कारणवाक्यानी त्याशये नाह छान्दोग्य इति — ईक्षणस्य मुख्यत्वगौणत्वे संशयबीज मि त्यभिप्रेत्य संशयं दर्शयति इहेति — लोहितादिवर्णानुमितेति — अनुमितशब्दोऽत्र लक्षितपरः । सुखदुःखमोहात्मकतया अनुमेयसत्त्वरजस्तमोमयस्य जगत स्तथाविधे नैव कारणेन भवितव्य मि त्युदाहृतश्रुतेः प्रधानपरत्वसिद्ध्यनुकूलयुक्ति र प्यनेन सूचिता साङ्ख्यप्रकृते रिति — साङ्ख्यसम्मताया युक्तिकल्पितायाः प्रकृते रित्यर्थः । तदानुगुण्ये नेति — साङ्ख्याः किल अचेतना

रजःसत्त्वयोगा दस्य क्रियाज्ञानशक्तिसंबन्धोऽपि युज्यते, येन जगत्कारणत्व सिद्धिः। अचेतनस्य प्रधानस्य जगदाकारपरिणामो युक्तो, न चेतनस्य परमेश्वरस्य कूटस्थस्य। कारणविकृतिरूपत्वा त्परिणामस्य। ततो न्यायतः श्रुत्या च प्रधान मेव जगत्कारणं सत्पदवाच्य मिति प्राप्ते ब्रूमः॥

प्रकृति श्चेतनाधिष्ठिता जगत्सृष्ट्यादिव्यापारं स्वय मेव प्रवर्तते। सैव च बन्धमोक्षहेतु रिति वाणाः स्वानुमानसिद्धां प्रकृतिं कारणवाक्या न्यनुवद न्तीति कल्पयन्ति। तदानुगुण्यं सद्वि द्यायां लक्ष्यते। तथाच, मृत्पिण्डाद्यचेतनदृष्टान्ता स्ताव दचेतनकारणत्व स्यानुगुणाः। 'तत्तेजोऽसृज' तेति सृष्टौ स्वातन्त्र्यप्रतिपादनं चेतनाधिष्ठितं तदचेतनं कारण मिति कल्पन स्याऽनुगुणम्। चेतनाचेतनशकुनिबन्धनदृष्टान्तपूर्वकं 'प्राणबन्धनं हि सोम्य मन' इति, 'ताव देव चिरं याव न्न विमोक्ष्य 'इति च तदे वाऽचेतनं पुरुषस्य बन्धमोक्षयो र्हेतु रिति कल्पनानुगुणं चे त्याशयः। ननु, चेतनानधिष्ठित स्याऽचेतनस्य क्वचि दपि प्रवृत्ते रसम्भवा दचेतनस्य पञ्चकृत्यानुगुणसङ्कल्प वत्त्वरूपं तत्कर्तृत्वं न सम्भव तीति कथं लक्षणस्याऽतिव्याप्ति रि त्याश ङ्क्याह रजःसत्त्वेति — अ त्रेदं बोध्यम्। लघुः सत्त्वगुणः प्रकाशकार्यः। चलो रजोगुणः प्रवर्तनकार्यः। गुरु स्तमो गुणो नियमनकार्यः। ए वक्रियत्वा त्प्रकाशाख्यज्ञानवृत्तिरूपकार्यजनने स्वय मप्रवर्तमानं सत्त्वं चलो रजोगुण स्तत्र प्रवर्तयति। तच्च गुरुणा तमसा नियम्यमानं भोजकादृष्ट मनुसृत्य कस्यचि देवाऽर्थस्य प्रकाशे प्रवर्तयति। न सर्वत्र। स्वयं च रजोगुण श्चलस्वभावोऽपि तमसा नियम्य मानः क्वचि देव व्याप्रियते। एवं सत्त्वरजोवृत्तितया त्रिगुणात्मकप्रकृतिधर्मयो रेव ज्ञातृत्वकर्तृ त्वयो र्विवेकाग्रहणे चेतनधर्मत्वव्यवहारः। एवं च स्वाभाविकज्ञातृत्वकर्तृत्वयुक्तायाः प्रकृतेः पञ्चकृत्यानुकूलसङ्कल्पवत्त्वरूपं निमित्तत्वं जगदाकारेण परिणामक्रियारूप मुपादानत्वं चोपपद्यत इति विद्यत एव तत्र लक्षणस्याऽतिव्याप्ति रिति॥

नच, चेतनानधिष्ठित स्याऽचेतनस्य स्वय मेव कार्ये प्रवृत्ति र्नोपपद्यत इति वाच्यम्। वत्सविवृद्ध्यर्थं मूढस्यपयसः स्वय मेव क्षरणदर्शनेन तद्व त्प्रकृते रपि पुरुषस्य भोगापवर्गार्थे कार्ये प्रवृत्त्युपपत्तेः। न्यायत इति — सुखदुःखमोहात्मकस्य जगत स्तद्धेतुभूतसत्त्वरजस्तमो रूपगुणत्रयात्मकप्रकृतेः कार्यानुरूप्य, मचेतनमृत्पिण्डादिदृष्टान्तानुगुण्यं कार्यलिङ्गेन, कारणानु मानप्रदर्शनानुगुण्यं परमेश्वरस्य परिणामित्वासम्भव श्च न्यायः। श्रुतितः 'अजा मेका' मि त्यादिकाया इत्यर्थः। सूत्रगत मशब्दपदं पक्षभूतप्रधानपरतया योजय न्त व्याचष्टे अशब्द मानु मानिक मिति — अशब्द मिति नञः पर्युदासार्थत्वस्य मत्वर्थीयाच्प्रत्ययान्तत्वस्य चाश्रयणेन

अशब्द मानुमानिकं प्रधानं न जगत्कारणं सच्छब्दवाच्यं वस्तु, अपितु ब्रह्मैव चेतन, मीक्षतिश्रवणात् 'त दैक्षत बहु स्यां प्रजायेय' ति। न ह्यचेतने प्रधाने चेतनधर्म ईक्षतिः संभवति ॥

य दुक्तं बह्वीं प्रजां जनयन्ती मिति श्रुत्या त्वाद्वस्य प्रकृते र्जगत्कारणत्व मिति, त दसङ्गतम्। 'चमसव दविशेषा' दिति सूत्र हि परमेश्वरकारणिकाया एव प्रकृते र्बहुप्रजाजनकत्व मि त्युपपादयिष्यामः ॥

रजःसत्त्वरूपतया क्रियाज्ञानशक्तिसंबन्धः प्रधान स्येति य दुक्तं त दयुक्तम्। त्रिगुणात्मिकायाः प्रकृते स्तमःपार्थक्येन रजःसत्त्वयोगाऽभावात्। नच तम स्यभिभूते रजःसत्त्वयो रुद्रेके ज्ञानक्रियासंबन्धः प्रधान स्येति वाच्यम्। सत्त्वरजस्तमसां साम्यावस्था प्रकृति रि त्यङ्गीकारात् ॥

शब्देतरानुमानप्रमाणवस्तु मुच्यते। निषेध्य मध्याहृत्य माष्य दर्शयति न जगत्कारण सत्पद वाच्य मस्त्विति, अपितु ब्रह्मैव चेतनमिति—पर्यवसानकार्थ माह। ईक्षतिपदं 'इक्शितपौ धातुनिर्देश' इति विहितधातुनिर्देशकश्तिप्प्रत्ययान्त मीक्षिधातुपर मिति विवृणोति ईक्षति श्रवणा दिति — ननु, सत्त्वगुणवृत्तिविशेषरूप मीक्षणं प्रधान एव सम्भवा द्युज्यत इ त्याशङ्क्य परिहरति नहीति — सत्त्ववृत्त र्जडपरिणामरूपत्वेन तस्याः स्वत चिद्रूपत्वं न सिध्यति। किंतु स्वच्छतया चित्प्रतिबिम्बग्राहकत्वेन ज्ञानव्यपदेश स्तत्र गौण इति भावः। पूर्वपक्ष्युपात्तां श्रुतिं वक्ष्यमाणपरिहारसारांशेन सङ्क्रमयति य दुक्त मिति ॥

क्रियाज्ञानशक्तियोगा त्प्रकृते रुपादानत्वं पञ्चकृत्यनिर्वाहकत्वं चोपपद्यत इति य दुक्तं तदनूद्य निराकरोति रज इति — त्रिगुणात्मिकाया इति — अत्राऽयं भावः। मृत्पिण्डकुलालयोः क्रियाज्ञानव्यस्तयभावं घटनिर्वृत्त रदर्शनेन केवलशक्त्यात्मना क्रियाज्ञानयोग स्योपादानकर्तृत्व निर्वाहकत्वं न सम्भवति। नच व्यस्त्यात्मना प्रकृतेः क्रियाज्ञानयोग मुपपाद्य सर्वनिर्वाहकत्व मूरीक्रियत इति वाच्यम्। तमो विना केवलं रजस्सत्त्वयोः प्रकृता वुद्रेकानङ्गीकारेण तदुपपाद नस्याऽशक्यत्वात्। त दङ्गीक्रियत इत्याशङ्क्य परिहरति न चेति, तमसीति — सत्त्वरज स्तमसां साम्यावस्था प्रकृतिः। वैषम्यावस्था महदहङ्कारादिविकृति रिति साङ्ख्या अभ्युपगच्छ न्ति। तद्वैपरीत्येन प्रकृतेः कारणत्वाङ्गीकारस्याऽयुक्तत्वा दित्याशयः। अथ परमेश्वरस्य परिणा मित्वाऽसम्भवेन जगदुपादानत्वं न सिध्य तीति परोक्तदोषं प्रकृत्यधिकरणवक्ष्यमाणन्याय

कूटस्थस्य परमेश्वरस्य जगदाकारेण परिणामो विकरणे हेतु रिति य दभाणि, त दज्ञानविलसितम् । नामरूपविभागानर्हसूक्ष्मचिदचिच्छक्ति विशिष्टस्य परमेश्वरस्य कारणत्वं, नामरूपविभागार्हस्थूलचिदचिच्छक्तिविशि ष्टस्य कार्यत्व मिति वदता मस्माकं तत्प्रसङ्गाऽभावात् ॥

ननु, 'स देव सोम्येद मग्र आसी देक मेवाऽद्वितीय' मित्यादिना सद्रूपं वस्तु निर्विशेष मेवाऽवधारणा दवगम्यते । कारणावस्थ मेत त्कथं सूक्ष्मप्रपञ्चविशिष्ट मित्युच्यत इतिचे न्न । स देवे त्यवधारणेन न विशेषनिषेधः, किं त्वसत्कारणत्वनिषेधः । 'अस द्वा इद मग्र आसीत्, ततो वै स दजाय' तेति श्रवणा दसत्कारणत्वस्य भ्रान्तिप्रसक्तिसत्वात् ॥

किंच, 'सदेव सोम्येद मग्र आसी देक मेवाऽद्वितीय 'मित्यत्र कथं निर्वि शेषत्वं ब्रह्मणः ? आसी दिति हि क्रियाविशेषः । अग्र इति हि काल विशेषः । एक मेवे त्यवधारण मधिष्ठात्रन्तरनिषेधपरम् । अद्वितीय मिति

प्रदर्शनेन परिहरति कूटस्थ स्येति — सद्विद्याप्रतिपाद्य मुपादानत्वं शक्तिद्वारक मपि पार मेश्वर मेवाऽवगन्तव्य मीक्षतिलिङ्गानुरोधा दिति हृदयम् । ननु, भवता ब्रह्मणः स्थूलसूक्ष्मचिद चिच्छक्तिविशिष्टत्व मभ्युपेत्य सद्विद्यागतसत्पदवाच्यत्वं प्रसाध्यते, त न्न घटते । सकलभेदवस्तु प्रत्याख्यानपरसदेवेत्यवधारणविरोधात् । तदनुरोधेन तस्याऽखण्डविशेष्यमात्रपरताया अवश्याङ्गी करणीयत्वा दिति तटस्थः शङ्कते नन्विति — इह ताव त्सदेवे त्यवधारणविरोधो न विद्यते । तस्य श्रुत्यन्तरे ष्वापाततः प्रतिपन्नासत्कारणत्वनिषेधमात्रपरत्वा दि त्याह सदे वेति ॥

ननु, सदिति पदेनै वाऽसत्कारणत्वनिषेधो लभ्यते, पुनः किं मवधारणेन फल मित्या शङ्क्याह किंचेति — अत्राऽय माशयः । अत्रैव वाक्ये आसी दिति सत्तारूपक्रियाविशेषस्य, अग्र इति कालविशेषस्य च श्रवणा दवधारणेन सकलविशेषाणां निषेधस्याऽनुपपन्नतया सत्पदसिद्धा सत्कारणत्वव्यावृत्त्यनुवादेनाऽवधारणस्य तद्दार्ढ्यार्थत्व मेवाऽवशतोऽङ्गीकार्यम् । तेन सदसद्विषय श्रुत्यो र्बलाबलनिर्णयो लभ्यत इति । एव मेव एक मेवे त्यत्रा प्येवकार एकत्वोक्तिसिद्ध स्याधिष्ठा त्रन्तरनिषेधस्याऽवधारणेन स्थिरीकरणार्थ मे वेत्याह एक मेवेति — अद्वितीय मिति पदेनाऽ प्युपा दानान्तरनिषेधेन परमेश्वरस्यैव सकलजगदुपादानत्व मुच्यत इत्याह अद्वितीय मिति — एवं च

जगदुपादानत्व मुक्तं। अत एव सर्वज्ञ मनन्तशक्तिविशिष्टं च। कथं सर्वज्ञत्व, सर्वशक्तित्व विशेष मन्तरेण जगदुभयकारणत्वं ब्रह्मणो भवति? अथवा प्रकृतिप्रत्ययात्मकस्य सत्पदस्य नेकार्थपरत्वं युक्तम। प्रकृत्या प्रत्ययेन च सत्पदस्य वस्तुद्वयप्रतिपादनपरत्वात। तथाऽभियुक्तस्मृतिः,

> शक्तिः शिव श्च सच्छब्दप्रकृतिप्रत्ययोदितौ
> तौ ब्रह्म सामरस्येन समस्तजगदात्मकौ ॥

इति स्थूलसूक्ष्मचिदचित्प्रपञ्चरूपशक्तिविशिष्टः परमेश्वर एव कार्यकारणरूपः सत्पदविषय इति निर्णयः॥

पुन राशङ्क्य परिहरति ॥

## गौण श्चे न्नाऽऽत्मशब्दात् ॥ १–१–६ ॥

ईक्षते श्चेतनधर्म स्याऽचेतने प्रधाने योगाभावा च्चेतन मेव परं ब्रह्म सत्पदवाच्यं कारण मिति प्रतिपादितं त दसङ्गत मेव। 'त त्तेज ऐक्षत',

---

एकमेवाऽद्वितीय मिति विशेषणद्वयेन ब्रह्मणः सकलजगन्निमित्तोपादानरूपोभयकारणत्वं प्रतिपाद्यते। तेन तन्निर्वाहकतया ब्रह्मणः सर्वज्ञत्वं सर्वशक्तिमत्त्वं च सिध्यती त्यत्र न किमपि पदं कस्यापि विशेषस्य निषेधकं विद्यते। एवं प्रकृतवाक्यगतपदान्तरसामर्थ्यपर्यालोचनयापि सत्पदं सविशेषपर मे वेति सिध्य तीत्याह अत एवेति — एतेन 'एक मेवाऽद्वितीय' मिति पदत्रयेण ब्रह्मणः सजातीयविजातीयस्वगतरूप स्त्रिविधोपि भेदो निषिध्यत इति य. परेषा मुद्घोषः स निर्मूलितः। सजातीयस्य जीवस्य, विजातीयस्य जडस्य, स्वगतस्य ज्ञानानन्दादिरूपस्य च विशेषस्य कुरपलपत्वेन तादृशार्थस्याऽनर्थत्वाऽवसायात्। सत्पदस्य सविशेषपरत्वसिद्धिं प्रति पदान्तर सामर्थ्यपर्यालोचनापर्यन्त मपि न गन्तव्यम्, तत्सामर्थ्यपर्यालोचनयैव सिध्यती त्याह अथ वेति॥ प्रकृतिभागः सत्तां प्रत्ययभाग स्तदाश्रयं चाभिदधा तीति सत्पदस्य विशिष्टपरत्व मवार्य मित्यर्थः। तत्र विशेषणीभूता सत्ता चिच्छक्ति रेवे त्यभियुक्तोक्तिसम्मतिं दर्शयति तथेति— तौ शक्तिशिवौ विशिष्टरूपेण ब्रह्म। न तु विषेषणमात्रं विशेष्यमात्रं वेत्यर्थः। सिद्ध मर्थं निष्कृष्य दर्शयति स्थूलेति ॥

त दसङ्गत मेवेति — परमेश्वरस्य निर्विकारत्वा दीक्षणं तस्य धर्म इति नोरीकर्तुं

'ता आप ऐक्ष' न्तेत्यादि ष्वचेतनेऽ पीक्षति र्यथा गौणः श्रूयते, तथा प्रधानेऽपि गौण इतिचे न्न। चेतनवाचिन आत्मशब्दात्। 'स देव सोम्येद मग्र आसी' दित्या द्यारभ्य उपसंहारे स आत्मा तत्त्व मसीति श्रवणात् तेजःप्रभृति ष्वपि न गौण मीक्षतिश्रवणं तत्तदात्मतया परमेश्वरस्य चेतन स्याऽनुवृत्तेः ॥

नन्वीक्षतिश्रवणं गौण मभ्युपे त्याप्यचेतनं प्रधानं सद्रूपं जगतः कारण मिति वक्तुं न शक्यम्। तस्य चेतनत्ववाचिन आत्मशब्दा दिति निरूपितम्

भवतु नाऽत्मशब्द स्याऽचेतनं प्रधान मर्थ इति, भवति तु चेतनस्य जीव स्याऽत्मशब्दवाच्यत्वं मुख्यम्। ततो जीव एव चेतनो जगत्कारणं सद्रूप मित्यत आह ॥

युज्यते। किंतु तत्परिणामिन्या श्चिच्छक्ते रेव। न हि परमेश्वरे चिच्छक्ते रिव तद्धर्मस्यापि व्यवहारो युज्यत इति वक्तुं युक्तम्। तथा सति सकलजगच्छरीरके तस्मिन् शक्ते रिव सुखी दुःखीत्यादिव्यवहारस्यापि मुख्यत्वप्रसङ्गात्। एवं च प्रधान इव परमेश्वरेऽपि मुख्य मीक्षणं न सम्भव ती त्येवकाराशयः। नच परमेश्वरे प्रधाने च मुख्येक्षणाऽसम्भवे कथं प्रधान एवाऽमुख्य मीक्षण मङ्गीकार्य मिति चोद्यम्। अचेतनरूपप्रायपाठानुरोधेन प्रधान एव तदभ्युपगम स्योचितत्वा दि त्याह त त्तेज इति—'तत्तेज ऐक्षत', 'ता आप ऐक्ष'न्तेत्यादि ष्वचेतने पीक्षणं श्रूयते। अचेतने चेतनधर्मस्याऽसम्भवा च्चेतनधर्मत्वाश्रयणेन गौण मे वाऽङ्गीक्रियते। एवं प्रधानेऽपि भवतु। यदि तस्य गौणत्व मनङ्गीकृत्य चेतन एव त त्समन्वीयेत, त र्ह्यचेतनप्रायपाठो भज्येत। तस्मा दवशात ईक्षणस्य गौणत्व मेवाऽङ्गीकृत्य प्रधान एवाऽन्वयो युक्त इति भावः ॥

उत्तरसूत्र मवतारयितुं शङ्कते नन्विति — आत्मशब्दवाच्यत्व मिति — आत्मशब्द प्रतिपाद्यत्वं जीवस्य मुख्यं भव तीत्यर्थः। नच जीवस्य सर्वं प्र त्यात्मत्वं न सम्भव तीति जीव परत्वं न युज्यत इति वाच्यम्। 'ऐतदात्म्य'मिति तद्धितयत्प्रत्ययान्ततया सर्व मिदं प्रकृत सद्रूपात्मसम्बन्धी त्येतदर्थपरत्वात्। नाऽपि 'स आत्मा' इत्यनेनाऽपि त त्प्रतिपाद्यते, तत्र सर्वं स्येति विशेषणाऽश्रवणात्। प्राचीनवाक्यगतस्य तस्याऽनन्वयित्वात्। एवं च चेतनाचेतनसाधार णेन सच्छब्दे नोपक्रमस्य विशेषपर्यवसानाकाङ्क्षायां स आत्मे त्युक्त्यैव चेतनरूपविशेषे पर्यवसानं

## तन्निष्ठस्य मोक्षोपदेशात् ॥ १-१-७ ॥

तत्पदवाच्यतत्त्वनिष्ठस्य मोक्ष उपदिश्यते। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति। तस्मान्न प्रधानं जीवश्च नात्र गत्यादिविषयः।

शिष्यति। नन्वेवं 'स आत्मा' इत्युक्तः स जगत्कारणभूत आत्मा क इत्याकाङ्क्षायां 'तत्त्वमसी' त्युपसंहारात् त्वंशब्दोच्यः श्वेतकेतुरेव स आत्मेति पर्यवस्येत्। एवं च बहुभवनसङ्कल्परूपमीक्षणं तेजस्सृष्ट्यादिकं च तदनुभवबाधितं तेन बोद्धुमशक्य मितिचेदुच्यते। सर्गादिकालवृत्तान्तस्य अनेकजन्मव्यवहितस्य विस्मरणमस्मदादीनामप्यस्मिन्नर्थे:॥

'बहूनि मे व्यतीतानि जन्मानि तव चार्जुन।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप'॥

इति गीतोक्तरीत्या शिष्येण विस्मृतस्यापि तद्वृत्तान्तस्य सर्वज्ञेन गुरुणा उपदेष्टुं शक्यत्वेन जीवपरत्वे न कापि विप्रतिपत्ति रिति पूर्वपक्ष्याशयः॥

तस्मान्न प्रधानं जीव श्चेति प्रधानपरत्वशङ्कानिराकरणार्थयुक्त्यन्तरपरेणाऽनेनैव सूत्रेण आत्मश्रुत्यादिमूलजीवपरत्वशङ्कानिराकरण मपि सिध्य तीत्याशयेन जीवपरत्वशङ्का सूत्रावतारिकायां दर्शिता। ननु सूत्रस्य जीवपरत्वशङ्कामात्रनिराकरणार्थत्व मि त्याशयेन जीव श्चेति चकारेण सूचितम्॥

प्रकृतसूत्रेण निराकार्या प्रधानपरत्वशङ्का त्वेवंविधा — यथा ईक्षतिवदात्मशब्दोऽपि गौण एव। 'ममाऽत्मा भद्रसेनोऽयम्' 'मम प्राण इदं धनम्,' 'मम चक्षु रयं पुत्र' इत्यादिष्वात्मादिशब्दानां गौणप्रयोगस्य दृष्टत्वात्। जीवानां सकलपुरुषार्थनिदानस्य प्रधानस्य तान्प्रत्येवं निर्देशहेतुतया 'सन्मूलाः सोम्येमाः सर्वाः प्रजा' इति तत्रत्यवाक्यानुरोधेन 'ऐतदात्म्य मिदं सर्वं' मिति सर्वशब्दस्य जीवसामस्त्यपरत्व स्योपपन्नत्वा दिति। ननु प्रकृतिनिष्ठस्य मोक्षो नास्तीतिचे न्न। प्रकृतिज्ञानान्मोक्षसिद्धेः साङ्ख्यै रङ्गीकृतत्वात्। तथा च,

रङ्गस्य दर्शयित्वा निवर्तते यथा नृत्तात्,
पुरुषस्य तथाऽत्मानं प्रकाश्य विनिवर्तते तथा प्रकृतिः॥

प्रकृतेः सुकुमारतरं न किञ्चि दस्तीति मे मति र्भवति
या दृष्टाऽस्मीति पुन र्न दर्शन मुपयाति पुरुष स्य॥ इति

प्रधानकारणवादिना मपि साङ्ख्यानां तन्निष्ठस्य मोक्षो नाभिमतः, त्याज्य त्वात्। नच जीवनिष्ठस्य निषेधात्। 'शिव एको ध्येयः शिवङ्करः सर्व मन्य त्परित्यज्येति ॥

अत आह साङ्ख्याना मपीति —अत्राऽयं भावः। सूत्रे तन्निष्ठ स्येतिपदेन तद्वेदनमात्रं नोच्यते। किंतु स्वात्मतया तदुपासनम्। कथं 'तत्त्वम 'सीति श्वेतकेतुं प्रति सत आत्मता मुपदिश्य, 'आचार्यवा न्पुरुषो वे 'देति तद्वेदनोपाय मुक्त्वा 'तस्य ताव देव चिर 'मिति तद्वेदन वतः पुरुषस्य तावा नेव विलम्बः, याव त्प्रारब्धकर्माधीनशरीरा न्न विमोक्ष्यते, तत स्तद्विमोचना नन्तरं ब्रह्म सम्पद्यत इति। 'अस्मा च्छरीरा त्समुत्थाय परंज्योति रुपसम्प' द्येति वाक्यान्तर सिद्धशरीरविमोक्षपूर्वकब्रह्मसम्पत्तिरूपफलश्रवणात्। तस्याऽपि वेदनस्य 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादिश्रुत्यन्तरानुसारे णोपासनारूपत्व मवगम्यते। ननु साङ्ख्यमतं बुद्धिरूप मापद्य संसरन्त्यां प्रकृता वसङ्गोदासीनसाक्षिरूपस्य पुरुषस्य स्वात्मतया वेदनं भ्रान्तिरूप मस्ति। पूर्ण वर्षसहस्रन्तु तिष्ठ न्त्यव्यक्तचिन्तका 'विति वचनसिद्धं सावधिफलं तदुपासन म प्यस्तीति प्रधानपक्षेऽपि सूत्रं सङ्गत मितिचे न्न॥

मुक्तिफलकस्य स्वात्मतया प्रकृत्युपासनस्याऽविद्यमानत्वात्। प्रत्युत तन्मते प्रकृति विविक्तत्वेनाऽसंसारिस्वभाव स्यात्मदर्शन स्यैव मोक्षजनकत्वाभ्युपगमा च्च। तथा च,

तस्मा न्न बध्यते नाऽपि मुच्यते नाऽपि संसरति कश्चित्
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥

सैव च पुरुषार्थं प्रति विमोचय त्येकरूपेण
एवं तत्त्वाभ्यासा न्नाऽस्ति न मे नाऽह मि त्यपरिशेषम्॥

अविपर्यया द्विशुद्धं केवल मुत्पद्यते ज्ञानम्
तेन निवृत्तप्रसवा मर्थवशा त्सप्तरूपविनिवृत्ताम्॥
प्रकृतिं पश्यति पुरुषः प्रेक्षकव दवस्थितः स्वस्थः॥ इति

तस्मा त्साङ्ख्यमते प्रकृतिनिष्ठस्य मोक्षो नास्तीति सिद्धम्। एतेन तत्त्वम सीत्यादिवचनं 'ममाऽत्मा भीमसेन' इत्यादिव दर्थवाद इति शङ्का निरस्ता। अथ त त्त्व मसीति जगत्कार णस्य जीवस्यै वोपासनं मोक्षहेतुत योपदिश्यत इति शङ्कां निराकरोति नचेति —निषेधा न्मोक्षार्थं शिवातिरिक्त स्योपास्यत्वनिषेधा दित्यर्थः॥

पुनरपि साधकहेतुमाह प्रधानान्तरत्वेन ॥

हेयत्वावचनाच्च ॥ १-१-८ ॥

यदि प्रधानमेवात्र विवक्षितं, तदा तस्य हेयत्वमेवोच्येत । तत्त्वमसीति मोक्षहेतुतया ध्येयत्वमुच्यते । ततो न प्रधानमिति युक्तम् ॥

किं च प्रधानपक्षे विरोध इत्याह ॥

प्रतिज्ञाविरोधात् ॥ १-१-९ ॥

इतश्च न प्रधानं सत्पदवाच्यम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधात् । सत्पदवाच्यतत्त्वज्ञानेन तत्कार्यतया सकलचेतनाचेतनवस्तु

उत्तरसूत्रमवतारयति पुनरपीति ॥

तत्त्वमसीति न वस्तुगत्या सत आत्मत्वमुपदिश्यते । किंतु स्थूलतारायामरुन्धत्यात्मतामिव । ततः प्रधानस्य सत्परत्वेऽपि सत आत्मत्वोपदेशः सुसङ्गत एवेत्याशङ्कापरिहारेण पूर्वोक्तहेतुविशदीकरणार्थं हेतुं दर्शयतीत्यर्थः । स्पष्टयतीति तत्करोतीति ण्यन्तात्पचाद्यच् ॥

यदीति — तत्त्वमसीत्यत्र स्थूलारुन्धतीन्यायेनैव सदात्मकत्वमभिमन्येत, तर्हि तस्य स्थूलतारायामिव त्याज्यत्वमेव निगद्येत । नहि तथा निगद्यते । किंतु मोक्षसाधकत्वेन ध्येयत्वमेव निगद्यते । तस्मात्सत्पदं प्रधानपरं न भवतीति युक्तमिति भावः । सदात्मत्वे नैवोपदेशपरिसमापनेन तस्य याथार्थ्यमेव सिध्यति, नतु स्थूलारुन्धतीन्यायानुसरणमिति हृदयम् । पूर्वसूत्रे समागतो व्यपदेशात्वशात्सच्छब्दोऽनुषज्य षष्ठ्यन्ततया विपरिणम्यते । ततश्च, तस्य सदात्मत्वस्य हेयत्वावचनादिति सूत्रार्थः । चकारः पूर्वसूत्रेणैकवाक्यताकरणार्थः । न केवलं तन्निष्ठस्य मोक्षोपदेशात्प्रधानं सत्पदवाच्यम् । किंतु तद्धेयत्वावचनसमुच्चितादित्यर्थः ॥

उत्तरसूत्रमवतारयति किंचेति — एवं सद्विद्यायाः प्रधानपरत्वे साधकाभावं प्रदर्श्य तत्र बाधकमस्तीत्याह विरोध इति ॥

सर्वविज्ञानेति — येनाऽश्रुतं श्रुतं भवतीति प्रतिज्ञा सर्वविज्ञानविषया, श्रुतादिपदानामर्थसङ्कोचे कारणाऽभावात् । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भव'तीति वाक्यान्तरैकार्थ्याच्च । ननु ब्रह्मपरत्व इव प्रधानपरत्वेऽपि कार्यकारणयोरभेदात्प्रकृतिविज्ञानेन तत्कार्यभूतसर्वप्राकृतवस्तुविज्ञानं सम्पद्यत इत्याशङ्क्याह सकलचेतनाचेतनेति — अयमाशयः भावः । प्रधान

विज्ञातं भव तीति 'येनाऽश्रुतं श्रुतं भव' तीत्यादिना प्रतिज्ञायते। प्रधान कारणत्वे विरुद्ध मेतत्। चेतनस्य प्रधानकारणकत्वाऽयोगात्॥

प्रधाने कारणे ज्ञाते जाड्यविकारास्पदं तत्कार्य मिदं सर्वं ज्ञायते। यथा मृदि ज्ञातायां तत्कार्यं घटादिकम्। अतः कोत्र विरोध इत्याश ङ्कयाह॥

## स्वाप्ययात् ॥ १–१–१० ॥

इत श्च न प्रधानं सच्छब्दवाच्यम्। 'स्वप्नान्तं मे सोम्य विजानीहि, य त्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्व मपीतो

---

स्याऽचेतनतया कारणभूततद्विज्ञानेन तत्कार्यभूतजडवर्गविज्ञानं सिद्धेऽपि चेतनजातस्याऽविदित तया सर्वविज्ञानं न सम्भवति। तत स्तद्विरोधः समापद्यत इति। ननु सर्वविज्ञानप्रतिज्ञाया श्चेतना चेतनविषयत्वं न सिध्यति। मृद्धटादिदृष्टान्तानुरोधेनाऽचेतनविषयतयै वाऽवगम्यमानत्वा दितिचे दुच्यते। 'असङ्कोचेन सर्वविषयत्वे सिद्धे सङ्कोचेन यत्किञ्चिद्विषयत्व मन्याय्य ' मिति न्यायेन सर्वविज्ञानप्रतिज्ञा सकलवस्तुविज्ञानविषयै वेति सिध्यति। तत श्च सूक्ष्मसकलचिदचि द्वस्तुविशिष्टब्रह्मरूपे श्रुत्यन्तरसिद्धे कारणे सत्पदवाच्येऽङ्गीकृते सर्व मपि चेतनाचेतनात्मकं वस्तु स्थूलरूपवैशिष्ट्येन सत्कार्यकोटा वन्तर्भवती त्यसङ्कोचेन यथाप्रती त्युपपद्यते। अथ साङ्ख्य सम्मते प्रधाने कारणे सत्पदवाच्यतयाऽङ्गीकृते तु चेतनवर्गस्य प्रधानकार्यत्वाभावा त्सर्ववस्तु विषयत याऽसङ्कोचेन प्रतीता सा विरुध्यत इति भाष्याशयः॥

सूत्रान्तर मवतारयति प्रधाने कारण इति — इह सर्वविज्ञानप्रतिज्ञाया जडमात्र परत्वेन सङ्कोचेऽभ्युपगम्यमाने निष्कारणः सङ्कोचो न युक्त इति दोषोऽनेन सूचितः। इतश्चेति पूर्वहेतुं सिद्धवत्कृत्य स्वाप्ययो हेत्वन्तरत्वेन विधियते॥

सद्विद्याप्रकरणे स्वपितिनामनिर्वचनं श्रूयते स्वप्नान्त मित्यादि — तस्यार्थः — स्वप्नान्तं सुषुप्तं, मे मत्तः बोधयतो विजानीहीति पदस्य इत्युवा चेति पूर्वेण सम्बन्धः। इदं शिष्यावधान सम्पत्त्यर्थं मुद्दालकस्य वचनम्। सुषुप्तिस्वरूपप्रतिपादनप्रकारो यत्रैतदित्यादिः। यत्र यदा, पुरुषः पुरुषस्य, एत त्स्वपितिनाम स्वपिती त्येव तन्नाम भवति, यस्या मवस्थायां स्थित मेनं स्वपिती त्याचक्षत इत्यर्थः। तदा सता 'सदेव सो'म्येति प्रस्तुतेन सम्पन्नः सङ्गतो भव तीत्यर्थः। तस्याः सङ्गतेः सति लयरूपत्वबोधनार्थं स्वपितिनामनिर्वचनं क्रियते स्व मपीत इति — अपिपूर्वे इति

सच्छब्देन परमेश्वर एव प्रतिपाद्यते, न प्रधान मित्याह ॥

## गतिसामान्यात् ॥ १–१–११॥

यथास्या मुपनिषदि सत्पदस्य परमेश्वरवाचित्वेन गतिः, तथा श्रुत्य न्तरेऽपि समाना । ' पुरुषोवै रुद्रः सन्महो नमो नमः ' इत्यादौ । अतः सत्पद वाच्यः परमेश्वरः ॥

व्यक्त मे वास्या मुपनिष द्यात्मनः सर्वोत्पत्तिः श्रूयत इत्याह ॥

---

सोम्य मनः, सति सम्पद्य, सत आगम्य' इत्यादि स्वप्स्येतृस्थानयो र्भेदव्यपदेशाः सङ्गच्छन्ते ।'प्राज्ञे नात्मना सम्परिष्वक्तो न बाह्यं वेद नाऽन्तर' मित्यादिश्रुत्यन्तरैकार्थ्य म प्युपपद्यते। नहि तत्रापि सम्परिष्वक्तशब्दस्य ब्रह्मपर्यन्तत्वं वक्तुं शक्यम्। 'सुषुप्त्युत्क्रान्त्यो र्भेदे' नेति सूत्रेण प्राज्ञ जीवयो र्भेदस्य राद्धान्तयिष्यमाणत्वात्। ननु यदि जीवस्य भिन्नेपि ब्रह्मणि लय इष्येत, तर्हि प्रधाने पीष्यताम्। ब्रह्मण इव तस्यापि जीवद्वारा तदवस्थाश्रयत्वकल्पनेन तदुपादानत्वोपपादनस्य शक्यत्वा दितिचे दुच्यते। चेतनस्य ब्रह्मणो जीवं प्रति शरीरित्वं ' यस्यात्मा शरीर 'मिति श्रुतिसिद्धम्। तेन'यथा सुदीप्ता त्पावका द्विस्फुलिङ्गा स्सहस्रशः प्रभवन्ते सरूपाः। तथाऽ क्षरा द्विविधा स्सोम्य भावाः प्रजायन्ते तत्र चैवाऽपि य 'न्तीति श्रुतिसिद्धं जीवोपादानत्व मुप पादयितुं शक्यम्। न त्वशब्देनाऽचेतनेन प्रधाने नेति विशेषा द्यथोक्तमेव युक्तम् ॥

अनन्तरसूत्र मवतारयति सच्छब्देनेति — प्रकृतस्य सत्पदस्य तत्प्रकरणगतै रीक्षत्या दिभिर्यथा परमेश्वरो वाच्य स्तथैव श्रुत्यन्तरगतविवरणेनापि स एवे त्यनन्तरसूत्रेण बोधय तीत्यर्थः ॥

गतिसाम्या दित्यर्थः। तदेव दर्शयति यथेति ॥

उत्तरसूत्र मवतारयति व्यक्त मेवेति ॥

ननु श्रुत्यन्तरेषु ब्रह्मणः कारणत्व मस्तु तदप्रतिक्षिप्यैव सद्विद्यया कल्पभेदे प्रधानस्य कारणत्व माम्नायते। एवं च प्रकरणान्तरे ब्रह्मकारणत्वश्रवणा न्न सद्विद्यायाः प्रधानकारण परत्वं न हीयत इ त्याशङ्क्याह व्यक्तमेवेति — अस्याऽय माशयः। छान्दोग्ये सद्विद्यानन्तरं भूम विद्या प्रस्तुता। सा च सद्विद्यायां सच्छब्दोक्तस्यैव कारणस्य विशेषान्तरोपदेशाय प्रवृत्ता कथ मिति चे त्सद्विद्यायां 'त त्सत्यं स आ 'त्मेति नवकृत्वोऽभ्यस्तस्य सत्यशब्दस्य 'तस्या मेष तु वा अतिवदति यः सत्येनाऽतिवद' तीति प्रस्तुत एवात्मनि प्रयोगात्। तस्मा द्विद्याद्वया प्येकार्थकत्वा त्सद्विद्याया न प्रधानकारणत्व माख्यायत इति पूर्वपक्षशङ्का परिहृियत इति ॥

## श्रुतत्वाच्च ॥ १-१-११ ॥

अत्राऽपि आत्मनः 'प्राण आत्मत आकाश' इत्यारभ्य आत्मन एवेदं सर्व मिति श्रूयते। ततो जगत्कारणत्वेन सत्पदवाच्यं ब्रह्मैव, न प्रधान मिति सिद्धम् ॥

इति ईक्षत्यधिकरणम्

---

भूमविद्यायां 'तरति शोक मात्मवि' दित्यात्मोपासननिरूपण मुपक्रम्य तदनन्तरं 'आत्मतः प्राण आत्मत आकाश' इत्यादिना प्रागुपास्यत्वे नोपक्रान्तस्य नामादिप्राणपर्यन्तस्य वस्तुजातस्य प्रकृता दात्मन उत्पत्ति मुक्त्वा 'आत्मन एवेदं सर्व' मिति सर्वस्यापि जगत उत्पत्ति निरूपणे नोपसंहृतं तत्समानायां सद्विद्याया मपि कारणत्वे नाम्नात सत्पदवाच्यं ब्रह्मैव भवितु मर्हति, न प्रधान मित्यर्थः। सिद्ध मि त्यधिकरणार्थ उपसंह्रियते ॥

  

इद मधिकरणं शुद्धाद्वैतिनां पक्षे न सङ्गच्छते। तथाहि, अत्र ईक्षते श्चेतनधर्मतयाऽचेतनस्य प्रधानस्य जगत्कारणत्वं प्रतिषिध्यते। परपक्षे जगतो भ्रान्तिसिद्धतयाऽचेतनस्याऽपि स्थाणवादे र्भ्रमाधिष्ठानत्वसम्भवेन नैत त्प्रतिषेधो युज्यते। नच गौणत्वेन म प्याश्रयितुं शक्यम्। गौण श्चे दिति प्रतिषेधात्। तस्मा द्यथोक्तं युक्तम् ॥

एवं श्रीभाष्यकृतः पक्षेपि। तथाच, तेन 'श्रुतत्वाच्च' इतिसूत्रविवरणे 'न तस्यकश्चि त्पति रस्ति लोके न चेशिता नैवच तस्य लिङ्गम्। स कारणं करणाधिपाधिपो न चास्य कश्चि ज्जनिता नचाधिप' इति श्वेताश्वतरोपनिषन्मन्त्र उदाहृतो ब्रह्मणः सर्वनियन्तृत्वोपपादनाय। मन्त्रोपनिषदः शिवमहेश्वराद्यनितरसाधारणश्रुतिशतैः शैवत्वसम्प्रतिपत्त्या पाञ्चरात्रपरासु सुबालादिषु ब्रह्म लक्षणाऽभावा दवश्यात स्तदाश्रयणेन स्वाभिमतसिद्धान्तस्य भङ्गा दित्यलम् ॥

इति ईक्षत्यधिकरणम्

---

### अथ आनन्दमयाधिकरणम् ६

इह ब्रह्मलक्षणस्य जगत्कारणत्वस्य शास्त्रैकसमधिगम्यस्य तान्त्रिके प्रधानेऽतिव्याप्तिं मा शङ्क्य चेतनत्वादिहेतुना यथा तस्मि न्नतिव्याप्ति र्न भवति तथा निरूपितम्। अचेतनं प्रधान इव चेतनेपि जीवे त न्नातिव्याप्त मिति वक्तु मधिकरणान्तर मारभ्यते॥

## आनन्दमयोऽभ्यासात् ॥ १-१-१३ ॥

'तस्मा द्वा एतस्मा दात्मन आकाशः सम्भूत' इत्यारभ्य 'तस्मा द्वा एतस्मा द्विज्ञानमयात् अन्योऽन्तर आत्माऽनन्दमय' इति कश्चि दाकाशादि सर्वभूतकारणत्वे नाऽन्नमयादिकोशकञ्चुकान्तरनिगूढ आत्मानन्दमय इत्या नन्दवल्या माम्नायते॥

अत्राऽनन्दमय आत्मा जीवो वा? परमेश्वरो वेति सन्देहः॥

---

### आनन्दमयाधिकरणम् ६

पूर्वाधिकरणे सद्विद्यया प्रधाने ब्रह्मलक्षणं जगत्कारणत्व मतिव्याप्त मिति शङ्कायां निर स्ताया म प्येवमेव आनन्दवल्ल्या जीवकारणत्वाऽतिव्याप्ति र्निरस्यत इति दृष्टान्तसङ्गत्या अन न्तराधिकरण मवतारयति इ हेति॥

ननु, 'अन्योन्तर आत्माऽऽनन्दमय' इति श्रूयते। तस्य जीवत्वेऽपि तस्मि न्कार णत्वाऽश्रवणात्। 'आत्मन आकाश' इत्यादिना प्राङ्निरूपितस्य कारणत्व स्याऽन्नमयादिषु पर्यवसानासम्भवा दुत्तरोत्तर मात्मान्तरप्रतिपादना त्तत्र तदपर्यवसाने आनन्दमयप्रतिपादना नन्तर मपि 'ब्रह्मपुच्छं प्रतिष्ठा' इति ततोन्यस्य तत्प्रतिष्ठारूपस्य ब्रह्मणः प्रतिपादनेन तत्पर्य वसान स्याऽयुक्तत्वा दि त्याशङ्कां निराकृत्य आनन्दमये कारणत्वपर्यवसानं दर्शयितुं 'तस्माद्वा एतस्मा दात्मन' इत्यादि 'निगूढ आत्मे' त्यन्तं प्रतिपादितम्। अत्राय माशयः। उपक्रमे आकाशादिसर्वप्रपञ्चकारणत्वेनाऽऽत्मा निगदितः। तन्निर्धारणार्थं 'स वा एष पुरुषोऽन्नरसमय' इत्यादि। नहि तत्र स आत्मा अन्नमय इति वक्तुं युक्तम्। तस्याऽऽकाशादिक्रमेण तत्सृष्टान्न विकारार्थत्वाम्नानात्। 'अन्योन्तर आत्मा प्राणमय' इति तदाभ्यन्तरात्मान्तरश्रवणा च्च। तत एव न प्राणमयो मनोमयो विज्ञानमयो वा। अतः स्थूलारुन्धतीन्याये नाऽन्नमयादिषु तत्त द्बुद्ध्यवतारक्रमेण आनन्दमये तद्बुद्धिं स्थिरीकर्तुं मन्नमयादिविज्ञानमयान्तकोशचतुष्टयान्तवर्णन मिति तन्निगूढ आनन्दमयः सर्वप्रपञ्चकारणभूत आत्मेति युक्त मिति। तस्मि न्नानन्दमये श्रूय माण स्यात्मशब्दस्य जीवब्रह्मसाधारण्या त्संशयं दर्शयति अत्रेति॥

जीव इति पूर्वः पक्षः । तद्धर्माणां तत्रोपलम्भात् । तथाहि, 'पृथिव्या ओषधयः ओषधीभ्योऽन्नम् अन्नात् पुरुषः' इत्यादिना पक्षावयवं शरीरादिकं निरूप्यते । अत्र अन्नमय इति शरीरमुच्यते । प्राणमय इति तदन्तर्वर्ती प्राणः मनोमय इति तदन्तर्वर्ति मनः, विज्ञानमय इति तदन्तर्वर्तिनी बुद्धिः, आनन्दमय इति सर्वेषामन्नमयादीनामाश्रयो जीव एव । अन्नादीनां शिरःप्रभृतिकल्पना समुपासनार्था । अन्नादीनां ब्रह्मत्वेनोपासनात् तत्तदादि

ननु, आत्मशब्दे साधारणेऽपि 'ब्रह्मविदाप्नोति पर'मिति ब्रह्मोपक्रमात् तत्परिच्छिन्नस्य जीवस्य ब्रह्मशब्दवाच्यत्वाभावात्, 'सत्यं ज्ञानमनन्त'मिति लक्षणस्य तत्रानन्वयाच्च ब्रह्मविषय एव भवति । कुतः संशय इति चेदुच्यते । उपक्रमे उपास्यस्य ब्रह्मणस्तदुपासकस्य जीवस्य च श्रूयमाणतया तयोरात्मशब्देन कस्य परामर्शो युक्त इत्यनिर्णयात् संशयः । जीव इति पूर्वपक्ष इति । तत्रात्मशब्देन ब्रह्मविदो जीवस्यैव परामर्शो युक्तः । समानविभक्तिकत्वात् । न च 'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रे ब्रह्मापि प्रथमान्तमेवेति शङ्क्यम् । यो वेदेति कर्मसमर्पकत्वेन ब्रह्मपदस्य द्वितीयान्तत्वात् । नापि सर्गादौ शरीररहितस्य जीवस्य सङ्कल्पासम्भवात् प्रपञ्चकर्तृत्वं न सम्भवतीति शङ्क्यम् । ब्रह्मोपासनया ब्रह्मप्राप्तस्य 'अभावं बादरि'रित्यधिकरणन्यायेन शरीररहितस्यापि सङ्कल्पसम्भवात् । नन्वत्र नोपलभ्यन्ते [illegible] र्माः । कथमस्यानन्दमयस्य जीवत्वम्? न ह्यन्नमयादयो जीवधर्माः । तेषां पक्षित्वेनोत्तरोत्तरमभ्यन्तरत्वेन च वर्णितानां जीवधर्मत्वेनाऽप्रसिद्धतया तन्निर्धारणाऽसम्भवादित्याशङ्क्य तेषां जीवधर्मत्वमुपपादयति तथाहीति — अन्नमय इति शरीरमेवोच्यते । 'अन्नात्पुरुष' इति पुरुषस्यान्नविकारत्वोक्तेः । एवं प्राणमयः प्राणवायुरेव । शरीरान्तर्वर्तित्वलिङ्गात् । तथा मनोमयविज्ञानमयौ मनोबुद्धी । उत्तरोत्तरं सूक्ष्मत्वेन तयोस्तदभ्यन्तरत्वव्यवहारयोग्यत्वात् । पक्षावयवं शिरःपक्षद्वयपुच्छमध्यरूपमित्यर्थः । शरीरादीनां शिरआदिपक्षावयवयुक्तत्वं काल्पनिकं, मुखचन्द्रादिवद्रूपकमात्रसिद्धम् । तत्कल्पना तूपासनार्थेत्याशयः । आत्मा देहस्य मध्यभागः । 'मध्यं ह्येषामात्मे'ति श्रुतेः । अनेनानन्दमयस्य जीवत्वे प्रियादियोगो हेत्वन्तरत्वेन सूचितः । तत्रेष्टवस्तुदर्शनतल्लाभतदुपयोगप्रयुक्ताः सुखविशेषाः प्रियमोदप्रमोदाः । यावत्तृप्ति विषयभोगानन्तरं निवृत्ते विषयसम्पर्के तृप्तिरूपतयाऽनुवर्तमानं सुखमानन्दः । तेषामानन्दमयं प्रति शिरस्त्वादिना निरूप्यमाणानां तत्सम्बद्धः कश्चित्सम्बन्धो विवक्षितः । तेषां च जीवेन भोक्तृभोक्तव्यरूपः संबन्धः प्रसिद्धः ॥

ननु, अन्नमयाद्युपासनानामन्नसमृद्ध्यादिः फलमुक्तम् । न त्वानन्दमयोपासनस्य । अत

समृद्धिः फल मुक्तम्। कथ मस्य संसारसागरदुःखमग्नस्य जीव स्याऽनन्द मयत्वाभिधान मितिचे न्न। अत्रानन्दशब्देन परं ब्रह्मोच्यते।आनन्दो ब्रह्मेति श्रवणात्। मयट्शब्दस्य विकारार्थत्वा त्तत्कार्यभूतो जीव एव आनन्दमय इत्युच्यते। नित्यसम्पन्नशिवत्वस्य ब्रह्मण आनन्दमयत्वाङ्गीकारे 'अन्नमय प्राणमय मनोमय विज्ञानमयाऽनन्दमया मे शुध्यन्ता' मिति शुद्धिप्रार्थना व्यर्था स्यात्। अतोऽय मानन्दमय आत्मा जीव एव, न परमेश्वर इति प्राप्ते ब्रूमः॥

---

स्तदुपासनस्य 'ब्रह्मवि दाप्नोति पर' मि त्यने नैव फलप्रतिपादना द्वेद्यत्वे नोपक्रान्तं ब्रह्म आन न्दमय एवेति सिध्यति। स्थूलारुन्धतीन्याया दन्नमयादिक्रमेण बुद्ध्यवतारण मपि ब्रह्मणि सम्भवति। अन्यथा, भृगुवल्ल्यां 'यतो वा इमानि भूतानि जायन्त' इति जगज्जन्मादिकारणं ब्रह्म प्रस्तुत्य 'अन्नं ब्रह्मेति व्यजाना' दित्यादिना अन्नप्राणमनोबुद्धिषु ब्रह्मबुद्ध्यवतारणक्रमेण आनन्दे ब्रह्मबुद्धिः प्रतिष्ठापिता। नच तत्राऽ प्यानन्दो जीव इति वक्तुं शक्यम्। 'अधीहि भगवो ब्रह्मेति त द्विजिज्ञासस्व त द्ब्रह्मेति आनन्दो ब्रह्मेति व्यजाना' दित्यादिमध्यान्तपरा मर्शे नाऽन्नादिषु ब्रह्मबुद्ध्यवतारणेन आनन्द स्यैव ब्रह्मत्वावधारणात्॥

नच, अन्नमयादिप्रायपाठानुरोधे नानन्दमयशब्दे मयट् विकारार्थत्वा त्तत्पदवाच्यो जीव एवेति शङ्क्यम्। अत्र मयटः प्राचुर्यार्थकत्वा द्ब्रह्म ण्येव सङ्गच्छते नतु जीवे। दुःखसागर निमग्नेन ते नानन्दकणिकाया अपि दुष्प्रापत्वात्। तस्मा दन्नादिपञ्चमपर्यायस्थत्वा दपि स्थानप्रमाणे नानन्दमयशब्दवाच्यो ब्रह्मैव, नतु जीव इत्यभिप्रायेण शङ्कते कथ मस्येति — अत्रेत्यादिपरिहारभाग स्याऽय माशयः। आनन्दमयो ब्रह्मेति न वक्तुं युक्तम्। ब्रह्मपुच्छं प्रति ष्ठेति ततोऽन्यत्वेन ब्रह्मणः श्रवणात्। नचाऽत्र पुच्छशब्दः प्रणवपरः। 'अस न्नेव स भवति। अस द्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद सन्त मेनं ततो विदु' रित्यनन्तरश्लोके ब्रह्मविषय सदसत्त्वज्ञानयो रिष्टाऽनिष्टफलाम्नानेन तस्य ब्रह्मपरत्वाऽवगमात्। लोकप्रसिद्धेषु प्रणवादि ष्वसत्त्वज्ञानशङ्काया अनवकाशा च्च। यत्तु आनन्दमये मयटो प्राचुर्यार्थ इति त न्न। अन्न मयादिषु मयटो विकारार्थतया प्रायपाठेनाऽस्यापि तदर्थकत्वाऽवसायात्। शुद्धिवाक्यस्य प्रकृ तत्वाभावे प्यन्नमयादिक्रमेण तत्वा च्छुद्धिप्रार्थनाविषयो प्यय मे वाऽऽनन्दमयो भविष्य तीति॥

पूर्वपक्ष मुपसंहृत्य सिद्धान्त म्प्रतिजानीते अतइति॥

आनन्दमयोऽस्य भात्मा परमेश्वर इति। कुतः? अस्यानन्दस्य निरतिश यत्वे नाभ्यासात्। कथ मभ्यस्यते? 'सैषाऽऽनन्दस्य मीमांसा भव' तीत्यारभ्य मानुषविशेषादि प्रजापतिपर्यन्त तत्तदानन्द स्योपर्युपरि शतगुण मतिशय मभिधाय 'स एको ब्रह्मण आनन्द' इति ब्रह्मानन्दो निरतिशयाशिरस्कत्वे नाभ्यस्यते। न देवनिरतिशयानन्दभाजनत्व मस्य संसारिणो न संभवति॥

य दुक्त मानन्दमय स्येश्वरत्वे नित्यशुद्धस्य तस्य कथं विशुद्धिप्रार्थ नेति, तत्रेद मुत्तरम्। यथा प्रकृष्टप्रकाशस्य चन्द्रस्य तिरोधायकघनापगम एव प्रसाद स्तथा तस्य नित्यशुद्धस्य तिरोधानमलापनयन मेव शुद्धिः। तस्मा दानन्दमयः परमेश्वर एव॥

ननु अत्राऽभ्यासो यदि शतगुणत्वे नानन्दानुवृत्ति स्तर्हि तस्या गन्धर्वादि ष्वपि विद्य मानत्वेन तया आनन्दमयस्य न ब्रह्मत्वं सिद्धंच दित्याश ङ्क्याह निरतिशयत्वे नेति— 'स एको ब्रह्मण आनन्द' इत्याद्यनन्तरं 'तद प्येष श्लोको भव' तीति स्वोक्तार्थसाधकत्वे नोपक्रान्ते 'यतो वाचो निवर्तन्त' इति श्लोके ब्रह्मानन्दस्य निरतिशयत्वप्रतिपादनेन 'त ये शतं प्रजापते रानन्दा' इत्यत्र शतशब्दः सङ्ख्याविशेषपरो न भवति, किंतु आनन्त्यपर इति भावः। यद्यपि सूत्रे निरतिशयत्वबोधकविशेषणं नास्ति तथा प्यभ्यास स्यानन्दविषयत्वं तन्निरतिशयत्ववैशिष्ट्य मपि हेतूकरणसामर्थ्या ल्लभ्यत॥

न न्वय मानन्दाभ्यासः 'ब्रह्मपुच्छं प्रतिष्ठा' इत्यानन्दमय स्याधारत्वेन श्रुतस्य ब्रह्मण एवेत्याशङ्क्याह अस्येति— अत्रायं भावः। शिरःपक्षपुच्छादियुक्त मानन्दमय निरूप्य 'सोऽकामय' तेत्यादिना कामनापूर्वकजगत्सृष्ट्यादिकं निगद्य, 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भव' तीति यस्यानन्दरूपस्याऽनुभव एव जीवस्य परमपुरुषार्थ त्वेनाऽऽम्नात स्तस्य निरतिशयानन्द स्तदनन्तरवाक्येन 'सैषाऽऽनन्दस्य मीमां' सेत्यादिना वर्ण्य इत्याकाङ्क्षायोग्यतासन्निधिभि र्निश्शङ्क मवगम्यते। एवंविध स्त्वन्वयव्यानन्दमय एव, न तु पुच्छं ब्रह्म पुंलिङ्गश्रुतेः। तस्मा दय मानन्दाभ्यास आनन्दमयविषय एवेति निर्णीयत इति। शुद्धिप्रार्थनालिङ्ग मनूद्य परिहरति यदुक्त मित्यादिना — यथा घनमलिन श्चन्द्रः शुद्धो भव त्विति प्रार्थना स्वदृष्टितिरोधायकघनापगमविषया, तथै वानन्दमयशुद्धिप्रार्थना स्वचिच्छक्ति तिरोधायकमलापगमविषय येति पर्यवस्य तीति हृदयम्॥

न न्वानन्द एव ब्रह्म त्युच्यते । तद्विकार आनन्दमयः । मयटो विकारार्थत्वात् । आनन्दमय स्येश्वरत्वाभ्युपगमे ब्रह्म णोन्य ईश्वर इति प्राप्नोति । तथा सति तस्य विकाररूपत्वा दनित्यत्वं चेति शङ्काया माह ॥

## विकारशब्दा न्नेतिचे न्न प्राचुर्यात् ॥ १-१-१४ ॥

अन्नमयादीनां यथाऽन्नादिविकाररूपत्वं तथाऽत्रानन्दमय इत्यानन्द विकारः यथा मृद्विकारो हि मृण्मयो घटादिः । अतः परमेश्वरस्य विकार त्वासंभवा दयं जीव एवेतिचे न्न ॥

मयट्शब्द स्यात्र प्राचुर्यार्थत्वात् । अन्नमयप्राणमयमनोमयपर्यन्त मेव मयट् विकारार्थः । विज्ञानमयो विज्ञानप्रचुरो जीवः । आनन्दमयो प्यानन्द प्रचुरः परमेश्वरः ॥

सर्वथा विकारप्रकरणपठितत्वा द्विकारार्थ एव समुचितो मयट्शब्द स्येत्याशङ्क्याह ॥

---

उत्तरसूत्र मवतारयितुं मयटो विकारार्थत्व माशङ्कते नन्विति ॥

अन्नमयादीना मिति — अनेन 'सवा एष पुरुषोऽन्नरसमय' इत्यादिप्रायपाठोपि पूर्वपक्षहेतुतया सूत्रे शङ्काविषय इति दर्शितः । प्राचुर्यात् प्राचुर्यार्थत्वा दित्यर्थः । मनोमयपर्यन्त मेव मयटो विकारार्थ इति — अत्रायं भावः । अन्नमय स्ताव दन्नविकारः । अन्ना त्पुरुष इति वाक्यशेषात् । तत्प्रायपाठानुरोधेन प्राणमयमनोमययो रेव मय ड्विकारार्थः । ननु विज्ञानमये ॥ तत्र 'द्व्यचश्छन्द' सीति सूत्रस्याऽप्रवृत्तेः । एवं विज्ञानमयशब्दस्य प्राचुर्यार्थमयडन्तत्वे विकारार्थ प्रायपाठरूपपूर्वपक्षहेत्वसिद्धि स्तेन तस्य जीवपरत्वासिद्ध्या विज्ञानमया दन्योऽन्तर आत्मेत्या म्नातस्याऽऽनन्दमयस्य परमेश्वरत्वसाधकजीवान्यात्मत्वरूपहेत्वन्तरसिद्धि श्च भव तीति प्रयोजन द्वयार्थतया विज्ञानमयगतस्यापि मयटः प्राचुर्यार्थत्वं सूत्रेणैव विवक्षित मि त्यावेदयितुं विज्ञानमय पदस्यापि प्राचुर्यार्थमयडन्तत्वम् । तेन तस्य जीवपरत्वं च भाष्ये प्रदर्शितम् ॥

ननु विकारार्थमयटः प्रायपाठा द्विज्ञानमये क्वचि दसम्भवा त्त्यागेपि मनोमयपर्यन्त मनुवृत्तस्य तस्य बुद्धिसन्निहितत्वा दानन्दमये त्यागो न युज्यते । नच विज्ञानमयशब्दा दिवाऽऽनन्दशब्दा च्छन्दसि मयटोऽसम्भवः वृद्धत्वात् । 'नित्यं वृद्धशरादिभ्य' इति सूत्रे नित्य ग्रहणस्य छन्दसि विकल्पार्थत्वा दित्यभिप्रायेण शङ्का मुद्भाव्य तदुत्तरत्वेनाऽनन्तरसूत्र मवतार यति सर्वथेति ॥

## तद्धेतुव्यपदेशाच्च ॥ १-१-१५ ॥

'एष ह्येवानन्दयाती'ति जीवान् प्रत्यानन्दहेतुतया आनन्दमयः श्रूयते। स्वयं प्रचुरानन्दो हि परानानन्दयति। अतः परमेश्वर एवानन्दमयः॥

एष ह्येवेति — अत्रायं भावः। आनन्दमये विकारप्राचुर्ययोः साधारणस्य मयटो वाक्यशेषसिद्धार्थो ग्राह्यः : 'एष ह्येवानन्दया'तीति वाक्यशेषे च 'सोऽकामय'तेत्यानन्दमयं प्रस्तुत्य आनन्दमय एव जीवानानन्दयतीति श्रूयते। तस्य च यथा स्वयं निर्धनोऽपि योगी अनुग्रहेण अन्यान् धनवतः करोतीति नार्थः। किं तु स्वानन्दैकदेशेनानन्दवतः करोतीति। एतस्यैवानन्दस्यान्यानि मात्रामुपजीवन्तीति श्रुत्यन्तरात्। पूर्वमत्रापि 'रसो वै सः रसꣳ ह्येवायं लब्ध्वानन्दी भव'तीति श्रवणाच्च। ननु विषयविशेषसम्पर्केण जायमानेनानन्देनानन्दवत्त्वेन प्रवर्तमानानां जीवानां कथं नित्यसिद्धब्रह्मानन्दैकदेशेनानन्दवत्त्वोक्तिः सङ्गच्छत इति चेदुच्यते। विषयविशेषादिकारणवशात् तारतम्येन चाभिव्यक्तो ब्रह्मानन्द एव जीवैरास्वाद्यते। स एव च मानुषानन्दप्रभृति उत्तरोत्तरशतगुणत्वेनाम्नायत इति भाष्यकार एव 'भावे जाग्रद्व'दिति सूत्रे वक्ष्यति एवं च वाक्यशेषे सर्वजीवापेक्षया प्रचुरानन्दशालित्वमानन्दमयस्य सिद्धमिति स एव मयडर्थो युक्तः। एतेन तत्र प्राचुर्यस्य समानाधिकरणविजातीयाल्पत्वविशिष्टत्वमर्थमिति शङ्का निरवकाशीकृता। वाक्यशेषेण व्यधिकरणसजातीयाल्पत्वस्यैव सिद्धत्वात्। एवं च 'एष ह्येवानन्दया'तीति ब्रह्मणः सकलजीवानन्दसम्पादकत्वेन तस्य प्रचुरानन्दवत्त्वं सिध्यति। यथा अन्यान्धनिनः समापादयतः प्रचुरधनित्वमिति भावः। सूत्रे चकारेण 'आनन्दमयोऽभ्यासा'दिति साधकतया पूर्वसूत्रोक्तस्याभ्यासरूपहेतोः समुच्चयार्थः॥

अथवा, समुच्चयस्योपेक्षितत्वेनाऽनुक्तहेतुसमुच्चयार्थः। तेन 'सोऽकामयत बहु स्यां प्रजायेये'ति बहुभवनसंकल्पयितृत्वं, 'इदꣳ सर्वमसृजते'ति सर्वकारणत्वं, 'तत्सृष्ट्वा तदेवानुप्राविश'दिति स्वसृष्टसर्वान्तर्यामितया तदनुप्रवेशः, 'भीषाऽस्माद्वातः पवत' इत्यादिना सर्वनियन्तृत्वं चेत्येतानि ब्रह्मलिङ्गानि समुच्चितानि। यद्यप्येतान्यानन्दमयस्य ब्रह्मत्वे साक्षात्साधकानि न तु तदुपपादकस्य मयटः प्राचुर्यार्थत्वस्य, तथाप्येष ह्येवानन्दयातीत्यानन्दहेतुत्वव्यपदेशस्यैतस्यैवानन्दस्यान्यानि मात्रामुपजीवन्तीति श्रुत्यन्तरानुसारेण तत्र साक्षात्साधकत्वमपि सम्भवतीति तेनैतेषां समुच्चयो नाऽनुपपन्नः। अनेनैव सूत्रेण प्रियमोदादीनां ब्रह्मधर्मत्वानुपपत्तिरप्यर्थात्परिहृता। तेषामिह ब्रह्मानन्दाभिव्यक्तिविशेषरूपत्वसिद्धेः। एवं च सत्यानन्द आत्मेति निरूपणमपि प्रियमोदप्रमोदरूपवीचीतरङ्गपरम्परापरिवृतमहासमुद्रायमाणवक्ष्यमाणब्रह्मानन्दविषयतयोपपद्यत इति न तत् क्षुद्राल्पपरिदृष्टतृप्तिरूपानन्दविषयत्वेन योजनीयम्॥

आनन्दप्रचुरः परमेश्वर आनन्दमय इत्युक्तेपि ब्रह्मणोन्य एवाय मिति गम्यते। ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्माधारत्वे नास्यावगमात्। परमेश्वरा दन्यत्वाङ्गीकारे ब्रह्म णोस्वातन्त्र्या ज्जगत्का रणत्वाद्यसम्भः। अतो जीवपक्ष एव समीचीन इत्यत आह॥

## मान्त्रवर्णिक मेव च गीयते ॥ १–१–१६ ॥

यत् ' सत्यं ज्ञान मनन्तं ब्र 'ह्मेति मन्त्रवर्णोदितं ब्रह्म, त देव अन्यो न्तर आत्मानन्दमय ' इति आनन्दप्रचुरतया आनन्दमय इति गीयते। ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्मशब्दः प्रणववाचकः। तस्य परमेश्वरवाचकत्वा दाधारत्वम्

अत्र केचि दाहुः—परमाकाशरूपः प्रकृत्यात्मा आनन्दमय इति श्रूयते न विश्वाधिकं निमित्त परं ब्रह्म यत् ' सत्यं ज्ञान मनन्तं ब्रह्म इत्युच्यते।

---

प्रतिष्ठात्वेन निरूपिताद् ब्रह्म णोन्यत्वा दानन्दमयो जीव इति शङ्का मनूद्य तदुत्तरत्वे नोत्तरसूत्र मवतारयति आनन्दप्रचुर इति॥

य त्सत्यं ज्ञान मिति — अ त्राय माशयः। ' ब्रह्मवि दाप्नोति पर ' मि त्यानन्दवल्ल्यां प्रतिपाद्यस्य कृत्स्न स्याऽप्यर्थस्य संग्राहकं सूत्रम्। तत्र किं तद् ब्रह्म ? कथं च तद्वेदनम् ? किं च तद्वेदनप्राप्यं परमोत्कृष्टं फल मित्याकांक्षायां तत्त्रयं स्पष्टीकर्तुं 'सत्यं ज्ञान मनन्तं ब्रह्म' ' ' यो वेद निहितं गुहायां परमे व्योमन् ', ' सोश्नुते सर्वा न्कामा ' नित्यादिमन्त्रभागःप्रवृत्तः ' सोऽकामय ' तेत्यादिना बहुभवनसङ्कल्पयितृ प्रकृतं ब्रह्मैव। एवं स इति पुंलिङ्गेन प्रकृत स्यानन्द मय स्यैव परामर्शात्। कारणवाक्यसमानविषयत्वे नाऽप्यानन्दमयवाक्यस्य मान्त्रवर्णिकब्रह्म विषयत्व मवार्य मिति॥

न न्वेव मपि ब्रह्मपुच्छं प्रतिष्ठेति प्रतिष्ठारूपब्रह्मान्यत्वप्रतीते रानन्दमयस्य ब्रह्मत्वं न सिध्य तीत्याशङ्काचह ब्रह्म पुच्छ मिति— उपक्रमगत ब्रह्मपदानुसारे णानन्दमयस्य ब्रह्मत्वसिद्धा वुपसंहारे ततोन्यत्र प्रयुक्तं ब्रह्मपदं ब्रह्मवाचकतया तत्प्रतिष्ठान्यत्वनिर्देशयोग्ये प्रणवे वर्तनीयमिति भावः॥

अत्र केचि दिति — तेषा माकूत मिदम्। ' सत्यं ज्ञान ' मितिमन्त्रे विवरणीये त्वानन्त्यं कारणवाक्ये रुपपाद्यते। तथा कोशचतुष्टयरूपा तदन्तर्वर्तिनो ब्रह्मणो गुहाऽन्नमयादि

‘तस्माद्वा एतस्मादात्मन आकाशः सम्भूत’ इत्याकाशादिप्रपञ्चप्रकृतित्वेन श्रुत आनन्दमयः परमाकाशः। परमाकाशरूपत्व मस्य ‘यदेष आकाश आनन्दो न स्या’ दित्यतोऽवगम्यते। ब्रह्म पुच्छं प्रतिष्ठेति तद्ब्रह्म आनन्दाकाश स्याधारत्वे नावगम्यते। अत एव ‘स एको ब्रह्मण आनन्द’ इति ब्रह्माधि तत्वे नावगम्यते। पुनरेष एव ‘आनन्दो ब्रह्मेति व्यजानात्, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते’ इत्यादिना सकलभूतप्रकृतित्वे नाभिधीयते। तत्र आनन्दो ब्रह्मे त्यानन्दस्य ब्रह्मत्वव्यपदेशस्तु ब्रह्मधर्मत्वेन तदभेदात्। ‘सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठि’तेति ब्रह्मधर्मस्वरूपे पर मानन्दरूपे प्रपञ्चप्रकृतौ परमशक्तिपर्याये चिदात्मनि परमे व्योमनि वारुणी विद्या समाप्ते त्युच्यते। ततो ब्रह्मधर्मस्वभावः प्रकृत्यात्मा परमाकाशरूपा परमशक्ति रानन्दमय इत्युच्यते, तद्धर्मित्वेन प्रतिष्ठे त्युच्यते परं ब्रह्म। विज्ञान

---

वाक्यैः प्रदर्श्यते। एव मेव सर्वकामावाप्तिरूपं फल मानन्दमीमांसया विशदीक्रियते। तथैव गुहान्तराले तदास्थानप्रदेशतया निर्दिष्टं परमं व्योमापि विशि ष्येद मित्थ मिति प्रदर्शनीयम्। तत्प्रदर्शनपरे मानन्दमयवाक्यम्। तत्र निर्दिष्टं ब्रह्म तु ‘ब्रह्म पुच्छं प्रतिष्ठा’इति वाक्येन निर्दिश्यते। न प्रणवः। नच तत्र स्थितस्य तत्प्रतिष्ठात्वनिर्देशो नोपपद्यत इति शङ्क्यम्। भुवि स्थितस्याऽचलस्य भूभरत्व व त्स्वशक्तिरूपे परमासने स्थितस्य परब्रह्मण स्तत्प्रतिष्ठात्वस्य निर्बाधात्।

न न्वेवं ‘तस्माद्वा एतस्मा’ दित्यादिकारणवाक्यस्य ब्रह्मविषयत्वे त प्रतिपाद्यकारण भूतात्मनिर्धारणस्य ‘तस्माद्वा एतस्मा’ दितिवाक्यशैलीसमाप्त्यवगमित मानन्दमये पर्यवसानं विरुध्येत। आनन्दमयविषयत्वे तस्य ब्रह्मानन्त्यप्रतिपादनार्थत याऽऽनन्दमय मतिलंघ्य प्रतिष्ठारूपे ब्रह्मणि पर्यवसानं च विरुध्ये तेतिचे न्न। उभयथा प्युपपत्तेः। ब्रह्म विषयत्वे कोशचतुष्टयात्मकगुहानिरतिशयानन्दात्मकपरमव्योमरूपयोः प्रकारचतुष्टयपर्यङ्करीत्या हार्दपरब्रह्मस्थानयो र्निरूपणार्थ मेव ‘तस्मा द्वा एतस्मा’ दिति श्रुतिशैली प्रवृत्ता। नतु कारणभूत स्याऽऽत्मनः सर्वान्तरत्वनिर्धारणार्थ मि त्युपपत्तेः। आनन्दमय विषयत्वेपि तदपृथक्सिद्धाश्रयस्य ब्रह्मण एवानन्त्यसिद्धेः। तस्मा दिति मन्त्रब्राह्मणप्रकृतब्रह्म परामर्शि। एतस्मा दिति तदव्यवहितमन्त्रमात्रप्रकृतपरमव्योमपरामर्शि। उभयोः सामानाधि करण्य मभेदोपचारेण। अभेदोपचार श्च तन्मूलभूताऽपृथक्सिद्धाश्रयाश्रयिभावद्योतने नानन्दमय विषयकारणविषयवाक्यानां ब्रह्मानन्त्योपपादनपर्यवसायित्वज्ञापनपरत्व मिति सर्वोपपत्ते श्च॥

मय स्तदुपासको जीवः। प्रतिष्ठाभूता द्धर्मिणो ब्रह्मणो धर्मभूत स्याऽनन्द मयस्य शक्त्यात्मनो भेदादर्शना दानन्दमय आत्मा ब्रह्मे त्यभिप्रायेण 'आनन्दमयोऽभ्यासा' दिति सूत्रकारेण सूचित मिति ॥

---

ननु, य आनन्दमयो ब्रह्मधर्मभूत आनन्द स्तर्हि कथं सूत्रकारेण आनन्दमयो ब्रह्मे त्युक्त मित्याशङ्कय श्रुतिव दभेदोपचारे णेत्याह प्रतिष्ठाभूता दिति ॥

अस्मिन् पक्षे त्वधिकरणशरीर मेवम् — जगत्कारण मानन्दमयो जीवः ? उत ब्रह्मा नन्दरूपा चिच्छक्तिः ? इति संशयः ॥

अत्र पूर्वपक्षः —

तस्मादिति वाक्येन ब्रह्मवि ज्जीव एव परामृश्यते। तस्य प्रथमानिर्दिष्टतया प्राधान्यात्। ननु परमव्योम्नोपि व्याख्यातव्यत्वे नार्थतः प्राधान्या त्तद्रूपा चिच्छक्ति रेव परामृश्यत इतिचे न्न। व्योम्नो भूताकाशतया प्रसिद्धत्वेन तस्य व्याख्यतव्यत्वाभावात्। एवं च जगत्कारण मान न्दमयो जीव ए वेति ॥

अथ सिद्धान्तः —

आनन्दमयो ब्रह्मानन्दरूपा चिच्छक्तिः। अ स्यानन्दस्य मानुषादिब्रह्मान्तं भूत्तरोत्तरशत गुणत्वे नाभ्यस्तत्वेन जीवस्य तथाविधानन्दत्वाऽसम्भवा दिति। पूर्वव देव द्वितीयसूत्रं योजनीयम्। प्रायपाठेन मयटो विकारार्थत्वप्रतीत्या प्रसक्ताया जीवपरत्वशङ्काया निराकरणार्थं पूर्वव देव तत्र हेत्वन्तरप्रतिपादनपरं तृतीयसूत्रम्। तत्रार्थयोजनाया मयं विशेषः।, रसो वै सः', 'एष ह्येवा नन्दया' तीति। यथा प्रचुरो जलराशिः स्वै रेकदेशैः केदारा न्जलवतः कुर्यात्। न त्वप्रचुर इति वाक्यशेषे श्रुत स्यानन्दवत्वस्य तदन्यथानुपपत्त्या प्राचुर्यस्य प्रतीयमानतया त देव मयडर्थ इति। मान्त्रवर्णिकसूत्रं तु आनन्दमयशब्देन ब्रह्मवि देव परामृश्यत इति शङ्कानिराकरणार्थम्। मान्त्रवर्णिकं परमव्यो मैव 'तस्माद्वा एतस्मा'दित्यादिषु गीयते। ननु ब्रह्मविदितिसूत्रगतेन नपुंसकलिङ्गेन द्योत्यते। तस्मा त्सैव चिदम्बरशक्ति रुदाहृतश्रुतिवशा दुक्तविशेषणविशिष्टतया सिध्यति। तस्मा न्न जीवे ब्रह्मलक्षण स्यातिव्याप्ति रिति ॥

ननु यद्येव मने नाधिकरणेन जीवे ब्रह्मलक्षणातिव्याप्तिनिराकरणार्थं प्रवृत्तेन त न्निराकृत्य चिच्छक्ता वतिव्याप्ति रुपपादिता स्यात् मच तस्या अपृथक्सिद्धब्रह्मधर्मतया तत्र तल्लक्षणस्थिति र्नाऽतिव्याप्ति रिति शङ्कयम्। जातौ व्यक्तिलक्षणस्येव तस्याऽतिव्याप्तित्वा

विशेषात्। अन्यथा जीवेपि तल्लक्षणप्रसक्ते रतिव्याप्तिः स्यात्। तस्मादपृथक्सिद्धविशेषणत्वाविशेषा दिति चेन्न। शिवा तदीयाया चिच्छक्ते रपि प्रपञ्चकृत्य कारणतया तत्र तल्लक्षणस्थितं रतिव्याप्तित्वाभावात्। परमेश्वरस्य शक्तिविशिष्टस्यैव शुद्धाऽशुद्धात्मकसकलप्रपञ्चविषयपञ्चकृत्यकारणत्वात्॥

तथा हि शिवपुराणवचनानि —

शक्तिः साक्षा न्महादेवी महादेव स्तु शक्तिमान्<br>
तयो र्विभूतिलेशो न सर्वं मेत चराचरम्॥

वस्तु किञ्चि दचिद्रूपं किञ्चि द्वस्तु चिदात्मकम्<br>
द्वयं शुद्ध मशुद्धं च परं चापर मेव च॥

यत् संसरति चिच्चक्र मचिच्चक्रसमन्वितम्<br>
त देवाशुद्ध मपर मितर त्तु परं शुभम्॥

अपरं च परं चैव द्वयं चिदचिदात्मकम्<br>
शिवस्य च शिवाया श्च स्वाम्यं चैत त्स्वभावतः॥

यथा शिव स्तथा देवी यथा देवी तथा शिवः<br>
नाऽनयो रन्तरं विद्या च्चन्द्रचन्द्रिकयो रिव॥

चन्द्रो न खलु भात्येव यथा चन्द्रिकया विना<br>
न भाति विद्यमानोपि तथा शक्त्या विना शिवः॥

एवं परस्परापेक्षा शक्तिशक्तिमतोः स्थितिः<br>
न शिवेन विना शक्ति र्न शक्त्या च विना शिवः॥

शक्तो यथा शिवो नित्यं मुक्तौ मुक्तौ च देहिनाम्<br>
या माहु रखिलेशस्य तै स्तै रनुगुणै र्गुणैः॥

समानधर्मिणी मेव शिवस्य परमात्मनः<br>
यथा न जायते पुत्रः पितरं मातरं विना॥

तथा भवं भवानीं च विना नैव चराचरम्<br>
स्त्रीपुंसप्रभवं विश्वं स्त्रीपुंसात्मक मेव च॥

स्त्रीपुंसयो र्विभूति श्च स्त्रीपुंसाभ्या मधिष्ठितम्<br>
तस्मा त्सह तथा शक्त्या हृदि पश्यन्ति ये शिवम्॥

तेषां शाश्वतिकी मुक्ति र्नेतरेषा मिति श्रुतिः॥ इत्यादीनि

एवं च यानि श्रुतिस्मृतिपुराणेषु शिवस्य पञ्चकृत्यकारित्वादिप्रतिपादकानि वचनानि, यानि च चिच्छक्तेः ' वधूः जजान न वगज्जनित्री । एका सती बहुधोषो व्युच्छस्य जीर्णात्वं जरयसि सर्वं मन्य ' दित्यादीनि श्रुतिवचनानि

'सा शक्तिः सर्वदा सूक्ष्मा प्रबोधानन्दरूपिणी
शक्तिमा नुच्यते देव शिवः शीतांशुभूषणः ॥

महदादिविशेषान्ता स्त्वजाद्या श्चैव मूर्तयः
य च्चान्य दस्ति त त्सर्वं तस्याः कार्यं न संशयः ॥

सा देवी मायया सर्वं ब्रह्माद्यं सचराचरम्
मोहय त्यप्रयत्नेन मोचय त्यपि लीलया ॥

या सा माहेश्वरी शक्ति र्ज्ञानरूपातिलालसा
व्योमसंज्ञा परा काष्ठा सेयं हैमवती तथा
सेयं करोति सकलं तस्याः कार्य मिदं जगत्
न कार्यं नापि करण मीश्वर स्येति सूरयः ॥

सैषा माहेश्वरी गौरी मम शक्ति र्निरञ्जना
शान्ता सत्या परानन्दः परंपद मिति श्रुतिः ॥

अस्याः सर्वं मिदं जात मत्रैव लय मेष्यति
एषैव सर्वभूतानां गतीना मुत्तमा गतिः ॥

इत्यादीनि शैवलैङ्गकौर्मादिवचनानि च पञ्चकृत्यकारित्वप्रतिपादकानि, तानि सर्वाणि विशेष वचनानुसारेण तयोः परस्परापेक्षया पञ्चकृत्यकारित्वादिविषयाणि । शिवस्य शक्ते र्वा तन्निषेध वचनानि चाऽन्योन्यनैरपेक्ष्येण तन्निषेधपरा णीति व्यवस्थापनीयम् ॥

एवं सत्यपि शिवस्य सर्वात्मना स्वातन्त्र्यं , शक्तेः शिवमात्रे पारतन्त्र्य मि त्येतावा नस्ति विशेषः ॥

सैका परा च चिद्रूपा शक्तिः प्रसवधर्मिणी
विभज्य बहुधा विश्वं विदधाति शिवेच्छया

एव मेषा परा शक्ति रीश्वरेच्छानुवर्तिनी
स्थिरं चरं च य द्विश्वं सृज तीति विनिश्चयः ॥

इत्यादिवचनप्रामाण्यात् । अत एव शक्तिशिवयो र्भेदाभावे विशेषणविशेष्यता । तत एव च तयोः पूजायां विशेषाभावेऽपि पौर्वापर्यं शिवपुराणे विधीयते ॥

एवं च यानि श्रुतिस्मृतिपुराणेषु शिवस्य पञ्चकृत्यकारित्वादिप्रतिपादकानि वचनानि, यानि च चिच्छक्तेः 'वधू र्जजान न वगज्जनित्री। एका सती बहुधोषो व्युच्छस्य जीर्णात्वं जरयसि सर्व मन्य' दित्यादीनि श्रुतिवचनानि

'सा शक्तिः सर्वदा सूक्ष्मा प्रबोधानन्दरूपिणी
शक्तिमा नुच्यते देव श्शिवः शीतांशुभूषणः ॥
महदादिविशेषान्ता स्त्वजाद्या श्चैव मूर्तयः
य च्चान्य दस्ति त त्सर्वं तस्याः कार्यं न संशयः ॥
सा देवी मायया सर्वं ब्रह्माद्यं सचराचरम्
मोहय त्यप्रयत्नेन मोचय त्यपि लीलया ॥
या सा माहेश्वरी शक्ति र्ज्ञानरूपातिलालसा
व्योमसंज्ञा परा काष्ठा सेयं हैमवती तथा
सेयं करोति सकलं तस्याः कार्य मिदं जगत्
न कार्यं नापि करण मीश्वर स्येति सूरयः ॥
सैषा माहेश्वरी गौरी मम शक्ति र्निरञ्जना
शान्ता सत्या परानन्दः परंपद मिति श्रुतिः ॥
अस्याः सर्व मिदं जात मत्रैव लय मेष्यति
एषैव सर्वभूतानां गतीना मुत्तमा गतिः ॥

इत्यादीनि शैवलैङ्गकौर्मादिवचनानि च पञ्चकृत्यकारित्वप्रतिपादकानि, तानि सर्वाणि विशेष वचनानुसारेण तयोः परस्परापेक्षया पञ्चकृत्यकारित्वादिविषयाणि। शिवस्य शक्ते र्वा तन्निषेध वचनानि चाऽन्योन्यनैरपेक्ष्येण तन्निषेधपरा णीति व्यवस्थापनीयम् ॥

एवं सत्यपि शिवस्य सर्वात्मना स्वातन्त्र्यं, शक्तेः शिवमात्रे पारतन्त्र्य मि त्येतावा नस्ति विशेषः ॥

सैका परा च चिद्रूपा शक्तिः प्रसवधर्मिणी
विभज्य बहुधा विश्वं विदधाति शिवेच्छया
एव मेषा परा शक्ति रीश्वरेच्छानुवर्तिनी
स्थिरं चरं च य द्विश्वं सृज तीति विनिश्चयः ॥

इत्यादिवचनप्रामाण्यात्। अत एव शक्तिशिवयो र्ब्रह्मभावे विशेषणविशेष्यता। तत एव च तयोः पूजायां विशेषाभावेऽपि पौर्वापर्यं शिवपुराणे विधीयते ॥

अन्ये पुनः—अस्माल्लोका त्प्रेत्य एत मन्नमय मात्मान मुपसंक्रम्येत्यादा वन्नमयादीनां प्रत्येकं चेतनवाचकात्मश्रुतिसंबन्धा त्संसारलोका दुत्क्रान्तस्य मुक्तस्य क्रमप्राप्यत्वावगमा च्च एते सर्वथाऽन्नमयादय आत्मानः पञ्च चेतना अन्नाद्यनुमितपञ्चभूताधिष्ठातारः कारणभूताः पुरुषा ब्रह्मविष्णुरुद्रेश्वरसदाशिवसंज्ञाः। अन्नमयाद्यात्माधारस्य सदाशिव स्यानन्दमयस्यापि कारणं परमशिवाख्यं ब्रह्म तत्प्रतिष्ठे त्युच्यते। तदभेदा दानन्दमयस्य ब्रह्मत्वव्यपदेश इति सर्वथा आनन्दमयः परमेश्वर इति सिद्धम् ॥

इ त्यानन्दमयाधिकरणम्

---

अत्र पुन र्मतान्तरं दर्शयति अन्ये पुन रिति — अन्नाद्यनुमितेति ॥ 'पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुष' इतिश्रुते रन्नकारणत याऽन्नशब्दलक्षितयाः पृथिव्या देवतात्मा दन्नमय श्चतुर्मुखः। 'आपोमयः प्राण' इतिश्रुतेः प्राणशब्दलक्षिताना मपां देवतात्वा त्प्राणमयो विष्णुः। एवं मनोमयविज्ञानमया वपि केनचि त्सम्बन्धेन लक्षणया रुद्रेश्वरसदाशिवा इति विज्ञेयम्। चेतनत्व मुक्तप्राप्य परशिवनेदिष्ठ लोकाधिष्ठातृत्वलिङ्गाभ्या मनुगृहीतया पञ्च सङ्ख्यया अन्नमयादयो ब्रह्मादय इति निश्चिते अन्नमयप्राणमयशब्दयोः प्रसिद्धसम्बन्धाधीनलक्षणामूलया वृत्त्या ब्रह्मविष्णुपरत्वे सिद्धे मनोमयादिशब्दानां रुद्रादिपरत्वस्य निश्शङ्कत्वात् ॥

कारणभूताः पुरुषा इति — तदधिष्ठातुः परमशिव स्यैव कारणत्वं ते ष्वुपचर्यते। तस्मा त्कारणपुरुषा इति व्यपदिश्यन्ते। एवं च आनन्दमयः सदाशिवः। तत्प्रतिष्ठारूपं ब्रह्म परमशिव इति भावः। सदाशिवपरमशिवयो रपृथक्सिद्धत्वरूपा दभेदा दानन्दमयशब्दो ब्रह्मपर इत्याशयेन सूत्रकारे णोक्त मिति ॥

अस्मि न्पक्षे अधिकरणशरीर मेवंविधम् —

'सोऽकामय' तेत्यादिना जगतः कारण मिति प्रतिपाद्यमान आनन्दमयः कि माकाशाभिमानी सदाशिवाख्य आधिकारिकपुरुषः? उत परमशिवाख्यं ब्रह्म? इति संशयः ॥

पूर्वपक्ष स्तु — चेतनत्वलिङ्गे नोपासनाप्राप्यत्वलिङ्गेन च सहितया पञ्चसङ्ख्यया च अन्नमयादयः पञ्चभूम्यादिभूताभिमानिनः आधिकारिकपुरुषा इति निर्णीते स्थानप्रमाणा दानन्दमय आकाशाभिमानी सदाशिव इ त्येव युज्यते। तत एव 'य देष आकाश आनन्दो न स्या' दित्याकाशशब्दः श्रूयते। आकाशशब्दसामानाधिकरण्ये नानन्दशब्दश्रवण मु न्यानन्दमय

शब्दस्य स्वार्थिकमयडन्ततया आकाशादिनामविशेषतात्पर्यत्वे नोपपद्यं भाति। 'को ह्येवान्या त्कः प्राण्यात्' इति वाक्य म प्याकाशाभिमानिना सदाशिवेन यदि प्राणिना मसङ्कुच मव स्थानं न सम्पादितं तर्हि नीरन्ध्रनिबिडीभूतानां तेषां श्वासोच्छ्वासादिक मपि न सम्भवे दिति प्राणनहेतुतया सर्वानन्दकरत्वा 'देष ह्येवानन्दया' तीत्यादिक मपि तत्रैव सङ्गच्छते। नच मुक्तः प्राकृतपरिच्छिन्न स्याभिमानित्वाभावात् तदनुभवनतत्सङ्कल्पादिकं नोपपद्यत इति शङ्क्यम्। मुक्तेः प्राणापि शिवसामर्थ्येन निरस्तातिशयस्याऽङ्गीकर्तव्यत्वात्। अन्यथा सौभरिप्रभृतीनां कायव्यूहपरिग्रहादिकं नोपपद्येत। तस्मा दन्नमयादिशब्दोक्तब्रह्माद्युपासनया क्रममुक्तिफलकतत्त ल्लोकावाप्त्युक्ति र प्युपपद्यत इ त्येवं प्राप्ते सिद्धान्तः ॥

आनन्दमयो ब्रह्म, निरतिशयत्वेनाऽभ्यस्त स्यानन्दस्य ब्रह्मत्वे नोपपन्नत्वात्। आनन्द यितृत्वश्रवणा द प्यानन्दमयो ब्रह्म। मान्त्रवर्णिकं ब्रह्मै वानन्दमय इति गीयते। तस्मा दन्न मयाद्युपासनापि 'येऽन्नं ब्रह्मोपासते' इ त्यादिवाक्यशेषानुरोधेन तत्तद्विशिष्टब्रह्मोपासनं चतु र्मुखाद्यवच्छिन्नब्रह्मोपासनया तत्तल्लोकप्राप्तिपूर्वक 'मानन्दं ब्रह्मणो विद्वा न्न बिभेति कुतश्चने' ति, मन्त्रोक्तमुक्तिप्राप्ति रिति सर्व मुपपद्यत इति॥

ननु उपन्यस्तमतत्रयमध्ये ग्राह्यं मतं कि मित्याश ङ्क्याह सर्वथेति—आनन्दमयः साक्षा द्ब्रह्मेति वा? अथ तदीया चिच्छक्ति रिति वा? सदाशिवेभिव्यक्तं पर ब्रह्मेति वा? भवतु। सर्वथा प्यानन्दमयो न जीवः। किंतु परमेश्वर एवेति सिद्धत्वा त्तद्विशेषविचारं णाद्रियामह इत्याशयः॥

  

## पुच्छब्रह्मवादः

इतरे तु 'आनन्दमयोऽभ्यासात्'

आनन्दमयवाक्ये श्रुतं पुच्छब्रह्म स्वप्राधान्येन वाक्यप्रतिपाद्य मिति व्याचक्षते ॥

ननु, यथावृत्ति आनन्दमयब्रह्मवादः किं मिति नाङ्गीकृत इतिचे दत्राहुः। आनन्दमयो ब्रह्मेति न युज्यते ॥

१ - अन्नमयादिगतविकारार्थप्रायपठितेन मयटा तस्य विकारत्वावगमात् ॥

२ - शिरःपक्षाद्यवयवयोगात् ॥

३ - पुच्छत्वेन निर्दिष्टाद् ब्रह्मण स्तस्यव्यतिरेकप्रतीतेः ॥

४ - अन्नमयादिपर्यायेषु प्रधानानां तत्तत्पर्यायगतश्लोकविषयत्वदर्शनेन स्वपर्यायगतश्लोक विषयस्य तस्याप्राधान्यत् ॥

५ 'तस्यैष एव शारीर आत्मा यः पूर्व' स्येति अन्नमयादीना मिव तस्याऽप्यात्मत्व श्रवणात् ॥

६ 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्धयन्ता' मिति शोध्यत्वश्रवणाच्च ॥

## पुच्छब्रह्मवादाक्षेपः

अत्र ताव द्विकारत्वावग मोसिद्धः । विकारार्थकल्पकत्वे नावगतस्य प्रायपाठ स्याभावात् यद्य प्यन्नमये विकारार्थ उपक्रान्तः तथाऽपि तावता नाऽनन्दमयेऽपि स एवाऽर्थ इ त्यायाति । प्राणमयादिषु तत्परित्यागात् । प्राणनवृत्तिप्राचुर्येण हि पञ्चवृत्ति र्वायुः 'प्राणमय' इति व्यप दिष्टः । नतु प्राणकार्यत्वेन । एव मन्तःकरणजीवा वपि । मननविज्ञानप्राचुर्येण मनोमय इति विज्ञानमय इति निर्दिष्टौ । तत श्चानन्दमयेऽपि प्राचुर्य मेव मयडर्थः । न चानन्दप्राचुर्य मपि ब्रह्मणि न सम्भवति । प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पत्वप्रतियोगिकतायाः 'ब्राह्मण प्रचुरो ग्राम' इत्यादौ दृष्टत्वेन आनन्दप्राचुर्यार्थस्वाभाव्या दीषद्दुःखसंभिन्नत्वावश्यम्भावा दिति वाच्यम् । 'प्रचुरप्रकाशः सवि' तेत्यादौ व्यधिकरणसजातीयाल्पत्वप्रतियोगिकताया अपि दृष्टत्वेन ब्रह्मणि जीवगतानन्दाल्पत्व मपेक्ष्य तत्प्राचुर्यसंभवात् । इह च वाक्यशेषे 'सैषानन्दस्य मीमां' सेत्यारभ्य व्यधिकरणजीवानन्दाल्पत्व मपेक्ष्यैव ब्रह्मानन्दस्य प्राचुर्यदर्शनात् ॥ १

शिरःपक्षादिरूपेण कल्पित मवयवित्वं तु न ब्रह्मत्वविरोधि । अन्यथा ब्रह्मणोऽवयवित्वव दवयवत्व मपि नास्तीति पुच्छब्रह्मणो प्यब्रह्मत्वप्रसङ्गात् ॥　२

आनन्दमयस्य पुच्छं ब्रह्मेति निर्देशोपि नाऽऽनन्दमयस्य ब्रह्मत्वविरोधी । अन्नमयस्य स्वस्मा दनतिरिक्तैःस्वावयवै रेव 'त स्येद मेव शिरः' इत्यादिना शिरःपक्षपुच्छादिमत्त्वकल्पना पाठानुगुण्येन ब्रह्मानन्दमययो रेव पुच्छतद्वद्भावनिर्देशो तात्पर्यकल्पन स्योचिततया ततो व्यति रेकाप्रतीतेः ॥　३

आनन्दमयस्य स्वपर्यायगतश्लोकाविषयत्व म प्यसिद्धम् । अन्नमयादिपर्यायश्लोकानां पुच्छ मात्रविषयत्वाभावे नाऽस्यापि तद्व देव पुच्छवद्विषयत्वौचित्यात् । नच पुच्छमिति प्रयुक्तस्य ब्रह्म शब्द स्यैव श्रवणा त्पुच्छविषय ए वाऽसौ न पुच्छवद्विषय इति शङ्क्यम् । 'सत्यं ज्ञान मनन्तं ब्रह्म', 'तस्मा द्वा एतस्मा दात्मन' इत्युपक्रान्तस्यै वानन्दमयवाक्ये प्रतिपादनेन ब्रह्मत्वा

नन्दमयशब्दाना मेकार्थ्यस्या [illegible] [illegible] आनन्दमयविषयत्व सिद्धः। नच प्रियमोदाद्यिमत्त्या प्रसिद्ध आनन्दमये [illegible] रात्राऽ[illegible] [illegible] नास्ती[illegible] वाच्यम। जीवस्य तथा लोके प्रसिद्धत्वेऽपि [illegible] ॥ ४

'तस्यैष एव' इत्यादा वानन्दमय स्यात्मान्तर[illegible] [illegible]। तस्य पूर्वस्य विज्ञान मयस्य 'एष एव शारीर आत्मा,' 'य एव आनन्दमय' इ त्यर्थाङ्गीकारात्। तस्यानन्दमयस्य एष एव शारीर आत्मा स. पूर्वस्य विज्ञानमय स्ये त्यर्थाङ्गीकारेऽपि विज्ञानमयस्य य आका शादिस्रष्टा वक्ष्यमाणन्यायसिद्धपरमात्मभाव आनन्दमयः शारीर आत्मा स एव स्वस्यापि स्वय मे वात्मेति पर्यवसानेन 'पति विश्व स्यात्मेश्वर' मि त्यात्मेश्वरत्वोक्त्या ईश्वरान्तर स्ये वात्मान्त रस्य निराकृतं रेव सिद्धः॥ ५

शोध्यत्वं न ब्रह्मत्वविरोधि। सर्वत्र शुद्धि स्तत्तदगुणैति [illegible] [illegible]भव सञ्चितानेकजीवापराधकलुषिते भुक्त्यर्थं प्रसाद्यत्वरूपस्य शोध्यत्वस्य सम्भवात्॥ ६

---

तस्मा त्पुच्छब्रह्मवाक्यगतयुक्तीना मसाधकत्वा त्पुच्छत्व दानन्दमयोऽपि ब्रह्मैव। प्रकरणस्य स्वस्मा दनतिरिक्तैः स्वावयवैः पक्षपुच्छादिरूपणपरत्वेन तस्य पुच्छब्रह्माभेदप्रतीतेः॥ १

प्रकरणगतश्लोकानां पुच्छगद्विषयत्वेन तत्रैव श्लोकगतस्य ब्रह्मशब्दाभ्यासस्य सत्त्वाऽऽत्त्व शङ्कालिङ्गस्य न पर्यवसानात्॥ २

'सत्यं ज्ञान'मिति प्रकृतं ब्रह्म 'तस्मा द्वा एतस्मा दात्मन' इ त्यात्मशब्देन निर्दिश्य त स्याकाशादि कारणत्वप्रतिपादनानन्तरं सर्वान्तरत्वेन त स्यात्मत्वविवरणाय प्रवृत्तस्य सन्दर्भस्य तत्रैव परिसमापनेन तदनन्तरं 'तस्मा द्वा एतस्मा दानन्दमया दन्योऽन्तर आत्मा ब्रह्म' इति तदान्तरस्य ब्रह्मणो निरूपणाभावात्॥ ३

'सोऽकामय' तेत्यनन्तरवाक्यगतेन स इति पुंलिङ्गान्तं नाऽव्यवहितप्रधानप्रकृतार्थपरा मर्शिना परामर्ष्टुं योग्यत्वात्॥ ४

भृगुवल्ल्या 'मेतं विज्ञानमय मात्मान मुपसंक्रम्य एत मानन्दमय मात्मान मुपसंक्रम्य' इत्यत्राऽऽनन्दमयशब्दस्य, 'विज्ञानं ब्रह्मेति व्यजानात्', 'आनन्दो ब्रह्मेति व्यजाना' दिति तत्रत्यसम्प्रतिपन्नब्रह्मपरभावे नानन्दशब्देन सह स्थानसाम्येन ब्रह्मपरत्वनिश्चयात्॥ ५

'आनन्दमयोऽभ्यासा' दिति सूत्रस्वारस्या च॥ इति ६

## पुच्छब्रह्मवादमण्डनम्

१

अत्रोच्यते —

यत्तावदुक्त मानन्दमयस्य विकारत्वानुपपत्ति र्नास्तीति तन्न। विकारार्थमयट्प्रायपाठेन तत्राऽपि मयटो विकारार्थत्वात्। तथाहि, 'स वा एष पुरुषोऽन्नरसमय' इति न देह एवोच्यते। तस्याऽन्नपरिणामत्ववाचिनाऽन्नमयशब्दे नोक्तिसम्भवे 'अन्नरसमय' इत्यस्य वैयर्थ्यात्। पुरुषशब्दस्य च चेतनवाचित्वात्। 'अन्नात्पुरुष' इत्यव्यवहितपुरुषपरामर्शस्य 'एष' इत्यनेन सिद्धतया 'स' इत्यस्य व्यवहिताकाशादिकारणात्मपरामर्शार्थत्वाच्च। किंतु सः प्रागाकाशादिकारणत्वेन निरूपित एषः अनुपद मन्नकार्यत्वेन निरूपितश्च। पुरुषोऽन्नरसमयः — अन्नरसं देह मनुप्रविश्य तदवच्छिन्नतया तत्कार्य इत्युच्यते। तथाच अन्नात्पुरुषः इतिनिर्दिष्ट माकाशादिकारणरूपस्य पुरुषस्याऽन्नकार्यत्व मन्नकार्यदेहावच्छेदलब्धपरिच्छिन्नाकारतयेति विवृतं भवति। एवं प्राणमयो मनोमयो विज्ञानमयश्च प्राणमनोबुद्ध्यवच्छिन्नतया तद्विकारभूतो जीव एवेति युक्तम्। नच, स्वतः कार्य एव विकारार्थप्रत्ययः, न त्वौपाधिककार्यताभागिति व्युत्पत्तिकल्पना प्रमाणवती। किंच मयटः प्राचुर्यार्थत्वं वदत स्तवाऽपि मते जीव एवानन्दमय इति सिध्यति। आनन्दप्राचुर्यस्य प्रतियोगिदुःखाल्पत्वगर्भत्वात्। प्राचुर्यस्य विशेषणत्वे व्यधिकरणसजातीयाल्पत्वस्य निरूपकत्वेऽपि विशेष्यत्वे समानाधिकरणविजातीयाल्पत्व मेव निरूपक मिति हि व्युत्पत्तिसिद्धम्॥

अतएव 'प्रचुरब्राह्मणो ग्रामः' इत्यत्र प्राचुर्यस्य ग्रामान्तरगतब्राह्मणाल्पत्वापेक्षत्वेऽपि 'ब्राह्मणप्रचुरो ग्राम' इत्यत्र तद्ग्रामगतशूद्राल्पत्वापेक्ष मेव प्राचुर्यं प्रतीयते। नच, प्रचुरप्रकाशः सवितेतिवत्प्रकाशप्रचुरः सवितेति प्रयोगेऽपि नक्षत्रादिगत प्रकाशाल्पत्वापेक्ष मेव प्राचुर्य मवगम्यते। ननु सवितृगततमोल्पत्वापेक्षम्। तत्र तमसो बाधितत्वादिति शङ्क्यम्। तत्रापि घनतुहिनसैंहिकेयाच्छादनारोपिततमोल्पत्व मपेक्ष्यैव घनाद्यपसरणसमये तथा प्रयोगात्। तदभावे तथा व्युत्पन्नप्रयोगाभावात्॥

ननु बलवत्तरश्चैत्र इत्यादौ तरबाद्यर्थस्य प्राचुर्यस्य विशेष्यत्वेऽपि मैत्रादिगतबलाद्यल्पतापेक्षत्वं दृष्ट मितिचेन्न। तत्र द्विवचनविभज्योपपदे तरबीयसुना (पाणि–३–२) विति द्विवचनादिविशेषणवशा दातिशायनिकप्रत्ययेषु व्युत्पत्त्यनन्तरकल्पनेऽपि मयटि तत्कल्पकाभावेन औत्सर्गिकव्युत्पत्तिलंघनायोगात्। नच 'प्रज्ञानघन एवानन्दमयः' इति ब्रह्मण्यानन्दमयशब्दप्रयोगदर्शनात्। मयट्यपि व्युत्पत्त्यन्तरं कल्प्य मिति वाच्यम्। तस्य सुषुप्तस्थान एकीभूतः

इति विशेषणानुसारेण प्राणशब्दितवायुजीवविषयत्वात्। नापि 'सर्वगन्धः सर्वरसः' इत्यादि परमेश्वरधर्मकथनस्याध्यात्मिकाधिदैविकाधिभौतिकप्रपञ्चात्मकताभिप्रायत्वात्। अपि चान्यत्र व्यधिकरणसजातीयाल्पत्व मपेक्ष्य मयटः प्रयोगसम्भवेऽपि प्रकृते तत्तदभिमानप्राचुर्यानुसारेण समानाधिकरणविजातीयाल्पत्व मपेक्ष्यैव तत्प्रयोगो नियम्यते। तथा हि, प्राणमये तावत् स्वस्व वृत्तिबाहुल्य मेव क्रियाद्यल्पत्व मपेक्ष्य तत्र प्राणवृत्तिप्राचुर्यम्। न तु तदन्यगतप्राणवृत्त्य ल्पत्व मपेक्ष्य। तदन्यत्र प्राणवृत्तीना मभावात्। एवं मनोमयेऽपि करणान्तर गतवृत्तिस न्निधानेऽपि मनस स्तत्प्राचुर्यं तद्गतवृत्त्यन्तराल्पत्व मपेक्ष्यैव। विज्ञानमय इति विज्ञानमयेऽपि जीवे ज्ञानवृत्तिप्राचुर्यं तद्गताज्ञानात्मकसंस्कारादिरूपवृत्त्यन्तराल्पत्व मपेक्ष्य पर्यवस्यति। किं बहुना? एवं त्रिषु प्राचुर्यार्थे मयटि तदन्नमयेऽपि देहे आरम्भान्तराल्पत्व मपेक्ष्यान्नपरिणाम रूपावयवप्राचुर्य मेव मयडर्थ इति वैरूप्यपरिहारार्थं वक्तव्यमायाति ॥

एवं चानन्दमयेऽपि समानाधिकरणदुःखाल्पत्वापेक्ष मानन्दप्राचुर्यं मयडर्थ इत्यापतितं दुःखमिश्रत्वं केन वार्यते? न च तथापि समानाधिकरणप्रतिकूलविजातीयाल्पत्व मपेक्ष्यानन्द प्राचुर्यनिर्वाहसम्भवे कुतो दुःखमिश्रत्वापादन मिति वाच्यम्। सुखप्राचुर्यस्य तद्विरोधिदुःखा ल्पतापेक्षाया मेव प्रथमं बुद्ध्यवतरणेन तदुल्लङ्घनायोगात्। न चैवं त्वानन्दमयो जीवोऽपि न स्यात्। तत्र दुःखाल्पत्व स्यसुखबाहुल्यस्य चाभावा दिति शङ्क्यम्। जीवस्य मुक्तौ भोग्या न्निरति शयोत्कर्षा द्युतरावधिरहितात् 'श्रोत्रियस्य चाकामहतस्य' इति श्रुतिदर्शिता त्सुखा त्सर्व मपि सांसारिकं दुःख मल्प मिति सम्भवात् ॥

न त्वानन्दमये मयटः प्राचुर्यार्थोऽपि मा भूत्, स्वार्थिकोऽस्त्विति चेन्न। प्रायपाठप्राप्त तिरिक्तार्थे सम्भवति स्वार्थिकत्वेन वैयर्थ्यकल्पनायोगात्। तस्मा दानन्दमयस्य मयटा जीवत्वाव गति र्निष्प्रत्यूहा ॥

२

यदुक्तं ब्रह्मणोऽवयवित्व मवयवत्व स्वकल्पनया सम्भवतीति तन्न। अस्माभिः पुच्छ पदस्याधारलक्षकत्वस्य उक्ततया अवयवत्वकल्पनानङ्गीकारेण दृष्टान्ताऽसम्प्रतिपत्तेः। अध्यारो पापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्तिप्रकरणे प्रियमोदादिरूपशिरःपक्षाद्यवयवकल्पनाया विरोधे नानुपयुक्तत्वेन चायुक्तत्वाच्च। प्रकरणस्य निष्प्रपञ्चपरत्वं च 'भेदव्यपदेशाच्च' इति सूत्रविवरणे समर्थितम् ॥

स्यादेतत्। 'यतो वाचो निवर्तन्ते' इति मन्त्रो ब्रह्मणि द्वैतवस्तुमुखेन प्रवृत्तानां लौकिकानां वैदिकानां च सर्वासां वाचां निवृत्तिं वदती त्यमु मर्थ मवलम्ब्य हि तत्र तत्समर्थनं

कृतम्। ननु न युक्तम्। एकस्य 'वाच' इत्यस्य 'निवर्तन्त' इत्यस्य च स्वारस्य मनुरुध्य बहूनां सप्रपञ्चवाक्यानां स्वार्थे प्रामाण्यात् प्रच्यावनस्य न्यायविरुद्धत्वा दितिचे दुच्यते। विज्ञानमय न ब्रह्मेति प्रतिक्षिप्य आनन्दमयं ब्रह्मेति व्यवस्थापयति। त्वय्यपि तुल्योऽय माक्षेपः। तथाहि, विज्ञानमयस्य 'विज्ञानमय' इ त्येताव तैव तात्र त्परब्रह्मत्वं प्रतीयते। तत्र मयट्प्रत्यय स्यानन्द मयैकरूप्याय त्वया व्यधिकरणमजातीयाल्पत्वापेक्षप्राचुर्यार्थत्व स्याभ्युपगन्तुं युक्ततया जीवा दन्यस्य सङ्कुचितज्ञानस्याभावात् जीवगताऽज्ञानाल्पत्वापेक्षज्ञानप्राचुर्य एव तत्पर्यवसानात्। मन्त्र वर्णोपात्तविपश्चित्त्वप्रत्यभिज्ञाना च। तथा 'विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठ मुपासते' इत्यत्र मान्त्र वर्णिकब्रह्मशब्देन 'तद्देवा ज्योतिषां ज्योति रायु र्होपासतेऽमृतम्' इति श्रुत्यन्तरसिद्धदेवोपास्य त्वप्रत्यभिज्ञानेन 'विज्ञानं ब्रह्म चे द्वेद। तस्मा चे न्न प्रमाद्यति। शरीरे पाप्मनो हित्वा। सर्वा न्कामां त्समश्नुत' इति तदनन्तरश्लोकेऽपि ब्रह्मशब्देन मान्त्रवर्णिकब्रह्मविद्याफलप्रत्यभिज्ञानेन च तस्य ब्रह्मत्वं प्रतीयते। 'विज्ञानं यज्ञं तनुते' इतितु ब्रह्म ण्युपपद्यते यज्ञादे र्हेतुकर्तरि तस्मिन्नपि स्वव्यापारद्वारा प्रयोज्यव्यापारकर्तृत्वसत्त्वात्। हेतुकर्तृत्वविवक्षायां णिजन्तप्रयोगनियमेऽपि स्वव्यापारद्वारा प्रयोज्यव्यापारकर्तृत्वविवक्षाया मणिजन्तप्रयोगस्याऽविरुद्धत्वात्। साक्षाद्विलेखन मकुर्वति संविधानसम्पादनेन कर्षणप्रयोजके स्वामिन्यपि 'षड्भि र्हलैः कर्ष' तीति प्रयोगदर्श नात्। यज्ञकृ द्यज्ञभृ द्यज्ञी (सहस्रनाम) इति ब्रह्मण्येव प्रयोगदर्शना च। एवमपि विज्ञानमयस्य य दब्रह्मत्व मुच्यते 'तस्माद्वा एतस्मा द्विज्ञानमयात् अन्योन्तर आ' त्मेति त मतिक्रम्य तद न्यस्य तदन्तर स्यात्मनः प्रतिपादनमात्रा देव। आनन्दमयत्वस्य प्रियाद्यवयवयोगस्य च विज्ञान मयेऽप्यविरोधात्। ततश्च यथा विज्ञानमया दन्यस्य तदान्तरस्य परमात्मनः प्रतिपादनदर्शना द्विज्ञानमय पर्यायगतवाक्यजातं स्थूलारुन्धतीन्यायेन आरोपितपरमात्मभावतद्धर्मवैशिष्ट्य विषय मिति त्वयाऽभ्युपगम्यते। एवं प्राणमयादिपर्यायगतात्मत्वप्रतिपादन मपि। तथा 'यतो वाचो निवर्तन्त' इत्यपवाददर्शना दारोपितप्रपञ्चवैशिष्ट्यविषयं सप्रपञ्चवाक्यजात मिति कुतोऽभ्युप गन्तुं न युज्यते॥

ननु युक्तम्। 'विज्ञानमया दन्योन्तर आत्मा' इत्येतावतापि विज्ञानमयविषयवाक्यजात स्यारोपितविषयत्वापादनम्। 'तस्माद्वा एतस्मा' दित्य त्रोपक्रान्त मात्मत्वं सर्वान्तरत्वे नोप पादयितुं प्रवृत्ते 'सवा एष पुरुषोन्नरसमय' इ त्येतस्मि न्प्रकरणे विज्ञानमया दान्तरत्वस्यैव सर्वान्तरत्वरूपत्वेन त स्योपक्रान्तात्मत्वोपपादकतया तात्पर्यवत्त्वेन बलवत्त्वात्। अन्यथा पद मात्रेण चरमपठितेन प्रथमपठिताऽनेकवाक्यान्यथाभावापादनायोगा दितिचेत्॥

तर्हि अस्मि न्मतेपि 'यतो वाचो निवर्तन्त' इत्यस्य परमोपक्रमगतानन्तत्वोपपादनार्थत्वेन तात्पर्यवत्त्वं समान मिति पश्य। यतोवाच इत्यस्य स्वप्रकरणगतेन 'अदृश्येऽनात्म्येऽनिरुक्ते'

इति विशेषेण न प्रकरणान्तरगते ब्रह्मणि निष्प्रपञ्चत्वादिप्रतिपादके श्लोकपञ्चकेऽस्तीति विशेषः। तस्मान्निर्विशेषब्रह्मप्रकरणे प्रियाद्यवयवयोगात् सविशेष आनन्दमयो न प्रतिपाद्य इति भणितं मन्तीति युक्तमेव॥

३

यत्तोक्तं तस्य 'ब्रह्म पुच्छं प्रतिष्ठा' इति निर्देशेन व्यतिरेकप्रतीतिः शङ्क्या प्रकरणस्य स्वस्मादनतिरिक्तस्य शिरःपक्षादिमत्त्वनिरूपणपरत्वादिति, तदयुक्तम्। शिरःप्रभृतीनामन्नमयादिशब्दोदितचेतनातिरिक्तविषयत्वात्। अन्नमयादिशब्दानां चेतनपर्यन्तत्वाऽनङ्गीकारेऽपि मनोमयस्य शिरःपुच्छानां ऋक्सामयजुरथर्वाङ्गिरसां तदतिरिक्तत्वे नाऽन्नमयादिष्वप्यवयवावयविभावाद्भिन्नत्वभेदसद्भावेन च तथा प्रकरणादिसिद्धेः स्वरसतः प्रतीयमानस्य व्यतिरेकस्य त्यागायोगात्॥

४

यत्तु आनन्दमयस्य श्लोकाप्रतिपाद्यत्वमसिद्धं श्लोकानां पुच्छब्रह्मविषयत्वनियमदर्शनादित्युक्तं तदप्ययुक्तम्। 'यतो वाचो निवर्तन्ते' इति मनोमयपर्यायश्लोकस्य ब्रह्मविषयस्य पुच्छवद्विषयत्वाऽभावात्। 'अप्राप्य मनसा सह' इति श्रवणात्। तत्रापि यथा कथञ्चित्पुच्छवद्विषयत्वमस्तीति चेत् तर्हि 'असन्नेव स भवति' इत्यत्र स इत्यस्य प्रकृतानन्दपरत्वात्तस्यापि यथा कथञ्चित्पुच्छवद्विषयत्वं सम्पन्नमिति मन्तुमप्यस्तु भवान्। अयुक्तं च श्लोके स इति पुंलिङ्गेन प्रकृतपरामर्शिना तत्पदेनाऽवश्यपरामर्शनीयस्यानन्दमयस्य श्लोकगतब्रह्मशब्दाभ्यामसत्त्वासत्त्वशङ्काविषयत्वम्॥

५

यत्तु 'तस्यैष एव शारीर आत्मा' इत्यत्रात्मान्तरश्रवणं नास्ति अनन्यात्मपरत्वादित्युक्तम्। तदप्ययुक्तम्। पूर्वपर्यायस्थानामिव आनन्दमयपर्यायस्थस्यापि तस्य वाक्यस्य पुच्छब्रह्मरूपात्मान्तरपरत्वोपपत्तौ प्रक्रमविरुद्धार्थकल्पनायोगात्॥

यच्च प्रसाद्यत्वरूपं शोध्यत्वं ब्रह्मणोऽपि सम्भवतीत्युक्तं तत्तुच्छम्। प्रागशुद्धिमतां हि शुद्धिराधेया। न च जीवापराधानुसारेण तेषु ब्रह्मणोऽप्रसादः कथमप्यशुद्धिशब्दमर्हति। तथा सति ब्रह्मणो नित्यशुद्धत्वश्रुतीनां सङ्कुचितार्थत्वप्रसङ्गात्। लोकेऽप्यपराधानुगुण्येन भृत्यादिषु राजादीनामुचितस्याऽप्रसादस्याऽशुद्धिशब्देन व्यवहाराभावाच्च॥

६

'तस्मा त्पुच्छब्रह्मवाद्युक्तयुक्तीनां निराकरण मनुपपन्नम्' इत्यादिना यद्यपि श्रीमदप्पय दीक्षितेन्द्रैः न्यायरक्षामणौ मण्डन मारचितं तथापि त त्कुणपविषय मिव न शोभते ॥

## पुच्छब्रह्मवादखण्डनम्

तथा च मयटो विकारार्थप्रायपाठ मुज्जीवयितु प्राणमयो मनोमयो विज्ञानमय श्च प्राण मनोबुद्ध्यवच्छिन्नतया तद्विकारभूतो जीवएवेति युक्त मिति य दुक्तं त दयुक्तमेव। 'तस्माद्वा एतस्मा दन्योन्तर आत्मा प्राणमय' इत्यादिना श्रवणेन तत्तदन्तरभूतप्राणमयादिकोशाना मेव तात्पर्यसिद्धत्वेन तेषु प्राचुर्यार्थ स्यै वोपपन्नत्वात्। नच आत्मपदेन जीव एवे त्यवगम्यत इति शङ्क्यम्। आत्मपदस्य देहपरत्वेन कोशपरत्वाऽविरोधात्। शरीराभिमानिनो जीव स्यैकत्वेन तद्ब हुत्व स्याऽसम्भवात्। प्राणमयादिशब्दानां तत्तदवच्छिन्नजीवपरत्वरूपार्थग्रहणस्य विकाररूपप्राय पाठसाधकत्व मन्तरेण निरर्थकत्वा च। अथ आतिशायनिकप्रत्ययेषु व्युत्पत्यन्तरकल्पनेऽपि मयटि तत्कल्पकाभावेन औत्सर्गिक व्युत्पत्तिलंघनायोगा दिति य दुक्तम् त द प्यसङ्गतम्। प्राचुर्यातिशययो रविशेषेण त द प्यङ्गीकृताया व्युत्पत्ते मय ट्यनङ्गीकारे कारणाभावात्। प्रज्ञानघन ए वानन्दमय इति ब्रह्म ण्यानन्दमयशब्दप्रयोगेण मय ट्यपि व्युत्पत्त्यन्तरस्याऽङ्गी कार्यत्वा च ॥

ननु, तस्य सुषुप्तस्थान एकीभूत इति विशेषणानुसारेण प्राज्ञशब्दितसुषुप्तजीवविषयत्वात्। वाक्यशेषे 'एष सर्वेश्वर एष सर्वज्ञ' इत्यादिपरमेश्वरधर्मकथन स्याध्यात्मिकाधिदैविकतृतीयपाद रूपप्राज्ञेश्वरैक्याभिप्रायत्वा दितिचे न्न। सुषुप्तस्थाने 'प्राज्ञे नात्म नान्वारूढ' इत्यादिवचनान्त रानुरोधेन प्राज्ञशब्दस्य परमेश्वरपरत्वे नाऽनन्दमयस्याऽपि तत्परत्वावसायात्। 'सुषुप्त्युत्क्रा न्त्यो र्भेदेन' इति सूत्रप्रामाण्या त्सुषुप्तौ जीवेश्वरयो र्भेद स्येष्टत्वे नानन्दमयशब्दस्य जीवविषय त्वाभावात् ॥

न च, प्राणमयमनोमयविज्ञानमयेषु त्रिषु समानाधिकरणविजातीयाल्पत्व मपेक्ष्यैव मय डर्थस्य सिद्धत्वेन प्रायपाठानुरोधेन आनन्दमयेऽपि समानाधिकरणदुःखाल्पत्वापेक्षं मयडर्थ इत्ये वापत तीति वाच्यम्। समानाधिकरणयत्किञ्चिद्विजातीयाल्पत्व मपेक्ष्य आनन्दप्राचुर्यस्य सम्भावितत्वेन दुःखमिश्रितत्वापादन स्याऽयुक्तत्वात् ॥

ननु, सुखप्राचुर्यस्य तद्विरोधिदुःखाल्पत्वापेक्षाया मेव प्रथमं बुद्ध्यवतरणेन तदुल्लंघना योगात् समानाधिकरणदुःखाल्पत्वाऽपेक्ष मे वानन्दप्राचुर्य मिति सिध्य तीतिचे न्न। प्रमा

णान्तरसिद्धस्य प्रमाणान्तराऽसिद्धस्य च प्रतियोग्यपेक्षत्वस्य मुक्तत्वेन प्रमाणान्तरसिद्धप्रति योग्यपेक्षत्व स्यायुक्तत्वात्। मुख्यविरोधिदुःखाल्पत्वापेक्षाया एव प्रयोगे मुख्यत्वात्तदभावेऽपि दुःख योग स्याऽसहत्वापत्त्यादिप्रमाणबाधितत्वेन तद्भावेनाप्यौपयुक्तत्वा च। तत्प्राचुर्यस्य तदल्पत्व मात्रनिवर्तकत्वेन तद्विजातीयवस्तुसत्तावगमकत्वाभावात्। 'स एको मानुष आनन्द' इत्यादिना मानुषाद्यानन्दगताल्पत्वस्य प्रमाणसिद्धत्वेन तत्प्रतियोगित्वापेक्ष स्यैव प्रामाणिकत्वाच्च। समा नाधिकरणदुःखाल्पत्वापेक्षयेव नानन्दप्राचुर्यमित्यभ्युपगमे ऽविरोधेऽपि दुःखाल्पत्वस्य मुख्यादु ल्पस्य चाऽभावेन आनन्दमयशब्दस्य तत्राप्ययुक्तत्वा च ॥

नच, जीवस्य मुक्तौ भोग्या निरतिशयोत्कर्षा दुःखरहितत्वात् 'आत्रिगस्य चाकाम हत' स्येति श्रुतिदर्शिता त्सुखा तापि मपि संसारिणः सुख मल्प मिति सुखातिशयप्राचुर्यत्वेन युज्यत इति वाच्यम्। 'परमं साम्य मुपैति', 'मुक्तः शिवसमो भवे' दिति च वचनानु सारेण मुक्तौ परमेश्वरसाम्य स्येष्टत्वेन परमेश्वरपरस्या प्यानन्दमयशब्दस्य मुक्तजीव इष्टापत्तेः। एव मानन्दमयशब्दवाच्यं मुक्तजीव मवश्यतोऽभ्युपगच्छद्भिः परैः षट्कुलीप्रभावान्यायेन नानन्द मयशब्दस्य परमेश्वरपरत्व मेवाङ्गीकृत मित्यलम्॥

तत श्च 'यतो वाचो निवर्तन्त' इत्यस्याऽपवादपरत्वं यच्चिगदितं त दसत्। एकस्य वाच इत्यस्य निवर्तन्त इत्यस्य च स्वारस्य मनुरुध्य बहूना सप्रपञ्चवाक्यानां स्वार्थे प्रामाण्यात् प्रत्या चनस्याऽन्याय्यत्वात्। नच, विज्ञानं न ब्रह्मेति प्रतिक्षिप्य आनन्दमयो ब्रह्मेति व्यवस्थापयति त्वय्यपि तुल्योऽय माक्षेपः। तथाहि यथा विज्ञानमयस्य ब्रह्मत्वप्राप्ता वपि तस्याऽब्रह्मत्व मुच्यते 'तस्मा द्वा एतस्मा द्विज्ञानमया दन्योऽन्तर आत्मे' ति त मतिक्रम्य तदन्यस्य तदन्तर स्यात्मनः प्रतिपादन मात्रा देव। तथा 'यतो वाचो निवर्तन्त' इत्यपवाददर्शना दारोपितप्रपञ्चनिराकरणविषय सप्रपञ्च वाक्यजात मिति कुतोऽभ्युपगन्तुं न युज्यत इति वाच्यम्। 'यतो वाच' इतिवाक्यस्य 'आनन्दं ब्रह्मणो विद्वा' नित्यनन्तरवाक्यैकवाक्यत्वेन ब्रह्मानन्देयत्ताविषयवाङ्मनोनिवृत्तिमात्रपरत्वात्तस्यापवादपरत्वा भावादप्रतिपादकतया सप्रपञ्चवाक्यजातस्य यथार्थविषयत्वावसायात्। अध्यारोपापवादयो र्जगन्मि थ्यात्वसाधनार्थ मेव परैः कल्पितत्वे नाऽऽस्तिकाना मनुपादेयत्वात्। यदि जगन्मिथ्यात्व मिष्येत श्रुतीनां तर्हि जग न्मिथ्येति चतुरक्षर्यैव सिद्धे 'आत्मन आकाश. सम्भूत' इत्यादि नाऽध्यारोप मुपदिश्य 'यतो वाच' इत्यादि नाऽपवादं नोपदिशेयु रध्यारोपापवादनिरूपणस्याऽ नर्थकत्वा दित्यलम् ॥

अथाऽऽनन्दमये शोध्यत्व मयुक्त मिति य दुक्तं तदुक्त मेव। 'आनन्दमया मे शुध्यन्ता' मिति वाक्यविद्भ्या मेव ब्रह्मसूत्रतद्वृत्तिकृद्भ्यां महामुनिभ्या मानन्दमये ब्रह्मत्वस्य

राद्धान्तितत्वे नानन्दमयविषयशुद्धे जीवविषयचिच्छक्तितिरोधायकमलापनोदनरूपत्व स्यैव तात्पर्यसिद्धतया तद्विषयदूषणस्य श्रुतिविषयत्वे नाऽनुपादेयत्वात् ॥

अत्र परैः सिसाधयिषितो वादः श्रुतिविरुद्ध इति व्यक्त मेव। तथाहि, 'आनन्दमयोऽभ्यासा'दितिसूत्रवृत्तौ न्यायरक्षामणौ 'आनन्दमयो जीव इति पूर्वपक्षे ब्रह्मेति सिद्धान्त इ त्यधिकरणशरीरं वृत्तिकृता सूत्रार्थं मन्यमानेन वर्णितम्। श्रुतिविरोधा त्त दयुक्त मिति भगवता भाष्यकारेण पूर्वपक्षे सिद्धान्ते च आनन्दमयस्य जीवत्व मुररीकृत्य प्रकारान्तरेण वर्णित मित्युक्तम्। एवं भामत्या ,मानन्दमयाधिकरणे श्रुतिसूत्रयो र्विरोधे 'गुणमुख्यविरोधे तु गुणे त्वन्याय्यकल्प 'नेति सूत्रा ण्यन्यथा नेतव्या नीति च। एवं च सूत्रेषु श्रुतिविरोधः परै रङ्गीकृत इति सिद्धम् ॥

इद मिह सञ्चिन्त्य मार्यवर्यैः परैः किमर्थं प्रणिनीषितं भाष्यं ब्रह्मसूत्राणा मिति। किं सूत्रजातं सदर्थसार्थतया परिष्कर्तुम्? अथ विरुद्धार्थबन्धुरतया निराकर्तुम्? इति। आदौ सूत्रेषु श्रुतिविरुद्धताऽऽपादनस्याऽयुक्ततया द्वैतीयीक एव पक्ष स्तदीप्सित इति पर्यवस्यति। अत श्च विज्ञायते — यद्यपि परैः स्वमतस्य श्रुतिसम्मतत्वं प्रत्याययितु मेव प्रारब्धं भाष्यं सूत्राणां, तथाऽपि तेषां स्वमतानुकूलतया व्याख्यातुं दुश्शकतया स्वमतगतः श्रुतिविरोध स्तेष्वे वाऽरोपित इति ॥

ननु, यद्यपि सात्यवतेये नैव श्रुत्यन्तार्थनिर्दिधारयिषया प्रारब्धानि सूत्राणि तथाऽपि भ्रान्त्या विप्रलिप्सया वा तानि श्रुतिविरुद्धार्थत यैव समाचरितानि। तत्त्वविद्भिः शुद्धाद्वैतभाष्यकृद्भि स्तु सूत्राणि प्रत्याख्याय श्रुत्यन्तार्थो निर्धारित इति कुतो नाभ्युपगन्तव्य मितिचे दुच्यते। यद्येवं तर्हि सूत्रा ण्यादित एव प्रत्याख्याय निषदा मेव भाष्यं समाचरणीयं स्यात्। न हि तथा कृतम्। तस्मा त्स्वमतविरुद्धत यैव सूत्रेषु श्रुतिविरोध आरोपितः। शुद्धाद्वैतगतः श्रुतिसूत्रविरोधो ब्रह्मपथे वेदान्तार्थपरिष्कारे चाधिकं निरूपित इ त्यल मधिकेन ॥

इ त्यानन्दमयधिकरणम्



अथ इतरानुपपत्त्यधिकरणम् ७

ब्रह्मणः परमशिवस्य सार्वज्ञ्यादिकं जगत्कारणत्वादिकं लक्षणं प्रधानजीवयोर्न व्यभिचरतीति स्थापितम्। अनन्तरं जीवसमष्टिरूपस्य हिरण्यगर्भस्य जगत्कारणत्वादिकं श्रूयत इत्यत आह

नेतरोनुपपत्तेः ॥ १--१--१७ ॥

'यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम्। य दोषधीभिः पुरुषा न्पशूं श्च विवेश भूतानि चराचराणि' इति महोपनिषदि श्रूयतेऽस्य विषयः ॥

अत्रसकलजगत्प्रसूत्यादिहेतुत्वेन श्रूयमाणःपुरुषः परमेश्वरो वा? अन्यो वा? इति संशयः ॥

हिरण्यगर्भ इति पूर्वपक्षः। कथम्? तल्लिङ्गात् ॥

---

अथ इतरानुपपत्त्यधिकरणम्

न न्वेवं व्यष्टिजीवे ब्रह्मलक्षण स्यातिव्याप्ति र्माभूत्। सकलजीवशरीराभिमानिनि समष्टिजीवे हिरण्यगर्भे तु 'तमसस्य पारे' इति परमात्मसूक्तोपक्रमोपसंहारमध्यगतामर्शेन ब्रह्म लक्षण स्यावगम्यमानतया स्या दिति शङ्कानिराकरणार्थतया प्रत्युदाहरणसङ्गत्या अनन्तराधि करण मवतारयति ब्रह्मण इति॥

यतः प्रसूतेति—जगतः प्रसूती जगत्प्रसवशीला प्रकृति र्यस्मा त्प्रसूता। ङीप्छान्दसः। यत् वस्तु, भूम्यां तत्तल्लोकस्थाने विद्यते, त त्तत् तोयेन जलप्रधानेन पृथिव्यादिद्रव्येण, जीवान् देवादीन् व्यससर्ज सृजति स्म। ओषधीभिः स्थावरैः सह, पुरुषान्, सुरनरादीन्, पशून्, तिर्यञ्चोपि एवं चराचराणि जङ्गमस्थावरात्मकानि भूता न्यन्तर्यामितया विवेशे त्यर्थः। अस्मि न्मन्त्रे विशेषाश्रवणात् पूर्वापरमन्त्रेषु हिरण्यगर्भपरमेश्वरविषयश्रुतिलिङ्गानां बलाबलाऽनिर्णया त्संशय इत्याह अत्रेति— 'नेतरोऽनुपपत्ते'रिति सूत्राऽनुसारे णाऽन्यो वेति सन्देहाकोटि र्दर्शिता। अन्यो नाम हिरण्यगर्भ इति पूर्वपक्षप्रदर्शनवाक्ये विशदीकृतम्॥

ननु कुतो हिरण्यगर्भ इ त्यवगम्यते उभयत्र प्रमाणसद्भावा दि त्याशङ्कते कथ मिति— प्रबला त्समुद्रशायित्वलिङ्गा दित्याह तल्लिङ्गा दिति—समुद्रशायित्वस्य तल्लिङ्गत्वं विष्णुपुराण

एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः
भोगिशय्यायुतः शेते त्रैलोक्यग्रासबृंहितः ॥

इति पुराणवचनात् ब्रह्मणः समुद्रशायित्व मवगम्यते। त दिह श्रूयते। तल्लिङ्गम् - 'य मन्तःसमुद्रे कवयो वय 'न्तीति, 'प्रजापति श्चरति गर्भे अन्त 'रिति स ए वोपक्रमे सर्वानुप्रविष्टत यावगम्यते। उपसंहारे च सूर्या चन्द्रमसौ धाता यथापूर्व मकल्पयत् दिवं च पृथिवीं ' चेत्यादिना तस्यैव कारणत्व मवगम्यते। तस्मा दुपक्रमोपसंहारसिद्धस्य हिरण्यगर्भ स्यावान्तर

---

सम्मत्या निरूपयति एकार्णवे त्विति — नारायणात्मकः जलनिवासेन नारायणसंज्ञित इ त्यर्थः। यद्वा, नारायणस्य देहं प्राप्त इ त्यर्थः ॥

ततोऽवतीर्य विश्वात्मा देह माविश्य चक्रिणः
सुष्वाप योगशयन एकीभूयाऽथ चक्रिणा ॥

इति कूर्मपुराणवचनात्। यद्यपि 'य मन्तस्समुद्र 'इति समुद्रस्यान्तत्वमात्र मवगम्यते, तथापि तत्र निद्राणत्व मे वोपबृंहणानुसारेण व्यज्यते। तच्च लिङ्ग मनन्यथासिद्धत्वा त्प्रबलम्। तमोवश्य स्यैव हि त त्सम्भवति। न तु तमोतीतस्य परब्रह्मणः ॥

ननु समुद्रनिद्राणत्वं विष्णो रपि साधारणम्। कथं हिरण्यगर्भलिङ्ग मित्या शङ्क्याह तस्मा दिति — उपक्रमोपसंहारगतप्रजापतिधातृश्रुतिभ्यां मध्यगतसमुद्रनिद्राणत्वलिङ्गेन च हिरण्यगर्भ एव जगत्कारणत्वादिधर्मैः प्रतिपाद्यत इति निर्णये सति तदनुसारेण मध्यगतान्य लिङ्गा न्यपि नेतव्या नीति भावः। तत्र परात्परत्वम् 'परात्परतरो ब्र 'ह्मेति श्रुत्यनुसारे णापेक्षिकं नेतव्यम् ॥

ननु, 'अद्भ्यः सम्भूत 'इ त्यनुवाको विष्णुपरः 'ह्रीश्च ते लक्ष्मी श्च पत्न्यौ' इतिश्रुता ल्लक्ष्मीपतित्वलिङ्गा दितिचे न्न। उपक्रमगतप्रजापतिश्रुतिविरोधा दुपसंहारगतं लक्ष्मीपदम् लज्जा वाचिह्रीपदसमभिव्याहारेण पुरुषश्चैश्वर्यापादकसद्गुणान्तरपरत्वेन नेतव्यम् ॥

ननु पूर्वानुवाकरूपपुरुषसूक्तैकवाक्यत्वा दस्यानुवाकस्य पुरुषसूक्तस्य च नारायणपरत्वा त्कथ मस्य हिरण्यगर्भपरत्व मुपपद्यत इतिचेत् उच्यते। पुरुषसूक्ते ' 'सहस्रशीर्षा पुरुषः ' इत्या

सिद्धधर्मोपपत्तिः । किञ्च तत्प्रतिपादनप्रदेशान्तरोपसंहार श्च कृतः । 'अद्भ्यः संभूतो हिरण्यगर्भ इ त्यष्टा' विति । अद्भ्यः संभूत इत्यत्र प्रजापति रेव हि प्रतिपाद्यः । 'प्रजापति श्चरति गर्भे अन्त' रिति दर्शनात् । 'हिरण्यगर्भः समवर्त ताग्रे' इत्यत्रापि 'प्रजापति र्वै हिरण्यगर्भ', इति श्रवणात् । अतो हिरण्यगर्भ एव जगत्प्रसूतिहेतुत्वादिनाऽत्र प्रतिपाद्यत इति प्राप्ते ब्रूमः ॥

परमेश्वरा दितरो भिन्नो हिरण्यगर्भोऽत्र न प्रतिपाद्यः । जगत्प्रसूतिहेतु त्वादीनां परमेश्वरधर्माणां तस्मि न्ननुपपत्तेः । 'यतः प्रसूता जगतः प्रसूती'

---

दिभिः श्वेताश्वतरोपनिषदि शिवपरत्वेन निर्णीतै र्मन्त्रैः शिव प्रस्तुत्य 'तस्मा द्विरा डजायत । विराजोधिपूरुष' इति शिवा द्धिरण्मयतया विविध राजमान स्याऽण्डस्य तदनन्तरं तत्र हिरण्य गर्भस्य चोत्पत्ति मभिधाय तस्यैव मुखाद्यवयवेभ्योऽग्न्यादिदेवानां ब्राह्मणानां चोत्पत्ति रभि हिता । नतु नारायण स्यावयवेभ्यः पूर्वं तत्प्रसक्त्याऽभावात् । मानवे धर्मशास्त्रे परमेश्वरब्रह्मा ण्डोदरजातं हिरण्यगर्भ मेव प्रस्तुत्य

लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादत.
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् ॥

इति स्मरणा च्च । याज्ञवल्क्ये धर्मशास्त्रे परमेश्वरं प्रस्तुत्य 'मुखबाहूरुपज्जाः स्यु स्तस्य वर्णा यथा क्रम' मिति स्मर्यत इतिचे न्न । त स्योदाहृतश्रुतिस्मृत्यनुमार्गेण हिरण्यगर्भशरीरानुप्रविष्टतदा त्मकपरमेश्वरविषयत्वे नोपपन्नत्वात् ॥

तस्मा त्पुरुषसूक्त मारभ्य प्रकृत मेव हिरण्यगर्भ मुद्दिश्य प्रवर्तमानस्य 'ह्री श्च त' इत्यादे रेतदनुवाके नैकवाक्यतां प्रापितानां हिरण्यगर्भमन्त्राणां न कथ म प्यन्यपरत्वशङ्का अव काशं लभते । एवं चोक्तमहिमा स एव हिरण्यगर्भः पूर्वकल्पानुष्ठितपरमेश्वरोपासनालब्धसत्य सङ्कल्पत्वादिशाली जगत्प्रसूत्यादिसकलप्रपञ्चहेतुतया प्रतिपाद्यत इति तत्र ब्रह्मलक्षण मतिव्याप्त मिति पूर्वपक्ष मुपसंहरति तत इति — तस्मि न्ननुपपत्ते रिति — जगत्प्रसूति र्हि जगज्जननी पराशक्तिः परमेश्वरस्य नित्यानपायिनी प्रपञ्चमहावृक्षाङ्कुरभूता । 'प्रज्ञा च तस्मा त्प्रसृता पुराणी' इतिश्रुत्या परमेश्वरा देव प्रवृ त्ते त्याम्नायते । 'त देव ब्रह्म परमं कवीना' मित्यसाधारणब्रह्म शब्दाभिधेयत्वोक्त्या त्रिविधपरिच्छेदराहि त्यं परमेश्वर स्यैव धर्म इ त्यवगम्यते । त देव भूतं तदु भव्य माहु' रिति भूतभाविवर्तमानसकलकल्पानुयायिसकलप्रपञ्चात्मकत्वं तस्मि न्नेव सम्भ

स्यारभ्य जगत्प्रसूतिहेतो स्तस्य 'अतः परं नान्य दणीयसं हि परा त्परं य न्महतो महान्तम्। य देक मव्यक्त मनन्तरूपं विश्वं पुराणं तमसः परस्ता' दित्यादिना सर्वोत्कृष्टत्वं तमसः प्रकृतिमण्डला त्परत्वं चावगम्यते। त दण्डा न्तर्वर्तिनो हिरण्यगर्भस्य न सम्भवति। किं च 'य एनं विदु रमृता स्ते भव' न्तीत्यस्य ज्ञाना दमृतत्वं मुक्ति रभिधीयते। त च्च हिरण्यगर्भे संभवति परमेश्वरस्य हि मुक्तिहेतुत्व मसाधारणं लिङ्गम्। 'यदा चर्मव दाकाशं वेष्ट यिष्यन्ति मानवाः तदा शिव मविज्ञाय दुःख स्यान्तो भविष्य' तीति श्रवणात्॥

यदुक्त मुपक्रमोपसंहारसिद्ध इति त दप्रयोजकम्। अनुपपत्त्या प्रजा पतिधातृशब्दौ हिरण्यगर्भं विहाय प्रजानां पशूनां पतिं जगद्धारकं परमेश्वर

---

वति। 'यतः प्रसू' तेति यस्य जगत्प्रसूत्यादिहेतुत्व मुक्तम्। यतः परं प्रकृष्टं चान्य त्पृथग्भूतं नास्ती त्युक्तम्। 'य एनं विदु रमृता स्ते भव' न्ती त्येतत्कल्पभेदेनाऽपि हिरण्यगर्भे नोप पद्यते। 'यदा चर्मव दाकाश' मिति मन्त्रेण शिवविज्ञानं विना मुक्ते र्गगनवेष्टनव दसम्भावि तत्त्ववर्णना दिति भावः॥

उपक्रमोपसंहारसिद्धो हिरण्यगर्भ इति शङ्का मनूद्य परिहरति य दुक्तं त दप्रयोजक मिति— मध्यगतै रपि बहुप्रमाणै र्विरोधे उपक्रमोपसंहारैकरूप्य मसाधक मित्यर्थः। सूत्रे बहुप्रमाणवि रोधं द्योतयितु मेव लिङ्गविशेष मनुपन्यस्य अनुपपत्ते रि त्युक्तम्। तस्मा दुपक्रमोपसंहारगत शब्दौ योगेन परमेश्वरे योजनीया वित्याह अनुपपत्त्येति — धातृशब्द स्तु 'अम्भस्य पार' इति सूक्तोपसंहारगतो न भवति। 'पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि। त न्नो रुद्रः प्रचोदयात्', 'तत्पुरुषाय विद्महे महादेवाय धीमहि। त न्नो रुद्रः प्रचोदया' दित्येतदवसानत्वा त्परमात्मविषयसूक्तस्य तदनन्तरं रुद्रगायत्रीप्रसङ्गागतानां गणेशगायत्र्यादीनां स्नानार्थदूर्वाधार णादिमन्त्राणां च परमात्मसूक्तान्तर्भावाभावात्। तथैव भट्टभास्करेण सूक्तमर्यादायाः स्थापितत्वात्

एवं चोपक्रमोपसंहारपर्यालोचनायां प्रजापतिश्रुते रुपक्रमस्थत्वेऽपि तत एकस्याः प्रत्येक मभ्यस्तयो रौपसंहारिकरुद्रमहादेवश्रुत्योः प्रबलत्वा त्सूक्तस्य परमेश्वरपरत्व मचलम्। अथ धातृपद स्यौपसंहारिकत्वाभ्युपगमेऽपि मध्यगतबहुश्रुति लिङ्गानुसारा त्तस्याऽपि योगेन परमेश्वर परत्व मेवाऽभ्युपन्तुं युक्तम्। उत्तरनारायणा देकवाक्यतापादनेनाऽपि नाऽस्य हिरण्यगर्भपरत्व

मेव प्रतिपादयतः। 'अद्भ्यः सम्भूतो हिरण्यगर्भ' इत्युपक्रमाऽपि परमेश्वर एव प्रतिपाद्यः। 'य ईशे अस्य द्विपद श्चतुष्पदः' आदित्यवर्णं तमसः परस्ता' दिति विश्वेश्वरत्वादिप्रतीतत्वलिङ्गात्। तथा जगत्कारणत्वादिना प्रजापति शब्दवाच्यः परमेश्वरो न हिरण्यगर्भः॥

परमेश्वरेण हिरण्यगर्भे स्याऽभेदः जगत्कारणत्व मस्तीत्याशङ्क्याह॥

## भेदव्यपदेशाच्च ॥१—१—१८॥

अस्यां महोपनिषदि परमेश्वरहिरण्यगर्भयो र्भेदो व्यपदिश्यते, कारण त्वेन कार्यत्वेन च। 'यो देवानां प्रथमं पुरस्ता द्विश्वाधिको रुद्रो महर्षिः। हिरण्यगर्भं पश्यत जायमान' मिति। ततो हिरण्यगर्भादेः सर्वप्रपञ्चस्य का रणत्व मीश्वर स्येति सिद्धम्॥

---

प्रत्याशे त्याह अद्भ्य इति — उत्तरनारायणे हि 'वेदाऽह मेतं पुरुषं महान्त' मिति द्वितीय मन्त्रः। तत्र श्रूयमाणं तमसः परस्ता द्वर्तमानत्व मनन्योपायमुक्तिहेतुवेदनविषयत्वं च हिरण्यगर्भे न सम्भव तीति तस्य शिवपरत्व मवश्य मभ्युपगन्तव्यम्। तथा हिरण्यगर्भमन्त्राष्टकमध्ये 'य ईशे','अस्य द्विपद श्चतुष्पदः कस्मै देवाय हविषा विधे' मेति पठ्यते। तेन शिवाऽसाधारणं पशुपतित्वं वर्ण्यते। 'एतावन्तो वै पशवो द्विपद श्चतुष्पद' श्चेति श्रुत्यन्तरदर्शनात्। सिद्धान्त मुपसंहरति तत इति — तस्मा दुक्त मुक्तं 'नेतरोऽनुपपत्ते' रिति॥

तत्र न हिरण्यगर्भ इति निर्देष्टव्ये नेतर इति निर्देशो हिरण्यगर्भः परमेश्वरा न्न भिद्यते, अत स्तत्र लक्षणसत्त्वं न दोषा येति केषांचि न्मतं निरसितुं कृतः। तन्निरासहेतुप्रदर्शनार्थत्वे नोत्तरसूत्र मवतारयति परमेश्वरे णेति — तया माशङ्का त्वेवंविधा। प्रपञ्चसृष्टिहेतुकामना शालित्वं शिवासाधारण मिति निश्चितम्। तद्धि हिरण्यगर्भस्य 'प्रजापति रकामयत। प्रजाः सृजे' येति बहुषु प्रदेशेषु श्रूयते। अत स्तन्मूला दनुमानात् 'ब्रह्मा शिवो मे अस्तु सदा शिवोम्', 'यो ब्रह्मा ब्रह्मण उज्जहार', 'प्राणैः शिरः कृत्तिवासाः पिनाकी' इति शिवहिरण्य गर्भाभिधानसामानाधिकरण्या च्च हिरण्यगर्भः शिवाभिन्नः। एवं हिरण्यगर्भस्य शिवाभिन्नत्वा त्तत्र लक्षणसत्त्वं न दोषः। तत स्तद्व्यावर्तन मनावश्यक मिति। एत च्छङ्कानिराकरणार्थं सूत्रं 'भेदव्यपदेशा च्च' इति॥

पुन राश ङ्कयाह ॥

## कामा च्च नाऽनुमानापेक्षा ॥ १–१–१९ ॥

'प्रजापति रकामयत प्रजाः सृजेये' तीति सर्वत्र श्रुतिषु संकल्पो हिरण्यगर्भस्य जगत्सृष्टौ श्रूयते। तथाऽपि तस्य जगत्कारणत्वेऽनुमानापेक्षा युक्त्यपेक्षा नास्ति। तस्य काम स्याऽवान्तरसृष्टिविषयत्वात्। परमेश्वर स्यैव हिरण्यगर्भात्मनाऽवान्तरसृष्टि श्चेति वक्ष्यति 'संज्ञामूर्तिक्लृप्ति' स्त्वित्यत्र।

'अनेन जीवे नात्म नानुप्रविश्य नामरूपे व्याकरवा' णीति हिरण्यगर्भात्मना प्रपञ्चा नुप्रविष्टस्य परमेश्वरस्य नामरूपकर्तृत्वश्रवणा दनयो रभेद ए वाभ्युपेतव्य इत्यत आह ॥

## अस्मि न्नस्य च तद्योगं शास्ति ॥ १–१–२० ॥

अस्मि न्नुपनिषत्तन्त्र ए वास्य हिरण्यगर्भस्य तद्योगं तस्य परमेश्वरस्य

---

व्यवहितोत्तरसूत्रा दस्मि न्नस्येति पदद्वय मानीय व्याचष्टे अस्या मिति — 'अस्मि न्निति पद मुपनिषद्ग्रन्थपरम्। अस्या मे वोपनिषदि शिवहिरण्यगर्भयो र्भेदे प्रतीयमाने तद भेदाभिप्रायेण यतः प्रसूतीत्यादिना जगज्जन्मादिकारणत्ववर्णनं हिरण्यगर्भस्याऽत्यन्त मयुक्त मित्यर्थः ॥

उत्तरसूत्र मवतारयति पुन रिति ॥

जगत्कारणत्व इति — जगत्कारणशिवाभिन्नत्वे य दनुमानं त न्न ग्राह्य मित्यर्थः। अवा न्तरसृष्टिः देवमनुष्यादिसृष्टिः। तत्रापि न हिरण्यगर्भस्य स्वातन्त्र्यम्। किंतु तदन्तर्यामिणः शिव स्यै वे त्यर्थः ॥

उत्तरसूत्र मवतारयति अनेनेति — नामरूपव्याकरणं चतुर्मुखकर्तृक मिति पुराणेषु प्रसिद्धम्। तत्र व्याकरवाणी त्युत्तमपुरुषप्रयोगेण कर्ता परमेश्वर ए वेति निगदन्ती श्रुतिः पर मेश्वरस्य तच्छरीरित्वेन वा तदभेदेन वा कर्तृत्वं प्रतिपादयती त्युपपादनीया। तच्छरीरित्वपक्षे जीवे नात्मनेति सामानाधिकरण्यस्य क्लिष्टतया तदभेदे नैवेति पर्यवस्यती त्याशयः ॥

शेषत्वसंबन्धं शास्ति मन्त्रभागो 'ब्रह्माधिपति र्ब्रह्मणोधिपति 'रिति । अतः परमेश्वर एव जगत्कारणं तच्छेषभूतो हिरण्यगर्भ इति सिद्धम् ॥

इति इतरानुपपत्त्यधिकरणम्

---

अथ अन्तराधिकरणम् ८

त दितःपूर्वै रधिकरणन्यायैः सर्वज्ञं नित्यतृप्त मनादिबोधं स्वतन्त्र मलुप्तशक्तिक मनन्त शक्तिकं सकलजगदुभयकारणं समस्तोपनिषत्तन्त्रसमन्वयैकप्रतिपाद्यं स्वप्रकाशनिखिलप्रपंचविशिष्टा

---

ब्रह्माधिपति रिति — 'ईशानः सर्वविद्याना' मित्यनेन वेदाधिपत्यस्य 'ईश्वरः सर्व भूताना' मित्यनेन ब्राह्मणाधिपत्यस्य च सिद्धत्वा दप्यारोन हिरण्यगर्भाधिपत्य मेव विधीयते। तेन श्रुत्यन्ते व्यापाततः प्रतिपन्ना हिरण्यगर्भ स्योत्कर्षविषया परमेश्वराभेदविषया च भ्रान्ति रुन्मूल्यत इति भावः। परैः प्रकृताधिकरणसूत्रा ण्यानन्दमयाधिकरणशेषत्वे नैव विवृतानि। तत आनर्थक्य मेव प्रापितानि ॥

श्रीभाष्यकृद्भि र्मुक्तजीव स्यानन्दमयशब्दवाच्यत्वाभावपरतया व्याख्यातानि। 'आनन्द मयोभ्यासा' दि त्यनेनैव मुक्ताऽमुक्तजीवनिषेधस्य प्राप्ततया तै रपि वैयर्थ्य मेव गमितानि। यद्य प्यानन्दतीर्थेन तु चतुर्मुखादीना मानन्दमय शब्द प्रतिपाद्यत्वाभाव परतया व्याख्यातानि तथापि हिरण्यगर्भकारणत्वसूचकसूक्तानां चतुर्मुखपरत्वं निराकृत्य स्वाभिमततत्त्वे योजयितु मश क्यत्व योपेक्षिता नीति नैरर्थक्य मेव नीता नीति च विशदम् ॥

इति इतरानुपपत्त्यधिकरणम्

अथ अन्तरधिकरणम्

अन्तरधिकरण मवतारयितुं पूर्वसिद्धं माहात्म्यगुणजात मनुवदति त दितः पूर्वै रिति— उभयकारण मि त्यन्तेन जन्माद्यधिकरणा र्थोऽनूदितः। समस्तेत्यादिविशेषणेन शास्त्रयोनित्व समन्वयाधिकरणद्वयार्थः, स्वप्रकाशेत्यादिविशेषणेन ईक्षत्यधिकरणविषयवाक्यगतसच्छब्दार्थः सच्चिदानन्दस्वरूप मित्यनेन आनन्दमयाधिकरणविषयवाक्यगतसत्यज्ञानादिवाक्यार्थः, संसारेत्या दिविशेषणेन इतरानुपपत्त्यधिकरणविषयवाक्यान्तर्गतस्य 'य एनं विदु रमृता स्ते भव' न्तीत्या दिवाक्य स्यार्थः, चिदचिद्यान्तर मित्यनेन अचेतने प्रधाने, चेतने मुक्ते हिरण्यगर्भे चाऽन तिव्याप्तं जगत्कारणत्व म स्येतरवैलक्षण्य मि त्येव मीक्षत्याद्यधिकरणत्रयनिष्पन्नार्थ श्चानूदितः ॥

द्वितीयस्वभावं सच्चिदानन्दस्वरूपं संसारपाशच्छेदकारणं चिदचिदर्थान्तरं शिवतत्त्वं परं ब्रह्मेति सिद्धम् ॥

तस्य साधकानां संसारभेषजं मनस्समाधानयोग्यं किमपि रूपं प्रदर्शयितु मिद मधिकरण मारभ्यते ॥

## अन्त स्तद्धर्मोपदेशात् ॥ १–१–२१ ॥

**'य एषोऽन्त रादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु हिरण्य केश आप्रणखा त्सर्व एव सुवर्ण स्तस्य यथा कप्यासं पुंडरीक मेव मक्षिणी' इतिछांदोग्येऽस्य विषयः श्रूयते ॥**

---

ततोऽनन्तराधिकरणेन प्रतिपादयिष्यमाण मर्थं दर्शयति त स्येति — संसारभेषजं मोक्षप्रदम्। मनस्समाधा नेति — दहरविद्यादि षूपास्यस्य रूप स्यानुसंधानं दुस्संपादं तत्स्थानस्य हृदयपुण्डरीकादे रप्रसिद्धत्वात्। वक्ष्यमाणरूपस्य तु स्थानं सौरमण्डल मागोपालाङ्गन मतिप्रसिद्ध मिति तदनुसंधानं सुसम्पाद मिति भावः। कि मपि अप्राकृतम् ॥

ननु, अत्र गताऽर्थानुवादः किमर्थः ? प्राणाकाशादीनां निरासेऽकृतेऽपि चेतनाऽचेतनेष्वतिव्याप्तिनिरासेन लभ्यतोऽर्थस्य चिदचिदर्थान्तर मिति विशेषणेन कथ मुपन्यासः। अतिव्याप्तिनिरासपेटिकामध्ये साधनाध्यायनिरूपणीयध्यानोपयुक्तरूपविशेषप्रतिपादकाधिकरणस्य कथं प्रस्तावः ? तस्य समन्वयाध्याये का सङ्गतिः ? इति चेत् शृणु ॥

लक्षणपरिष्कारपेटिकासूचनार्थो लक्षणसूत्र मारभ्य गतार्थानुवादः। तत एव चातिव्याप्तिनिरासासिद्धार्थोपन्यासः ॥

प्राणाकाशाधिकरणद्वयं तु न त त्रातिव्याप्तिनिरासार्थम्। किं तु प्राणाकाशवाक्ययो र्ब्रह्मणि तात्पर्यप्रदर्शनार्थम्। तेन वाक्यशेषगतकारणत्वजन्यमन्दशङ्काविषयातिव्याप्तिनिरासोपि सिद्ध्य ती त्यानुषङ्गिकप्रयोजनसूचनपरं तदवतारिकाभाष्यम् ॥

इद मधिकरण म प्यन्तरादित्यविद्यावाक्यस्य ब्रह्मणि तात्पर्यप्रतिपादनार्थ मेव। ध्यानरूपविशेषार्थसिद्धि र प्यने नाधिकरणेन लभ्यत इ त्यानुषङ्गिकप्रयोजनसूचनपरं मेत दवतारिकाभाष्य मपि। पूर्वाधिकरणविषयवाक्ये हिरण्यगर्भविषयोपक्रमोपसंहारैकरूप्यस्य मध्यगतबहुप्रमाणविरोधा न साधकत्व मि त्युक्तम् ॥

अथ मादित्यान्तर्वर्ती हिरण्मयः पुरुषः परमेश्वरो देवताविशेषो वा ? इति संशयः ॥

एवंसति सर्वाधारस्य सर्वगतस्य परमेश्वर स्यादित्यान्तर्वर्तित्वं हिरण्मयरूपत्वं च न संभवति। स्वेच्छया रूपाङ्गीकारे त्रिलोचनत्वं नियतम्। त दिह न विद्यते। 'पुण्डरीक मेव मक्षिणी' इति लोचनद्वय मेव श्रूयते। अथवा स्वेच्छागृहीतोऽपि देहः संसारिणा मिव परमेश्वरस्याऽपि दुःख भुत्पा दये देव। स्वेच्छासंबन्धेऽपि पावकस्य दाहकत्वं हि स्वभावः। ततः परमेश्व

---

इह तु तद्विषयोपक्रमोपसंहारैकरूप्यस्य तादृशविरोधो नास्तीति प्रत्युक्तिसंगत्या त्प्रत्यु दाहरणरूपा समनन्तराधिकरणसङ्गतिः। सा देवताविशेषो वेति संशयवाक्येन भाष्ये सूचयिष्यतं

मण्डलान्तर्वर्तित्वेन प्रसिद्धो देवताविशेषो हि तत्र भवति प्राप्तः। हिरण्यगर्भ स्तथा प्रसिद्ध इति पूर्वाधिकरणे प्रदर्शितम्। नच आदित्यस्य प्रसिद्धतया स एव देवताविशेषपदेन पूर्व पक्षकोटितया निर्दिष्ट इति शङ्क्यम्। पक्षे तस्याऽपि पूर्वपक्षावलम्बनत्वेऽपि हिरण्यगर्भस्य तथा प्रसिद्धस्य दुर्वारत्वात्। अत एव भाष्ये सामान्येन देवताविशेषो वे त्यत्र संशयः प्रदर्शित इति सर्व समञ्जसम्॥

अत्र 'अन्तरादित्य' इति साधारणत्वोक्तया हिरण्मय इति शरीरवत्त्वोक्तया च आधार शरीरयोः सम्भवाऽसम्भवाभ्यां संशय इत्याह अथ मिति॥

अथ पूर्वपक्षः —

सर्वाधारत्वं परमेश्वर स्याधाराऽसम्भवे सर्वगतत्वं च हिरण्मयरूपासम्भवे च हेतुः। व्याप कस्य हिरण्यविकारतया परिच्छिन्ने शरीरे स्थित्यसम्भवात्॥

ननु 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्त' मितीश्वरस्य विग्रहः श्रूयत इतिचे न्न। त स्योपासनार्थकल्पितत्वेन प्रकृतस्य हिरण्मयः पुरुषो दृश्यत इति वास्तवतया दृश्यमानत्वोक्त्या तद्विषयत्वाभावावसायात्। नच, ऐच्छिक मीश्वरस्यापि वपु रस्ती त्यभ्युप गम्यत इति शङ्क्यम्। तस्य कर्मजन्यत्वनियमेन अपहतपाप्मतया पाप्मशब्दस्य पुण्य स्याऽ प्युपलक्षकत्वेन कर्मसंस्पर्शरहिते तस्मिन् शरीर स्याऽसम्भावितत्वात्। अथ स्वेच्छया ब्रह्मणः शरीरपरिग्रहेऽभ्युपगतेऽपि प्रकृते 'अक्षिणी' इति लोचनद्वयमात्रवत्त्वाम्नानेन परमेश्वरस्य

रस्य शरीरसंबन्धो न युक्तः। तस्मा दयं कश्चि देवताविशेष एव न परमेश्वर इति पूर्वपक्षन्यायः॥

सिद्धान्त स्तु परमेश्वर एव। कुतः? तद्धर्माणा मुपदेशात्। 'स एषः

---

त्रिलोचनत्वप्रसिद्धे श्च प्रकृतरूपस्य तद्विषयत्वाऽवगमात्। यथाकथ मपि परमेश्वरविषयत्वाऽभ्युपगमे पावकस्य दाहकत्वव च्छरीरस्य दुःखजनकत्वनियमेन तस्याऽपि दुःखभाजनत्वमवार्यं स्यात्। तस्मा दादित्यान्तर्वर्ती पुरुषः परमेश्वरो न भवति। किंतु कश्चि देवताविशेष एवेति॥

अथ सिद्धान्तः —

अत्र अन्त रित्यादित्यान्तर्वर्ती पुरुषः पक्षतया निर्दिष्ट इति साध्य मध्याहृत्य दर्शयति परमेश्वर ए वेति — तद्धर्मोपदेशा दिति बहुवचनान्तषष्ठीसमासेन धर्मबाहुल्यं विवक्षित मित्याह तद्धर्माणा मिति — स एष इति॥

ननु, छान्दोग्यश्रुति रि होदाहृता। तत्र 'स एष सर्वेषां लोकाना मीष्टे सर्वेषां कामाना' मिति सर्वलोककामैश्वर्यं न श्रूयते। किं तु 'ये चैतस्मा दर्वाञ्चो लोक स्तेषां चेष्टे देवकामानां' चेति कतिपयलोककामैश्वर्यं श्रूयते। त त्तु परिच्छिन्नैश्वर्यदेवताविशेषपरम्। न परमेश्वरलिङ्गम्। तत इद मसङ्गत मिति चे दुच्यते॥

अक्ष्यादित्यपुरुषयो रैक्यं सिद्धं कृत्वा ततः सिद्धस्य सर्वलोककामेश्वरत्व स्यानुवादपरमिदं भाष्य मतो न विरोधः। नच तयो रैक्यं न सिद्ध मिति शङ्क्यम्।, त द्य त्तत्सत्य मसौ स आदित्यो य एतस्मि न्मण्डले पुरुषो य श्चायं दक्षिणेऽक्ष न्पुरुष आदित्य श्चक्षु र्भूत्वा दक्षिणेक्ष न्प्राविशत्। य आदित्ये तिष्ठ न्नादित्या दन्तरो यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तर' इत्यादिश्रुतिषु अक्ष्यादित्यान्तर्वर्तिपुरुष स्यैकत्वाम्नानात्॥

न न्वेनयो र्द्वयो रैक्ये आदित्यमण्डलान्तर्वर्तिन मुद्दिश्य 'ये चैतस्मा त्पराञ्चो लोका स्तेषां चेष्टे देवकामाना' मिति देवलोककामेश्वरत्वस्य अक्ष्यन्तर्वर्तिनं प्रति 'ये चेतस्मा दर्वाञ्चो लोका स्तेषां चेष्टे मनुष्यकामाना' मिति मनुष्यलोककामेश्वरत्वस्य च विभज्य विधान मयुक्त मिति चे न्न॥

आधिदैवताध्यत्मरूपोपासनार्थं तादृशविभाग स्याम्नातत्वेन ते नोपास्यभेदासिद्धेः। तथा च देवताधिकरण मीश्वरोपासन मधिदैवत मि त्यात्माधिकरणं त दध्यात्म मिति च निगद्यते। एवं चादित्यान्तर्वर्तिपरमेश्वरोपासन मधिदैवत मक्ष्यन्तर्वर्तीश्वरोपासन मध्यात्म मिति च सिद्धम्।

सर्वेषां लोकाना मीष्टे सर्वेषां कामानां त स्योदितिना म स एषः सर्वेभ्यः पाप्मभ्य उदित ' इत्यादिना प्रतिपादिताः सर्वलोककामेश्वरत्वादयोपापराहि त्यादयो धर्मा हि पारमेश्वराः । ' एको रुद्रो न द्वितीयाय तस्थु. य इमान् लोका नीशत ईशनीभिः', ' एको बहूनां यो विदधाति कामा 'नित्यादि श्रवणात् ॥

सर्वाधारस्य सर्वगत स्यादित्यान्तर्वर्तित्वं न संभव तीति य दुक्तं तत्र न विरोधः । सर्वाधारः सर्वगतः परमेश्वरः साधकानुग्रहाय हिरण्मयं कि मपि रूपं समास्थाय सवितृमण्डल मधिवसति ॥

शरीरसंबन्धा दस्मदादिव न्नेश्वरस्य संसारदोषापत्तिः । श्रुति रेव भग वती ह्यस्य शरीरसंबन्धं सर्वपापराहित्यं च प्रतिपादयति । वयं हि श्रुति प्रामाण्यशरणा न युक्तिं बहुमन्महे । पावकोऽपि संबन्धा न्न शक्तिमतां दाहकः ॥

---

एव मुपासनार्थ मुभयो रैश्वर्यस्य विभज्य कथनं प्युपास्यैकत्वे नोभयत्र विहितं सर्व मैश्वर्य पारमेश्वर मेव पर्यवस्य तीति न किंचि दवद्यम् ॥

'स एष सर्वेभ्यः पाप्मभ्य उदित' इति — ननु, कथं सर्वपापोदितत्वम् ? पाप्मनः स्वाच्छादका दुद्गमना त्प्रा कदाच्छादितस्य घटते । यथा मेघमण्डला दुदितत्व मिव प्रा कदा च्छादितस्य चन्द्रस्य । नहि कदाचि दपि परमेश्वरः पापाच्छादित इष्यत इति चे न्न । पाप्मभ्य उदित इ त्यनेन पापसम्बन्धराहित्य स्यैव लक्षणयाऽवगम्यमानत्वेन निश्शङ्कत्वात् । साधारत्वं साध कानुग्रहार्थपरिगृहीतपरिच्छिन्नशरीरविशिष्टतये त्युपपादयति सर्वाधारस्ये त्यादिना ॥

शरीरवत्त्वं तत्प्रतिक्षेपकतर्कस्य श्रुतिविरोधा दप्रामाण्यसमर्थने नोपपादयति शरीर सम्बन्धा दिति — यथा श्रुतिसिद्धं परमेश्वरस्य स्वरूप मपहतपाप्मत्वादिगुणजात मपि प्रति क्षेप्तुं श्रुतिविरोधा त्तर्को न शक्नोति, तथैव तस्य शरीरवत्त्व मपि प्रतिक्षेप्तु मपहतपाप्म त्वादिलिङ्गोपनीतस्य तस्य हिरण्यश्मश्रुत्वादिविशिष्टशरीरप्रतिपादकोदाहृतश्रुतिविरोधा न्न शक्नो तीति भावः ॥

पारमेश्वरशरीरप्रतिक्षेपकतर्कस्य श्रुतिविरोधा दाभासत्व मुक्तम् । स्वतोपि त स्याभासत्व माह पावक इति — यथा दाहकस्वभावोऽपि पावकः शक्तिविशेषयुक्तान् भूतवशिनो न दहति,

' कप्यासं पुण्डरीक मेव मक्षिणी ' इति त्रिलोचनस्य परमेश्वरस्य लोचनद्वयग्रहणं पुण्डरीकसादृश्यवर्णनार्थं , न तृतीयलोचनाभावद्योतनपरम्। तथा हि , त्रिपुत्रं ब्राह्मणं प्रति द्वौ पुत्रा व स्याग्निकल्पा वित्युक्ते द्विसंख्याग्रहणं न शेषपुत्रनिषेधपरम्। किं तु पुत्रद्वय स्याग्निसादृश्यपरम्। तद्व द त्रापि क मुदकं रश्मिभिः पिब तीति कपिः आदित्यः , ते नासितं विकासितं पुण्डरीकं यथा स्फुरति तथा परमेश्वरस्य लोचनद्वयम्। तृतीयलोचनं तु मुकुलितस्वभावं विकसितपुण्डरीकसदृशं न भवति। मुकुलितपुण्डरीकसम मित्यभिप्रायः ॥

---

तथा दुःखजनक मपि शरीरं सर्वशक्तियुक्तस्य परमेश्वरस्य न किमपि दुःखं जनयितुं शक्नुयात्। अथ शरीरं दुःखजनक मेवेति नियमोऽस्तीति चे द्वह्नि र्दाहक एवेति नियम स्येव शक्तिरहित विषये चरितार्थत्वा न्न कश्चि द्यक्तिविरोध इति भावः ॥

कप्यास मिति — ननु, किमर्थ मिद मुच्यते। नच अक्षिणी इति श्रुत स्याक्षिद्वयस्य त्रिलोचने परब्रह्म ण्यसङ्गतत्वेन तस्याऽक्षियुग मेव रविकरविकसितपुण्डरीकसदृश मिति समर्थयितु मिति वाच्यम्। ' गृहं सम्मा' र्ष्टी त्यत्र गृहपदगतैकत्व स्येव 'वृषलै र्न प्रवेष्टव्य' मि त्यत्र वृषलशब्दगतबहुवचन स्येव च प्रकृते द्वित्वस्याऽ प्यविवक्षितत्वेन तत्समर्थन स्यानावश्यकत्वात्। तथाहि, गृहं सम्मर्ष्टी त्यत्र एकवचनं भवति जात्येकत्वावलम्बनम्। वृषलै रित्यत्र बहुवचन मपि 'जात्याख्याया मेकस्मि न्बहुवचन मन्यतरस्याम्' (पाणिनि–सू) इतिसूत्रे णाऽतिदेश सिद्धम्। तत श्च जात्यवलम्बन स्यैकत्व स्याऽतिदेशिकस्य बहुत्वस्य चाऽविवक्षाव देव जाति विवक्षायां श्रूयमाणयो रक्ष्णो रपि द्वित्व स्याऽविवक्षा युक्ता इतिचे न्न॥

हेलाराजीयटीकायाम् ,

> एकत्वं वा बहुत्वं वा केषाञ्चि दविवक्षितम्
> तद्धि जात्यभिधानाय द्वित्वं तु स्या द्विवक्षितम् ॥

इत्युक्त्या द्वित्व स्याऽविवक्षोक्ति र्न युक्तति चे दवधत्स्व॥

शाब्दिकमर्यादावलम्बनेऽपि जातिविवक्षायां द्वित्वाऽविवक्षोक्ति र्युक्तव। द्वित्वं तु न विवक्षित मित्युक्तेः का गति रिति चेत्। द्वित्वानाविष्टा व्रीह्यादिजाति र्गति रस्ति भूयसी।

'असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनं गोपा अदृशन्नदृशन्नुदहार्यः। उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः' इति नीलग्रीवस्य परमेश्वरस्य सर्वभूतप्रत्यक्षावगमात् 'स्वस्त्याहितमण्डल स्त्रिनेत्रो रवि' रित्यादिना तस्य त्रिलोचनत्वावगते रादित्य एव प्रत्यक्षः परमेश्वरः प्रभामण्डलमध्यवर्ती। अन्यथा कथ मस्य नीलग्रीवत्वं त्रिलोचनत्वं चोपपद्यते? असावादित्यो ब्रह्मेति ब्रह्मत्वव्यपदेश श्च॥

तस्मा दन्त रादित्य इति मण्डलवर्ती सूर्य एव हिरण्मयः पुरुष इत्यत आह॥

---

स्तनलोचनादिजातिविवक्षायां तु द्विवचन मपि पक्षे भवति। 'स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणे'ति वामनसूत्रे विधानात्। 'स्तनाग्रीणां बृहदमलोदबिन्दुनिन्त्रौ रे जातौ रुचिरदृशा मुरोजकुम्भा' वित्यादिकाव्यप्रयोगदर्शनात्॥

तस्य क्रुद्धस्य नेत्राभ्यां प्रापत न्नस्त्रबिन्दवः
दीपाभ्या मिव दीप्ताभ्यां सार्चिप स्तोयबिन्दवः॥

इति रामायणे दशाननस्य विंशतिलोचनस्य क्रोधवर्णने नेत्राभ्या मिति द्विवचनदर्शना च्च। एवं च स्तनलोचनादिजाति ष्वेकत्वबहुत्ववत् द्वित्वस्याऽपि प्राप्तत्वा त्तस्याऽप्यविवक्षा नायुक्तेति दिक्। एव मक्षिद्वित्वविवक्षया समर्थयितुं शक्येपि प्रकृतेऽर्थे यदि कश्चि द्व्याख्यानभिज्ञो मन्येत श्रूयमाणस्य द्विवचन स्याऽर्थाऽविवक्षाकल्पन मयुक्त मिति तद्विवक्षा मङ्गीकृत्य परिहारो भाष्य कारे णोच्यते यथा कप्यास मित्यादिना॥

उत्तरसूत्र मवतारयति असौ य इति — सिद्धान्तोपक्रमे परमेश्वर एवेति प्रतिज्ञा वाक्येन 'नेतरोऽनुपपत्ते' रिति सूत्रा न्नेतर इत्यनुवृत्य आदित्यान्तर्वर्ती परमेश्वर एव मण्डलाभि मानी पुरुषो न भवति। इति साध्यं दर्शितम्। त त्रेयं शङ्का प्रसजति। अस्तु परमेश्वरः। स हि मण्डलाभिमानिपुरुषा दन्यो न भवति। 'असौ योऽवसर्प' तीतिमन्त्रे 'य मति पामरा गोपाला उदकहारिण्य स्त्रियोऽन्यानि सर्वाणि च भूतानि व्योम्नि संचरन्तं पश्यन्ति' इति तस्यैव मण्डलाभिमानिनः पुरुषस्य नीलग्रीवत्वरूपपरमेश्वराऽसाधारणधर्मोपदेशात्॥

नच, मण्डल मेव पश्यन्ति नतु मण्डलाभिमानिनं नीलग्रीव मिति मन्त्रे यथाश्रुत स्याऽर्थस्य बाधा शङ्कनीया। मण्डलस्यापि तदभिमानिपुरुषशरीरत्वेन मण्डलदर्शनस्य तच्छरीरक पुरुषदर्शनत्वोपपत्तेः॥

ननु, तस्य त्रिलोचनत्वाभावा दक्षिद्वित्वविवक्षाप्राप्तमुकुलितलोचनान्तरवत्त्वं न घटत इतिचे न्न॥

# भेदव्यपदेशा च्चान्यः ॥ १–१–२२ ॥

मण्डलाभिमानि नोऽस्मा च्चेतनरूपा दादित्या दन्य एव हिरण्मयरूपः परमेशरः, भेदव्यपदेशात्। 'य आदित्ये तिष्ठ न्नादित्या दन्तरो य मादित्यो न वेद यस्याऽऽदित्यः शरीरं य आदित्य मन्तरो यमयति एष त आत्मान्तर्या म्यमृत' इति। अत्राऽमृतशब्देन शिव उच्यते। 'एतानि ह वा अमृतस्य नामधेयानि' इति शतरुद्रीयप्रशंसापरजाबालोपनिषदि श्रवणात्। आदित्या द्भेद एव परमेश्वरस्य तदविदितत्वादिधर्मै र्व्यपदिश्यते। तस्मा दादित्या च्चेतना दन्य ईश्वरो हिरण्मयः। 'नीलग्रीवो विलोहित' इति नीलग्रीवः परमेश्वर एवाऽऽदित्यान्तर्वर्ती प्रतिपाद्यते। तदात्मतया तच्छब्दवाच्यत्वम्॥

---

अरुणोऽरुणपङ्कजे निषण्णः कमलाऽभीतिवरा न्करै र्दधानः
स्वरुचाऽऽहितमण्डल स्त्रिणेत्रो रवि राकल्पशताकु लोऽवता न्नः ॥

इति तद्ध्यानश्लोके तस्य त्रिणेत्रत्वप्रतिपादनात्। तस्मा न्मण्डलाभिमानी पुरुष एव परमेश्वरः स ए वास्मि न्विषयवाक्ये उपास्यतया प्रतिपाद्यत इति शङ्कानिराकरणार्थ मुत्तर सूत्र मित्यर्थः॥

ननु, य आदित्ये तिष्ठ न्नित्यादिश्रुता वादित्यशब्दो मण्डलवाची। 'य एष एतस्मि न्मण्डले पुरुष' इति बृहदारण्यके, 'एष एतस्मि न्मण्डलेऽर्चिषि पुरुष' इति तैत्तिरीये च पुरुषस्य मण्डलस्थत्वोक्ते स्तदेकार्थत्वानुरोधात्। तस्मा न्मण्डलाभिमानिपुरुषा द्भेदव्यपदेशो न सिध्य ती त्याशङ्क्याह तदविदितत्वादिधर्मै रिति — 'य मादित्यो न वे' देति वेदनप्रसक्ति मत्त्वा च्चेतन ए वादित्यशब्दार्थ इ त्यवगम्यते। 'य मादित्यो न वेद य स्यादित्यः शरीर' मिति पुंलिङ्गाभ्या मपि तथाऽवगम्यते। श्रुत्यन्तरोक्तमण्डलपरत्वे हि क्लीबाभ्यां भवितव्यम्। पर मेश्वरस्य मण्डलस्थत्वं क्वचि दस्तीतिचे त्पर्यङ्कस्थराज्ञः प्रासादस्थत्व मिव त न्न विरुध्यते। एव मुक्तन्यायैः प्रकृतविषयवाक्ये प्यादित्यशब्दो मण्डलाभिमानिपुरुषपर इति भावः। तस्मा दादित्या दिति॥

यद्यपि हिरण्यगर्भा द्भेदः पूर्वाधिकरणे सिद्धः, तथा प्यदितिपुत्रत्वेन प्रसिद्धा न्मण्डलाभि मानिनः पुरुषा द्भेदोऽनेन सूत्रेण प्रतिपाद्यत इ त्याशयः। 'असौ योऽवसर्प' तीति मन्त्रो न मण्डलाभिमानिपुरुषपरः। किंतु तदन्तर्यामिपरमेश्वरपरः तच्छरीरकतया तद्वाचकशब्दविषयत्वं त स्योपपद्यत इत्याह नीलग्रीव इति॥

ननु, नीलग्रीवः परमेश्वरो नादित्यान्तर्वर्ती, किंतु नारायण एव। तथाहि सर्वत्र लौकिकाः पठन्ति 'ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः' इति। तथैव पुण्डरीकसदृशाक्षिद्वयमस्योक्तः, पुण्डरीकाक्ष इति प्रसिद्धः। कि मन्यथा नारायणपरो नेतिचे न्न ॥

परमेश्वरासाधारणलिङ्गानां हिरण्मयपुरुषे दृश्यमानानां तस्मि न्नारायणेऽनुपपत्तेः। तथाहि, सूत्रविषयस्य संदिग्ध स्याऽस्य वाक्य स्याऽसंदिग्धे वाक्यान्तरे निर्णयो युक्तः। महोपनिषदि श्रूयते, 'आदित्यो वा एष एतन्मण्डलं तप'तीत्यादि। तत्र 'य एतस्मि न्मण्डलेऽर्चि र्दीप्यते' इति मण्डलप्रभा मुक्त्वा, 'य एष एतस्मि न्मण्डलेऽर्चिषि पुरुष' इति मण्डलाभिमानिनं सूर्य मभिधाय, 'एषोऽन्त रादित्ये हिरण्मयः पुरुष' इति हिरण्मयं पुरुष मादित्यान्त र्यामिण मुक्त्वा पुनः 'आदित्यो वै तेज ओजो बलं यश' - इत्यादिना तस्याऽऽदित्यरूपस्य विभूति मभिधाय, 'एष पुरुष एव भूताना मधिपति' रिति भूतपतित्वेन त न्निर्दिश्य, पुनः कीदृशः पुरुष इत्याकाङ्क्षायां 'सर्वो वै रुद्र' इत्यारभ्य, 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतय'

---

अस्मि न्सूत्रे चकारेण नारायणा दप्यय मन्य इति दर्शितम् ॥

त दुपपादयितु माशङ्कते नन्विति — लौकिकप्रसिद्ध्या पुण्डरीकाक्षत्वलिङ्गेन च आदित्यान्तर्वर्ती हिरण्मयः पुरुषो नारायणः। स एव सर्वकामेश्वरत्वादिपारमेश्वरधर्मशालीति प्राप्ते परिहरति नेति — तैत्तिरीयोपनिषदि मण्डलाभिमान्यादित्यान्तरं त मेव हिरण्मयपुरुषं प्रस्तुत्य तस्य भूतपतित्वलिङ्गेन 'सर्वो वै रुद्रः', 'पुरुषो वै रुद्रः', 'सर्वो ह्येष रुद्रः' इति रुद्रशब्दा भ्यासेन अभ्यस्ते नोमापतित्वलिङ्गेन च परमेश्वरत्व माविष्कृतम् ॥

एव मसन्दिग्धार्थवाक्यान्तरानुसारेण विवादविषयवाक्यार्थनिर्णयस्य युक्तत्वा द्भूतपतित्व नीलग्रीवत्वोमापतित्वादीनां परमेश्वरा दन्य त्रासम्भावितत्वा द्विशेषलिङ्गै रेतै रुद्रादिश्रुतिभि श्च पुण्डरीकाक्षत्वरूपसामान्यलिङ्गस्य बाधितत्वा दान्तरादित्यविद्योपास्य उमापति रेवेति निर्विशङ्कं सिध्य तीत्यर्थः ॥

इत्युपसंहृतम् । तत्र बाहुग्रहण स्योपलक्षणत्वात् हिरण्यरूप इति तात्पर्यम् । अतो हिरण्यसदृशरूप उमापति रादित्यमण्डलवर्तीति सिध्यति । अत्र नील ग्रीवत्व मुमापतित्व मित्यादि विशेषलिङ्गम् । परमेश्वरा दन्यत्र तस्याऽयोगात् । पुण्डरीकाक्षत्वं तु साधारणं लिङ्गम् । नारायणा दन्यत्राऽपि तस्य दर्शनात् । कमललोचना नारी, कमललोचनः पुरुष इति । अतो विशेषलिङ्गेन सामान्यलिङ्गस्य बाधः । ध्येयः सदेत्यादि लौकिकवचनं भाक्त मेव । ततो हिरण्यसदृशरूप स्त्रिलोचनो नीलग्रीव उमापतिः सकललोककामेश्वरः सर्व पाप्मानाघ्रातो भगवा न्परमेश्वर आदित्यान्तर्वर्ती सावित्रीप्रतिपाद्यः सर्वेषां मुमुक्षूणां ध्येय इति सिद्धम् ॥

इति अन्तराधिकरणम्

---

पुण्डरीकाक्षत्व गिति — पुण्डरीकाक्ष इति नाम्नै वासाधारणम् । न तु पुण्डरीकसदृश लोचनत्वम् । अतः समानार्थशाखान्तरगतेनाऽपि शिवासाधारणलिङ्गेन तस्य बाधो युक्तः । लौकिकं वचन मिति — पौरुषेयं पौराणिकवचनं भाक्तं त दुक्तविषयम् विष्णुपूजावसाने विष्णो रादित्यमण्डले ध्येयत्व मवगमयति , न तु विष्णो रादित्यान्तर्यामित्वं प्रतिपादयितुं शक्नो तीत्यर्थः ॥

सावित्रीप्रतिपाद्य इति —

आदित्यमण्डलासीनं रुक्माभं पुरुषं परम्

ध्यायन् जपे त्त दित्येत न्निष्कामो मुच्यते द्विजः ॥ इति

आदित्यमण्डलान्तःस्थं परं ब्रह्माधिदैवतम् ॥

इत्यादिस्मृतिवचनै रादित्यान्तर्वर्ति परं ब्रह्म गायत्रीप्रतिपाद्य मि त्यवसीयते । त च्च शिव एवेति व्यवस्थापितम् ॥

ननु, विश्वामित्रऋषिः, छन्दो गायत्री, देवता रवि रित्यादिना सविता देव तेति स्मर्यते । कथं त दुपपद्यत इतिचे न्न । तत्र रविवाचकपदस्य तदन्तर्यामिणि शिवे तात्पर्यवत्त्वात् । किंच सवितु र्वरेण्य मिति सावित्र्यां सवितु रुपास्यत्वं शिवस्य प्रतिपादितम् । त द्धि 'येन सूर्य

अथ आकाशाधिकरण प्राणाधिकरणे

सर्वज्ञत्वादिधर्मकस्य परब्रह्मणः शिवस्य परममङ्गलाकार मुपास्यरूप मभिधाय, तल्लक्षणस्य नामरूढिवशा दन्यत्राऽतिव्याप्तिशङ्काया मधिकरण मारभ्यते ॥

- - - - - - - - - - -

स्तपति तेन सेद्ध' इति मन्त्रेण सवितु रन्तःप्रवर्तया सगाप्रयणीयं तदन्तर्यामिणि नाऽसङ्गतम्। सावित्रीमन्त्रार्थ स्तु ब्रह्मार्थीगतेत्वेन वैष्णवपथप्रतिबन्धे सप्रपञ्च मुपपादित इति नेह ॥

  

इद मधिकरणं शुद्धाद्वैतिनां पक्षे न सङ्गच्छते। अत्र हि परं ब्रह्म हिरण्मयरूप मिति निर्धारितम्। त त्कथं निर्गुणे तत्त्वे समनुगच्छेत? अथ कल्पित मिति वा, स्तुत्यर्थ मिति वा रूपवत्त्वं ब्रह्मणः समर्थयितु मिष्येत, तत एव वेदप्रामाण्येऽविश्वासा दास्तिक्य मेव भज्येतेति दिक् ॥

ए वमेवं श्रीभाष्यकृता मपि पक्षे विरुद्ध मेव। तथाहि, प्रकृते परमेश्वरो हिरण्यवर्णतया निर्णीत इति व्यक्तम्। स कथं काष्ण्र्यायसवर्णो रमेश ए वेति वक्तु मुज्यते? किञ्च आन्तरा दित्यविद्योपास्यतत्त्वनिर्धारणार्थं प्रवृत्तायां महोपनिषदि समाम्नातानि भूतपतित्वोमापतित्वा म्बिकापतित्वादीनि शिवाऽसाधारणा न्यपि लिङ्गानि रमापतौ न कथ मपि सङ्गमयितुं युज्येरन्। अत एव श्रीभाष्यकारैः श्रुतप्रकाशिका - वेदान्तसार - वेदान्तदीपादिकारैः स्वानुगैः सह मौन मे वाऽवलम्ब्य पलायन मेव शरणीकृत मि त्यलम् ॥

## इति अन्तरधिकरणम्

## आकाशाधिकरण प्राणाधिकरणे

सङ्गतिं सूचय नुत्तराधिकरण मवतारयति सर्वज्ञत्वादीति—गतेऽधिकरणे परब्रह्मणः शिवस्य योग्य मुपास्यं रूपं यद्वाक्य मवलम्ब्य प्रदर्शितम्, तत्र तस्य तात्पर्ये व्यवस्थापिते तद्वाक्यानन्तरं पठितयो राकाशप्राणवाक्ययोः शिवे तात्पर्यनिरूपणं क्रियत इति प्रसङ्गरूपा सङ्गति रिह विषयवाक्यक्रममूला विवक्षिता। तयो र्ब्रह्मणि तात्पर्ये निरूपिते मन्दाना माशङ्का प्राणाकाशयो र्ब्रह्म लक्षणाऽतिव्याप्तिरूपाऽपि निराकृता भवती त्याशये नातिव्याप्तिशङ्काया मि त्युक्तम्। शिवस्य योग्यं रूप मिति सूचयितुं सर्वज्ञत्वादिधर्मकस्येति, परममङ्गलास्पद मिति च विशेषणे। सर्वो त्तरसौन्दर्यशालि रूपं योग्यम्। प्रायो विरूपेषु भवन्ति दोषाः। 'य त्राकृति स्तत्र गुणा वस न्तीति माभदिकशास्त्रवचना दित्याशयः ॥

## आकाश स्तल्लिङ्गात् ॥ १–१–२३ ॥

## अत एव प्राणः ॥ १–१–२४ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः — ‘सर्वाणि ह वा इमानि भूतानि आकाशा देव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति । सर्वाणि ह वा इमानि भूतानि प्राण मे वाभिसंविशन्ति । प्राण मभ्युज्जिहत’ इति ॥

अत्र सकलभूतोत्पत्तिप्रलयकारणप्रतिपादकौ प्राणाकाशशब्दौ परमेश्वर प्रतिपादनपरौ ? किं वा भूताकाशप्राणवायुप्रतिपादनपरौ ? इति सन्देहः ॥

‘प्राणा द्ध्येव ख ल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति प्राणं प्रय न्त्यभिसंविशन्ति’ इत्यादिश्रुतेः ‘आकाशा द्वायु’ रित्यादिश्रुते श्च प्राणाकाशयो रपि सकलभूतकारणत्वावगमा त्ता वे वात्र प्रतिपाद्या विति प्राप्ते ब्रूमः ॥

प्राणाकाशशब्दवाच्यः परमेश्वर एव, सर्वकारणत्वादितल्लिङ्गात् । न ह्यनयोः सर्वकारणत्वादिकं संभवति । तत्राऽनन्दरूपस्य ब्रह्मणः कारणत्ववादे

---

इदं सूत्रद्वय मधिकरणद्वयार्थम् । तत्रोत्तराधिकरणं पूर्वाधिकरणन्यायातिदेशार्थम् । ततः पूर्वपक्षसिद्धान्तयो रेकरूपत्वा द्युगपदुपन्यासार्थं सूत्रद्वयं युगप ल्लिखितम् । तथैव विषयवाक्यद्वय म प्युदाहरति छान्दोग्य इति — संशयं दर्शयति अत्रेति — छान्दोग्ये ‘अस्य लोकस्य का गति रित्याकाश इति होवाच । सर्वाणि भूता न्याकाशा देव समुत्पद्यन्ते । सर्वाणि भूतानि प्राण मे वाऽभिसंविश’ न्तीत्यादिविषयवाक्ययोः श्रुतौ प्राणाकाशशब्दौ प्राणवायुभूताकाशपरा वुत परमेश्वरप्रतिपादका विति संशयः । प्राणाकाशश्रुती सर्वभूतोत्पत्त्यादिकारणत्वरूपब्रह्मलिङ्गं च संशयबीजे इत्यर्थः । ‘प्राणा द्ध्येव ख ल्विमानि भूतानि जायन्त’ इत्यादिना ‘आकाशा द्वायु’ रित्यादिना च प्राणाकाशयो रपि सर्वभूतोत्पत्त्यादिकारणत्वश्रवणात् प्राणाकाशशब्दयोः प्राण वायौ भूताकाशे च रूढत्वा च्च तत्प्रतिपादका वेवेति पूर्वपक्षः ॥

सिद्धान्त माह ब्रूम इति — आकाशस्य भूतान्तर्वर्तित येति शुद्ध मिश्र मलिनप्रपञ्चा

## आकाश स्तल्लिङ्गात् ॥ १–१–२३ ॥

## अत एव प्राणः ॥ १–१–२४ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः — 'सर्वाणि ह वा इमानि भूतानि आकाशा देव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति। सर्वाणि ह वा इमानि भूतानि प्राण मे वाभिसंविशन्ति। प्राण मभ्युज्जिहत' इति॥

अत्र सकलभूतोत्पत्तिप्रलयकारणप्रतिपादकौ प्राणाकाशशब्दौ परमेश्वर प्रतिपादनपरौ ? किं वा भूताकाशप्राणवायुप्रतिपादनपरौ ? इति सन्देहः॥

'प्राणा द्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति प्राणं प्रय न्त्यभिसंविशन्ति' इत्यादिश्रुतेः 'आकाशा द्वायु' रित्यादिश्रुते श्च प्राणाकाशयो रपि सकलभूतकारणत्वावगमा त्ता वे वात्र प्रतिपाद्या विति प्राप्ते ब्रूमः॥

प्राणाकाशशब्दवाच्यः परमेश्वर एव, सर्वकारणत्वादितल्लिङ्गात्। न ह्यनयोः सर्वकारणत्वादिकं संभवति। तत्राऽनन्दरूपस्य ब्रह्मणः कारणत्ववादे

---

इदं सूत्रद्वय मधिकरणद्वयार्थम्। तत्रोत्तराधिकरणं पूर्वाधिकरणन्यायातिदेशार्थम्। ततः पूर्वपक्षसिद्धान्तयो रेकरूपत्वा द्युगपदुपन्यासार्थं सूत्रद्वयं युगप ल्लिखितम्। तथैव विषयवाक्यद्वय म प्युदाहरति छान्दोग्य इति — संशयं दर्शयति अत्रेति — छान्दोग्ये 'अस्य लोकस्य का गति रित्याकाश इति होवाच। सर्वाणि भूता न्याकाशा देव समुत्पद्यन्ते। सर्वाणि भूतानि प्राण मे वाऽभिसंविश' न्तीत्यादिविषयवाक्ययोः श्रुतौ प्राणाकाशशब्दौ प्राणवायुभूताकाशपरा वुत परमेश्वरप्रतिपादका विति संशयः। प्राणाकाशश्रुती सर्वभूतोत्पत्त्यादिकारणत्वरूपब्रह्मलिङ्गं च संशयबीजे इत्यर्थः। 'प्राणा द्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिना 'आकाशा द्वायु' रित्यादिना च प्राणाकाशयो रपि सर्वभूतोत्पत्त्यादिकारणत्वश्रवणात् प्राणाकाशशब्दयोः प्राण वायौ भूताकाशे च रूढत्वा च्च तत्प्रतिपादका वेवेति पूर्वपक्षः॥

सिद्धन्त माह ब्रूम इति — आकाशस्य भूतान्तर्वर्तित येति शुद्ध मिश्र मलिनप्रपञ्चा

प्रतिपाद्यते ज्योति रिति। अथवा 'अन्तःपुरुषे ज्योति' रिति पुरुषान्तर्वर्तितया जाठराऽग्नि रिति पूर्वपक्षः ॥

सिद्धान्त स्तु, 'परो दिवो ज्योति' रिति सर्वोत्तरं परं ज्योतिः पर

पन्नम्। तस्योपरि तद्बहिर्भूततया वर्तमाने हि ततः पर इ त्युच्यते। न हि वृक्षस्योपरि भ्राम्य न्निव वृक्षकोटरे स्थितोऽपि पक्षी वृक्षा त्पर इ त्युच्यते। न च परमेश्वरः परस्वर्ग स्योपरि ततो बहिर्भूतो वर्तते। किंतु तन्मध्यगते दिव्यमन्दिरे। परस्वर्गवाचित्वे चात इति विशेषण मनुपपन्नम्॥

अपरस्वर्गवाचीति पक्षो प्यसङ्गत एव। मायाकार्यस्य उन्मनान्तलोकनिवहस्य चोपरि परमाकाशमये परस्वर्गे वर्तमानस्य परमेश्वर स्यापरस्वर्गा त्परत्वोक्तत्या कस्यचि द प्यतिशयस्याऽलाभात्। तस्मा दिहापरान्तरिक्षा त्परत्व माश्रयणीयम्। त दादित्य एव संगच्छते न ब्रह्म णीति॥

अथ वेति — अ त्रेद माकूतम्। सत्यं ज्योति रिह प्रकृतं ब्रह्म न भव तीति। कि तु आदित्य इत्यपि न युक्तम्। अपि तु जाठराग्नि रि त्येव युक्तम्। 'इद वाव त द्य दिद मन्तः पुरुषे ज्योति' रिति श्रुत्या तस्य ज्योतिःपदस्य जाठराग्निपरत्वेन व्याख्यातत्वात्। एव मादित्यो जाठरो वाग्निः परं ज्योतिः न परमेश्वर इति प्राप्ते सिद्धान्तयति सिद्धान्त स्त्विति॥

सर्वोत्तर मिति हेतुगर्भं विशेषणम्। सकलसंसारमण्डलातीतस्थानवृत्तित्वा द्दिवः पर इ त्यनेन प्रतिपादितं ज्योतिः परमेश्वरः। आदित्यजाठरयो स्तदसंभवा दिति भावः। कथं दिवः पर इत्यस्य सर्वोत्तरत्वपरताऽवसीयत इति चे दुच्यते। इदं ज्योति स्तावद् द्युसम्बन्धप्रत्यभिज्ञाना त्प्रा क्सर्वाणि भूतानि एकं पादं कृत्वा पादत्रयात्मना निरूपितः पुरुष इति श्रूयते। तस्य च पुरुषसूक्ते 'त्रिपा दूर्ध्व उदै त्पुरुषः। पादोऽस्येहाभवा त्पुन' रिति सर्वप्राणिनिकायापेक्षया ऊर्ध्ववर्तित्व मवगतम्। अयं सर्वोत्तरत्वहेतु श्चरणाभिधाना दिति सूत्रांशेन चरणत्रयरूपस्य प्रकृतस्य पुरुषस्य ज्योतिःपदे नाभिधाना दित्यर्थस्य विवक्षितत्वा ल्लभ्यते॥

परं ज्योति रितिपदविशेषणं 'परं ज्योति रुपसंपद्य स्वेन रूपे णाभिनिष्पद्यत' इति श्रुतौ परमेश्वरेऽपि ज्योतिःपदप्रयोगोऽस्तीति ज्ञापनार्थम्। पराऽपरज्योतिषोः परज्योतिष एवात्र ग्रहण मुचित मिति ज्ञापनार्थं च॥

ननु, ज्योतिःशब्द श्चक्षुर्वृत्ते रवभासके तेज स्येव वर्तत इतिचे न्न। 'वा चै वाऽयं ज्योतिषा स्ते कर्म कुरुत' इति गाढान्धकारे लोक स्यासनादिव्यवहारसाधनभूतायां वाचि 'मनो ज्योति र्जुषता माज्य' मिति 'घृतं पिबतां मनःप्रकाशक' मित्यवभासकमात्रे ज्योतिःपद प्रयोगदर्शनात्। 'त मेव भान्त मनुभाति सर्वं तस्य भासा सर्व मिदं विभा' तीति सर्वावभास

प्रतिपाद्यते ज्योति रिति । अथवा 'अन्तःपुरुषे ज्योति ' रिति पुरुषान्तर्वर्ति तया जाठराऽग्नि रिति पूर्वपक्षः ॥

सिद्धान्त स्तु, 'परो दिवो ज्योति ' रिति सर्वोत्तरं परं ज्योतिः पर

पन्नम् । तस्योपरि तद्बहिर्भूततया वर्तमाने हि ततः पर इ त्युच्यते । न हि वृक्षस्योपरि भ्राम्य न्निव वृक्षकोटरे स्थितोऽपि पक्षी वृक्षा त्पर इ त्युच्यते । न च परमेश्वर. परस्वर्ग स्योपरि ततो बहिर्भूतो वर्तते । किन्तु तन्मध्यगते दिव्यमन्दिरे । परस्वर्गवाचित्वे चात इति विशेषण मनुपपन्नम्॥

अपरस्वर्गवाचीति पक्षो प्यसङ्गत एव । मायाकार्यस्य उन्मनान्तलोकनिवहस्य चोपरि परमाकाशमये परस्वर्गे वर्तमानस्य परमेश्वर स्यापरस्वर्गा त्परत्वोक्तत्या कस्यचि द प्यतिशयस्याऽ लाभात् । तस्मा दि हापरान्तरिक्षा त्परत्व माश्रयणीयम् । त दादित्य एव संगच्छते न ब्रह्म णीति ॥

अथ वेति — अ त्रेद माकूतम् । सत्यं ज्योति रिह प्रकृतं ब्रह्म न भव तीति । कि तु आदित्य इत्यपि न युक्तम् । अपि तु जाठराग्नि रि त्येव युक्तम् । 'इद वाव त द्य दिद मन्तः पुरुषे ज्योति ' रिति श्रुत्या तस्य ज्योतिःपदस्य जाठराग्निपरत्वेन व्याख्यातत्वात् । एव मादित्यो जाठरो वाग्निः परं ज्योतिः न परमेश्वर इति प्राप्ते सिद्धान्तयति सिद्धान्त स्त्विति ॥

सर्वोत्तर मिति हेतुगर्भं विशेषणम् । सकलसंसारमण्डलातीतस्थानवृत्तित्वा द्दिवः पर इ त्यनेन प्रतिपादितं ज्योतिः परमेश्वरः । आदित्यजाठरयो स्तदसंभवा दिति भावः । कथ दिवः पर इत्यस्य सर्वोत्तरत्वपरताऽवसीयत इति चे दुच्यते । इदं ज्योति स्तावद् द्युसम्बन्धप्रत्यभिज्ञाना त्प्रा क्सर्वाणि भूतानि एकं पादं कृत्वा पादत्रयात्मना निरूपितः पुरुष इति श्रूयते । तस्य च पुरुषसूक्ते 'त्रिपा दूर्ध्व उदै त्पुरुषः । पादोऽस्येहाभवा त्पुन ' रिति सर्वप्राणिनिकायापेक्षया ऊर्ध्ववर्तित्व मवगतम् । अयं सर्वोत्तरत्वहेतु श्चरणाभिधाना दिति सूत्रांशेन चरणत्रयरूपस्य प्रकृ तस्य पुरुषस्य ज्योतिःपदे नाभिधाना दित्यर्थस्य विवक्षितत्वा ल्लभ्यते॥

परं ज्योति रितिपदविशेषणं 'परं ज्योति रुपसंपद्य स्वेन रूपे णाभिनिष्पद्यत ' इति श्रुतौ परमेश्वरेऽपि ज्योतिःपदप्रयोगोऽस्तीति ज्ञापनार्थम् । पराऽपरज्योतिषोः परज्योतिष एवात्र ग्रहण मुचित मिति ज्ञापनार्थं च ॥

ननु , ज्योतिःशब्द श्चक्षुर्वृत्ते रवभासके तेज स्येव वर्तत इतिचे न्न । 'वा चै वाऽयं ज्योतिषा स्ते कर्म कुरुत ' इति गाढान्धकारे लोक स्यासनादिव्यवहारसाधनभूतायां वाचि 'मनो ज्योति र्जुषता माज्य ' मिति 'घृतं पिबतां मनःप्रकाशक ' मित्यवभासकमात्रे ज्योतिःपद प्रयोगदर्शनात् । 'त मेव भान्त मनुभाति सर्वं तस्य भासा सर्व मिदं विभा ' तीति सर्वावभास

मेश्वर एव। पूर्वत्र ' पादोऽस्य विश्वा भूता 'नीति ज्योतिषोऽस्यैकांशतया विश्व भूताना मभिधानात्। नैत त्संभवति जाठराग्निसूर्ययोः, परिच्छिन्नत्वात्॥

पूर्वं 'गायत्री वा इदं सर्वं भूत' मिति सर्वात्मतया गायत्री प्रतिपाद्यते। प्रकरणा त्तदे कांशत्व मेव प्रपञ्चस्य। 'पादोऽस्य विश्वा भूता'नीति श्रुति राहे त्यत आह॥

## छन्दोभिधाना न्नेतिचे न्न, तथा चेतोऽर्पण निगदा त्तथाहि दर्शनम् ॥ १-१-२६ ॥

पूर्वं ' गायत्री वा इदं सर्वं भूत 'मिति छन्दसोऽभिधानात् तस्यैवात्राभि धानं न परमेश्वर स्येति चेत् नैतत् संभवति गायत्र्याख्यस्य छन्दोमात्रस्य

---

कतया समस्तसाक्षिणि परमेश्वरे ज्योतिःपदप्रयोगस्य समुचितत्वा च। एवं दिवःपरत्वं ज्योतिष श्चेति य दुभयं पूर्वपक्षसाधकतयाऽभिमतं त देव सिद्धान्तसाधक मिति विशेषणमुखेन दर्शितम्॥

अथ चरणाभिधाना दिति सूत्रांशं हेत्वन्तरत्वेन व्याचष्टे पूर्वं त्रेति — एकांशत येति — सौत्रचरणशब्दस्य भावप्रधानतया व्याख्यानम्। तथाऽत्र सर्वेषां भूतानां ज्योतिरेकां शत्वेन प्रतिपादनात् ज्योतिः परमेश्वर इत्यर्थः॥

परिच्छिन्नत्वा दिति — तयोः परिच्छिन्नत्वे तत्र व्यवस्थितस्य परमेश्वरस्याऽपि सार्वा त्म्यं न संभवे दिति भावः॥

उत्तरसूत्रं तदुद्भाव्यशङ्काप्रदर्शनपूर्वक मवतारयति पूर्वं मिति — प्रकरणा दिति — षड्विधा गायत्री त्येतदनन्तरं 'त देत दृचाऽभ्यनूक्त ' मित्युक्तार्थविषयत्वे नावतारितायाः ' एता वा नस्य महिमा। अतो ज्यायगूंश्च पुरुषः ' इत्यादिकऋच स्तदेकविषयस्य ' यद्वै त द्ब्रह्म ' इत्या द्यनन्तरसन्दर्भस्य च गायत्रीविषयत्व मावश्यक मिति श्रुतिवाक्ये नैव संघटितं प्रकरण मिद मनन्यथासिद्धम्। अत स्तदनुसारेण सर्वभूतपादत्व मपि स्तावकत्वेन नेतव्यम्॥

तस्मा त्प्रकृतस्य छन्दस एव ' तावा न ' स्येत्यादिसंदर्भेभिधानात्, द्युसंबन्धेन प्राक्प्र स्तुतः परमेश्वरः प्रत्यभिज्ञाप्यत इ त्येत दयुक्त मिति शङ्कार्थः॥

सूत्रगतेन नञा विवक्षितां छन्दोभिधान स्याऽनुपपत्ति माह नैत दिति — एत च्चरणा भिधाना दिति पूर्वसूत्रे निगदितं ' तावा न ' स्येति मन्त्रश्रुतं सर्वभूतात्मकत्वं छन्दोमात्रस्य

सर्वभूतात्मकत्वम्। किंतु गायत्रीसादृश्यादनुसंधानोपदेशः परमेश्वरस्य क्रियते। यथा गायत्री षडक्षरैश्चतुर्भिः पादैश्चतुष्पदा, तथा ब्रह्माऽपि चतुष्पा दिति। तथाहि, अन्यत्राऽपि छन्दोभिधायी शब्दः सादृश्या दर्था न्तरे प्रयुज्यमानो दृश्यते। यथा संवर्गविद्यायाम, 'ते वा एते पञ्चाऽन्ये पञ्चाऽन्येदश सन्त स्तत्कृत' मित्युपक्रम्य, 'सैषा विरा' डित्युक्तम्। तथाच सर्वात्मकतया परमेश्वरस्य लिङ्गेन गायत्रीप्रकरणबाधः। अतः परमेश्वर एव ज्योति रिति॥

## भूतादिपादव्यपदेशोपपत्ते श्चैवम् ॥१-१-२७॥

भूतपृथिवीशरीरहृदये श्चतुष्प देति व्यपदेशो न गायत्र्याख्ये छन्द स्युपपद्यते। परमेश्वर ए वोपपद्यते॥

- - - -

गायत्र्यभिधानस्य न संभव तीत्यर्थ.। कि तु गायत्रीति — तथेति शब्दो गायत्रीसादृश्यपर'। चेतोर्पण मनुसंधानं निगद उपदेश इत्यर्थ·। तस्मा द्गायत्रीसादृश्यानुसंधानार्थं परमेश्वरे गौण्या वृत्त्या गायत्रीशब्द आम्नात इति यावत्॥

गायत्रीसादृश्य मुपपादयति यथेति — लिङ्गे नेति — ब्रह्मश्रुत्यो र प्युपलक्षणम्। प्राथमिकत्वा ल्लिङ्गस्य विशिष्य ग्रहणम्। गायत्रीप्रकरणबाध इति — गायत्रीपदस्य गौणवृत्त्या परमेश्वरपरत्वग्रहणात्। 'गायत्री वा इदगुं सर्वं भूत' मित्यादिसन्दर्भस्य गायत्रीप्रकरणत्वं बाधित मित्यर्थः। एवं गायत्रीप्रस्तावनसन्दर्भैकवाक्यतया तदुपरितनसन्दर्भे स्थितैः श्रुतिलिङ्गै र्गायत्रीशब्द विवक्षितः परमेश्वर एव, न छन्द इति निरूपितम्॥

अथ तत्सन्दर्भगतलिङ्गबलेना प्ययं मर्थः सिध्य तीत्यर्थेत्वेऽनोत्तरसूत्र मवतारयति॥

ननु, सर्वात्मत्वानुरोधेन गायत्रीपदं गौणवृत्त्याश्रयणेनाऽस्वारस्यं नीतम्। त न्न युज्यते किंतु उपक्रमस्थगायत्रीपदानुरोधेनैव सर्वात्मत्व मौपचारिकं नेय मि त्याश ङ्क्याह भूता दीति — भूतपृथिवीशरीरहृदयानि निर्दिश्य 'सैषा चतुष्प' देत्याह। एवं भूतादिपादचतुष्टय वत्त्वं वर्णात्मकगायत्रीछन्दसि नोपपद्यते। किंतु परमेश्वर एव। तत श्च ज्योतिःशब्दाभिधेयः पर मेश्वर एव, न गाय त्रीत्यर्थः। चकारेण पुरुषसूक्तगतस्य 'एतावा न' स्येति मन्त्रस्य ब्रह्म

पुन राशङ्क्य परिहरति ॥

## उपदेशभेदा न्नेतिचे न्नोभयस्मि न्न प्यविरोधात् ॥१-१-२८॥

ननु ' पादोऽस्य विश्वा भूतानि त्रिपा दस्यामृतं दिवि ' इत्यत्र द्युसंबन्ध प्रत्यभिज्ञानात् ज्योतिर्वाक्ये परमेश्वरः प्रतिपाद्यत इति न सार मुपदेशभेदेन विरोधात् प्रत्यभिज्ञानासिद्धेः । ' त्रिपा दस्याऽमृतं दिवि ' इति ' परो दिवो ज्योति ' रिति विभक्तिभेदे नोपदेशभेदः । अतो विरोध इतिचे न्न । उभय त्रापि विरोधाभावात् । यथा वृक्षाग्रे श्येनः , वृक्षाग्रा त्परतः श्येन इति व्यप देशे उभयत्रापि वृक्षा त्परत्व मेव विवक्षित मेव मत्रोभयत्रापि दिवः परत्व मेव विवक्षितम् ॥

---

परत्वनिर्णयात् । ' य द्वै तद्ब्र ' ह्मेति ' इदं वावत ' दिति प्रकृतस्य ब्रह्मत्वप्रतिपादका द्वाक्या द्गायत्र्युपासनाङ्गद्वारपालोपासनाविधौ ' ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपा ' इति प्राणादीनां हृदयकमलान्तर्ज्योतिर्व्यपरमाकाशाख्यस्वर्गलोकरूपभावलिङ्गात्मकपरमेश्वरराजधानीद्वार पालकत्वकीर्तने ब्रह्मपुरुषत्वोक्तिलिङ्गा च्चेत्यर्थः। एवं च औपक्रमिकैकप्रमाणापेक्षया तदुत्तरेषा मपि बहुप्रमाणानां बलवत्त्वाद्भूतादिपादत्वमुखानेकप्रमाणानुसारेण एकस्या गायत्रीश्रुते रेव गायत्र्य नुगतब्रह्मलक्षकत्वं न्याय्य मिति सिद्धम् ॥

ननु, परमेश्वर स्यैव प्रकृतत्वेऽपि ' त्रिपा दस्यामृतं दिवि ' इति पूर्ववाक्ये दिवोधिकर णत्वेन निर्देशा दिह दिवः पर इ त्यवधित्वेन निर्देशा च्च उपदेशस्य भिन्नत्वेन पूर्ववाक्योक्तः पर मेश्वर एवेह न प्रत्यभिज्ञायत इति शङ्कानिराकरणपरत्वे नोत्तरसूत्र मवतारयति पुन राशङ्क्येति ॥

सूत्रविवक्षितस्य परिहारांश स्याशयं विवृणोति उभयत्रेति —लोके वृक्षाग्रनिलीने श्येने ' वृक्षाग्रे श्येनः ', ' वृक्षाग्रा त्परतः श्येनः ' इत्युभयथाऽपि व्यवहारदर्शनेन दिवि स्थित एव परमेश्वरे दिवि , दिवः पर इति च व्यपदेशो न विरुध्यत इति भावः ॥

अनेन लिङ्गेन परमेश्वर एव पुरुषसूक्तोदितः पुरुष इति सिद्धम् । पादोऽस्य विश्वा भूतानीत्यत्रापि श्रवणात् । अतो निजकांशराभासमकलप्रपञ्च दिवि दीप्यमानं परं ज्योतिः परमेश्वर इति निर्णयः ॥

इति ज्योतिरधिकरणम्

अथ इन्द्रप्राणाधिकरणम् १२

भगवत्यानितृणञ्चले साक्षा दुपास्यतया निर्दिष्टस्य परमेश्वरस्य नामिभ लाभकारणे विश्वात्म कत्व मुक्तम् । तदात्मतया तदन्येषा मुपास्यत्व नाऽन्यथेति प्रतिपादयितु मिद मधिकरण मारभ्यते ॥

## प्राण स्तथानुगमात् ॥१–१–२९॥

अस्य कौषीतकोपनिषदि विषयः श्रूयते 'प्राणोऽस्मि प्रज्ञात्मा तं मा मायु रमृत मित्युपा'स्वेतीन्द्रवचनम् ॥

---

अनेन लिङ्गेनेति — सर्वभूतपादत्वलिङ्गेन यथा गायत्री परमेश्वर इति सिद्ध तथैव पुरुषसूक्तोक्तः पुरुषोऽपि परमेश्वर एवेति पर्यवसित मित्यर्थः ॥

  

यद्यपि पुंसूक्तं विष्णुपरीकर्तुं श्रीभाष्यकृद्भिः, सानुगै र्अन्यो विस्तरीकृतः तथाऽपि ब्रह्म पर्यायवैष्णवपदप्रतिषेधे परावलम्बिताष्टहेतुदुष्टत्वनिरूपणपूर्वकं मष्टादशहेतुभिः पुंसूक्त मस्माभिः शिवपर मेवेति निर्धारित मिति नेह पुनः ॥

इति ज्योतिरधिकरणम्

अथ इन्द्रप्राणाधिकरणम्

प्रसक्तानुसक्त्या मध्ये निबद्धा न्यधिकरणानि विहाय 'अन्त स्तद्धर्मोपदेशा' दित्यधिकर णेन सङ्गतिं दर्शय न्नुत्तराधिकरण मवतारयति भगव दिति ॥

'तस्मा दुद्गीथ' इ त्यन्तरादित्यविद्यावाक्ये नोद्गातृकर्तृकाणा मिन्द्रादिविषयस्तोत्राणां परमेश्वरविषयत्वकथनेन परमेश्वर स्येन्द्राद्यात्मत्व मुपवर्णितम् । यथा स्तोत्रीयाणा मिन्द्रादि महिमप्रतिपादिनीना मृचां तदात्मभूतपरमेश्वरपर्यन्तत्वं तथै वेन्द्राद्युपासनाविषयश्रुतीना म प्युप पद्यत इति दृष्टान्तसङ्गति रत्र विवक्षिता । प्रतर्दनाख्यायिकायाम् 'प्रतर्दनो ह दैवोदासि रिन्द्रस्य प्रियं धा मोपजगा' मेत्यारभ्य इन्द्रस्य वचन मिदं श्रूयते 'प्राणोऽस्मि' इत्यादि । तत्र त्वाष्ट्र

अत्रोपासनाविषयत्वेन प्राणशब्दसामानाधिकरण्येन निर्दिष्ट इन्द्रो वा ? परमेश्वरो वा ? इति संशयः ॥

इह 'प्राणोऽस्मि प्रज्ञात्मा तं मा' मिति प्राणशब्दस्य साक्षा दिन्द्रेण सामानाधिकरण्य मवगम्यते। मा मुपा स्वेति तद्विषय ए वोपासनाविधिः श्रूयते। तस्य प्राणत्वं वृष्टिद्वारा सकलरक्षकत्वा दुपपद्यते। सकलोपास्यत्वं च परमैश्वर्यवत्त्वा दुपपन्नम्। तथाहि श्रुतिः, 'इन्द्रो राजा जगतो य ईश' इत्यादि। तस्मा दिन्द्र ए वोपास्यतया निर्दिश्यत इति पूर्वपक्षः ॥

सिद्धान्तस्तु परमेश्वर इति। कुतः ? आनन्दाऽजराऽमृतप्रज्ञादीनां तदसा धारणधर्माणा मस्मि न्प्राणशब्दनिर्दिष्टेऽनुगमात्। 'एष प्राण एव प्रज्ञात्मा नन्दो जरोऽमृत' इति। 'इन्द्रो रा' जेति श्रुता विन्द्रशब्द ईश्वरविषयः प्रक रणा दवगम्यते ॥

---

वधादीना मिन्द्रलिङ्गाना मानन्दादीनां ब्रह्मलिङ्गानां च बलाबलाऽनवधारणा त्संशय इ त्याह अत्रेति ॥

पूर्वपक्ष माह इहेत्यादिना — तद्विषय एवेति — तत्र 'मा मेव विजानी' हीत्यादि नाऽवधारणेन स्वान्तर्यामिविषयत्वव्यावर्तनपूर्वकं स्वस्यै वोपास्यत्वप्रतिपादना दिति भावः। तत स्तद्विरोधा दानन्दाऽजराऽमृतत्वा न्य पीन्द्र ए वाऽपेक्षिकतया योजनीया नीत्याशयः। तस्य प्राणत्व मिति — प्राणय तीति व्युत्पत्त्या युज्यत इ त्यर्थः ॥

सिद्धान्त माह परमेश्वर इति — प्राणोऽस्मीति निर्दिष्टः प्राणः परमेश्वर एवेत्यर्थः। 'हित तमं मन्यस' इत्युपक्रम इ वोपसंहारेऽ प्यानन्दोऽजरोऽमृत इति परमेश्वरधर्माणा मवगम्यमानत्वा दित्यर्थः ॥

ननु 'इन्द्रो राजा' इति श्रुत्या इन्द्रस्य सकलजगदीश्वरत्वावगमेन सकलोपास्यत्वं सिद्ध्य तीत्याशङ्क्य नेयं श्रुति र्महेन्द्रविषया। किंतु महेश्वरविषयै वेत्याह तदन्तर्यामिपरमेश्वरविषयेति 'इन्द्र स्याऽत्मानं दशधा चरन्त' मित्यादिपूर्वापरमन्त्रैः प्रकरणस्य तदन्तर्यामिपरत्वावगमा दिति भावः ॥

आशङ्क्य परिहरति ॥

न वक्तु रात्मोपदेशा दिति चे दध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ १-१-३० ॥

नाय मुपास्यः परमेश्वरः । उपक्रमे ' मा मेव विजानीहि । त्रिशीर्षाणं त्वाष्ट्र मह्न ' मित्यादिना प्रज्ञातजीवमात्र स्येन्द्र स्योपास्यत्वोपदेशात् । अत उपसंहार स्तदनुगुणो नेतव्य इति चे न्नैत दुचितम् ॥

उपक्रमा दारभ्याऽस्मि न्प्रकरणेऽध्यात्मसंबन्धस्यपरमेश्वरधर्मस्यबाहुल्यात् तथा हि, उपक्रमे तावत् ' यं त्वं मनुष्याय हिततमं मन्यसे ' इति हित तमोपासनं प्रारब्धम् । त त्तावत् परमेश्वरधर्मः । तदुपासनस्यैव मोक्षसाध नस्य हिततमत्वात् । मध्ये च ' एष ह्येव साधु कर्म कारयति तं य मेभ्यो लोकेभ्य उन्निनीषते एष ए वाऽसाधु कर्म कारयति तं य मधो निनीषते ' इति सर्वकर्मकारयितृत्वं श्रूयते । तथा ' त द्यथा रथ स्यारेषु नेमि रर्पिता नाभा वरा अर्पिता एव मे वैता भूतमात्राः प्रज्ञामात्रा स्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता ' इति जडचेतनात्मकजगत्प्रपञ्चाधारत्वं श्रूयते । त च्च परमेश्वर धर्मः । अतः परमेश्वरधर्मबाहुल्या दि होपास्य इन्द्रो न भवति ॥

---

' मा मेव विजानी 'हीत्यवधारणेन वक्तृविपर्यासाऽय मुपदेश इति शङ्कानिराकरणार्थत्वे नोत्तरसूत्र मवतारयति आशङ्क्येति ॥

आत्मोपदेशा दितिहेतोः मा मेव विजानीहीति सावधारणवाक्येन ' त्रिशीर्षाणं त्वाष्ट्र ' मित्यादिना स्वचरितोपन्यासेन च स्वस्यै वोपास्यत्वे नोपदेशा दित्यर्थः । उपक्रमोपसंहारापेक्षया अवधारणश्रुत्युपबृंहितं मध्यगतत्वाप्त्रयवादिलिङ्गबाहुल्यं प्रबल मिति भावः ॥

उपक्रमा दारभ्येति — एवं च परमेश्वरधर्माणा मेव बाहुल्या दिन्द्रलिङ्गानां प्राबल्य मसिद्ध मित्यर्थः । मा मेव विजानीहीति वचनसार्थक्यनिर्वाहार्थत्वे नोत्तरसूत्र मवतारयति कथ मिति — जीवत्वा द नुपास्योपीति — ' सर्वं मन्य त्परित्य ' ज्येति श्रुते रिति भावः ॥

कथ मिन्द्रो जीवत्वा दनुपास्योऽपि स्वविषय मुपासन मुपदिश ती त्याशङ्काया माह ॥

**शास्त्रदृष्ट्या तूपदेशो वामदेववत्** ॥ १–१–३१ ॥

'अनेन जीवे नात्म नानुप्रविश्य नामरूपे व्याकरवा' णीत्यादि शास्त्रदृष्ट्या सर्वशब्दवाच्यत्वा त्परमेश्वरस्य स्वशरीरकतया स्वशब्दवाच्यं पर मेश्वर मे वोपास्यत्वे नोपदिष्टवा निन्द्रः । अत इन्द्रशब्दे नोपदेशः परमेश्व रस्य । दृष्टान्त माह — वामदेववत् । वामदेवो हि स्वस्य परमेश्वरात्मत्वदृष्ट्या 'अहं मनु रभवं सूर्य' श्च इत्युपदिदेश । त द्व दिन्द्रोपदेशः ॥

अथवा वेदान्तविज्ञानोपलब्धया ब्रह्मात्मसामरस्यभावनया षट्स्थलो

---

अनेनेति — 'अनेन जीवे नात्म नानुप्रवि' श्येति जीवशरीरकेण स्वात्मनाऽनु प्रवेशोक्ते स्तदीयनामरूपव्याकरणस्य स्वात्मपर्यन्तत्वावगत्यर्थत्वा न्नामरूपव्याकरणश्रुत्या परमेश्व रस्य सर्वशब्दवाच्यत्वं सिध्य तीत्याशयः । आदिशब्देन 'ऐतदात्म्य मिदगं सर्वं' मि त्युप संहारगतवाक्यं 'य आत्मनि तिष्ठ' न्नित्यादिश्रुत्यन्तरं च सर्वशब्दवाच्यत्वसमर्पकसार्वात्म्य प्रतिपादकं गृह्यते ॥

शास्त्रदृष्ट्येति — शास्त्रमूला दृष्टिः शास्त्रदृष्टिः । सार्वात्म्यप्रतिपादकशास्त्रमूला स्वात्म भूतपरमेश्वरानुसंधानमूला चेत्यर्थः । स्वशरीरकत येति — इन्द्रः स्वेन प्रयुक्तस्य मा मिति शब्दस्य स्वात्मभूतपरमेश्वरपर्यन्तत्व मुद्दिश्य 'मा मेव विजानी' हीति स्वशरीरकं परमेश्वर मे वोपास्य मुपदिदे शेत्यर्थः । इन्द्रशब्देनेति — इन्द्रविषयेण मा मिति शब्दे नेत्यर्थः । वामदेवो हीति — यथा वामदेवः स्व स्यात्मा परमेश्वर इति दृष्ट्या स्वविषय स्याऽह मिति शब्दस्य परमेश्वरपर्यन्तत्वं मन्वादीना मपि स ए वाऽत्मेति दृष्ट्या मन्वादिशब्दानां तत्पर्यन्तत्व मभि प्रय 'त्वहं मनु रभव' मित्यादि नोपदिदे शेत्यर्थः । एव मिन्द्रस्य तद्दृष्टान्तस्य वामदेवस्य च परमेश्वरे मा मह मिति शब्दयोः प्रयोग स्तयोः स्वान्तर्यामिपरमेश्वरपर्यन्तत्वज्ञानमूल इति निरू पितम् । अथ परमेश्वरैक्यभावनासिद्धिसिद्धः स इति विधान्तरेण सूत्रार्थं वर्णयति अथवेति — अत्रेदं हृदयम् 'अहं ब्रह्मास्मि' 'त्वं वा अह मस्मि भगवो देवते अहं वै त्व मसि' इति वेदान्तवाक्यप्रामाण्यानुरोधेन दहराधिकरणभावलिङ्गोपासकैः मलमायाद्यखिलदोषाऽसंस्पृष्टेन सत्यसङ्कल्पत्वादिसकलमाङ्गल्यगुणरत्नाकरेण सर्वान्तरात्मना परब्रह्मणा शिवेन स्वात्मन ऐक्य भावना कार्येति 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्यधिकरणे समर्थयिष्यते ॥

तादृशभावनाया उपासनारूपत्वं भूमिकाक्रमाभ्यासे नैव साफल्यं च दर्शयति षट्स्थलो

पासनया सर्वाङ्गलिङ्गसाहित्येन च ब्रह्मभाव मुपगतस्य निगलितमनुष्यादि देहविषयकल्पिताहंभावसंकोचस्य संपन्नविश्वाकारपराहंभावस्य वामदेवस्य स्वा त्मनः सर्वगतत्वावगमा न्मनुसूर्यादिरूपात्मभावोक्तिः । एव मिन्द्र स्यापीति निश्चीयते ॥

'प्राणोऽस्मि प्रज्ञा' त्मेति प्राणशब्देन परं ब्रह्मोच्यते । तस्याऽनन्द रूपत्वेन सकलप्राणनहेतुत्वात् । 'प्राण एव प्रज्ञात्माऽनन्दोऽजरोऽमृत' इति श्रवणात् । तथा चाहं ब्रह्माऽस्मि मा मुपा स्वेति ब्रह्मदृष्ट्योपदेशः । तथाहि कृष्णादयोऽप्यर्जुनादी न्प्र त्युपदिष्टव न्तः ॥

---

पासनयेति— भक्तमाहेश्वरप्रसादप्राणलिङ्गशरण्यैकमाङ्गतानां षण्णा म प्युपासनाभूमिकाना मभ्या सा दे वोपासनासिद्धे रिति भावः । सर्वाङ्गलिङ्गसाहित्येन चेति — सर्वे ष्वपि करणेषु तत्तत्प्रेर कतया स्थितस्य ब्रह्मणोऽनुसन्धाने नैव सार्वदिकभावनालाभात् सर्वेन्द्रियविषयसमर्पणमंमवेन ब्रह्मार्पणसिद्धिद्वारा तदनुसन्धानदार्ढ्यसिद्धि श्चे त्येत त्सर्वं सहकार्यन्तरविध्यधिकरणे 'अना विष्कुर्व न्नन्वयात्' इति सूत्रभाष्य एव सविस्तरं प्रदर्शयिष्यते ॥

एवं च वामदेवस्य सर्वात्मभावनादार्ढ्या द्यथा स्वस्य मनुसूर्यादिरूपत्वव्यवहार स्तथै वेन्द्र स्याऽप्युपपद्यत इ त्यर्थः । अत्र दृष्टान्तान्तरं दर्शयति तथा हीति — भावनादार्ढ्यसिद्धशिवा भेददृष्ट्यैव,

> 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु'
>
> 'सर्वधर्मा न्परित्यज्य मा मेकं शरणं व्रज'
>
> 'अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते'

इत्यादिना श्रीकृष्णोऽर्जुना योपदिदे शेत्यर्थः । एवं 'मा मेव विजानी'हीति वक्तु रात्मोपदेशः समर्थितः ॥

— त्वाष्ट्रवधादिलिङ्गाना मसमर्थ नेऽस्य मप्रतिष्ठितो भवे दिति तदाशङ्का मुद्भाव्य तत्समर्थनार्थत्वे नोत्तरसूत्र मवतारयति पुन रिति ॥

युक्त इति — स्या दिति शेषः । अत्र यदि 'त्रिशीर्षाणं त्वाष्ट्र महन' मिति जीव लिङ्गं, 'प्राणो वस' तीति मुख्यप्राणलिङ्गं च न स्यातां तर्हि वामदेवस्य सार्वात्म्योपदेशव

पुन राश ङ्कयाह ॥

## जीवमुख्यप्राणलिङ्गा न्नेतिचे न्न उपासात्रैविध्या दाश्रितत्वा दिह तद्योगात् ॥ १-१-३२ ॥

ब्रह्मज्ञानोपासनया ब्रह्मभाव मुपगतस्य विगलितजीवभावस्य तद्रूप दृष्ट्या स्वस्मि न्नुपास्यत्वसर्वात्मभावोपदेशो युक्तः। अत्र, 'त्रिशीर्षाणं त्वाष्ट्र महनं याव दध्यस्मि ञ्छरीरे प्राणो वसति ताव दायु' रित्यादौ जीवलिङ्गं मुख्यप्राणलिङ्गं च दृश्येते। ततोऽय मुपदेशो न युक्त इतिचे न्नैवं वाच्यम्॥

यतो जीवप्राणशब्दवाच्यत्वं परमेश्वरस्य समुचित मुपासनात्रैविध्यहेतोः। अत्र परमेश्वरस्य स्वरूपेण भोक्तृशरीरेण भोग्यरूपेण चोपासनं त्रिविध मिह

---

दिन्द्र स्योपास्यत्वोपदेशो युक्तः स्या दित्यर्थः। एवं जीवप्राणलिङ्गयोः प्रकृते श्रूयमाणत्वे नाय मुपदेशः परमेश्वरविषयो न भव तीति पूर्ववाद्यभिप्रायः ॥

एवं सौत्रं शङ्काखण्डं व्याख्याय परिहारांशं व्याचष्टे नैवं वाच्य मिति — अत्राऽयं भावः। ब्रह्मलिङ्गानां जीवमुख्यप्राणलिङ्गानां च परस्परं विरोधे सति खलु जीवमुख्यप्राणलिङ्गानां प्राबल्यानुरोधेन तद्विरुद्धानां ब्रह्मलिङ्गाना मन्यथानयनस्य युक्तत्वा द्ब्रह्मलिङ्गज्ञापितं मा मिति जीवशब्दस्य परमेश्वरपरत्वं हातव्यम्। न विद्यत एव तेषां विरोधः। यतो वेदान्तेषु ब्रह्मण उपासना क्वचित् 'सत्यं ज्ञान मनन्तं ब्र'ह्मेति स्वधर्मविशिष्टत्वेन, क्वचित् 'तान्ये वानुविनश्यति न प्रेत्य संज्ञाऽस्ति' इति चेतनधर्मविशिष्टत्वेन, क्वचित् 'पुरुषेऽन्तः प्रतिष्ठितं वे' देत्यचेतन धर्मविशिष्टत्वेन च त्रिधा विधीयते। एव मुपासनात्रैविध्यसद्भावा दि त्येतदर्थकतया उपासात्रैविध्या दिति सौत्रपदं व्याचष्टे यतो जीवेति ॥

ननु, अन्यत्र श्रूयतां त्रिविध मुपासनं, तेन प्रकृते किं प्रयोजन मित्याशङ्क्य अत्रापि त्रिविधोपासनस्य विवक्षितत्वा दि त्येवमर्थकतया आश्रितत्वा दिहेति सूत्रगतपदद्वयं व्याचष्टे अत्र परमेश्वर स्येति ॥

विवक्षितम्। आत्मतया भोक्तृभोग्याश्रितत्वेन च तदुपासः। परमेश्वरस्य स्वरूपोपासनमनिलम्बेन मुक्तिहेतुः अन्यदपि द्वयं कालेन। तस्मादिह परमेश्वरात्मतया इन्द्रस्योपासनमिद्धि रिति निर्णयः ॥

इति इन्द्रप्राणाधिकरणम्

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
प्रथमाध्यायस्य प्रथमः पादः ॥

---

नन्, ब्रह्मजीवमुख्यप्राणधर्मविशिष्टविषयकमेकमुपासनमिह विवक्षितम्? उत तत्तद्विशिष्टविषयाणि त्रीण्युपासनानि वा? इत्याशङ्क्य तद्योगादिति सूत्रपदमुभयथाऽपि युज्यत इत्यर्थपरतया व्याचष्टे आत्मतयेति ॥

उपासनाभेदपक्षे स्वधर्मविशिष्टब्रह्मोपासनस्य तदितरोपासनाभ्यां फलतो ज्यायस्त्वं चतुर्थाध्याये वक्ष्यमाणं दर्शयति परमेश्वरस्येति ॥

इतीन्द्रप्राणाधिकरणम्

इति श्री नागलिङ्गशिवाराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां
श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीयब्रह्म
सूत्रभाष्यव्याख्यायां प्रथमाध्यायस्य
प्रथमः पादः

---



•

श्री शिवाय गुरवे नमः

श्री मेधादक्षिणामूर्तये नमः

# श्री नीलकण्ठभगवत्पादाराध्यकृतौ शारीरकब्रह्ममीमांसा सूत्रभाष्ये प्रथमाध्यायस्य

## द्वितीयः पादः

अथ सर्वत्रप्रसिद्धाधिकरणम् १३

ब्रह्मबोधकानां वेदान्तवाक्याना मानन्त्या त्प्रतिवाक्यं विचाराऽनुपपत्तेः सन्दिग्धानां केषांचि द्विचारेण तन्न्यायै स्तादृशाना मपि निर्णयो भव तीति कतिचि देव वाक्यानि तात्पर्य लिङ्गसमन्वयेन ब्रह्मबोधकानि सूत्रितानि। तेषु कतिचित् स्पष्टब्रह्मलिङ्गानि प्रथमपादे विचारि तानि। कतिचि दनतिस्पष्टलिङ्गानि द्वितीयपादे विचार्यन्ते ॥

## सर्वत्र प्रसिद्धोपदेशात् ॥ १–२–१ ॥

छान्दोग्ये श्रूय तेऽस्य विषयः ‘ मनोमयः प्राणशरीरो भारूपः सत्यसं कल्प आकाशात्मा सर्वकर्मा सर्वकाम ’ इत्यादि ॥

अत्र मनोमयत्वादिधर्मकः श्रूयमाणः पुरुषः परमेश्वरो वा ? जीवो वा ? इति संशयः ॥

---

पूर्वोत्तरपादयो विषयभेदप्रदर्शनपूर्वकं सङ्गतिं विशदयति ब्रह्मबोधकवाक्याना मिति — एतेनाऽवसराख्या सङ्गति रिति व्यक्तम् ॥

‘सर्वं ख ल्विदं ब्रह्म’, ‘तज्जलानिति शान्त उपासीत’, ‘अथ खलु क्रतुमयः पुरुषो यथा क्रतु रस्मिन् लोके पुरुषो भवति त थेतः प्रेत्य भवति स क्रतुं कुर्वी’ तेति प्रकृत्य श्रूयते ‘ मनो मयः प्राणशरीर’ इत्यादि। तत्र मनोमयादिशब्दानां ब्रह्मपरत्वेन वा जीवपरत्वेन वा निर्णयाभा वात् संशय माह अत्रेति ॥

जीव इति पूर्वपक्षः। कुतः? तस्य प्रस्तावगतत्वात्। 'अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके पुरुषो भवति। तथेतः प्रेत्य भवति। स क्रतुं कुर्वीत' इति कर्मवशादिह परत्र च परिभ्रमन् जीवः प्रस्तुतः पूर्वम्। तदनन्तरं मनोमय इति श्रूयते। अत एव मनोमयत्वादिधर्मको जीवः। मनोमयत्वप्राणशरीरत्वादिकं च संसारिलक्षणं, न परमेश्वरलिङ्गम्। सति यथार्थे असंकल्प इति सत्यसंकल्पत्व मपि संसारिधर्मत्वेन योजनीयम्। अतः सर्वथा मनोमयत्वादिधर्मको जीव एव न परमेश्वर इति प्राप्ते ब्रूमः॥

परमेश्वर एव मनोमयत्वादिधर्मकः। कुतः? परब्रह्मणः परमेश्वरस्यैवोपक्रमे 'सर्वं ख ल्विदं ब्रह्म त ज्जला निति शान्त उपासीत' इति सर्वकारणत्वे नोपास्यत्वे नोपदेशात्। श्रुतितात्पर्यं च तज्जला निदं सर्वं

---

पूर्वपक्षं प्रदर्शयति जीव इति — जीवे मनोमयत्वादीना मुपास्यगुणाना मन्वयाऽसम्भवा त्तेषा मुपास्ये ब्रह्म ण्ये वाऽन्वयो युक्त इ त्याशङ्कानिराकरणार्थ माह मनोमय त्वेति — अत्राऽयम्भावः। यद्यपि मयटो विकारप्राचुर्याद्यर्थसाधारण्या त्प्राणः शरीर मस्येति वचनस्य येन केनचि त्सम्बन्धेन निर्वोढुं शक्यत्वा च्च नियन्तृत्वादिरूपमनःप्राणसम्बन्धवति ब्रह्मण्यपि मनोमयः प्राणशरीर इ त्येत द्योजयितुं शक्यम्, तथापि मनःप्राणसम्बन्धप्रतिपादनं तदभावप्रतिपादन इव तयो र्जीवेन सह उपकरणोपकरणिभावसम्बन्ध एव लोकवेदयोः प्रसिद्धतरो ग्राह्यः। नतु ब्रह्मणा सह तयो रप्रसिद्धसम्बन्धः। प्रसिद्धसम्बन्धे प्रथम बुद्ध्यवतारात्। अत एव खलु 'अप्राणो ह्यमनाः शुभ्र' इति ब्रह्मणि मनःप्राणनिषेधो श्रूयत इ त्यास्ये नैव बुद्धि मारोहति, नतु घटवति भूतले घटाभाववद् भूतल मि त्याप्तवाक्य मनुपपन्नतया शङ्कितं सत् समवायसम्बन्धेन घटाभाववत्त्वपर मि त्युपपादन मिव 'अप्राणो ह्यमना' इति श्रुतिवाक्य नियन्तृत्वादिसम्बन्धेन मनःप्राणवति ब्रह्मणि कथ मप्राणत्व ममनस्त्वं चे त्यनुपपन्नार्थतया शङ्कितं सत् भोगोपकरणोपकरणिभावेन मनःप्राणाभाववत्त्वपर मि त्युपपादन मपेक्षते। तस्मा ज्जीव इ त्येव युक्त मिति॥

सिद्धान्तयति उपक्रमे सर्व मित्यादिना — ब्रह्मण एव कारणत्वे नोपास्यत्वेन चोपदेशा दित्यर्थः। तज्जलानिति — तस्मा ज्जायत इति तज्जम्। तस्मिन् लीयत इति तल्लम्। तस्मि न्ननिति चेष्टत इति तदनम्। तज्जं च तल्लं च तदनं च तज्जलान्। कर्मधारये शाकपार्थिवत्वा न्मध्यमपद लोपः। इतिशब्दो हेतौ। सर्व मिदं जग द्ब्रह्मैव तत्कार्यत्वा दित्यर्थः। ब्रह्मणि मिश्राऽमिश्रभेदा

ब्रह्माधीनजन्मस्थितिध्वंसक मेत त्सर्वं चिदचिद्रूपं ब्रह्म खलु इति शान्त उपासीत ब्रह्मेति। यथा सागरे संपन्नजन्मस्थितिविलयं फेनबुद्बुदकदम्बकं तद्रूपमेव दृश्यते तथा शक्तिमति ब्रह्मणि संपन्नजन्मादिकं तन्मय मेव। तदतिरिक्तं किंचन नोपलभ्यते। तथाहि अथर्वशिरसि निरूपित मोक्षेण 'अह मेकः प्रथम मासं वर्तामि च भविष्यामि च नान्यः कश्चि न्मत्तो व्यतिरिक्त' इति। तत श्च तेन 'ब्रह्माऽह' मित्यादिना विश्वरूपत्व मात्मनः प्रपञ्चितम्। तत्र विश्वरूपत्वे 'सोऽन्तरा दन्तरं प्राविश' दित्यनुप्रवेश एव हेतु रुक्तः। अतो ब्रह्मणोऽपृथक्सिद्धजन्मस्थितिप्रवृत्तिकत्वा दस्य जगत स्तद्व्यतिरिक्तता नास्ति ॥

---

भावा च्छान्तो रागद्वेषादिरहितो ब्रह्म उपासी तेत्यर्थः। 'तज्जला' निति पदस्य श्रुतितात्पर्यसिद्धार्थ माह ब्रह्माधीनेति — खलुशब्देन ब्रह्मणो जगज्जन्मादिहेतुत्व सार्वात्म्यं सकलवेदान्तप्रसिद्ध मिति व्यञ्जयितुं भिन्नक्रमतया तस्य योजनम ॥

ननु ब्रह्मणः सर्वप्रपञ्चकारणत्वेऽपि कथं सर्वप्रपञ्चात्मकत्वम्? ब्रह्मप्रपञ्चयो रान्तर्गणिकभेदाङ्गीकारा दित्याशङ्क्य दृष्टान्तेन त दुपपादयति यथेति — ननु, तर्हि ब्रह्मणः सागरव त्परिणामित्वं स्या दि त्याशङ्क्याह शक्तिम तीति — यथा सागरे पवनादिसंक्षोभजनितोपरितनपरिणामः वीचीफेनबुद्बुदप्रपञ्चः एवं ब्रह्मणि तदिच्छासंक्षोभ्यमाणतदाश्रितशक्तिपरिणामः सर्वोयं प्रपञ्च इति भावः ॥

ननु, भेदे सत्येव कथं तदतिरिक्तानुपलम्भः? इत्याशङ्क्य त थोपनिषदि व्यवहारो दृश्यत इत्यत आह तथा हीति — अथर्वशिरसि भूतवर्तमानभविष्यदात्मकसकलप्रपञ्चरूपत्वं तद्व्यतिरिक्ताभावं चोक्त्वा परमेश्वरस्य प्रपञ्चानुप्रवेश स्तत्र हेतुत्वे नोक्तः। अनुप्रवेशस्य कर्मकर्तृभावापेक्षत्वा त्तेन भेदे सत्येव ताद्रूप्यतदव्यतिरेकव्यवहारः सिद्ध इत्यर्थः ॥

ननु, मह देत दिन्द्रजालं सत्येव भेदे ताद्रूप्यं तदव्यतिरेक श्चेति, तत्राह अत इति— अपृथक्सिद्धेति — ब्रह्मापेक्षया पृथग्भूतेऽन्यत्र वस्तुनि सिद्धा ब्रह्मणः पृथक्सिद्धा। अतथाभूतस्थितिक्रियाव्यापारत्वा दित्यर्थः। अनेन नाऽभेद स्ताद्रूप्यं, नवा भेदो व्यतिरेकः। किंतु घटनैल्यन्याये नाऽयुतसिद्धि स्ताद्रूप्यम्, युतसिद्धि र्व्यतिरेक इ त्युक्तं भवति॥

ननु तथाऽपि चिच्छक्तिपरिणामस्य प्रपञ्चस्य चिच्छक्त्यै वाऽपृथक्सिद्धिः स्या न्नतु

तथाऽभियुक्ता वदन्ति,

> शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः
> शक्तिस्तु शक्तिमद्रूपा व्यतिरेकं न वाञ्छति ॥
> तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव
> शक्तिशक्तिमतोर्यस्मादभेदः सर्वदा स्थितः ॥
> अत स्तद्धर्मधर्मित्वा त्परा शक्तिः परात्मनः
> न वन्हे र्दाहिका शक्ति र्व्यतिरिक्ता विभाव्यते ॥ इत्यादि

वायुसंहितायां च,

> शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम्
> तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा ॥

---

परमेश्वरे णेत्याशङ्क्य चिच्छक्तेः परमेश्वरापृथक्सिद्धत्वा त्तत्कार्यस्य तदात्मकस्य प्रपञ्चस्याऽपि तदपृथक्सिद्धि रि त्यभिप्रेत्य चिच्छक्तेः परमेश्वरापृथक्सिद्धौ प्रमाण माह तथाभियुक्ता इति— शक्तय इति — कृत्स्नं जगत् अस्य परमेश्वरस्य शक्तयः तदीयशक्तिपरिणामभेदाः। महेश्वरः शक्तिमान्। नित्ययोगे मतुप्। नित्यानपायिशक्तिकः। अत एव भगवती शक्तिः शक्तिमदीश्वर स्वरूपा व्यतिरेकं पृथक्स्थितिं न वाञ्छति नानुमन्यते। किंतु चन्द्रचन्द्रिकान्यायेन ब्रह्मणा अपृथक्सिद्धैव भवति। एव मनयो र्वह्निदाहकशक्त्यो रिव नित्यं तादात्म्यं, नित्य आश्रयाश्रयि भावः। यस्मा देवं शक्तिशक्तिमतो रभेदो घटपटयो रिव स्वतन्त्रपृथगवस्थानरूपभेदाऽभावः सर्वदा स्थितः। अतः परमेश्वरस्य तया शक्त्या धर्मिणो घटत्वादिधर्मवत् नित्यपरतन्त्रधर्मवत्वा त्सा परा शक्तिः परमात्मन एव, कदाचिदपि नान्यस्य। नाऽपि स्वतन्त्रा। न हि वह्ने र्दाहिका शक्तिः कदापि नान्याश्रितत्वेन वा ततः पृथक्सिद्धा या न विभाव्यत इत्यर्थः॥

शक्त्यादीति— शक्ति राद्याया नित्यसिद्धायाः शक्ते राद्य उन्मेषः। 'प्रज्ञा च तस्मा त्प्रसृता पुराणी' इति प्रसिद्धः। पृथिवी 'अद्भ्यः पृथि' वीति श्रवणा त्तत्त्वेषु चरमकार्य भूता भूमिः। तत्र मृदा कुम्भादिकं यथेत्यनेन मृद्घटन्यायेन शक्तिकार्यस्य सर्वस्याऽपि प्रपञ्चस्य परमेश्वरापृथक्सिद्धि र्दर्शिता। एवं सकलप्रपञ्चपरिणामिनी परमाकाशपरमानन्दरूपा परा शक्ति रपृथग्भावेन परब्रह्माश्रितेति सिद्धम्॥

परास्य त्रिविधा शक्तिः प्रबोधानन्दरूपिणी
एकानेकस्वरूपेण भाति भानोरिव प्रभा ॥ इति

'परास्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', 'एको रुद्रो न द्वितीयाय तस्थु र्य इमान् लोका नीशत ईशनीभि र्जननीभिः परमशक्तिभि' रित्यादय श्च परब्रह्मणः स्वाभाविकानन्दजगज्जननशासनपालन शक्तिमत्त्वं श्रुतयो वदन्ति । किं बहुना श्रुतिस्मृतीतिहासपुराणाभियुक्त सूक्तिप्रामाण्यात् सकलचिदचित्प्रपञ्चमहाविभूतिरूप महासच्चिदानन्दसत्ता देशकालादिपरिच्छेदशून्या स्वाभाविकी परमशक्तिः परब्रह्मणः शिवस्य स्वरूपं च गुणश्च भवति । तद्व्यतिरेकेण ब्रह्मणः सर्वज्ञत्वसर्वशक्तित्व सर्व कारणत्वसर्वनियन्तृत्वसर्वोपास्यत्वसर्वानुग्राहकत्वसर्वपुरुषार्थहेतुत्वादिकं सर्व गतत्वं च न संभवति । किञ्च, महेश्वरशिवमहादेवरुद्रादिपरमाख्याना मभिधेयत्वं च न संभवति ॥

कथ मेवंभूता सा ब्रह्मेति व्यपदिश्यत इ त्याकाङ्क्षायां परब्रह्मणः परब्रह्मत्वं सर्वज्ञत्व सर्वकर्तृत्वाद्युपलक्षितं ज्ञानक्रियाशक्त्याद्यनन्ताकार विजृम्भणशालिन्यां तस्या मे वायत्त मिति प्रदर्शयितुं तस्या एव ज्ञानक्रियाशक्त्याद्यनन्तरूपत्वे वायुसंहितावचन मुदाहरति परेति — एकेति —शक्ति र्वस्तुत एकैव सती ज्ञातव्येष्टव्यकर्तव्यस्रष्टव्यपालनीयसंहार्यबद्धव्याऽनुग्राह्यादि प्रतियोगिभेदात् ज्ञानेच्छाक्रियासृष्टिपालनसंहारतिरोधानानुग्रहशक्त्याद्यनन्ताकारेण भाति । यथा एकैव भानोः प्रभा तदपृथक्सिद्धा मण्डलरूपेण त्रैलोक्यं व्याप्य स्थिता द्रावणीयशोषणीयदहनीय जतुजलतूलादिप्रतियोगिभेदात् द्रावणशोषणदाहतापस्फोटशक्त्याद्यनन्ताकारेण व्यपदिश्यते तद्व दित्यर्थः । अत्राऽर्थे मूलश्रुति मुदाहरति पराऽस्येति ॥

ननु, स्वरूपं च गुण श्चेति कथ मभिन्नत्वेन गुणैकरूपत्वा दि त्याशङ्क्याह तद्व्यतिरेके णेति — सर्वगतत्वं सर्वत्र गतिमत्त्वम् । भक्तानुजिघृक्षया तस्य गतिमत्त्व मपि शक्त्यधीन मेव समर्थनीय मिति भावः । अभिधेयत्वं चेति — नामप्रवृत्तिनिमित्तगुणानां शक्त्यधीनत्वा दिति भावः । नचैवं ब्रह्मणो गुणरूपयोः शक्त्यधीनत्वाऽभ्युपगमे तस्य स्वातन्त्र्य मसिद्ध मिति शङ्क्यम् । 'विद्याऽविद्ये ईशाते यस्तु सोऽन्य' इति श्रुत्या 'भानो रिव प्रभा' इति पुराणोक्त्या च शक्तेः शक्तिमदधीनत्वाऽव्याहतेः ॥

तथा च सर्वचिदचित्प्रपञ्चशरीरविशिष्टं ब्रह्म सर्वशब्दवाच्यम् । यथा नीलशब्दो न केवलं स्वरूपस्य वाचकः किन्तु तद्विशिष्ट[illegible]स्यापि, तथा प्रपञ्चशब्दोऽपि ब्रह्मणः । तस्मात् सर्वशब्दवाच्यत्वं ब्रह्मणः 'सर्वो वै रुद्र' इत्यादय [illegible]न्ति । तत् 'सर्वं खल्विदं ब्रह्म' इति सर्वचिदचित्प्रपञ्च शरीरविशिष्टं ब्रह्माऽभिधीयते । ततो ब्रह्म[illegible] प्रपञ्चस्य [illegible]विषयत्वा च्छान्त एव ब्रह्मोपासीतेति ॥

एत मर्थं पौराणिकी फणिति रभिव्यनक्ति ।

> विग्रहं देवदेवस्य जग देत चराचरम्
> एत मर्थं न जानन्ति पशवः पाशगौरवात् ॥
> विद्येति चेतनां प्राहु स्तथाऽविद्या मचेतनाम्
> विद्याऽविद्यात्मकं सर्वं विश्वं विश्वगुरो र्विभोः ॥
> रूप मेव न सन्देहो विश्वं तस्य वशे यतः

तथाचेति — ब्रह्मण. सर्वकारणत्वहेतुना सर्वानुप्रवेशः सिध्यति । 'त त्सृष्ट्वा त दे वाऽनुप्राविश' दिति श्रुते. । ततः सर्वनियन्तृत्वं सिध्यति । 'अन्तः प्रविष्टः शास्ता जनाना' मिति श्रुते. । ततः सर्वशरीरत्वं सिध्यति । 'यः पृथिव्यां तिष्ठ' न्नि त्यन्तर्यामिब्राह्मणे नियम्यस्य सर्वस्याऽपि प्रपञ्चस्य नियन्तृशरीरत्वश्रवणात । 'ब्राह्मणो विद्वान् बृहस्पतिसवेन यजे' तेत्यादिलौकिकवैदिकव्यवहारेषु शरीरवाचिशब्दानां शरीरिपर्यन्तत्वदर्शना दिति भाव: ॥

तस्मा दिति — नीलादिशब्दा गुणविशिष्टद्रव्यस्याऽपि वाचकाः । नील मुत्पल मि त्यादिसमानाधिकरणव्यवहारदर्शना दिति भावः । एव मुपपादित मर्थ मुपसंहरति तत इति — तद्वाक्यार्थस्य शान्ता वुपयोग माह ब्रह्मस्वरूपत्वा दिति — यत· प्रपञ्चो ब्रह्मण· शरीर मत स्त दीयदिव्यविग्रहत्व स्तस्य पूज्यत्वेन द्वेषतत्प्रयुक्तनिग्रहाद्यनर्हत्वा त्ततो निवृत्तः सन् ब्र ह्मोपासी तेति

ननु, जगद्ब्रह्मणोः शरीरशरीरिभावः कथ मितिचे त्त त्सोपपत्तिकं वेदान्तार्थपरिष्कारे सविस्तरं निर्णीत मिति नेह पुनः । उक्तवाक्यार्थोपपादकं वायुसंहितावचन मुदाहरति विग्रह मिति — विग्रह मि त्यार्षो लिङ्गव्यत्ययः । अनेन श्लोकेन सामान्येन सर्वप्रपञ्चस्य परमेश्वरशरी रत्वं दर्शितम् । द्वितीयश्लोकेन विशिष्य चेतनात्मकस्य तस्य तच्छरीरित्व मिति विवेकः । तस्य द्वितीयखण्डे 'रूप मेव न सन्देह' इ त्युक्त्या जगत स्तच्छरीरत्वं मुख्य मेव न त्वौपचारिक

सत्ये साधौ च सच्छब्दः साद्भि रेव प्रयुज्यते ॥
विपरीते त्वसच्छब्दः कथ्यते वेदवादिभिः
सच्चाऽसच्च जग द्विश्वं शरीरं परमेष्ठिनः ॥
वृक्षस्य मूलसेकेन शाखाः पुष्यन्ति वै यथा
शिवस्य पूजया तद्वत् पुष्य त्यस्य वपु र्जगत् ॥
आत्मा तस्याऽष्टमी मूर्तिः शिवस्य परमात्मनः
व्यापिकेतरमूर्तीनां विश्वं तस्मा च्छिवात्मकम् ॥
देहिनो यस्य कस्याऽपि निग्रहः क्रियते यदि
अनिष्ट मष्टमूर्ते स्त न्नाऽत्र कार्या विचारणा ॥
सर्वोपकारकरणं सर्वानुग्रहणं तथा
सर्वाभयप्रदानं च शिव स्याऽऽराधनं विदुः ॥ इत्यादिना

अतः सर्वाकारत्वात् ब्रह्मणः सर्वं ब्रह्मेति शांत उपासी तेति समञ्जस

---

मिति दर्शितम् । तदुपपादनार्थं शरीरलक्षणसूचनपूर्वकं प्रपञ्चे तल्लक्षणं 'विश्वं तस्य वशे यत' इति वचनेन दर्शितम् । अनेन वश्यत्वरूपं नियम्यत्वं शरीरलक्षण मिति सूचितम् । अथ स्वामि नियम्यसेवकादि ष्वतिव्याप्तिवारणार्थं 'यो यद्व्याप्येन नियच्छति त त्तस्य शरीर' मिति तल्लक्षणं विशेषणेन परिष्कर्तुं द्वितीयार्थे विभो रिति विशेषणेन तस्य स्वनियम्यप्रपञ्चव्यापकत्व मुक्तम् । इद मेव शरीरलक्षणं सूचयितुं 'यः पृथिव्यां तिष्ठ' न्नित्याद्यन्तर्यामिब्राह्मणे परमेश्वरस्य पृथिव्यादिषु बहि रन्त श्च व्याप्तिदर्शनपूर्वकं पृथिव्यादे स्तच्छरीरत्व मुक्तम् ॥

एवं परमेश्वरस्य सर्वप्रपञ्चशरीरकत्वे लक्षणमुखेन सिद्धे साधु ष्विवाऽसाधु ष्वपकारि ष्वपि परमेश्वरशरीरत्वभावना द्वेषनिग्रहबुद्ध्यादित्यागोपयोगिनी कार्येति 'सत्ये साधौ' चेति श्लोकेन दर्शितम् । एवं प्रपञ्चपरमेश्वरयोः शरीरशरीरिभावे सति यथा परमेश्वरः पूजया तुष्यति एवं प्रपञ्चानुग्रहेणाऽपि तथैव तुष्य तीति सूचयितुं 'वृक्षस्य मूलसेके' नेति श्लोकेन दृष्टान्तांश उपन्यस्तः । एवं परमेश्वरस्य सकलप्रपञ्चशरीरकत्वसिद्धेः क्वचि दपि द्वेषेण निग्रहबुद्धि र्न कार्या । किं तु शिवमूर्ति ष्विव बहुमानेन शिवाराधनरूपानुग्रहबुद्धि रेव कार्येति 'देहिनो यस्य कस्याऽ' पीति श्लोकद्वयेन दर्शितम् । उपपादितं सर्वं खल्विद मित्यादिवाक्यार्थवर्णन मुपसंहरति अत इति — निर्णीत मर्थं प्रकृतसाध्ये सङ्क्रमयति तस्मा दिति ॥

मेव । तस्मा दुपास्यत्वे नोपक्रमगतं ब्रह्मैव मनोमयत्वादिधर्मवत् । न च मनो मयत्वादिकं संसारिणो लक्षणम्, आन्याकारपरिग्रहा दस्य परिच्छेद संभवात् ॥

य दुक्तं क्रतुमयस्य जीवस्य प्रस्तुततया मनोमयो जीव इति त दयु क्तम् । उत्पत्तिशिष्टब्रह्मावरुद्धाया मुपासनाया मवान्तरप्राप्तस्य जीवस्य प्रवेश यितु मशक्यत्वात् । यथा विश्वेदेवावरुद्धाया मामिक्षायां वाजिना मप्रवेशः ॥

अतो ब्रह्मैव मनोमयत्वादिधर्मवत्त्वे नोपास्य मिति ॥

उपक्रमगत ब्रह्मैव मनोमयत्वादिविशिष्ट मि त्युक्तेऽवान्तरसिद्धस्य जीवस्य प्रसङ्गोऽनर्थकः स्या दित्याशङ्काया माह ॥

- -

ननु, मनोमयत्वादिकं जीवलिङ्गं ब्रह्मविशेषणत्वेन नान्वेति इत्युक्त मनूद्य दूषयति न चेति — उपास्याका रेति — ' मनोमयः प्राणशरीर ' इत्यारभ्य ' एत मितः प्रेत्याऽभि संभविताऽस्मि ' इत्यन्तेन सन्दर्भे णोपास्याकारः परिगृह्यत इ त्यभ्युपगन्तव्यम् । अन्यथा तदनु क्रमणवैयर्थ्यात् । न च सांसारिकं मनःप्राणोपकरणकं हेय मुपास्याकारो भवितु मर्हति । अव्य वहितवाक्योक्ततत्क्रतुन्यायविरोधात् । अतः ' प्राणाराम मन आनन्द ' मिति श्रुतिसिद्ध ब्रह्मणो य निरतिशयानन्दानुभवसाधनमनःशालित्वं, प्राण न्तीति व्युत्पत्त्या प्राणशब्दोक्तानां संसारिणां नियमने सामर्थ्यं त दुभयं मनोमयत्वप्राणशरीरित्वं नेति । तत एव लिङ्गा त्संसारिव्यावृत्तमनो मयत्वादिविशिष्टं ब्रह्मेति व्यवच्छेदः संभव तीत्यर्थः ॥

उत्पत्तिशि ष्टेति — यथा ' तप्ते पयसि द ध्यानयति सा वैश्वदे व्यामिक्षा वाजिभ्यो वाजिन ' मित्यत्र आमिक्षावरुद्धे वैश्वदेवयागे वाजिनरूपद्रव्यान्तरप्रवेशो न संभवति । उत्पत्ति वाक्यसंसिद्धं कर्म सर्व मनूद्यते । ' नचाश्रितगुणे शक्यं तद्विरोधिगुणान्तर ' मिति गुणाधिकरणोक्त न्यायात् । एव मिहाऽपि ब्रह्मरूपोपास्यावरुद्धाया मुपासनायां जीवरूपोपास्यान्तरप्रवेशो न सम्भव ती त्यर्थः ॥

उत्तरसूत्र मवतारयितुं शङ्कते अथेति — अय माशयः । ' स क्रतुं कुर्वीत ' इत्यत्र ' यथा क्रतु रस्मि न्लोके पुरुष ' इति प्रकृतः पुरुषो निर्दिश्यते । तन्निर्देशो न तद्विशेष णत्वेन फलविशेषप्रतिपत्त्यर्थः । फलविशेषविशिष्टत्वेन पूर्वं तस्याऽप्रकृतत्वात् । तस्मा न्मनो मयत्वादीनां ब्रह्मविशेषणत्वे तन्निर्देशोऽनर्थक एव स्यात् । ततो जीवनिर्देशानर्थक्यपरिहाराय

## विवक्षितगुणोपपत्तेश्च ॥ १-२-२ ॥

सत्यसङ्कल्पत्वसत्यकामत्वादीनां विवक्षितानां गुणानां ब्रह्मण्येवोपपत्तेश्च त देवोपास्यम् अवान्तरसिद्ध स्तु जीव उपासकः तदाकांक्षायोगा दिति ॥

इति सर्वत्रप्रसिद्धाधिकरणम्

### अथ अनुपपत्त्यधिकरणम् १४

इह सामान्येन जीवस्य उपास्यत्वं नास्ति, किंतु उपासकत्व मिति निरूपितम्। पुन रपि सकलजीवसमष्टिरूपहिरण्यगर्भोपादानस्य नारायणस्याऽपि विश्वाधिकब्रह्मविषयक मुपास कत्वं नोपास्यत्व मि त्यभिधातु मधिकरण मिद मारभ्यते ॥

---

मनोमयत्वादीनां तद्विशेषणत्व मे वोचितम् । एवं च जीव स्योपास्यत्व मभ्युपगन्तव्य मिति शङ्कानिवारणार्थ मिदं सूत्र मिति ॥

सत्यसंकल्पत्वेति — सत्यसंकल्पत्व मवितथसंकल्पत्वम् । न तु सद्विषये संकल्पराहित्यम् सर्वकर्मत्वं सर्वप्रपञ्चरूपकार्यवत्त्वम्। सर्वकामत्वं सर्व कामयत इति व्युत्पत्त्या सकलसृज्यविषय कामनावत्त्वं, सकलकल्पानुयायिसर्वभोग्यवस्तुशालित्वं वा । एतेन 'सर्वगन्धः सर्वरस' इति व्याख्यातम् । सर्व मिद मभ्यात्त इत्युपासनाकालवृत्तिसकलप्रपञ्चव्यापित्वम् । अवाकित्व मुपा सनाकाले वागिन्द्रियोपलक्षितसकलेन्द्रियराहित्यम्। वाकिशब्दो वाग्वाचिनो वाक्शब्दा दिनिप्रत्य यस्य त दस्याऽस्तीति वर्तमानार्थे विहितत्वात् । तस्मा त्सत्यसंकल्पत्वादिकं ब्रह्म ण्ये वोपपद्यते । न जीव इत्यर्थः ॥

सूत्रे विवक्षितविशेषणेन ब्रह्म ण्युपपत्त्या जीवेऽनुपपत्ति र्विवक्षिते त्यर्थो लभ्यते। अत्र सत्य सङ्कल्पत्वादिशब्दप्रतीतानां नित्याविर्भूतसत्यसङ्कल्पत्वादीनां श्रुत्यन्तरप्रसिद्ध्या ब्रह्मलिङ्गत्वेन स्पष्टाना मपि पूर्वपक्षदशाया मुपास्यब्रह्मगुणत्वाऽसम्भवशङ्काकलुषितत्वा दनतिस्पष्टतेति पाद सङ्गतिः ॥

इति सर्वत्रप्रसिद्धाधिकरणम्

### अथ अनुपपत्त्यधिकरणम्

शाण्डिल्यविद्यायां यथा जीवसामान्यस्य प्रसङ्ग उपासकत्वे नैव नोपास्यत्वेन, तथैव नारायणानुवाके चेतनमध्य उत्कृष्टस्य नारायणस्याऽपि प्रसङ्ग इति दृष्टान्तसङ्गतिं दर्शय न्नुत्तराधि करण मवतारयति इहेति ॥

# अनुपपत्ते स्तु न शारीरः ॥ १–२–३ ॥

अस्य महोपनिषदि श्रूयते विषयः ' पतिं विश्व स्यात्मेश्वरं शाश्वतं शिव मच्युतम् । नारायणं महाज्ञेय ' मित्यादि ॥

अत्र विश्वपतित्वादिलिङ्गयुक्ततया नारायणशब्दवाच्यो मूर्त्यात्मा परमेश्वरो वा ? अन्यो वा ? इति सन्देहः ॥

' सहस्रशीर्षं देव ' मित्यारभ्य सहस्रशीर्षत्वादिविशेषणत्वेन नारायणस्य मूर्त्यात्मन एवोद्देश्यत्वे नाभ्यासात्, ' समुद्रेऽन्तं विश्वशंभुव ' मिति समुद्रशायित्वादितल्लिङ्गाच्च तत्पर्यायवाचकाच्युतहरिशब्दादिप्रयोगाच्च नारायण एव मूर्त्यात्मा विश्वपतित्वादिना लिङ्गेन प्रतिपाद्यत इति पूर्वपक्षः ॥

सिद्धान्त स्तु, नारायणात्मा परमेश्वर इति । कुतः ? विश्वपतित्वादीनां परमेश्वरधर्माणां तदर्थान्तरे नारायणेऽनुपपत्तेः । पशूनां पतये, वृक्षाणां पतये, जगतां पतय इत्यादिना परमेश्वर एव निखिलभुवनाधिपत्य मभ्यस्यते । ' एको

---

तैत्तिरीयोपनिषदि ' पतिं विश्व स्यात्मेश्वर ' मित्यादिना विश्वपतित्वादिधर्मैः प्रतिपाद्यो नारायणः परमेश्वरो वा ? इति संशय माह महोपनिष दीत्यादिना — अत्र यद्यपि नारायणः प्रतिपाद्यते तथाऽपि स स्वकीयै रेव विश्वपतित्वादिधर्मैः प्रतिपाद्यते ? उत परमेश्वराऽभेदभावनामूलै रिति संशयाभिप्रायः ॥

अथ पूर्वपक्ष एवम् —

श्रुति र्हि ' पतिं विश्व ' स्येति, ' तत्त्वं नारायणः पर ' इति, ' अन्त र्बहि श्च त त्सर्वं व्याप्य नारायणः स्थित ' इति च विश्वपतित्वादी न्धर्मा न्नारायणस्य प्रतिपादयति । तस्मा दिह नारायण एव विश्वपतित्वादिधर्मैः प्रतिपाद्यत इति प्राप्ते सिद्धान्तः ॥

नारायण स्यान्तर्यामी परमेश्वर एव विश्वपतित्वादिधर्मयुक्तः । नारायण स्तु परमेश्वराऽभेदभावनादार्ढ्येन तदभेदापत्त्या परमेश्वरधर्मै र्व्यपदिश्यते । तस्मि न्विश्वपतित्वादिधर्माणा मनुपपत्तेः । तथा च रुद्राध्याये परमेश्वरस्य प्रपञ्चान्तर्गतैकैकवस्त्वाधिपत्यप्रदर्शनमुखेन सर्वाधिपत्यं स्थिरीकृतम् ॥

हि रुद्रो न द्वितीयाय तस्थु र्य इमान् लोका नीशत ईशनीभि ' रिति रुद्र व्यतिरिक्तस्य जगदीश्वरत्वं निषिध्यते। 'विश्वाधिको रुद्र' इति विश्वाधि कत्वं च तस्यैत्र श्रूयते। अतो विश्वपतित्वादिलक्षणो नारायणात्मा परमेश्वर इति समीचीनम् ॥

ननु, नारायणा त्मेति नारायणान्तर्यामी परमेश्वर इति हृदयं, त दयुक्तम्। ' नारा यणपरं ब्र ' ह्मेति नारायणस्य परब्रह्मभाव मुक्त्वा, ' पद्मकोशप्रतीकाश ' मित्यादिना पुरुषस्य हृदयपुण्डरीकस्थान मुक्त्वा, ' तस्य मध्ये वह्निशि ' खेत्यादिना जीवस्वरूप मुक्त्वा, ' तस्याः

---

न च तस्य स्तुतिलिङ्गेन नमस्कारयोगेन दौर्बल्य मिति शङ्क्यम्। ' नमस्कृत्य हि वसी यांस मुपचर ' न्तीति श्रुत्या नमस्कारयोगस्य तदीयमहिमसमर्पणद्वारा विवक्षितार्थ प्र त्युपोद्बल कत्वेन तद्विघातकत्वाभावात्। श्वेताश्वतरे ' यो देवानां प्रभव श्चोद्भव श्च विश्वाधिको रुद्र ' इति परमेश्वरस्य विश्वाधिकत्वं श्रूयते। त द्विश्वपतित्वलिङ्गम्। तदन्यस्य विश्वपतित्वे तस्य विश्वाधिकत्वं न सिध्येत्। ततो विश्वपतित्वं पारमेश्वर मेव लिङ्ग मिति निर्विवादम् ॥

ननु, ' अग्नि र्वै देवाना मवमो विष्णुः परम ' इति श्रुत्या नारायणस्य पारम्य माम्नायत इतिचे दुच्यते। तस्य वचनस्य ' यज्ञोपवीतं परमं पवित्रम्', ' तस्मा द्दानं परमं वद ' न्तीत्यादिव दर्थवादत्वात्। ब्रह्मादिदेवतान्तरापेक्षया परत्वबोधकत्वेन परमेश्वरा दाधिक्यबोधकत्वाऽभावात्। ' तत्परा त्परतो ब्रह्मा तत्परा त्परतो हरिः। तत्परा त्परतो हीश ' इति श्रुत्या हरे रापेक्षिक परत्वस्यैव सिद्धत्वा च। विना पक्षिणा ष्णौति गच्छ तीत्यर्थकस्यै वाऽस्य शब्दस्य नारायणपर त्वेन विष्लृ व्याप्ता विति धातो र्वेवे ष्टीत्यर्थे ' सर्वे देवाः संविश ' न्तीति विष्णु रिति। ' तस्मा त्सर्वगतः शिव इत्यादिश्रुतिभिः शिवाभिधानत्वा च। न तया श्रुत्या हरेः पारम्यं सिध्य तीति दिक्। सूत्रे शारीरपदं मूर्त्यात्मपरतया प्रयुक्तम्। ब्रह्मविष्णुरुद्रेश्वरसदाशिवानां मूर्तयो हि पञ्चकृत्य कारिण्यः शिवस्य साधारण्यो मूर्तयः। ब्रह्मादय स्तु ता स्वेकैकाभिमानिनो मूर्त्यात्मान इति शारीरपद मपि तत्र शरीरे भव इति व्युत्पत्त्या तत्समानार्थम् ॥

उत्तरसूत्र मवतारयितुं शङ्कते नन्विति ॥

अवतारिकाभाष्य स्याऽय माशयः — नारायणस्याऽन्तर्यामी परमेश्वर एव विश्वपतित्वा दिनाऽङ्गीकर्तुं युक्त मिति। अत्र हि नारायणः परं ब्रह्मे त्याम्नातः। उपरिभागपर्यालोचनयाऽपि नारायण ए वोपास्य इ त्यवगम्यते। तथा हि, त त्रोपासकस्य हृदयकमलं प्रस्तुत्य तदन्तरे महा नित्यादिना ' सन्तापयति स्वं देह ' मिति देहाभिमानित्वलिङ्गनिवेदितं जीवात्मान मभि पदलक्षितं तत्रस्य मुक्त्वा, ' तस्य मध्ये वह्निशि ' खेत्यादिना तत्प्रभारूपा मन्तर्हृदयचिच्छक्ति-

शिखाया मध्ये परमात्मा व्यवस्थित ' इति परमात्मत्वेन जीवान्तर्यामित्वेन च स्वोपास्यत्व मवगम्यते। 'स ब्रह्मा स शिव ' इत्यादिना तद्विभूतित्वं ब्रह्मशिवादीनां मुच्यते। अतो नारायण एव विश्वपतिः परब्रह्मभूतो जीवान्तर्यामित्वेनोपास्य इति तदात्मकत्वेन तदधिकत्व तदुपा स्यत्वं न परमेश्वरस्य वक्तु मशक्य मित्यत आह ॥

## कर्मकर्तृव्यपदेशाच्च ॥ १-२-४ ॥

कर्मत्वं कर्तृत्वं च व्यपदिश्येते तत्र ध्येयध्यात्रोः परमेश्वरनारायणयोः। कथं? पद्मकोशप्रतीकाश मिति प्रकृतस्य नारायण स्यैव हृदय मुच्यते। 'पर मात्मा व्यवस्थित ' इति परमेश्वर एव परमात्मा तदन्तर्यामितया ध्येयत्वे नोच्यते। ततो ध्यातृत्वेन नारायणस्य, ध्येयत्वेन परमेश्वरस्य च कर्तृत्वं

---

हृदयकमलमुकुलनैशिष्ट्यसिद्धवैचित्र्येण दीपशिखाकृति तन्मध्यवर्तिनी मुक्त्वा तस्या मध्ये तदन्त र्यामितया ' परमात्मा व्यवस्थित ' इति नारायण स्यैव परमात्मत्वेन निर्दिष्टत्वात् ॥

ननु ' पूर्वानुवाके ' यः परः स महेश्वर ' इति प्रस्तुतत्वा च्छिव एव परमात्मतया निर्दिष्ट इतिचे न। पुरोवादे परं ब्रह्म, परं ज्योतिः, परं तत्त्व मित्यादिना प्रतिपादितस्य नारा यणस्य उपासकत्वे नान्वय स्यानुचितत्वात्। उपास्यपरमात्मविभूतिषु ' स ब्रह्मा स शिव ' इत्या दिना शिव स्यापि परिगणितत्वेन तस्य परमात्मत्वासम्भवा च्चेति। एव माशङ्कानिराकरणार्थ मिदं सूत्र मिति ॥

कर्मकर्तृपदे भावप्रधान इ त्याशये नाह कर्मत्व मित्यादिना — परमेश्वर ए वेति — परमेश्वर एव परमात्मा व्यवस्थित इ त्युक्तः। परमात्मा नारायणहृदयपुण्डरीकवर्तित्वे नोच्यते ध्येयत्वेन हेतु नेत्यर्थः। ध्येय एव हि ध्यानस्थानवर्तित्वेन वक्तु मुचितः। ध्येयत्वं हि पूर्वा नुवाके परमेश्वर स्यैव सिद्धम्। परमात्मशब्द स्तत्रैव वर्तितु मर्हति। ' अणो रणीया ' निति विद्योपक्रममन्त्रे परमेश्वरस्य महामहिमयुक्तात्मत्वेन प्रस्तुतत्वा दिति भावः ॥

न न्वेतेन परमेश्वरस्य आदित्यपुरुषान्तर्वर्तित्वे नेव नारायणहृत्पुण्डरीकवह्निशिखामध्य वर्तित्वे नास्मदुपास्यत्व मेव लभ्यते। न तु नारायणोपास्यत्व मपि ॥

अथ कथं ' कर्मकर्तृव्यपदेशा ' दिति सूत्र मुपपद्यत इ त्याशङ्क्याह तत इति — अत्र नारायणस्य प्रकृतत्वेन त स्यैव हृदयपुण्डरीकसम्बन्धित्वेन प्रकृतत्वा द्धृदयपुण्डरीकवर्तित्वेन पूर्वानुवाकोक्तस्य परमेश्वरस्य नारायणोपास्यत्वं प्रतीयत इत्यर्थः। महाज्ञेय मिति नारायणस्य

कर्मत्वं च व्यपदिश्यते। ततो नारायणा दन्य ए वोपास्यः परमात्मा। 'स 'ब्रह्मा स शिव' इत्यादिना ब्रह्मविष्णुरुद्रेन्द्रादिप्रपञ्चविभूतिविशिष्टत्वं परमेश्वर स्योपदिश्यते ॥

अत्र विष्णो रग्रहणेऽपि कैवल्योपनिषदि श्रूयते – 'हृत्पुण्डरीकं विरज' मित्यादिना हृदयपुण्डरीकं प्रस्तुत्य 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनि र्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्। स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। स एव विष्णुः स प्राणः स कालोऽग्नि' रित्यादि। तच्छ्यायोऽत्राऽध्याहार्यः। 'यो वै रुद्रः स भगवान् भूर्भुवःसुव र्य श्च ब्रह्मा तस्मै वै नमो नमः'। य श्च विष्णुः य श्च महेश्वरः इत्याद्याथर्वणश्रुति रपि द्रष्टव्या। अत्र विभूतित्वेन ब्रह्मशिवयो र्मध्ये विष्णो रग्रहणं परमेश्वरोपासकतया तस्य प्रस्तुतत्वा दि त्यविरोधः॥

'सहस्रशीर्षा पुरुष' इत्यारभ्य प्रस्तुतस्य पुरुषस्य 'पादोऽस्य विश्वा भूतानि' इति

---

विशेषण मुक्तार्थ मेव निर्वहति। तथाच महान् 'धातुः प्रसादा न्महिमान मीश' मिति प्राङ् महत्त्वेन वर्णितो भवादिनामाष्टकान्तर्गतमहन्नामा च परमेश्वरो ज्ञेयः। उपास्योऽस्ये त्येव मर्थकतया तेन विशेषणेन परमेश्वरनारायणयो र्ध्यानक्रियायां कर्मकर्तृभावो व्यपदिश्यत इत्यर्थः। एवं महाज्ञेय मित्यस्य सिद्धान्तसाधकत्वं सूचयितु मेव भाष्ये तावत्पर्यन्तं विषयवाक्यं लिखितम्। ब्रह्मविष्णुरुद्राणां परमेश्वरविभूतित्वं श्रुत्यन्तरे सिद्ध मि त्युदाहरति यो वै रुद्र इति — नाराय णानुवाके विष्णो रुपास्यविभूतिविवक्षाया मपि तदनभिधान मुपासकत्वनिर्देशे नैव तल्लाभा दि त्याह अत्रेति ॥

उत्तरसूत्र मवतारयितुं शङ्कते सहस्रशीर्षेति — पुरुषसूक्ते सहस्रशीर्षत्वादिविशिष्टं पुरुष मुपक्रम्य तस्य निजैकांशसमाप्तप्रपञ्चतया सकलजगदुपादानत्व मुक्तम्। तस्यैव नारायणानुवाकेऽपि सहस्रशीर्ष मि त्यारभ्य 'व्याप्य नारायणः स्थित' इति त दे वाभ्यासेन प्रतिपाद्यते। 'उ तामृतत्व स्येशान' इति मोक्षहेतुत्वादिलिङ्गै र्जगदुपादानतया च पुरुषसूक्तप्रतिपाद्यस्य परब्रह्मत्व मवगम्यते। परब्रह्म ख लूपास्य मेव भवति, नतु त स्योपासकत्व मुचित मिति शङ्कानिराकर णार्थ मिदं सूत्रम् ॥

निर्मेकांशजगद्विशिष्टत्व मुच्यते, ' सहस्रशीर्षं देव ' मिति ॥ एनाऽत्र नारायण इति प्रोच्यते स चायं नारायणपरं ब्रह्मेति श्रुतत्वे नाच्यते । ब्रह्मेन हि सोपास्यम् । कथ मस्य तथाभूत स्यान्यं प्र त्युपासकत्व मि त्यत आह ॥

# शब्दविशेषात् ॥ १-२-५ ॥

नारायणपरंब्रह्मेति शब्दविशेष एव नारायणात् पर मिति ब्रह्म प्रति पादयति । अतो नारायणा दन्य देव परं ब्र ह्मोपास्यम् । परब्रह्मणः सहस्र शीर्षत्वादिविशिष्टपुरुषरूपेण जगदुपादानत्वात् । परब्रह्मात्मकस्य तस्य जगदा कारत्व मिति वक्ष्यामः ' प्रकृति श्च ' इत्यधिकरणे ॥

नारायण स्योपासकत्वे प्रमाणान्तर माह ॥

नारायणपर मिति — पञ्चमीसमासयुक्ता न्नारायणपरं ब्रह्मेति शब्दविशेषा देव नारा यणा दन्यः परमेश्वर एव ब्रह्मेति प्रतीयते । तर्हि नारायणस्य जगदुपादानत्व मुक्तं कथं सङ्गच्छे तेत्याशङ्क्य सहस्रशीर्षत्वादिविशिष्टनारायणाख्यपुरुषावस्थारूपस्य परमेश्वरस्य जगदुपादानतायाः प्रकृत्यधिकरणे व्यवस्थापयिष्यमाणत्वा त दुपपद्यत इ त्याह परब्रह्मण इति ॥

तात्पर्यसंग्रहे श्रीसुदर्शनाचार्यचरणै र्नाराय णेति भिन्न पद मिति प्रौढिवादे नाभ्युपगम्य नारायणस्य परब्रह्मत्वादिकं विश्वपतित्वादिक मि वोपास्यगत मेव तदभेदभावनादार्ढ्यसिद्ध मि त्युपपादितम् ॥

> ब्र ह्मोच्यते पर मसौ परमं च तत्त्वं
> ज्योतिःपरं च परमेश्वर पद्मनाभ. ।
> त्वद्भावनैकनिरत स्त्वदनन्यभावा
> न्मन्त्री यथा गरुडभावनया गरु.मान् ॥ इति

तत्राऽय माशयः — ' ऋतं सत्य ' मि त्युपास्यरूपसमर्पके अम्भिमात्रुवाके शिवस्य परब्रह्मत्वं श्रूयते । न हि परब्रह्मत्व मुभयो रपीति वक्तुं युक्तम् । नाऽप्युपासकः परब्रह्म । त दन्य ए वोपास्य इति वचनं सामञ्जस्य मश्नुते । न च नारायण ए वोपास्य इति शङ्कितु म प्य स्त्यवकाशः । नारायणरूपस्य कुत्राऽप्यश्रुतत्वात् । तस्मा द्यथोक्त मेव युक्तम् ॥

नारायणस्य महाज्ञेय मिति विशेषणेन सिद्धं परमेश्वरोपासकत्व मुपबृंहणेन स्पष्टीकर्तु मुत्तरसूत्र मि त्याह नारायण स्येति ॥

## स्मृते श्च ॥ १–२–६ ॥

एव मुक्त्वा ततो राजन् महायोगीश्वरो हरिः
दर्शयामास पार्थाय परमं रूप मैश्वरम् ॥

इति स्मृते श्च महायोगस्वामिनो नारायणस्य परमेश्वरविषयो योगः समाधि रभव्यज्यते ॥ अत्र

अहं यथाद्य दाराध्यः कृष्णे नाऽक्लिष्टकर्मणा
तस्मा दिष्टतमः कृष्णा दन्यो मम न विद्यते ॥ इति

अश्वत्थामानं प्रति परमेश्वरवचनं च तस्मा दन्य न्नारायणा दुपास्यं परं ब्रह्म ॥

पुत रनुपपत्ति माशङ्क्याह ॥

## अर्भकौकस्त्वा त्तद्व्यपदेशा च्च नेतिचे न्न निचाय्यत्वा देवं व्योमव च्च ॥ १–२–७ ॥

---

अभिव्यज्यत इति — महायोगीश्वर इति — श्रीकृष्णस्य योगनिष्ठा मुक्त्वा तत्साऽमर्थ्यात् 'दर्शयामास पार्थाय परमं रूप मैश्वर' मित्यैश्वररूपप्रदर्शनोक्त्या तद्योगः परमेश्वरविषय इति ज्ञाप्यते । गरुडभावनां विना गारुडरूप स्येव परमेश्वरभावनां विना तदीयरूप स्याऽन्येन प्रदर्शयितु मशक्यत्वात् । परमेश्वरभावनादार्ढ्या देव दधीचेनाऽपि विश्वरूपं प्रदर्शित मिति लिङ्गपुराणादिषु दक्षदधीचसंवादे प्रतिपादितत्वा च्चेति भावः ॥

तस्मा दन्य न्नारायणा दिति ।

संहरस्व पुन र्देव रूप मक्षय्य मद्भुतम्
पुन स्त्वां स्वेन रूपेण द्रष्टु मिच्छामि शाश्वतम् ॥

इत्यर्जुनवाक्ये प्राचीनरूप स्यैव स्वकीयत्वोक्त्या प्रदर्शितं विश्वरूपं न स्वीयं, किंतु पारमेश्वर मेवेति व्यक्तत्वा च्च उपास्यं परं ब्रह्म शिव एवेति निष्पन्न मिति भावः ॥

उत्तरसूत्र मवतारयति पुन रिति ॥

अर्भकशब्देनाऽल्पत्वं लक्ष्यते । ओकः हृदयकमलमध्यवर्तिवह्निशिखारूप मुपासनास्थान

'नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा । तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति स्वल्पवह्निशिखान्तर्वर्तितया स्वल्पाश्रयत्वादल्पत्वव्यपदेशाच्चायं व्यापी न परमेश्वर इति चेन्न ॥

उपास्यत्वात्तथा व्यपदेशः, न स्वरूपाल्पत्वात् । व्योमवत् स्वरूपमहत्त्वस्य सिद्धत्वात् । यथा घटादिप्रणिहितस्य व्योम्नस्तदुपाधिवशादल्पत्वं स्वरूपतो महत्त्वं च । ततो न विरोधः ॥

पुनराशङ्क्य परिहरति ॥

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ १–२–८ ॥

य दुक्तं नारायणपरं ब्रह्मेति नारायणात् परं तदुपास्यं ब्रह्म तदेव हि, 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्ष' मित्युच्यते। तत्र परमशक्त्युमाशबलाकारतया कृष्णपिङ्गलं, कृशानुरेतस्कतया चोर्ध्वरेतस्कं, त्रिलोचनतया विरूपाक्षं, पुरि पूर्वोक्तदहरपुण्डरीके शेत इति पुरुषमृतं सत्यं, मनोवाग्विपर्यासरहितं, परं ब्रह्मेति हि लक्षणम् ॥

मल्पमित्यवगम्यते । 'नीवारशूकवत्तन्वी' इत्यल्पत्वव्यपदेशात् स्वल्पतममिति विज्ञायते। एवमत्यल्पे स्थाने व्यापिनः परमेश्वरस्य निवासाऽसम्भवात्तत्रोपास्यः कश्चिज्जीवरूपो देवताविशेष एव स्यान्न परमेश्वर इति चेन्न । परमात्मनो व्यापित्वेऽप्युपास्यत्वादुपासकहृदयस्थानमनुसृत्य सूचीरन्ध्रोपहिताकाशवदुपाधिप्रयुक्ताल्पत्वयुतोऽपि स्वरूपतो महत्त्वान्न विरोध इत्याशयः ॥

ननूत्तरसूत्रेण परमेश्वरस्य शरीरित्वप्रयुक्तदोषो निराक्रियते । पूर्वं मन्त्रादित्यविद्याधिकरणे स दोषो निराकृतः । अग्रे गुहाधिकरणे मोक्षाप्रत्त्यधिकरणे च निराकरिष्यते । अत्र कथं तच्छङ्कावकाश इत्याशङ्क्याह पुनरिति — इहाऽधिकरणे परमेश्वरस्याऽसाधारणविग्रहविशेषेण शरीरित्वप्रयुक्तदोषशङ्का तदीयविग्रहस्येतरशरीरवैलक्षण्यसमर्थनेन निराक्रियते । गुहाधिकरणे तस्याऽस्मदादिशरीरप्रवेशेन शरीरित्वप्रयुक्तदोषशङ्का श्रुतिबलेन निराक्रियते । मोक्षाप्रत्त्यधिकरणे सकलचिदचिच्छरीरित्वप्रयुक्ता दोषशङ्का निराक्रियते । अन्तरधिकरणे

अतोऽस्य त्रिलोचनत्वादिलक्षणशरीरसंबन्धा च्छरीरगतसुखदुःखादि संभोगप्राप्ति रिति चे न्न वैशेष्यात्। सुखदुःखभोगहेतुभ्यो जीवशरीरेभ्यो ब्रह्मरूप स्याऽस्ति हि वैशेष्यम्; इच्छागृहीतत्वा दस्य; तेषां कर्ममूलत्वा च्च। अत एव श्रूयते परमेश्वरः, 'अपहतपाप्मा विजरो विमृत्यु र्विशोको विजि घत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प' इति संसारिशरीरधर्मरहितत्वेन। न चैवं संसारी जीवः। अत ए वाप्राकृतानि पापजरामरणशोकादिरहितानि स्वेच्छासंपादितानि लीलामङ्गलरूपाणि परमेश्वरस्य 'स्थिरेभि रङ्गैः पुरुरूप उग्र' इत्यादिषु स्थिराणि नित्यानि शरीराणि विज्ञायन्ते। ततः परब्रह्मणः परमेश्वरस्य जीवा द्वैशेष्या न्न तद्व च्छरीरादिगतदोषापत्तिः॥

अत्र ख लूपक्रमादिलिङ्गै र्विरूपाक्षं ब्रह्म सर्वोत्कृष्ट मुपास्य मिति युक्त मेव। तथाहि, उपक्रमे, 'अणो रणीया' नित्यादिना, 'महिमान मीश'

---

तु प्रसङ्गवशा द्भाष्य एव तन्निराकरणं कृतम्। नतु त त्सूत्रसिद्धम्। ततो नेदं सूत्रं निरर्थ मित्याशयः॥

अतोऽस्त्र त्रिलोचनत्वा दिति — 'न ह वै सशरीरस्य सतः प्रियाऽप्रिययो रपहति र' स्तीति श्रुतेः सशरीरत्वे सुखदुःखादिक मवार्यम्। तस्मा न्नाऽय मुपास्यः परमेश्वरः। किंतु लोकपालरुद्रव त्कश्चन रुद्रविशेष ए वोपास्य इ त्यभ्युपगन्तव्य मिति शङ्कितु राशयः॥

परमेश्वरविग्रह स्याऽप्राकृतत्वे नाऽस्मदादिशरीरेभ्यो विशेषा न्न विग्रहवत्त्वेन सुखदुःख भोगप्रसङ्ग इ त्यभिप्रायेण परिहरति नेत्यादिना — वैशेष्यं विशेषः। इच्छागृहीतत्वा दिति — जीवपरमेश्वरयोः शरीरित्वे समानेऽपि जीवस्य शरीरवत्त्वं कर्मपारवश्यलब्धम्। ईश्व रस्य तु जीवरक्षार्थ मिच्छापरिगृहीत मि त्येवं हेतुविशेषा ज्जीव स्येव न परमेश्वरस्य सुखदुःख जनक मिति हृदयम्॥

ननु, दहरविद्याया मुपास्यः परमेश्वर इति नोपपद्यते। नारायणस्यैव त त्रोपास्यत्वात्। नारायणानुवाके तस्यैव महिमा भूया न्वर्ण्यते। तस्मा दत्र नोपास्यः परमेश्वर इति शङ्कां मनसि निधाय उपक्रमादिभि रस्या दहरविद्यायाः परमेश्वरपरत्व मुपपादयति अत्र खल्विति — उपक्र मादीति — ईशश्रुत्योपक्रमस्य परमेश्वरपरत्वं निर्धारयति उपक्रम इति॥

मित्यन्तेन सकलजन्तुहृदयगुहानिहितत्वेन स्वप्रसादातिशयनीतशोकपुरुष दर्शनविषयत्वेन च महिमातिशयवा नीशः प्रस्तुतः ॥

पुनः ' मम प्राणाः प्रभवन्ति तस्मा ' दित्यादिना स एव परमशक्तिमा न्प्राणादिजगदुपादानत्वेन निरूपितः । तत श्च ' यो देवानां प्रथमं पुरस्ता द्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमान ' मिति विश्वाधिक त्वेन , सर्वज्ञत्वेन , सकलकार्यप्रथमहिरण्यगर्भजनकत्वेनच निमित्तभूतः परा मृष्टः । स एव ततः ' परेण नाक ' मिति पराकाशगुहावर्ती व्यक्तफलकर्मा नुष्ठायिनां वेदान्ततात्पर्यवेदिनां यतीनां जितेन्द्रियाणां ' परामृतात्परिमुच्यन्ति इति परामृतरूपया प्राप्यत्वेन वर्णितः। क स्तत्प्राप्त्युपाय इति प्राप्ते ' दहरं विपाप्म ' मिति दहरोपासन मारब्धम् । तत्र ' तस्मि न्य दन्त स्त दुपासि तव्य ' मिति दहरपुन्डरीके य द्वस्तु त दुपास्य मिति सामान्ये नोक्तम् । त त्कि मि त्याकांक्षायां ' यः परः स महेश्वर ' इति महेश्वराख्यं त दुप वर्णितम् । त त्किंरूप मि त्याकांक्षाया मृतं सत्य मित्यादिना विरूपाक्षत्वादि

एव मीशशब्दे नोपक्रान्त मेव सर्वनाम्ना परामृश्य प्रवृत्तत्वा दनन्तरमन्त्रो प्यन्यविषयो भव तीति शङ्कितु नाऽवकाश इ त्याह पुन रिति — ' यो देवाना ' मिति मन्त्र स्तु परमेश्वर पर इति स्पष्ट मि त्याह तत श्चेति — यो देवाना मिति मन्त्र स्याऽनन्तर. ' यस्मा त्परं ना पर मस्ति किञ्चि ' दिति मन्त्रः । अस्य

> यस्मा त्परतरं नास्ति नाऽपरं च परात्मनः
> न ज्यायोऽस्ति न चाऽणीयो नम स्तस्मै स्वयम्भुवे ॥
> येने द मखिलं व्याप्तं यन्मया मूर्तयः स्मृताः
> तस्मै शिवाय महते नमः सूक्ष्माक्षरात्मने ॥

इत्याश्वलायनेन शिवपर इति स्पष्टीकृतः ॥

महेश्वराख्यं त दुपवर्णित मिति — अ यमाशयः भावः । ' यो वेदादा ' विति मन्त्रस्य न ताव दुपक्रमानुरोधेन नारायणपरत्वं सिध्यति । ईशशब्दान्तश्रुतिभि स्तस्य शिवपरत्वेन व्यव स्थितत्वात् । नाऽप्युपसंहारानुरोधेन ' ऋतं सत्य ' मित्युपसंहारस्याऽपि विरूपाक्षश्रुत्यादिभि

लक्षणरूप मि त्युपसंहृतम् । त त्रावान्तरवाक्यसिद्धो नारायणः पूर्वाधिकरण न्याया दुपासकत्वे नान्वे तीति युक्तम् ॥

अत्र सर्वेषा मुपासने अधिकारस्य सद्भावेऽपि नारायणग्रहण मस्याऽ धिक्यार्थम् । न हि ह्योपास्येन विरूपाक्षेण ब्रह्मणा तदुपासकस्य नारायण स्याऽभेदभावनया तद्धर्मे रस्य प्रतिपादनं तदुपादानस्य तदात्मन इति समी चीनम् ॥

इ त्यनुपपत्त्यधिकरणम्

अथ अत्रधिकरणम् १५

## अत्ता चराचरग्रहणात् ॥ १–२–९ ॥

' यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्यु र्य स्योपसेचनम् । क इत्था वेद यत्र स ' इति श्रूयतेऽस्य विषयः ॥

---

स्तत्परत्वनिर्णयात् । नाऽपि ' सहस्रशीर्ष देव ' मित्याद्यग्रिमग्रन्थसन्दर्भानुरोधेन । त स्योपक्र मोपसंहारैकरूप्यावगतशिवपरत्वानुरोधेन महाज्ञेय मिति विशेषणसामर्थ्या च उपासकविषयत्वा वगमा दिति । त त्रेति — मध्ये प्रसक्तस्य नारायणस्य ' स क्रतुं कुर्वी ' तेति प्रसक्तस्य जीव स्ये वोपासकत्वे नाऽन्वय इत्यर्थः ॥

न न्वत्र नारायण स्योपासकत्ववर्णनं कि मन्येषा मस्मि न्नुपासनेऽधिकारव्यावर्तनार्थ मि त्याशङ्क्य ने त्याह अत्रेति — विशिष्टपुरुषानुष्ठितत्वे नाऽस्योपासन स्यौत्तम्यप्रदर्शनार्थ मिति भावः । तस्मा दस्मि न्नेव प्रकरणे परमेश्वरनारायणयो रुपास्योपासकभावप्रतिपादना त्पर मेश्वराभेदभावनासिद्धै विश्वपतित्वादिभि स्तदीयै धर्मै र्नारायणस्य वर्णन मि त्येत दुपपद्यत इ त्यधिकरणार्थ मुपसंहरति त द्विहेति ॥

पारमेश्वरत्वेन प्रसिद्धाना मपि विश्वपतित्वादिलिङ्गाना मन्यदीयत्वप्रत्यायकश्रुतिप्राबल्य शङ्कया पूर्वपक्षदशायां नाऽतिस्पष्ट तेति पादसङ्गतिः ॥

**इति अनुपपत्त्यधिकरणम्**

**अथ अत्रधिकरणम्**

' यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्यु र्य स्योपसेचनम् । क इत्था ' इति विषयः ॥

इह मृत्यूपसेचनलिङ्गावगतब्रह्मक्षत्रोपलक्षितनिखिलप्रपञ्चसंहारकोऽत्ता किं तथा श्रूयमाणः परमेश्वरो वा ? उत जीवो वा ? इति संशयः ॥

परमकारुणिकस्य सर्वानुग्राहकस्य संहारकर्तृत्वमनुचितम् । हिंसारूपं हि परप्राणवियोजनम् । हिंसाहेतुः क्रोध एव मूलाङ्कुरः । क्रोधस्य रजोगुणस्य मोह एव मूलकन्दः । तस्य सर्वोपरिविज्ञानस्य तम एव प्रकृतिः अत स्तामसः सर्वसंहर्ता । तामसत्वं च मोहाज्ञानादिमत्त्वात् अप्रकाशत्वम्

अस्मिन्मन्त्रे ब्रह्मक्षत्रे यस्यौदनत्वेन रूपेण रूप्येते तस्य भोक्तृत्वं तदोदनत्वरूपण बलादवगम्यते । अत्र ओदनशब्दस्य विनाश्यस्वरूपसामान्याकारे प्रवृत्तिर्नियमितम् । तस्मात् संहर्तैव भोक्तेति विशेषणेन सूचयन् संहर्ता किं परमेश्वरः ? उत संसारव्यापादिरूपो देवताविशेषो वा ? इति परमेश्वरस्य संहारकर्तृत्वसंभवासंभवाभ्यां संशयं दर्शयति मृत्यूपसेचनेति — उपसेचनं नाम येन दधिपयःप्रभृतिना भोजनाय ओदन उपसिच्यते तदुच्यते । 'दध्नोपसिच्य भुङ्क्ते' इत्यादिव्यवहारदर्शनात् । एवं मृत्योरुपसेचनतारूपणबलादोदनतारूपितयोः ब्रह्मक्षत्रयोः मृत्युमेलनं प्रतीयते । एवं मृत्युमिलितयोः ब्रह्मक्षत्रयोरत्ता संहर्ता । भक्षणं संहारः । इत्थंभूतमदनं न केवलं ब्रह्मक्षत्रयोरेवात्र विवक्षितम् । किं तु तदुपलक्षितस्य सर्वस्यापि चराचरस्येत्यपि मृत्योरुपसेचनत्वरूपणबलादवगम्यते । यथा ह्युपसेचनम् ओदनादुपयोगितया स्वयमप्यद्यमानं भवति तथैव मृत्यूपसेचनत्वरूपणबलात् उपनीयमानस्य मृत्युना सह तत्सर्वसंहारस्य प्रलय एव संभवात्सर्वप्रपञ्चसंहर्तृत्वमनेन मन्त्रेण प्रतिपाद्यते ॥

अत्र संशयप्रदर्शकवाक्येन पूर्वाधिकरणसङ्गतिरेवं सूचिता । त्रिमूर्त्युत्तीर्णं परमशिवाख्यं परं ब्रह्म सकलवेदान्तप्रतिपाद्यमिति निर्णेतुमिदं शास्त्रं प्रवृत्तम् । केचित्तु त्रयाणां ब्रह्मविष्णुरुद्राणामन्यतम एव परं ब्रह्म, न तदुत्तीर्णं तत्त्वान्तरमस्तीति मन्यन्ते । तन्निरसनाय परब्रह्मणो हिरण्यगर्भातिरिक्तत्वं तस्य हिरण्यगर्भस्य च शेषशेषिभावप्रदर्शनेन पूर्वपादे हिरण्यगर्भाधिकरणे समर्थितम् ॥

पूर्वाधिकरणे नारायणस्योपासकत्वप्रदर्शनेनैव परमेश्वरस्य तदतिरिक्तत्वं समर्थितम् । तत्प्रसङ्गात्संहाररुद्रातिरिक्तत्वमनेनाधिकरणेन प्रदर्श्यत इति संहाररुद्रपरमेश्वरयोर्भेदं सिद्धं कृत्वा तदन्यो वेति तद्भिन्नत्वपुरस्कारेण संहाररुद्रविषया पूर्वपक्षकोटिरुपन्यस्ता ॥

परमेश्वरस्य संहर्तृत्वासंभवमुपपादयन् पूर्वपक्षं दर्शयति परमकारुणिकस्येति — न हि

सर्वसंहर्तृ ब्रह्मे त्युक्ते तस्य नित्यशुद्धस्य निरुपाधिकमङ्गलाकारस्य निस्संसार कलङ्क स्याऽज्ञानतमोमोहक्रोधादिकामङ्गलगुणसङ्करप्रसङ्गः । अपिच, स्वरूप लक्षणतया निर्णीतं सर्वज्ञत्वनित्यतृप्तत्वादिक मनर्थक मेव स्यात् । तस्मात् ब्रह्मणो ऽन्य एतादृशगुणः संहर्ता भव तीति पूर्वपक्षः ॥

सिद्धान्त स्तु ब्रह्मैव सर्वसंहर्तृत्वेन श्रूयते । कुतः चराचरग्रहणात् । य दुक्तं निखिलचराचरप्रपञ्चग्रासीकृत्य मयुक्त मिति, त देव ब्रह्मत्वे लक्षणम् । परिच्छिन्नशक्ते र्जीवस्य सकलचराचरसंहरणसामर्थ्याभावात् । 'तस्मा दुप संहर्त्रे महाग्रासाय वै नमो नमः' इति परमेश्वर स्याऽथर्वशिरसि श्रूयते सर्व संहर्तृभावः । न क्वचि ज्जीवस्य ॥

'य इमा विश्वा भुवनानि जुह्व' दिति ब्रह्मणो निजप्रकाशवह्नौ निखिलभुवनहव्यहोतृत्व मवगम्यते । न चैव मस्ति जीवस्य सामर्थ्यं हव्य

---

सर्वदा करुणया सर्वा ननुगृह्णन् कश्चि दपि हिंस्या दिति भावः । पूर्वपक्ष मुपसंहरति तस्मा दिति — सर्वसंहर्तृत्वं परमेश्वर स्यैव संभवति नान्यस्ये त्युपपादयन् तं नैव लिङ्गेन परमेश्वर एव प्रकृतमन्त्रप्रतिपाद्य इति सिद्धान्तयति सिद्धान्त स्त्विति ॥

महाग्रासा येत्यनेन गोबलीवर्दन्यायेन तदतिरिक्तसर्वप्रपञ्चग्रसितृत्व मुच्यते । अत्र सर्व संहर्तृत्वं न स्पष्टं सिध्य तीति तत्सिद्धये 'य इमा विश्वा भुवनानि जुह्व दपि होता निषसादा पिता नः । स आशिषा द्रविण मिच्छमानः परमच्छदो वर आविवे' शेति मन्त्र उदाहृतः । अस्याय मर्थः — ऋषिः सकलवेदद्रष्टा, नः अस्माकं पिता जनयिता, इमानि सर्वाणि भुवनानि, जुह्वत्सन् होता निषसाद होमकर्ता स्वयमे वाऽवशिष्टः स न्निविष्टः । एवं प्रलयकाले सर्वं स्वात्म न्युपसंहृत्य स्वमात्रावशेषेण स्थितः परमेश्वरः । आशिषा आशी रिच्छा । 'आशी रुरगदंष्ट्रायां शुभ वाक्याभिलाषयो' रिति कोशस्मरणात् । तया स्वात्मन इच्छाशक्त्या द्रविणं स्वविभूतिरूपं प्रपञ्च मिच्छमानः स्वेच्छाशक्तिरूपेणोपादानेन सुवर्णेन कुण्डल मिव प्रपञ्चं सिसृक्षुः परमच्छदः सङ्कल्पमात्रसृष्टप्रपञ्चरूपोत्कृष्टनिजाच्छादन स्तद्विशेषो भूत्वा, वर उत्कृष्टे परमच्छदत्वेन प्रा गुक्ते प्रपञ्चे आविवेश अन्तर्यामितया प्रविष्ट इति ॥

अत्र यद्यपि विश्वपदस्य सामस्त्यवाचितया समस्तभुवनसंहर्तृत्व मेव प्रतीयते, नतु चेतना चेतनात्मकसर्वप्रपञ्चसंहर्तृत्वं, तथापि तत् 'होता निषसा' देति होतृमात्राऽवशेषोक्तिसामर्थ्या

कोटिनिविष्टस्य। स्वान्तर गर्भितं चराचरं चिदचिदात्मकं वस्तूनि संहृत्य यदा वर्तते परमेश्वरः तदा सर्व मिदं निरस्तचन्द्रसूर्यादिप्रकाशतया निरस्त रात्रिदिनादिकालविभाग, मपगतनामरूपविशेषतया स्थूलदेवमनुष्यादिव्यव हारशून्यं तमोमात्रं वर्तते, स एक एव परमेश्वरो निरङ्कुशप्रकाशः सर्वसाक्षी तदानी मपि परिशिष्यते। तथाहि श्रुतिः ' यदा तम स्तन्न दिवा न रात्रि र्न स न्न चास च्छिव एव केवल ' इति। अत्र न स न्न चास दिति सदसतोः पशुपाशयो र्न स्वरूपसत्ता निषिध्यते, किंतु नामरूपविभागार्हं स्थूलत्वम्॥

ननु, नित्यप्रकाशे शिवे परब्रह्मणि सत्यपि कथं तमोमयं जगत्? इतिचे न्न। स्वयंप्रकाशस्य सर्वसाक्षिणः शिवस्य का हानिः? नामरूपशून्यतया ग्रहणाऽयोग्येषु विषयेषु विहतकरणशरीरशक्तीनां जीवानां प्रपञ्चग्रहणं नास्ति मलतिरोहितस्वज्ञानतया। शिवस्य स्वप्रकाशरूपस्याऽपि पूर्व मिव दर्शनं नास्ति। तस्मा न्निरस्तसमस्तकार्यविशेषज्ञाना परमसुषुप्तिमयी महावस्था तम इत्युच्यते। तथाहि स्मृतिः, 'आसी दिदं तमोभूत मप्रज्ञात मलक्षण ' मिति। नामरूपविभागानर्हसूक्ष्मचिदचित्प्रपञ्चविशिष्टतया शिवः केवल इत्युच्यते। स पुनः सर्गकाले स्वसङ्कल्पमात्रेण समवायिकारणनिरपेक्ष मेव स्वस्मात् प्रथमशक्तिपरिस्फुरणपूर्वकं पूर्ववत्तन्नामविशिष्ट मेव सकलं चिदचिदर्थजातं सृजति प्रकाशयति। तथाऽभियुक्तसूक्तिः,

> ' चिदात्मैव हि देवोऽन्तःस्थित मिच्छावशा द्बहिः
> योगीव निरुपादान मर्थजातं प्रकाशयेत् ॥ इति

ननु 'मायां तु प्रकृतिं विद्या न्मायिनं तु महेश्वरम्', ' तस्मा द्विरा डजायत ' इत्यादिभिः श्रुतिभिः मायापुरुषयो रुपादानत्वं श्रूयते। कथं निरुपादानत्वम्? इति चेत् सत्यम्। यथा घटनिष्पत्तौ कुलालस्य स्वशरीरपृथक्त्वेन मृत्पिण्ड उपा दानं दृश्यते, तथा न परमेश्वरात् पृथक्सिद्धं मायाद्युपादानम्। मायादि

रूपा त्परमेश्वरा ज्जगदुत्पत्तेः। अतो न विरोधः। तत्स्वरूपापृथगवस्थान सूक्ष्ममायापुरुषः परमेश्वर एव स्वय मुपादान मपी त्युच्यते। तथाऽथर्व शिखायां 'ध्यायी तेशानं प्रध्यायितव्यम्। सर्व मिदं ब्रह्मविष्णुरुद्रेन्द्रा स्ते संप्रसूयन्ते। सर्वाणि चेन्द्रियाणि सह भूतै र्न कारणम्। कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भु राकाशमध्य' इति श्रूयते। ततः सर्वभूतानां यत्र संहार स्तत्र एवैतेषा मुत्पत्ति रिति अनन्तानां तेषां यात्र त्संहृति स्तात्र त्त्रै धाऽनन्तशक्तौ शिवे स्थिति रिति सर्वसंहर्ता शिव एव ब्रह्मशब्दाभिधेयः॥

य दुक्तं संहारस्य हिंसारूपत्वा त्तन्मूलक्रोधाद्यनर्थगुणसंबन्धो ब्रह्मणो भवे दिति त दविचारवाग्विलासः। क्रोधादिमूलस्य तमोगुणस्य प्राकृत धर्मत्वात्। 'उमासहायं परमेश्वरं प्रभु' मित्यारभ्य 'समस्तसाक्षिं तमसः परस्ता' दिति श्रुति रेव भगवती प्रमाणं परमेश्वरस्य तमसः परत्वे। इह पौराणिकी फणिति रपि परमेश्वरस्य मोहादिनिवर्तकज्ञानादीनां नित्य संबन्ध माह॥

---

त्समर्थनीयम्। तत्सिद्धये 'होता निषत्ता' देत्यस्य परमेश्वरमात्रावशेषपरत्वं मन्त्रान्तरैकार्थ्येन स्पष्टीकर्तुं मन्त्रान्तरं तदर्थोपन्यासपूर्वक मुदाहरेति स्वेतर मखिल मित्यादिना॥

एवं समर्थितं तस्य संहर्तृत्व मुपसंहरति तत इति — ब्रह्मशब्दाभिधेयः शिव एव सर्व संहर्ते त्यन्वयः। परमेश्वरस्य सर्वसंहर्तृत्वे पूर्वपक्ष्यापादितं दोषं परिहर्तु मनुभाषते य दुक्त मिति — अ त्रेद माकूतम्। द्विविधो निग्रहः। अनुग्रहोद्देश्य स्तदनुद्देश्य श्च। आद्य स्त्रिविधः — निग्राह्या नुग्रहार्थः, तदितरानुग्रहार्थः, उभयानुग्रहार्थ श्च। सदाचारानुवर्तनाद्यर्थः पुत्रादिनिग्रह आद्यः। स तु सर्वथा न दोषः। द्वितीय स्तु उत्कृष्टानुग्रहार्थ मपकृष्टनिग्रहः।

> एकस्मि न्यत्र निधनं प्रापिते दुष्टचारिणि
> बहूनां भवति क्षेमं तत्र पुण्यप्रदो वधः॥

इत्यादिवचनप्रामाण्या न्न दोषः। यथा राज्ञां मृगयासु प्रजानुग्रहार्थं व्याघ्रादिवधः। चोरादिवध उभयानुग्रहार्थः। तेन हि प्रजानुग्रह इव

राजभि र्धृतदण्डा स्तु कृत्वा पापानि मानवा
निर्मलाः स्वर्ग मायान्ति सन्तः सुकृतिनो यथा ॥

इति वचनप्रामाण्या च्चोरानुग्रहार्थं श्च भवति। प्रत्युत त्रिविधो ऽप्ययं निग्रहो गुण एव। उक्त त्रिविधनिग्रहान्तर्भूत एवोऽपि परमेश्वरकृत्यभूतः संहारः। तत्र पापस्थितिकाले दैत्यादिनिग्रह उभयानुग्रहार्थः। शिष्टनिर्धारजातिनिग्रह स्तदन्यानुग्रहार्थः। नरकादिनिपातनरूपो निग्रहः पापक्षपणेन तत्तदनुग्रहार्थः। अथ त्रिविधो निग्रह स्तत्तदभिकृतदोषानुरूप्यादिमूर्तिद्वारक. ॥

महाप्रलये सर्वसंहारः साक्षा त्पारमेश्वरः । स तु श्रमाभ्यन्निरगतागतक्लेशानां महासुषुप्त्यापादनेन तत्तदनुग्रहार्थः । एवं परमेश्वरकर्तृकाणां निग्रहाणा मनुग्रहार्थत्वे नाऽदोषत्वं गुणत्वं च वायुसंहितायां प्रपञ्चितम् ।

ये पूर्वनिग्रहाः केचि ब्रह्मादिषु निदर्शिताः
तेऽपि लोकहिता यैव कृताः श्रीकण्ठमूर्तिना ॥

अण्ड स्याऽस्याधिपत्यं हि श्रीकण्ठस्य न संशयः
श्रीकण्ठाख्यां शिवो मूर्तिं क्रीडन्ती मधितिष्ठति ॥

सदोषा एव देवाद्या निगृहीता यथोचितम्
तत स्तेऽपि विपाप्मानः प्रजा श्च विगतज्वराः ॥

निग्रहोऽपि स्वरूपेण विदुषां न जुगुप्सितः
अत एव हि दण्ड्येषु दण्डो राज्ञां प्रशस्यते ॥

यत्सिद्धि रीश्वरत्वेन कार्यवर्गस्य कृत्स्नशः
न स चे दीशतां कुर्या ज्जगतः कथ मीश्वरः ॥

हिते सदा निषण्णाना मीश्वरः स्या न्निदर्शनम्
स कथं दूष्यते सद्भि रसता मेव निग्रहात् ॥

सर्वोऽपि निग्रहो लोके न च विद्वेषपूर्वकः
नहि द्वेष्टि पिता पुत्रं यो निगृह्याऽपि शिक्षयेत् ॥ इति

ननु, दैत्यादिसंहारे परमेश्वरस्य क्रोधः सम्भाव्यत इतिचे न। 'तमसः परस्ता' दिति वच नानुरोधेन तस्य तमोमूलकत्वाऽभावसंप्रतिपत्तेः। नच, तमसा विना क्रोधो न सम्पद्यत इति शङ्क्यम्। 'क्रोध माहारयन् तीव्र' मिति रामायणोक्तिरीत्या तस्य दुष्टनिग्रहार्थं माहार्यतया

ज्ञानं वैराग्य मैश्वर्यं तपः सत्यं क्षमा धृतिः
स्रष्टृत्व मात्मसंबोधो ह्यधिष्ठातृत्व मेव च ॥
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ॥ इति,

अशेषविषयामोघशुद्धबुद्धिविजृम्भणः
आत्मशक्त्यमृतास्वादप्रमोदरसिको युवा ॥

इत्यादि च। असङ्कुचितविभवः परमेश्वरो हि सिसृक्षुः 'सोऽकामयत बहुस्या' मिति बहुप्रपञ्चभवनाय आत्मनो मायालक्षणा मिच्छारूपां शक्ति माश्रयति। 'स तपोऽतप्यत' इति तपःस्वरूपिकया ज्ञानात्मिकया शक्त्या सकलजीव कर्मानुगुणतत्तच्छरीरसामग्री मालोचयति। आलोच्य सङ्कल्पितसकलकरण विदग्धया क्रियाशक्त्या 'इदं सर्व मसृज' ते तीच्छाशक्तिभित्तौ निखिल जगच्चित्र मुन्मीलयति। 'त त्सृष्ट्वा त दे वानुप्राविश' दिति सकलकार्यजात मनुप्रविश्य शक्तित्रयसंबन्धेन त्रिगुणभिन्नमूर्तित्रयादिप्रपञ्चरूपो भवति। त दिह सर्वशक्तेः सर्वज्ञस्य शिवस्य महिमा केन विज्ञायते?

अतः सर्वसंहर्ता परमेश्वर इति ॥

## प्रकरणा च्च ॥ १–२–१० ॥

'महान्तं विभु मात्मानं मत्वा धीरो न शोचति', 'नाऽय मात्मा

---

परमेश्वरनिघ्नत्वा दिति। ज्ञान मिति तपश्शब्दोऽत्र न कृच्छ्रचान्द्रायणादिपरः, किंतु सृष्टिकाले स्रष्टव्यालोचनरूपज्ञानशक्तिपरः। शिवस्य महिमा केन विज्ञायत इति—'क इत्था वेद यत्र स' इतिवाक्यार्थानुवादः। सूत्रार्थ मुपसंहरति अत इति ॥

'महान्तं विभु मात्मानं मत्वा धीरो न शोचति', 'नाऽय मात्मा प्रवचनेन लभ्य'

प्रवचनेन लभ्य' इति परमेश्वरस्यैव प्रकरणम्। अतश्च परं ब्रह्म परमेश्वरः सर्वसंहर्ता, नाऽन्य इति सिद्धम्॥

इति अत्रधिकरणम्

अथ गुहाधिकरणम् १८

इहाऽधिकरणे सर्वसंहर्तृत्वलक्षणेन सिद्धस्य परमेश्वरस्य द्वासुपर्णेत्यादिप्रसिद्ध स्वविभूतिभूतजीवसाहचर्यमभिव्यञ्जयितुमधिकरणान्तरारम्भः॥

## गुहां प्रविष्टा वात्मानौ हि, तद्दर्शनात् ॥१-२-११॥

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' इति श्रूयतेऽस्य विषयः॥

---

इतीदं परमेश्वरस्यैव प्रकरणम्। ततोपि सर्वसंहर्ता परमेश्वर एव, नान्य इति सिध्यतीत्यर्थः॥

इति अत्रधिकरणम्

अथ गुहाधिकरणम्

सङ्गतिं सूचयन्नुत्तराधिकरणमवतारयति इहेति — पूर्वाधिकरणे त्रिमूर्त्युत्तीर्णः परमेश्वर इत्युपपाद्य स एव मुमुक्षुभिः सकलेतरदेवतापरित्यागपूर्वकोपासनया साक्षात्करणीय इति च सूचितम्। तदयुक्तम्। तथाविधस्य परमेश्वरस्य

हरिश्चाहं च रुद्रश्च तथाऽन्ये च सुराऽसुराः।
तपोभिरुग्रैरद्याऽपि यस्य दर्शनकाङ्क्षिणः॥

इत्यादिचतुर्मुखादिवचनैर्ब्रह्मादीनामपि दुर्दर्शत्वेन प्रसिद्धत्वादस्मदादिभिरुपासनया साक्षात्कर्तुमशक्यत्वादित्याशङ्कानिराकरणाय परमेश्वरस्य सर्वोपासकसहचरितत्वेन नित्यसौलभ्यं व्यञ्जयितुमधिकरणान्तरमारभ्यत इत्याक्षेपिकी सङ्गतिरित्याशयः॥

ननु, परमेश्वरः केन हेतुनाऽस्मदादीनां साक्षात्कारसौकर्याय साहचर्यमनुमोदेत? इत्याकाङ्क्षायां निरतिशयवात्सल्यरूपेण सख्येनेति विभावनाय सख्यप्रतिपादको 'द्वा सुपर्णे'ति मन्त्र उपन्यस्तः। तथाविधे वात्सल्ये हेतुप्रदर्शनाय स्वविभूतिभूतेति विशेषणम्। जनकस्य सुतेष्विव स्वीयेषु वात्सल्यं युक्तमिति भावः॥

विषयवाक्यमुदाहृत्य तदर्थमुपन्यस्य च संशयबीजं सूचयन् संशयं दर्शयति ऋत

इह सुकृतस्थाने परार्थे ब्राह्मणादिशरीरे हृदयगुहां प्रविष्टौ फलभोक्तारौ छायातपा विव विलक्षणौ कौचित् श्रूयेते। ता वेतौ बुद्धिजीवौ वा ? जीवपरमेश्वरौ वा ? इति सन्देहः ॥

बुद्धिजीवा वेतौ। कुतः ? 'ऋतं पिबन्ता' विति भोक्तृत्वावगमात्। परमेश्वरस्य न भोक्तृत्वम्। 'अनश्न न्नन्यो अभिचाकशी' तीति दर्शनात्। बुद्धिजीवयो र्भोक्तृत्वं प्रसिद्ध मेव। किंच जीवेश्वरयो श्चेतनरूपयो श्छाया तपयो रिव वैलक्षण्यं नाऽस्ति। बुद्धे रचेतनत्वा दस्ति जीवा द्वैषम्यम्। त देवं बुद्धिजीवा विति प्राप्ते ब्रूमः ॥

जीवपरमेश्वरा वेव गुहागतौ। तयो रेव 'तं दुर्दर्शं गूढ मनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराण' मिति गुहाप्रवेशदर्शनात् ॥

---

मिति — सुकृतस्थान इति — लोक्यतेऽस्मि न्निति व्युत्पत्त्या सुकृतस्य कर्मणो लोके कार्ये ब्राह्मणादिशरीर इत्यर्थः। परार्थ इति — (परा उत्कृष्टा मा मतिः ब्रह्मविद्या यत्र जायते त त्परमम्) परार्थे उपासनारूपोत्कृष्टप्रयोजननिदान इत्यर्थः। एभि र्विशेषणै रुपासनाधिकारिणां ब्राह्मणादीना मनुग्रहाय विशिष्य तेषां शरीरे हृदयगुहाया मुपासनासाक्षात्कारयोग्येन भावलिङ्गरूपेण प्रविष्टस्य परमेश्वर स्योपासकसौकर्यार्थं तत्साहचर्यं मनेन मन्त्रेण प्रतिपाद्यत इत्यवगम्यते। इतरथा विशेषणाना मेतेषां नैरर्थ्यात्। हृदयगुहा मिति गुहापदार्थः। ऋत मवश्यं भाविकर्मफलं पिबन्ता वित्य स्यार्थः फलभोक्तारा विति। छायातपा विव विलक्षणा विति छायातपा वित्य स्यार्थः। इह जीवेन सह परमेश्वरस्य गुहाप्रवेशाभ्युपगमे तस्यापि दुःखभोक्तृत्व मापद्येतेति शङ्काप्रसक्तेः गुहाप्रवेशसम्भवाऽसम्भवाभ्यां संशय माह बुद्धिजीवा वित्यादि ॥

पूर्वपक्षं दर्शयति बुद्धिजीवा वेवेति — भोक्तृत्वं प्रसिद्ध मेवेति — जीवस्य भोगोपकरणभूतत्वा द्बुद्धे श्चक्षुषो रूपग्राहकत्वे नेव भोक्तृत्वव्यपदेशार्हत्वा दिति भावः। त देव मिति — अत्राऽयं भावः। यदि ब्राह्मणादिशरीरप्रविष्टो जीवद्वितीय श्चेतनो भवे त्तर्हि जीवव देव तस्याऽपि मनुष्यादिशरीरानुप्रवेशप्रयुक्तं सुखदुःखादिभोक्तृत्व मज्ञत्वादिना तत्साधर्म्यं चावार्यं स्यात्। ततो ब्राह्मणादिशरीर एकस्मि न्मुख्यभोक्तृत्वादियुक्तचेतनद्वयासम्भवेन जीवद्वितीयस्याऽचेतनत्वाऽवश्यम्भावा द्बुद्धि रेव तद्द्वितीये त्यवश्य मभ्युपगन्तव्य मिति ॥

सिद्धान्त माह जीवपरमेश्वरा वेवेति — सौत्र मात्माना विति पदं साध्यनिर्देशार्थ मिति, हि रवधारणार्थ मिति च भावः ॥

य दुक्त मीश्वरस्य न भोक्तृत्व मिति त दपि न युज्यते। 'प्राणारामं मन आनन्द' मिति ब्रह्मणोऽप्यात्मारामस्य मनोमात्रविषयस्वरूपानन्दभोग दर्शनात्। तथा पुराणं च,

आत्मशक्त्यमृतास्वादप्रमोदरसिको युवा
अनन्तपरमानन्दमकरन्दमधुव्रतः॥ इत्यादि

जीवस्य स्वकर्मफलभोक्तृत्वं प्रसिद्धम्। एवं च तयो र्भोगस्य साधार णत्वेन श्रवणेऽपि तत्र विशेषः समाश्रीयते। भोक्तृत्व मविशेषात्। यथा 'राजभृत्या वन्नं भुञ्जाते' इत्यत्र तत्तदुचितान्नविशेषः॥

य दुक्तं तयो र्न वैषम्य मिति त न्न। यतो 'नित्यो नित्यानां चेतन श्चेतनाना' मिति श्रुत्या नित्यत्वचेतनत्वादिना जीवेश्वरयोः साम्येऽपि वैषम्य मनादिमलसंबन्धभावाऽभावाभ्यां संभवति। 'ज्ञाज्ञौ द्वा वजा वीशानीशा' वित्यादिश्रुत्या ज्ञत्वाऽज्ञत्वस्वातन्त्र्याऽस्वातन्त्र्यादिधर्मवैषम्यं चावगम्यते॥

ननु, कथ मेतयोः शरीरसंबन्धे समानेऽपि कस्यचि दज्ञत्वादिका नर्थसंबन्धः, कस्यचि दनर्थाभाव इतिचे न्न। सुखदुःखयो र्नैकाश्रयत्वं

---

तद्दर्शना दिति हेतूपपादको हेतुः। परमेश्वरस्य गुहाप्रवेशदर्शना दित्यर्थः। परमेश्वरस्य गुहाप्रवेशदर्शने 'तं दुर्दर्शं' मिति मन्त्र उदाहृतः। जीवस्य गुहाप्रवेशे पूर्वपक्षिणो विवादाभावा द्विद्यमानोपि न प्रदर्शितः। 'ऋतं पिबन्ता' विति विशेषणं छत्रिन्यायेन॥

ननु, गुहाप्रवेशः परमेश्वरस्य न सङ्गच्छते तस्य मनुष्यादिशरीरप्रवेशे मनुष्यादे रिव तत्प्रयुक्तदुःखभोक्तृत्वप्रसङ्गात्। परशरीरानुप्रविष्टस्याऽपि पिशाचादे स्तत्ताडनादिना दुःखदर्शी नात्। अत 'स्तं दुर्दर्शं' मिति मन्त्रे 'अन्तः प्रविष्ट' इत्यादिश्रुत्यन्तरेषु च परमेश्वरस्य शरीर प्रवेशश्रवणं गौणतया नेतव्यम्। यथा राजकीयानां देशव्याप्ति रेव राज्ञो देशव्याप्ति रिति व्यप दिश्यते तथा परमेश्वरनियम्यानां जीवानां शरीरानुप्रवेशः परमेश्वरस्य तत्प्रवेश इति व्यप दिश्यते। एवं परमेश्वरस्य शरीरे प्रवेशासम्भवा द्गुहां प्रविष्टौ बुद्धिजीवा वित्ये वाऽभ्युपगन्तव्य मि त्यभिप्रेत्य शङ्कते नन्विति — परिहार माह सुखेति — गुहाप्रवेशः परमेश्वरस्य गौणतया

प्रयोजकम्। किंतु स्वातन्त्र्यास्वातन्त्र्ये। तथाहि श्रुतिः ‘ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्य त्यन्य मीश मस्य महिमान मिति वीतशोकः ’ इति। अस्याः साम्प्रदायि कोऽर्थः —

जीवोऽय मनादिना कर्मनिगलेन बद्ध स्तत्तत्फलभोगानुगुणमायामय बहुकले बरप्रविष्टोदुव रितापसंघात मनुभव न्ननीशया पारवश्येन त द्व्यपोहितु मकुशल एव मुह्यमानः शोचति महामोहनिबन्धनशोकजलधिमग्नो वर्तते, स्वप्रेरकतयाजुष्टं सर्वानुग्राहक मीश मुमासहितं यदाऽसौ पुन रस्य प्रसादेन पश्यति अपरोक्षेण जानाति, तदाऽस्य महिमानं निरतिशय मपहतशोकः प्राप्नो तीति ॥

अतः स्वतन्त्रस्य शिव स्यानादिमुक्तस्य शरीरसंबन्धेऽपि जीववत् न तद्गतदोषापत्तिः। तस्मा ज्जीवपरमेश्वरा वेव गुहागतौ ॥

---

योजयितुं न शक्यः। राजकीयव्याप्ते रेव राजव्याप्तित्वोपचारस्थले राजतदीया देशं व्याप्नुव न्तीति व्यपदेशदर्शना दिति भावः॥

भोक्त्रापत्त्यधिकरणेऽपि परमेश्वरस्य चिदचिदात्मकसकलप्रपञ्चशरीरत्वे मनुष्यादिव च्छरी रित्वप्रयुक्तं सुखदुःखभोक्तृत्वं स्या दिति पूर्वपक्षनिराकरणार्थ मेव वक्ष्यते ‘न खलु शरीरित्व प्रयुक्त मनिष्टभोक्तृत्वं किंतु पराधीनताप्रयुक्त मे’ वेति। तथापि न पौनरुक्त्यम्। यत स्तत्राऽ स्वातन्त्र्यस्य प्रयोजकत्वं लौकिकयुक्त्या स्थापयिष्यते। अत एव तत्र ‘ लोकव ’ दिति सूत्रम्। इहतु तत् श्रुत्या स्थाप्यते। श्रुति मुदाहरति तथाहीति — समाने एकस्मि न्वृक्षे शरीररूप इत्यर्थः। निमग्न इ त्यनेन जीवस्य शरीरप्रवेशेन अगाधजलमज्जने नेव तत्कृतक्लेशभाक्त्वं दर्शितम्। शोककारण माह अनीशयेति — ईश ऐश्वर्ये इति धातो र्भावे ‘ गुरो श्चहल ’ (पाणिनि ३-३-१०३) इत्याकारप्रत्यये सति ईशाशब्द ऐश्वर्यवाची। अनीशया पारतन्त्र्ये णेत्यर्थः। मुह्यमान इति — ताच्छील्ये शानच्प्रत्ययः। अनादिसिद्धाज्ञानावृत इत्यर्थः। जुष्ट मुपास नया प्रीतम्, अन्यं स्वस्मा दितर, मीश मीशा स्वातन्त्र्यरूपा शक्तिः साऽस्या स्तीति मत्व र्थीयोऽच्प्रत्ययः। उमासहित मित्यर्थः। अस्य महिमानं सार्वज्ञ्यादिकं रूप मिति प्राप्नोति। एते र्लेटि गुणाभाव श्छान्दसः। मन्त्रवाक्यतात्पर्यं दर्शयति अस्या इति — एवं शरीराश्रयणप्रयुक्त दुःखभोगस्य पारतन्त्र्यप्रयुक्तत्वा त्स्वतन्त्रस्य परमेश्वरस्य मनुष्यादिशरीरानुप्रवेशेऽपि न

पुन रुपपत्ति माह ॥

# विशेषणाच्च ॥ १-२-१२ ॥

जीवपरमेश्वरा वस्मि न्प्रकरणे विशेष्येते 'न जायते म्रियते वा विप श्चित्' इत्यादिना जीवः, 'अणो रणीया न्महतो महीयान्' इत्यादिना परमेश्वर श्च । एतद्विशेषणं जीवबुद्धिपक्षे कथं संभवति ? अतो जीवपरमेश्वरा वेव गुहां प्रविश्य प्रेर्यप्रेरकभावेन शरीरशरीरिभावेन च स्थिता विति निर्णयः ॥

इति गुहाधिकरणम्

अथाऽन्तराधिकरणम् १७

हृदयगुहान्तर्वर्तिन येोपास्यस्य परमेश्वरस्य इहोपासनास्थनान्तर मुच्यते ॥

---

तत्प्रयुक्तोपप्रमङ्ग इ त्युपसंहरति अत इति ॥

उत्तरसूत्र मवतारयति पुन रिति — युक्त्यन्तर मुच्यत इति भावः ॥

जीवपरमेश्वरा विति — अत्राऽयं भावः । पूर्वोत्तरसन्दर्भपर्यालोचनाया मपि गुहाप्रविष्टौ जीवपरमेश्वरा वेवेति लभ्यते । बहुषु मन्त्रेषु मन्तृमन्तव्यत्वेन, द्रष्टृद्रष्टव्यत्वेन, प्राप्तृप्राप्तव्यत्वेन च तथा एव बहुधा विशेषितत्वेन बुद्धिजीवपक्षोऽयुक्त इति । अधिकरणार्थ मुपसंहरति अत इति ॥

अत्र गुहाप्रवेशस्य श्रुत्यन्तरप्रसिद्ध्या ब्रह्मधर्मत्वेन स्पष्टस्यापि पूर्वपक्षदशायां ब्रह्मधर्मत्वाऽसम्भवशङ्काकलुषितत्वा न्नातिस्पष्टेनेति पादसङ्गतिः ॥

  

इद मधिकरणं शुद्धाद्वैतिनां प्रतिकूल मेव । जीवेश्वरयो र्गुहाप्रवेशवर्णनेन भेदस्य कण्ठरवेणोक्तत्वात् । यद्यपि अविद्याकृतत्वा त्संसारित्वस्य पारमार्थिकत्वा दसंसारित्वस्ये त्यविद्या माश्रित्य परै स्तितीर्षितः शास्त्राम्भोधिः । अत एव तेषां शास्त्रं प्रतिकूल मि त्यलं बहुना ॥

इति गुहाधिकरणम्

अथ अन्तराधिकरणम्

सङ्गतिं दर्शय न्नुत्तराधिकरण मवतारयति हृदयगुहेति — उपासकनेदिष्ठोपासनास्थान प्रदर्शनप्रसङ्गा त्तथाभूत स्यै वोपासनास्थानान्तरस्य प्रदर्शनार्थ मधिकरणान्तर मारभ्यत इत्यर्थः ॥

## अन्तर उपपत्तेः ॥ १-२-१३ ॥

छान्दोग्ये श्रूयते ऽस्य विषयः। 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच। एत दमृत मभय मेत द्ब्रह्म' इत्यादि॥

इहाऽमृतत्वादिलक्षणोऽक्ष्यन्तः श्रूयमाणः पुरुष ईश्वरो वा? अन्योवा इति संशये परमेश्वर एवायमिति वदामः॥

परमेश्वरस्य 'दहरं विपाप्मम्', 'पद्मकोशप्रतीकाश' मित्यादिषु च

---

विषयवाक्य मुदाहृत्य संशय दर्शयति छान्दोग्य इत्यादिना — एवं छन्दोगाना मुपनिष द्याम्नायते —

उपकोसलः कामलायनः सत्यकाम माचार्य मुपसन्नः तस्य द्वादशवर्षा ण्यग्नी न्परिचचार। तस्मै ब्रह्मोपदेश मकृत्वै वाचार्यं प्रोषित स त्याधिव्याधिपरवश मनश्नन्तं तदाद्याचार्याग्निपरिचर्यायां सवहितं त मवेक्ष्य गार्हपत्यदक्षिणाग्न्याहवनीया स्त्रयो ऽग्नयः सम्भूय करुणया तस्मै 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्यादिना ब्रह्मविद्या मुपदिश्य प्रत्येकं च स्वस्व विषयां विद्यां 'य एष आदित्ये पुरुषो दृश्यते सोऽह मस्मि स ए वाऽह म' स्मीत्यादिना, 'य एष चन्द्रमसि पुरुषो दृश्यते' इत्यादिना, 'य एष विद्युति पुरुषो दृश्यत' इत्यादिना चोप दिदिशुः। तदनन्तरं सर्वे ऽग्नयः सम्भूय 'एषा सोम्य तेऽस्मद्विद्या' चे त्यभिधाय 'आचार्या द्ध्येव विद्या विदिता साधिष्ठं प्राप' दिति श्रुत्यनुसारेण स्वोपदिष्टविद्या तदाचार्यकर्तृकगत्युपदेशेन साधिष्ठतां प्राप्नो त्वित्यालोच्य 'आचार्य स्तु ते गतिं व' क्त त्यवोचन्। ततः प्रत्यागत आचार्यः प्रसन्नमुख मुपकोसलं वीक्ष्य 'ब्रह्मविद इव ते सोम्य मुखं भाति कोनु त्वा मनुशशा' सेति पृष्ट्वा सहाभिभि र्भीत तस्मि न्नग्नयोऽस्मा उपदिदिशु रिति निश्चित्य 'किंनु सोम्य किल तेऽवोच' न्निति पृष्ट्वा एतावत् दुपदिश न्निति तेनोक्त तत्र वक्तव्यशेषोऽस्ती त्यवधार्य 'अहं तु ते त द्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एव मेवं विदि पापं कर्म न श्लिष्यत' इति स्ववक्तव्यं प्रतिज्ञाय 'ब्रवीतु मे भगवा' निति तेन प्रार्थितः संयद्वामत्वादिगुणक मक्षिपुरुष मुपदिश्य तदुपासकस्य 'अर्चिष मेवाऽभिसम्भव' न्तीत्यादिना 'एष देवपथो ब्रह्मपथः। एतेन प्रतिपद्यमाना इमं मानव मावर्तं नावर्तन्त' इत्यन्तं नाऽर्चिरादिमार्गप्राप्त्यन्तं पुनरावृत्तिरहितं प्राप्तिफल मुपदिदेशेति॥

अत्र 'य एषोऽक्षिणि पुरुषो दृश्यत' इति वाक्ये अक्षिणि दृश्यमानः पुरुषः परमेश्वरो वा, अन्यो वे त्यनेन जीवो वा छायापुरुषो वे त्यर्थः। एवं संशयं प्रदर्श्य पूर्वपक्षं दर्शयति परमेश्वर स्येत्या

हृदयपुण्डरीक एव सन्निधानश्रवणात्। जीवस्य रूपादिग्रहणे चक्षुरिन्द्रियादि प्रवेशोऽस्ति मनस्संबन्धात्। स एवाऽक्षिपुरुषः। अथवा छायापुरुष इति प्राप्ते निरूपयामः॥

परमेश्वर एवाऽक्ष्यन्तःपुरुष इति। निरुपाधिकामृतत्वाभयत्वादीना मस्मिन्नेवोपपत्तेः॥

यदुक्त मक्ष्यन्तःस्थिति रीश्वरस्य न श्रुतेति तत्राऽऽह॥

## स्थानादिव्यपदेशाच्च ॥१–२–१४॥

'य श्चक्षुषि तिष्ठन् चक्षुषोन्तरः। यं चक्षु र्न वेद यस्य चक्षुः शरीरं, य श्चक्षुरन्तरो यमयति एष त आत्माऽन्तर्या म्यमृतः' इति श्रुत्या चक्षुःस्थिति नियमनादिक मीश्वरस्य व्यपदिश्यते। तत एव दृगङ्गे शिवलिङ्गं स्या दिति दिव्यागमे प्रसिद्धम्। अतः पर एवाऽय मीश्वरः॥

---

टीका — एष इति प्रसिद्धवन्निर्देशा दृश्यत इत्यपरोक्षतयाऽभिधाना च्चेत्यर्थः। एवं जीवो वा छायापुरुषो वाऽक्षिपुरुषः। न परमेश्वर इति प्राप्ते पूर्वपक्षद्वयव्यावर्तक सिद्धान्त माह परमेश्वर एवेति — निरुपाधिकेति — अत्राऽय माशयः। स्वाभाविक ममृतत्वादिकं जीवस्य न सम्भवति। किं पुनः प्रतिबिम्बस्य। अतोऽमृतत्वादिकं परमेश्वर एवोपपद्यते। तस्मा दमृतश्रुत्यमृतत्वाऽभयत्वसंयद्वामत्ववामनीत्वभामनीत्वलिङ्गै र्हेतुभि रेत दमृतमित्यादिवाक्येन चाऽक्षिपुरुष परमेश्वर एवेति सिद्ध मिति भावः॥

अक्ष्याधारत्वं परमेश्वरे न प्रसिद्ध मस्तीति शङ्कासमाधानत्वे नोत्तरसूत्र मवतारयति यदुक्त मिति॥

अन्तर्यामिब्राह्मणे तिष्ठ न्नित्यस्थानवाचकशब्दस्य श्रूयमाणत्वा त्परमेश्वरस्य स्वमहिम प्रतिष्ठस्या प्युपासनार्थं शिवलिङ्गरूपेणाऽक्ष्याधारत्वं विवक्षित मिति भावः। इह पुरुषो दृश्यत इत्युपासनाकाले वर्तमानत्वव्यपदेशा दपि तस्य त द्विवक्षित मिति गम्यते। दृगङ्ग इति — सर्वाङ्गलिङ्गसाहित्यप्रकरणे वातूलोत्तरे निगदित मित्यर्थः। सूत्रे स्थानादीत्यादिग्रहणेन विवक्षितं विशेष माह नियमनादिक मिति — प्रतिबिम्बपरपूर्वपक्षानुपपत्तिप्रदर्शनार्थत्वे नोत्तरसूत्र मवतारयति छायेति॥

छायापुरुषपक्षे पुन रनुपपत्ति माह ॥

## सुखविशिष्टाभिधाना देव च ॥ १—२—१५ ॥

'कं ब्रह्म खं ब्रह्म' इति पूर्व मस्य सुखविशिष्टतयाभिदाना दे वाऽय मीश्वरः। नहि छायापुरुषे सुखसंभवः॥

य दुक्त मक्षिपुरुषस्य जीवरूपत्वं, तत्राह॥

## अत एव स ब्रह्म ॥ १—२—१६ ॥

यत एव भवभयभीताय उपकोसलाय ब्रह्मजिज्ञासवे 'कं ब्रह्म खं ब्रह्म इत्युपक म्योपदिष्टं, य देव कं त देव खं, य देव खं त देव क 'मिति।अत एव खशब्दाभिधेय आकाशः परमेव ब्रह्म। कि मीदृशोपपत्ति रस्ति जीवस्य ? नहि जीवे निरतिशयसुखसंभवः। अतो य देव पूर्व मपरिच्छिन्नसुखरूपतया प्रकृतं ब्रह्म त देवाक्ष्याधारतया प्रतिपाद्यत इति अक्ष्यन्तःपुरुषः परमेश्वरः॥

---

कं ब्रह्मेति — प्रकरणा द प्यक्षिस्थः परमेश्वर एव। 'प्राणो, ब्रह्म कं ब्रह्म, खं ब्रह्म' इति वाक्ये श्रुतस्य सुखविशिष्टस्य ब्रह्मण ए वाऽभिधाना दित्यर्थः॥

अथ अक्षिणि दृश्यतया निर्दिष्टो जीव इति शङ्कानिराकरणार्थत्वे नोत्तरसूत्र मवतारयति य दुक्त मिति॥

भवभयभीता येति — ननु उपकोसलः भवभयभीत्या ब्रह्मजिज्ञासु रिति कुतो विज्ञायत इतिचे दुच्यते। एवं हि तत्र पूर्वप्रसङ्गः — उपकोसले द्वादशवर्षा ण्यग्निपरिचरणपूर्वकं गुरुकुल वासं कृतव त्याचार्ये च तत्सहगता नन्या नन्तेवासिनः समावर्त्याऽपि त मसमावर्त्यैव प्रवासो द्युक्ते तं दृष्ट्वा तज्जायया 'तप्त्वा गय मग्नी नुपकोसलः पर्यचारी दस्मा अनुपदिश्य प्रवासे अग्नय एव त्वां शपेयु रतोऽवश्य मय मुपदिश्य समावर्तनीय इति प्रार्थितोऽपि त दविगणय्य प्रोषिते स त्युपकोसल श्चिन्तापरीत स्तत्प्रयुक्तव्याध्यभिभूतोऽनश्न न्नेव कञ्चि त्काल मग्नी न्परिचचार। त माचार्यजा योवाच, ब्रह्मचारिन्नशान किं नु नाश्ना' सीति। तत्र ख ल्विदं प्रतिवचनम् — 'व्याधिभिः परिपूर्णोऽस्मि नाशिष्या' मीति। अतः प्रक्रमानुसारेणाऽत्र व्याधिशब्दस्य उप देशालाभप्रयुक्तचिन्तै वे त्यवगम्यते। उपक्रमे तावत् 'उपकोसलो ह वै कामलायनः सत्यकामे

पूर्वपक्षे पुनरियमप्यनुपपत्तिरित्याह ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १–२–१६ ॥

जाबाले ब्रह्मचर्यमुषित्वा ' सेति वाक्ये ब्रह्मचर्यशब्दः ब्रह्मोपदेशार्थव्रतग्रहणपूर्वकगुरुकुलवासपरः। नतु वेदग्रहणार्थं प्रसिद्धोपकुर्वाणब्रह्मचर्यवासपरः । अग्रे वेदोपदेशस्याऽकीर्तनात् । उपासनाफलस्यै व कीर्तनाच्च । एवं ब्रह्मोपदेशार्थगुरुकुलवासमलिप्सा ह्य भवभयभीत्या ब्रह्मजिज्ञासुरित्यवमीयते अत एवाऽतिचिरं गुरुकुलवासमलिप्सायैव ब्रह्मविद्योपदेष्टव्येति मत्वा वेदोपदेशार्थिषु समावर्तितेष्वप्ययं न समावर्तित इत्यपि सङ्गच्छत इति भावः ॥

किं सीदन्तीति—भवभयभीता योपदेश्यत्वं जीवस्य नोपपद्यत इत्यर्थः। उपासनाफलप्रतिपादकवाक्यैरप्येषोऽपि ब्रह्मैवेति विज्ञायते । तथाहि ' सर्वां ह्येतेन कामा न्यपि नयन्ति य एवं वेद सर्वाणि कामानि नयति य एवं वेद सर्वेषु लोकेषु भवति य एवं वे ' देति वाक्यान्यपि फलवर्णनात्मकानि । इत्याद्येन वाक्येन हि सङ्कल्पमात्रसाध्यनिखिलाभिमतवस्तुप्राप्तिमत्त्वं दहरविद्यायां ब्रह्मविद्याफलत्वेन प्रसिद्धं वर्ण्यते ॥

द्वितीयवाक्येन सर्वसङ्कल्पसकलवस्तुप्रापकत्वं ' यं यं लोकं मनसा संविभा ' तीत्यादिश्रुतौ तत्फलत्वेन प्रसिद्धं वर्ण्यते । तृतीयवाक्येन ' स स्वराड् भवति तेषां सर्वेषु लोकेषु कामचारो भव ' तीत्यादिश्रुतिप्रसिद्धं तत्फलं वर्ण्यते । तत्तत्फलोपपादकत्वेन च तत्तद्वाक्येभ्यः प्रागश्रूयमाणा अप्यन्तर्यामित्वामनोज्ञत्वामर्त्यत्वादयो गुणा निर्धार्यन्ते । अग्रे ' इमं मानवमावर्तं नावर्तन्त ' इति ब्रह्मप्राप्त्यनन्तरमनावृत्तिलक्षणं फलं वर्ण्यते ; तच्चामृतत्वाभयत्वविशिष्टतया ' अथ मर्त्योऽमृतो भवति अथ सोऽभयं गतो भव ' तीत्यादिश्रुतिषु प्रसिद्धमिति तदुपपादकत्वेनामृतत्वाऽभयत्वगुणौ विधीयेते । विद्यान्तरेऽप्यनुदिष्टः फलविशेषोऽप्यत्राप्स्ति ॥

' अथ खलु चैवास्मिन् शव्यं कुर्वन्ति च यदि च नार्चिषमेवाभिसम्भव ' न्तीति । अस्यायमर्थः —

अस्मिन् ब्रह्मनिष्ठशिवलिङ्गोपासके मृते पुत्रादयः शवकर्म पैतृमेधिकसंस्कारादिकं यदि कुर्वन्ति यदि वा न कुर्वन्ति उभयथापि ते स्वार्चिरादिगतिप्राप्तिं स्वयमेवाप्नुवन्तीति । अनेन विद्यान्तरोपासकानां शवकर्माकरणे अर्चिरादिगतिप्राप्तौ कश्चित् कालं प्रतिबन्ध उन्नीयत इत्यस्मिन् ब्रह्मनिष्ठशिवलिङ्गोपासनाया अयमसाधारणो विशेषः । तस्मादक्षिण्युपास्यः परमेश्वर एव नान्य इति सिद्धमित्याशयः ॥

उत्तरसूत्रमवतारयति पूर्वपक्ष इति — पूर्वपक्षद्वय इत्यर्थः ॥

श्रुतब्रह्मस्वरूपाणा मधिगन्तव्याय अर्चिरादिगतं रक्षिपुरुषं श्रुतवतः ' अर्चिष मे वाभिसंभव त्वर्चिरोह रह ' इत्यादिना , ' तत्पुरु पोऽमानवः स एतान् ब्रह्म गमयति स एव देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानव मावर्तं नावर्तन्त ' इत्यन्ते नाभिधानात नासौ जीवः छायापुरुषोवा किं त्वीश्वर एव ॥

इति अन्तरधिकरणम्

अथ अनवस्थित्यधिकरणम् १८

## अनवस्थितेन संभवा च नेतरः ॥ १–२–१७ ॥

अस्य महोपनिषदि श्रूयते विषयः — अंगुष्ठमात्रः पुरुषोंगुष्ठं च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभु ' गित्यादि ॥

इ हांगुष्ठमात्रत्वादिविशिष्टः परमेश्वरो वा ? अन्यो वा ? इति संशयः

प्राणाग्निहोत्रप्रकरणा दंगुष्ठमात्र इ त्यल्पत्वव्यपदेशा च्चायं प्राणवायु

---

श्रुत मनुष्ठित मुपनिषद्विहित मक्षिपुरुषोपासनं यै स्तेषां ब्रह्मप्राप्तिसाधनभूताया अर्चिरादिगते रभिधाना च्चाय मक्षिपुरुषो जीवो वा छायापुरुषो वा न भवति। किं तु परमेश्वर एवेत्यर्थः ॥

अत्र ब्रह्मश्रुत्यादीना मिति शब्दशिरस्कत्वे नाऽविवक्षितार्थत्वशङ्काकलुपितत्वाद्ब्रह्मप्रकरणानुबन्धस्य मर्गाभिधानमात्रविषयत्वशङ्काक्रान्तत्वा न्नातिस्पष्ट तेति पादसङ्गतिः ॥

इति अन्तरधिकरणम्

अथ अनवस्थित्यधिकरणम्

अत्राऽपि पूर्वाधिकरण इव उपासके नेदिष्ठस्थानान्तरं प्रदर्श्यते। अतः प्रसङ्गसङ्गतिः। दृष्टान्तप्रत्युदाहरणरूपाऽन्यापि सङ्गतिः पूर्वपक्षेण व्यक्तीभविष्यति। विषयवाक्य मुदाहरति अङ्गुष्ठमात्र इति ॥

प्राणलिङ्गप्रकरणयोः ब्रह्मलिङ्गयो श्च प्राबल्यदौर्बल्यानिर्णया त्संशयं दर्शयति अन्यो

रेव पञ्चाना माहुतीनां भो क्तावगम्यते। न च भोक्तृत्वानुपपत्तिः। ' आप श्च पृथिवी चान्न मत्तारो वह्निमारुता ' वित्यादिषु वायो रपि भोक्तृत्वप्र सिद्धेः सर्वथाऽयं प्राणवायु रिति पूर्वपक्षः ॥

परमेश्वर ए वेति सिद्धान्तः । सकलजगदीश्वरत्वविश्वभुक्त्वादीनां धर्माणा मन्य त्राभिधा नेऽनवस्थाना दसंभवा च्च तत्र तेषाम्। अत ईश्वर ए वैतादृशः। तस्य प्राणरूपत्वे नाप्युपास्यत्व मुच्यते। ' प्राणानां ग्रन्थि रसि रुद्रो मा विशान्तक ' इति प्राणाधारत्वेन तस्य श्रवणात्। अंगुष्ठमात्र

वेति — ब्रह्मप्रकरणा दक्षिपुरुषो यथा ब्रह्म तथा प्राणाग्निहोत्रप्रकरणा दंगुष्ठमात्रपुरुषः प्राण इति पूर्वपक्ष दर्शयति प्राणेति ॥

' ईशः सर्वस्य जगतः ' इ त्यस्य धारणेन पतनाभावं संपाद्य स्थानासनगमनादिषु सर्वेषा मपि देहा स्नियम इति प्राणे प्युपपद्यत इत्यर्थः। ' ईशान मस्य जगतः सुव र्दृश ' मि त्यत्र जङ्गममात्रपरतया जगच्छब्दस्य प्रयुक्ततया त थेहापि कार्यसामान्यपरत्वं विहाय जङ्गममात्रपर त्वाभ्युपगमे नोपपद्यत इति भावः। सर्वं थेति — यदि जगच्छब्दो जङ्गममात्रपरः कार्य सामान्यपरो वा सर्वथा प्यगुष्ठमात्रः प्राणवायु रेव प्राणलिङ्गस्य प्रकरणस्य च बाधकाभावा दिति भाव ॥

सिद्धान्त माह परमेश्वर ए वेति — जगच्छब्दोऽत्र रूढ्या भूतादिषु लोकादिषु वा वर्तते। रूढिसंभवे योगग्रहण मयुक्तम्। विश्वशब्द श्च भुजिविषयभोग्यसामस्त्यपरः। न तु प्रा णाहुतिसामस्त्यमात्रपरः सङ्कोचे कारणाभावात्। न च सर्व लोकेश्वरत्वं विश्वभोक्तृत्वं च ब्रह्म णीव प्राणेऽभ्युपगन्तुं युज्यते प्राणे तयो रसंभवात्। ' एतस्मा ज्जायते प्राण ' इति ब्रह्मसृज्य त्वेन ' न प्राणेन नाऽपानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मि न्नेता वुपाश्रिता ' विति ब्रह्माश्रयाधीनस्वकार्यकरणशक्तिकत्वेन प्राणः श्रूयते। कथ मय मसंकुचितसर्वजगदीशिता वा सर्वभोक्ता वा स्यात्? तस्मा दुदाहृतब्रह्मलिङ्गद्वयानुसारा दङ्गुष्ठमात्रः परब्रह्मरूपः शिव ए वेति भावः ॥

ननु प्राणाग्निहोत्रप्रकरणाम्नाना दुपक्रमगतप्राणवायुलिङ्गवशा च्च प्राणाहुत्याराधितप्राण विषय ए वायं मन्त्रः स्या दि त्याशङ्क्य प्रकरण मविरोधेन संगमयति त स्येति — प्राण रूपत्वे नेति — प्राणादिशब्दाना मन्तर्यामिपर्यन्तत्वे प्रमाण माह प्राणाना मिति — ' ते नान्ने नाप्याय ' स्वेति मन्त्रशेषः। अंगुष्ठमात्र इति मन्त्रा त्प्रा ' क्प्राणानां ग्रन्थि र ' सी

परिमाण स्योपास्यत्वा दविरोधः। प्राणवायो र्भोक्तृत्वसिद्धा वपि विश्वभो क्तृत्वेत न्न संभवति ॥

अतोऽय मीश्वर एव प्राणाग्निहोत्राराध्यत्वेन प्राणरूपः प्रतिपाद्यत इति सिद्धम् ॥

इति अनवस्थित्यधिकरणम्

---

त्यादिमन्त्र आम्नायते। तेन परमेश्वरं प्रति प्रार्थना क्रियते। त्वं खलु प्राणानां ग्रन्थिः ग्रथ यिता व्यवस्थाप कोऽसि। अत स्त्व मन्तकः संहारकर्ता रुद्रो भूत्वा मां प्रविश। तेन कालाग्नि रुद्रात्मना अशित मन्नं पक्त्वा अन्नवीर्येण मा माप्याययितुं कु' र्विति मन्त्रार्थः। 'रुद्रो वा एष यदग्नि स्त स्यैते तनुवौ घोरान्या च शिवा' न्येति परमेश्वरस्य द्विविधं रूपं प्रसिद्धम्। तस्य भोजनकाले जाठराग्निज्वालाशान्त्यर्थं शिवरूपे णान्तर्भोक्तृतया सन्निधानं 'प्राणे निविष्टोऽमृतं जुहो' मीति 'शिवो मा विशाऽप्रदाहा' येत्यादिभिः प्राणाहुतिमन्त्रैः प्रार्थितम्। भोजना नन्तरं जठराभिमर्शनमन्त्रे णानेन भुक्तान्नपरिणामकृतदेहाप्यायनेन प्राणानां निश्चलतया देहेव स्थानसिद्धये रुद्ररूपे णान्तःपक्तृतया सन्निधानं प्रार्थ्यते। अतोऽत्र मन्त्राणा मन्तर्यामिप्रधानत्वा त्प्राणे निविष्ट इत्यादिमन्त्राणां प्राणात्मनि त्व य्यभिनिविष्टो भक्तः स न्नमृतं जुहो मीत्यादि रर्थो ग्राह्य इति भावः ॥

ब्रह्मलिङ्ग मुपपादयति अङ्गुष्ठमात्रेति — सर्वव्यापिनोऽपि परमेश्वरस्य उपास्यतया अङ्गुष्ठ परिमाणत्व मंगुष्ठसमाश्रयणं चोपपद्यत इति भावः। जठराभिमर्शनानन्तरं दक्षिणपादांगुष्ठे पाणि जलस्रावणार्थोऽयं मन्त्रः। तत श्च ब्रह्माण्डमूलभूताधारलोकस्थितकालाग्निरुद्रात्मना पिण्डधारभूते पादांगुष्ठे परमेश्वरं ध्यात्वा तत्प्रीत्यर्थं पाणिजलस्रावण मनेन मन्त्रेण कर्तव्य मिति पर्यवस्यति ॥

प्राणवायो रिति — इच विश्वभु गि त्यस्य असंकुचितसकलहव्यकव्यभोक्तृत्वरूपपर मेश्वरलिङ्गसमर्पकतया जगदीशत्वविश्वभुक्त्वादिधर्माणां पारमेश्वराणा मन्यत्र समन्वयेऽनवस्थाना दसंभवा च्च अस्मि न्मन्त्रे अंगुष्ठमात्रशब्दितः परमेश्वर एव न प्राणवायु रि त्यर्थः ॥

न न्वत्र परमेश्वर स्यांगुष्ठमात्रत्वे नोपास्यत्व मुक्तं त न्नोपपद्यते। प्राणाग्निहोत्रकर्मान्वयि देवतारूपपरमेश्वरप्रकाशकानां मन्त्राणा मुपास्यबोधकत्वाभावा दि त्याशङ्कां निराकुर्व न्नधिकर णार्थ मुपसंहरति अत इति — कर्माराध्यत्वेन प्रतिपाद्यस्याऽपि परमेश्वरस्य कर्मकाले ध्यात व्यत्वा दुपास्यत्व मविरुद्ध मित्यर्थः। कर्मान्वयिदेवताविचारपर स्याधिकरणस्य मुमुक्षूपास्यविचार परेऽस्मिन् शास्त्रे प्रवर्तनस्य प्रयोजनं वैश्वानराधिकरणे प्रदर्शयिष्यते ॥

इ त्यनवस्थित्यधिकरणम्

अथाऽन्तर्याम्यधिकरणम् १९

सर्वज्ञस्य सर्वशक्तेः सर्वानुग्राहकस्य विभो रपि शिवस्य परब्रह्मणः सवितृमण्डलपुरुषहृदय पुण्डरीकादि ष्वुपासनाय स्थिति रुपपादिता । सर्वत्र तां प्रतिपादयितु मिद मधिकरण मारभ्यते

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १–२–१८ ॥

अन्तर्यामिब्राह्मणेऽस्य विषयः श्रूयते । ' यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवी मन्तरो यमयति एष त आत्मान्तर्याम्यमृत ' इति ॥

एवं पृथिवी मारभ्य प्रतिपर्याय मव्यक्तात्मतत्त्वपर्यन्त मखिलवस्त्वन्त र्यामितया श्रूयमाणः परमेश्वरो जीवो विराट्पुरुषो वा प्रधानं वेति संशयः ॥

स्वोपार्जितविचित्रफलभोगाय सकलभूतेन्द्रियानुप्रवेशो जीवस्य युज्यते सकलचेतनोपादानतया सर्वभूतानुप्रवेशो विराट्पुरुषस्य युक्तः ॥

---

अथ अन्तर्याम्यधिकरणम्

सङ्गतिं दर्शय न्नुत्तराधिकरण मवतारयति सर्वज्ञ स्येति — सर्वज्ञत्वं सकलप्रपञ्चापरोक्षी कर्तृत्वम । सर्वशक्तिमत्त्वं सर्वोपादानत्वम् । सर्वानुग्राहकत्व सर्व स्याऽपि सत्तास्फूर्तिप्रदत्वम् । विशेषणत्रय मिदं विभुत्वोपपादक मेव ॥

उपासनाय स्थिति रुपपादिता । सर्वत्र ता मि त्यनेन प्रसङ्गसङ्गति रि हेति व्यक्तम् । विषयवाक्य मुदाहरति अन्तर्यामिब्राह्मण इति — बृहदारण्योपनिषदन्तर्गत इत्यर्थः । सत आ त्मेति माध्यन्दिन पाठ. । पृथिवी मार भ्येति — पृथिवीजलाग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्र तारकातमःप्रभृति ष्वात्मपर्यन्तं ष्वखिलवस्तु ष्वन्तर्यामितया श्रूयमाणः परमेश्वर स्तदन्यो वेति परमेश्वरं हेयप्रपञ्चानुप्रवेशासम्भवासम्भवाभ्यां प्रथमं संशयः । तत स्तदन्यकोटौ जीवो विराट्पुरुषो प्रधानं वेति । पृथिव्यादिप्रवेशस्य जीवादित्रयसाधारण्या त्संशयः ॥

जीवपक्षे ताव त्सर्वानुप्रवेश मुपपादयति स्वोपार्जि तेति — ' योन्तरो यमय ' ती त्येकवचनं समुदायाभिप्रायम् । द्वितीयपूर्वपक्ष मुपपादयति सकलेति — सुबालोपनिषदि ' यस्य पृथिवी शरीरं यः पृथिवी मन्तरे सञ्चर न्यं पृथिवी न वेद य स्यापः शरीर ' मित्याद्युपक्र म्यैष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण इ त्यन्तर्यामिणि नारायणपदप्रयोगः

अथवा महदादिरूपेण परिणतत्वा त्प्रधानस्य सर्वव्यापकत्व मुचितम् । 'विश्वाधिको रुद्र' इति विश्वाधिकत्वेन निखिलविकारोत्तीर्णस्य परमेश्वरस्य विकाररूपप्रपञ्चानुप्रवेशो न घटते । ततः परमेश्वर मन्तरेण जीवादि ष्वेक तमः स्या दन्तर्या मीति पूर्वपक्षे प्राप्ते ब्रूमः ॥

पृथिव्याद्यन्तर्यामितया श्रूयमाणः परमेश्वर एव सर्वान्तरत्वादितद्धर्म व्यपदेशात् । अथर्वशिरसि 'सोन्तरा दन्तरं प्राविश' दिति परमेश्वर स्यैव सर्वात्मत यानुप्रवेशदर्शनात् । 'स त आत्मान्तर्या म्यमृत' इति शिव ए वानादिमु क्तोमृत इ त्युच्यते । 'एतानि ह वा अमृतस्य नामधेया' नीति श्रवणात् । यथा 'विश्वाधिको रुद्र' इति विश्वाधिकत्वं परमेश्वरस्य श्रूयते तथा विश्वरूपत्व मपि । 'सर्वो वै रुद्र' इत्यादिषु सर्वविकारानुप्रवेशेऽपि तद्विकारस्पर्शलेशो नास्तीति खलु प्रतिपर्याय ममृतशब्दप्रयोगः ॥

---

संगच्छते । अथ वेत्यनेन तृतीयपूर्वपक्षे स्वारस्याभावो व्यञ्जितः । अचेतनस्य प्रधानस्य व्यापक त्वेऽपि तस्मिन् अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञा तेति वाक्य शेषे श्रुताना मदृष्टत्वादीनां सम्भवेऽपि द्रष्टृत्वादीना मात्मश्रुते र्नियन्तृत्वस्य च मुख्यतया तस्मि न्नसम्भवात् ॥

सूत्रं व्याकुर्वन् सिद्धान्तयति पृथिव्या दीति — अधिदैवाधिलोकादि ष्वन्तर्या मीत्यस्य विवरणं पृथिव्याद्यन्तर्या मीति — अन्तर्यामिब्राह्मणे पृथिव्यादि स्तनयित्न्वन्त मधिदैवम् । यः सर्वेषु लोके ष्वि त्यधिलोकम् । यः सर्वेषु वेदे ष्वि त्यधिवेदम् । यः सर्वेषु यज्ञे ष्वि त्यधि यज्ञम् । यः सर्वेषु भूते ष्वि त्यधिभूतम् । प्राणवाक्चक्षुःश्रोत्राद्यात्मान्त मध्यात्मम् ॥

सर्वान्तरत्वस्य परमेश्वरपर्यन्तं क्व प्रसिद्ध मि त्याकांक्षाया माह अथर्वशिर सीति — अमृतशब्दोक्त मनादिमुक्तत्वं सर्वान्तरत्वादीत्यादिशब्दग्राह्य मिति दर्शयति सत आत्मेति — विश्वाधिकस्य हेयप्रपञ्चानुप्रवेशो विरुद्ध इ त्याशङ्क्य विश्वाधिकत्ववदेव विश्वरूपत्व मपि श्रुति प्राप्त मङ्गीकरणीय मि त्याह यथा विश्वाधिक इति — विरोधपरिहारे स्त्वमृतशब्दे नैव विकार दोषास्पर्शपरेण सूचित इत्याह तद्विकारेति ॥

अथर्वशिर स्यपि 'सोऽन्तरा दन्तरं प्राविश' दिति सर्वप्रवेश मभिधाय 'यो वै रुद्रः स भगवा' नित्यादिविबुधकृतपरमेश्वरस्तुतिमुखेन सर्वप्रवेशप्रयुक्तसार्वात्म्यप्रपञ्चने ब्रह्मविष्ण्वादि

अथर्वशिरसि च 'यो वै रुद्रः स भगवान् य श्च ब्रह्मा भूर्भुवस्सुव स्तस्मै वै नमो नम' इत्यादिना ब्रह्मविष्णुरुद्रमहालक्ष्मीसरस्वतीगणेशस्क न्देन्द्रादिलोकपालभूरादिसप्तलोकपृथिव्यादिपञ्चभूतसूर्यसोमग्रहनक्षत्रकालादि स्वरूपेण प्रत्येक मभ्यामतो निरूप्यते परमेश्वरः । तत्रापि सकलचिदचित्त्वानुप्रवेशाददृष्ट्या पुरुषार्थसंबन्धो भवे दिति शङ्कायां प्रतिपर्याय मैश्वर्यादि मङ्गलगुणसंबन्धाभिधायिभगवच्छब्दप्रयोगः कृतः ॥

---

पर्यायेषु सर्वे ष्वपि तत्तत्प्रवेशप्रयुक्ततत्तदीयदोषसंस्पर्शशङ्कापरिहारार्थ मेव प्रतिपर्याय मैश्वर्यादि षाड्गुण्यसामग्र्यप्रतिपादको भगवच्छब्द इ त्याह अथर्वशिरसि चेति — अन्तर्यामिब्राह्मणे अमृतशब्देन प्रपञ्चप्रवेशप्रयुक्ततत्तद्दोषासंस्पर्शमात्र मुक्तम् । तदुपपादक मैश्वर्य मथर्वशिरसि भग वच्छब्दे नोक्तम् ॥

ननु परमेश्वरस्य शरीराभावा न्नियन्तृत्वं नोपपद्यत इतिचे न्न । तस्य शरीराभावेपि स्वत स्सिद्धैश्वर्यवशा त्सर्वनियन्तृत्वोपपत्तेः । नियमनशक्तिरूपैश्वर्याभिव्यक्तये हि शरीरविशेषापेक्षा । स्वत सिद्ध तस्मि न्कि शरीरेण ? तत्र तत्र तत्तन्नियमनोपयोगिशरीरसद्भावेपि शक्तिविशेषा त्तस्य प्रपञ्चप्रवेशप्रयुक्तसुखदुःखानाश्रयणम् । स्वशरीरादिमबन्धितया दुःखजनकत्वेन हि प्रपञ्चस्य हेयत्वम् । शक्तिविशेषवन्तं प्रति तज्जननाशक्तस्य तस्य हेयत्व मे वासिद्धम् । तस्मा त्तत्तन्नियमन शक्तिविशेषोपधानेन शरीरविशेषोपधानेन वा तत्र तत्र परमेश्वरस्य स्थितौ न का प्यनुपपत्तिः ॥

ननु वाक्यशेषे अदृष्टो द्रष्टा, अमतो मन्ता, नाऽन्यो तोऽस्ति द्रष्टा इत्यादि वाक्यानि श्रूयन्ते । तानि जीव ए वाञ्जस्येन समन्वितत्वा त्परमेश्वरे कथ मुपपद्येर न्निति चे दुच्यते । 'श्रवणा यापि बहुभि र्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुश लोऽस्य लब्धा आश्चर्यो ज्ञाता कुश लोऽनुशिष्ट' इति श्रुत्यन्तरदर्शना न्मन्दानां श्रावणमनन विज्ञानसाक्षात्कारविषयो न भवति । ये धीराः श्रोतृमन्तृविज्ञातृद्रष्टार स्तच्छरीरक स्तन्निय न्तापि भवति । अतोन्य. बद्धन श्रावणादिकर्तृशरीरकस्वतन्त्र स्तन्नियन्ता नास्तीति तत्सङ्कल्पोप ज्ञैव तद्विषयश्रावणादिसिद्धि रिति ॥

यथा तस्मि न्ग्रामे अय मेक एव सर्वनियामक इति वाक्यान्तरं नाऽन्यः पुरु षोस्तीति वाक्यस्य प्राग्वर्णितसर्वनियामकत्वविशिष्टपुरुषान्तरनिषेधपरत्वव त्प्रस्तुतसर्वनियन्तृत्वादिविशिष्ट द्रष्ट्रन्तरनिषेधपरत्व मभ्युपेयम् । तेन परमेश्वरस्य समानाभ्यधिकराहित्य मपि लभ्यते । अन्येत रादिशब्दानां प्रतियोगिसदृशे तद्भिन्ने व्युत्पत्तिः । नतु तद्भिन्नमात्रे । तत श्च नाऽन्योऽतोऽस्ति द्रष्टा इत्यादिवाक्याना मय मे वार्थो युक्तः । एवं वाक्यशेषस्यापि परमेश्वर ए वाञ्जस्यसिद्धे रसं

ततः सर्वात्मा शिवः परमेश्वर इति युक्त मेव ॥

य दुक्तं प्रधानादीना मन्तर्यामित्व मुचित मिति त त्परिहरति ॥

## न च स्मार्त मतद्धर्माभिलापात् शारीरश्च॥ १–२–१९ ॥

न च स्मार्तं प्रधान मन्तर्या मीति श्रुतम् । तस्य विकारजडत्वादिधर्मा भिलापा न्न शारीरो विराट्पुरुष श्च तस्य सकलनियामकत्वाद्यनुपपत्तेः॥

---

कुचितसर्वनियन्तृत्वस्य अमृतशब्दोक्तानादिमुक्तत्वस्य अमृतश्रुतेश्चान्य त्रासंभवा दपि पर मेश्वर ए वान्तर्या मीति भावः ॥

अथ प्रधानादिपूर्वपक्षत्रयनिराकरणार्थत्वे नोत्तरसूत्र मवतारयति य दुक्त मिति ॥

तस्य विकारजडत्वादिधर्मानभिलापा दिति — अ त्रायं भावः । ‘ सर्वाणि भूतानि योन्तरो यमय ’ तीत्यादिना अन्तर्यामिणि श्रुतानां सर्वभूतनियन्तृत्वादीनां धर्माणां प्रधाने अ संभवा दन्तर्यामि ण्यसंभावितानां प्रधानधर्माणां विकारजडत्वादीनां प्रतिषेद्धु मशक्यत्वा च्च स्मार्तं साङ्ख्यस्मृतिसिद्धं प्रधानं नान्तर्यामी भवितु मर्ह तीति ॥

तस्य सकलनियामकत्वाद्यनुपपत्ते रिति — ‘ सर्वाणि भूतानि योन्तरो यमय ’ ती त्यादिषु सर्वकल्पानुयायिसकलप्रपञ्चनियन्तृत्व मसंकुचितं प्रतीयते । ‘ नाऽन्योऽतोऽस्ति द्र ’ ष्टे त्यादौ प्राग्वर्णितरूपनियन्तृत्वविशिष्टद्रष्ट्रन्तरादिनिषेधेन तत् स्थिरीक्रियते । त द्धि प्रतिकल्पं भिन्नस्य मूर्त्यात्मनो हिरण्यगर्भस्य नारायणस्य च न संभवति ॥

ननु , सुबालोपनिषदि पृथिव्याद्यन्तर्यामिणि नारायणपदप्रयोगा न्नारायण स्यासंकुचित सकलनियन्तृत्व मुपपद्यत इतिचे दुच्यते । सुबालोपनिषदुपक्रमे ‘ त दाहु. किं त दासी ’ दिति प्रश्नपूर्वकं परमात्मस्वरूपं प्रथम मासीत्। तत स्तम स्तमसो भूतादि स्तत आकाशादिक्रमेण भूतपञ्चकं तेन ब्रह्माण्ड मुत्पादितं तन्मध्ये दिव्यसहस्रशीर्षा सहस्राक्षः सहस्रपात् सहस्रबाहुः पुरु षोऽजायत ’ इ त्युक्त्वा ‘ ब्राह्मणोऽस्य मुख मासीत् बाहू राजन्यः कृत ’ इत्यादिना पुरुषसूक्त प्रक्रियया तस्य मुखादिभ्यो ब्राह्मणादीनां हृदयाद्यवयवान्तरेभ्योन्येषां च केषांचि च्चेतनाचेतनाना मुत्पत्तिं , ललाटा त्क्रोधजस्य रुद्रस्य , निश्वासेभ्यो वेदादिशब्दजालप्रादुर्भावं चाभिधाय तस्मा दे वार्धेन स्त्रीभाव मर्धेन पुम्भावं च प्राप्ता द्देवर्षियक्षराक्षसादीनां तिरश्चां च तत्तज्जननोचितस्त्री पुंसविग्रहपरिग्रहेण मिथुनीभाव मापन्ना दुत्पत्तिं वर्णयित्वा उपसंहारकाले तेन क्रियमाणत्रैलोक्य भस्मीभाव मुपक्रम्य , पृथि व्यप्सु लीयत ’ इत्यादिना ‘ तमः परस्मि न्नेकीभव ’ तीत्यन्तेन पृथिव्यादेः प्रथमकार्यतमःपर्यन्तस्य प्रपञ्चस्य परमात्मनि लयो दर्शितः ॥

जीव श्च न भव ती त्याह ॥

## उभयेपि हि भेदेनैन मधीयते ॥१-२-२१॥

उभये काण्वा माध्यन्दिनशाखिन श्च ' यो विज्ञाने तिष्ठन् ' ' य आ त्मनि तिष्ठ ' न्नित्यादिना जीवा दन्तर्यामिणं भेदे नाधीयते । परमेश्वर स्यैव सकलान्तर्यामित्वं न प्रधानविराट्पुरुषजीवाना मिति सिद्धम् ॥

इ त्यन्तर्याम्यधिकरणम्

एव ताव त्सुबालोपनिषदि प्रथमानुशासने जगदादिकारणभूतः परमात्मा , तेन ब्रह्माण्ड मध्ये सृष्ट. तन्मध्यगतदेवमनुष्याद्यवान्तरसृष्टिसंहारकारी सहस्रशीर्षत्वादिविशिष्टपुरुष श्चेति द्वौ वर्णितौ । ' तत्र तदण्डं हिरण्मयं समभव ' दिति प्रक्रम्य मध्ये ' दिव्यः सहस्रशीर्षा सह स्राक्षः सहस्रबाहुः पुरु षोजायत ' इति ब्रह्माण्डमध्ये परमात्मना सृष्टो यः पुरुषो वर्णित स्त मेव ब्राह्मणादिसकलप्रजास्रष्टारं दिव्यपुरुषं ' नै वेह कि च नाग्र आसी दमूल मनाधार मिमाः प्रजाः प्रजायन्त ' इति प्रवृत्ते तृतीयानुशासने ' दिव्यो देव एको नारायण ' इति प्रस्तुत्य ' चक्षु श्च द्रष्टव्य च नारायण ' इत्यादिना तस्य सर्वोपादानत्वप्रयुक्तसार्वात्म्य मुक्त्वा त स्यैव चतुर्थानुशासने ' यस्य पृथिवी शरीर ' मित्यादिना ' स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण ' इत्यन्तेन सर्वान्तर्यामित्व मुक्तम् ॥

न हि तत्परमात्मा सृज्यत्वेन डिम्बविशेषणावृत्त्या चिति परमाकाशशब्दवाच्यां चिच्छक्तौ भवत्वेन च प्रकृतस्य श्रुत्यन्तरप्रसिद्धमध्यसृष्टब्रह्माण्डरूपगर्भगोलकमध्यनिवासलब्धनारायणसंज्ञस्य स्वरूपे णोपपद्यते ॥

अतः शारीराधिकरणन्यायेन परमेश्वराभेदट्टष्टचैव त दुपपादनीयम् । त थोपपादनं सूच यितुं ' अनुपपत्त स्तु न शारीर ' इति शारीराधिकरणे नारायणविषयतया प्रयुक्त शरीरपद मिहापि तद्विषयतया प्रयुक्तम् ॥

जीवपरपूर्वपक्षनिराकरणार्थत्वे नोत्तरसूत्र मवतारयति जीव श्चेति ॥

यो विज्ञान इति स्थाने ' य आत्म ' नीति माध्यन्दिनपाठदर्शनात् स्थानप्रमाणेन विज्ञानशब्दस्य जीवपरत्व मवसीयते ॥

ननु आत्मशब्द स्यैव स्थानप्रमाणेन ज्ञप्तिपरत्वं कल्पनीय मिति शङ्क्यम्। आत्म

अथ अदृश्यत्वाधिकरणम् २०

इह प्रत्यक्षपृथिव्यादिरूपत्वेन प्रतिपादितस्य परमेश्वरस्य तद्वद्दृश्यत्वादिकं नास्तीति प्रतिपादयितु मधिकरण मवतार्यते ॥

---

शब्दस्य ज्ञप्तौ प्रयोगादर्शनात् । एव मन्तर्यामिणो जीवा दर्थान्तरत्वे नैव शाखाद्वये व्याम्नाना त्परमेश्वर एव सर्वान्तर्यामी न जीव इति सिद्ध मि त्याशयः ॥

  

इद मधिकरणं शुद्धाद्वैतिनां विरुद्ध मेव । अत्र जीवब्रह्मणो र्भेदस्य कण्ठरवेण श्रुतिसिद्धत्वानुशासनात् ॥

अत्र यद्यपि परैः 'अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणो र्भेदव्यपदेशो न पारमार्थिकः । एको हि प्रत्यगात्मा भवति । न द्वौ प्रत्यगात्मानौ सम्भवतः' इत्यादिनाऽविद्या माश्रित्य स्वपक्षे प्रतिष्ठापयितु मुक्तं तथाऽपि श्रुतिसूत्रविरोधस्य दुरुद्धरत्वा त्तन्मुधायामकर मे वासीत् ॥

अथ सुबालोपनिषदालम्बनेन य त्पाञ्चरात्रिणां विवरणं त दपि सुबालोपनिषदोऽवान्तरसृष्टिविषयताव्यवस्थापनेन निराकृत मि त्यलं बहुना ॥

इति अन्तर्याम्यधिकरणम्

---

अथ अदृश्यत्वाधिकरणम्

सङ्गतिं दर्शय न्नुत्तराधिकरण मवतारयति इ हेति ॥

प्रत्यक्षतो दृश्यमानं य त्पृथिव्यादिकं त त्परमेश्वरस्य नियम्यत्वेन शरीर मिति प्रागुक्तम् । त दनुप्रविश्य तत्र स्थितस्य गृहस्थितस्य चैत्र स्येव दृश्यता स्या दिति शङ्कानिराकरणार्थं सर्वत्र तन्नियम्यानुरूपशरीरविशिष्टतया स्थितस्याऽपि दृश्यत्वाभावप्रतिपादक मिद मधिकरण मित्यर्थः । 'न चक्षुषा पश्यति क श्च नैन' मित्यादिश्रुतिप्रसिद्धब्रह्मलिङ्गस्याऽ प्यदृश्यत्वस्य प्रदर्शिततया दृश्यत्वप्रसक्त्याऽनतिस्पष्टब्रह्मलिङ्गसद्भावा दिह पूर्वाधिकरणसङ्गत्या पादसङ्गति रपि प्रदर्शिता ॥

# अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १–२–२२ ॥

' अथ परा यया त दक्षर मधिगम्यते । य त्त दद्रेश्य मग्राह्य मगोत्र मवर्ण मचक्षुःश्रोत्रं त दपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं त दव्ययं य द्भूतयोनिं परिपश्यन्ति धीरा ' इत्यादिः श्रूय तेऽस्य विषयः ॥

अ त्राक्षरं प्रधानं जीवः परमेश्वरो वेति संदेहः ॥

प्रधान म त्राक्षरं तस्य महदादिपरिणामिनो भूतयोनित्वसंभवात् । अथवा जीवः । तस्य हि ' क्षरं प्रधान ममृताक्षर ' मिति श्रुते रक्षरशब्द

---

अक्षरतत्त्वे सर्वज्ञत्वादे रनन्वयेन पूर्वपक्षकोटिद्वयं तदन्वयेन सिद्धान्तं चाभिप्रेत्य संशयं दर्शयति अ त्राक्षर मिति ॥

ननु , इह अक्षरशब्दितं प्रधानं जीवो वेति पूर्वपक्षो न युज्यते । इह ' तपसा चीयते ब्रह्म ' इत्यादिमन्त्रेषु ब्रह्मश्रुतिः ' यः सर्वज्ञः सर्ववि ' दित्यादौ सर्वज्ञत्वं चाम्नायते । उपक्रमे ' कस्मि न्नु भगवो विज्ञाते सर्व मिदं विज्ञात ' मिति सर्वविज्ञानप्रतिज्ञा , परमोपक्रमे ' स ब्रह्म विद्यां सर्वविद्याप्रतिष्ठा मथर्वाय ज्येष्ठपुत्राय प्राह ' इति ब्रह्मविद्यासमाख्यापि श्रूयत इत्याशङ्क्य प्रधानपूर्वपक्ष मुपपादयति प्रधान मत्रेति ॥

ननु 'यद् भूतयोनि' मिति श्रुतं भूतयोनित्वं योनिशब्दस्य स्थानवाचितया भूताधारत्वं वा? अथ त स्योपादानवाचितया भूतोपादानत्व वा? उभयथापि सर्वाधारे सर्वोपादाने च ब्रह्म ण्युपपद्यते कथं त त्प्रधानविषयं भवितु मर्हती त्याशङ्क्य विशेषयति महदादिपरिणामिन इति — भूतयोनिशब्देन परिणामितया भूतोपादानत्व मुच्यते। नतु भूताधारत्वं भूतोपादानत्व सामान्यं वा। भूतयोनित्वविवरणार्थं प्रवृत्ते 'य थोर्णनाभिः सृजते गृह्णते च', 'यथा पृथिव्या मोषधयः सम्भवन्ति', 'यथा सतः पुरुषा त्केशलोमानि तथाऽक्षरा त्संभव तीह विश्व ' मिति समनन्तरमन्त्रे परिणाम्युपादानरूपोर्णनाभ्यादिदृष्टान्तोपादानेन तादृशार्थावगमात् । परिणा म्युपादानत्वस्य निर्विकारे ब्रह्म ण्यसम्भवा त्प्रधान मे वात्र अक्षरशब्दित मिति भावः ॥

अथ जीवपूर्वपक्ष मुपपादयति अथ वेति — ननु अक्षरशब्दो हि स्वकार्यं व्याश्नुते व्याप्नो तीति व्युत्पत्त्या प्रधाने न क्षर तीति व्युत्पत्त्या ब्रह्मणि चोपपद्यते। स कथं जीव उप पद्यत इ त्याश ङ्क्याह तस्य हीति — 'क्षरं प्रधान ममृताक्षरं हरः। क्षरात्मानावीशते देव एकः' इति श्वेताश्वतरोपनिषदि परब्रह्मणः पशुपाशपतित्व माम्नायते। तत्र क्षरं प्रधान मिति

वाच्यत्व मुचितम्। स्वकर्मवशेन महाभूतयोनित्वे च। अत स्तयो रन्यतर त्त दक्षर मिति प्राप्ते ब्रूमः॥

परमेश्वर ए वाक्षरम्। 'यः सर्वज्ञः सर्ववि द्यस्य ज्ञानमयं तप' इत्या दिना तद्धर्मोक्तेः। नहि परमेश्वरा दन्यस्मिन् सर्वज्ञत्वादिकं संभवति य दुक्तं भूतयोनित्वं प्रधानजीवयो र्युक्त मिति त दयुक्तम्, तयो रचेतनासर्वज्ञयो स्तत्सामर्थ्याभावात्॥

---

प्रधाने क्षरशब्दव दमृताक्षर मि त्यमृतशब्दनिर्दिष्टजीवेऽक्षरशब्दः प्रयुक्तः। अमृतेति 'सुपां सुलु' गित्यादिना छान्दसो विभक्तिलोपः। अमृत मक्षर मि त्ययं जीवनिर्देश इ त्येतत्। 'हर एको देवः क्षरात्मानावीष्ट' इत्युत्तरवाक्ये आत्मशब्दप्रतिनिर्देशा दवगम्यते।

य च्चेदं क्षर मव्यक्तं य द प्यमृत मक्षरम्
ता वुभौ यः क्षरात्माना वेको देवः स्वयं हरः
ईशते तदभिध्याना द्योजना त्तत्त्वभावतः॥

इत्यादिशिवपुराणवचनै श्चाय मर्थ उपबृंहितः। तस्मा दक्षरशब्दो जीव उपपद्यत इति भावः। जीवस्य जननमरणवत्त्वेऽपि न क्षरति स्वरूपेण न परिणमत इति स्वरूपान्यथाभावाभावपरतया जी वेक्षरशब्दस्य व्युत्पत्ति रपि सम्भव तीति भावः॥

ननु, तथापि परिणाम्युपादानत्वं जीवस्य न सम्भव त्यत आह स्वकर्मवशे नेति॥

सिद्धान्तं प्रदर्शयति परमेश्वर ए वाक्षर मिति — हेतु मुपपादयति यः सर्वज्ञ इति — अचेतनासर्वज्ञयो रिति — अ त्राय माशयः। ऊर्णनाभ्यादिदृष्टान्तैः प्रधाने संभवत्परिणा मित्वं न लभ्यते। किं तु प्रधानादिव्यावृत्तं सकलप्रपञ्चसृष्टिपालनसंहारकर्तृत्व मभिन्ननिमित्तोपा दानत्वं तयात्वेपि प्रपञ्चदोषै रस्पृष्टत्वं चे त्येतत्सर्वं लभ्यते। तथाहि, प्रथमदृष्टान्तेन ता व दूर्ण नाभिः स्वशरीरैकदेशभूतया लालया तन्तु मिव परमेश्वरः स्वशक्तिशकलेन प्रपञ्चं सृजति संहरति चेति लभ्यते। तथा स त्यूर्णनाभिवियोगेन तल्लालासृष्टतन्तो रिव परमेश्वरपृथग्भावे नाऽपि प्रपञ्चस्य कदाचि दवस्थितिः स्या दिति शङ्कायां द्वितीयदृष्टान्तः। ते नौषधीनां पृथिव्यपृथ क्सिद्ध्या पृथिव्येकदेशत्ववत्प्रपञ्चस्य परमेश्वरापृथग्भावसिद्ध्या तदेकदेशत्व मिति तस्य सर्वोपा दानत्वं लभ्यते॥

तर्हि यथा पुरुषस्य स्वशरीरैकदेशो हस्तपादादि र्यत्नेन परिपालनीयः तस्मि न्कदाचि दुपहन्यमाने तदुपादानस्य जीवतः पुरुषस्य दुःखित्वं च तया परमेश्वरस्य स्वशरीरभूतशक्त्यैक

पुन स्तपति माह ॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ १–२–२३ ॥

अत्र एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते । 'कस्मिन्नु भगवो विज्ञाते सर्व मिदं विज्ञातं भव' तीति । तस्यान्य श्चैवंरूपं विशेषणम् । तद्व्यपदेशा च्च न प्रधान मक्षरम् । 'अक्षरा त्परतः पर' इति जीवात् भेदव्यपदेशा च्च न जीवः॥

## रूपोपन्यासा च्च ॥ १–२–२४ ॥

'अग्नि र्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वा ग्विवृता श्च वेदाः

---

देश. प्रप ञ्चोवश्यं परिपालनीयः । तस्मि न्कदाचि दुपहन्यमाने तस्य दुःखित्वं च स्या दिति शङ्कायां तृतीयदृष्टान्तः ॥

तेन यथा जीवतः पुरुषा दुद्भूते तच्छरीरैकदेशे केशनखादौ तेन परिपाल्यमाने कदाचि दुपहन्यमानेपि पुरुषस्य दुःखाऽस्पर्श स्तथा प्रपञ्चे परमेश्वरा दुद्भूते तेन परिपाल्यमाने कदाचि दुपहन्यमानेऽपि न तस्य दुःखस्पर्श इति परमेश्वरस्य प्रपञ्चपालयितृत्वं प्रपञ्चप्रयुक्तदोषास्पृष्टत्वं च लभ्यते । एवमित्सिद्ध मभिन्ननिमित्तोपादानत्वादिकं प्रपञ्चयितु मेव 'तपसा चीयते ब्र' ह्मेत्यादि मन्त्रः सृष्ट्यालोचनादिक मुच्यते । न ह्येवंभूत मभिन्ननिमित्तोपादानत्वरूपं भूतयोनित्व मचे तनस्य प्रधानस्याऽ सर्वज्ञस्य जीवस्य च नोपपद्यते । एव 'मगोत्र मवर्ण' मित्यादिक ममूर्ता प्राणत्वादिवत् श्रुत्य न्येव चेतनत्वसामान्यप्रसक्तजीवधर्मव्यावर्तकतया योजनीय मिति ॥

तस्मा ददृश्यत्वादिगुणकः 'अद्रेश्य मग्राह्य' मित्यादिना विशेषितो भूतयोनिः परमेश्वर एव । कुतः? धर्मोक्तेः । 'यः सर्वज्ञ' इत्यादिना सर्वज्ञत्वादिधर्माणां त त्रोक्तानां प्रधाने वा जीवे वाऽसम्भवा दित्यर्थः । पृथिव्यादिनियामकेन शरीरेण पृथिव्यादिषु परमेश्वरस्य दृश्यत्वं स्पृश्यत्वं च प्रसज्येतेति शङ्कावारणार्थ मदृश्य मग्राह्य मित्युक्तम् ॥

सूत्रान्तर मवतारयति पुन रिति ॥

विशेषणव्यपदेशं विवृणोति अत्रेति — सर्वविज्ञानप्रतिज्ञा 'बुद्धे रात्मा महा न्परः । महतः पर मव्यक्त मव्यक्ता त्पुरुषः पर' इति श्रुतं सर्वतोऽपि पारम्य मित्यादिकं विशेषण जातम् । भेदव्यपदेशो यथा — 'यदा पश्य. पश्यते रुक्मवर्णम् .. कर्तार मीश' मिति कर्तृकर्मभावेन, जन्यजनकभावेन, नियम्यनियामकभावेन च बहुविधः सूत्रे विवक्षितः । एवं विशेषणजातेन, भेदव्यपदेशेन च अक्षरशब्दवाच्यः परमेश्वर एव न प्रधानजीवा विति भावः ।

वायुः प्राणो हृदयं विश्व मस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ' इत्यक्षरस्य त्रैलोक्यरूपत्व मुपन्यस्यते ॥

अत श्च सकलात्मा परमेश्वर ए वाऽत्राक्षर पदाभिधेयः ॥

इति अदृश्यत्वाधिकरणम्

---

अथ वैश्वानराधिकरणम् २१

प्राणाधारत्वेन पूर्व मुपास्यत योक्तस्य पुन र्जाठराग्नि रूपं णोपास्यत्व माह ॥

## वैश्वानरः साधारणशब्दविशेषात् ॥ १–२–२५ ॥

---

अथ प्रधानजीवव्यावृत्तत्रैलोक्यरूपत्वश्रवणा दपि प्रधानं जीवो वा नाऽक्षर मिति सूत्रेण निर्धारयति ॥

  

जीवेश्वरयोः कण्ठरवेण भेदनिर्देशात् भेदनिर्देशाय ' कर्तार मीश ' मिति परमेश्वराऽसाधारणाभिधानघटितमन्त्रसूचना द पीद मधिकरणं परेषा मपरेषां च वाग्बन्धननिबन्धनतया प्रतिकूल मेवेति दिक् ॥

इति अदृश्यत्वाधिकरणम् ॥

---

अथ वैश्वानराधिकरणम् ॥

सङ्गतिं दर्शय न्नुत्तराधिकरण मवतारयति प्राणाधारत्वे नेति — न न्वेव मस्याऽधिकरण स्याऽङ्गुष्ठाधिकरणेन सङ्गति र्यदि स्या त्तर्हि तदनन्तर मे वेदं ग्रथनीयम् । अनेनाऽ प्युपासकनेदिष्ठस्थाननिरूपणं परिसमाप्य सर्वत्राऽवस्थान मन्तर्याम्यधिकरणे निरूपण मुचित मितिचे दुच्यते । सङ्गत्यन्तरवशा दन्तर्याम्यधिकरणं पूर्वं प्रवर्तनीय मासीत् । तथाहि, अङ्गुष्ठाधिकरणे परमेश्वरस्याऽङ्गुष्ठसमाश्रयणेन उपासकनेदिष्ठत्व मुक्तम् ॥

त त्रेयं शङ्का प्रसजति — नमस्कुर्वाण स्येवाऽपकर्षकरं पराङ्गुष्ठाश्रयणं परमेश्वरस्य नोपपद्यत इति । इमां शङ्कां निवर्तयितु मन्तर्याम्यधिकरणं प्रवर्तितम् । त नेयं शङ्का कथं निवर्तितेतिचे न्नियन्तृतया रेतोमूत्रादिहेयवस्तुसाधारण्येन सकलप्रपञ्चसमाश्रयणेऽपि तत्प्रयुक्तदोषो न परमेश्वरं स्पृश तीति हि तत्र निरूपितम् । तदनन्तर मेवं पृथिव्यादिषु रूपविशेष मास्थाय

'य स्त्वेत मेवं प्रादेशमात्र मभिविमान मात्मानं वैश्वानर मुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वे ष्वात्म स्वन्न मत्ति' इत्यादिकं छान्दोग्येऽस्य विषयः श्रूयते ॥

अ त्रोपास्यत योक्तो वैश्वानरः परमेश्व रोऽन्यो वा इति सन्देहः ॥

पूर्वपक्षन्याय स्तु वैश्वानरशब्देन जाठराग्नि रुच्यते। 'अय मग्नि वैश्वानरो ये नेदं पच्यते य दिद मद्यते। त स्यैष घोषो भवति, य मेत त्कर्णा वपिधाय श्रृणोति स य दोत्क्रमिष्यन् भवति नैनं घोषं श्रृणोति' इति जाठराग्नौ प्रयोगदर्शनात्। महाभूततृती योग्नि र्वा स्यात्। 'एष ए वाग्नि वैश्वानर' इत्यादौ वैश्वानरशब्दस्य तत्र प्रसिद्धत्वात्। अग्निदेवता वा स्यात्। 'वैश्वानरं द्वादशकपालं निर्वपे त्पुत्रे जात' इत्यादि ष्विष्टिदेवता त्वेन फलदातृत्वदर्शनात्। नतु परमेश्वरः प्रादेशमात्र मिति परिच्छेदाऽव गमा दिति ॥

---

पृथिव्यादिषु स्थितवत स्तस्य पुरःस्थितचैत्रव दृश्यता स्पृश्यता च स्या दिति शङ्कां परिहर्तु मदृश्यत्वाऽग्राह्यत्वप्रतिपादक मदृश्यत्वाधिकरणं प्रवर्तितम्। एव मङ्गुष्ठाधिकरणमुखागतशङ्काद्वयपरिहारानन्तरं पूर्वत्र दुपासकनेदिष्ठस्थानान्तर मि होच्यते। तस्मा त्सङ्गति समुचि तैव ॥

विषयवाक्य मुदाहृत्य ब्रह्मवैश्वानरश्रुतिभ्यां संशयं दर्शयति य स्त्वेत मिति — तदन्यो वेति जाठराग्निमहाभूततृतीयाग्निवह्निदेवतारूपपूर्वपक्षत्रयं क्रोडीकृतम्। तत्र वैश्वानरशब्दस्य जाठरादिषु त्रि ष्वपि प्रयोगदर्शनेन क्रमेण पूर्वपक्षत्रयं दर्शयति वैश्वानरशब्दे नेति — छान्दोग्ये 'को न आत्मा किं ब्रह्म' इति ब्रह्मात्मश्रुतिभ्या मुपक्रमेऽपि बृहदारण्यके 'अय मग्नि वैश्वानरो ये नेद मन्नं पच्यत' इत्यादौ वैश्वानरशब्दस्य जाठराग्नौ प्रयोगदर्शना ज्जाठराग्नि र्वा 'एष वा अग्नि वैश्वानर' इत्यादौ तृतीयमहाभूते प्रसिद्धत्वात् महाभूततृतीयो वा स्यात्। 'अथ वैश्वानरं द्वादशकपालं निर्वपे' दित्यादा वग्निदेवतायां प्रसिद्धत्वा दग्निदेवता वा स्यात्। नतु परमेश्वर इति पूर्वपक्षसंग्रहः ॥

अ त्रेय माख्यायिका —

औपमन्यवादयः प ञ्चेमे महर्षयः समेत्य 'को न आत्मा किं ब्रह्म' इति विचार्य 'उद्दालको ह वै भगवन्तो य मारुणिः सम्प्र तीम मात्मानं वैश्वानर मध्येति तं हन्ताऽभ्यागच्छे'

अत्रोच्यते । परमेश्वर एव वैश्वानरः । कथं? वैश्वानरशब्दस्य साधारण्येऽप्यस्मिन् प्रकरणे 'को न आत्मा? किं ब्रह्म? आत्मान मेवेमं वैश्वानरं संप्रत्यध्येषि त मेव नो ब्रूहि' इत्यादिषु परमेश्वराऽसाधारणब्रह्मशब्दादिभि र्विशेष्यमाणत्वात् । न जाठराग्न्यादिषु तद्विशेषणं संभवति ॥

अतः परमेश्वर एव वैश्वानरः ॥

परमेश्वरपक्षे प्रमाणान्तर माह ॥

## स्मर्यमाण मनुमानं स्या दिति ॥ १–२–२६ ॥

'अग्नि र्मूर्धा चक्षुषी चन्द्रसूर्यौ' इत्यादिषु परमेश्वरस्य द्युलोकादि पृथिव्यन्तरूप मुक्तम् । त दित्थंभूतं रूप मिह 'तस्य ह वा एत स्यात्मनो

---

मे त्युद्दालकस्य वैश्वानरात्मविज्ञान मवगम्य त मभ्याजग्मुः । स चोद्दालक एता न्वैश्वानरात्म जिज्ञासू नखिल स्यात्मन श्च त त्राऽकृत्स्नवेदित्वं मत्वा ता न्होवाच 'अश्वपति र्वै भगवन्तोऽयं कैकयः सम्प्र तीम मात्मानं वैश्वनर मध्येति तं हन्ताऽभ्यागच्छे' मेति । ते चोद्दालकषष्ठाः त मश्वपति मभ्याजग्मु रिति ॥

सिद्धान्तयति परमेश्वर एव वैश्वानर इति — अत्र वैश्वानरशब्दस्य जाठरादिसाधारण्येऽप्यस्मि न्प्रकरणे 'को न आत्मा किं त द्ब्र' इत्यत्र परमेश्वरासाधारणब्रह्मश्रुत्या वैश्वानरशब्दः परमेश्वर मे वाऽभिदध्या दी त्यभिप्रे त्याह साधारण्येऽपीति — वैश्वानराग्निशब्दयोः साधारण्येऽपि नात्मब्रह्मादिश्रुतीनां कथञ्चि दपि जाठराग्न्यादिसाधारण्यं सम्भव तीति साधारणयो रग्नि वैश्वानर शब्दयोः परमेश्वरासाधारणै रात्मब्रह्मपुरुषशब्दै र्विशेषणा त्तत्समभिव्याहृतयो स्तयो रौत्सर्गिक मर्थ मनादृत्य परम्परया प्रवृत्तिनिमित्ताश्रये परमेश्वरे पर्यवसान मुचित मिति भावः । सूत्रे विशेषशब्दो विशेषणपरः । साधारणशब्दयो रसाधारणशब्दैः समभिव्याहृतै र्विशेष्यमाणत्वा दिति सूत्रार्थः । परमेश्वरपक्षे ब्रह्मादिश्रुतयः प्रमाणत्वेन दर्शिताः ॥

अथ लिङ्गदर्शनार्थत योत्तरसूत्र मवतारयति परमेश्वरपक्ष इति ॥

द्युलोकादीति — अग्निशब्दो मन्त्रे द्युलोकपरः । 'असौ वाव लोको गौत माग्नि' रिति श्रुतौ त त्राग्निशब्दस्य प्रयोगदर्शना दिति भाव. । संदेहः सम्यगुपचितो देहः नाभिकण्ठमध्य देशः । एवं द्युमूर्धतादिकल्पनस्य परमेश्वर इव जाठरादा वपि सम्भवेऽपि श्रुत्यन्तरे परमेश्वर एव प्रसिद्धत्वा त्त दिह प्रत्यभिज्ञया परमेश्वर मेव बोधये दिति भावः ॥

वैश्वानरस्य मूर्धैव सुतेजा श्चक्षु र्विश्वरूपः प्राणः पृथग्वर्त्माऽत्मा सदेहो बहुलो वस्तिरेवरैः पृथि व्येव पादा ' वित्यत्र प्रत्यभिज्ञायमानं तस्य परमेश्व रत्वे लिङ्गम् ॥

## शब्दादिभ्योन्तः प्रतिष्ठाना च्च नेतिचे न्न। तथा दृष्ट्युपदेशा दसंभवात् पुरुष मपि चैन मधीयते ॥ १–२–२७ ॥

' स एषोऽग्नि र्वैश्वानरो हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्य माहवनीयं तद्यद्भक्तं प्रथम मागच्छे त्तद्धोमीयं सायं प्रथमा माहुतिं जुहुयात् ' इत्यादिषु प्रतिपन्नेभ्यः अग्निशब्दाग्नित्रयकल्पनाप्राणाहुत्याधारत्वेभ्यः ' स यो हैन मेव मग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद ' इति श्रुतात् पुरु षेऽन्तःप्रतिष्ठितत्वलिङ्गा च्च जाठराग्नि रेव । नासौ परमेश्वर इतिचे न्न ॥

जाठराग्निरूपत योपास्यत्वे नोपदेशात् । केवलस्य जाठराग्ने स्त्रैलोक्य शरीरत्वाद्यसंभवात् । किं च ' स ए षोग्नि र्वैश्वानरो य त्पुरुष ' इ त्येनं वैश्वानरं पुरुष म प्यधीयते वाजसनेयिनः । निरुपाधिकपुरुषशब्दवाच्य स्तु परमेश्वर एव , ' ते नेदं पूर्णं पुरुषेण सर्वं ' मिति श्रवणात् ॥

---

अत्राऽयं शङ्कासंग्रहः । वैश्वानरः परमेश्वरो न भवति । तस्यार्थाऽन्तरे रूढत्वात् ' स एषोऽग्नि र्वैश्वानर ' इति श्रवणात् । ' त द्य द्भक्तं प्रथम मागच्छे ' दित्यादिना प्राणाहुत्याधा रत्वे नाम्नानात् । ' पुरु षेऽन्तःप्रतिष्ठितं वे ' देति श्रुत स्याऽन्तःप्रतिष्ठानस्य जाठरे सम्भवेन तल्लिङ्गा च्च जाठराग्नि रेव भवितु मर्ह तीति ॥

परिहार माह नेति — दृष्ट्युपदेशात् परमेश्वरदृष्ट्या जाठर स्योपास्यत्वोपदेशात् वैश्वानर शब्दवाच्यस्य परमेश्वरस्य जाठराग्निशरीरतया तद्विशिष्टत्वे नोपास्यत्वात् । असम्भवात् द्युमूर्धत्वा दि नाम्नातस्य त्रैलोक्यशरीरस्य जाठरेऽसम्भवा च्च ।

अहं वैश्वानरो भूत्वा प्राणिनां देह माश्रितः
प्राणापानसमायुक्तः पचा म्यन्नं चतुर्विधम् ॥

अतः परमेश्वर इति युक्तम् ॥

## अत एव न देवता, भूतं च ॥ १—२—२८ ॥

यतोऽयं वैश्वानर स्त्रैलोक्यशरीरकः पुरुषशब्दवाच्य श्च अत एव न देव ताऽग्नि र्न तृतीयं भूतं च ॥

इह जाठराऽग्निरूपत योपास्यत्वेन सिद्ध परमेश्वर स्याग्निशब्दवाच्यत्वे तद्योजनामेद माचार्यान्तराणां दर्शयति ॥

## साक्षा द प्यविरोधं जैमिनिः ॥ १—२—२९ ॥

नावश्य मग्निरूपत योपास्यत्वा दे वेद मग्निशब्दसामानाधिकरण्यम्, अग्रनयनादियोगेन परमेश्वर ए वाऽग्निशब्दस्य साक्षाद्वृत्ति संभवा दिति सामा नाधिकरण्याविरोधं जैमिनि रुवाच ॥

---

इति जाठरस्य वैश्वानरस्य पारमेश्वरत्वस्मरणात् 'स एषोऽग्नि र्वैश्वानरो य त्पुरुष' इति श्रुतस्य निरुपाधिकपुरुषशब्दवाच्यत्वस्य जाठरेऽयोगा च्च वैश्वानरः परमेश्वर ए वेति सिद्ध मित्यर्थः ॥

वैश्वानरो जाठराग्नि रिति शङ्का पूर्वसूत्रेण परिहृता । सम्प्र त्यग्निदेवतादिकं न भव तीत्यभिप्रायेण विवृणोति यत इति — त्रैलोक्यशरीरक इति — अग्निदेवताया स्तृतीयमहा भूतस्य च जाठरव त्परिच्छिन्नत्वाभावात् अग्निदेवताया अधिष्ठातृत्वा त्तृतीयमहाभूतस्य त्रिवृ त्कृतस्य त्रैलोक्यरूपेण परिणतत्वा दुभयो रपि त्रैलोक्यशरीरत्वसम्भवा द्वैश्वानरत्व मुपपद्यत इति शङ्काभिप्रायः ॥

देवताया महाभूतस्य वा आत्मब्रह्मपुरुषशब्दनिर्देशासम्भवात् त्रैलोक्यनियमनशक्ते रभावा च्च तौ वैश्वानरशब्दविवक्षितौ न भवत इति परिहाराभिप्रायः ॥

सूत्रान्तर मवतारयति इहेति ॥

पूर्व मग्निवैश्वानरशब्दयो रौत्सर्गिक मर्थ मनादृत्य तच्छरीरतया परम्परया प्रवृत्तिनिमि त्ताश्रये परमेश्वरे वृत्त्यङ्गीकारेण परमेश्वरपरत्व मभिहितम् । इदानीं परमेश्वरस्य साक्षा त्प्रवृत्ति निमित्ताश्रयतयाऽपि तयोः शब्दयोः परमेश्वरपरत्व मुच्यते । यथा अग्रनयनादियोगे नेति —

## अभिव्यक्ते रि त्याश्मरथ्यः ॥ १–२–३० ॥

'य स्त्वेत मेवं प्रादेशमात्र' मित्यपरिच्छिन्नस्य द्युप्रभृतिपृथिव्यन्तप्रदेश संबन्धिन्या मात्रया परिच्छिन्नत्व मुपासकाभिव्यक्ते रि त्याश्मरथ्यमुनिः ॥

## अनुस्मृतय इति बादरिः ॥ १–२–३१ ॥

अग्र मुत्कृष्टफलं नय त्यागधका निति नैरुक्तप्रसिद्ध मग्निशब्दस्य निर्वचनं 'मग्निः कस्मा दग्र नय' तीति । त देव महाभारतेऽपि,

> यस्मा द्याऽयं नय त्यग्रां गति विप्रा न्सुपूजितः
> तस्मा च्च नयना द्राज न्वेदे ष्वग्नि रि तीर्यते ॥

इति । तन्निर्वचन मप्यपेक्षयाऽपि परमेश्वरं समञ्जसतरम् ॥

वैश्वानरशब्दस्य ऋषं रपत्य मित्यपत्यार्थतद्धितान्तत याऽग्नौ निरुक्तस्य तस्य विश्वेषु नरे ष्वन्तर्यामितया स्थितं परमेश्वरं तत्र भव इति तद्धितान्ततया वृत्ति रुपपद्यते । 'वैश्वानरः कस्मा द्विश्वानर एव वैश्वानरः' राक्षसो वायस इतिवत् । रक्ष एव हि राक्षसः । वय एव वायसः । इति नैरुक्त मपि तन्निर्वचनं सर्वजीवात्मभूतं परमेश्वर एवोपपद्यत इति भाष्येऽग्निशब्दस्य साक्षा द्वृत्तिसम्भवोक्ति र्वैश्वानरशब्द स्याऽ प्युपलक्षणं, न्यायतौल्यात् । 'य स्त्वेत मेवं प्रादेशमात्र मभिविमान' मि त्यपरिच्छिन्नस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छि न्नत्वं न सम्भव तीति शङ्कानिराकरणार्थं सूत्रम् ॥

उपासकाभिव्यक्तय इति — उपासकबुद्ध्यारोहार्थ मित्यर्थः । प्रादेशमात्र मि त्येत दनन्तर मभिविमान मिति कृत्स्न मभिव्याप्तवतो विगतमानत्ववचना त्प्रादेशविशेषपरिच्छिन्नत्व मुपासकबुद्ध्यारोहार्थ मि त्यवगम्यत इति भावः ॥

न न्वपरिच्छिन्नस्य ब्रह्मण उपासकबुद्ध्यारोहार्थं द्युप्रभृतिप्रादेशपरिच्छिन्नत्वोक्ता वपि द्युमूर्धत्वादिकल्पनं तस्य किमर्थ मि त्याशङ्कानिराकरणार्थं सूत्रम् ॥

नहि परमेश्वरस्य बुद्ध्यारोहमात्र मपेक्षितं किं त्वहरह रनुवर्तनीया ध्यानरूपा स्मृतिः ब्रह्मप्राप्त्यर्थ मपेक्षिता । तादृशस्मृतिसन्तानानुवृत्ति र्बुद्ध्यारोहे स्थिरीकृत एव सम्पद्यत इति तत्

द्युप्रभृतिपृथिव्यन्तस्य मूर्धादिपादान्तावयवत्वकल्पन मनुस्मृतये ब्रह्म प्राप्त्यर्थ मिति बादरिः ॥

**संपत्ते रिति जैमिनि स्तथा हि दर्शयति** ॥ १–२–३२ ॥

'उर एव वेदि र्लोमानि बर्हि र्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन मास्य माहवनीय' इत्युपासक स्योरःप्रभृतीनां वेद्यादित्वकल्पनं विद्याङ्ग भूतायाः प्राणाहुते रग्निहोत्रत्वकल्पनार्थ मिति जैमिनिः। तथाहि दर्शयति च श्रुतिः 'अथ य एवं विद्वा नग्निहोत्रं जुहो' तीति ॥

**आमनन्ति चैन मस्मिन्** ॥ १–२–३३ ॥

तैत्तिरीया एनं परमेश्वर मस्मि न्नुपासकशरीरे प्राणाहुतिवेलायां भोक्तृ तया 'शिवो मा विशा प्रदाहा' येति, 'प्रभुः प्रीणाति विश्वभु' गिति

---

स्थैर्यार्थं द्युमूर्धत्वादिकल्पन मिति सूत्राशय माह द्युमूर्धप्रभृतीति — न न्वेव मपि तदनन्तरं 'उर एव वेदि' रित्यादिना प्रकृताऽनुपयोगिकर्माङ्गत्रेताग्निकल्पन मिति शङ्कानिराकरणार्थं सूत्रम् ॥

विद्याङ्गभूताया इति — अहरहः क्रियमाण परमेश्वरोपासनाङ्गभूताया इत्यर्थः। अग्नि होत्रत्वकल्पनार्थ मिति — अग्निहोत्रत्वसम्पादनार्थ मित्यर्थः। सम्पत्तिबोधकश्रुति मुदाहरति अथ य इति — 'स य इद मविद्वा नग्निहोत्रं जुहोति। यथाऽङ्गारा नपोह्य भस्मनि जुहुया त्तादृ क्त स्यात्। अथ य एत देवं विद्वा नग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वे ष्वात्मसु हुतं भवति। त द्य थेषीकतूल मग्नौ प्रोतं प्रदूये तैवं हाऽस्य सर्वे पाप्मानः प्रदू यन्त' इति ॥

ननु, प्राणाहुतेः प्राणवायुदैवत्य स्याग्निहोत्रत्वकल्पनायां प्राणवायुं प्रत्येव वेद्यादिकल्पनं कार्यम्। नहि वैश्वानरं प्रति त त्किमर्थ मिति शङ्कनिराकरणार्थ मिदं सूत्रम् ॥

तैत्तिरीयशाखायां पुरुषार्थं प्राणाग्निहोत्रं परमेश्वरदैवत्य मिति प्रा गङ्गुष्ठाधिकरणे निरू

चामनन्ति। सकलाचार्यमतेन न्यायेन जाठराग्निरूपेण परमेश्वर एवाराध्यः प्राणाग्निहोत्रेणेति समीचीनम् ॥

इति वैश्वानराधिकरणम्

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
प्रथमाध्यायस्य द्वितीयः पादः



पितम्। तत्सामान्या दिव मपि तथेति सूत्राशयं विशदयति तैत्तिरीया इति — एतदुपयोगितयैव कर्मदेवताविचारात्मक मपि तदधिकरण मिह शास्त्रे प्रवर्तितम् ॥

इति वैश्वानराधिकरणम् ॥

इति श्रीनागलिङ्गशिवाराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां
श्रीशिवचिन्तामणिप्रभाख्यायां श्रीनीलकण्ठभगवत्पादीयब्रह्म
सूत्रभाष्यव्याख्यायां प्रथमाध्यायस्य
द्वितीयः पादः





श्री शिवाय गुरवे नमः

श्री मेधादक्षिणामूर्तये नमः

# श्री नीलकण्ठभगवत्पादाराध्यकृतौ शारीरकब्रह्ममीमांसा सूत्रभाष्ये प्रथमाध्यायस्य

## तृतीयः पादः

अथ द्युभ्वाद्यधिकरणम् २२

इह पादे स्पष्टास्पष्टब्रह्मलिङ्गानां वेदान्तवाक्यानां विचारः, प्रसङ्गा दधिकारिनिरूपणं च क्रियते ॥

### द्युभ्वाद्यायतनं स्वशब्दात् ॥ १–३–१ ॥

'यस्मिन् द्यौः पृथिवी चान्तरिक्ष मोतं मनः सह प्राणै श्च सर्वैः। त मे वैकं विजानथ आत्मान मन्या वाचो विमुञ्चथ। अमृत स्यैष सेतु' रिति अस्य विषयः श्रूयते मुण्डकोपनिषदि ॥

अत्र द्युभ्वाद्याधारतया श्रूयमाणः परमेश्व रोन्यो वेति संशयः ॥

---

अथ द्युभ्वाद्यधिकरणम्

येषु विषयवाक्येषु श्रुतानां ब्रह्मलिङ्गानां पूर्वपक्षे न ब्रह्मलिङ्गत्वाक्षेपः, ना प्यन्य त्राऽन्वयसमर्थनम्। किं तु विचारणीय एव धर्मि ण्यन्वयः। तद्विरुद्धाऽब्रह्मलिङ्गानां प्राबल्योप पादनेन तत्समर्पकशब्दानां यथाकथञ्चि द्ब्रह्मणि योजनामात्रं तानि स्पष्टब्रह्मलिङ्गानि प्रथमपादे विचारितानि ॥

येषु श्रुतानां तेषां तल्लिङ्गत्वाक्षेपः विचारणीय एव धर्मि ण्यन्वय श्च ता न्यनतिस्पष्ट ब्रह्मलिङ्गानि ब्रह्मापलापा न्यन्वयरहितपूर्वपक्षविषयत्वसाम्या त्तदनन्तरं द्वितीयपादे विचारितानि ॥

येषु श्रुतानां तेषां पूर्वपक्षे ब्रह्मलिङ्गत्वानाक्षेपेण ब्रह्मानपलापेन चाऽन्यान्वयसमर्थनं तानि ब्रह्मापलापरहितपूर्वपक्षविषयत्वसाम्या दिदानीं विचार्यन्त इति पादार्थविशेषः सङ्गति श्च॥

विषयवाक्य मुदाहरति यस्मिन् द्यौ रिति — अस्मि न्वाक्ये द्युपृथिव्याद्याधारत्वेन श्रूयमाणः परमेश्वरो वा वायु र्वेति संशयं दर्शयति अत्रेति — परमेश्वरपक्षस्य आत्मश्रुति मूल

परमेश्वरा दन्यो वायु रेव द्युभ्वाद्याधार इति गम्यते, 'वायुना वै गौतम सूत्रे णाऽयं च लोकः पर श्च लोकः सर्वाणि च भूतानि संदृब्धानि भव' न्तीति श्रुतौ तस्य सर्वाधारत्वप्रसिद्धे रिति प्राप्ते ब्रूमः ॥

परमेश्वर एव द्युभ्वाद्यायतनं, 'त मे वैकं विजानथ आत्मान' मित्यात्मशब्दात् ॥

सूत्रात्मनो वायो र प्यात्मशब्दवाच्यत्वे को दोष इ त्यत आह ॥

## मुक्तोपसृप्यव्यपदेशा च्च ॥ १—३—२ ॥

'यदा पश्यः पश्यते रुक्मवर्णं कर्तार मीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्य मुपैति', 'यथा नद्यः स्यन्द

---

मिति विज्ञायते। पूर्वपक्षस्य 'अमृत स्यैष सेतु' रि त्यनेन परमेश्वरान्यत्वप्रतीति र्मूल मिति विशदम्। पूर्वपक्षं प्रदर्शयति एवं सतीति — अत्राय माशयः। 'अमृतस्य सेतु' रित्यनेन द्युभ्वाद्याधारः परमेश्वरा दन्यः प्रतीयते। अमृतशब्दोऽनादिमुक्तस्य परमेश्वरस्य वाचक इति निर्णीत मन्त र्याम्यधिकरणे। सोऽत्र 'यस्मि न्द्यौ' रिति मन्त्रा त्पूर्वं 'त वेन तस्य ममृत' मिति 'आनन्द रूप ममृतं य द्विभा' तीति परमेश्वरे प्रयुक्त श्च। तस्य सेतु रिव सेतुः परतीरस्य सेतु रिव प्रापयि तेति तस्याऽर्थः। एव परमेश्वरा दन्यत्वेन सिद्धोऽय द्युभ्वाद्याधारो वायु रिति युक्तम्। स किलाऽर्चिरादिमार्गे पर्वविशेषतया परमेश्वरप्राप्तिहेतु। नच देवतान्तराणा मपि तत्प्राप्तिहेतुत्व मस्तीति शङ्क्यम्। 'वायुना वै गौतम सूत्रेणाऽयं च लोकः पर श्च लोकः सर्वाणि च भूतानि संदृब्धानि भव' न्तीति श्रुत्यन्तरे वायो र्द्युभ्वाद्याधारत्वप्रसिद्धे र्वायु रेवाऽय मि त्यवगम्य मानत्वा दिति॥

सिद्धान्त माह परमेश्वर एवेति — आत्मशब्दा दिति — सूत्रे तु योगरूढिभ्या मात्म शब्दस्य परमेश्वरासाधारण्यद्योतनार्थं तत्र स्वशब्दा दिति स्वशब्दः प्रयुक्तः। स्वस्य परमेश्वर स्याऽसाधारणशब्दा दित्यर्थ ॥

ननु, आत्मशब्दस्य सूत्रात्मनि वायौ वृत्तिपरिग्रहे को दोष इति शङ्कानिराकरणार्थत्वे नोत्तरसूत्र मवतारयति सूत्रात्मन इति ॥

प्राप्यतया व्यपदेशा च्चेति—एतन्मन्त्रप्रतिपाद्यप्राप्योपास्ययो रैक्यावगमे स त्यत्रत्या न्मुक्त प्राप्यत्वव्यपदेशात्। 'त मेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः', 'शिव एको ध्येयः शिवङ्करः सर्व मन्य त्परित्य' ज्येति श्रुत्यन्तरप्रसिद्धसर्वेतरज्ञेयान्तरपरित्यागपूर्वकज्ञेयत्वव्यपदेशात्। 'नानु

मानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपा द्विमुक्तः परात्परं पुरुष मुपैति दिव्यम् ' इति पुण्यापुण्यप्राकृतनामरूपविनिर्मुक्तानां मुक्तानां प्राप्यतया व्यपदेशा च्चायं परमेश्वर एव। कथ मेत द्वायौ संभवति ? परमेश्वरात्मक एव वायुः सूत्रात्मा , पारमेश्वरी ष्वष्टासु मूर्तिष्वेकत्वात् ॥

तत्तो न वायु रिति निर्णयः ॥

---

ध्याया इह न्शब्दा न्वाचो विमुञ्चथ हि त ' दिति श्रुत्यन्तरप्रसिद्धवागन्तरविमोकपूर्वकज्ञेयत्व व्यपदेशा च अयं द्युभ्वाद्याधारः परमेश्वर एवेति पर्यवस्य तीनि हेतुत्रय मस्यैव सूत्र स्यार्था न्तरभूतं चकारेण समुच्चीयते। द्युभ्याद्याधारत्व मपि वायो र्न सम्भव ती त्याह कथ मिति — एतत् द्युभ्याद्याधारत्वम् ॥

ननु ' वायु र्वै गौतम तत्सूत्र ' मित्यादिश्रुत्यन्तरे वायौ प्रसिद्ध त दित्याश ङ्कयाह पर मेश्वरात्मक इति — तस्मा त्पारमेश्वर मेव द्युभ्वाद्याधारत्वं तच्छरीरभूते वायौ व्यपदिष्टं तस्यां श्रुता विति भावः। अत एव केनोपनिषदि परमेश्वरप्रसादलब्धेन दैत्यविजयेन गर्विता नमरां स्तद्गर्वापनयने नाऽनुग्रहीतुं तेषां पुरतो यक्षरूपे णाविर्भूतेऽ परमेश्वरे ' क एष ' इति जिज्ञा सया तत्सकाशं प्रेषितो वायुः ' क स्त्वम् ? तव किं बलम् ? ' इति पृष्टो ' महाबलोऽहं त्रैलोक्य मपि कम्पयितुं शक्नुया ' मि त्युक्त्वा तं ' नेदं चाल ' येति पुरस्तात् स्थितं तृणं स्वीयेन कृत्स्नेनापि बलेन चालयितुं न शशा के त्याम्नायते ' ब्रह्म हि देवेभ्यो विजिग्य ' इत्यादिना। तस्मा द्वायुः द्युभ्वादीना माधारो न भव ती त्युपसंहरति तत इति ॥

ननु , माभू दयं वायुः। प्रधानं स्या देव। ' त मे वैकं जानथ आत्मान मन्या वाचो विमुञ्चथ ' इति श्रुता वात्मशब्दो देहपरः। तस्मात् द्युभ्वाद्यायतनं प्रधान मेक मेव। युष्माकं देहं जानीध्वं स्थूलशरीररूपदेहान्तरविषया देहत्वविषया वाचो विमुञ्च थेति। अस्यायं भावः। देहविविक्तात्मज्ञानार्थं मुमुक्षुभि र्देहो ज्ञातव्यः। देह स्तु न स्थूलो विवक्षितः। आगमापायिन स्तस्मा द्विवेकस्य सुलभत्वात्। किंतु सूक्ष्मो विवक्षितः। यत्सम्बन्धा दय मनादिः संसारः प्रवर्तत इति युक्तम् ॥

अथ जीवो वा स्यात्। मनःप्राणसम्बन्धश्रावणात्। तथाहि, ' ए षोणु रात्मा मनसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश। प्राणै श्चित्तं सर्व मोतं प्रजानां यस्मि न्विशुद्धे विभव त्येष आ ' त्मेति श्रूयते। अत एव जीवः प्राणभृ ' दिति व्यवह्रियते। तस्मा ज्जीवे

नानुमान मतच्छब्दात् ॥

प्राणभृ च्च ॥ १–३–३ ॥

अनुमानगम्यं प्रधान मेव द्युभ्वाद्यायतनं तस्य सर्वोपादानत्वा दिति न वाच्यम् । अतच्छब्दा दात्मशब्दात् । न प्राणभृ ज्जीव श्च , अनुपपत्ते रिति ॥

भेदव्यपदेशात् ॥ १–३–४ ॥

अत्र जीवात् भेदो व्यपदिश्यते , ' समाने वृक्षे पुरुषो निमग्नोऽनी शया शोचति मुह्यमानः । जुष्टं यदा पश्य त्यन्य मीश मस्य महिमान मिति वीतशोकः ' इति ॥

अतः स्वतः परमेश्वर एव द्युभ्वाद्याधारः ॥

---

द्युपृथिव्याद्यायतनत्वव्यपदेशोऽपि युज्यते । दिवादीनां तदद्यायत्तत्वात् । इति शङ्काद्वयनिरा करणार्थं सूत्रम् ॥

आनुमानं साङ्ख्यानुमानकल्पितं प्रधान मत्र न ग्राह्यम् । अतच्छब्दा त्तत्प्रतिपादक शब्दाभावा दित्यर्थः । आत्मशब्दो न स्वरूपेण प्रधान माख्याति । नापि शरीरत्वेन प्रमाणाभावात् एवं ' त मे वैकं विजान थात्मान ' मिति श्रुतिः प्रधानविषया न भव तीत्यर्थ. । ' त मे वैक ' मित्यादिश्रुतिः परमेश्वरविष यैव , तदुपासन स्यात्यन्तचित्तैकाग्र्यसाध्यतया विषयान्तरस्य त्या ज्यत्वात् । तदुपासनं तदितरदेवतात्याग माथर्वशिखायां विहितत्वात् । तस्मा दिय श्रुतिः प्रधानपरा न भव तीत्यर्थः ॥

जीवपक्षं दूषयति न प्राणभृ दिति — अनुपपत्ते रिति — अणुमात्रे जीवे द्युभ्वाद्या धारत्व स्येतरपरित्यागे नोपासना दमृतत्वप्राप्ते. द्युभ्वाद्याधारत्वोपयोगिव्याप्त्यर्थकात्मशब्दस्य च त त्रानुपपन्नत्वा दित्यर्थः ॥

जीवपक्षनिराकरणे हेत्वन्तर माह ॥

समाने वृक्ष इति — अस्य मन्त्र स्याय मर्थः । समान एकस्मिन् वृक्षे वृक्षवत् छेदन योग्ये शरीरे निमग्नः पांसुपुञ्जनिमग्नो जलकण इव तदविवेक माप न्नोत एव तद्गतदोषा नात्मी यत्वे नाभिमन्यमानः पुरुषो जीवः अनीशया अनैश्वर्येण तद्दोषनिराकरणाशक्त्या शोचति यदा

## प्रकरणात् ॥ १–३–५ ॥

'अथ परा यया त दक्षर मधिगम्यत' इति परस्य स्व मिदं प्रकरणम् ॥

अत श्च परमेश्वरः ॥

---

जुष्टं भक्त्या प्रीणितं स्वस्मा दन्यं परमेश्वरं पश्यति तदा वीतशोकः स न्नस्य परमेश्वरस्य महि मानं सत्यसङ्कल्पत्वाद्यैश्वर्यरूपं इति एति । इण् गतौ विति धातो र्लटि गुणाभाव श्छान्दसः ॥

ननु अत्र यथा जीवा द्भेदेन परमेश्वरो निर्दिष्ट स्तथा ततो भिन्नतया जीवोऽपि निर्दिष्टः । एव मुभयो र्निर्दिष्टत्वाऽविशेषा ज्जीवोऽपि दिवाद्याधारो भवितु मर्ह ती त्याश ङ्क्याह स्वतः पर मेश्वर इति ॥

अत्राऽयं भावः । समाने वृक्ष इति मन्त्रे ईशशब्देन प्रकरणोपपदादिसङ्कोचकरहितेन स्वत स्सिद्धनिरतिशयैश्वर्यशाली परमेश्वरो निर्दिष्टः । जीवस्तु तत्प्रसादाधेयसत्यसङ्कल्पत्वादितदैश्वर्यशाली। एवंरूपा द्भेदव्यपदेशा त्परमेश्वर एव द्युभ्वाद्याधार इति युक्तम् । अनादिसिद्धपरमैश्वर्य स्यै वाऽ नादिसिद्धद्युभ्वाद्याधारत्वोपाधिकत्वा दिति ॥

न नूदाहृतमन्त्रोक्तहेतुभिः जीवस्य द्युभ्वाधारत्वासिद्धा वपि उपरितनमन्त्राम्नातहेतुभिः स एव दिवाद्याधार इति सिध्यति । तथा हि उपरितनमन्त्रे 'अरा इव रथनाभौ संहता यत्र नाड्यः । स एषोऽन्त श्चरते बहुधा जायमान' इति नाडीसम्बन्धनाड्यन्तः सञ्चारजायमान त्वानि श्रूयन्ते । तानि तु जीवलिङ्गा न्येव । नाडीसम्बन्धस्य तदन्तस्सञ्चारस्य च 'आसु तदा नाडीषु सुप्तो भवति । ताभिः प्रत्यवसृप्य पुरीतति शेते' इत्यादिश्रुतिषु प्रसिद्धतरत्वा ज्जाय मानत्वं जीवाऽसाधारण मिति स्पष्टम् । एवं च बहूनां साधकाना मन्यथानयन स्याऽयुक्तत्वा दि त्याशङ्कानिराकरणार्थं सूत्रम् ॥

प्रकरण मिदं मुण्डकोपनिषदि 'कस्मि न्नु भगवो विज्ञात' इ त्यार भ्यासमाप्ति बहुतर श्रुतिलिङ्गादिभिः भूतयोने रक्षरस्य परमेश्वर स्येति अदृश्यत्वाधिकरणे प्रतिपादितम् । एवं प्राक रणिकबहुश्रुतिलिङ्गबाधित मुत्तरमन्त्रगतं जीवलिङ्गद्वय मन्यथा नेय मेव । तथाहि, नाडीसम्ब न्धस्य हृदयद्वा रैव जीवस्याऽपि सिद्धतया हृदये भावलिङ्गरूपे णोपास्ये परमेश्वरे उपपन्नत्वा ज्जायमानत्व स्यापि 'अजायमानो बहुधा विजायत' इति श्रुत्यन्तरसिद्धैच्छिक विग्रहपरिग्रह रूपबहुविधाविर्भावयुक्ते तस्मि न्नविप्रतिपन्नत्वा च्च प्रकरणानुसा र्ये वाऽस्य मन्त्र स्याऽर्थो ग्राह्य इत्याशयेन व्याचष्टे अथ परा ययेति ॥

# स्थित्यदनाभ्यां च ॥ १–३–६ ॥

'द्वा सुवर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयो रन्यः पिप्पलं स्वा द्व त्त्यनश्न न्नन्यो अभिचाकशीति' इति जीवस्य कर्मफलादन मुक्त्वा अनश्नत एव दीप्यमान स्याऽभिधानाच्च ॥

---

ननु ब्रह्मप्रकरणात् द्युभ्वाद्याधारः परमेश्वर एव, न जीव इ त्ययुक्तम्। ब्रह्मण एव जीव रूपत्वात्। मुण्डकस्यापि 'कस्मि न्नु भगवो विज्ञात' इ त्युपक्रमेण 'ब्रह्म वेद ब्रह्मैव भव' ती त्युपसंहारेण च जीवब्रह्माभेदे तात्पर्यावसायात्। 'समाने वृक्ष' इति मन्त्रे तयो र्भेदव्यपदेश स्त्वसिद्धः। अन्यदीयस्य महि म्नोऽन्येन कथ मपि प्राप्तु मशक्यतया अस्य महिमान मि त्य स्याऽज्ञानतिरोहितब्रह्मभावाविर्भावपरत्व एव साङ्गत्यात्। तत्र 'जुष्टं यदा पश्य त्यन्य मीश' मि त्यस्य पूर्वार्धे देहात्मभ्रमेण शोकवत्त योक्त स्वात्मानं यदा देहा दन्य मीशं ब्रह्माभिन्न च पश्य त्येवमर्थपरत्वोपपत्ते रि त्याशङ्कानिराकरणार्थ मुत्तरसूत्रम् ॥

भेदव्यपदेशा दिति व्यवहित मि हानुवर्तते। ततो ऽयं सूत्रार्थः। द्वासुपर्णेतिमन्त्रे तयो रन्य इति अनश्न न्नन्य इति च जीवब्रह्मणो रेव परस्परभेदो व्यपदिश्यते। स चा त्त्यनश्न न्नभिचाकशी तीति अत्तृत्वानशनाभ्यामिनिरूपपरस्परविरुद्धधर्माभ्या मुपपादनपूर्वक मेव व्यपदिश्यते। एव मुपपत्ति रूपतात्पर्यलिङ्गोपबृंहितभेदव्यपदेशा त्संसारि णोऽर्थान्तरभूत एव परमेश्वरः प्रकरणप्रतिपाद्य इति तत्प्रकरणा त्परमेश्वर एव द्युभ्वाद्याधार इति युक्त मि त्येवं सूत्रार्थ मभिप्रेत्य व्याचष्टे द्वा सुप र्णेत्यादिना ॥

सर्वविज्ञानप्रतिज्ञानं विशिष्टशिवाद्वैतरूपं सविशेषाद्वैत ए वोपपन्नम्। 'ब्रह्म वेद ब्र ह्मैव भव' ती त्येन ब्रह्मसदृशो भव ती त्येतदर्थक मिति भाष्य एव तत्र त त्रोपपादितम्। 'अस्य महिमान मि' ती त्येत दपि सोपपत्तिकभेदव्यपदेशानुसारेण सदृशमहिमावाप्तिपरं द्रष्टव्यम्। 'यदा पश्य. पश्यत' इ त्यनन्तरमन्त्रे तत्परमसाम्यापत्तेः कथ्यमानत्वा त्तदनुसारेण 'ए षोऽणु रात्मा' इ त्युत्तरमन्त्रे 'तस्मि न्विशुद्धे विभव त्येष आ' त्मेत्यस्य विभुत्व दाकाररूपतत्साम्या पत्ते र्विवक्षितत्वा च्च। अधिकरणार्थ मुपसंहरति इति निर्णय इति ॥

यद्यपि द्वासुप र्णेतिमन्त्रः पैङ्गिरहस्यब्राह्मणानुसारेण ऽन्तःकरणजीवपरतया परै र्व्या ख्यातः, न्यायरक्षामणौ श्रीमदप्पयदीक्षितेन्द्रै स्तथैव प्रसाधित स्तथापि 'स्थित्यदनाभ्या' मिति सूत्रकारे णैव निराकृत इ त्येत त्सविस्तरं ब्रह्मपथे केवलाद्वैतप्रतिषेधे ऽस्माभिः प्रतिपादित इति नेह पुनः ॥

तस्मा दर्थान्तरभूतः परमेश्वर एव द्युभ्वाद्यायतन मिति निर्णयः ॥

इति द्युभ्वाद्यधिकरणम् ॥

---

अथ भूमाधिकरणम् २३

मुक्तप्राप्यत येह प्रतिपादितस्य परमेश्वरस्य प्राप्तिप्रयोजनं निरतिशयसुखं दर्शयति ॥

## भूमा संप्रसादा दध्युपदेशात् ॥ १–३–७ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः । छान्दोग्ये भूमैव सुख मि त्युक्त्वा, भूम्नः स्वरूप माह 'यत्र नान्य त्पश्यति नान्य च्छृणोति नान्य द्विजानाति स भूमा' इति ॥

---

अत्र यद्यपि पूर्वं ब्रह्मपरतया निर्णीते मुण्डके स्पष्टा न्येव ब्रह्मलिङ्गानि तथापि द्युभ्वाद्या धारो वायुः प्रधानं जीवो वा तेन तज्ज्ञानेन वा प्राप्ये ब्रह्म ण्यमृतशब्दोदिते प्राकरणिकसर्वधर्मा न्वय इति पूर्वपक्षकरणा दस्पष्टब्रह्मलिङ्गता ॥

इति द्युभ्वाद्यधिकरणम्

---

अथ भूमाधिकरणम्

सङ्गतिं दर्शय न्नुत्तराधिकरण मवतारयति मुक्तेति — द्युभ्वाद्याधारस्य परमेश्वरत्वे मुक्तोप सृप्यत्वं हेतुत्वे नोपन्यस्तम् । त दयुक्तम् । सकलविषयभोगविरक्ताना मेव मुक्ता वधिकारा भ्युपगमेन विषयभोगलिप्सया प्रजानां राजोपसर्पण स्येव मुक्तानां परमेश्वरोपसर्पण स्याऽसम्भवा दि त्याशङ्क्य स्वत स्तस्य निरतिशयानन्दरूपत्वे नैव मुक्तप्राप्यत्वं युज्यत इ त्युपपादयितु मुत्त राधिकरण मारभ्यत इ त्यर्थः । अने नाऽऽक्षेपिकी पूर्वाधिकरणेन सङ्गति र्दर्शिता ॥

छान्दोग्योपनिषदि 'यत्र नान्य त्पश्यति नान्य च्छृणोति नान्य द्विजानाति स भू' मेति श्रुतं भूमलक्षणं विषयन्वे नोदाहृत्य तस्य मुक्तोपसृप्यत्वनिर्वहणोपयोगित्वेन निरतिशया नन्दस्य तत्स्वरूप मिति भूमशब्दो धर्मिपर इति च बोधयितु माह भूमैव सुख मित्यादि — भूमशब्दस्तु 'पृथ्वादिभ्य' इतीमनिचि बहो र्लोपो 'भूच बहो' रिति निष्पन्नो बहुत्ववाची।

तत्र संदेहः । भूमशब्दनिर्दिष्टः परमेश्वर स्तदन्यो वा ? इति ॥

परमेश्वरा दन्यः प्राण एव भूमा, पूर्वेषु नामादिषु तत्त्वेषु, 'अस्ति भगवो नाम्नो भूय' इत्यादिना नारदप्रश्ने सनत्कुमारो 'वा ग्वाव नाम्नो भूयसी' इत्यादिना वागादीनि निर्दिश्य, प्राण स्योपरि प्रश्नप्रत्युक्तिभ्यां विनैव यतो भूमान मवतारयति न परमेश्वर स्तत्र प्रसक्तः । अतो भूमा प्राण इति प्राप्ते ब्रूमः ॥

परमेश्वर एव भूमशब्दनिर्दिष्टः संप्रसादा दध्युपदेशात् । संप्रसादो जीव उच्यते 'अथ य एष संप्रसाद' इति श्रुतेः । स चात्र प्राणशब्देन निर्दिश्यते । तस्मा दूर्ध्व मात्मान्तरत्वेन भू मोपदिश्यते 'एष तु वा अति वदति यः सत्ये नातिवदति' इत्यातिना ॥

---

बहुत्वं चात्र वैपुल्यं न सङ्ख्याविशेषः । बहुशब्दस्य 'बहुल पच्यत' इति वैपुल्येऽपि प्रयोगदर्शनात् । वैपुल्यं चात्र गुणोत्कर्षरूपं न परिमाणविशेपरूम् । पूर्वत्र वाङ्मनस्सङ्कल्पादि षूत्तरोत्तर गुणोत्कर्षाभिप्राये णैव भूयश्शब्दप्रयोगदर्शनात् । सुखशब्दसामानाधिकरण्या च । उत्कर्षापकर्षरूप स्यैव सुखतारतम्यस्य प्रसिद्धत्वा च भूमशब्द श्चायं न केवलवैपुल्यपरः किंतु वैपुल्याश्रयधर्मिपरः । 'भूमैव सुखं यो वै भूमा त दमृत' मिति धर्मिपरशब्दैः सामानाधिकरण्यात् ॥

एवं च भूमशब्दार्थो निरतिशयानन्द इति सिद्धम् । स जीवः परो वेति संशयं दर्शयति तत्रेति — पूर्वपक्षं दर्शयति परमेश्वरा दन्यः प्राण ए वेति — तत्र नामादिषु तत्त्वेषु वागादीनि निर्दिश्य प्राण स्योपरि प्रश्नोत्तराभ्यां विनैव भूम्नोऽवतारणात् भूमा प्राणशब्दनिर्दिष्टो जीव इति पूर्वपक्षसङ्ग्रहः ॥

सिद्धान्त माह परमेश्वर ए वेति — सौत्रं सम्प्रसादशब्दं व्याकुर्वन् पूर्वपक्षे प्राणशब्दो जीवपर इति स्पष्टीकरोति सम्प्रसाद इति — सम्प्रसीद त्यस्या मवस्थायां जीव इति सम्प्रसादः सुषुप्तिः । तद्वत्त्वा द्वा, मुक्तौ विशुद्धिमात्त्वा द्वा सम्प्रसादो जीवः । 'य एष सम्प्रसाद' इति श्रुतिप्रयोगसिद्धः । ऊर्ध्व मि त्यनेन सूत्रगतोऽधिशब्दोऽधिकपरतया व्याख्यातः । जीवा दधिकत्वेन भूमा केन वाक्ये नोपदिश्यत इ त्याशङ्क्याह एष इति — प्राणशब्दनिर्दिष्टा ज्जीवा दूर्ध्व 'मेष तु' वेत्यादिना आत्मान्तरत्वेन भूम्न उपदेशा दाधिक्यप्रतिपादनात् । अथात

अत्र हि पूर्वं ' स वा एष एवं पश्य न्नेवं मन्वान एवं विजान न्नति वादी भव ' तीति प्राणवादिनोऽतिवादित्व मुक्त्वा , तदनन्तरं ' एष तु ' वेति तुशब्देन पूर्वस्मा त्प्राणातिवादिनः सत्यादिवादिन आधिक्यप्रदर्शनात् पूर्वातिवादिनिमित्ता त्प्राणा देत दतिवादनिमित्तस्य सत्यशब्दाभिधेय स्याधिक्य मवसीयते । स ए वाग्रे भूमगुणविशिष्टः प्रतिपाद्यते । 'अथाऽत आत्मादेश इ त्यात्मत्वे नाऽप्यग्रे वर्ण्यते ॥

अतः प्राणशब्दनिर्दिष्टा ज्जीवा दधिक आत्मा भूमा परमेश्वर एव ॥

## धर्मोपपत्ते श्च ॥ १–३–८ ॥

' स भगवः कस्मिन् प्रतिष्ठित ' इति , ' स्वे महिम्नि , इति , ' आ त्मै वेदं सर्व मात्मनः प्राण आत्मन आकाश ' इत्यादिना स्वमहिमप्रतिष्ठि तत्वसर्वात्मत्वसर्वकारणत्वादयो धर्मा उपदिश्यन्ते । तेषां परमेश्वर ए वोपपत्ति र्न प्राणशब्दोदिते जीवे । ततः परमेश्वर एव भूमा नापर इति सिद्धम् ॥

ननु पूर्वत्राधिकरणे ' निरञ्जनः परमं साम्य मुपैति ' इति मुक्तात्मनां ब्रह्मसादृश्य मभिहितम् । ततो ब्रह्मणः सायुज्य मुपगता मुक्तात्मान स्तत्पृथ ग्भूता वर्तन्त इति सिद्धम् ॥

यत्र ' नान्य त्पश्यति नान्य च्छृणोति नान्य द्विजानाति स भूमा ' इति भूमशब्दवाच्ये ब्रह्मणि दृष्टे तद्भिन्नभेदप्रपञ्चदर्शनादिनिषेधः क्रियते ।

---

आत्मादेश' इ त्यात्मत्वेनाऽप्यग्रे तस्य वर्ण्यमानत्वा च्च प्राणशब्दनिर्दिष्टा ज्जीवा दधिक आत्मा भूमा परमेश्वर ए वेति सिद्धान्तसंग्रहः ॥

' स भगवः कस्मि न्प्रतिष्ठितः स्वे महि ' म्नीत्यादि नोपदिश्यमानानां स्वमहिमप्रतिष्ठि तत्व सर्वात्मत्व सर्वकारणत्वादीनां धर्माणां परमेश्वरे ए वोपपत्तेः प्राणशब्दनिर्दिष्टे जीवे अनुपपत्ते श्च भूमशब्दनिर्दिष्टः परमेश्वर ए वेत्यर्थः ॥

कथ मिह साङ्गत्य मितिचेत् भूम्नि प्रत्यक्षे नान्य त्पश्य तीत्यादे रय मभिप्रायः। निरतिशयसुखस्वभावे यस्मिन् साक्षात्कृते सुखान्तराभिलाषेण रूपादिविषयदर्शनादौ न प्रवर्तते यन्मग्नः पुरुषः स भूमा ब्र ह्मेति। ब्रह्मा नन्दलवपरमाणवो हि विषयसुखविशेषाः। तथा हि श्रुतिः 'एत स्यै वानन्द स्यान्यानि भूतानि मात्रा मुपजीव' न्तीति। तस्मा दिह न ब्रह्मणि द्वैतनि षेधप्रसक्तिः। प्रपञ्च स त्येव कथं मुक्तात्मना मपुरुषार्थस्य तस्य दर्शनं परि ह्रियत इति न विचार्यम्॥

नहि मुक्तात्मनां प्रकृतप्रपञ्चो दर्शनविषयः। किंतु निरतिशयानन्दस्व रूपं ब्र ह्मैव प्रपञ्चाकारेण दर्शनगोचरो भवति। तथाहि श्रुतिः 'एत त्ततो भवति आकाशशरीरं ब्रह्म सत्यात्म प्राणाराम' मिति 'आप्नोति स्वाराज्यम् आप्नोति मनसस्पति' मित्यादिना मुक्तात्मा प्रस्तुतः। तस्य वाक्पति रित्या

---

इति न विचार्य मिति — अत्राऽयं भावः। भूमशब्दोयं ब्रह्मशब्दसमानार्थकत्वा त्तद्व देव त्रिविधपरिच्छेदान्तर्भूतवस्तुपरिच्छेदराहित्यसिद्धये स्थूलसूक्ष्मसकलचेतनाचेतनप्रपञ्चविशिष्टस्य परमेश्वरस्य वाचकः, वृक्षशब्द इव पत्रपुष्पादिविशिष्टस्य स्थावरस्य। तथा च यथा वृक्षं पश्यतः पत्रपुष्पाद्याकारे णापि वृक्ष एव दर्शनगोचरो भवति। तत एव वृक्ष पश्य त्यामूल माशिखरं सर्वा वयवसहित वृक्ष इ त्येव पश्यति, एवं ब्र ह्मानुभवतः प्रपञ्चाकारे णापि ब्रह्मै वानुभवगोचरो भवति। अतो युज्यत एव 'यत्र नान्य त्पश्य' तीत्यादि। भूम्न्यनुभूयमाने तदनन्तर्गतस्य क स्याऽपि दर्शनाभावात्। उक्तर्थे तैत्तिरीयश्रुति प्रमाण यति तथा हीति — एत त्परिदृश्य मानं प्राकृतप्रपञ्चजातं ततो मुक्त्यवस्थाप्राप्त्यनन्तर माकाशशरीरत्वादिविशिष्ट ब्रह्मैव भवति। मुक्तं प्र त्युक्तरूपब्रह्मात्मना प्रकाशत इत्यर्थ.॥

उदाहृतश्रुते र्मुक्तविषयत्वं दर्शयितुं पूर्ववाक्या न्युदाहरति आप्नो तीति — व्याहृति विद्यायां ब्रह्मोपासक मधिकृ त्येद मुच्यते —

स्वः स्वर्गसुखरूपे पदे राजत इति स्वाराट्। तस्य भावं स्वाराज्य माप्नोति सुखैकरसं पर ब्रह्मणः शिवस्य पद माप्नो तीति यावत्। मनसस्पतिं ज्ञानशक्त्यधिष्ठानभूतं शिवं चाप्नोति। अयं प्रस्तुतो मुक्तात्मा तदा किंविशिष्टो भव ती त्याकांक्षाया मुच्यते वाक्पति रित्यादि — विज्ञानं मनः। एवं प्रस्तुतं मुक्तात्मानं प्र 'त्येत त्ततो भव' ती त्येत त्ततो भवतीत्यादिक मुच्यत इति युक्तम्॥

दिना स्वाधीनाप्राकृतविशुद्धवागिन्द्रियादिसम्बन्ध उक्तः । तस्य पुन स्तादृशावस्थाप्राप्त्यनन्तरं एतत् दृश्यमानं प्राकृतप्रपञ्चजाल माकाशशरीरं चिदम्बरप्रकाशशरीरं ब्र ह्मैव भव तीति तात्पर्यरहस्यार्थः ॥

ततो मुक्तानां ब्रह्मणा सादृश्यं तत्समरसीभूतप्रपञ्चदर्शन मिति सर्वं समीचीनम् ॥

इति भूमाधिकरणम्

---

अथ अक्षराधिकरणम् २४

## अक्षर मम्बरान्तधृतेः ॥ १–३–९ ॥

बृहदारण्यके श्रूय तेस्य विषयः । ' एत द्वै त दक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूल मन ण्वह्रस्व मदीर्घ मलोहित मस्नेह मच्छाय मित्यादि ॥

अ त्राक्षरशब्दवाच्य स्त्रेधा संदिह्यते प्रणवो जीवः परमेश्वरो वेति ॥

---

इहापि भूमविद्यायां मुक्तः सर्वप्रपञ्चं पश्य न्नपि तत्र किञ्चि दपि दुःखरूपतां न पश्यति । किंतु निरस्तसमस्तदु.खसंसर्गब्रह्मरूपता मेव पश्य ती त्युक्तम् । ' न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं हि पश्यः पश्यति सर्व माप्नोति सर्वशः ' इति । तस्मा द्यत्र नाऽन्य त्पश्य तीत्यादे र्विरोधाभावा न्मुक्तानां ब्रह्मसादृश्यं तदपृथग्भूतप्रपञ्चदर्शित्वं चोपपद्यत इ त्युप संहरति तत इति ॥

इति भूमाधिकरणम्

---

अथ अक्षराधिकरणम्

अक्षरब्राह्मणगतं विषयवाक्य मुदाहरति बृहदारण्यक इति — बहुधाऽभ्यस्त स्याऽक्षर शब्दस्य रूढ्या वर्णवाचकत्वा जीवपरत्वा च्च वर्णो वा जीवो वाऽक्षरशब्दवाच्य इ त्यवगम्यते । अम्बरान्तधृत्यादेः पारमेश्वरासाधारणत्वा त्तदर्थः परमेश्वर इति विज्ञायत इति संशय माह अत्रेति ॥

प्रणवजीवयो रन्यतर एवाक्षरशब्दवाच्यः । कुतः ? अक्षरशब्दस्य वर्ण पर्यायत्वात् प्रणववाचकत्व मुचितम् । 'पुरुषोऽक्षर मुच्यते' इति पुरुषस्याऽपि तदभिधेयत्व मुक्तम् । अत स्ता वेवाक्षरशब्दवाच्या विति प्राप्ते ब्रूमः ॥

---

अक्षरशब्दरूढि मवलम्ब्य पूर्वपक्ष माह अक्षरशब्द स्येति — अत स्ता वेवेति — प्रणवो जीवो वा अक्षरं नतु परमेश्वर इ त्यर्थः ॥

सिद्धान्तं प्रतिजानीते अक्षरशब्दवाच्यं परब्रह्मेति — अ त्रेय माख्यायिका ॥

जनकस्य यज्ञे कुरुपाञ्चालदेशागतेषु ब्राह्मणे ष्वभिसमेतेषु 'क स्वि देतेषां ब्रह्मिष्ठ' इति जिज्ञासुना जनकेन शृङ्गद्वयाबद्धफलपरिमितसुवर्णालङ्काराः सहस्रं गाः समानीय 'ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजता' मित्युक्ते तेषु ब्राह्मणे ष्वधृष्टतया स्थितेषु याज्ञवल्क्यः स्वशिष्य मुवाच । 'एताः सोम्य उदज सामश्रव' इति । तत स्तेषु ब्राह्मणेषु क्रुद्धेषु त माश्वलः पप्रच्छ । 'त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठो' सीति। 'नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म' इति याज्ञवल्क्य स्योक्तिभङ्ग्या तस्य ब्रह्मिष्ठत्वाभिमान मधिकं सन्त मवधार्य तद्विजिगीषया आश्वलादिषु केषुचि त्तं पृष्टवत्सु तेन च सदुत्तरोक्त्या जितेषु, 'अथ हैनं गार्गि वाचक्नवी पप्र' च्छेत्यादि गार्गिब्राह्मणं प्रवृत्तम् । तत्र गार्ग्या 'य दिदं सर्व म प्स्वोतं च प्रोतं' चेत्यादिना तत्तदुत्तरानन्तरं पुनः पुनः पृष्टस्य याज्ञवल्क्यस्य क्रमेण 'ब्रह्मलोकेषु गा' र्गीत्युत्तरं मति 'कस्मि न्नु खलु ब्रह्मलोका ओता श्च प्रोता' श्चेति पुनः पृष्टेन याज्ञवल्क्येन 'गार्गि ! माऽतिप्राक्षी र्मा ते मूर्धा व्यपप्तत् । अनतिप्रश्न्यां वै देवता मतिपृच्छसि माऽतिप्राक्षी' रिति सक्रोध मुक्त गार्गी उपरराम । ततः उद्दालके प्रसिद्ध ब्रह्मविदि सूत्र मन्तर्यामिणं च पृष्टवति याज्ञवल्क्येन जिते पुन र्गार्गी सर्वेषां ब्राह्मणानां पराजयो जायत इति शङ्कया याज्ञवल्क्यस्य क्रोधं ब्राह्मणाना मनुज्ञयै वाऽकिञ्चित्करता मापाद्य प्राक् 'माऽतिप्राक्षी' रिति निवारितं प्रश्नं पुन. करिष्या मी त्याशयवती 'ब्राह्मणा भगवन्तो हन्ताऽह मिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चे न्मे वक्ष्यति नवै जातु युष्माक मिमं कश्चिद्ब्रह्मोद्यं जे' तेति तेषा मनुज्ञां याचित्वा पृच्छामि' र्गीति तै रनुज्ञाता 'अहं वै त्वा याज्ञवल्क्य ! यथा काश्यो वा वैदेहो वो ग्रपुत्र उज्ज्यं धनु रधिज्यं कृत्वा द्वौ बाणवन्तौ शरौ सपत्नातिव्याधिनौ हस्ते कृ त्वो पोत्तिष्ठे देव मे वाऽहं त्वा द्वाभ्यां प्रश्नाभ्या मुपोद स्थां तौ मेब्रू' हीति द्वितीयप्रश्ननिवारणपरिजिहीर्षया प्रश्नद्वयानुज्ञां पृष्ट्वा पृच्छेति तदनुज्ञाता 'य दूर्ध्वं याज्ञवल्क्य ! दिवः' इत्यादिना सर्वदेशकालानुवृत्तसकलप्रपञ्चाधारं पृष्ट्वा आकाशे य दोतं च प्रोतं चे त्युत्तरिते 'नमस्तेऽस्तु याज्ञवल्क्य योम एतं व्यवोच' इति तं प्रशस्य इतः परं द्वितीयप्रश्न स्योत्तर मशक्य मि त्याशयेन 'अपरस्मै धारय' स्वे त्युक्त्वा पृच्छेति तं नोक्ते प्रथमप्रश्नोत्तर स्वीकरणार्थं पुन रपि 'यदू

अ त्राक्षरशब्दवाच्यं परं ब्रह्मैव कुतः ? अम्बरान्तधृतेः । ‘ य दूर्ध्वं गार्गि दिवो य दर्वाक् पृथिव्या य दन्तरा द्यावापृथिवी इमे यत् भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव त दोतं च प्रोतं ’ चेति सर्वविकारा धारतया निर्दिष्ट आकाशः । ‘ कस्मि न्नोत श्च प्रोत ’ श्चेति गार्ग्या पृष्टे , ‘ एत द्वै त दक्षरं गार्गि ! ब्राह्मणा अभिवदन्ति ’ इत्यादिना , एतस्मिन् ख ल्वक्षरे गार्गि ! आकाश ओतश्च प्रोत श्चेत्यन्तेन याज्ञवल्क्यवचनेन निर्दिष्ट स्याऽक्षर स्याम्बरान्त प्रपञ्चधृति रवगम्यते । कथ मेत दन्यत्र परमेश्वरात् संभवति ॥

ततः परमेश्वर ए वाऽक्षरपदाभिधेयः ॥

## सा च प्रशासनात् ॥१–३–१० ॥

---

र्ध्वं याज्ञवल्क्य ! दिव ’ इत्यादिना प्राक्पृष्ट मेव पृष्ट्वा याज्ञवल्क्येन ‘ यदूर्ध्वंगार्गी ’ त्यादिना सर्व मनूद्य ‘ आकाश एव त दोतं च प्रोतं चेति प्राचीनोत्तर एवाऽवधारणेन दृढीकृते तदनन्तरं ’ कृतस्य ‘ कस्मि न्नु ख ल्वाकाश ओत श्च प्रोत ’ श्चेति द्वितीयप्रश्न स्योत्तरतया ‘ एत द्वै तदक्षर मि त्यारभ्य ‘ एतस्मिन् ख ल्वक्षरे गार्ग्या काश ओत श्च प्रोत ’ श्च त्यन्तं कृत्स्न मक्षर ब्राह्मणं प्रवृत्तमिति ॥

अत्र अक्षरे आकाशमात्रधृतिःश्रूयते। न त्वाकाशान्तसकलधृति रिति सूत्रोक्तहेतो रसिद्धि शङ्कां परिहर्तुं पूर्वबाक्यप्रदर्शनपूर्वकं सौत्रं हेतुं व्याचष्टे यदूर्ध्वं गार्गीत्यादिना — अक्षरे आकाशमात्रधृति र्नोच्यते । किंतु प्रागुपक्रान्तस्य भूगोलकादे राकाशान्तस्य सर्वस्य धृति रुच्यते। कथ मेत दिति। आकाशान्तसकलधृति स्तु आकाशान्तगतसकलकार्याधारत्वोक्तिपूर्वकत्वसामर्थ्या त्सिध्यन्ती परमेश्वरा दन्यत्र योजयितुं न शक्यत इ त्यर्थः । तस्मा त्प्रणवो जीवो वा अक्षर शब्दवाच्यो न भवति किंतु परमेश्वर ए वे त्यर्थः ॥

ननु अक्षरं जीव इ त्यपि वक्तुं युक्तम् । ‘ यथा वा अरा नाभौ समर्पिता एव मस्मि न्प्राणे सर्वं समर्पित ’ मिति भूमविद्यागतवचनबला जीवस्याऽपि देशकालव त्सर्वाधारत्वोपपत्ते रित्याशङ्का वारणार्थं सूत्रम् ॥

साच धृति रिति — न न्वम्बरान्तधृतिः प्रशासनाधीना न श्रूयते । किंतु सूर्यादिकर्ति पयधृति रे वेतिचे न्न। तच्छ्रवणाद्यैव स्थालीपुलाकन्यायेन सकलजगद्धृते रपि तदधीनत्वबोधकत्वात्।

साच धृतिः ' एत स्यै वाक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ' इत्यादिना प्रकृष्टाऽऽज्ञाधी नाऽवगम्यते , । त ज्जगच्छासनं च जीवस्य न संभवति । ' एक एव रुद्रो न द्वितीयाय तस्थु ' रिति जगच्छासने परमेश्वरस्य द्वितीयाऽभावश्रवणात् ॥

अतःपरमेश्वर ए वाऽक्षरनामधेयः ॥

## अन्यभावव्यावृत्ते श्च ॥ १–३–११ ॥

अन्यभावोऽर्थान्तरत्वम् । ' त द्वा एत दक्षरं गार्गि ! अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ ' इति वाक्यशेषः परमेश्वरा

---

यथाल्लोके स्थाल्यां तुल्यपाकानां पुलाकाना मेकस्या प्रदिष्नाऽन्येपा मपि सिद्धता ज्ञाप्यते , ए मिहाऽपि सूर्यादिधृतं रक्षरप्रशासनाधीनत्वोक्त्या सर्वेषां तदन्येपा मपि धृते स्तदधीनत्वं ज्ञाप्यते । ' न द्वितीयाय तस्थु ' रिति तैत्तिरीयश्रुतिपाठः । तत्र केवलस्य परमेश्वरस्य द्वितीयाऽभावश्राव णेऽपि ' य इमा न्लोका नीशत ईशनीभि' रिति श्वेताश्वतरे , 'य इमा न्लोका नीशत ईशनीषु', रि त्यथर्वशिरसि च तद्वाक्यशेषश्रवणा , त्तदनुसारेण जगच्छासनविषय मेव द्वितीयाऽभाववचनम् । तस्मा ज्जगतां यथाकथञ्चि त्कालाद्य नेकाधारत्व कल्पनसम्भवे प्यनेकशासितृत्वकल्पनं व्यवस्थाऽ सिद्ध्या दिद्रोषदूषितत्वा न्न सम्भव तीति भावः । ननु ' अदृष्टं द्रष्टृ ', इत्यादि नोक्तं द्रष्टृत्वादिकं जीव एव सम्भवति । तस्मा ज्जीव ए वाऽक्षर मिति शङ्कानिराकरणार्थं सूत्रम् ॥

अदृष्टत्वादिविशेषितद्रष्टृत्वाद्यसम्भवा दिति — अत्राऽयं भावः । ' अविज्ञातं विज्ञातृ ' इ त्येतदनन्तर ' नान्य दतोऽस्ति श्रोतृ नान्य दतोऽस्ति मन्तृ नान्य दतोऽस्ति विज्ञातृ' इति श्रूयते । तस्य सर्वथा द्रष्ट्रन्तरनिषेधपरत्वं वक्तु मयुक्तम् द्रष्टृबहुत्वस्य बहुतर प्रमाणसिद्धत्वात् । किंतु पूर्वोक्तं द्रष्टृ यावद्गुणविशिष्टतया प्रकृतं तावद्गुणै स्तत्सदृशं द्रष्ट्रन्तरम् नास्ती त्येवं परं वाच्यम् । यथा बहुविद्वद्युते ग्रामे चैत्रस्य बहुशास्त्रवेदितृत्वादिगुणा नभिधाय ' अस्मि न्ग्रामे चैत्र एव विद्वा ' निति वचनस्य प्रा गुक्तै र्गुणै श्चैत्रसमो विद्वा न्नास्ती त्येवं परत्वं , । तथा ' नान्य दतोऽस्ति द्रष्टृ' इत्यादेः प्रा गुक्तैः सर्वाधारत्वसर्वप्रशासितृत्वादिगुणैः प्रकृतस्य द्रष्टुः सदृशं द्रष्टृ नास्ती त्येव मर्थपरत्वे स्थिते तस्य परमेश्वर विषयत्व मवार्य मिति तत्र स्थिता द्रष्ट्रादि शब्दाः परमेश्वरे चाक्षुषश्रावणमनन्याध्यवसेयविषयसाक्षात्कर्तृ परत्वेन योजनीयाः । तस्मा त्पूर्व

दक्षर स्यान्यभावं व्यावर्तयति । प्रणवजीव पक्षयो रदृष्टत्वविशेषितद्रष्टृत्वाद्य संभवात् ॥

अतः परमेश्वरोऽक्षर मिति निर्णयः ॥

इत्यक्षराधिकरणम् ॥

---

अथईक्षतिकर्माधिकरणम् ॥ २५

प्रत्यक्षादिप्रमाणातीतस्याऽपि परमेश्वरस्य परमकरुणावशा दुपासकप्रत्यक्षत्व मुपपादयितु मेत दधिकरण मारभ्यते ॥

---

वाक्यगतानामपि द्रष्ट्रादिशब्दानां स एवाऽर्थः सिध्य तीति पूर्ववाक्यसन्दर्भ स्याऽय मर्थ इति विज्ञायते ॥

अदृष्टं जीववर्गस्य रूपदर्शनदशायां तदात्म वत् तं प्र त्यभासमान मेव सन् द्रष्टृ तद्दर्शन विषयरूपसाक्षात्कर्तृ । अश्रुतं शब्दश्रवणदशायां तं प्र त्यभासमान मेव सन् श्रावणविषयशब्द साक्षात्कर्तृ । अमतं तस्य स्थाणुपुरुषादि विचारदशायां तं प्र त्यभासमान मेव सत् तद्विचारविषय वस्तुसाक्षात्कर्तृ अविज्ञातं तस्य स्थाण्वादिनिर्णयदशायां तं प्र त्यभासमानमेव सन् विज्ञातृ तन्निर्णीत विषयसाक्षात्कर्तृ इति ॥

एवं जीववर्गव्यावर्तकार्थग्रहण एव प्रकृताक्षरस्यदृष्टद्रष्टृन्तरादिनिषेधपूर्वोत्तरवाक्यसन्द र्भानु गुणो भवति । तस्मा ददृष्टत्वादिविशेषितद्रष्टृत्वादिकं जीववर्गे न सम्भव ती त्यधिकरणार्थ मुप संहरति । अत इति ॥

अत्र सर्वप्रशासितृत्वादीनां ब्रह्मलिङ्गानां पूर्वपक्षदशाया मक्षरधर्मत्वे बाधकोपन्यासा त्तत्सा न्निध्याम्नाताकाशधर्मिणा मेव सता मौपचारिकाक्षरान्वय इति स्पष्टास्पष्टब्रह्मलिङ्गता पूर्वाधिकरणे स्वमहिमप्रतिष्ठितत्व मुक्तम् । त त्परेमेश्वरा दन्यस्य श्रूयते इत्याक्षेपिकी तेन सङ्गतिः ॥

  

अत्र परैः 'नान्य दतोऽस्ति द्रष्टृ' इत्यादिना आत्मभेदो निषिध्यत इति यदुक्त त दयुक्तम् । बहुप्रमाणसिद्धस्य तस्य प्रतिषेद्धु मयुक्तत्वात् । तस्मा 'न्नान्य दतोऽस्ति द्रष्टृ' इति वाक्यस्य ब्रह्मव्यतिरिक्तस्य द्रष्टृत्वमात्रनिषेधपरत्वं वक्तु मयुक्तम् । तथा ब्रह्मैव द्रष्टृ नान्य दि त्युक्तं स्यात् । त त्परेषां विरुद्ध मेव ब्रह्मणो द्रष्टृत्वाऽनभ्युपगमात् । तस्मा द्यथोक्त मेव युक्तम् ॥

# ईक्षतिकर्मव्यपदेशात्सः ॥१-३-१२॥

अस्य विषयः प्रश्नोपनिषदि श्रूयते ; 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाऽक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदर

---

अथ ईक्षतिकर्माधिकरणम् ४

पूर्वाधिकरणेन सङ्गतिं दर्शयन्नुत्तराधिकरणमवतारयति प्रत्यक्षादीति — पूर्वाधिकरणविषयवाक्ये अदृष्टमश्रुतमित्यादिना जीववर्गस्य चक्षुश्श्रोत्रान्तःकरणव्यापारदशासु परमेश्वरस्याऽनवभासमानत्वोक्त्या तस्य प्रत्यक्षादिप्रमाणातीतत्वं सिद्धम् । तथाविधस्य साक्षात्कारकं फलत्वेनोच्यत इत्याशङ्कानिराकरणार्थं बाह्यान्तरिन्द्रियजन्यप्रत्यक्षाऽविषयोऽपि परमेश्वरः कृपावशादुपासकानां साक्षात्कारविषयो भवतीति प्रदर्शयितुमुत्तराधिकरणमारभ्यत इत्यर्थः ॥

अत्र स्वरूपावरणमपनीय स्वरूपज्ञानात्मकसाक्षात्कारविषयो भवतीति प्रदर्शयितुमित्यनेन श्री दीक्षितेन्द्रैः शिवार्कमणिदीपिकायां परमेश्वरसाक्षात्कारस्य स्वरूपावरणापनयनपूर्वकस्वस्वरूपज्ञानरूपत्वं निगदितम् । तच्चिन्त्यम् ॥

प्रकृताधिकरणविषयवाक्ये 'परात्परं पुरुषमीक्षत' इति परमेश्वरस्यैव ईक्षतिकर्मत्वव्यपदेशात् । ततस्तु 'तं पश्यते निष्कळं ध्यायमान' इत्यादिश्रुत्यन्तरेष्वपि परमेश्वरस्यैवेक्षतिकर्मत्वनिर्देशाच्च नच सर्वास्वपि श्रुतिषु श्रुतः परमसाक्षात्कारः स्वरूपाऽऽवरणापनयनपूर्वकस्वस्वरूपावबोध इत्येव विवक्षित इति शङ्क्यम् सम्पद्याविर्भावाधिकरणे परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्य' तीति श्रुतेः ब्रह्मप्राप्तजीवस्य मलतिरोहितं ब्रह्मसदृशगुणस्वरूपं पूर्वं सदेव मलावरणापगमादाविर्भवतीति ब्रह्मप्राप्त्यनन्तरमेव मलावरणापगमपूर्वकस्वस्वरूपाविर्भावस्य निर्धारितत्वात्तद्विवरणे दीक्षितेन्द्रैरपि तदानुगुण्येनैव विवृतत्वेन तद्विरुद्धत्वेन प्रकृते परमेश्वरसाक्षात्कारस्य स्वरूपावरणापनयपूर्वकस्वस्वरूपावबोधपरत्वायोगादिति दिक् ॥

प्रश्नोपनिषदि 'स यो ह वै तद्भगव' न्नित्यादिना पिप्पलादं प्रति सत्यकामप्रश्ने इदमाम्नायते । यः पुनरेतमित्यादि — अत्र 'परंपुरुषमभिध्यायीत । परात्परं पुरुषमीक्षत इत्युक्त्या । ध्यातव्यः परमपुरुष एव ईक्षणीय इति फलफलिनोरीक्षणध्यानयोरेकविषयत्वनियमादवगम्यते ॥

ध्यातु रीक्षणविषये पुरुषे त्रधा संशयं दर्शयति अत्रेति — अन्योवेत्यनेन हिरण्यगर्भो नारायणो वेति कोटिद्वयं संगृहीतम् । अत्रेत्यनेन परमेश्वर इति कोटेर्बीजं सूचितम् ।

स्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः स सामभि रुन्नीयते ब्रह्म लोकं स एतस्मा ज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते ' इति॥

अत्रेक्षति कर्मत्वेन श्रूयमाणः परमेश्वरोऽन्योवा इति संशयः ॥

नाऽसौ परमेश्वरः हिरण्यगर्भ एव ' स सामभि रुन्नीयते ब्रह्मलोक' मिति तल्लोकप्राप्तिश्रवणात् । परशब्दस्य जीवोत्कृष्टे तस्मिन् संभवाच्च ॥

अथवा, नारायणः तस्य पुरुषशब्दवाच्यत्वात् , जीवघनात् परा द्धिरण्य गर्भात् परत्वोपपत्ते श्च तस्मि न्नेव प्रणववाच्यत्वप्रसिद्धे श्च ' तद्विष्णोः परमं पदं , सदा पश्यन्ति सूरयः ' इति तत्पद स्यैव विद्वदनुभवविषयत्वश्रवणात् ।

---

उपक्रमे ' एतद्वै ' इत्यादिना पारमेश्वरोपासनाविधित्सावगमात् । ईक्षतिकर्मत्वेन श्रूयमाण इत्यनेन तदन्योवेति कोटे र्बीजं सूचितम् । पूर्वत्र अदृष्ट द्रष्टृित्यादिना परमेश्वरस्य प्रत्यक्षाऽविषयत्व श्रवणात् । अत ईक्षतिकर्मत्वश्रावणं परमेश्वरा दन्यत्रैव सम्भव तीति भावः ॥

पूर्वपक्षमाह नाऽसौ परमेश्वर इति — ईक्षतिकर्मत्वश्रवणा देवेति भावः । प्रथमपूर्वपक्ष मुपपादयति हिरण्यगर्भ इति — तल्लोक प्राप्तिश्रवणा दिति — भूलोकादिप्राकृतलोकप्राय पाठा दत्र ब्रह्मलोकशब्दः कार्य ब्रह्मलोकपर इति भावः ॥

द्वितीयपूर्वपक्ष मुपपादयति अथवा नारायण इति — पुरुषशब्दवाच्यत्वा दिति ॥

यथा शङ्करशब्दोऽयं महादेवेऽवतिष्ठते ।  
तथा पुरुषशब्दोऽपि वासुदेवेऽवतिष्ठते ॥

इत्यादिषु पुरुषशब्द स्याऽसाधारण्येनाऽपि नारायणे शक्तिस्मरणा दिति भावः । प्रणव वाच्यत्वप्रसिद्धे रिति — प्रपञ्चसारादिष्विति भावः । प्रत्यभिज्ञाना च्चेति । अत्राऽयं भावः । ' यत्त त्कवयो वेदयन्त ' इत्यत्र ' तद्विष्णो ' रिति मन्त्रश्रुत विष्णुपदसाधारण्य प्रत्यभिज्ञानादिह

ब्रह्मलोको विष्णुपद मेवेति तत्रेक्षतिकर्मा तदर्थं ध्यातव्यश्च विष्णुरेव ॥

नन्वेवं परब्रह्मोपासनाविधित्सापर उपक्रमो विरुध्यत इति चे न । अस्मि न्नेव श्लोके त मोङ्कारेणाऽन्वेती त्योङ्कारेण विष्णूपासनया तत्पदप्राप्ति मभिधाय ' यत्त च्छान्त ' मित्यादिना

'ऋग्भि रेतं यजुर्भि रंतरिक्षं सामभि र्यत्तत्कवयो वेदयन्त' इत्यग्रिमश्लोके तत्प्रत्यभिज्ञाना च्चेति प्राप्ते ब्रूम ॥

ईक्षतिविषय स्स परमेश्वरः । उत्तरत्र त मोंकारे णैवायतने नाऽन्वेति 'विद्वान् य त्तच्छान्त मजर ममृत मभयं परं' चेति तदसाधारणशान्तत्वादि धर्मव्यपदेशात् । नहि हिरण्यगर्भे तत्कार्ये शान्तत्वाऽऽदिक मस्ति ॥

ब्रह्मलोक मिति परब्रह्मणः शिवस्य लोकः प्राप्यत याऽवगम्यते जीव घन इति जीवसमिष्टिरूपो हिरण्यगर्भः तस्मात् परात्परं हि ध्येयं श्रूयते; ततो हिरण्यगर्भपक्षो न युक्तः ॥

---

त्रिमात्र णोङ्कारेणैव शान्त त्वादिविशिष्ट शिव मपि प्राप्नो तीति वचना दोङ्कारेण शिवोपासन स्यापि विधिसिद्धेः । तस्माच्छान्तत्वादिपरामर्शलिङ्ग स्समंहारस्यापि न विरोधः ॥

एव ञ्च शान्तत्वादिविशिष्टः प्राप्यः परमेश्वर एव। ईक्षतिविषय स्तु तदन्य श्चतुर्मुखो नारायणो वेति । मूत्रे स इति निर्देशेन 'यस्य परमेश्वर स्योपासन मेतद्वै सत्यकाम परं चापरं' चेत्युपक्रमे विविक्षित तयोक्त स एव ध्यानेक्षणवाक्ययोः परशब्देन प्रत्यभिज्ञाप्यत इति सूच्यत इत्यभिप्रे त्याऽऽह ईक्षतिविषय स्स परमेश्वर इति— यथा क्रतुन्यायेन ध्यानविषय स्यैव प्राप्य तया ध्यानफलत्वा दीक्षणस्य ध्यानेक्षणयो रेकविषयत्वा दिति भावः । व्यपदेशादिति सौत्रं हेतुं व्याचष्ट — उत्तरत्रेति — शान्तत्वादिकं प्रकृतध्यानेक्षणकर्मणोऽन्य त्रतदुपासनविषये नान्वेति। वाक्यभेदप्रसङ्गेन प्रकृत उपासनान्तरविध्यनङ्गीकारात् । 'अमृत मभय परं' चेति चकार स्येक्षतिकर्मण्येव शान्तत्वादिगुणसमुच्चयार्थत्व स्योपपन्नत्वा दिति भावः । नहि हिरण्यगर्भ इति — शान्तत्व निरस्तसमस्तसांसारिकतापकलङ्कत्वम् । अमृतत्व मनादि मुक्त त्वम् । अभयत्व मभयहेतुत्वम् । स्वयभयराहित्यस्य शान्तत्वविशेषणे नैव सिद्धेः । अभयशब्दा त्तत्करोतीति ण्यन्ता त्पचाद्यचि अभयशब्दस्याऽभयहेतुपरत्व मुपपद्यते । परत्वं सर्वोत्कृष्टत्वम् । एतत्सर्वं हिरण्यगर्भे नसम्भवती त्यर्थः ॥

प्राकृतलोकप्रायपाठा द्ब्रह्मलोकशब्दः कार्यब्रह्मलोकपर इति पूर्ववाद्युक्तं निराकरोति । ब्रह्मलोकमिति — परश्रुतिप्रत्यभिज्ञालिङ्गप्रकरणैः प्रायपाठो बाध्यत इति भावः । इतोपि न हिरण्यगर्भ इ त्याह जीवघन इति ॥

नारायण इति य दुक्तं तद्विचार्यम्। 'अमृत मभयं परं' चेति नित्यमुक्तत्व मभयहेतुत्वं विश्वाधिकतया परत्वं च कथ मस्मि न्नुपपद्यते? विश्वरूपो ह्यसौ कथं चैत दुपपद्यते? य जीवघना द्धिरण्यगर्भादपि परा दुत्कृष्टात् नारायणात् पर मुत्कृष्टं पुरि शयान मन्तर्यामितया अत एव पुरुषं परं ब्रह्म तदुपासक स्साक्षा त्पश्यतीति वर्णितम् 'नारायणपरं ब्रह्म', 'ऋतगं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं ऊर्ध्वरेतं विरूपाक्ष' मितिहि श्रूयते तस्मात् पुरि दहर पुण्डरीके वर्तमानतया पुरुषशब्दवाच्यं 'तस्य प्रकृति

---

नारायणपक्षे शान्तत्वाऽजरत्वसम्भवे प्यमृताभय परशब्दोक्तानि नित्यमुक्तत्वसंसारमोच कत्वविश्वाधिकत्वानि नोपपद्यन्त इ त्याह 'अमृत मभय' मिति — नित्यमुक्तत्व मिह न नित्य मेव सांसारिकदोषनिर्मुक्तत्वम्। शान्तविशेषणेन तल्लाभात्। किन्तु सर्वकाले निरतिशया नन्दभोक्तृत्वम्। त त्परमेश्वरधर्मस्य परमाकाशशब्दितस्य निरतिशयाऽनन्द स्याऽत्रस्याविशेषरूपे नारायणे न सम्भवतीति भावः। इतोपि नारायणो नेक्षतिविषय इ त्याह — कथ ञ्चेत दिति। जीवघना त्परा दिति। पञ्चम्यो र्वैयधिकरण्यमेव युक्त मधिकार्थलाभा दिति भावः। ननु तयो र्वैयधिकरण्येपि हिरण्यगर्भा त्परः ईक्षतिकर्मगत परत्वावधिभूतो नारायणइति। कुतोऽवसी यते। ये नेक्षतिकर्म नारायणो नस्या दित्याशङ्क्याह — नारायणपर मिति। तैत्ति रीये दहरविद्याया मणोरणीया नित्यनुवाके, 'यो देवाना' मिति मन्त्रेण शिवस्य हिरण्य गर्भा दधिकत्वेसिद्धेऽपि तदनन्तराऽनुवाके 'नारायणपरब्रह्मेति' नारायणा द्ब्रह्मणः परत्व मुक्तम्। तत्किं नारायणा त्परमि त्याकांक्षायाम्। 'ऋतं सत्यं परं ब्र' ह्मेति तदनन्तरानुवाके शिवएव नारा यणा त्परं ब्रह्मेति प्रदर्शितम्। तेन हिरण्यगर्भा त्परो नारायण स्ततः पर श्शिव इतिसिद्धम्। स्पष्टञ्चैत च्छिवसङ्कल्पोपनिषदि 'परा त्परतरो ब्रह्मा तत्परा त्परतो हरिः। तत्परा त्परतो ईश इतिमन्त्रे। अत स्तदर्थप्रत्यभिज्ञाना दिह हिरण्यगर्भा त्परो नारायण एव। तस्मा दि हेक्षति विषयो न हिरण्यगर्भो नापि नारायणः। किंतु उदाहृतदहरविद्याया मनन्त माङ्गल्यगुणविशिष्टं दिव्याद्भुत रूपञ्च ब्रह्म वर्णितं तदेवेति तत्रत्यगुणरूप विवरणपूर्वक मुपसंहरति — तस्मा दिति। प्रणववर्ण व्यत्यासरू पेति। अय मर्थो लिङ्गपुराणे शिवेनाऽम्बिकायै वर्णितः। त्वदीयः प्रणवः कश्चि न्मदीयः प्रणव स्तथा। त्वदीयो देवि मन्त्राणां शक्ति भूतो न संशयः। अकारोकार मकारा मदीये प्रणवे स्थिताः उकारंच मकारंच अकारंच क्रमेणतु। त्वदीयप्रणवं विद्धि त्रिमात्रं प्लुत मुत्तम मिति। अय ब्रह्मलोकशब्दोक्ते शिवपदे तद्विष्णो रितिमन्त्रार्थप्रत्यभिज्ञाया अविरोध मुपपादयति — य दुक्त मित्यादिना॥

लीनस्य यः परः स महेश्वर' इति श्रुत्या प्रणवाभिधेयं, नारायणपरं ब्रह्मेति श्रुत्या नारायणा द्विश्वरूपा दधिकं, वाङ्मनसविपर्यासरहिततया ऋतगं सत्यं, त्रिलोचनतया विरूपाक्षं, परशक्त्या प्रणववर्णव्यत्यासरूपोमाशब्दवाच्यया शबलाकारत्वेन कृष्णपिङ्गलं परं सर्वातिशायि, ब्रह्म परात्परं पुरिशयं पुरुषमीक्षत इति ईक्षतिकर्मत्वेन व्यपदिश्यत इति युक्तम् ॥

यदुक्तं 'तद्विष्णोः परमं पद' मिति तत्र प्रपंचाकारत्व मन्तरेण यन्निरतिशयानन्द स्वभावं विष्णोः परमं पदं रूपं तदेव शिवाभिधं परं ब्रह्मे त्यविरोधः। यतो विष्णुशिवयो रुपादाननिमित्तयो रवस्थाभेद मन्तरेण स्वरूप भेदो नास्ति, तदिह हरिविरिंचाऽदिप्रपञ्चोत्तीर्णस्याऽपि साधकाऽनुग्रहाय पुरिशयानतया पुरुषस्य परमशक्तिरूपोमाशबलितस्य विरूपाक्षस्य परब्रह्मण स्साक्षात्कार स्सकलसंसारनिवृत्तिपूर्वकं तत्प्राप्तये तदुपासकानां तद्वाचक प्रणवपराणां भव तीति निरूपितम् ॥

इति ईक्षतिकर्माधिकरणम् ॥ ४

अथ दहराधिकरणम् २६

तस्य पुरि शयन मुपासनं च प्रकटयितु मिद मधिकरणं प्रस्तूयते ।

---

इद मधिकरणम् केवलाद्वैतिनां पक्षे नोपपद्यते। तै रविषयतयाऽभ्युपगते ब्रह्म णीक्षति विषयत्वनिर्णयस्य विरुद्धत्वात्। आत्मानात्मविचारपूर्वकस्वस्वरूपावबोधस्यैव फलत्वेनाऽभ्युपगच्छतां परम्पुरुष मभिध्यायीतेति परमेश्वरध्यानरूपोपासनाविधिः पुरिशयं पुरुष मीक्षत इति तत्फलरूपपरमेश्वरसाक्षात्कारस्यापि निष्प्रयोजनत्वाच्च ॥

तथा श्रीभाष्यकृतामपि पक्षे इद मधिकरणं न समञ्जसं भवति। नारायणस्य चतुर्मुखात्परत्वसिद्धावपि परमेश्वरा दपरत्वस्यैव श्रुतिसिद्धत्वेन परात्परमिति प्रकृतविषयवाक्योक्तपरात्परत्वाऽसिद्धेः दहरविद्याद्युक्तपरत्वस्य तत्राऽनन्वया च्चेति दिक् ॥

इति ईक्षतिकर्माधिकरणम् ४

अथ दहराधिकरणम् २६

## दहर उत्तरेभ्यः ॥ १-३-१३ ॥

छान्दोग्येऽस्य विषयः श्रूयते; ' अथ य दिद मस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मि, न्नन्त राकाश स्तस्मि न्यदन्त स्त दन्वेष्टव्यं तद्वाव विजिज्ञासितव्य मित्यादि ॥

दहरशब्देन इह भूताकाश उच्यते, उत जीवः परमेश्वरोवा इति संशयः ॥

आकाशशब्दस्य वियति रूढतया भूताकाशो दहरः; अथवा जीवो दहरः स्वल्पपरिमाणत्वात्। तस्याऽणुभूतेऽस्मिन् संभवात्। न व्यापी परमेश्वरो दहरः इति प्राप्ते ब्रूमः ॥

---

अथ दहराधिकरणम् २६

पूर्वाधिकरणसङ्गतिप्रदर्शनपूर्वक मुत्तराधिकरण मवतारयति — तदि हेति । अथवा तीत परमाकाशवर्त्यपि परमेश्वरः उपासकानां प्रत्यक्षविषयो भूत्वा 'तदोकोग्रज्वलन' (ब्र॥सू॥४-२-१६) मित्यधिकरणोक्तरीत्या ता ननुग्रहीतुं तेषां हृदयकमलेऽपि सूक्ष्मेण रूपेणाऽवस्थितः प्रणवेन स्वोपासकानां सकलसंसारनिवृत्तिपूर्वकस्वप्राप्तये तदीक्षणविषयो भव तीति पूर्वस्मि न्नधिकरणे निरूपितम्। तस्य यत्र स्तिस्य यादृशरूपगुणविशिष्टस्य प्रणवे नोपास्यत्वं तत्तत्वं प्रकटीकर्तुं दहरविद्याविचारार्थ मधिकरण मारभ्यत इत्यर्थः। एषा प्रासङ्गिकी सङ्गतिः । बुद्धिस्थस्य निरू पणार्हत्वं प्रसङ्गः ॥

त्रेधा संशय न्दर्शयन् संशयकोटीनांबीजानि सूचयति — दहराकाश इ हेति । आकाश श्रुति र्भूताकाशकोटेर्बीजम् । दहरत्वलिङ्ग मणो जीवकोटे र्बीजम् ' अत्र प्रकरणे अपहतपाप्म त्वादीनां ब्रह्मलिङ्गानांश्रूयमाणत्वा दिहेति सिद्धान्तकोटे र्बीजं सूचितम्। वियति रूढत येति। आकाशशब्दस्य लोके वियति प्रसिद्धतरत्वा दिति भावः। अतो रूढ्या भूताकाश ए वाच्य मितिभावः दहरेति। तस्य व्यापकस्यापि हृदय पुण्डरीकावच्छेदेनाऽल्पत्वं सम्भवतीति भावः। यदि प्रकृतेऽल्पस्वरूपमेव विवक्षितं तर्हि जीवो स्त्वित्याह — अथ वेति। पूर्वपक्ष मुपसंहरति

परमेश्वर एव दहराकाशः उत्तरेभ्योऽपहतपाप्मत्वादिभ्यो धर्मेभ्यः। 'एष आत्मा अपहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सोऽपिपास स्सत्यकाम स्सत्यसंकल्पः' इति वाक्यशेषसिद्धेभ्यः॥ एते कथं संसारिणि जीवे संभवन्ति? तस्मा दीश्वर एव दहराकाशोऽपहतपाप्मत्वाऽदिगुणक इति॥

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गंच ॥ १–३–१४ ॥

तद्यथा हिरण्यनिधिं निहित मक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयु

---

न व्यापी परमेश्वरो दहर इति सिद्धान्तयति इतिप्राप्त ब्रूम इति। उत्तरेभ्य इति सौत्रहेतुं व्याचष्टे — अपहतपाप्मत्वादिभ्य इति।अत्राऽय म्भावः। यावान्वा अय माकाश स्तावा नेषोऽन्त र्हृदय आकाश इति दहराकाश स्योपमा नोपमेयभावो न भूताकाश स्योपपद्यत इति — ननु — द्यावापृथिव्यादिसर्वसमाधानोक्त्यनन्तरं प्रा ग्ब्रह्मपुरशब्दोक्तदेहएव तस्य सर्वस्य समाधान मुक्त मापाद्य देहे जीर्णे नष्टे वा जीर्णे कुसूला दौ धारणाक्षमे तदन्तर्निहितं व्रीह्यादि कमिव नष्टे घटे तदन्तर्निहितं दध्यादिकमिवच तत्किमपि नावतिष्ठे तेत्यन्ते वासिभि राक्षिप्तम्। तंच ब्रूयुः अस्मिंश्च दिदं ब्रह्मपुरं सर्व समाहितं सर्वाणिच भूतानि सर्वे च कामा यदैन ज्जराऽ वाप्नोति। प्रध्वंसतेवा किन्त त्कोऽवशिष्यत इति। तत्रेदमाचार्यस्योत्तरमुक्तम्। नास्यजर यैतज्जीर्यते। न वधेनास्यहन्यते। एतत्सत्यं ब्रह्मपुरमस्मिन्का मास्समाहिता इति। दहराकाशे वर्णितम्। सर्वं समाधानमत्र सत्यशब्देनदहराकाश. परंब्रह्मत्येवनिर्धारितः। एवमुपसंहारगतेभ्य श्श्रुतिलिङ्गेभ्योऽपिदहराकाश परमेश्वर एवेतियु क्तमित्याशयः। कथंसंसारिणीति। अत्राऽयम्भावः। दहराकाशशब्दस्य जीवपरत्व मिष्यतेचेत् 'अथ य दिद मस्मिन्ब्रह्मपुर' इत्यादिना दहराका शस्येदानीन्त नोपासक देहावच्छिन्नतया श्रूयमाणत्वेन संसारि जीवपरत्वमेवाङ्गीकार्यम् नहि मुक्तजीवपरत्वम्। एवमुक्ताना मपहतपाप्मत्वादीनां संसारिजीवेऽ सम्भवा त्तत्परत्वं वक्तु मयुक्त मिति॥

दहराकाशस्य ब्रह्मत्वे हेत्वन्तर माह — गतिशब्दाभ्या मिति। तथाहि — तद्यथा हिरण्यनिधि मित्यारभ्य ब्रह्मलोकं नविन्द न्त्यनृतेनहि प्रत्यूढा इति वाक्यशेषे प्रत्यहं तत्र श्रूयमाणा प्रजानांगतिः ब्रह्मलोकशब्दश्च दहराकाशो ब्रह्मेति बोधयत इत्यर्थः। कथमनयोः प्रकृतसाधकत्व मित्याशङ्कायां माह — तथाहीति। 'सर्वेषा ञ्चेतनानां परब्रह्मणि सुषुप्तिकालेऽ हरहर्गमनमेवखलु सो म्येमाः प्रजा स्सति सम्पद्य नविदु' रिति श्रुत्यन्तरे दृष्टम्। एष ब्रह्मलोक

रेवमे वेमा स्सर्वाः प्रजा अहरह र्गच्छ न्त्येतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः' इति वाक्यशेषे प्रजाना महरह रस्मिन् दहराकाशे या गतिश्रूयते यश्चात्र ब्रह्मलोकशब्द स्ताभ्या मपि दहराकाशः परमेश्वरः। तथाहि, श्रुत्यन्तरे परमेश्वर एव एवंरूपं गमनं दृष्टम्। 'एव मेव खलु सोम्येमा स्सर्वाः प्रजा स्सति संपद्य न विदु स्सति संपत्स्यामहे' इति ब्रह्म लोकशब्दश्च तस्मिन् दृष्टः। एष ब्रह्मलोक स्संराडिति होवा' चेति। किंच माभू द्गतिशब्दयो रन्यत्र दर्शनम्। अस्मिन् प्रकरणे सर्वासां प्रजाना महरह श्श्रूयमाणं गमनं ब्रह्मलोकशब्दश्च परमेश्वरस्य दहराकाशत्वे पर्याप्तं गमकम्॥

## धृते श्च महिम्नोऽस्यास्मि न्नुपलब्धेः ॥ १-३-१५ ॥

'अथ य आत्मा स सेतुर्विधृति रेषां लोकाना मसंभेदा' येति जग द्विधृतिश्च। परमेश्वरस्य महिमास्मिन् दहराकाश उपलभ्यते। धृतिश्च परमे

---

इति ब्रह्मलोकशब्दश्च तस्मि न्दृष्टः। तत्प्रत्यभिज्ञया दहराकाशो ब्रह्मेति विज्ञायत इत्यर्थः। लिङ्गं श्चेति सूत्रखण्डं व्याचष्टे — किञ्चे ति माभू दन्यत्र गतिदर्शनम्। अस्मिन्प्रकरणे सर्वासां प्रजानामहरहर्गमनं ब्रह्मलोकशब्दश्च दहराकाशस्य ब्रह्मत्वे पर्याप्तमि त्यर्थः। चशब्दोऽवधारणार्थः एतदेव पर्याप्त मि त्यर्थः। अनृतेन हि प्रत्यूढा इ त्यवेदनस्य मलावरणहेतुत्वे नोपपादनं पुरुषार्थ रूपहिरण्यनिधिदृष्टान्तो पादानञ्च परमेश्वरविषयत्व एव सम्भवति। न भूताकाशविषयत्वे तस्मा द्दहराकाशः परमेश्वर ए वेति भावः॥

ससेतुर्विधृति रित्यादिना श्रूयमाणं जगद्विधरणं परमेश्वरस्य महिमा श्रुत्यन्तरे ससेतुर्विधरण इ त्याम्नातत्वा त्ततो दहराकाशः परमेश्वरएव। ननु जगद्विधृतेः पारमेश्वरत्वेपि 'अथ य आत्मे' त्यथशब्देन दहराकाशप्रकरणस्य विच्छिन्नत्वा त्सा दहराकाशे नश्रूयत इत्याशङ्क्य 'अस्याऽस्मि न्नुपलब्धे' रिति सूत्रखण्ड मस्य जगद्विधरणस्यास्मिन्दहराकाश एवोपलब्धे रित्यर्थ कतया व्याचष्टे — अस्मि न्दहराकाश इति। 'अथ य आत्मे'ति प्रकृतपरामर्शिनो यत्पद स्यात्मशब्दस्य च प्राग्दहराकाशे प्रयुक्तस्य विद्यमानतया सेतुत्वादिवर्णनस्य तदन्यविषयत्वं नस

श्वरमहिमा । 'एषसर्वेश्वर एष भूताधिपति रेष भूतपाल एष सेतु र्विधारण एषां लोकाना मसंभेदा' येति श्रुतेः । अतोऽपि दहराकाशः परमेश्वरः

## प्रसिद्धे श्च ॥ १–३–१६ ॥

'दहं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं

---

म्भतति । तस्मा दथशब्दः पूर्वप्रकृतापेक्ष इ त्यर्थः । तस्य प्राङ्निर्दिष्टा अनन्तरं निर्देक्ष्यमाणाश्च गुणाः परस्परापेक्षया समुच्चि त्योपासनीया इति सूचनं फल मिति ज्ञेयम् ॥

छान्दोग्यश्रुता वपहतपाप्मत्वादिगुणा न्वया दहराकाश. परमेश्वरइति प्रतीयते । 'दहरं विपाप्म' मित्यादि तैत्तिरीयश्रुतावपि 'गगन विशोक' मि त्यपहतपाप्मत्वाद्यनन्तरं तद्विशोकत्वा न्वय प्रत्यभिज्ञाना द्गगनशब्दनिर्दिष्टो दहराकाशः परमेश्वर इ त्येव प्रतीयते । कैवल्योपनिषदितु हृत्पुण्डरीकान्तर्वर्तित्वेनैव परमेश्वरोपासना विधीयत इति न तत्र तदन्तर्गताकाशवर्तित्वं नोपासना विधान मिति शङ्काऽवकाश अस्ति तस्मा द्दहरपुण्डरीकवर्ती परमेश्वर इत्यत्राऽपि श्रुत्यन्तराऽनुरोधा द्विहाऽपहतपाप्मत्वाद्यन्वयस्वारस्येन दहराकाशः परमेश्वर इ त्यत्र नानुपपत्ति रिति भावः ॥ पूर्वपक्षहेतु न्दर्शयति — नन्विति । इत्यादीत्यनेन दिव्ये ब्रह्मपुरे ह्येष व्योम न्यात्मा प्रति ष्ठितः । 'तस्यान्ते सुषिरग् सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम् । तस्य मध्ये वह्निशिखा अणी योर्ध्वा व्यवस्थिता । तस्या श्शिखाया मध्ये परमात्मा व्यवस्थितः' । इति वाक्यान्तरं गृह्यते । विरोध इति । क्वचि द्दहराकाशः परमेश्वरः प्रतीयते । क्वचि त्त दन्तर्वर्तीति विरोधा न्निर्णयोऽ प्राप्तइति भावः । विरोधो नास्ती त्याह — तत्राऽपीति । 'दहरोऽस्मि न्नन्तराकाश स्तस्मि न्य दन्त स्तदन्वेष्टव्य' मिति । दहराकाशमध्यवर्तिनः परमेश्वरस्य उपास्यत्वविधाना दित्यर्थः । यद्येवं तर्हि अपहतपाप्मत्वादि धर्मान्वया द्दहराकाश परमेश्वरइति पूर्वोक्तं विरुध्येते त्याशङ्क्य परिहरति — किन्त्वित्यादिना ॥

ननु दहराकाश स्तदन्तर्वर्तीच परमेश्वर इति कथं सङ्गच्छते । स्वस्यैव स्वान्तर्वर्तित्वस्य विरुद्धत्वात् । 'अन्यो ह्यन्यस्मि न्प्रतिष्ठित' इति श्रुतेरि त्याशङ्क्य हृत्पुण्डरीके दहराकाश शब्दोक्तचिदम्बरशक्तिविशिष्टमहालिङ्गरूपेण वर्तमानतया शक्तिमत एकत्वा दविरोध इत्यभि प्रेत्याह — अत ए वेति । हंसोपनिष दीति । तत्र 'एषोऽसौ परमहंसो भानुकोटिप्रकाशो ये नेदंव्याप्तं तस्याऽष्टधा वृत्तिर्भवती' त्यारभ्य मध्येवैराग्यम् केसरे जाग्रदवस्था कर्णिकायां स्वप्नः । लिङ्गे सुषुप्तिः । पद्मत्यागे तुरीयम्' इति श्रूयते । अत्रपरमेश्वरस्य लिङ्गरूपत्वाऽनभ्युपगमे पद्म

गगनं विशोक स्तस्मि न्यदन्त स्त दुपासितव्यम् ' । इति महोपनिषदि, ' हृत्पुण्डरीकं विरज ' मित्यारभ्य ' उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नील कण्ठं प्रशान्तं ध्यात्वा ' इत्यादि कैवल्योपनिषदि च, परमेश्वर स्योमासहायस्य दहरपुण्डरीकमध्यवर्तित्वेन उपास्यत्वं प्रसिद्धम् । ततोऽपि परमेश्वरो दहराकाशः ॥

---

मध्ये मध्यकेसरकर्णिकातिरेकेण चतुर्थस्य कस्य चिदभावा ल्लिङ्ग सुषुप्तिरितिवचनं निर्विषयंस्या दिति भावः । चेतन सुषुप्ति समयाधार स्येति । ' इमा स्सर्वाः प्रजा अहरहर्गच्छन्त्य ' इति 'इमा स्सर्वाः प्रजा स्सति सम्पद्य नविदु ' रित्यादिश्रुत्यन्तरेषु परब्रह्मण एव सकलजीवसुषुप्तिकाल निवासत्वे नाम्नातत्वा दत्र सुषुप्तिस्थान तया श्रुतं लिङ्गं पर म्ब्रह्मेति स्पष्टमिति भावः । लिङ्ग रूपत्वमिति । अनेन परमेश्वरः केन रूपेण दहराकाशे वर्तत इ त्याकाङ्क्षानिवारितं त्याशयः ॥

ननु — अपहतपाप्मत्वादिकं गुणजातं दहराकाशेऽन्वेति तदन्तर्वर्ती परमेश्वर उपास्य इति कथ मिदं मुपपद्यत इ त्याशङ्क्याह — युक्तश्चेनेति । चिदम्बरशक्ति विशिष्ट स्येति । महालिङ्गरूपस्य शिवस्य चिच्छक्ति विशिष्टतया दहराकाशस्य अत्र वर्तमानस्याऽपि परमेश्वरस्य चैकत्वात्प्रकृते न किमपि वैयधिकरण्यमिति भावः । एवं महालिङ्गस्य चिच्छक्तिविशिष्ट स्यै वोपास्यत्वाऽवगमेन दहरविद्याया मुपास्या दहराकाशशब्दोक्ता शक्ति स्त तदन्तर्वर्ती परमेश्वर इति विचारोनिरर्थ ईति सिद्धम् ॥

ननु हृदयपुण्डरीके महालिङ्ग रूप शिव उपास्य इति नयुक्तम् , ' उमासहायं परमेश्वरं ' मिति कैवल्ये , ' ऋतगं सत्यं परंब्रह्म पुरुषंकृष्णपिङ्गलं' । इत्यन्यत्राऽपि साकारस्यै वोपास्यत्वा म्नाना दित्याशङ्क्याह — साकारेति । रूपद्वयेति । परमेश्वरस्यहि साकारमिव निराकारमपि रूप माम्नायते तथाहि - ' तमादिमध्यान्तविहीनमेकं विभुं चिदानन्द मरूप मद्भुतम्' । उमा सहायमिति । तथा ' ऋतगं सत्य ' मितिपुरस्तान्निराकारं निरूप्य पुरुषं कृष्णपिङ्गळ मित्यन्यत्राऽपि साकारं रूपमाम्नायते । ततश्च भवतिरूपद्वयमप्युपास्यमितिभावः । ननु निराकारं रूपमुपास्यंचे चिदाकाशे भवतिध्येम् । अथयदि साकार स्तर्हि भवित्यर्चायां किमनेन महालिङ्गरूपेणेत्या शङ्क्याह — इदमेवाऽभ्यर्हित मिति ॥

अत्राऽय म्भावः । साकारस्याऽथ निराकारस्यवा परमेश्वरस्य ध्याने पूजनेवा महालिङ्ग रूपमेव मुख्यमि त्यर्थः । निराकारस्य ध्याने भवति लक्ष्य मिदमेव तथा साकारस्याऽपि रूपस्य ध्यानपूजनादा विद मेव मुख्य मित्यर्थः । अत एव महाभारते - द्रोणपर्वणि अश्वत्थामानं प्रति -

ननु दहरपुण्डरीकमध्ये दहराकाशाऽन्तर्वर्तित्वे नोपास्यत्वं, ' य एषो न्तरहृदय आकाशः। तस्मिन् शेते सर्वस्य वशी सर्वस्येशान ' इत्या द्युप निषदन्तरे प्रसिद्धं। परमेश्वरस्य इह दहराकाशत्वे नेति विरोध इतिचे दत्राऽपि दहराकाशमध्यवर्ती परमेश्वर उपास्यः। किंतु, दहराकाशे परमेश्वरधर्माणा मपहतपाप्मत्वादीनां संबन्धप्रतीते र्दहराकाशत्व मप्यस्य चिदंबररूपतया इतिनविरोधः ॥

अत एव हंसोपनिषदि ' लिङ्ग सुषुप्ति 'रिति चेतनसुषुप्तिसमयाधारस्य दहराकाशस्य लिङ्गरूपत्वं प्रसिद्धम। युक्तं चैतच्चिदम्बरशक्तिविशिष्टस्य पर

---

' जन्म कर्मतपोयोगा स्तयो स्तवच निर्मलाः। ताभ्यां लिङ्गेऽर्चितोदेव स्त्वयाऽर्चायां युगेयुगे। इति ; तत एव सर्वजनध्यानपूजनोपयोगितया ' ग्रिमग्राम मशिवालय ' मिति स ग्रामेषु पुण्य क्षेत्रेषु च देवर्षिमानवैः प्रतिष्ठितेषु शिवालयेषु महालिङ्गभेर सान्दृश्यते इति प्रसिद्धम्। किञ्च मुख्य मिति। पारमेश्वरीणां पञ्चविंशतं मूर्तीनां लिङ्गाख्यामूर्ते रेव प्राधम्या दित्यर्थः। निजरूपेणेति। ब्रह्मविष्ण्वोः कलहसमये तयोर्मध्ये महालिङ्गरूपेणैव परमेश्वर स्याविर्भावादि त्यर्थः किञ्च — ' लीयते गम्यते यस्मि न्यत स्सर्वं चराचर ' मिति सकल प्रपञ्च सृष्टिलयकारणमि त्यर्थः। अत्र निजरूपे णेति। महालिङ्गस्यैव पारमेश्वर सहजरूपत्वकथनं नोपासकानां गोचरीभूय वरप्रदानादि समयएव परमेश्वरस्य साकारत्व मय स्त्रदा महालिङ्गरूपत्वमे वेति सिद्धम्। सर्वा नुग्रहरसिक स्येति। वात्सल्यजलनिधेः परमेश्वरस्य सर्वजनाऽनु जिघृक्षोः सर्वभूतहृद्देशे निजरूपेण सन्निधान मुचितमे वेतिभावः ॥

ननु हृदय पुण्डरीके निहितं महालिङ्ग मिष्टप्राणभावाख्येषु त्रिष्वपि नान्तर्भवति। तथाहि — अस्य स्थूलतनुसम्बन्धित्वेऽपि पूजाया मनुपयोगा न्नेष्टसंज्ञा भवति। अथ प्राणा यतने हृदि निविष्टत्वेऽप्यस्य मन्त्ररूपत्वाभावा न्न प्राणसंज्ञा। तथा कारणशरीरा सम्बन्धित्वा न्नभावसंज्ञाऽपि। एवं त्रिष्वपि साधकाना मुपासनीये ष्वनन्तर्भावान्हृदि महालिङ्गरूपेण वसताऽपि निरुपयोगा न्नेतनाऽस्माक मप्रयोजन मितिचे दुच्यते। दहराकाशाऽन्तर्व र्तुपासना विधा नानन्तरं दहराकाशे किंवर्तत इति प्रश्नः कृतः। अत्र पुण्डरीकदहरत्वे नैतदन्तर्गताकाशस्य सूक्ष्मत्वसिद्धाव प्यतिसूक्ष्मत्वसिद्ध्यर्थमेव ख स्याकाशेऽपि दहरत्वविशेषणं कृतम्। तत्र विव र्तितु महतीति शङ्कां मनसि निधा योक्तसर्वानुवादः तदुत्तरे दहराऽन्तर्वर्त्युपास्य मतिसूक्ष्मेऽपि वर्तितु मर्हती त्युपपादयितुमेव ' यावान्वा ' इत्यादिना तस्य हृदयसुषिरविशेषाऽवच्छेदोपाधिक

मेश्वरस्य सत्यं रूपम्। तत एव चाऽन्यत्राऽपि 'आधारे कनकप्रख्यं हृदये विद्रुमप्रभम्। भ्रूमध्ये स्फाटिकच्छायं लिङ्गं योगी विभावये'दिति साकार निराकाररूपद्वयमहितस्याऽपि महेशितु र्हृदि मेवाऽभ्यर्हितं न्तु ध्यानपूज नादौ साधकाना मिति सर्वाऽनुग्रहरसिकस्य परब्रह्मणः सर्वेषां चेतनानां हृदि निजरूपेण सन्निधानमिति न किमपीहाऽनवद्यम्॥

## इतरपरामर्शा त्स इतिचे न्न असंभवात् ॥ १-३-१७ ॥

'अथ य एष संप्रसादोऽस्मा च्छरीरा त्समुत्थाय परं ज्योति रुपसं पद्य स्वेन रूपे णाऽभिनिष्पद्यते। एष आत्मेति होवाच' इति इतरो जीवः

---

मतिसौक्ष्म्यं द्रढीकृतम्। तेनाऽतिऽसूक्ष्मे किंवर्तितु मर्हतीति चोद्यनिरवकाशीकृतम्। तत्र किंव र्तत इति प्रश्न स्योत्तर मुच्यते। उभे अस्मि न्नित्यादिना। तत्रोपासकस्य भोगस्थानभोगोप करणभोग्यजातं। दहराकाशे समाहितमिति नोच्यते; किन्तु सर्वविधमपि भोगस्थानभोगोप करणभोग्यजात मविरक्तावस्थाया मुपासकेन युगप द्धृत्वं चे द्यावत्प्रेमास्पदं भवे त्तावत्प्रेमास्प दत्वयोग्यम्। 'एतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मा' दितिश्रुत्यन्तरे प्रसिद्धम्। निरति शयानन्दरूपं ब्रह्म गौण्या वृत्त्या द्यावापृथिव्यादिसर्वशब्दसन्दर्भे प्रतिपाद्य मिति तदेव दहरा काशे समाहितमि त्युच्यते। तस्मिं त्सर्वं प्रतिष्ठित मिति श्रुत्यन्तरेऽपि तदे वोच्यते। एवञ्च दहरे निविष्टं परमानन्दरूपमिति सिद्धम्। आनन्दरूप मजरं यद्विभातीत्यादिश्रुत्या पीद मानन्द रूपमित्यवगम्यते। भावलिङ्ग स्यानन्दरूपत्वप्रसिद्ध्या हृदयकमलकुहरविराजमानं भावलिङ्गमे वेति सिद्ध्यति। अस्य चेतनसुषुप्तिसमयस्थानत्वमपि कारणतनुसम्बन्धादपि दहराऽन्तर्वर्तिभाव लिङ्गमे वेत्यवगम्यते। अतएव क्रियासारे — श्रीनीलकण्ठभगवत्पादै र्दहराऽधिकरणम् भाव लिङ्गोपासनाविधिपरमिति निर्णीतमिति तत्कर्तृभि रभिहितमि त्यलम्। एवंभूताकाशजीवसाधा रणः पूर्वपक्षो निराकृतः॥

अथ जीवपक्षोपपादकहेत्वन्तरोद्भावनपूर्वकं तन्निराकरणपराणि सूत्राणि॥

इतरो जीवः परामृश्यतइति तस्मात्। सम्प्रसादशब्दस्य सुषुप्तिवाचकतया तद्विशिष्टे जीवे वृत्तिर्युक्ता न ब्रह्मणि। शरीरा त्समुत्थायेति - शरीरा त्समुत्थानमपि तस्यैव धर्मइति प्रसिद्धम्। तस्मा द्दहराकाशः जीवइत्यवगम्यतइतिचे न्न। उत्तरेभ्यो वाक्येभ्यउक्ताना मपहत

परामृश्यते। अतः प्रकृताकाश स्स एव भव तीतिचे न्न। उक्ताना मपहत पाप्मत्वादीनां तस्मि न्नसंभवात्। अतः परमेश्वर एव तदाश्रय इति युक्तम्॥

## उत्तराच्छे दाविर्भूतस्वरूपस्तु ॥ १–३–१८ ॥

उत्तरत्र प्रजापतिवाक्ये 'य आत्माऽहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सोऽपिपास स्सत्यकाम स्सत्यसंकल्प स्सोऽन्वेष्टव्य स्स विजि ज्ञासितव्य स्स सर्वान् लोका नाप्नोति सर्वांश्च कामान् य स्त मात्मान मनुविद्य विजानाति' इति जीव स्याऽपहतपाप्म त्वादिकं श्रूयते। जीवत्व लक्षण मवस्थात्रयवर्तित्वं च श्रूयते 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच य एष स्वप्ने महीय मान श्चरति एष आत्मेति होवाच तद्य त्रैतत्, सुप्त स्समस्त स्संप्रसन्न स्स्वप्नं न विजाना त्येष आत्मेति होवाचेति तत स्स एवाऽयं भवितु मर्हे तीतिचेत् न सार मेतत्। निजाऽनादिकर्मकलङ्क संबन्धघटितकळेबर तिरोहिताऽपहतपाप्मत्वादिको जीवः परंज्योति रुपसंपद्य पश्चा दाविर्भूतस्वरूप आविर्भूताऽपहतपाप्मत्वादिकोऽत्र प्रतिपाद्यते न संसारी दहराकाशस्तु स्वाभाविकातिरोहिततत्तत्कल्याणगुण इति न बद्धो मुक्तो वा अत्रदहराकाशः॥

---

पाप्मत्वादीनां तस्मि न्नसम्भवा दित्यर्थः। यद्यपि जीवेऽपहतपाप्मत्वादयो नसम्भवन्तीति प्रसि द्धमेव। तथाऽपि तत्सम्भवशङ्का मुद्भाव्य निराकर्तु शङ्कावकाशसूचक मिदं सूत्रम्॥

प्रजापतिवाक्ये 'यआत्माऽपहतपाप्मे' त्यादिना जीवे ऽप्यपहतपाप्मत्वादिकं धर्मजातं श्रूयते तस्मा ज्जीव एव दहराकाशशब्दित इति शङ्का। ननु प्रजापतिवाक्ये ऽप्यपहतपाप्मत्वा दिकं श्रुतं परमेश्वरस्यैवे त्याशङ्क्याह — जीवलक्षण मवस्थात्रयवर्तित्व ञ्चेति। परिहरति — निजानादीति। प्रजापतिवाक्ये जीव स्संसारिदशायां तिरोहिताऽपहतपाप्मत्वादिक स्सन् मुक्त्य वस्थायां साधनाधीनतदाविर्भावः प्रतिपाद्यते। दहराकाशे श्रूयमाणन्तु अपहतपाप्मत्वादिकं नित्याविर्भूतमेव ग्राह्यम्। तद्गुहसम्भवे तिरोहितत्वेनाऽ सत्प्रायस्य साधनाधीनाविर्भावस्यच ग्रह णाऽयोगादि त्यभिप्राय माविर्भूतस्वरूपस्त्विति परिहारसूत्रखण्डं व्याचष्टे — निजाऽनादीति। यदि दहराकाशो न जीवः किमर्थस्तर्हि 'यएष सम्प्रसाद' इत्यादौ जीवपरामर्शः इत्याशङ्क्याह॥

## अन्यार्थश्च परामर्शः ॥ १—३—१९ ॥

'असा च्छरीरा त्समुत्थाय परंज्योति रुपसंपद्य स्वेन रूपेणाऽभि निष्पद्यत' इति जीवस्य दहराकाशशब्दनिर्दिष्टेन परवस्तुना संपद्य स्वरूपा विर्भावोऽभिधीयते। तत्र ताद्द क्तन्माहात्म्यप्रतिपादनार्थो जीवपरामर्शः अतो न विरोधः॥

## अल्पश्रुते रितिचे त्तदुक्तम् ॥ १—३—२० ॥

अल्पस्थानाश्रयत्वा दल्पस्वरूपत्वप्रतीते र्न परोऽय मिति शंकायाः पूर्व मुक्त मेवोत्तरं व्योमव च्चेति॥

## अनुकृते स्तस्यच ॥ १—३—२१ ॥

तस्य जीवस्य दहराकाशशब्दनिर्दिष्टपरज्योतिरनुकृति रवगम्यते' नैनं सेतु महोरात्रे तरतो न जरा न मृत्यु र्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोकः। तस्माद्वा एतं सेतुं तीर्त्वा अन्धस्स न्ननन्धो भवति विद्धस्स न्न विद्धो भवति उपतापी स न्ननुपतापी भवति तस्माद्वा एतं सेतु न्तीर्त्वा अपि नक्त महरे वाऽभिनिष्प

---

अहरहर्वा एवंवित् स्वर्गं लोकमेतीति विद्वान् परामृश्यते। तन्माहात्म्यप्रतिपादनाऽर्थं इति दहराकाशस्य जगद्विधारणादिव जीवस्वरूपाविर्भावापादनरूपमन्यद्विशेष प्रतिपादनार्थं इत्यर्थः। ततो न ब्रह्मप्रकरणे जीवपरामर्शो निरर्थ इति भावः। अने नोपसंहारगतहेतु निराकृतः अथोप क्रमगतहेतुं निराकरोति —

दहरोऽस्मि न्नित्यल्पपरिमाणवत्त्वश्रवणा न्नायं परमेश्वरः किन्तु जीवएवेति चे त्तस्या श्शंकायाः व्योमवच्चेति परिहार उक्तइ त्यर्थः। जीवपूर्वपक्षनिराकरणे हेत्वन्तर माह —

तस्य जीवस्य परंज्योतिरूपपरमेश्वरं प्राप्तस्य तत्साम्यापत्तिरूपं तदनुकरणं लभ्यते। तदनु करणं च ततो भेदए वोपपद्यते। एव मनुकर्त्रनुकार्ययोर्जीवेश्वरयो र्भिन्नत्वनियमा ज्जीवो न दहरा

द्यते सकृद्विभातो ह्येष ब्रह्मलोकः' इति वाक्यशेषे। अत्रहि दहराकाशं प्राप्तस्य पाप्मकार्यान्धत्वाद्यभावे सततोदितप्रकाशत्वे च प्राप्यस्य दहराकाश स्यऽापहतपाप्मत्वं सततोदितप्रकाशत्वंच हेतुत्वे नोच्यते। तेन दहराकाशं प्राप्तस्य उक्तफलाऽवाप्ति स्तत्साम्याप्तिरूपा तदनुकृति रिति लभ्यते। साच ततो भेदएव उपपद्यते। अत श्चाऽयं न जीव इति तात्पर्यम्॥

प्रमाणाऽन्तर माह॥

## अपिच स्मर्यते ॥ १–३–२२ ॥

दहरपुण्डरीकान्तर्वर्तित्व महालिङ्गरूपत्व मुपास्यत्वं च ब्रह्मण स्स्मर्यते 'ईश्वर स्सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति', 'त मेव चाद्यं पुरुषं प्रपद्ये', ततोऽव्ययात्मा स हरिः स्वहृत्पङ्कज, शायिनम्। दर्शयामास देवानां मुरारि र्लिङ्ग मैश्वरम्'। 'अथवा परमात्मानं परमानन्दविग्रहम्। गुरूपदेशा द्विज्ञेयं पुरुषं कृष्णपिङ्गलम्। ब्रह्म ब्रह्मपुरे गार्गि! दहराऽब्जखमध्यमे अभ्यासात् संप्रपश्यन्ति सन्त स्त्वंच तथा कुरु' इति, ततः परंज्योति स्स्वरूपं मुक्तप्राप्यं

---

काशइ त्यर्थः। दहर उत्तरेभ्यइतिसूत्रा द्दहर इति। इतरपरामर्शादिति सूत्रात् स इति नेतिच अनुवृत्य सजीवो दहरो नभवती त्यर्थो लब्धः॥

ईश्वर इत्यादिकं गीतावचनं। ततोऽव्ययात्मे त्यादिकं वामनपुराणोक्तिः। अथवे त्यादिकं योगयाज्ञवल्क्यस्मृतिवचनम्। परमात्मानमिति 'तस्या श्शिखाया मध्ये परमात्माव्यवस्थित' इति मंत्रार्थ स्योपसंहारः। परमानन्द विग्रह मिति। 'यच्चाऽस्येहाऽस्तीति वाक्यार्थस्य। गुरूपदेशा द्विज्ञेयमिति तंचे द्ब्रूयु रित्यादिशिष्याचार्यनिबन्धनज्ञापितस्य। अभ्यासा त्संप्रपश्यन्तीति अन्वेष्टव्यं विजिज्ञासितव्य मित्यस्य अत्राऽपहतपाप्मत्वादीनां ब्रह्मलिङ्गानां स्पष्टानामपि पूर्वपक्षे दहराकाशा दन्यत्र तदन्तर्वर्तिन्वंवाऽन्वयात् स्पष्टाऽस्पष्ट ब्रह्मलिङ्गतेति पादसङ्गतिः॥

इद मधिकरणं शुद्धाऽद्वैतवादिनां विरुद्धमेव। तथाहि - 'इतरपरामर्शा त्स इतिचे न्नाऽसम्भवा दनुकृते स्तस्य' इत्यादि सूत्रैः दहराकाशो जीवो नभवति किन्तु परमेश्वर एवेति जीवपरत्व

परमशक्त्युमासनाथं परंब्रह्म दहरपुण्डरीकाकाश मध्यवर्ति स्वाभाविकाऽपहत पाप्मत्वादिगुणक मुपासनीय मिति सिद्धम्।

इति दहराधिकरणम् ६

---

अथ प्रमिताऽधिकरणम् २७

पूर्वाऽधिकरणे छान्दोग्यविद्याया मुपास्यतयाऽऽम्नातस्य दहराकाशस्य महालिङ्गरूपत्वं निर्धारितम्। तस्य कठवल्लीविद्याऽनुवादेनाऽपि स्थिरीकरणाऽर्थ मिद मधिकरण मारभ्यते ॥

## शब्दा देव प्रमितः ॥ १–३–२३ ॥

कठवल्ल्या मस्य विषय श्श्रूयते; 'अङ्गुष्ठमात्रः पुरुषोमध्य आत्मनि तिष्ठति। ईशानो भूत भव्यस्य न ततो विजुगुप्सते' इत्यादि ॥

---

निराकरणपूर्वक मीश्वरपरत्व निर्णयेन तयो र्वास्तव भेदस्य सिद्धत्वेन तेन शुद्धाऽद्वैतस्य प्रति षिद्धत्वात् ॥

तथा श्रीभाष्यकृतामपि पक्षे पीदं विरुद्धमिति ब्रह्मपथे वैष्णवपथप्रतिषेधे दहरोपास्यत्व निर्णये सविस्तर मुपपादितमिति नेहपुनः ॥

इति दहराधिकरणम् ६

---

अथ प्रमिताऽधिकरणम् २७

उत्तराऽधिकरणस्य प्रासङ्गिकीं सङ्गति माह — अत इति। पूर्वाऽधिकरणे छान्दोग्य श्रुतस्य दहराकाशस्य निषदन्तरेषु हृत्पुण्डरीकाऽन्तर्वर्तिनः परमेश्वरस्य महालिङ्गरूपतया श्रुतत्वेन तत्प्रसिद्ध्या तादृशलिङ्गरूपे णोपास्यत्वं निर्णीतम्। तत्पुन रिह प्रात्यक्षिकश्रुत्यनुवादेन द्रढयितु मधिकरणाऽन्तर मारभ्यत इत्यर्थः ॥

'ईशानो भूतभव्य' स्ये त्यत्र विदित्वेत्यध्याहारः। अङ्गुष्ठमात्रः पुरुष उक्तः। 'तं भूत भव्य स्येशानं विदित्वा तत स्तदनन्तरं नविजुगुप्सते' — आत्मानं गोपयितुं नेच्छति। अभयप्राप्ते रित्यर्थः। अङ्गुष्ठमात्रतया श्रूयमाण इति सन्दिग्धार्थस्य पुरुषपदस्य विशेषणेन जीव

इहाऽङ्गुष्ठमात्रतया श्रूयमाणः पुरुषः परमेश्वरो जीवोवा इति संदेहः जीव इति वक्तुं युक्तं 'स विश्वरूप स्त्रिगुण स्त्रिवर्त्मा प्राणाऽधिप स्संचरति स्वकर्मभिः। अङ्गुष्ठमात्रो रवितुल्यरूप स्संकल्पाऽहंकारसमन्वितो

---

इति पूर्वपक्षकोटे बीजं सूचितम्। परमेश्वरइ त्यनेन भूतभव्येशितृत्वलिङ्गम् सिद्धान्तकोटे बीज मितिच सूचितं। स विश्वरूप इति। पर्यायेण देवतिर्यङ्नरादिसकलरूपभाक्। त्रिगुणः सत्वादि गुणत्रयाऽधीनः। त्रिवर्त्मा — जाग्रदाद्यवस्थारूपमार्गत्रयसञ्चारी। प्राणाऽधिपः - प्राणेन्द्रिय प्रवर्तकः। सजीवः स्वकर्मभिरेव त्रिषु वर्त्मसु सञ्चरति। इदम्पूर्व मन्त्र स्योत्तरार्धम्। अङ्गुष्ठ मात्र इत्युत्तरमन्त्रस्य जीवविषयत्व स्फुटीकरणा योक्तम्॥

रवितुल्यरूपः यथा रवि स्त्रैलोक्यप्रकाशक स्तथाऽय स्थूलसूक्ष्मदेहद्वयप्रकाशकः। संक ल्पाऽहंकारसमन्वितः। ममेदं फलं मया तदर्थ मिदं साधन मनुष्ठेयमि त्येव रूपस्सङ्कल्पः। अह मेतेषां कर्मणां कर्ता तत्फलानां भोक्ता। इत्येवं रूपो ऽहंकार स्ताभ्यां समन्वितः। न न्वङ्गुष्ठ मात्रत्वं परमेश्वरेऽपि 'अङ्गुष्ठमात्रः प्रमितोऽङ्गुष्ठञ्च समाश्रित' इतिश्रुतं तत्कथं जीवलिङ्ग मितिचे न्न। तत्र श्रुतस्याऽपि जीवलिङ्गत्वाऽभ्युपगमात्। 'अथ सत्यवतः कायात्पाशबद्धंवशंग तम्। अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमोबला'दिति सावित्र्युपाख्यानगतवचनाद ण्यङ्गुष्ठमात्रत्वं जीवलिङ्ग मिति निश्चीयते। ननु मध्य आत्मनीति जीवा दङ्गुष्ठमात्रपुरुषस्य भेदनिर्देशा दङ्गुष्ठमात्रः पुरुषः परमेश्वरइ त्यवगम्यतइ त्याशङ्क्याह — मध्य आत्मनीति। न न्वीशानो भूतभव्य स्येति श्रूयते ततोऽय मङ्गुष्ठमात्रः पुरुषः परमेश्वरस्यादित्याशङ्क्याह — न त्विति॥

नाऽत्रेशानशब्दो ब्रह्मणोऽभिधान श्रुतिः भूतभव्य स्ये त्यैश्वर्य प्रतिसम्बन्ध्युपादानेन तस्य भूतभव्येशितृत्वरूप केवलयौगिकार्थ परत्वात् तस्मा द्भूतभविष्यदनेकशरीरनियन्तृत्व पर तया जीवएव योजनीयम्। तस्मा दङ्गुष्ठमात्रपुरुषो जीव एव ननु सर्वव्यापक परमेश्वर इति पूर्वपक्षः। सिद्धान्तयति — परमेश्वरएवेति। परमेश्वर लिङ्गशब्दा दिति भूतभव्येशितृत्वरूप परमेश्वरलिङ्गात्परमेश्वराऽभिधानश्रुतिरूपेशानशब्दाच्चे त्यर्थः। भूतभव्यशब्दयोः प्रकरणोपपदादि सङ्कोचकाऽभावा दसङ्कुचितभूतभविष्यद्वस्तुजातपरत्वा त्तन्नियन्तृत्वं परमेश्वर लिङ्गमेव। ईशान शब्दस्त्वभिधान श्रुतिरूपः। एव मुभाभ्यामपि प्रमाणाभ्या मङ्गुष्ठमात्रः पुरुषः परमेश्वरइति सिद्ध्यती त्यर्थः। ननु प्रकृते यौगिकाऽर्थप्रतिसम्बन्धिनो भूतभव्य स्योपादानेन रूढ्यर्थस्याऽनु न्मेषा दीशानशब्द स्याऽभिधान श्रुतित्वं कथ मितिचे न्नप्रतिसम्बन्ध्यु पादानेऽपि रूढशब्दश्रावण प्रयुक्तस्य रूढ्यर्थोन्मेषस्याऽ निवार्यत्वात्। अत्र भूतभव्येशितृत्व लिङ्गेनैव अङ्गुष्ठप्रमितः पर

यः' इति तस्याऽङ्गुष्ठमात्रत्वप्रसिद्धेः। मध्य आत्मनि तिष्ठतीति देहाऽन्तर्वर्तित्वाऽवगमाच्च। ननु परमेश्वरो व्यापकः इति प्राप्ते वदामः॥

* परमेश्वर एवाऽङ्गुष्ठमात्र इति युक्तम्, 'ईशानो भूतभव्य' स्येत्यादि • परमेश्वरलिङ्गशब्दात्, सर्वैश्वर्य संपन्नः सर्वेश्वरश्च शंभुराकाशमध्य' इति तस्यैव सर्वेश्वरत्वश्रवणात्॥

---

* परमेश्वर स्येति संबन्धषष्ठी कृताऽन्तर मित्यनेनाऽन्वयः॥

• परमेश्वर लिङ्गशब्दादिति, परमेश्वर लिंगात् परमेश्वराऽसाधारण शब्दाच्चेत्यर्थः, समासस्तुलिङ्गसहितश्शब्दो लिङ्गशब्दस्तस्मादिति तत्रलिंगं सर्वेश्वरत्वं शब्दस्तु ईशा इन इति 'ईश्वरश्शर्व ईशान' इति कोशेन तस्य तत्र रूढ्यनुशासनात्, अधिकमन्यत्र॥

---

मेश्वरइति सिध्यतीत्याशङ्क्य वाक्याऽर्थबोधाऽनन्तरोपस्थाप्यतया लिङ्गस्य विलम्बितोपस्थितिकेन तेनाऽलम् शब्दश्रावणमात्रेणैव परमेश्वर प्रमापका दीशानशब्दादेवेताऽर्थ स्सिध्यती त्येवकारेण सूचितम्॥

अत्र श्रीभाष्यकृद्भि श्शब्ादेव ईशानोभूतभव्यस्येति शब्दादेवे तिव्याख्यातम्। ततस्तद्विवृतौ श्रुतप्रकाशिकायां ननु भूतभव्य स्येशानइति वाक्यम् तच्च प्रमितत्वलिङ्गा दुर्बलं नैवं ईशानशब्दस्यैव शब्दशब्देन विवक्षितत्वात्। ईशानशब्दस्य देहेन्द्रियाद्यपेक्षया अनुपपत्ति स्फोरणाऽर्थ भूतभव्यशब्दोपादानम्। कि मीश्वरः किंजीव इति विचारे नेश्वरसम्बन्धिलिङ्गा न्निर्णयः किन्त्वीश्वरवाचिशब्दा दित्येवकाराऽभिप्रायः इति परिष्कृतं। अत्रतावत् शब्दा दित्य नेनेशान इ त्यभिधानश्रुतिपरिग्रहे नारायणपरत्वस्य जलाऽञ्जलि र्दत्तस्स्या दिति भिया तस्य वेदपरत्वपरिग्रहेण ईशानो भव्यस्येतिशब्दा दिति पुरस्तात् श्रीभाष्यकारै र्व्याख्यातम्॥

ततश्च कथ मिदमुज्येत सूत्रकारो हि भूतभव्येशितृत्वलिङ्गमेव श्रुतितो दुर्बलं मत्वा तद्व्यवच्छेदकेन शब्दादेवे त्येवकारेणाऽभिधान श्रुतिमेव परिजग्राह — एवंस्थिते अहो भाष्यकारस्तु लिङ्गादपि दुर्बलं वाक्यं परिगृह्य सूत्र मवादीदि त्याशङ्क्यभाष्यकारस्याऽपि शब्दशब्दे नेशानशब्दएव विवक्षितः' तर्हिभूतभव्य स्येति किमर्थ मुक्त मित्याशङ्क्य तत्पूर्वपक्षोक्तस्य देहेन्द्रियाद्यपेक्षया सङ्कोचस्याऽनुपपत्तिस्फोरणार्थ मिति यद्यपि समाहितम्। तथाऽपि त दयुक्त मेव। भाष्याऽर्थ परिपुष्णता श्रुतप्रकाशिकाकृताऽपि विवक्षिताऽर्थस्य परिमुषितत्वात्। तथाहि —

कथंपरमेश्वरे परिच्छिन्नत्व मभ्यस्यमान मुपपद्यत इत्यत आह ॥

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ १–३–२४ ॥

अपरिच्छिन्नस्याऽपि परमेश्वर स्याऽङ्गुष्ठमात्रत्व मुपासकहृदयाऽपेक्षया मनुष्याऽधिकारत्वा दुपासनाशास्त्रविधेः। मनुष्याणां हृदयं यावत्प्रमाणं तदवच्छिन्नं रूपं परमेश्वरः, परमकारुणिकः परिगृह्णाति तदुपासनासिद्ध्ये। ततः

ननु प्रकृते शब्दशब्दे नेशानशब्दे विवक्षितं मीमांसाया नारायणपरत्वं मन्येते त्याशङ्क्य ईशत्ववाचिशब्दादि तीशानशब्दं यौगिकं परिगृह्य नारायणपरत्व मस्याऽधिकरणस्य समर्थ्यतइति सूचितवान् ॥

एव मीशानशब्दं यौगिकं परिगृह्य ईशत्वस्य विवक्षितत्वे त स्येशितृत्वलिङ्गविशिष्टतया घट्टकुट्यामेव प्रभातत्वात्। तस्मा दिदमधिकरणं परपक्षस्यप्राणहरणक्षममेव। सूत्राऽन्तरे कुत्राऽपि ब्रह्मणो विशेषनामाऽग्रहणेन कृत्स्नायामपि मीमांसायां निबद्धा स्सदात्म ब्रह्मादि शब्दाः प्रकृताऽधिकरणे प्रथितेन ईशानेति विशेषाऽभिधानेन भागपशुन्यायेन परमेश्वर परा स्सम्पद्यमानाः ब्रह्ममीमांसां शैवीं निर्धारयन्ती त्यलम्। पूर्वपक्षबीजमुद्भाव्य तत्परिहारत्वे नोत्तर सूत्र मवतारयति — कथ मिति। अभ्यस्यमान मिति। अङ्गुष्ठमात्रः पुरुषो ज्योतिःवाऽधूमक इति। 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मासदा जनानां हृदये सन्निविष्टः तं स्वाच्छरीरा त्प्रवृहेन्मुञ्जा दिवेषीका' मिति। मन्त्रेच श्रूयमाण मङ्गुष्ठमात्रशब्दोक्त मङ्गुष्ठमात्र परिमाणत्व स्याऽभ्यस्यमानत्वात्। तत्र तं स्वाच्छरीरात्प्रवृहेदि त्येतच्छरीरा द्विविक्ततया ज्ञातव्यत्वपर मिति तस्याऽपि जीव लिङ्गतया परमेश्वरे नोपपद्यत इति भावः ॥

अङ्गुष्ठमात्रइ त्यनेन अङ्गुष्ठपरिमाणत्व मुच्यते। ननु तदधिक परिमाणाऽभावः। व्यापकस्याऽपि परमेश्वरस्य उपासकहृदयाऽपेक्षया अङ्गुष्ठपरिमाणत्व सम्भवती त्यभिप्रेत्याह — अपरिच्छिन्नस्याऽपीति। ननु गजतुरगमशकादीनां हृदयपरिमाण स्याऽव्यवस्थिततत्वा दित्याशङ्क्याह — मनुष्याऽधिकारत्वा दिति। उपासनाविधे र्मनुष्याऽधिकारिकत्वा न्मनुष्यहृदय स्याऽङ्गुष्ठपरिमाणत्वाच्च तदनुसारे णोक्त मित्यर्थः। लिङ्गरूपत येति। अङ्गुष्ठसमानाकारत्वस्य लिङ्गरूपत्व एव सम्भवा त्पूर्वाऽधिकरणप्रतिपादित निगमाऽन्त प्रसिद्धेश्च उपास्यतयाऽङ्गुष्ठपरिमिताकारेण हृदि सन्निहित शिवो महालिङ्गरूपइ त्येव मि त्यर्थः ॥

परमेश्वरो ज्योतिर्मयो लिङ्गरूपत योपासकानां हृदयमध्ये तिष्ठतीति निर्णयः॥

इति प्रमिताऽधिकरणम् २७

अथ देवाधिकरणम् २८

मनुष्याधिकारत्वा दित्यस्मि न्नधिकरणे मनुष्याणा मेव परमेश्वरोपासनेऽधिकार स्सूचितः। कथं देवानामपि परमेश्वरविषय मुपासन श्रूयते। अथर्वशिरसि, 'ततो देवा रुद्रं नापश्यन् ते देवा रुद्रं ध्याय'न्तीत्यत्रे त्याशङ्कायां तदुपपादना याऽधिकरण मिद मारभ्यते॥

## तदुपर्यपि बादरायण स्संभवात् ॥१-३-२५॥

इह परमेश्वरोपासने देवाना मधिकार स्संभवति नवा? इति संशयः॥ नसंभवतीति पूर्वपक्षः; अर्थी समर्थो विद्वान् शास्त्रेणाऽपर्युदस्तो हि वैदिके कर्म ण्यधिकारी। नच तेषां सामर्थ्यमस्ति विग्रहऽभावात्। विग्रहवन्तो हि

---

इदमधिकरणं श्रीभाष्यकृता मीशानशब्दाऽभिधेयब्रह्मनिर्धारण परतया दुरधिगममि त्युक्तंपुरस्तात् पुनरिह ब्रह्मणो महालिङ्ग रूपत्वनिर्णया दुर्दर्शमपीति दिक्॥

तथा शुद्धऽद्वैतिनां नामरूपरहितब्रह्माऽभ्युपगच्छतां ब्रह्मण ईशानाऽभिधान श्रुतिपरिग्रहा ल्लिङ्गरूपत्वनिर्धारणाचेत्यलं परेषां शास्त्रप्रातिकूल्य प्रदर्शनेन॥

इति प्रमिताधिकरणम्॥ ६॥

अथ देवताधिकरणम्

उत्तराऽधिकरणस्य प्रासङ्गिकीं सङ्गतिमाह — मनुष्याऽधिकारत्वा दिति। पूर्वाऽधिकरणे उपासनशास्त्रस्य मनुष्याऽधिकारत्वोक्त्या तदन्येषा मधिकारो नास्तीति ज्ञापना देवानां परमेश्व रोपासनेऽधिकारो नास्ती त्यवगम्यते। ततश्च 'देवारुद्रं ध्यायन्ती' त्यर्थवादः केवल मसदर्थावि लम्बनमिति प्राप्ते तेषा मधिकारो पपादनार्थ मिद मधिकरणमारभ्यत इत्यर्थः। एषा प्रासङ्गिकी सङ्गतिः॥

देवाना मर्थित्वसामर्थ्ययो स्संभवाऽसम्भवाभ्यां तेषा मधिकारसम्भवाऽसम्भवरूपं संशय न्दर्शयति — पूर्वपक्ष माह — न सम्भवतीति। विग्रहाऽभावा दिति। देवतानां विग्रहसत्त्वे

स्तुतिध्यानादिषु कस्यचित् समर्थाः। 'इन्द्रो वृत्राय वज्र मुद्यच्छ'दित्या दीनां प्रामाण्यात् तेषां विग्रहवत्त्व मितिचेन्न। विध्येकवाक्यतापन्नाना मन्यत्र तात्पर्याऽभावात्। तद्भावेऽपि तेषा मर्थित्वं नाऽस्ति परमेश्वरं प्रति तेषां परमेश्वरस्य च पद स्यैकत्वात्। 'देवा ह वै स्वर्गं लोक मगमन् ते देवा रुद्र मपृच्छ न्निति श्रुत्या स्वर्ग एव लोको रुद्रस्य परब्रह्मणः परमपदमवगम्यते। स एव देवानाम्। मुक्तस्याऽपि स्वाराज्य मेव प्राप्यतयाऽवगम्यते, 'आप्नोति स्वाराज्य मित्यादिषु। तथा वैदुष्य मपि तेषां नाऽस्ति॥ उपनयनसंस्कारपूर्व कस्य वेदाऽध्ययन स्याऽभावेन तेषां वेदान्तविचाराऽसंभवात् ब्रह्मबोधाऽनुप पत्तेः। अत एव तेषां शास्त्रपर्युदास श्च। तस्मा द्देवतानां नाऽस्ति ब्रह्मोपास नेऽधिकार इति॥

---

प्रत्यक्षादिप्रमाणं नाऽस्ति। ननु देवतावाचिशब्दानां लौकिकवैदिकप्रयोगेषु स्त्रीप्रत्यय तद्धित प्रकृतितया प्रातिपदिकत्वेनाऽर्थवत्त्वाऽवश्यम्भावाद्विग्रहसिद्धि रितिचेन्न तं प्वादित्यादिग्रहवा चिना मश्विन्यादिनक्षत्रवाचिना मन्येषाञ्च केषाञ्चि दचेतने गगनपरिदृश्यमानज्योतिर्मण्डलरूप स्वर्थत्वसम्भवा त्तत स्तेषा चेतनविग्रहाऽसिद्धेः। नच यागविधीनां यजते देवपूजार्थकतया देवता राधनरूपत्वात् देवताराधनानाञ्च राजाराधन वदाराधनप्रसन्नाराधनीयदेयसकलाऽर्थत्वनियमा द्देव तानां विग्रह स्सिध्यति। तन्नियमाऽभावात् राज्ञः पादुकाअपि पूज्यन्ते। शिवपूजायां पूजोप करणादयो गन्धपुष्पादिभिः पूज्यन्ते। अश्वमेध मेध्य स्याऽश्वस्य गुणक्रियाङ्गा न्युद्दिश्य। 'कृष्णायस्वाहा-श्वेतायस्वाहा। यन्मेहति तस्मै स्वाहा-दद्भ्यस्वाहा हनुभ्यांस्वाहा' इत्यादि मन्त्रैः होमाः क्रियन्ते नतावता तेषां विग्रहवत्त्वं सिध्यति। तस्मा न्न यागविधिसामर्थ्या द्विग्र हवद्देवता सिध्यति। नच 'य दाग्नेयोऽष्टाकपाल' इत्यादि प्रमयागीनां भोज्ये न पुरोडाशादिना सम्बन्धो योग्यतया भोक्तृत्व भोक्तृत्वेच तदुपपादको विग्रह स्वीकर्तव्यइत्येवं द्रव्यदेवतादिसम्बन्धसा मर्थ्या द्विग्रहवद्देवता सिध्यतीति शङ्क्यम्। यथा विधि तत्तद्देवतावाचिशब्दोच्चारणपूर्वकत्यागविषयत्व रूपस्यैव द्रव्यदेवतयोः परम्परासम्बन्धस्य विधेयत्वेन पुरुषेणाऽनुष्ठातु मशक्यस्य भोज्यभोक्तृ भावरूपसम्बन्धस्य विध्यगोचरत्वात्। अत एवाऽग्न्यादियागकाले ह्यग्न्यादि शब्दपर्याया नोच्चा र्यन्ते अन्यथा - उद्देश्यदेवतास्मृतिमात्रा' र्थत्वे कदाचि दिच्छया पर्याया अपि प्रयुज्येरन्। तस्माद्विग्रहवद्देवता नसिध्यति। अतःप्रमाणाः भावे न देवतानां विग्रहाऽभावात् पटुदेहेन्द्रिया दिमत्स्वरूप मुपासना सामर्थ्यं नास्तीतिभावः। 'इन्द्रोवृत्राये' त्यर्थवादैः वज्रहस्तः पुरन्दर

सिद्धान्तस्तु ब्रह्मोपासने देवानामप्यधिकारोऽस्ति। कुतः? तेषा मर्थित्वसंभवात्। नच परमेश्वरस्य देवानां च पदं समानं, यतः सामान्येन सुखवाचकोऽपि स्वर्गशब्दः प्रकरणादिना विशेष मभिधत्ते, यथेश्वरशब्दः स्वामिमात्रवाचकः, प्रकरणवशात्। 'उपेया दीश्वरं चैव योगक्षेमार्थसिद्धय' इत्यादिषु जनपदाऽधिपत्यमात्रवाची राजविषयः ब्रह्मणः प्रकरणे पुन रयं निरतिशयैश्वर्यवाची तद्विषयो भवति, तथा सुखमात्रवाचकः स्वर्गशब्दः प्रकरणेन, प्रमाणाऽन्तरोपपत्त्या च देवानां पदं क्षयिष्णुत्वसातिशयत्वादि दोषकलुषितं स्वल्पसुख मभिधत्ते। परब्रह्मणः शिवस्य पदं तु निरतिशय सुखरूप मनावृत्तिलक्षण मेव ब्रूते। अत स्सातिशयत्वादिदुष्टसुखपदवर्तिना निरतिशयसुखं ब्रह्मपदं प्रत्यर्थित्वं संभव त्येव शक्त्यतिशयतः। स्वयंभात

---

त्यादिमन्त्रैश्च तेषां चेतनत्वस्य विग्रहवत्त्वस्यच सिद्धे रितिशङ्कते। इन्द्रावृत्रायेति। विधेयस्तुति परत्वा दर्थवादाना मनुष्ठे यार्थप्रकाशकतया मन्त्राणाञ्च देवताविग्रहसद्भावप्रदर्शने तात्पर्याऽभावा न्न तै विग्रहस्सिध्यतीति परिहरति — विध्येकवाक्यत्वेनेति। मन्त्रार्थवादानां देवताविग्रहे तात्पर्यं सम्भवती त्याश ङ्क्याह — तत्सद्भावेऽ पीति। अतएव तेषा मिति। उपनयनाऽध्ययनरहितानां व्रात्यादीनां वैदिकेषु कर्मं स्वनधिकारस्मरणा दिति भावः। सिद्धान्तयति। ब्रह्मोपासने देवाना मप्यधिकारोऽस्तीति। इह स्वर्गशब्दो देवपद विषये क्षयिष्णुसातिशय सुखवचनइ त्यत्र प्रमा णाऽभावात् 'य न्नदुःखेन सम्भिन्न' मिति स्वर्गशब्दाऽर्थवर्णनस्य सुखविषयत्वात् परमशिव पदई वेन्द्रादिपदेऽपि निरतिशयसुखपरएव स्या दित्याशङ्क्याह — प्रकरणे नेति। 'ज्योतिष्टोमेन स्वर्गकामो यजेत — अग्निहोत्रं जुहुया त्स्वर्गकामः' इति स्वर्गफलत्वे नोच्यमानानां सोमेष्ट्या दीनां तत्तत्प्रकरणपर्यालोचनया तत्तद्यागानां फलस्य तेषां 'लोकव त्परिमाणतः फलविशेषस्स्या' दिति सूत्रोक्तन्यायेन फलतारतम्य मावश्यकमिति कर्मभिः प्राप्य स्येन्द्रादिपदरूपस्य स्वर्गस्य सातिशयत्वं दुर्वारम्। 'तद्यथेह कर्मचितो लोकः क्षयते। एवमे वाऽमुत्र पुण्यचितो लोकः क्षीयत' इत्यौपनिषदवाक्यरूपप्रमाणदर्शित योपपत्त्या क्षयिष्णुत्व म प्यवर्ज्यम्। आदिशब्देनाऽ र्थवादादिसिद्ध मसुरभयवैशिष्ट्यम प्यङ्गीकार्यम्। अतो 'यन्नदुःखे' नेतिश्लोक स्तदर्थक स्स्वर्ग शब्दश्च मुख्यवृत्त्या परमेश्वरपदपरएव कथञ्चि दिन्द्रादि पदेष्वपि वर्तते ग्रामाऽधिपे ष्वीश्वरशब्द वदिति भावः। शक्त्यतिशयेति। ज्ञानशक्त्यतिशया दनधीतोऽपि वेद स्तदर्थश्च देवानां भाती तिवा पूर्वाऽधीत स्यैव वेदस्य सुप्तप्रबुद्धन्यायेन स्फुरतीति वा तेषां वैदुष्यमपि सम्भवती त्यर्थः।

वेदार्थत्वात्, पूर्वाऽधीतवेदाऽर्थविस्मरणाऽभावाद्वा तेषां वैदुष्यं च संभवति। शास्त्रस्य साधारण्ये नोपासनाविधायकता वाऽधिकारस्य दुर्निवारत्वेन दूरत स्तत्पर्युदासः॥ तथा मर्थवादप्रामाण्यात्। विग्रहवत्त्वेन सामर्थ्यं चाऽस्ति। 'आदित्यो यूपः अग्नि र्हिमस्य भेषज' मित्यादीनां गुणवादाऽनुवादानां स्वार्थे तात्पर्याऽभावेऽपि, 'इन्द्रो वृत्राय वज्र मुदयच्छ' दित्यादीना मर्थवादानां विरोधस्य मानान्तरप्राप्ते श्चाऽभावेन स्वार्थे तात्पर्यसंभवात्, तस्मात्। ब्रह्म विद्याया मधिकारिणो देवाः॥

देवानां विग्रहादिमत्त्वे विरोध माशङ्क्य परिहरति॥

---

शास्त्र स्येति। उपासनाविधेः सार्वसाधारणत्वा त्तस्मा च्छूद्रो यज्ञेऽनवक्लृप्त इति व न्निषेधाश्रवणा द्देवना मधिकार सिद्ध स्तन्निषेध शङ्कायाऽनावकाशइ त्यर्थः॥

ननु देवानां यदि शरीरं सम्भवे त्त र्हीदं सर्व मुज्येत। शरीराऽभावा त्सामर्थ्यादिकं नसम्भवती त्याशङ्क्याह — तथा मिति। 'आदित्यो यूप' इत्याद्यर्थवादाना म्मानान्तरविरोधा द्गुणवादत्वेऽपि 'इन्द्रो वृत्राय वज्र' मित्याद्यर्थवादाना न्तादृशविरोधाऽभावा त्स्वार्थे तात्पर्य मवार्यमि त्यर्थः। तदुपर्यपीति सूत्रे तत्पदं - सुपांसुलुगिति लुप्तषष्ठीकम् - ततस्तेषां मनुष्याणा मुपरि ऊर्ध्वलोकप्राप्ति दशास्वपि देवत्वयुक्तजन्मस्वपी त्यनेन तेषाम प्यधिकारोऽस्ती त्यर्थः। अथ मात्मेदशरीरं निहत्याऽन्यं नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजा पत्यं वा ब्राह्मं वेति श्रुतिदर्शिता सूक्ष्मदशा स्वि त्यर्थः। ज्योतिष्टोमादि विधि सार्थक्याय देशा न्तरे देहाऽन्तरेण भोग्य स्यैहिकविलक्षणस्य सत्त्वस्य भोक्तृत्वेन यथा कर्मदेवा स्सिध्यन्ति। तथैव तत्तत्कल्पादि ष्विन्द्राद्या जानदेव पदस्याऽपि पूर्वकल्पाऽनुष्ठित कर्मफलविशेषत्वे नाऽजानदेवा अपि सिध्यन्ति। सामगानां पञ्चविंशब्राह्मणे 'अतिरात्रः पृष्ठ्यः षडहो महाव्रत' मित्यादिना देवत्वं गच्छन्ति यशता मुपयन्तीति। एवंविधदेवत्वप्राप्त्यर्थव्रतविधि सार्थक्याय देवानां चेतनत्वं विग्र हवत्त्वञ्च सिध्यति। तस्मा त्ततोऽ पिपरमेश्वरोपासन उपर्यपि देवानामपि अर्थित्वादीनां सम्भवा द्बादरायणो मन्यतइति सूत्रार्थः॥

वेदमूलेषु पुराणेतिहासेषु ब्रह्मादीनां देवानां देहेन्द्रियादय स्थानविशेषा भोगभेदाश्च स्पष्टीकृताः। अत स्तेषा मुपासनाऽधिकारोऽविरुद्ध इत्यर्थः। विरोधपरिहाराऽर्थत योत्तरसूत्र मव तारयति — देवाना मिति। देवानां शरीरवत्त्वेऽभ्युपगम्यमाने नानादेशप्रवृत्तेषु यज्ञेष्वेक स्याऽनेकदेशसान्निध्यं नसम्भवति तस्मा त्कर्मणि विरोध इत्याशङ्क्या निराकरणार्थ मुत्तरसूत्र मित्यर्थः॥

**विरोधः कर्मणीतिचेन्न, अनेकप्रतिपत्ते र्दर्शनात्** ॥ १–३–२६ ॥

नानादेशप्रवृत्तेषु यज्ञेषु तत्र तत्राऽऽहूतानां देवानां विग्रहादिमत्वे सर्वत्र युगपत्सान्निध्यं वाच्यं त न्नयुज्यते। ततः कर्मणि विरोध इतिचेन्न शङ्क्य मेतत्। विग्रहवत्वेऽपि सौभरिप्रभृतिषु युगप दनेकदेहप्रतिपत्ति र्दृष्टा। ततो न कश्चि द्विरोधः ॥

माभू त्कर्मणि विरोधः वैदिकशब्दे भवतो त्यत आह ॥

**शब्द इतिचे न्नाऽतःप्रभवात् प्रत्यक्षाऽनुमानाभ्याम्** ॥ १–३–२७॥

कर्मणि विरोधाऽभावेऽपि वैदिकशब्दे विरोधः प्रसज्यते कथम्? देवानां सावयवत्वा दनित्यत्वं सहज मेव। तत इन्द्रादिदेवाना मप्युत्पत्ति रनिवार्या

---

देवानां शरीरवत्त्वेऽपि योगशक्त्या सौभरिप्रभृतीनामिव महिम्ना अनेक शरीरसम्पत्त्या तत्तद्देशप्राप्ति र्नविरुध्यत इत्यर्थः। 'आत्मनो वैशरीराणि बहूनि मनुजेश्वर। योगे कुर्याद्बलं प्राप्य तैश्च सर्वा मर्हींचिरे' दिति भारतवचनं योगिनोऽनेकशरीरवत्त्वं बोधयति। एवं शक्ति विशेषेण देवानाम प्यनेकशरीरवत्त्वान्नानादेशकर्म सिद्धे र्नविरोध इत्यर्थः। एवं कर्मणि विरोधाऽभा वेऽपि वैदिकशब्दानां विग्रहविशिष्टवाचित्वेऽङ्गीक्रियमाणे वेदाऽनित्यत्व तन्मूलक न्तदप्रामाण्यञ्च सम्भवे दिति विरोधान्तर निराकरणार्थत योत्तर सूत्र मवतारयति माभू त्कर्मणीति ॥

शब्दइति सप्तम्यन्तम्। शब्दे विरोध इति पूर्वसूत्रा दपकृष्टस्य विरोध इत्यस्य शब्दइत्य त्राऽन्वय इत्यर्थः। वैदिकाना मिन्द्रादिशब्दानां विग्रहविशिष्टवाचित्वे विग्रहनाशे तेषा मर्थ शून्यत्वं प्रसज्ये तेत्यर्थः ॥

ननु इन्द्रादिशरीराणां नित्यत्व मभ्युपगम्यते। अथाऽनित्यत्वेऽपि कादाचित्काऽर्थवत्त्वेनैव पाण्डवादिशब्दानामिवाऽर्थवत्व मुपपद्यते। ततो नायंदोष इतिचेन्न प्राकृतानां सावयवानां मनि त्यत्वस्य नियतत्वा न्नित्यत्वं नसम्भवति। इन्द्रादिशरीराणां नित्यत्वाऽभ्युपगमे प्राकृतशरीरो त्यानपूर्वक परमेश्वरोपसंपत्तिलभ्याया मुक्ते रसम्भवेन तेषा मर्थित्वाऽ भावा दुपासनाया मनधि कार ए वापद्ये ते त्याशये नाह — देवाना मिति। देवविग्रहस्य नित्यत्व मनङ्गीकार्य मुपासनाऽ

तथात्वे तदुत्पत्तेः प्राक् तद्विनाशात् परतश्च वैदिकेन्द्रादिशब्दाना मर्थशू न्यत्व मनित्यत्वं वा स्यात्। अनित्यत्वेऽपि पौरुषेयत्वेन निर्विशेषत्वादेतेषा मप्रामाण्यम्। अत स्तत्प्रयुक्तकर्मणां चाऽसिद्धिरि त्यनर्थनिरासार्थः। ततो वैदिकशब्दविरोधस्य परिहाराय विग्रहवत्त्वं देवाना मङ्गीकार्य मिति चेन्न॥

अतो वैदिका देवेन्द्रादिशब्दा नित्यार्थवाचकाः। यदीन्द्रादिशब्दा व्यक्तिवाचकाः स्युः, तदा व्यक्तेरिन्द्रादेर्नाशे तेषा मर्थशून्यत्व मनित्यत्वं वा स्यात्। गवादिशब्दवदाकृतिवाचकत्वेन वेन्द्रादिशब्दाना मुच्यते। तथाच यथा कुलालो घटादिशब्दा न्मनसि विपरिवर्तमानात्तदाकारं स्मृत्वा घटादिकं सृजति, तथा पूर्वस्मि न्कल्पादौ नष्टे वैदिका दिन्द्रादि शब्दात् ब्रह्मा पूर्वेन्द्राद्याकृतिविशेषं स्मृत्वा तदाकारमपर मिन्द्रादिकं

---

नधिकारताव्यवस्थ्यात्। अथ अनित्यत्वपक्षे तेषां शरीराणा मुत्पत्ति रायाति। उत्पत्तिमत्वेच तेषा मुत्पत्तेःप्राक् विनाशा त्परतश्च, वैदिकाना मिन्द्रादिशब्दाना मनर्थकत्व मनित्यत्वं वा प्रसज्येत। अथाऽनित्यत्वमेव वेद स्या स्त्वितिचे त्तर्हि तस्य पौरुषेयत्वे नाऽप्रामाण्यं स्यात्।एव शब्दविरोधपरि हाराय देवानां विग्रहवत्त्व मनङ्गीकार्यमि त्युपसंहरति — तत इति। सौत्रमत इति पदं विवृणोति। वैदिकादे वेति। ननु वैदिकादिन्द्रादिशब्दादिन्द्राद्यर्थसृष्टिः कथंविरोधप रिहारहेतुःस्यादित्याशङ्क्य जातिवाचित्वमेव तत्रहेतुत्वेन विवक्षितमिति सूचयति — यदीन्द्रा दिशब्दा इति। ननु जातिवाचित्वस्य शब्दविरोधपरिहारहेतुत्वं युज्यते। इन्द्रादीनां शब्दानां जातिशब्दत्वेकय मिन्द्रादिशब्दप्रभवत्वस्य हेतुत्व मित्याशङ्क्य तत्र तस्य हेतुत्वं दृष्टान्तमुखे नोपपादयति — यथा कुलाल इति — शब्दस्मरणपूर्विकाया अर्थसृष्टेः स्मर्यमाणाऽर्थसमानाका रत्वएव लोकदृष्टतयात्तथैव तदाइन्द्राद्याकृतिविशेषप्रतिपादका द्वैदिका दिन्द्रादिशब्दा त्पूर्वका लिकेन्द्राद्याकृतिविशेष मनुसन्धाय कल्पादा विन्द्रादीन् सृजतीति तेषा मिन्द्रादीनां प्राक्तनेन्द्रा दिसमानाकारत्वमिद्धया तदभिव्यज्यमाना जातिस्सिध्यतीति जातिशब्दत्वस्य शब्दप्रभवत्वं भवति हेतु रित्यर्थः। ननु वेदशब्देभ्य स्तदर्थाऽनुसन्धानपूर्वक मिन्द्रादीं श्चतुर्मुख स्ससर्जे त्यत्र किं प्रमाण मित्याशङ्कते — किम्प्रमाणमिति। प्रत्यक्षाऽनुमानाभ्यामिति सूत्रखण्डं व्याचक्षाण श्शङ्कामपरिहरति — श्रुतिस्मृतिश्चेति। वेदेनेति। सतासनी सदसनी चेतनाचेतनरूपे। व्याकरोत्- देवमनुष्यादि रूपेण भूभूधरसरित्समुद्रादिरूपेण च विविधा न्यकरो दित्यर्थः। इत्यादि रिति। आदिशब्देन समुत्र इति व्याहरत् सोऽन्तरिक्षमसृज दित्याद्या स्सङ्गृह्यन्ते। भूर्भुवस्सुवरिति

सृजति। तत इन्द्रादिव्यक्तिविनाशेऽपि तत्तदाकृते रविनाशेन शब्दानां नित्यत्वा दविरोधः। किंप्रमाण मिति चेत् श्रुतिः स्मृति श्च। तथाहि 'वेदेन रूपे व्याकरोत्, सता सति प्रजापति रस भू रिति व्याहर त्स भूमि मसृजत' इत्यादि श्रुतिः। 'सर्वेषां च स नामानि कर्माणि च पृथक्पृथक्। वेदशब्देभ्य एवाऽऽदौ पृथ क्संस्थाश्च निर्ममे' इत्यादि स्मृतिः॥

## अत एव च नित्यत्वम् ॥ १–३–२८ ॥

अतएव मन्त्रकृतो वृणीयते विश्वामित्रसूक्तं भव तीति विश्वामित्रा दीनां मन्त्रकृत्वेऽपि विश्वामित्रादिशब्दाना माकृतिनिमित्तत्वेन मंत्रब्राह्मण मयस्य वेदस्य नित्यत्व मुपपद्यते। यतो ब्रह्मा वैदिका च्छब्दा दर्थान् स्मृत्वा सृजति। अनधीतमंत्रादिदर्शनशक्तत्वात्। तथाच पूर्वविश्वामित्रा दीना माकृतिविशेषां स्तत्तद्वैदिकशब्दै स्स्मृत्वा तदाकारा नेवाऽपरान् तत्त च्छक्तिविशेषयुक्तान् ब्रह्मा नैमित्तिकप्रळये गते सृजति। ते चाऽनधीत्यैव

---

शब्दाः पृथिव्यन्तरिक्ष स्वर्गलोकवाचकाः। एवञ्च तत्तल्लोकनामभि स्तत्तल्लोकनामाऽर्थभूता नाकृति विशेषा ननुसन्धाय भूलोकादी नसृज दित्यर्थः। सर्वेषा श्चेति। नामा नीन्द्रादीनि। कर्माणि इन्द्रादियोग्यत्रैलोक्याधिपत्यादीनि। पृथक्संस्थाः सहस्राक्षत्वादिविशिष्टा न्विविधा नाकृति विशेषा नित्यर्थः इत्यादिस्मृति रिति। आदिशब्देन — 'नाम रूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार स' इत्यादिस्मृतिर्गृह्यते। नन्वेवं: वैदिकशब्देऽ र्थद्वारकविरोधे परिहृतेऽपि मन्त्रकृतो वृणीते। विश्वामित्रस्य सूक्तं भवतीत्यादिप्रामाण्या द्वेद स्याऽपौरुषेयत्व भङ्गा च्छब्दद्वारको विरोध स्तदवस्थ एवे त्याशङ्कानिराकरणार्थं सूत्रम्॥

ननु कथं विश्वामित्रादिशब्दाना माकृतिनिमित्तत्वरूपहेतु स्सिध्यति? कथं च तेन हेतुना वेदाऽनित्यत्वशङ्का परिहृताभवती त्याशङ्का निराकरणार्थं अतएवेति निर्दिष्टं सूत्रसिद्ध हेतुं विवृ णोति। यत इति। परमेश्वरानुग्रहलब्धसकलवेदार्थज्ञानशक्तियुतश्चतुर्मुखो वैदिका च्छब्दा दृषि मनुष्यादीना मसाधारणनामरूपकृत्या ननुसन्धाय तथैव सृष्टवान्। ततश्च अतीतवर्तमानगता स्सर्वेऽपि विश्वामित्रादयः विश्वामित्रादि पदप्रापकपूर्वकल्पानुष्ठित पुण्यवशा द्विश्वामित्रसूक्तादी

तान् मंत्रा नखिलान् पठन्ति। अत एतेषां मंत्रादिकर्तृत्वं वेदनित्यत्वं च भवत्येव इत्यत आह ॥

नैमित्तिकप्रळये प्राकृतप्रळये ब्रह्मादौ वेदाख्यशब्दे च विनष्टे कथं वैदिकत्वम् ?

## समाननामरूपत्वा च्चाऽऽवृत्ताव प्यविरोधो दर्शनात् स्मृते श्च ॥ १–३–२९ ॥

सृज्यानां समाननामरूपत्वा देव प्राकृतप्रळयावृत्ताव प्यविरोधः। तथाहि, सर्वज्ञः सर्वशक्ति र्विद्याधिपः परमेश्वरः आदिकर्ता पूर्वप्रपञ्चसंस्थानं स्मृत्वा तदाकारमे वाऽपरं पुनः प्रपञ्चं सृजति। वेदा नपि पूर्वानुपूर्वीविशिष्टान् संस्मृत्य पुत्रभूताय ब्रह्मणे प्रयच्छति। कथमवगम्यते ? श्रुत्या स्मृत्या च, 'सूर्याचन्द्रमसौ धाता यथापूर्व मकल्पयत्। दिवं च पृथिवीं चाऽन्त

ननधीत्यैव पश्यन्तीति तत्तत्सूक्तादिद्रष्टृत्वमेव न त्वपूर्वानुपूर्वीकाभिनवसूक्तादि कर्तृत्वरूपं तत्कर्तृत्वमिति सिध्यति। तस्माद्विश्वामित्रादीनाम्मन्त्रकर्तृत्वं वेदनित्यत्वञ्चाऽविरोधेन सिद्ध मित्यर्थः॥

उत्तरसूत्र मवतारयति — भवत्वेवमिति चतुर्मुखस्य स्वमानेन शतवर्षजीविनः चतुर्युग सहस्ररूपैकैकदिनरूपावान्तरकल्प स्याऽवसाने तावत्कालप्रमाणा रात्रि र्नैमित्तिकप्रळयः। तत त्रैलोक्यं नश्यति महर्लोकादय स्तिष्ठन्ति। एवं तदीयशतवर्षावसाने तावत्प्रमाणः कालः प्राकृतः प्रळयः। तत्र ब्रह्माण्डादिकं सर्वं नश्यति। प्रकृतिमात्र मवशिष्यते। नैमित्तिकप्रळये वेद स्याऽवस्थाना त्तस्य नित्यत्वेऽपि प्राकृतप्रळये तन्नसम्भाव्यते। तस्मा त्पूर्वसूत्रोपवर्णितं वेद नित्यत्व मनुपपन्नमि त्याशङ्कानिराकरणाऽर्थ मुत्तरसूत्रम् ॥

प्राकृतप्रळये वेदाना मभावेन स्वरूपतो वेदस्य नित्यत्व मनुपपन्नमितिचे दिष्टापत्तिः। 'अस्य महतो भूतस्य निश्वसित' मेवेत्यादिश्रुतिषु महदहङ्कारादीनामिव तेषा मुत्पत्तिश्रवणात्। एकरूपवर्णपदवाक्य तदानुपूर्विकत्वलक्षणं तु नित्यत्वे नविरोधः। अवान्तरकल्प इव महा कल्पाऽऽवृत्तावपि सृज्यानां समाननामरूपत्वस्य श्रुतिस्मृतिभ्या मवगमा दित्याशयेन सूत्रं

रिक्ष मथो सुवः,' 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतिः। स्मृति रपि, 'अप एव ससर्जादौ तासु वीर्य मवासृजत्। तदण्ड मभव द्धैम सहस्रांशुसमप्रभम्॥ तस्मि न्नण्डे स्वयं ब्रह्मा सर्वलोकपितामहः। ब्रह्माणं विदधे पूर्वं वेदा न्तस्मै प्रयच्छति' इत्यादिः। ततः प्राकृतप्रळयावृत्तावपि वेदानां नित्यत्व मेव॥ मतान्तर माह॥

## मध्वादि ष्वसंभवा दनधिकारं जैमिनिः ॥ १-३-३० ॥

मधुविद्यादिषु वस्वादिदेवानामे वोपास्यत्वात् प्राप्यत्वा च्च वस्वादीनां कर्तृकर्मभावविरोधे नोपास्यत्वाऽसंभवा द्वस्वादीनां सतां वस्वादित्वं प्राप्त मिति प्राप्यत्वाऽसंभवा च्च तत्र वस्वादीना मनधिकारं जैमिनि र्मन्यते॥

---

व्याचष्ट - सृज्याना मिति। न नूदाहृतश्रुतिस्मृत्यो रवान्तरकल्पविषयत्वोपपत्तेः प्राकृतप्रलयेऽयं हेतु रसिद्ध इत्याशङ्क्य परिहरति — यो ब्रह्माण मितिश्रुति रवान्तरकल्पविषया न भवति। तत्र ब्रह्मसृष्टे रभावात्। ततश्च तस्या महाकल्पविषयत्वेन त त्रोक्तं ब्रह्मणे वेद तदर्थप्रदानं पूर्वकल्पगतेन्द्रादिनामरूपवैभवानि वैदिकेभ्यो मन्त्रार्थवादेभ्यो विज्ञाय इन्द्रादी नयं सृजत्वित्ये तदभिप्रायेणेति समाननामरूपत्वसिद्धि स्ततो वेदनित्यत्वमपि सिध्यतीत्याशयः॥

एवं देवनां ब्रह्मविद्या स्वधिकार स्समर्थितः तत्र मधुविद्यादीनां ब्रह्मविद्या त्वाभावा त्तासु देवानां नाधिकार इति जैमिने र्मत मनूद्य तास्वपि ब्रह्मविद्यात्व समर्थनेन तन्मतनिरासार्थ मध्वादि ष्वित्यादिसूत्रत्रयम्। तदपि देवताविषयविद्याधिकारनिरूपणार्थत्वा द्देवताधिकरणैकदेशमि त्यभिप्रेत्याऽवतारयति — मतान्तरमिति —

छान्दोग्योपनिषदि 'असा वादित्यो देवमधु' — इत्यारभ्य निरूपिता मधुविद्या - तस्या मुपास्याः प्राप्याश्च वस्वादयश्श्रूयन्ते। ततश्च वस्वादीनां स्वस्वोपास्यत्वासम्भवा त्स्वस्वपदप्राप्तेः फलत्वाऽसम्भवाच्च वस्वादीनां मधुविद्यायां नाऽधिकारः। एवं 'वायुर्वाव संवर्ग' इत्यादिश्रुतिविहितासु संवर्गविद्यास्वपि वाय्वादीना मनधिकारः। इत्यस्मि न्नर्थे सूत्रं योजयति — मधुविद्यादि ष्विति॥

## ज्योतिषिभावाच्च ॥ १—३—३१ ॥

'तं देवा ज्योतिषां ज्योति रायु र्होपासतेऽमृत' मिति ज्योतिषि परब्रह्मणि देवानां साधारण्येन प्राप्तत्वेऽप्यधिकारभाववचनात् । अन्यत्र मध्वाद्युपासनेऽनधिकारो न्यायसिद्धोऽवगम्यते ॥

## भावन्तु बादरायणोऽस्ति हि ॥ १—३—३२ ॥

मधुविद्यादिष्वपि वस्वादीना मधिकारभावं बादरायणो मन्यते। अस्तिहि वस्वादीनां सतां वस्ववस्थब्रह्मण उपास्यत्वसंभवः । कल्पांतरे वसु त्वादेः प्राप्यत्वसंभव श्च कार्यकारणोभयावस्थं ब्रह्माऽत्र समुपास्यम् , तत्र 'असौ वा आदित्यो देवमधु' इत्यार भ्यादित्यवस्वादिनामरूपकृत्ययुक्त कार्यविशेषावस्थं ब्रह्मोपास्य मुपदिश्यते। अथ, 'ततऊर्ध्व उदेति नैवोदितो नाऽस्त मेति' इत्यादिना नामरूपकृत्यरहितसूक्ष्मादित्यान्तरात्मतयाऽवसितं कारणावस्थं ब्रह्मोपास्य मुपदिश्यते तदुभयावस्थब्रह्मोपासनाफलं कल्पांतरे वस्वादित्व मुभयाधिकारावसाने ब्रह्मप्राप्तिश्च । तत्र 'स य एत देव ममृतं

---

'तं देवा ज्योतिषां ज्योति' रिति परब्रह्मणि देवाना मुपासनं श्रूयते तत्र देवाएव ज्योति रुपासते इति वा । देवाज्ज्योतिरेव वोपासत इतिवा वाक्यस्याऽर्थोवर्णनीयः । अत्र प्रथमःकल्पो नयुज्यते मनुष्याणा मनधिकारप्रसङ्गात् । तस्मा ज्ज्योतिरे वोपास्य मित्यर्थः तस्मादपि मधुविद्यादिषु तेषा मनधिकार एवेत्यर्थः । एवं प्राप्ते स्वमत माहेत्यर्थः ॥

कल्पान्तर इति अत्राय मभावः । वसूनामे वैको भूत्वेत्यादिस्वारस्यात् वसुत्वादिक मेवाऽत्रप्राप्य फलम् । न वस्वादिभोगसाम्यमात्रम् । नचाऽत्रवस्वादिसङ्ख्यातिरेकप्रसङ्गोऽत्रबाधकोऽस्तीतिशङ्क्यम् । वर्तमानवस्वाद्यधिकार समाप्त्यनन्तरं कल्पान्तरे भाविवस्वादिसृष्टिसमये तदन्यतमभावप्राप्तेः फलत्वसम्भवात् इति । वस्तुतस्तु उपसंहारस्वारस्या द्वस्वाद्यन्तर्यामि परमेश्वर एवाऽत्रोपास्य इ त्यभिप्रेत्याह — कार्यकारणेति । तत्र कार्यावस्थब्रह्मोपासकोपदेशं दर्शयति तत्रेति । आदित्यादीना मादित्यवस्वादीनि नामानिआदित्यस्यवस्वादिदेवभोग्यमधुत्वेन रूपितं ज्योतिर्मण्डलं रूपम् । वस्वादीनां तत्तदमृतभोगा क्षिप्तानि रूपाणि । आदित्यस्य पुरस्ता दुदेता

वेदवसूना मेवैको भूत्वाऽग्नि नैव मुखे नैत देवामृतं दृष्ट्वा तृप्यति ', इत्या दिना वस्वादिरूपं फल मुपदिश्यते। ' न ह वा अस्मा उदेति न निम्रो चति सकृ दिवा हैवास्मै भवति य एता मेवं ब्रह्मोपनिषदं वेद ' इति ब्रह्म प्राप्तिरूपं फल मुपदिश्यते। ततो मध्वादिष्वपि देवाना मधिकारोऽस्तीति सर्वथा देवा ब्रह्मविद्याधिकारिणः ॥

इति देवाधिकरणम् २८

अथ अपशूद्राऽधिकरणम् २९

अथ मनुष्याधिकारत्वा दिति सामान्येन मनुष्याणा मधिकारे प्राप्ते विशेष माह ॥

---

पश्चा दस्तमेता इत्यादिना निरूपितं कृत्यम् । वस्वादीनां तद्रूमेव उपजीवन्तीत्यादिना निरूपितं कृत्यम् । एवं भूतनामादियुक्ततया कार्यभूते ष्वादित्यादिजीवे ष्वन्तर्यामितयाऽवस्थितं ब्रह्म तद वस्थ मुच्यते । कारणावस्थब्रह्मोपासनोपदेशं दर्शयति — अथ तत इति । ब्रह्म दिवसरूपस्य कल्पस्य समाप्त्यनन्तर मुदयास्तमयाभ्यां प्राण्यनुग्रहा दूर्ध्व मुदयास्तमयरहित इ त्यर्थः। कृत्याभावा देव तदुपयोगिरूपराहित्यं तदर्थकनामराहित्यंच फलितम्। नहवा अस्मा इति। अस्मै कार्य कारणावस्थब्रह्मविदे नामरूपकृत्ययुक्तदशायाम प्यादित्यो नोदेति। तत्प्रयुक्तप्रकाशापेक्षाभा वात्। नाऽस्त मेति तत्प्रयुक्तज्ञानप्रतिबन्धाऽप्रसक्तेः। कि न्त्वस्मै ब्रह्मविदे सकृ द्दिवैवभवति सदाऽहरेव भवति। सन्तत मनावृतज्ञानप्रकाशोऽस्य भवती त्यर्थः। अस्मा इत्युक्तिः कस्मा इत्याकाङ्क्षाया माह — यएता मिति। ब्रह्मोपनिषदं ब्रह्मविद्यां वेद ब्रह्मोपासनं करोतीत्यर्थः। एव मुपसंहारे ब्रह्मप्राप्तिफलश्रवणात्। ब्रह्मविद्यात्वश्रवणाच्च वस्वादिशब्दाः वस्वाद्यन्तर्यामिपरा स्तस्मा त्तदुपासनायां वस्वादीना मधिकार स्संभवती त्यधिकरणार्थ मुपसंहरति — तत इति। मध्वादि ष्वित्यादिशब्देन संवर्गविद्यादीनां सङ्ग्रहः ॥

इति देवताधिकरणम् २८

अथ अपशूद्राधिकरणम् २९

उत्तराधिकरणस्याऽङ्गुष्ठाऽधिकरणेन सङ्गति माह — अथेति । हृद्यपेक्षयेत्यादिसूत्रे उपा सनाशास्त्रस्य मनुष्याऽधिकृतत्व मुक्त्वा तत्र देवानाम प्यधिकार स्समर्थितः। एवंसति सर्वेषां

# शुगस्य तदनादरश्रवणा त्तदाद्रवणात् सूच्यते हि ॥ १–३–३२ ॥

छान्दोग्ये श्रूयतेऽस्य विषयः। 'आजहा रेभा शूद्राऽनेनैव मुखे नाऽऽलापयिष्यथ' इति ॥

अत्राचार्ये शिष्यं शूद्रे त्यामन्त्रयते। अत श्शूद्राणा मपि ब्रह्म विद्याया मधिकारोऽस्ति नवा इति सन्देहः ॥

तेषा मधिकारोऽस्त्यर्थित्वादिसंभवात् ॥ नच त्रैवर्णिकाना मेवेति नियमः ॥ अत्रैवर्णिकाना मपि देवानां तद्दर्शनात्। देवाना मुपनयनाऽध्यय नाऽभावेऽपि स्वयंभातवेदार्थतया युज्यते विद्वत्ता। कथ मेषामिति न

---

मनुष्यणां तत्राऽधिकारे नकापि विचिकित्सेति शूद्राणाम प्यधिकारोऽस्तीति प्राप्तौ तेषा मधि कारनिराकरणार्थ मिद मधिकरणं प्रवर्तत इत्यर्थ.। अत्राऽपि प्रासङ्गकी सङ्गतिः ॥

छान्दोग्य इति। तत्रव मुपाख्यायते। जानश्रुतिः पौत्रायणः श्रद्धया बहुधनान्नप्रद. सर्वासु दिक्षु ग्रामनगरमार्गारण्यतीर्थादिषु पान्थाना मनाथानाञ्च शीतवातातपवर्षबाधानिवारकाः सोदकशयनाच्छादनादिभोग्यजातसम्पूर्णा नावसथा न्निर्मापयाञ्चकार। तस्य धार्मिकप्रवरस्य कर्मभिः क्षीणदुरितस्य ब्रह्मविविदिषा मुत्पादयितुं केचन महर्षयो हंसरूप मास्थाय निशायां हर्म्ये शया नस्य तस्योपरि पङ्क्तिमाव्य प्याजग्मुः। तेषा मग्रेसरं हंसं भोभो - भल्लाक्ष भल्लाक्षेति विपरीत लक्षणया मन्दलोचनेति सम्भ्रमेण द्विवार संबोध्य पृष्ठगामी कश्चि द्धंस उवाच। जानश्रुतं रस्य दानादिप्रभावजनितं ज्योति र्द्युलोकपर्यन्तं व्याप्त वर्तते। तत्र त्वं लग्नो माभूः। तेन तव प्रद ग्धता माभू दिति। एव मुक्तवन्त मग्रगामी हंसः प्रत्युवाच। एनं जानश्रुतिं मनुष्यसामान्य दशा मतिक्रम्य वर्तमानं शकटसहितं रैक्वमिव कीदृश माहात्म्यशालिन मात्थ। रैक्वएव खलु महाप्रभावः ब्रह्मज्ञः। अस्य जानश्रुते रब्रह्मज्ञस्य कः प्रभावः। यज्जनित मस्य तेजो रैक्वप्रभावम् तेजइव दहे रित्याह — एत दाकर्ण्य तेन पृष्ठ गामिना कोऽसौ रैक्वइति पुनः पृष्ट स्सएवं प्रत्युवाच। सर्वेषामपि य याव त्कर्मजातं विज्ञानञ्च यदीयकर्मविज्ञानान्तर्भूतं स रैक्व इति। त देतद्धंसवाक्यं रैक्वप्रशंसारूपं तथाभूतस्य रैक्वस्यैव ज्योति रसह्यं न त्वस्य वराक स्येति

शङ्क्यम्। एषा मपि पुराणश्रवणादिना बोधोपपत्तेः। निषादस्थपतिन्यायेन महावाक्यग्रहणेऽधिकारसंभवा च्च। तस्मा देषामपि मधिकारो ब्रह्मविद्याया मुचित इति प्राप्ते ब्रूमः॥

नाऽस्ति शूद्राणां ब्रह्मविद्याया मधिकार स्तेषा मध्ययनाऽभावेन तदु पायभूतोपास्यतद्गुणादिज्ञानाऽसंभवात्। इतिहास पुराणानि वेदोपबृंहणं

स्वनिन्दागर्भञ्च जानश्रुति राकर्ण्य कथमपि निशा मतिवाह्य तल्पं त्यजन्नेव क्षत्तार माहूय सचिह्नं रैक्व मुक्त्वा तदन्वेषणाय प्रेषयित्वा क्वचि द्विविक्तदेशे शकटस्याऽधस्ता त्पामानं कण्डूयमानं रैक्व मुपलभ्य प्रत्यागत्य निवेदितवति तस्मिन् स्वयं रैक्व मुपगम्य गवां षट् शतानि निष्कं हार मश्वतरीयुक्तं रथं चोपहृत्य त्वदुपास्यां देवता मनुशाधीति रैक्वं प्रार्थया मास। रैक्व स्तेन दीयमानं सर्वं प्रत्याचक्षाण उवाच। 'अहहारे त्वा शूद्र तवैव सहगोभिर' स्त्विति। अहेति निपातः। हारसहित इत्वा रथः गोभि स्सह तवैवाऽस्तु। किं मनेनाऽल्प धनेन सन्तोषो मम कळत्रहीनस्य प्रतिष्ठाहीनस्यच्च का मम एतद्धनरक्षणे शक्तिः। तव वा मत्प्रयोजनाऽपर्यवसा य्यल्पधनदानेनब्रह्मविद्याप्रतिष्ठिता नभवे दिति भावः। पुन र्जानश्रुतौ सहस्रंगवां पूर्वानीतं हारादिकं रैक्वस्य परिणयनार्थं कन्या मावमथार्थं तत्रत्यं ग्रामं चोपहृत्य प्रार्थयमाने विद्याप्रदानार्थं मुपहारस्य पर्याप्तता मनुजानानस्य रैक्व स्येदं वाक्यम् 'आजहा रेमा श्शूद्रे' त्यादि। इमा दक्षिणा आहृतवानसि। अनेनैव सुमुखेन विद्याग्रहणोपायेन मा माल्लापयिष्यसि ब्रह्मवि द्योपदेष्टारं करिष्यसीत्यर्थः॥

ननु कर्मणीव ब्रह्मविद्यायामपि शूद्रस्य नाधिकारइ त्येव मुक्तम्। अस्याऽधिकारसंशयः कथमि त्याशङ्क्य पूर्वपक्षकोटे र्बीज मुपन्यस्य संशय न्दर्शयति — अ त्रेति अत्र आजहारेति दक्षिणा प्रत्याख्यानवाक्ये शूद्रेत्यामन्त्रणं शूद्रव द्ब्रह्मविद्यागौरव मजानानः दक्षिणां स्वल्पा माहृतवा नसीति कोपेन शूद्रे त्यामत्रणं कृतमिति योजनायामपि प्रसादवाक्ये तथा वक्तु मयुक्तत्वात्। शूद्रे त्यामन्त्रणलिङ्गेन तेषा मधिकारोऽस्तीति प्रतीयते। जानश्रुते श्शोकाविष्ट त्वस्य प्राक्सूचितत्वेन तादृशलिङ्गस्याऽसिद्ध्या नाऽधिकार स्तेषामि त्यवगम्यते। तस्मा त्संशय इतिभावः। ननु सम्भवेप्य र्थित्वादीनां कर्मणि यथा त्रैवर्णिकानामे वेतिनियम स्तथा ब्रह्मविद्या यामपि तेषा मेवाऽधिकारइति नियमोऽस्ती त्याशङ्क्याह — नचेति। वेदाधिकार मुपपाद यति निषादस्थपतिन्याये नेति। निषादस्थपतिं याजयेदि त्यत्र निषादस्थपतिशब्दे निषादानां स्थपति रिति षष्ठीसमासपरिग्रहे षष्ठ्यर्थलक्षणा स्यादिति तत्परिहाराय निषाद श्चासौ स्थपतिरिति समा नाधिकरणसमासोऽङ्गीकृतः। तस्मा दत्रैवर्णिकस्याऽपिनिषादस्य रौद्रं वास्तुमयं चरुं निर्वपेदिति

कुर्वन्त्येव। उपायभाव मनुभवन्ति न स्वातन्त्र्येण। शूद्राणा मितिहास पुराणश्रवणानुष्ठानन्तु पापक्षयफलकम्। विदुर धर्मव्याधादीनां जन्मान्तर सिद्धज्ञानाप्रमोषात् ब्रह्मनिष्ठता। कथं ब्रह्मविद्योपदेशे शूद्रे त्यामन्त्रण मिति चेत् नात्र जातियोगेन शूद्रे त्यामन्त्रणम्। किन्तु, ब्रह्मज्ञानाप्राप्त्या शुगस्य संजा तेति दर्शनात्। शुगस्य संजा तेति तदनादरश्रवणात् ब्रह्मविद्यावैक

प्रकृताया मिष्टा वधिकारसिध्द्या तदङ्गभूतमन्त्रग्रहणं सिध्यति तथैव ब्रह्मप्रतिपादकतात्पर्यपरिग्रहोऽ त्रैवर्णिकानामपि सिध्यतीति भावः। ननु गिरिधन्वा निषादस्य मन्त्रग्रहणं सिद्धम्। नत्वर्थवाद मात्राऽनुरोधाच्छूद्रस्य महावाक्यग्रहणेऽधिकारो युक्तः। गावो वा एत त्सत्र मासत इत्यादिव दर्थवादिकस्य लिङ्गस्य स्तुत्यालम्बनत्वोपपत्तेः। इतिचेन्न। गवां सत्रप्रशक्त्यादिवत् शूद्राणा मशक्त्यादिबाधकाऽभावात्। ननु — 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्त' इति श्रुति र्बाधिका। तस्याश्श्रुते र्यज्ञाऽनधिकार प्रतिपादनमात्रपरत्वात्। प्रत्युत शूद्रस्य विशिष्य यज्ञाधिकारनिषेधेन ब्रह्मविद्याधिकारेऽनुमतेरेव सिद्धेः। पूर्वपक्षमुपसंहरति — तस्मादिति। सिद्धान्तयति। नास्तीति। तेषा मनधिकारे हेतु माह — अध्ययनाभावेनेति। सामर्थ्याभावादि त्यर्थः। अध्ययनाभावेन ब्रह्मस्वरूपतदुपासनप्रकार मजानतः) नखलूपासने सामर्थ्य विद्यते। ननु वेदान्ते ष्विव पुराणेतिहासेष्वपि ब्रह्मण स्तदुपासनाश्च प्रतिपादनं प्रपञ्चेन दृश्यते। तज्जन्य ज्ञान मप्युपास नाङ्गं नस्या त्तर्हि तत्र तत्प्रतिपादनं व्यर्थमेव स्या दित्याशङ्क्याह — इतिहासेति। 'बिभेत्यल्प श्रुता द्वेदो मा मय प्रतरे' दिति - इतिहासपुराणाभ्यां वेदान् समुपबृंहयेत्। इति वेदतात्पर्य निर्णयार्थत्वेन न तेषां वैयर्थ्य मितिभावः॥

ननु — पुराणेतिहासानां वेदोपबृंहणार्थत्वेऽपि तेभ्य स्सिध्यत् ब्रह्मज्ञानं नवारयितुं शक्यम्। तदुपासनाङ्गमेव भवति। तदभावे शूद्रकर्तृकपुराणादिश्रवणं विफलमेव स्या दित्या शङ्क्याह — शूद्राणामिति। एवं सूत्राभिमतं शूद्रस्य विद्यानधिकार मुपपाद्य सूत्रेणकण्ठोक्तं शूद्रेत्यामन्त्रणस्याशयं विशदयितु माशङ्कते। कथ मिति। एतच्छङ्कोत्तरत्वेन शुगस्येति सूत्रांश निवेदित मर्थमाह — नाऽत्र जातीति। शूद्रशब्दस्य जातौ रूढित्वेपि प्रकृते ब्रह्मज्ञानाऽ प्राप्त्या जानश्रुते श्शुक्सञ्जातेति तां दृष्ट्वा रैक्वेण शोचितृत्वयोगेन स्वज्ञानवैभवप्रकटनाय शूद्रे त्यामन्त्रणं कृतमिति विज्ञायते। स्वज्ञानवैभवप्रकटनस्य प्रथमामन्त्रणे राज्ञोऽपिकदक्षिणादि ष्वासञ्जननार्थत्वेन द्वितीयामन्त्रणे राज्ञः स्वोपदेक्ष्यमाणविद्यायां श्रद्धातिशयसम्पादनार्थत्वेन च प्रकृतोपयुक्तत्वा च्चेति भावः। ननु जानश्रुते श्शुक् संजातेति कथ मवगम्यते। यां दृष्ट्वा रैक्व श्शूद्रेत्यामन्त्रितवा नित्याशङ्कापरिहारार्थत्वेन तदनादरेत्यादिसूत्रशेषं व्याचष्टे। शुगस्येति।

न्येन स्वात्मानं प्रति हंसोक्ताऽनादरवाक्यश्रवणात्। तदैवाचार्यप्र त्याद्रवणा च्च। सूच्यतेहि शब्दो हेतौ यतः शूद्र त्यामन्त्रणं, न जातियोगेन, ततः शूद्रस्य ब्रह्मोपागमं नास्तीति॥

इतश्च शूद्रे त्यामंत्रणं न जातियोगे नेत्याह॥

## क्षत्रियत्वगते श्च ॥ १–३–३४ ॥

शुश्रूषो र्जानश्रुतेः क्षत्रियत्वावगते श्च न जातियोगेन शूद्रे त्यामन्त्र णम्। उपाख्यानोपक्रमे हि जानश्रुति र्हि पौत्रायणः श्रद्धादेयो बहुदायि बहु पाक्य आस सह सर्वत आवसथान् मापयांचक्रे सर्वत एव मेवाऽन्न मत्स्यन्तीति। जानश्रुतौ दानपतित्वं बहुतरपक्वान्नप्रदायित्वं चोक्तम्। मध्येच सहसंजिहान एव क्षत्तार मुवाचेति क्षत्रप्रेषण मुक्तम्। अन्तेच, ' इयं जाया अयं ग्रामो यस्मि न्नास्त ' इति, ' ते हैते रैक्य पर्णानाम महावृषेषु यत्राऽसा बुवा 'सेति बहुग्रामप्रदायित्व मुक्तम्। एतै र्लिङ्गै र्जानश्रुतेः क्षत्रियत्व मवगम्यते॥

---

हंसोक्तानादरवाक्यश्रवणेन कारणेन तथैवाचार्य प्र त्याद्रवणेन कार्येणच शुगस्य सञ्जा तेति ज्ञाप्यत इत्यर्थः। अत श्शूद्रेत्यामन्त्रणं नरूढ्या - किन्तु शोचितृत्वयोगे नैव त्यर्थः शूद्रेत्या मन्त्रणस्य यौगिकत्वे हेत्वन्तरपरत्वे नोत्तरसूत्र मवतारयति। इत श्चेति —

जनश्रुतस्याऽपत्यं जानश्रुतिः। पुत्रनाम्नो गोत्रापत्यं पौत्रायणः। श्रद्धया देय मस्येति श्रद्धादेयः। अर्थिभ्यो बहुदातुं शीलमस्येति बहुदायी। बहुपाक्यः पक्तव्य मन्नादिक मस्य बहुपाक्यः। आगत्य वसन्ति येष्वतिथय स्तानावसथान्। अतिथीनां निवासार्थान् गृहान्कार यामास। वैश्या द्ब्राह्मणकन्यायां क्षत्ता नामप्रजायते। जीविकावृत्ति रेतस्य राजान्तः पुररक्षणमि त्युक्तलक्षणः क्षत्ता। अत्र क्षत्तप्रेषणग्रामदानरूपं लिङ्गद्वयं साक्षा त्क्षत्रियत्वज्ञापक मित्यर्थः। तस्य क्षत्रियत्वाऽवगतौहेत्वन्तर प्रदर्शनपरं सूत्रम्॥

जानश्रुते स्संवर्गविद्याया मुपदिश्यमानाया मुत्तरत्र श्रुतेनाऽभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेणाऽस्य क्षत्रियत्व मवगम्यते। कथ मित्याशङ्क्याऽत्रप्रमाण माह — अथ शौनक

# उत्तरत्र चैत्ररथेन लिङ्गात् ॥१-३-३५॥

उपरिष्टा च्चाऽस्यां संवर्गविद्यायां ब्राह्मणक्षत्रिययो रेवाऽन्वयो दृश्यते। 'अथ: शौनकं च कापेय मभिप्रतारिणं च कांक्षसेनिं परिविष्यमाणो ब्रह्मचारी बिभिक्ष' इत्यादौ। अत्राऽभिप्रतारी चैत्ररथः क्षत्रिय श्चेत्यत्र गम्यते। कापेययाज्यस्य कापेयाख्ययाजकयोगात् ॥ कापेययाजकयोगो हि चित्ररथस्य श्रुतः, 'एतेन चैत्ररथं कापेया अयाजयन् तमेकाकिन मन्नाद्य स्याऽध्यक्ष मकुर्वन्' इति। तेनाऽभिप्रतारिण स्संज्ञाभेदा च्चित्ररथ त्वासिद्धा वपि तद्वंश्यत्वं सिध्यति। समानान्वयानां हि समानान्वयाः प्रायेण याजका भवन्ति। चित्ररथवंशत्वे सति क्षत्रियत्वम् ॥ तस्मात् चैत्र

- - - - - - - -

मित्यादि। परिविष्यमाणौ भोजनार्थ मुपविष्टौ सूपकारैः प्रदीयमानान्ना वित्यर्थः। अत्र कपि गोत्रोत्पन्न श्शौनकः प्रसिद्धो ब्राह्मणः। एतत्कापेयशौनकसहपाठेनाऽभिप्रतारिनाम्नः क्षत्रियत्व मवगम्यते। कथ मितिचेत्। 'चैत्ररथं कापेया अयाजयन्नि'ति श्रुत्याकापेययाज्यत्वयोगात् ॥

ननु — परिविष्यमाणौ भोजनार्थ मुपविष्टौ सूपकारैः प्रदीयमानान्नौ। अत्र कपि गोत्रोत्पन्न श्शौनको ब्राह्मण, प्रसिद्धः। तत्सहितस्याऽभिप्रतारिणः क्षत्रियत्वं साधनीयम्। तत् चैत्ररथवंश्यत्वेन सिसाधयिषुः प्रतिजानीते। अत्रेति। तस्य चित्ररथवंश्यत्वे हेतु माह — कापेययाज्य स्येति। तस्य हेतुत्व मुपपादयति कापेययाजकेति। चैत्ररथस्य कापेययाज्यत्वे प्रमाण न्दर्शयति — एते नेति। अत्र चित्ररथस्य कापेययाजकयोग श्श्रुतः। ननु — तेनाऽभिप्रतारिण श्चित्ररथत्वमेव सिद्ध्य त्वतु तद्वंश्यत्व मित्याश ङ्क्याह — समानान्वयाना मेवेति याजकाश्चित्विथा श्शाख्यायनिशाखायां श्रुताः। पितृभूता मनुष्यभूता देव भूता इति। पितृ पितामहादि परम्परया कुलक्रम णागता ऋत्विजः पितृभूताः। तदसम्भवे कस्यचि दाधानप्रभृति यावज्जीव मृत्विक्त्वेन प्राप्ता मनुष्यभूताः। तदसम्भवे तत्रतत्र कर्मणि दैवादागत्यार्त्विज्यं कुर्वन्तो देवभूताः इत्येवं नियमो नास्ती त्याशङ्क्याह — प्राये णेति। नियमाभावेऽपि मुख्यत्वा त्पूर्वराजचरितेषु बहुशो याज्ययाजककुलव्यवस्था दर्शना दिहाऽपि चित्ररथं कापेया अयाजयन्निति कपिगोत्रोत्पन्नानामेव बहूनां चित्ररथंप्रति याजकत्ववर्णनाच्च। तेषां पितृभूत याजकत्वनिश्चयात् कापेययाजक योगेन चित्ररथवंश्यत्वं सिध्यतीति भावः। चित्ररथवंश्यत्व सिद्धौ तत्तस्यक्षत्रियत्वं सिध्यति। उक्तार्थ मुपसंहरति एवञ्चेति। एवं ब्राह्मणेन युक्तोऽपि

रथि र्नामैकः क्षत्तृपति र्जायत,' इति तद्वाक्यशेषेण सिद्धयति। एवं चोत्त रत्र ब्राह्मणेन कापेयेन युक्तोऽभिप्रतारी क्षत्रिय इति निश्चीयते। तद्वत ब्राह्मणेन रैक्वेण युक्तो जानश्रुतिरपि क्षत्रिय इति गम्यते। अतः क्षत्रिय एव शूद्रे त्यामन्त्रितः॥

य दुक्तं निषादस्थपतिन्यायेन शूद्रस्य महावाक्यश्रवणमात्रेऽधिकार इति तत्राह॥

## संस्कारपरामर्शा त्तदभावाभिलापा च्च ॥१-३-३६॥

ब्रह्मविद्योपक्रमे 'उपत्वानेष्ये तं होपनिन्ये' इत्यादि प्रदेशेषु उप नयनसंस्कारपरामर्शात् शूद्रस्य च न शूद्रे पातकं किंचित्, नच संस्कार मर्हति,' 'शूद्र श्चतुर्थो वर्ण एकजाति' रित्यादिस्मृतिषु तदभावश्रवणात्

---

प्रतारी क्षत्रियइति निश्चितेसति तथैव रैक्वेण ब्राह्मणेन सहितो जानश्रुति रपि क्षत्रिय इ त्येव सिध्यति। उत्तरत्र - उपरिष्ठात् अस्यामेव विद्यायां। लिङ्गात् कापेयसाहचर्य लिङ्गात् क्षत्रिय इति निश्चितेन चैत्ररथेन चित्ररथवंश्येनाऽभिप्रतारिनाम्नाऽपि जानश्रुतिरपि क्षत्रिय एव नशूद्रइति निश्चीयत इति सूत्रार्थः। एवं शूद्रस्य विद्याधिकारे शूद्रेत्यामन्त्रणरूपं लिङ्गं निराकृतम्। अथाऽर्थित्वादिसद्भावा दध्ययनाऽभावेऽपि निषादस्थपतिन्यायेन विद्याधिकारस्स्यादि त्याशङ्कापरि हारार्थत्वे नोत्तरसूत्र मवतारयति — युदुक्त मित्यादिना —

ब्रह्मविद्योपक्रम इति। एवंछान्दोग्योपनिष व्याख्यायते। शैशवे प्रमीतपितृक स्सत्य कामो विद्यार्थ माचार्य मुपेत्य ब्रह्मचर्यं चरिष्यामि किंगोत्रोऽह मिति मातरं पृष्ट्वा तया नाह मेत द्वेद। तात यद्गोत्र स्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वा मलभे साह मेत न्नवेद यद्गोत्र स्त्व मसि जबालातु नामाऽह मस्मि सत्यकामो नामत्वमसि स सत्यकामएव जाबालोऽब्र वीथाः। इति। सन्नेव मुक्तो गौतम मासाद्य ब्रह्मचर्यं भगवतिवत्स्यामि। उपेयांभगवन्त मित्युक्त्वा किंगोत्र स्त्वमसीति तेन पृष्टो नाहं ममगोत्रं वेद माताऽपिनावेदीत्। माता मे जबाला सत्यकामोऽह मेताव द्वेद्मी त्युवाच। अथ गौतम स्सत्यवचनेनाऽयं ब्राह्मणइति निर्धार्य समिधं सोम्याहर उपत्वानेष्ये। इति चोक्त्वातथैव तमुपनीय स्वीया द्गोयूथात् कृशानां दुर्ब लानां गवांचत्वारि शतानि पृथक्कृत्य तत्पोषणे तं नियुयुजे। सतुसत्यकामो गवां सहस्रसंङ्ख्या

तस्य ब्रह्मविद्याया मनधिकारः। निषादस्थपतिं याजयेदिति विधिरस्तीति तत्र न विरोधः। उपनयनाभावेऽपि शूद्रस्य महावाक्यश्रवणे कुत्राऽपि न विधिः॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ १-३-३७ ॥

'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्य! आहरोपत्वानेष्ये न सत्यादगा' इति सत्यवचनेन जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव तदुपनयनानुशासनविद्योपदेशप्रवृत्तेश्च न शूद्रस्याऽधिकारः॥

ननु उपनयनाऽभावे ब्रह्मोच्चारणनिषेधः स्वाचित्कः सार्वत्रिकोवा? न सार्वत्रिकः, शिशो रुपनयनाभावेऽपि न ब्रह्माऽभिव्याहरे दन्यत्र स्वधानि

---

पूरणात्प्राक् नप्रत्यागच्छेयमिति प्रतिज्ञाय तृणोदकबहुल मरण्य नीत्वा ता स्संरक्षन् वर्षगणं प्रोवास। ताश्च सहस्रं संपेदिरे। तदनन्तरं वृषभोऽग्निः हंसो मद्गुरिति चत्वारो देवतात्मानः तस्य गुरुशुश्रूषया सन्तुष्टा स्तस्मै षोडशकलब्रह्मविद्या मुपदिदिशुः। तत स्सहस्रगोभि राचार्य कुलं प्राप्याचार्येण ब्रह्मविदिवसोम्यभासी कोनुत्वा मनुशशासेति पृष्ट स्तद्वृत्तान्त मुक्त्वा देव स्सविष्ट मित्यतोऽपि नाहं ह्रष्यामि स्मीया दाचार्यादेव किल लब्धाविद्या साधी यसी भवति। भगवानेव मह्यं ब्रवी त्विति प्रार्थयामास। ततो गौतमस्ता मेव षोडशकल ब्रह्मविद्या मुपदिदेशेति। अत्र विद्योपक्रमे 'उपत्वा नेष्ये' इत्यादि नोपनयनं परामृश्य ते तस्मादुपनयन वतामेव ब्रह्मविद्याऽधिकार इति सिद्ध मित्यर्थः। अस्तु शूद्रस्याप्युपनयन मित्याश ङ्कयाह — शूद्र स्येति। पातकं वृषामांस भक्षणादिकृतं शूद्र स्योपनयननिषेधे गौतम स्मृति मुदाहरति — शूद्र इति। एकजातिः द्वितीय जन्मरहितइ त्यर्थः। एवं शूद्रस्य द्वितीयजन्म रूपोपनयनाभावा द्विद्यायांनाधिकारइ त्याह — तस्येति। न न्वेवं निषादस्य कथं तद्विहितया गोपयुक्तमन्त्रोच्चारणाऽधिकार इत्याशङ्क्याह — निषादेति। तस्य विधिप्राप्तत्वा दधिकार स्सिद्धः। शूद्रस्यनु तथा महावाक्यश्रवणाऽधिकारविधि रितिभावः। शूद्रस्य विद्याया मनधिकारे हेत्वन्तर प्रदर्शन परं सूत्रम्॥

नैत दब्राह्मणो विवक्तु मर्हतीत्यादिना जाबालस्य सत्यवचनेन शूद्रत्वाऽभावे निर्धारिते सत्येव गौतमः जाबाल मुपनेतु प्रववृते। तस्मादपि शूद्रस्य ब्रह्मविद्यायां नाधिकारइ त्यर्थः॥

ननु - अनुपनीतानां वेदवाक्यग्रहणनिषेधोहि न सर्ववेदवाक्यविषय : त्रैवर्णिकानां माता पित्रोः पैतृमेधिके कर्मणि तद्युक्तवेदवाक्योच्चारण स्योपनयनाऽभावेऽपि स्मृत्यनुमतत्वात्। किन्तु

नयता' इति। अधानिनयोऽपि ब्रह्मोच्चारणविधानात्। तेन क्वाचित्क इति युज्यते। अतः शूद्रस्याऽनुपनीतस्य पाकयज्ञादिषु ब्रह्मोच्चारणानिषेधो न ब्रह्मविद्याया मित्याशंकाया माह ॥

## श्रवणाध्ययनार्थप्रतिषेधात् ॥ १—३—३८ ॥

शूद्रस्य वेदवाक्यश्रवणादि निषिध्यते, 'तस्मा च्छूद्रसमीपे नाध्येतव्य' मिति। अनुपश्शृण्वतः कुतोऽध्ययनादिप्रवृत्तिः ॥

## स्मृते श्च ॥ १—३—३९ ॥

स्मर्यते च शूद्रस्य वेदवाक्यश्रवणादौ दण्डः 'अथ हाऽस्यवेद मुपशृण्वत स्त्रपुजतुभ्यां श्रोत्रप्रतिपूरण मुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः' इति। एवं श्रुतिस्मृतिभ्यां शूद्रसमीपेऽध्ययनादिनिषेधात् कुत स्तेषां वेदार्थविचारादिकम्? अत स्सर्वथाऽप्यर्थब्राह्मणाद्युपयुक्तोपनयनसंस्कार मन्तरेण वेदाध्ययनप्राप्ति र्न कुत्राऽपि कस्यचि दिति शूद्रा ब्रह्मविद्याया मनधिकारिणएव ॥

इति अपशूद्राधिकरणम् २९

---

तदतिरिक्तवेदवाक्यविषयइ त्यङ्गीकार्यम्। तस्मा च्छूद्र स्योपनयनाभावेऽपि विद्याधिकारइति शङ्कानिराकरणार्थतये नोत्तर सूत्र मवतारयति — नन्विति ॥

शूद्रस्य तत्समीपएव नाध्येतव्य मिति वेदश्रवणनिषेधेन वेदाध्ययनतदर्थ विचारज्ञानानुष्ठाना न्यर्था त्प्रतिषिध्यन्ते। यस्य समीपेऽपि नाध्येतव्यं स कथं तच्छृणुयात्। अशृण्वतः कथ मध्ययनं तदभावे कुतोऽर्थ ज्ञान मनुष्ठानं वेति सूत्रार्थ मभिप्रेत्य विवृणोति — शूद्रस्येति। नकेवलं शूद्रसमीपे वेदोच्चारणनिषेध मात्रात् शूद्रस्य वेद श्रवणादिप्रतिषेध स्सिध्यति। अपितु श्रवणादौ दण्डश्रवणाच्चे त्येतदर्थ सूत्रम् ॥

स्मर्यते चेति। 'अथहाऽस्य वेदमुपशृण्वत स्त्रपुजतुभ्यां श्रोत्रप्रतिपूरण' मित्यादिना वेद श्रवणादौ शूद्राणां दण्डस्मरणादपि तेषां श्रवणादौ नाधिकारइति सिध्यति। एवं तस्य समीपेऽध्ययनस्य निषेधे नकथमपि तस्य वेदार्थविचारादिकं सम्भवती त्यधिकरणार्थमुपसंहरति-अत इति ॥

इति अपशूद्राऽधिकरणम् २९

अथ कम्पनाधिकरणम् ३०

एवं प्रासङ्गिक मधिकारनिरूपणं कृत्वा प्रकृत मनुसरति ॥

कम्पनात् ॥ १–३–४० ॥

अङ्गुष्ठमात्रपुरुषप्रकरणे कठवल्लीषु श्रूयते, यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम्। तं महद्भयं वज्रमुद्यतम् य एतद्विदु रमृतास्ते भवन्ति इति तत्र प्राणशब्दनिर्दिष्टजनितभयेन सकलजगत्कंपन मुच्यते।

अत्र कम्पनहेतुः परमेश्वरोऽन्योवा इति संशयः ॥

परमेश्वरस्य सकलजगदभयप्रदानमधुरस्वभावस्य परमकारुणिकस्य

---

अथ कम्पनाधिकरणम् ३०

उत्तराधिकरण मवतारयति — प्रासङ्गिक मिति। मनुष्याधिकारोक्ति प्रसङ्गा दागतं देवानामप्युपासनायां मधिकारोऽस्ति इति देवताधिकरणम्। तत्प्रसङ्गादेव शूद्राणामपि विद्याधिकारे प्रसक्ते तत्र शूद्रस्याऽनधिकारा दपशूद्रा स्त्रयोवर्णा एवाऽधिकारिणइत्यर्थं प्रतिपादक मपशूद्रा धिकरणमिति तत्र तत्राधिकारिनिरूपणं कृत्वा प्रकृतमङ्गुष्ठवाक्यविचारतो वाऽनुसृत्य तत्प्रकरणप ठितवाक्यान्तरविचारं करोती त्यर्थः। एतेनाऽनन्तराऽधिकरणस्याऽङ्गुष्ठाधिकरणेन सङ्गत्याप्रवृत्तिः नतु प्रासङ्गिकेन देवताधिकरणे नेत्युक्तं भवति ॥

अत्र प्रकरणं परमेश्वरपरत्वसाधकं प्राणवज्रश्रुतीच वाय्वशनिपक्षयो स्साधकइ त्यभि प्रेत्य प्रकरणस्य श्रुत्यपेक्षया दुर्बलत्वात् श्रुत्योः परस्परविरुद्धत्वाच्च बलाबलानिर्णया त्संशय इत्याह — परमेश्वरोऽन्योवेति। यदिदं किंचेत्यादिकं कठवल्लीगतविषयवाक्यम्। अत्र प्राण शब्दवाच्यजनितभयेन सकलस्याऽपि प्रपञ्चस्य कम्पन मुच्यते। तच्छासनाऽतिक्रमे किं भविष्यति वेति महाभया दुद्यता द्वज्रादिव कम्पत इत्यर्थः। यदिदं किंचेत्यादिना सामान्येन तस्य भयहेतुत्व मुक्त्वा 'भया दस्याऽग्नि स्तपति - भया त्तपति सूर्यः' इत्यादिना विशिष्याऽपि तदेव प्रतिपादि तम्। एव मत्र भयहेतु' कइति संशयः। अन्योवेति प्राणवायु रशनि र्वेत्यर्थः। अशनिपूर्वपक्ष मुपपादयति — अत्रेति ॥

प्रकरणेन परमेश्वरः कम्पनहेतु रित्याशङ्क्याह — परमेश्वर स्येति द्वितीयपूर्वपक्ष मुप पादयति — यद्वेति। उपक्रमगतप्राणश्रुत्यनुसारेण कम्पनहेतुः प्राणवायु रेवे त्यर्थः। शरीर

जगत्कंपनहेतुत्व मयुक्तम्। तस्मा द्वज्रश्रुते रशनिः कम्पनहेतुः। यद्वा प्राणवायुः कम्पनहेतुः, प्राणश्रुतेः प्राणवायो र्देहचलनहेतुत्वेन प्राणे निमित्ते सर्व मिदं जगच्छरीररूपं चलतीति। 'य दिदं किञ्च जग त्सर्वं प्राण एजति निस्सृत' मित्यस्य तत्रोपपत्तेः। वायुनिमित्तमेवविद्युत्; स्तनयित्नु वृष्टिवत्। महाभयहेतु रशनि रपि विवर्तत इति। 'महद्भयं वज्र मुद्यत' मित्यस्याऽपि तत्रोपपत्तेः। 'वायु रेव व्यष्टि र्वायु रेव समष्टि रप पुन र्मृत्युं जयति य एवं वेद' इति श्रुते र्वायुविज्ञाना दमृतत्वोपपत्ते श्चेति प्राप्ते पर मेश्वर एव कम्पनहेतु रिति ब्रूमः॥

परमेश्वरस्य सकलजगत्कंपनहेतुत्वं शासकत्वात् भवति। यस्य शासन भयेन सर्वे वयं निषिद्धमुखा विहितेषु प्रवर्तामहे, तच्छासनभया देव वाय्वा दीनां स्वस्वाऽधिकारप्रवृत्तिः; 'भीषास्माद्वातः पवते' इत्यादि ष्ववगम्यते। कल्याणमूर्ति रपि परमेश्वरः शासकतया भयदर्शनो भवति। तच्छ्रूयते, 'तस्मा द्राजमुखं भीष्मभावुक' मिति। तस्मा त्स्वामितया सकलजगद्भय हेतु रीश्वर एव॥

इति कम्पनाधिकरणम् ३०

---

रूपस्य सकलस्याऽपि जगत श्चलनस्य तन्निमित्तकत्वा दिति भावः। अमृतत्व फलश्रुते रुपपत्ति माह — वायु रेवेति। पुनर्मृत्यु मपजयति अपहन्ति पुन र्नम्रियते मुक्तो भवती त्यर्थः। सिद्धान्तयति - परमेश्वरएव कम्पनहेतु रिति। प्राणवायो श्शरीरकम्पनहेतुत्वस्य भयजननद्वारा कम्पनहेतुत्वस्याऽशनेश्च सम्भवेऽपि महद्भयमिति विशेषणा दुत्तरमन्त्रे वाय्विन्द्रादीनामपि भय हेतुत्वश्रवणेन वाय्वशनिपरत्वे तदसम्भवाच्च। तद्भया दग्न्यादीनां स्वस्व कृत्येषु प्रवृत्युक्तेश्च शासकत्वात् भयजननद्वारा सम्भावितं कंपनहेतुत्वं विवक्षितमिति प्रतीयते। ननु — परमकारुणि कस्य भयजनकत्वं नयुक्तमित्यस्य समाधान माह — कल्याणमूर्तिरपीति। अत्र प्राकरणिकानां ब्रह्मलिङ्गानां पूर्वपक्षे कम्पनहेतो रन्यत्राऽभिप्रायवर्णना त्तत्र तदन्वयोऽस्पष्टइति स्पष्टाऽस्पष्टब्रह्म लिङ्ग तेति पादसङ्गतिः॥

इति कम्पनाधिकरणम्

अथ ज्योतिरधिकरणम् ॥ ४१

दहरादि रूपोपास्यतया निर्दिष्टस्य परमेश्वरस्य ... प्रतिपादयितुमिदमधिकरणमारभ्यते ॥

ज्योतिर्दर्शनात् ॥ १-३-४१ ॥

छान्दोग्येऽस्य प्रजापतिविद्यायां सामान्ये विषयः; 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाऽभिनिष्पद्यते। स उत्तमः पुरुष' इति ॥

मुक्तप्राप्यतया श्रूयमाणं परं ज्योतिः परमेश्वरः? किंवा नारायणो मूर्त्यात्मा। इति संशयः ॥

उत्तमः पुरुष इति मुक्तप्राप्यस्य परज्योतिषः पुरुषोत्तमशब्दवाच्यतयाऽवगमात्, पुरुषोत्तमशब्दस्य नारायणे रूढतया स एवोत्तमपुरुषशब्दसमानाधिकरणं परंज्योतिरिति प्राप्ते ब्रूमः ॥

अथ ज्योतिरधिकरणम् ४१

अनन्तराधिकरण मवतारयति — दहरादि ष्विति। पूर्वाधिकरणाऽन्तेष्वधिकरणेषु दहरादिस्थानं रूपास्यतया परमेश्वर प्रतिपादितः। अथ तदुपासनया प्राप्योऽपि स एवेति प्रतिपादयितु मिद मधिकरण मारभ्यत इत्यर्थः। ननु — 'मुक्तोपसृप्यव्यपदेशा' दिति सूत्रे परमेश्वरस्य मुक्तप्राप्यत्व मुक्तमितिचेन्न। क्वचिद्विषयवाक्य विशेष प्रसक्तशङ्कानिराकरणेन तस्यैव दृढीकरणार्थत्वात् ॥

अत्र प्रजापतिविद्यागतेन वाक्येन उपासकश्शरीरा दुत्थाय यदुपसम्पद्याऽपहतपाप्मत्वादिस्वरूपे णाभिनिर्भवती त्युच्यते तत्परंज्योतिः नारायण परमेश्वरोवेति। उत्तमपुरुषशब्दरूढियोगाभ्यां संशय न्दर्शयति — मुक्तप्राप्यतयेति। पूर्वपक्ष माह — उत्तमः पुरुषइतिवाक्यं तावत्पुरुषोत्तम शब्दाऽसाधारणयौगिकाऽर्थप्रतिपादकतया निरूढ मिह मुक्तप्राप्ये परस्मिन् ज्योतिषि प्रयुक्तम्। तस्मान्मुक्तप्राप्य परञ्ज्योति र्नारायणइति सिध्यति। किञ्च - गीतासु। 'द्वा विमौ पुरुषौ लोके क्षरश्चाऽक्षरएवच। क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत' इति श्लोके पुरुषशब्दाऽभिधेयतया प्रसिद्धं जीवजातं क्षराऽक्षरशब्दाभ्यां संसारसंसारिरूपेण द्वेधा विभज्य

मुक्तप्राप्यं परंज्योति रिह परमशिवाभिधानं परं ब्रह्म। तत्प्राप्ताना मेवाऽनावृत्तिदर्शनात। परब्रह्मणोऽन्यत् प्राप्तानां कथ मनावृत्ति रसमुचिता ? पुरुषोत्तमशब्दो नारायणे रूढोऽपि ब्रह्मण्यपि वर्तते, पुरुषेभ्यो जीवेभ्योऽधि कत्वात्। ब्रह्ममेधसंकल्पेऽपि 'वेदिंन पुरुषोत्तम' मिति प्राप्यस्य परब्रह्मणः पर्यायत्वेन पुरुषोत्तमशब्दप्रयोगात् । अतः परब्रह्मैव परंज्योतिः ॥

इति ज्योतिरधिकरणम् ३१

---

उत्तमः पुरुषस्त्वन्यः, परमात्मे त्युदाहृतः । यो लोकत्रय माविश्य बिभर्त्यव्यय ईश्वर ' इति श्लोकेन द्विविधादपि जीवजाता दुत्कृष्टं तदुभयनियामक मन्यपुरुषं पुरुषोत्तमपदयौगिकार्थप्रति पादकेन उत्तमः पुरुषइति वाक्येन निर्दिश्य, स क इतिजिज्ञासायां ' यस्मात् क्षर मतीतोऽह मक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदेच प्रथितः पुरुषोत्तम ' इति ' श्लोकेन लोकवेदयोः पुरु षोत्तमपदवाच्यतया प्रसिद्धोऽहमेव स उत्तमःपुरुषइति भगवतोपदिष्टम्। लौकिकप्रसिद्धिरपि तत्रैवाऽस्ति 'देवकीनन्दन श्शौरि श्श्रीपतिः पुरुषोत्तम ' इति। ' हरि र्यथैकः पुरुषोत्तम स्स्मृतः महेश्वर स्त्र्यम्बकएव नाऽपर' इतिच। तस्मा त्कर्मोपासकैः मुक्तैः प्राप्यं परञ्ज्योति र्नारायणए वेति। सिद्धान्तयति — मुक्तप्राप्य मिति। पूर्वपक्षहेतु मन्यथाकरोति। पुरुषोत्तमशब्द इति। प्रबलाऽपि तस्य रूढि रनन्यथासिद्धाऽनावृत्तिरूपलिङ्गविरोधात् बाध्यत्वात् ब्रह्मणि तस्य योग एवाश्रयणीय इति भावः ॥

ननु — अतोऽस्मि लोके वेदेच प्रथितः पुरुषोत्तम इति गीतावाक्यस्य कागति रितिचे दुच्यते। तत्रैव 'ऊर्ध्वमूल मधश्शाख मश्वत्थ म्प्राहु रव्यय' मिति संसारवृक्षं परिकीर्त्य 'ततः परन्त त्परिमार्गितव्यं यस्मि न्गता ननिवर्तन्ति भूयः' ।इति संसारमण्डलाऽतीत मप्राकृतदिव्य पदे स्थितम् । परब्रह्माऽनावृत्तिफलसिद्धये समुपासनीय मित्युक्त्वा 'तमेव चाद्य म्पुरुषं प्रपद्य' इति भगवान् श्रीकृष्णः तमेवादिमं सर्वोत्तमं पुरुष महमप्युपास इति ब्रुवन् सचोपास्य उत्तमः पुरुषः प्राप्यश्च परमशिवइति स्पष्टीचकार। एवं मुमुक्षूणां श्रीकृष्णस्यचोपास्यत्वे नोक्तः परम शिवाख्य स्सर्वोत्तमः पुरुषएव क्षराऽक्षररूपोत्तमत्वप्रतियोगिनिर्देशपूर्वक'मुत्तमः पुरुषस्त्वन्य ' इति श्लोकेन वर्णितः । तद्विषयएव वर्तमानो 'यस्मात् क्षरमतीतोह' मिति तदनन्तर श्लोकः कथं परमशिवविषयो नस्यात् । तद्विषयत्वेऽपि तदभेद भावनादार्ढ्येन 'शास्त्रदृष्ट्यातूपदेशो वामदेववदिति ' न्यायेन पुरुषोत्तमः प्रथितोऽस्मीति कृष्णवचनं लोकवेदप्रसिद्धिश्चेति सर्व मुप पन्नम् । तस्मा न्मुक्तप्राप्यं परञ्ज्योतिः परमेश्वराख्यं परब्रह्मै वेत्युपसंहरति — अत इति ।

अथ अर्थान्तरत्वादिव्यपदेशाधिकरणम्

## अकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १-३-४२ ॥

छान्दोग्येश्रूयते 'आकाशो ह वै नाम नामरूपयो निर्वहिता। ते य दन्तरा तद्ब्रह्म त दमृतं स आत्मा' इति ॥

एष सम्प्रसाद इति यद्वाक्यं प्रजापतिविद्यायां पठ्यते तदे। दहरविद्यायामपि पठ्यते। तत्र सउत्तमः पुरुष इति पूर्वपक्षलिङ्ग नास्तीति तदिह नोदाहृतम्। तथाच प्रजापतिविद्यायां पर ज्योति रित्यस्य नारायणपरत्वे दहरविद्यायामपि तन्नारायणपरमेव पर्यवस्यतीति तस्यां श्रूयमा णाना मपहत पाप्मत्वादीनां स्पष्टब्रह्मलिङ्गानां परंज्योतिषोऽन्यत्रैवान्वय इति स्पष्टाऽस्पष्टब्र लिङ्गता। इति पादसङ्गतिः ॥

इद मधिकरणम् श्रीभाष्यकृतां प्रतिपक्षमिति तदीय सिद्धान्तापेक्षीकरणेनैव विशदम् ॥

अथ येशुद्धाद्वैतभाष्यकृत स्तेषामपीदं विपक्षमेव। तथाहि। अत्र मुक्तप्राप्यस्य परं ज्योतिष्ट्वनिर्णयेन प्राप्यप्रापकभेदस्य प्रकृताधिकरणसिद्धत्वा द्विषयवाक्ये 'अस्मा च्छरीरा त्समु त्थाये' ति ब्रह्मविद श्शरीरा दुत्क्रान्त्यभिधानेन केवलाद्वैतवाद्यनिष्टशरीरोत्क्रान्त्यभिधाना चेति दिक् ॥

अथ ज्योतिरधिकरणम् ३१

---

अथ अर्थान्तरत्वादिव्यपदेशाधिकरणम् ३२

प्रजापतिविद्यान्तर्गतवाक्यार्थनिर्णयानन्तरं प्रजापतिविद्यानन्तरपठिताऽऽकाशवाक्यार्थ निर्णयार्थ मधिकरणान्तर मारभ्यते ॥

अत्र विषयवाक्ये आकाशस्य नामरूपनिर्वोढृत्वं ब्रह्मणो नामरूपाभ्यामन्यत्वञ्च प्रतीयते। अत्र आकाशस्य ब्रह्मणोऽन्यत्वंप्रतीयते वा नवा। यदि प्रतीयते तर्हि निर्वोढृत्व माधारत्वंवा उत व्याकर्तृत्वंवा। यद्याधारत्वं विवक्षितं तर्हि अय माकाशो जगदाधारो भूताकाश स्स्यात्। अथ व्याकर्तृत्वञ्च दिन्द्रादिनामरूपव्याकर्ता हिरण्यगर्भजीव स्स्यात् ॥

अथ यद्याकाशा द्ब्रह्मणो भेदप्रतीति र्नास्तिचे त्तर्हि आकाशशब्दनिर्दिष्टः परमेश्वरएव स्यादिति प्रकृते संशय स्त्रिकोटिक उपपद्यते। पूर्वकोटिद्वये तत्कर्तृकसकलनामरूपा स्पृष्टत्वेन तृतीयकोटौ सकलनामरूपनिर्वोढृत्वेनस्वनिर्वाह्यसकलनामरूपमध्यस्थत्वेनचोपासनेतिफलविशेषः ॥

अत्र आकाशः परमेश्वरो वियद्वा ? जीवोवा ? इति संशयः ॥

सर्वभूतावकाशप्रदानेन नामरूपनिर्वोढृत्वस्य वियति संभवात्। वियदिहाकाशः। अथवाजीवः 'अनेन जीवे नाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति तस्य नामरूपव्याकरणसंबन्धदर्शनात्। इत्येवं प्राप्ते ब्रूमः ॥

परमेश्वर एवाऽऽकाशशब्देन नामरूपनिर्वोढा श्रूयते अमृतत्वादितद्धर्म

---

क्रमेण पूर्वपक्षद्वय मुपपादयति — सर्वभूतेत्यादिना। सिद्धान्तयति — परमेश्वर एवेति। मौत्रहेतुं व्याचष्टे 'अमृतत्वादितद्धर्मव्यपदेशा' दिति। आकाशशब्दनिर्दिष्टः परमेश्वर एव प्रकृता त्प्रत्यगात्मनोऽर्थान्तरत्वनामरूपनिर्वोढृत्वनामरूपाऽस्पृष्टत्वाऽमृतत्वादि व्यपदेशा दित्यर्थः ॥

अत्रनामरूपनिर्वोढृत्वस्य हिरण्यगर्भसाधारणत्वा त्तत्र मुख्यं ब्रह्मलिङ्गम् ॥

अथ नामरूपमध्यवर्तमानत्वमपि नतटाकद्वयमध्यवर्तिवृक्षतुल्यम्। तटाकयो र्मध्यइव नामरूपयो र्मध्येऽ वकाशस्याऽप्रसिद्धत्वात्। किन्तु मध्यस्थस्येवाऽन्यतरपक्षपाताभावेन तदुभया स्पृष्टत्वम्। तदपि नमाकल्येन युज्यते। शिवभवादिनामभिः नीलकण्ठत्वादिविशिष्टविग्रहैश्च नित्ययुक्ते परमेश्वरे तदभावात्। किन्तु व्याकर्तव्यत्वेन पूर्ववाक्यसन्निहितैतत्पदपरामृष्टे देवमनुष्या दिशब्दै स्तद्वाच्यरूपै र्ब्रह्माण्डान्तर्गतै स्तनुभुवनभोगस्थानभोगोपकरणै श्चासाधारणमम्बन्धराहित्यम्। एवमिदं लिङ्गद्वयं हिरण्यगर्भसाधारणमिति शङ्काकलुषितमिति तद्विहाय प्रथममृतत्व मुपात्तम्। आदिशब्देनात्मत्वब्रह्मत्वादयो गृह्यन्ते। नामरूपनिर्वोढृत्वमपि 'तस्मादेतद्ब्रह्म नामरूप मन्नञ्च जायते। सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवद न्यदास्त' इति परमेश्वरस्यैव मुख्यमिति श्रुतम्। तथाते यदन्तरेत्येतदपि यस्य मध्ये तेनामरूपे वर्तेते यदाधार कोयं नामरूपप्रपञ्चइति व्याख्याने परमेश्वराऽसाधारणमेव भवति। तस्मादमृतत्वादीत्यत्र अमृतत्वस्यादिभूतयोः नामरूपनिर्वोढृत्वतदस्पृष्टत्वयोः तत्पूर्वयोरपि ग्रहणम्। ननु प्रयोगोयं क्लिष्ट इतिचेदुच्यते। यथापाणिनिर्गाङ्कुटादिसूत्रेकुटादिभ्य इतिपदं बहुव्रीहितत्पुरुषयोरेकशेषं प्रायुङ्क्त तत्र कुटादिपदं तद्गुणसंविज्ञानबहुव्रीहिणा कुटतिधातोस्तदनन्तरपठितधातूनाञ्च, यथाग्राहकं तथा ततः प्राक्पठितस्यलिखतिधातोरपिकुटस्यादिःकुटादिरिति तत्पुरुषाश्रयणेनग्राहकम्। अन्यथा लिखतिधातोःपरेषा मेवं ङित्वाणितां प्रत्ययानां ङिद्भाव विधानासिद्धया लिखितु मलिखिदित्यादि

व्यपदेशात् । नहि आकाशेऽमृतत्वादिकं संभवति जीवेषु । अतः परमेश्वर एवाऽकाशः ॥

ननु नत्वमस्यादि नेवयज्यपदेशा न प्रत्यगात्मनाऽर्थान्तरभूतः परमेश्वरोऽस्तीत्याशङ्क्याह ॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १–३–४३ ॥

'प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् । प्राज्ञेनाऽऽत्मनान्वारूढ उत्सृजन्याति इति सुषुप्त्युत्क्रान्त्योर्बाह्यान्तरविषयज्ञानशून्याज्जीवात्तदानीमेव प्राज्ञतयाभेदेन व्यपदेशाज्जीवादर्थान्तरभूतः परमेश्वरोऽस्ति । सएवाऽत्राऽऽकाशः ॥

---

रूपामिद्धिः प्रसज्येत । तस्मादमृतत्वादीत्यादिपदेन पूर्वोक्तग्रहणं नविरुध्यते । अत्रमौलहेतोरयमर्थः । अर्थान्तरत्वं जीवादाकाशाच्च भिन्नत्वं तस्मात् जीवाकाशव्यावर्तकनामरूपनिर्वोढृत्वादिधर्मव्यपदेशादिति ॥

उत्तरसूत्रमवतारयितुं शङ्कते — नन्विति । ऐक्योपदेशादिति । द्वैतप्रतिषेधाच्चेत्यर्थः । नप्रत्यगात्मनोऽर्थान्तरभूतइत्यनेन अर्थान्तरत्वरूपहेतोरसिद्धिरुक्ता । यद्यपि जीवातिरिक्तपरमेश्वराभावशङ्कानिराकरणं नास्मिन्नधिकरणे विशिष्योपयुज्यते । सर्वेष्वप्यधिकरणेषु तस्योपयुक्तत्वात् । तथाऽपि प्रपञ्चेनतच्छङ्कानिराकरणार्थमुत्तरः पादः प्रवर्तिष्यत इति तद्रूपोद्घातरूपमुत्तरसूत्रद्वयं प्रवृत्तमित्यार्थः ॥

प्राज्ञेनेत्यादि सम्परिष्वक्तवाक्यं सुषुप्तिविषयम् । प्राज्ञेनेत्याद्यन्वारूढवाक्यमुत्क्रान्तिविषयम् । उत्सृजन् शरीरमित्यर्थः । तदानीमेव प्राज्ञतयेति । यदा जीवस्य बाह्याभ्यन्तरविषयज्ञानशून्यत्वं तदैव प्रकर्षेण ज्ञातृत्वरूपं सर्वज्ञत्वं नमेभवति । तस्मादुभयोरात्यन्तिकभेदसिद्धिरितिभावः । व्यपदेशादित्यनुवर्तते । एवं सुषुप्तावुत्क्रान्तावपि जीवाद्भेदेन परमेश्वरस्यव्यपदेशात् जीवादर्थान्तरभूतःपरमेश्वरोऽस्तीति । इदं साध्यहेतुसामङ्गत्या छन्दम् । सर्वज्ञो मुक्तजीवः । परिव्राजकस्यादि त्याशङ्कानिराकरणार्थं सूत्रम्॥

## पत्यादिशब्देभ्यः ॥ १—३—४४ ॥

परिष्वङ्गकेप्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्योऽयमन्यएव जीवादित्यव गम्यते ।' सर्वस्यवशी सर्वस्येशानः सर्वस्याऽधिपतिः । एवं स न साधुनाकर्मणा भूयान् नोएवाऽसाधुनाकनीयान् एषसर्वेश्वर एषभूताधिपति रेषभूतपालः' इत्यादिकमुत्तरत्रहि श्रूयते । पशूनांपतये वृक्षाणांपतये इत्यादिभिश्च परमेश्वरस्य जगदाधिपत्यं प्रसिद्धम् नकुत्राऽपि जीवस्य । तस्मादयं जीवादन्यः परमेश्वरएवाकाशः ॥

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ३२

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये प्रथमाध्यायस्य तृतीयःपादः ॥

---

परिष्वङ्गक इति । उत्तरत्र श्रयमाणाः सर्वस्याऽधिपतिरित्यादिशब्दाः प्राज्ञएव श्रूयन्ते । ततः परिष्वङ्गकतया श्रुतः प्राज्ञः परमेश्वर एव । नतु मुक्तजीवः । तस्मिन् जगद्व्यापाराभावेन सर्वेश्वरत्वादीना मनन्वया दित्यर्थः । सर्वस्य वशीति सर्वस्याऽपि तदधीनत्व मुक्तम् । सर्वस्येशानइति सर्वस्याऽपि तन्नियम्यत्व मुच्यते सर्वस्याऽधिपतिरिति सर्वरक्षकत्वम् । सर्वेश्वरइति सर्वनियन्तृत्वम् भूताधिपतिरिति भूतरक्षकत्वम् । भूतपालकइति भूतपालकत्वम् । रक्षणमिष्टप्रदानमुखं पालनमनिष्टनिवारणमिति विशेषः । जीवातिरिक्त परमेश्वराभावशङ्कानिराकरणसिद्ध मधिकरणार्थ मुप संहरति — तस्मा दिति ॥

इद मधिकरणं विशिष्य जीवेश्वरभेदनिर्धारणात्मकतया शुद्धाद्वैतिनां विरुद्धमिति विशद मेव तथा श्रीभाष्यकृतामपि विषयवाक्ये भूतपतित्वेशानत्व सर्वेश्वरत्वादि परमेश्वराऽसाधारणलिङ्ग प्रतिपादकतयेति न बहुवक्तव्य मितिदिक् ॥

**इति अर्थान्तरत्वाधिव्यपदेशाधिकरणम् ३१**

इति श्रीनागलिङ्गशिवाराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां श्रीशिवचिन्तामणिप्रभाख्यायां श्रीनीलकण्ठभगवत्पादीयब्रह्म सूत्रभाष्यव्याख्यायां प्रथमाध्यायस्य

तृतीयः पादः

श्री शिवाय गुरवे नमः

श्री मेधादक्षिणामूर्तये नमः

# श्री नीलकण्ठभगवत्पादाराध्यकृतौ शारीरकब्रह्ममीमांसा सूत्रभाष्ये प्रथमाध्यायस्य

## चतुर्थः पादः

अथ आनुमानिकाधिकरणम् ३३

पूर्वपादे स्पष्टाऽस्पष्टब्रह्मलिङ्गप्रतिपादकवाक्यानि विचारितानि। इहाऽस्पष्टब्रह्मलिङ्गानि कतिचन वेदान्तवाक्यानि विचार्यन्ते ॥

**आनुमानिक मप्येकेषा मितिचे न्न शरीररूपक विन्यस्तगृही तेः दर्शयतिच ॥ १–४–१ ॥**

एकेषां कठानां शाखाया माम्नायतेऽस्यविषयः 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धि र्बुद्धे रात्मा महान्परः। महतः परमव्यक्त मव्यक्तात् पुरुषः परः। पुरुषान्नपरंकिंचि त्साकाष्ठा सा परा गति' रिति ॥

---

पूर्वोत्तरपादार्थकथनेन सङ्गतिं सूचयति — पूर्वपाद इति। प्रथमे पादे स्पष्टब्रह्मलिङ्गानि वाक्यानि विचारितानि। द्वितीयेऽनतिस्पष्टलिङ्गानि। तृतीये स्पष्टाऽस्पष्टब्रह्मलिङ्गानि। चतुर्थेत्व स्मिन्नस्पष्टब्रह्मलिङ्गानि वाक्यानि विचार्यन्तत इति ब्रह्मलिङ्गानां स्थूल- सूक्ष्म - सूक्ष्मतर - सूक्ष्म तमत्वक्रमेण पादा अवतारिता इति भावः ॥

पादत्रयेण ब्रह्मणो जगत्कारणत्वे वेदान्तानां तात्पर्यम्प्रसाध्य ईक्षत्यधिकरणे संक्षेपतो निराकृतस्य प्रधानकारणवादस्य सविस्तरं निराकरणेनाऽस्मिन्पादे ब्रह्मकारणत्वं स्थिरीक्रियते ॥

एकेषामिति पदं विवृण्वन् विषयवाक्य मुदाहरति — इन्द्रियेभ्य इत्यादिना। अत्र महतः परत्वेनोच्यमानमिति विशेषणेन 'महदव्यक्त' मिति साङ्ख्यस्मृति तत्वक्रमप्रत्यभिज्ञा सूचिता। अव्यक्तशब्दवाच्य मित्यनेनाऽव्यक्तशब्दस्य प्रधानेरूढत्वेन स्वारस्यमितिसूचितम्।

अत्र महतः परत्वेनोच्यमान मव्यक्तशब्दवाच्यं कापिलं प्रधानं शारीरंवा इति संशयः॥

प्रधान मिति पूर्वपक्षः कथम्? महदव्यक्तपुरुषाणां साङ्ख्यतन्त्र एव प्रसिद्धेः। तेषा मिह श्रुतौ प्रत्यभिज्ञानाच्च पुरुषेण न कश्चि दिह प्रसङ्गः। तस्मात् सांख्यं प्रधानमेव नवपुरिति॥

सिद्धान्तः पूर्वत्र "आत्मानं रथिनं विद्धि शरीरं रथमेवतु, बुद्धितु सारथिं विद्धि मनः प्रग्रह मेव च॥ इंद्रियाणि हया नाहु र्विषयां स्तेषु गोचरान्।" इत्यात्मशरीरादि पूपासनोपायेषु वशीकार्यत्वाय रथिरथादिरूपक विन्यस्तेषु परिशिष्टस्य शरीरारूथरूपक विन्यस्तस्याऽव्यक्तशब्देन गृहीतेः

---

'शरीरं वेति' रथिरथभावकल्पनायां 'आत्मानं रथिनं विद्धि शरीरं रथमेव'चेति श्रुतौ प्रयुक्तस्य शरीरपदस्य प्रयोगेण तस्यां श्रुता वात्मशरीरादीनां रथिरथभावकल्पनायां शरीरस्य प्रकृतत्वं शरीरातिरिक्तना मिहेन्द्रियादिशब्दै र्गृहीतत्वेन शरीरस्य परिशिष्टत्वञ्च सूचितम्। पूर्वपक्षं स्थिरीकर्तुं पृच्छति — कथ मिति। महदव्यक्त पुरुषाणा मिति। अत्राऽयम्भावः। महदव्यक्तं पुरुष इतिक्रमेण उत्तरोत्तरं पराणि तत्त्वानि साङ्ख्यतन्त्र एव प्रसिद्धानि अत स्तेषामिह प्रत्यभिज्ञा नवारयितु शक्या। रूढिरप्यव्यक्तशब्दस्य प्रधाने प्रबला पूर्वपक्ष मुपसंहरति— तस्मा दिति। साङ्ख्यं प्रधानमिति। सङ्ख्यया बुद्ध्या कल्पितं साङ्ख्यभि त्यानुमानिक पदविवरणम। साङ्ख्यानुमानकल्पितं परमेश्वरानधीनं स्वतन्त्रं प्रधान मिहाऽव्यक्तशब्दार्थ इति भावः। सिद्धान्तयति — वपु रित्यादिना पूर्वत्रेति। अत्राऽयम्भावः। इन्द्रियेभ्यः परा इति वचना त्पूर्वम् आत्मा रथित्वेन शरीरं रथरूपत्वेन बुद्धि स्सारथित्वेन इन्द्रियाणि तुरगत्वेन मन स्तुरगरज्जुत्वेन शब्दस्पर्शरूपरसगन्धा स्तदीयमार्गत्वेन च रूपिताः। एव मेतत्कार्यद्वय नशोभार्थम् मुक्तिफलोपासनोपयोगितया वशीकरणार्थैवे त्यध्यात्मप्रकरणा दवगम्यते। एतानि वशीकृतान्येव ह्युपासनोपकरणानि भवितु मर्हन्ति। ततएवच "यस्त्वविज्ञानवान्भवति। अयुक्तेन मनसा सह। तस्येन्द्रियाण्यवश्यानि दुष्टाश्वाइव सारथे", रिति। "यस्तु विज्ञानवान्भवति युक्तेन मनसा सह। तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथे" रित्यादिना वशीकृताना मीन्द्रियादीनां साधकत्वादिकमाम्नातम्। एवं वशीकरणाय पूर्वत्र रथिरथादिरूपत्वेन विन्यस्तानां षण्णाम्मध्ये इन्द्रियेभ्य इत्यादिविषयवाक्ये शरीराऽतिरिक्ताना मिन्द्रियादिशब्दै र्गृहीतत्वेन पूर्वं रथत्वेन विन्यस्तस्य परिशिष्टस्य शरीरस्यैव प्रकृतेऽव्यक्तशब्देन ग्रहण मुचित

'इन्द्रियेभ्यः पराह्यर्था' इत्यारभ्य 'साकाष्ठा सा परा गति' रित्यन्तेन वशीकार्यत्वाय ह्युत्तरोत्तरं परउच्यते।तदेतत्, 'यच्छे द्वाङ्मनसी प्राज्ञ स्तद्यच्छेत् ज्ञान आत्मनि। ज्ञान मात्मनि महति नियच्छे त्तद्यच्छे च्छान्त आत्म' नीति श्रुति रेवाऽग्रेदर्शयति। तस्मादव्यक्तशब्देन वपुरत्र प्रतिपाद्यम्॥

ननु प्रधान मव्यक्तमिति प्रसिद्धं कथमिह शरीरमुच्यते? इत्या शङ्काया माह॥

## सूक्ष्मन्तु तदर्हत्वात् ॥ १-४-२ ॥

---

मिति। एवञ्च कठानां शाखायां कठवल्ल्यां "इन्द्रियेभ्यः परा ह्यर्थाः" इति विषयवाक्ये अव्यक्तशब्देन प्रधानमुच्यत इतिचेन्न। शरीरं रथमेवचेति रूपकविन्यस्तस्य शरीरस्य ग्रहणादिति सूत्रार्थः उत्तरोत्तरं परा उच्यन्त इति। इन्द्रियेभ्य इतिवाक्ये हयत्वेन रूपितेभ्य इन्द्रियेभ्यः मार्गत्वेनरूपिता विषयाः प्रबलाः। विषयसन्निधौ वशिनोपीन्द्रियाणा न्दुर्जेय त्वात्। विषयेभ्योऽपि तुरगरज्जुत्वेन रूपितं मनः बलवत्तरं। मनसोऽनवधाने विषयासन्निधे रनुप योगात्। ततो सारथित्वेन रूपिता बुद्धिः परा बलवत्तमा। अध्यवसायाभावे मनसोऽकिञ्चित्कर त्वात्। ततोऽपि महान् आत्मा जीवः प्रबलः कर्तृत्वेन प्रधानत्वात्। अत्र सर्वस्याऽपि जीवे च्छाधीनतया जोवो महानिति विशेषितः। अस्मादप्यव्यक्तं शरीरं बलवत्तरं जीवकर्तृक सकल पुरुषार्थ प्रवृत्तीनामपि शरीरायत्तत्वात्। तस्मादपि सर्वान्तर्यामी परमेश्वरः परः परात्पर स्स र्वोत्कृष्टः षडध्वातीतत्वात्। 'परात्तु तच्छ्रुते' रिति जीवात्मन स्तदधीनकर्तृत्वाच्चेत्यर्थः दर्शयतीति सूत्रशेषं व्याचष्टे। तदेतदिति इतिश्रुतिरिति यच्छेदित्यादि श्रुतिः वशीकार्यत्वाय 'एषसर्वेषु भूतेषु गूढोऽऽत्मा नप्रकाशते। दृश्यते त्वग्र्ययाबुद्ध्या' इति अजितेन्द्रियाणां परमेश्वरस्य दुर्दर्शत्वमुक्त्वा यच्छेदित्यादिकमुच्यते। वाचं मनसि नियच्छेत्। वागादीनीन्द्रियाणि मनसि नियच्छेत्। तन्मनो ज्ञाने बुद्धौ नियच्छेत्। बुद्धिं कर्तर्यात्मनि नियच्छेत्। तद्य च्छेच्छांत आत्मनि तंकर्तारं परमेश्वरे नियच्छेदित्यर्थः। एवमिन्द्रियादीनां वशीकरणत्वाय शरीरादीनां रथादित्वेन रूपितत्वात्। शरीरेऽतिरिक्ते ष्विन्द्रियादिशब्दैर्गृहीतेषु परिशिष्टत्वा च्छरीरमेवाऽव्यक्तशब्देन निगद्यते नप्रधानमित्यर्थः। ग्रहणं युक्तमित्युपसंहरति॥

उत्तरसूत्र मवतारयितुं शङ्कते—नन्विति। शरीरस्य व्यक्तत्वादव्यक्तपदेन तद्ग्रहणमयुक्त मिति शङ्काऽभिप्रायः।

सूक्ष्म मित्यव्यक्तमुच्यते अव्यक्तमेव शरीरावस्थं कार्यार्हत्वा दव्यक्त शब्देनोच्यत इति युक्तम् ॥

युक्त्यन्तरमुच्यते ॥

## तदधीनत्वादर्थवत् ॥ १–४–३ ॥

आत्मशरीरादिकं परमेश्वराधीनतयाऽर्थवद् दुपासननिवृत्तये भवति। परमेश्वरोऽन्तर्यामी सर्वमात्मादिकं प्रेरयन्नेवोपासनोपायत्वेन वशीकार्यकाष्ठेति प्राप्यत्वेन सा परागतिरिति प्रोच्यते ततोऽव्यक्तमिह शरीरमेव।

---

सूक्ष्ममिति प्रकरणेन पारिशेष्येणच अव्यक्तमेव सूक्ष्मशब्देनोच्यत इत्यर्थः। सूत्रं योज यति। अव्यक्तमेवेति सूक्ष्मस्य प्रधानस्य स्थूलावस्थाविशेषः शरीरम्। तस्मा त्सूक्ष्मावस्था वाचकेनाऽव्यक्तपदेन स्थूलावस्थं तदेव लक्ष्यते पारिशेष्येण शरीराव्यक्तपदयो रेकार्थकत्वावश्यं भावादितिभावः ॥

ननु तयोरेकार्थकत्वे शरीरपदमेवाऽव्यक्तलक्षकं कुतो नस्यादित्याशङ्कां निराकरोति — तद र्हत्वादिति। कारणस्याऽस्पष्टतयाऽव्यक्त शब्दार्हत्वात् तेन कारणेन व्यक्तं शरीरं लक्ष्यते। नतु कार्येण कारणमितिभावः ॥

उत्तरसूत्रमवतारयति। युक्त्यन्तरमिति ॥

अर्थवदित्यस्य विशेष्यमध्याहृत्य सूत्रार्थमुक्त्वा तस्य युक्त्यन्तरपरत्वे तात्पर्यमाह— परमेश्वरोऽन्तर्यामीति। उपासनोपायतया वशीकार्येषु सर्वोत्तरतया परमेश्वरश्श्रुतावुच्यते। साका ष्ठेति। तस्य तथाविधत्वे कारणमाह — सर्वान्तर्यामिण इति। तेन प्रेर्यमाणस्य सर्वस्याऽपि तदधीन स्यैव शरीरेन्द्रियादे रुपासन निर्वर्तन क्षमत्वादित्यर्थः, एवञ्च यानि वशीकार्याण्यपेक्ष्य परमेश्वरस्योत्तरावधित्वं प्रदर्शयितु मिष्यते तेषां कार्त्स्न्येनाऽनुपादाने तदपेक्षितोत्तरावधित्वस्य प्रदर्शयितु मशक्यतया केनचित्पदेन शरीरस्य ग्राह्यतया प्रकृतेऽव्यक्तपदेन पारिशेष्या त्तस्यैव ग्रहण मुचितमितिभावः। प्राप्यत्वेनचेति। परमेश्वरः प्राप्यत्वेनचोच्यते सा परागतिरिति॥

अत्र यद्यपि श्रीभाष्यकृतः अस्यामेवोप निषदि 'सोऽध्वनः पार माप्नोति तद्विष्णोः परमं पद' मिति वचनस्य वैष्णवपदपरमत्व प्रदर्शन परतया विवृण्वन्ति - तथाऽपि विष्णोः नाराय णात्परमं सर्वोत्कृष्टं तत्पदं शैवमेवेति भाष्यकारै र्निराकृतत्वा दुभयनिर्देशे पञ्चमीनिर्देशो बलीया निति वैयाकरणपरिभाषा विरुद्धत्वाच्च तद्विवरणं स्वगोष्ठीनिष्ठानामेव तुष्टिकरमिति दिक् ॥

## ज्ञेयत्वावचनाच्च ॥ १-४-४ ॥

यदि साङ्ख्यं प्रधानमत्राऽव्यक्तं तदाऽस्य ज्ञेयत्वमुच्येत, नच तदस्ति अतो न कापिलमव्यक्तम् ॥

ज्ञेयत्वमप्यस्योक्तमस्तीत्याशङ्क्य परिहरति ॥

## वदतीतिचेन्न प्राज्ञोहि प्रकरणात् ॥ १-४-५ ॥

'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसंनित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' इत्यग्रेतनमन्त्रोऽस्याऽपि ज्ञेयतां वदतीतिचेन्न। 'यच्छेद्वाङ्मनसी प्राज्ञः' इति प्राज्ञस्यैव पूर्वं प्रकृतत्वात् अतोऽव्यक्तं शरीरमेव ॥

---

अथ ये तावत् महदव्यक्तादिक शब्दश्रवणमात्रेण कापिलतन्त्रस्य वैदिकत्व मभिमन्यन्ते तान्प्रत्याह —

'दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः भौतिकास्तु शतं पूर्ण सहस्रं त्वाभिमानिकाः बौद्धा दशसहस्रन्तु तिष्ठन्ति विगतज्वराः। पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः पुरुषं निर्गुणं प्राप्य कालसङ्ख्या नविद्यत' इति वदन्ति। यदि महतः परमव्यक्तमितिवाक्यम् साङ्ख्यतन्त्रस्य मूलस्यात्तदा निर्गुणपुरुषान्तरज्ञाना त्कैवल्यमिति वदतां साङ्ख्याना मभिमतं प्रधानस्य मुमुक्षुज्ञेयत्वमप्यत्रोच्येत। नहि तदुच्यते एवं प्रधानस्य मुमुक्षुज्ञेयत्वस्याऽनुक्तत्वादप्यव्यक्तशब्देन शरीरमेवोच्यते न प्रधानमित्यर्थः। ननु ज्ञेयत्वावचन मसिद्धम्। अशब्दमस्पर्श मित्यादिना प्रधानस्य ज्ञेयत्व प्रतिपादनादिति शङ्कानिराकरण परतयोत्तरसूत्र मवतारयति — ज्ञेयत्व मित्यादिना ॥

अशब्दमित्यादिका श्रुतिः प्रधानमेव वदतीतिचे न्न। 'यच्छेद्वाङ्मनसी प्राज्ञ' इति प्राज्ञशब्देन परमेश्वरस्यैव प्रकरणेन प्रकृतत्वा त्तस्मादव्यक्तशब्दितं शरीरमेव न प्रधान मित्यर्थः। प्रधानस्य शब्दादि रहितत्याऽशब्द मित्यादिमन्त्रेण तदेव निगद्यत इति शङ्का - अक्षरवाक्ये परमेश्वरस्याऽपि शब्दादिरहितत्वोक्त्याऽयम्मन्त्रः परमेश्वरपरएव प्रकरणादिति परिहारः ॥

प्रधानस्य प्रसङ्ग एव नास्तीत्याह ॥

## त्रयाणामेवंचैवमुपन्यासः प्रश्नश्च ॥ १–३–६ ॥

त्रयाणा मुपास्योपासनोपासकानामेवाऽत्र प्रकरणे ज्ञेयतया प्रश्न उपन्यासश्च श्रूयते। न प्रधानादेः। यथा 'तं दुर्दर्शं गूढ मनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देव मत्वा धीरो हर्षशोकौ जहाति' इत्यादिरुपन्यासः 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नाऽय

- -

ननु प्रकरणस्य परमेश्वरविषयत्वेऽपि यथाऽस्मिन्नेव प्रकरणे 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्ये प्रपद्यन्ते यथाकर्म यथाश्रुत' मिति जीवस्य गतिर्निगदिता। तथैवाऽशब्दमित्यादिमन्त्रेण प्रधानं निगद्यता मित्याशङ्क्याह —

त्रयाणामेवंचैवमुपन्यासः प्रश्नश्च। त्रिशब्दार्थ माह — उपास्योपासनोपासकाना मिति एवमितिपदस्य विवरणं ज्ञेयतयेति। उपन्यास प्रश्नविहित उपन्यासः प्रतिवचन मित्यर्थः। अत्र प्रतिवचनस्य उपास्योपासनोपासकरूप त्रितयविषयत्वदर्शनेन प्रश्नोऽपि तत् त्रितयविषयएवेति स्फुट मवगन्तव्यमित्यर्थः। सूत्रे प्रतिवचनस्यैव पुरस्तान्निर्दिष्टत्वा त्तदनुरोधेन प्रतिवचनमेव प्रथममुदाहरति — अध्यात्मयोगेनेति। इत्यादि रित्यादिशब्देन 'मत्वा धीरो हर्षशोकौ जहाती' ति चतुर्थपादो गृह्यते अत्र देवम्मत्वे त्युपास्योपासनयोः 'अध्यात्म योगाधिगमेन धीर' इत्युपासकस्य मत्रोपन्यासो दृश्यते। अध्यात्मयोगः उपास्यस्वरूप साक्षात्कारविषयो योगः निदिध्यासनम्। येय प्रेत इति एतन्तत्रोपाख्यायते। वाजश्रवसो महर्षिः सर्ववेदसदक्षिणेन यज्ञे नेष्ट्वा जरद्गवीर्दक्षिणाः प्रयच्छन् बालेन नचिकेतसा पुत्रेणाऽनर्हं दक्षिणा दाननिमित्त क्रतुवैकल्यात् पितु रनिष्टमाशङ्कमानेन तदनिष्टं स्वात्म प्रतिपादनेनाऽपि क्रतु सम्पत्ति कारयित्वा निवारणीयमिति मन्यमानेन तात! मां कस्मै दास्यसीति पुनःपुनः पृष्टा बहुवारनिर्बन्ध सञ्जातकोपस्य मृत्यवे त्वा ददामीत्युक्तवतः वचनेन नचिकेता स्तथैव मृत्युलोकं गत्वा मृत्योर्द्वारि तिस्रो रात्री रनश्नन्नुषित्वा प्रवासागतेन मृत्युना ब्राह्मणो यदनश्नन् द्वारि स्थित इति भीतेन त्रीन्वरान्वृणीष्वेति पृष्टः प्रथमेन वरेण पितुस्सौमनस्यं द्वितीयेनाऽग्नि विद्याञ्च प्रतिलभ्य 'अथ येयं प्रेते विचिकित्सा अस्तीत्येके नाऽयमस्तीतिचैके एतद्विद्या मनुशिष्ट स्त्वयाऽहं वराणा मेषवर स्तृतीय इति पप्रच्छेति। अत्र 'येय प्रेतइति मृतजीव विषय प्रश्नस्य तन्दुर्दर्शं मिति परमेश्वर विषयोत्तरदाने नाऽस्या निषदः जीवब्रह्मैक्य परत्वं

मस्तीतिचैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेषवरस्तृतीयः' इति 'अन्यत्र धर्मा दन्यत्राऽधर्मा दन्यत्राऽस्मात् कृताऽकृतात । अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्व'देति च प्रश्नः । तस्मात् प्रकृतत्वादपि शरीर मेवाऽव्यक्तं, न प्रधानम् । किंच लिङ्गान्तरमप्यस्तीत्याह ॥

## महद्वच्च ॥ १–३–७ ॥

यथेह 'बुद्धेरात्मा महान्परः' इत्यत्र न तान्त्रिको महान्भवति महच्छब्दात्,

---

शुद्धाद्वैत भाष्य कृतोऽभिमन्यन्ते तद्विस्तरेण ब्रह्मपथे केवलाद्वैत प्रतिषेधं निराकृतमितिनेह अत्र येयं प्रेतइति प्रश्नः 'न प्रेत्य संज्ञास्ती' ति वाक्ये प्रेत्यशब्दप्रयोगानुसारेण प्रेतशब्दस्य प्रकर्षेणतः पुनरावृत्तिरहिताङ्गतिं प्राप्तइति योगेन मुक्तविषयत्वमङ्गीकृत्य मुक्त्यनन्तरानु बन्धि मलमायादि सकलपापक्षयपूर्वकं जन्ममृत्युभय शोकाद्यस्पृष्ट परमशिवलोकप्राप्ति मदात्मसद सद्भावविषयो वर्णनीयः तत स्तंदुर्दर्शमिति मन्त्र उपास्योपासनोपासकाना मनिर्मिक्षिप्तोपदेशः कृतः तत स्तदनुसारेण तत्त्रितयं विविच्य वक्तव्य मिति प्रश्नार्थो 'अन्यत्र धर्मा दन्यत्राऽधर्मा दन्यत्राऽ स्मात्कृताकृता' दिति तत्र अन्यत्रधर्मा दन्यत्राऽधर्मादिति वैषयिक हर्षशोकहेतु धर्मा धर्मविलक्षणस्य तदुभयप्रमाण हेतो रुपासनस्य प्रश्नः । अन्यत्राऽस्मात्कृताकृतादिति कृतमपि कर्म यस्याऽकृतप्रायं क्षणभङ्गुरफलं तस्मा दैहिकामुष्मिक कर्मानुष्ठान व्यग्रा दमुमुक्षो र्विलक्षणस्य पर मेश्वरोपासकस्य प्रश्नः ॥

अन्यत्र भूताच्च भव्याच्चेति भूता दुत्पन्ना दतीता द्वर्तमानाच्च भव्या द्भविष्यतश्च अन्यस्य देवादीनामपि दुरवगाहत्वेन विलक्षणस्योपास्यस्य प्रश्नः ॥

तत्त परं सङ्ग्रहेण ब्रवीमीति प्रतिवचनमुपक्रम्य ओमित्येतदित्यादिना उपासनसाधन प्रणवप्रशंसाद्वारा प्रणवेन ब्रह्मोपासने प्रदर्शिते 'नजायते नम्रियतेवा विपश्चि' दिति सामान्यत उपासकस्वरूपमुच्यते विशेषतश्च 'नायमात्मा प्रवचनेन लभ्यो नमेधया बहुनाश्रुतेन, यमे वैष वृणुते तेन लभ्य' इति परमशिवानुग्रह कटाक्षविषयएव उपासनायां मुख्योऽधिकारी । तस्माएव परमशिव स्स्वात्मानं प्रकाशयतीत्युच्यते उपास्यस्वरूपंतु 'अणोरणीया' नित्या दिना प्रपञ्चितम् । तस्मादुपास्योपासनोपासकानां त्रयाणामेवाऽत्र निरूपणीयत्वा त्साङ्ख्यतन्त्र प्रसिद्धस्य प्रधानस्य नाऽत्राऽवकाश इति भावः । सूत्रान्तर मवतारयति — लिङ्गान्तरमिति अव्यक्तं न प्रधानमिति साध्ये हेत्वन्तरमुच्यत इत्यर्थः ॥

'बुद्धे रात्मा महान्पर' इत्यत्र यथा आत्मशब्द सामानाधिकरण्या न्महच्छब्देनाऽणुरपि

तथा अव्यक्तशब्दादपि न प्रधानमिति निर्णयः ॥

इत्यानुमानिकाधिकरणम्

---

अथ चमसवदधिकरणम् ३४

अप्रकृतत्वा दिह न प्रधानप्रस्ताव इति भवतु । अन्यत्र प्रधानमेव कारणत्वेन श्रूयत इत्याशङ्कयाऽधिकरणान्तर मिद मारभ्यते ॥

## चमसवदविशेषात् ॥ १–४–८ ॥

श्वेताश्वतरोपनिषदि श्रूयते अरयत्रिषयः ' अजा मेकां लोहित शुक्ल कृष्णां बह्वीः प्रजा स्सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहा त्येनां भुक्तभोगा मजोऽन्यः ' इति ॥

इह सर्वप्रपंचकारणत्वेन जन्मरहितत्वा दजेति श्रूयमाणा प्रकृतिः । सांख्यसिद्धा? परावा? इति संशये सांख्यसिद्धेति वक्तुं युक्तम् । अजामिति

---

जीवो गृह्यते न कापिलतन्त्रसिद्धम्महत्तत्वम् । तथैवाऽव्यक्तशब्देन शरीरमेव गृह्यते न प्रधान मित्याशय ॥

इत्यानुमानिकाधिकरणम् ॥ १ ॥

---

चमसवदधिकरणम् ॥ ३४ ॥

पूर्वाधिकरणेन प्रत्युदाहरण सङ्गतिन्दर्शय न्नुत्तराधिकरण मवतारयति — अप्र कृतत्वादिति ॥

ननु - महतः परमव्यक्त मित्यत्राऽप्रकृतत्वा दव्यक्तशब्देन प्रधानं न निगद्यताम् । श्रुत्यन्तरेतु प्रधानमेव स्वातन्त्र्येण जगतः कारणत्वेनाम्नायत इति शङ्कानिराकरणार्थ मुत्तराधि करणमित्यर्थः ॥

विषयवाक्य मुदाहरति — अजामिति अत्र अजामिति मन्त्रोक्तायाः प्रकृतेः जन्म रहितत्वलिङ्गेन साङ्ख्यसम्मत स्वतन्त्रप्रकृतिपरत्व मुत परमेश्वरकारणकत्वलिङ्गेन परमेश्वराधीन

जन्माभाववचनात् , सर्वप्रजाकारणत्वाच्च , लोहितशुक्लकृष्णामिति वर्णोप लक्षितगुणत्रयावगमाच्च न तदन्यस्याः कस्याश्चिदेवंविधत्वं युक्तमिति प्राप्ते सिद्धान्तः ॥

न तन्त्रसिद्धा प्रकृतिरिह कारणत्वेनोच्यते। नहि जन्माभावमात्रेण तस्याएव प्रतीतिः। अर्वाग्बिलश्चमस इतिवत्। प्रकरणे विशेषाभावात्। यथा, इदं 'तच्छिर' इति चमसो विशेष्यते। यौगिकशब्दाद्विशेषऽप्रतीतिर्हि विशेषणाऽ पेक्षा। ततो न तान्त्रिकी प्रकृतिरिति तन्त्रसिद्धायाः प्रकृतेरन्या कीदृशीत्यत आह ॥

## ज्योतिरुपक्रमा तु तथाह्यधीयत एके ॥ १–४–९ ॥

ज्योतिरिति परमेश्वरउच्यते। परमेश्वरकारणिकेयमजाप्रकृति रुच्यते। तथाहि परमेश्वरकारणिकाया एव प्रतिपादकं तैत्तरीया स्तत्स्वरूपमन्त्रमधी

---

प्रकृति परत्व मिति संशयन्दर्शयति इहेत्यारभ्य परावेत्यन्तेन। पूर्वपक्ष माह — साङ्ख्यसिद्धेत्या दिना। सर्वप्रजाकारणत्वादिति। 'बह्वीः प्रजा स्सृज्यमाना स्सरूपा' इति सकलकारणत्वस्य श्रवणात्। पूर्वपक्ष मुपसंहरति — इति प्राप्त इति। सिद्धान्तयति — न तन्त्रसिद्धाप्रकृति रिति। अर्वा ग्बिलश्चमस इतिवदिति। 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्न्य' इतिमन्त्रे चम्यते अनेनेति योगेन भक्षणसाधनमात्रपरस्य चमसशब्दस्य 'इदं तच्छिर' इति प्रकरणे विशेषार्थबोधकवाक्यमिव नजायत इति योगेन जन्माभावमात्र परस्याऽजाशब्दस्य साङ्ख्यसम्मत प्रकृतिपरत्वे विशेषकाभावा दिति सूत्रोक्तहेतु र्व्याख्यातः ॥

ननु—पङ्कजादि शब्दा दभिमतविशेषार्थप्रतीति विशेषशब्दाभावेऽपि दृश्यते। तद्व दिहाऽपि विशेषकाभावेऽपि कुतो नस्यादि त्याशङ्क्याह — यौगिकादिति पङ्कजशब्दस्याऽ म्बुजे रूढ्या विशेषशब्दाभावेऽपि तस्माद्विशेषार्थ प्रतीतावपि केवलयौगिकशब्दा द्यौगिकार्था न्तरप्रतीते र्विशेषापेक्षतया प्रकृतेऽजाशब्देन न तन्त्रप्रसिद्धा प्रकृति र्गृह्यत इति सूत्रार्थ मुप संहरति — तत इति। अथ सिद्धान्ताभिमत प्रकृतावपि विशेषो नास्तीति दोषमाशङ्क्य तत्परि हारार्थत्वेनोत्तरसूत्रमवतारयति — तन्त्रसिद्धाया इति ॥

'तं देवा ज्योतिषां ज्योति' रिति प्रसिद्धेः ज्योतिश्शब्दः परमेश्वरपरइत्याह — ज्योतिरि त्यादिना। उपक्रमशब्दः कारणपर इत्याह परमेश्वरकारणिकेति हि शब्दं हेतुपरं दर्शयन् अजा

यते। 'अणोरणीया न्महतोमहीया' निति परमेश्वरमुपक्रम्य, 'सप्तप्राणाः प्रभवन्ति तस्मा' दित्यादिना प्रपञ्चस्य परमेश्वरादुत्पत्त्या तदात्मकत्वप्रतिपादनसमये ह्यजामिति पठन्ति। अतस्तत् प्रत्यभिज्ञानादियमपि परमेश्वरकारणिकेति निश्चीयते। अतो न तन्त्रसिद्धेति वादो युक्तः॥

ननु परमेश्वरकारणिकेत्यस्याः परमेश्वरकार्यत्वमुच्यते कथमस्यास्तादृश्या अजामितिवाद इत्याशङ्क्याह॥

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १—४—१० ॥

कल्पनेति सृष्टिरुच्यते 'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः' 'मायान्तु प्रकृतिंविद्या न्मायिनन्तु महेश्वर' मिति सृष्ट्युपदेशा दजात्वमहेश्वरकार्यत्वयोरविरोधः। तथाहि, प्राकृतप्रळयकाले नामरूपे विहायाऽविद्वस्तुरूपा मायाऽपि सूक्ष्मरूपेण महेश्वरस्य शरीरतया तिष्ठतीत्यजा; सृष्टिसमये नामरूपापेता तत्कारणिकेति। यथा आदित्यस्य सृष्टिसमये वस्वादिभोग्यरसाधारत्वेन मधुत्वं, कार्यत्वंच; तस्य पुनः प्रळयकाले मध्वादिव्यपदेशाऽ

---

मिनि मन्त्रस्य शाखान्तरे परमेश्वरकारणिकाया एव प्रकृतेः प्रतिपादकत्वेनाऽध्ययनादित्यर्थे सूत्रं योजयति — तथेति तु शब्दोऽवधारणार्थः एवमेवाऽङ्गीकर्तव्य मित्यर्थः जन्मराहित्य परमेश्वर सृज्यत्वयो र्विरोधमाशङ्क्य तदुत्तरत्वेनाऽनन्तरसूत्र मवतारयति। नन्विति॥

सृष्टिरिति। 'सूर्याचन्द्रमसौ धाता यथापूर्व मकल्पय' दित्यादौ कॢपेः सृष्टिपरत्व श्रवणादित्यर्थः। सृष्टिमुपपादयति — छन्दांसीत्यादिना। अत्र 'मायिनन्तु महेश्वर' मिति महेश्वरशब्दस्याक्यन्वेन लोकप्रसिद्धः परमशिवएव विश्वस्रष्टेति प्रदर्शितः। ननु — अस्मा न्मायीति वाक्यात् जन्मराहित्य परमेश्वर सृज्यत्वयो रविरोधोऽसिद्ध इत्याशङ्क्य ततस्तत्सिद्धिमुपपादयति — तथाहीति। मायीति जगत्कर्तुर्मायाविशिष्टत्वाम्नानेन सृष्टेः प्रागप्यविभक्तनामरूपा प्रकृति स्सूक्ष्मरूपेण महेश्वरस्य विशेषणतया तिष्ठतीत्यर्थदर्शनेन जन्मराहित्यं 'अस्मा' दिति पञ्चम्यन्तेन सर्गसमये मायारूपात् स्वविशेषणात् विश्वं सृजतीति प्रकृते र्विश्वोपादानत्व

महात्यन्तसूक्ष्मरूपेणावस्थाना दकार्यत्वंच मधुविद्यायां प्रतीयते, 'असौवा आदित्यो देवमधु नैवोदेता नाऽस्तमेतैकएव मध्येस्थाता इतिश्रुतेः। एवं प्रकृते रजात्वेश्वरकारणिकत्वयोरविरोधः। तस्मादजा न तन्त्रसिद्धा ॥

इति चमसवदधिकरणम् ३४

---

अथ संख्योपसंग्रहाधिकरणम् ३५

पुनरन्यत्र तन्त्रसिद्धानि पंचविंशतिसंख्यानि तत्वानि श्रूयन्त इत्याशङ्क्य तत्परिहर्तु मधिकरणान्तर मारभ्यते ॥

## न संख्योपसंग्रहादपि, नानाभावादतिरेकाच्च ॥ १–४–११ ॥

श्रूयतेऽस्य विषयः 'यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः। तमेव मन्य आत्मानं विद्वान् ब्रह्माऽमृतोऽमृत' मित्यत्र पञ्चपञ्चजनाः किं सांख्य

---

वर्णनेन सृष्टिसमये विभक्तनामरूपत्वात् 'प्रज्ञा च तस्मात्प्रसृता पुराणी' ति श्रवणाच्च तस्याः परमेश्वरकारणकत्वं चेत्युभयोरविरोध इत्यर्थः। मध्वादिवदिति दृष्टान्तांशं व्याचष्टे। यथेति यथा सूर्यस्य सर्गसमये मधुत्वकार्यत्वोदयास्तमयवत्त्वम् प्रळयसमये तद्राहित्यञ्च मधुविद्यायां श्रवणा त्तयोरविरोधः। तथा प्रकृतेऽपि विरोधो नास्तीत्यर्थः ॥

इति चमसवदधिकरणम् ३४ ॥

---

अथ संख्योपसंग्रहाधिकरणम् ॥ ३५ ॥

प्रत्युदाहरणसङ्गतिं दर्शयन्नुत्तराधिकरण मवतारयति—अन्यत्रेति। अजामिति मन्त्रे प्रकृतिश्रावणं परमेश्वराधीन प्रकृतिपरं नीयतां। बृहदारण्यके पञ्चविंशतेस्तत्वानां साङ्ख्यतन्त्र प्रसिद्धतत्त्वपरमेवेति तन्न कथमप्यन्यत्र नेतुमशक्यमिति शङ्कानिराकरणार्थत्वेनोत्तराधिकरण मवतारयति — पुनरन्यत्रेति ॥

विषयवाक्यमुदाहरति — 'यस्मि न्पञ्चपञ्चजना इति। यस्मिन्पञ्चेत्यादि मन्त्रमात्रस्य विचार्यत्वेऽपि 'प्राणस्य प्राण' मित्यादि वाक्यशेषस्य पञ्चजनशब्दापेक्षितार्थ सम्पादकत्वं सम्भवति

तत्वानि श्रुति सिद्धानि इति संशयः। पंचविंशतिसांख्यायाः सांख्यशास्त्र प्रसिद्धत्वात् अत्र तदवभासात् पंचपंचजना इति तान्येव प्रतिपाद्यानीति प्राप्ते ब्रूमः। पंचपंचेति पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न तान्त्रिकाणि तत्वानि; यस्मिन्निति यच्छब्दनिर्दिष्ट परमेश्वराधारत्व ममीषां प्रतीयत इति तेभ्य एतेषां पृथग्भावात् आकाशस्य पृथङ्निर्देशेन तत्वातिरेकाच्च। तत्वातिरेक स्तत्वानामधिकसङ्ख्यात्वम्। अतोऽत्र न पंचविंशतितत्व प्रसंगः किंच पंचविंशतिसङ्ख्योप सङ्ग्रहोऽपि न युक्तः 'दिक्सङ्ख्ये संज्ञाया' मिति संज्ञाविषयोऽयं समासः तस्मात् पञ्चजनानाम केचित पञ्चपञ्चजना

---

नवेति तादर्थ्येन विचार्यत्वमस्ति तस्य तत्समर्पकत्वमसम्भवे तान्त्रिकार्थग्रहणस्य आनुमानिकाधिकरणे प्राकरणिक वाक्यान्तर समर्पितार्थग्रहण सम्भवे तान्त्रिकार्थ ग्रहणस्यैवाऽयुक्तत्वात्। तस्माद्वाक्यशेषस्य पञ्चजन शब्दापेक्षितार्थसम्भवाऽसम्भवाभ्यां संशयं दर्शयति — अत्रेति — पूर्वपक्ष मुत्पादयति पञ्चविंशतिसङ्ख्याया इति। पञ्चपञ्चजना इति वाक्येन पञ्चकृत्व आवृत्ताः पञ्चजना इत्यर्थे पञ्चविंशति सङ्ख्याकत्वावभासात् पञ्चविंशतिसङ्ख्याक तत्वानां साङ्ख्यतन्त्रएव प्रसिद्धत्वा दनेनवाक्येनसाङ्ख्याभिमता एव पदार्थाः निगद्यन्त इत्याशयः। सिद्धान्तयति — इहेति अत्र वाक्ये पञ्चपञ्चेति पञ्चद्वय श्रूयते - न तेन वस्तुत. पञ्चविंशतिसङ्ख्या प्रतीतिरेव नास्ति। तुष्यतुन्यायेन तदभ्युपगमेऽपि पञ्चविंशतिसङ्ख्यया सङ्ख्येयाना मुपसङ्ग्रहादपि तदुपसङ्गृहीतानि तत्वानि साङ्ख्यतन्त्रसिद्धानीति नसिद्ध्यतीति प्रतिज्ञा। तत्र हेतुः नानाभावादिति हेतुं विवृणोति। यस्मिन्निति। नानाभावः पृथक्त्वम। पृथक्त्वञ्चेह परमेश्वरप्रतिष्ठितत्व रूपमेतेषां वैलक्षण्यम। यस्मि न्पञ्चपञ्चजना आकाशश्च प्रतिष्ठित इति सङ्ख्येयानां परमेश्वर प्रतिष्ठितत्व माम्नानम्। किञ्च अतिरेकाच्चेति हेत्वन्तरं विवृणोति — आकाशस्य पृथङ्निर्देशेनेति। पञ्चविंशति सङ्ख्याकानामेव तत्वानां साङ्ख्यतन्त्रप्रसिद्धत्वेन प्रकृते तदधिकसङ्ख्याक तत्वाश्रवणेन पञ्चविंशतिसङ्ख्याकत्व तान्त्रिकप्रसिद्धि र्भग्नेति भावः अथ वस्तुगत्या तत्प्रतीतिरपि नास्तीति सूत्रगतेनाऽपि शब्देन ध्वनितं युक्त्यन्तरमाह — किञ्चेति। अत्राऽयम्भावः। अवश्या भ्युपगन्तव्यत्वे पञ्चजनशब्दे समासो न समाहारविषयो युज्यते। तदा स्त्रीप्रत्ययाभावस्य छान्दसतया नेयत्वेन क्लिष्टत्वात्। किन्तु दिक्सङ्ख्ये सञ्ज्ञायामिति संज्ञासमास एवाऽभ्युपगन्तव्यः एवञ्च पञ्चभिरारब्ध समूहपञ्चकासम्भवादपिसङ्ख्येयानां पञ्चविंशतिसङ्ख्याकत्वं नसिध्यति तस्मात् समासमर्थय इतिवत् पञ्चपञ्चजना इत्येव सिद्धमिति सूत्रार्थ मुपसंहरति — अत इति नन्वेवमत्र

इत्युच्यन्ते सप्तसप्तर्षय इतिवत् अतो न साङ्ख्यतत्वप्रसक्तिः॥ के पुनरेत इत्यत आह ।

## प्राणादयो वाक्यशेषात् ॥ १–४–१२ ॥

'प्राणस्यप्राण मुत चक्षुषश्चक्षुः श्रोतस्यश्रोत्र मन्नस्स्याऽन्नं मनसो ये मनो विदु'रिति वाक्यशेषात् पञ्चजनसंज्ञिताः प्राणादयः पञ्चेन्द्रियाणीति गम्यते, अतोऽपि न तान्त्रिकतत्वप्रसक्तिः ॥

पुनरुपपत्तिरुच्यते ॥

## ज्योति षैकेषा मसत्यन्ने ॥ १–४–१३ ॥

एकेषां काण्वाना 'मन्नस्स्यान्न' मिति शब्दाभावे 'तं देवा ज्योतिषां ज्योति रायुर्होपासते अमृत' मित्युपक्रमगतेन ज्योतिश्शब्देन पञ्चपञ्च

---

पञ्चजनसंज्ञिताः पञ्चसङ्ख्याकाः केचिद्ग्राह्याः । तं के इत्याकाङ्क्षानिवर्तकत्वे नोत्तरसूत्र मवतार यति — के पुन रेत इति ॥

सन्दिग्धेतु वाक्यशेषादिति न्यायेन 'प्राणस्य प्राण' मित्यादिवाक्यशेषा त्पञ्चपञ्चजनाः पञ्चेन्द्रियाणीत्यवगम्यत इत्यर्थः तस्मादपि साङ्ख्यतन्त्रसिद्ध पञ्चविंशतितत्त्वानां प्रसक्ति र्नास्तीत्याह — अतोऽपीति । ननु — काण्वानां माध्यन्दिनानाञ्च शाखयोः 'यस्मि न्पञ्चेत्यादि मन्त्रस्समानएव 'प्राणस्यप्राण' मिति वाक्यशेषस्तु काण्वशाखायाम् 'अन्नस्याऽन्न मिति वाक्यरहितश्श्रूयते । तस्मात्कथम् पञ्चजनसङ्ख्या लभ्यत इत्याशङ्क्य तदुपपादन परत्वे नोत्तरसूत्रमवतारयति — पुनरुपपत्तिरुच्यत इति ॥

शब्दाभावे इति । अत्रायम्भावः । काण्वानाम्पाठे 'अन्नस्याऽन्न' मिति वाक्याभावेऽपि 'यस्मादर्वा क्संवत्सरोऽहोभिः परिवर्तते । तद्देवा ज्योतिषांज्योति रायुर्होपासतेऽमृत' मिति पूर्व मन्त्रे ज्योतिषां ज्योतिष्ट्वेन ब्रह्मणि श्रुते ब्रह्माधीन प्रकाशानि कानिचिज्ज्योतींषि सिद्धानि । तानि हि विषयाणां प्रकाशकानीन्द्रियाणीति 'यस्मिन्पञ्चपञ्चजना इत्यनिर्धारितविशेषनिर्देशेन गम्यन्त इति । किञ्च · काण्वशाखायाम् 'अन्नस्याऽन्न' मिति वाक्याभावेऽपि शाखान्तर गुणोप संहारेण माध्यन्दिनपाठ लभ्यार्थ स्तत्राप्यस्त्येव । तथाहि – उपपादित म्पूर्वसूत्रे पञ्चसङ्ख्याकान् कांश्चिदप्रसिद्धान् पञ्चजनसंज्ञाया विषयान्निर्दिश्य तदनन्तर म्प्राणादीनां

जना इन्द्रियाणीति ज्ञायन्ते। ज्योतिषांज्योतिः शब्दाशाखायामपि प्रकाशकं ब्रह्मेत्युक्त्वा ततः पञ्चपञ्चजना इत्युक्तेस्तानि प्रकाशकानि पञ्चेन्द्रियाणीति गम्यन्ते ॥

## कारणत्वेनचाऽऽकाशादिषु यथा व्यपदिष्टोक्तेः ॥ १–४–१४ ॥

यथाऽऽकाशादिषु कार्यवर्गेषु कारणत्वेन सर्वत्र वेदान्तवाक्येषु 'असद्वा इदमग्र आसी त्तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यादिषु अनिर्ज्ञातविशेषेषु 'आत्मावा इदमेक एवाग्र आसीत्'। इति विशेषवाक्य निर्दिष्टस्यैवोक्तेः न तान्त्रिक व्याकृतग्रहणम्। तथाऽत्र विशेषवाक्यदृष्टानां प्राणादी नामिन्द्रियाणा मेवोक्तेःन तान्त्रिकतत्त्वग्रहणम्।

पञ्चानां पाठा त्तएव सङ्ख्या इति। एवञ्च निर्णीतार्थशाखान्तरवाक्यानुसारेण काण्वशाखायामपि प्राणादिशब्दानां वागिन्द्रियादि रर्थ इशाखान्तरादुपसंहृतः निर्णीतार्थशाखान्तर वाक्यानुसारेणाऽर्थनिश्चयोहि न्यायविद्भिः परिगृह्यते। न त्वनिर्णीतार्थवाक्यानुसारेण निर्णीत वाक्यार्थत्याग इतिभावः। अत्रप्राणशब्देन वायुसम्बन्धित्वा त्स्पर्शनेन्द्रियं गृह्यते। चक्षुष इति दृगिन्द्रियम्। श्रोत्रस्येति श्रोत्रम्। अन्नस्येत्यन्न शब्दादिन पृथिवीसम्बन्धित्वात् घ्राणरसनयो रन्त्रेणोपादानम् अद्यतेऽनेनेत्यन्नमिति योगेनाऽपि रसनेन्द्रियं गृह्यते मनस इति मन इतिच पञ्चेन्द्रियाणि सिद्धानि। एवञ्च एकेषां कण्वानां शाखायाम् अन्नअसति अन्नस्याऽन्नमिति शब्दाऽभावेऽपि ज्योतिषा 'तन्देवा ज्योतिषां ज्योति' रिति ज्योतिश्शब्देन पञ्चपञ्चजना पञ्चेन्द्रियाणीति गम्यन्त इति सूत्रार्थः। एव मन्त्रान्तरपर्यालोचनया पञ्चजना इन्द्रियाणीति प्रदर्शितमर्थं दृष्टान्तेनोपपादयति —

'असद्वा इद मग्र आसी' दित्यत्र अनभिव्यक्तदशाभिप्रायेणाऽसच्छब्द स्सद्वस्तुपर एव वाच्यः। अत्यन्ताऽसतः कारणत्वाऽयोगात्। एवं 'तद्धेदं तर्ह्यव्याकृत मासी' दिति वाक्येऽप्यव्याकृतशब्द स्साक्षाद्वाऽनभिव्यक्त नामरूपवस्तुपरः। एवञ्च असदव्याकृतशब्दाभ्या मनभिव्यक्तवस्तुवाचिभ्यां यथा 'आकाशोहवै नामरूपयो र्निर्वहितेत्यादि वाक्यगतेषु आकाशादिषु कारणत्वेन 'आत्मावा इदमेक एवाग्र आसी' दिति विशेषवाक्यनिर्दिष्टस्य परमेश्वरस्यैवोक्तेः यथा न तान्त्रिकस्याऽव्यक्तस्य ग्रहणम्। तथैवेहाऽपि पञ्चपञ्चजना इति वाक्येन 'प्राणस्य प्राण'

तत्र तान्त्रिकतत्त्वग्रहणाऽयोगः कथमित्यत आह ॥

**समाकर्षात्** ॥ १–४–१५ ॥

'सोऽकामयत बहुस्या' मिति पूर्वनिर्दिष्टस्य सर्वज्ञस्यैव । 'असद्वा इदमग्र आसी' दिति समाकर्षात् पूर्वनिर्दिष्टस्याऽव्याकृतस्यैव स एष इह प्रविष्ट आनखाग्रेभ्यः' इति समाकर्षाच्च यथा स एवाऽवगम्यते, तथाऽत्राऽपि समाकर्षात् । पञ्चजनाना मिन्द्रियत्वाऽवगतिरिति न विरोधः ॥

इति संख्योपसंग्रहाधिकरणम् ३५

---

मित्यादि विशेषवाक्यनिर्दिष्टाना मिन्द्रियाणामेव ग्रहणं न कथमपि कापिलतन्त्रसिद्ध पञ्चविंशति तत्त्व ग्रहणमित्यर्थः ॥

ननु - 'असद्वा इद मग्र आसी' दित्यसदेव कारणत्वेनाम्नायते कथं परमेश्वरस्य कारणत्वेन ग्रहणम् । कथंवा तद्दृष्टान्तेन पञ्चजनशब्देन तान्त्रिकतत्त्वपरित्यागपूर्वक मिन्द्रियग्रहणञ्च युज्यत इत्याशङ्कानिराकरणार्थत्वे नोत्तरसूत्र मवतारयति — तत्रेत्यादिना ॥

सोऽकामयतेत्यादि । अत्राऽयम्भावः । 'असद्वा इदमग्र आसी' दित्यत्र आत्मावा इत्युक्तः परमेश्वर स्समाकृष्यते । कथमितिचेत् 'तस्माद्वा एतस्मा द्विज्ञानमया दन्ययोन्तर आत्मानन्दमयः 'सोऽकामयत बहुस्यां प्रजायेयेति । इदं सर्व मसृजत । यदिदं किञ्च । तत्सृष्ट्वा तदेवाऽनुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभव' दित्यादिना ब्राह्मणे नानन्दमयं ब्रह्म सर्वानुप्रवेशेन सर्वात्मभूतमुक्त्वा 'तद प्येषश्लोको भवती' त्युक्तस्याऽर्थस्य साक्षित्वे नोदाहृतोऽयं श्लोकः 'असद्वा इदमग्र आसी' दिति एव मुत्तरत्राऽपि 'भीष्माऽस्मा' दित्यादिना तमेव परमेश्वरं समाकृष्य तस्यैव प्रशास्तितृत्वादयोऽभिहिताः तथा . 'तद्धेदं तर्ह्यव्याकृत मासी' दिति निर्दिष्टस्यैव 'स एष इहप्रविष्टः । आनखाग्रेभ्यः पश्यत्यचक्षु' रित्यत्र समाकर्षादपि असच्छब्देन 'अव्याकृतशब्देन च परमेश्वरएव निगद्यत इत्यवगम्यते। असदव्याकृतशब्दौ सृष्टेः पुरस्ता न्नामरूपविभागाभावादुपपन्नौ एवञ्च यथा असदव्याकृतशब्दाभ्यां समाकर्षात्परमेश्वरोऽवगम्यते। तथैव पञ्चजनशब्देनाऽपि समाकर्षा दिन्द्रियाण्येवेत्यवगम्यते। तस्मात्कापिलतन्त्रसिद्धानां पञ्चविंशतितत्त्वाना मत्र न प्रसक्तिरिति भावः ॥

**इति संख्योपसंग्रहाधिकरणम् ॥ ३५ ॥**

अथ जगद्वाचित्वाधिकरणम् १६

गतस्साङ्ख्यतन्त्रशङ्काप्रसङ्गः, पुनरपि जीवात् परमेश्वरस्याऽन्यभाव मुपपादयति ॥

## जगद्वाचित्वात् ॥ १—४—१६ ॥

श्रूयतेऽस्य विषयः कौषीतकीब्राह्मणोपनिषदि 'ब्रह्म ते ब्रवाणी' त्युपक्रम्य 'योवै बालाक! एतेषां पुरुषाणां कर्ता यस्यवै तत् कर्म सवै वेदितव्यः' इत्यादिकः ॥

इह वेद्यत्वेन श्रुतः परमेश्वरो जीवोवा इति संशयः।

'य एवैष आदित्ये पुरुषस्तमेवाऽहमुपास य एवैष चन्द्रमसि पुरुषो य एवैष विद्युति' इत्यादि पूर्ववाक्यसन्दर्भ प्रकृतादित्यादि सकलपुरुष कर्तृत्वस्य जीवेऽपि विद्यमानत्वात् कर्मशब्दस्याऽपूर्ववाचित्वा दपूर्वस्य तदर्थत्वात निर्धूतसकलकर्मसंबन्धे परमेश्वरे तदयोगा ज्जीव एवाऽय मिति पूर्वपक्षः॥

सिद्धान्तस्तु, कर्मशब्द स्यैतच्छब्द सामानाधिकरण्येन क्रियत इति व्युत्पत्त्या च जगद्वाचित्वा ज्जगत्कार्यवान् परमेश्वर एवाऽत्र प्रतिपाद्यः नहि

पेटिकासङ्गतिमाह — गत इति। पूर्वाधिकरणेषु त्रिष्वपि पूर्वपक्षतया शङ्कात्रयं प्रसक्तम् 'महत· पर मव्यक्तम्' 'अजामेकां' 'यस्मि न्पञ्चपञ्चजना' इतिमन्त्राः साङ्ख्यतन्त्र सिद्धान्तकार्त्तीनि प्रतिपादयन्ती त्येवकाशङ्का तदनुबन्धिनी जीवादन्यः परमेश्वरोनाम नास्तीत्यपरा। आद्य तावत् द्विषयवाक्ये प्रथमशङ्कोपयोगिनीं तान्त्रिकमहदव्यक्तपुरुषक्रम प्रत्यभिज्ञा मुपन्यस्यतः पूर्वपक्षिणः 'पुरुषान्नापरं किञ्चि' दितिवाक्यं पञ्चविंशा ज्जीवात्परस्य तत्त्वान्तरस्य निषेधक मिति स्पष्टएव तत्र परमेश्वरप्रतिक्षेपः॥

द्वितीये विषयवाक्यं स्वतन्त्रप्रकृतिपरत्वशङ्का परमेश्वरप्रतिक्षेपपर्यन्ता परमेश्वरसत्त्वे तदधीनत्वाऽवश्यम्भावेन स्वातन्त्र्याऽयोगात्। तृतीयेप्येवमेव तत्र पूर्वपक्षे पञ्चविंशतेस्तत्त्वानां परमेश्वराधीनत्वात्। 'नानाभावादतिरेकाच्चे' ति दूषणमुक्तम्। तत्राद्यशङ्काप्रसङ्गो निवृत्तः इदानीमुत्तराधिकरणद्वयेन कयोश्चिद्विषयवाक्ययो र्मुक्त्यर्थं वेदितव्यतया मुक्तप्राप्यतयाचोपदिष्टयमानं

जीवे सकलजगत्कर्तृत्वसंभवः । पुन राशङ्क्य परिहरति ॥

ब्रह्म जीवइति पूर्वपक्षकरणेन पुनरपि जीवादन्यः परमेश्वरोनाम नास्तीति द्वितीयां शङ्कामुद्भाव्य जीवादन्यस्य परमेश्वरस्य सद्भाव उपपाद्यत इत्यर्थः । तस्मात्पूर्वाधिकरणत्रये णोत्तराधिकरणद्वयस्य प्रत्युदाहरणसङ्गतिः ॥

अत्रेयं विषयवाक्यप्रसक्तिः । अजातशत्रुर्नाम काशिराज स्स्वसमीपमागत्य 'ब्रह्मते ब्रुवाणीत्युक्तवन्तं बालाकिं गार्ग्यं सहस्रं दद्म एतस्यां वाचि जनको जनक इति जना धावन्तीति प्रशस्य बालाकिना 'यएवैष आदित्ये पुरुष स्तमेवाऽहमुपास' इत्यादिभिर्वाक्यै ब्रह्मत्वेनोप दिष्टा नादित्यचन्द्रविद्युत्स्तनयित्न्वादिगता न्पुरुषानब्रह्मत्वेन तदुक्त्यनन्तरमेव प्रत्याख्याय तत स्तूष्णीम्भूते तस्मिन् 'किमेतावदेव तव ज्ञानमिति पृष्ट्वा तेनैतावदेवेत्यभिहिते' मृषावै किल मासमवादयिष्ठाः ब्रह्म ते ब्रवाणी' त्युक्त्वा त मपोद्य 'योवै बालाक एतेषां पुरुषाणां कर्ता यस्य वै तत्कर्म स वेदितव्य इति स्वयमुपदिदेश । अत्र यो वेदितव्य उपदिष्टः उपसंहारेच 'स पूर्वा न्पाप्मनोऽपहत्य स पूर्वेषाञ्च भूतानां श्रैष्ठ्यं स्वाराज्य माधिपत्यं पर्येति य एवं वेदे' ति यद्वेदनस्य फलं वर्णितम् । स जीवः परमेश्वरो वेति कर्मशब्दयोगरूढिभ्यां संशयमाह — इहेति । न न्वेतेषां पुरुषाणां कर्तेति श्रुतम् प्रकृत्यादित्य मण्डलादिगत पुरुषकर्तृत्वं जीवे न सम्भवतीति कथं पूर्वपक्ष इत्याशङ्क्य तत्र तत्सम्भावयति — यएवेति । अत्राऽयम्भावः । आदित्यादिपुरुषा स्ताव दालोकदानादिना जीवस्योपकारकाः । तस्माद्धयस्य भोगोपकरणभूतास्ते तददृष्टजन्या इति आदित्यादि पुरुषोत्पत्त्यनुकूलादृष्टहेतुकृतिमान् जीवः कथं तेषां कर्ता नस्यात् कार्यानुकूल कृतिमत्त्वं हि कर्तृत्वमिति ॥

ननु - सकलपुरुषकर्तृत्वं जीवेऽपि सम्भवतुनाम । तथाऽपि जीवगतमेव तद्ग्राह्यम् । न परमेश्वरगतमित्यत्र किंनियामकमित्याशङ्क्य प्रधानयुक्तिमाह — कर्मशब्दस्येति । अपूर्व स्येति । आदित्यादिपुरुषकर्तृत्वं वेदितव्यपुरुषस्य कीदृशमित्याकाङ्क्षाया मपूर्वद्वारकं विवक्षितमि त्याकाङ्क्षितार्थ निरूपणार्थतया कर्मशब्दस्याऽपूर्वरूढिरिहोपयुज्यते निर्धूतेति । सर्वथा निर्धूत सकलकर्मबन्ध एव परमेश्वरः 'न कर्मणा वर्धते नो कनीया' निति श्रुतेः । अवश्यंच वेदित व्यत्वोपदेशः परमेश्वरेएव योजनीयः 'ब्रह्म ते ब्रुवाणीत्युपक्रमानुरोधा दित्याशङ्का मवधारणेन व्यावर्तयन् पूर्वपक्षमुपसंहरति जीवएवाऽयमिति । सिद्धान्तयति — कर्मशब्दस्येति — यस्य वै तत्कर्मेत्यत्र एतच्छब्दः प्रत्यक्षादिसन्निधापित सकलजगद्वाची । तत्समानाधिकरणं कर्म पदमपि तद्वाचीत्येवाऽभ्युपगन्तव्यम् । किञ्च - कर्मपदं क्रियत इति व्युत्पत्त्या यौगिकत्वा दपि सकलजगद्वाचि नत्वपूर्वमात्रवाचि । अन्यत्राऽपि योगस्याऽविशेषा त्क्वचि त्सङ्कोचकल्पनाऽ योगात् । किञ्च 'योवै बालाक,' इत्यादि वाक्यद्वयमपि यच्छब्दोपबन्धा दनुवादरूपं विज्ञायते

## जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् ॥ १–४–१७ ॥

तद्यथा, 'श्रेष्ठी स्वैर्भुङ्क्ते, यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति' इति 'यदा सुप्तः स्वप्नं न कंचन पश्यति अथाऽस्मिन् प्राण एवैकधा भवति' इति जीवमुख्यप्राणलिङ्गदर्शनात् नाऽसौ परमेश्वर इति न वाच्यम् ॥

पूर्वत्र प्रतर्दनविद्यायां व्याख्यातत्वात् । इहाऽपि पूर्वापरपर्यालोचनया ब्रह्मपरत्वे स्थिते तदनुरूपतयाऽन्यलिङ्गानि नेतव्यानि पूर्वत्र ध्रुवक्रमे, 'ब्रह्म

---

तत्र ब्रह्मपरत्वेन श्रुत्यन्तरेषु बुद्धिस्थानि 'चक्षोः सूर्यो अजायत चन्द्रमा मनसो जातः । सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।' इत्यादीनि प्रथमवाक्यस्य पुरोवादकानि 'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चाऽन्यो मायया संनिरुद्धः' 'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं' । इति भूतभविष्यद्वर्तमानरूपं कार्यं वेदवाक्यान्तरेभ्योऽवगम्यते । तत्सर्वमनितरसाधारणमहेश्वरशब्दवाच्येन परमेश्वरेण सृज्यमिति प्रतिपादयत् श्वेताश्वतरवाक्यमस्य पुरोवादः पुरोवादानुसारेणाऽपि कर्मशब्दस्य क्रियत इति योगेन जगद्वाचित्वं युक्तम् । तस्मादसङ्कुचितसकलजगत्कर्तृत्वस्य नीचानामध्ये क्वचिदप्यसम्भवात् परमेश्वर एवाऽत्र प्रतिपाद्य इति सिद्धम् ॥

---

तस्मिन्कर्षण एव वाक्यशेषे जीवलिङ्गं दृश्यत इत्याशङ्का निराकरणार्थत्वेनोत्तरसूत्रमवतारयति — पुनरिति ॥

एवमात्मभिर्भुङ्क्त इति वाक्यशेषे श्रेष्ठिदृष्टान्तोपपादितमादित्यादिपुरुषहेतुकभोक्तृत्वमेकं जीवलिङ्गम् । 'अथाऽस्मिन्प्राण एवैकधा भव' तीति वाक्यशेषे सप्तम्यन्तनिर्दिष्टवेदितव्यपुरुषाश्रयत्वेनोक्तः प्राणोऽन्यज्जीवलिङ्गम् । अनयोराद्यमुख्यम् तद्धि निर्विचिकित्सं जीवासाधारणम् । द्वितीयन्त्वमुख्यम् । तथाहि - प्राणस्य ब्रह्माश्रितत्वं 'यस्मिन्द्यौः पृथिवी चाऽन्तरिक्ष' "पञ्चपञ्चजना" इति मन्त्रयोः प्रतिपन्नम् तस्मादुपकरणोपकरणिभावसम्बन्धेनाश्रितः प्राणः जीवलिङ्गमिति विवक्षा भोक्तृत्वरूपस्फुटतरजीवलिङ्गसमभिव्याहारेण निगमयितव्येति परमुखनिरीक्षणत्वाद्विरूपमुख्यम् । तस्मात् 'जीवमुख्यप्राणलिङ्गान्नेति चे' दिति सूत्रभागस्य भोक्तृत्वरूपान्मुख्यजीवलिङ्गात् प्राणरूपादुपपादनीयादमुख्यजीवलिङ्गाच्च जीव एवाऽत्र प्रतिपाद्यो वाक्य इति न परमेश्वरः प्रतिपाद्य इत्यर्थमभिप्रेत्य तत्परतया व्याचष्टे —

ते ब्रवाणी' ति ब्रह्मोपक्षिप्तम् मध्ये च 'यस्य चैतत् कर्म' इति सकलजगत् कर्तृत्वमुक्तम्; परत्र च उपसंहारे 'सर्वान् पाप्मनोऽपहत्य सर्वेषां च, भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' इति ब्रह्मोपासनैकान्तं सर्वपापहतिपूर्वकं स्वाराज्यफलमुक्तम् । एवमस्य प्रकरणस्य ब्रह्मपरत्व निश्चये जीवमुख्यप्राणलिङ्गानि तत्परतयैव नेतव्यानि । पक्षान्तरमुच्यते॥

## अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १-४-१८ ॥

'तौ ह सुप्तं पुरुष माजग्मतु स्तं हाजातशत्रु रामन्त्रयांचक्रे बृहन् पाण्डरवास । सोमराजन्' इति 'स तूष्णीमेव शिश्ये तदुह एनं यष्ट्या

---

एतैरिति तद्व्याख्यातमिति परिहारभागं व्याचष्टे—पूर्वत्रेति ।'प्राणस्तथानुगमा' दित्यधिकरणे प्रतर्दन विद्याप्रकरणम् । पूर्वापरपर्यालोचनया ब्रह्मपरमवगम्यत इति । तदनुरोधेन तदन्तर्गतान्यप्यन्य लिङ्गानि ब्रह्मणि नेतव्यानीत्युपपादितम् । 'उपासात्रैविध्यादाश्रितत्वादिह तद्योगा' दिदमपि प्रकरणं तेनैव व्याख्यातम् । तथेदमपि पूर्वापरपर्यालोचनया ब्रह्मपरमवसीयते । कथम् । 'ब्रह्म ते ब्रवाणी' त्युपक्रमप्रस्ताव द्ब्रह्मपरः । तथा 'सर्वान्पाप्मनोऽपहत्य' त्युपसंहारोऽपि तद्विषयएव जरामृत्युशोकादि सकलपापहतिपूर्वकं शिवस्यात्मरूपं स्वाराज्यं हि शिवाख्यस्य परब्रह्मणः वेदनादेव श्रुत्यन्तेषु प्रसिद्धम् ॥

एवञ्च यथा प्रतर्दनविद्यायामन्यलिङ्गानि त्रिविधोपासनतात्पर्येण ब्रह्मणि नीतानि एव मिहाऽपि तानि तथैव ब्रह्मणि नेतव्यानीति तात्पर्यार्थः ॥

उत्तरसूत्रमवतारयति — पक्षान्तरमुच्यत इति । पूर्वसूत्रे यष्टिघातोथ्थापनेन जीवलिङ्गं भोक्तृत्वादिलिङ्गा ज्जीवशरीरब्रह्मोपासनाऽर्थत्वेन नीतम् । इदानीन्तज्जीवातिरिक्त परमेश्वरप्रति बोधनार्थमि त्युत्तरग्रन्थपर्यालोचनादवश्यंस्थायि पक्षान्तरमुच्यत इत्यर्थः ॥

अन्यार्थमित्येत द्विशेष्याध्याहारपूर्वकं व्याचष्टे — तौहेति । राज्ञावेदितव्यतयोपविष्टस्या दित्यादिपुरुषाणां कर्तुर्वेदनाय गार्ग्योपसत्तिप्रतिपादनानन्तरं श्रूयते 'तं ह प्राणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमीयतु स्तंहाऽजातशत्रु रामन्त्रयाञ्चक्रे 'बृहन् पाण्डरवासः सोमराज' न्निति । स इह तूष्णीमेव शिश्ये । तदुहैनं यष्ट्या व्याचिक्षेप स ततएव समुत्तस्थाविति' अत्र बृहन्नित्यादि

व्याचिक्षेप स तत एव समुत्तस्थौ ' इत्यत्र प्राणानामामन्त्रणेऽपि तदश्रवणेन, ततः परं यष्टिघाते सत्युत्थानेन च प्राणाद्यतिरिक्त जीवसद्भावप्रतिपादनं, तदतिरिक्त परमेश्वरप्राज्ञोपासनार्थमिति ' क्वैष एतत् बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एत दागात् ' इति प्रश्नात् ' यत्रा सुप्त स्वप्नं न कंचन पश्य त्यथास्मिन् प्राणएवैकधा भव ' तीति ' सता सोम्य तदा संपन्नो भव ' तीत्यादि वाक्यान्तरसमानार्थात्तत्प्रतिवचनाच्चावगम्यते। एके वाजसनेयिनो विस्पष्टमस्मिन् बालाक्यजातशत्रुसंवादे एतत्समानार्थ मधीयते तत्रहि ' यत्रैष एतत् सुप्तोऽभू द्यएष विज्ञानमयः पुरुषः क्वैष

नामभिः प्राणस्यामन्त्रणम्। प्राणः खलु बृहन् महान् श्रेष्ठः। असपत्नोवा। पाण्डरवर्णाआपोऽस्य वासस्त्वेनोपचरिताः शरीरंवा प्राणविद्यायाम् प्राणोवाव ज्येष्ठश्च श्रेष्ठश्चेति तस्य श्रैष्ठ्यश्रावणात् ' किंमे वास ' इति प्राणप्रश्ने ' आपोवास इत्युत्तर श्रवणाच्च समाजब्राह्मणं ' स एषोऽसपत्नः ' इत्यथैतस्य प्राणस्यापरशरीर मित्यसपत्नत्वाऽऽप्शरीरकत्व श्रवणाद्वा सोमश्चाय मुपचारात्। समाजब्राह्मणएव ' ज्योतीरूपमसौ चन्द्र ' इति श्रवणात्। राजाच। प्राणोवै सम्राडिति श्रावणात्। एवं प्राणनामभिरामन्त्रणेऽपि अनुत्थानप्रदर्शनं प्राणान्यत्वज्ञापनार्थम्। सुषुप्तिदशाया मुपरत व्यापारेभ्यश्शरीरेन्द्रियेभ्यः अन्यत्वं सुज्ञानमिति तस्यामपि दशाया मनुपरतव्यापारा त्प्राणा दन्यत्वमेव ज्ञापनीयम। एवं प्राणनामभिरामन्त्रणेऽपि अनुत्थानस्य यष्टिघाते नोत्थानस्य च प्रदर्शनेनाऽन्वयव्यतिरेकाभ्यां यत् कैमुतिकन्यायेन स्थूलसूक्ष्मदेहातिरिक्त जीवसद्भावप्रतिपादनं तदन्यार्थं जीवातिरिक्त परमेश्वर प्रतिपादनार्थ मेवेति जैमिनि राचार्यो मन्यत इत्यर्थः ॥

सूत्रे तु शब्दः अस्य जीवलिङ्गस्य पूर्वसूत्रदर्शित गतिव्यावृत्त्यर्थः। जैमिनिग्रहणमस्य पक्षस्य युक्ततरत्वज्ञापनार्थं प्रश्नव्याख्यानाभ्यामितिहेतुं व्याचष्टे ' क्वैष एत ' दिति। यष्टिघातेनो त्थापनानन्तरं। ' क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्ववा एतदभूत्। कुत एतदागा ' दिति राज्ञा गार्ग्यंप्रति कृतःप्रश्नः। यद्यपि यत्राऽशयिष्ट तत्रैव यावत्प्रबोधमभूदिति प्रबोध्यमान स्ततएवागा दितिचाऽर्थान्सिद्ध्यन्तौ न पृथक्प्रश्नमर्हतः। तथाऽपि जीवस्य सुषुप्तेः प्राक्स्वपनोऽधिकरणतया सुषुप्तस्य यावत्प्रबोधमधिकरणतया यष्टिघातेनोत्थापनानन्तरं तदुत्थानाऽपादानतयाच जीवातिरिक्त परमेश्वरसद्भावं दृढीकर्तुं त्रेधा प्रश्नः। गार्ग्येण पृष्टं सुषुप्तजीवाधिकरणमविजानति ' हितानाम हृदयस्य नाड्य ' इत्यादिना ' तासु तदा भवति यदा सुप्तः स्वप्नं नकञ्चन पश्य ' तीत्यन्तेन जीवसुषुप्त्यधिकरणं हृदयावच्छिन्नं ब्रह्म प्राप्तु मार्गं तदधिगन्तव्यासु नाडीषूपसर्पणमुक्त्वा ' अथाऽस्मि न्प्राणएवैकधा भवतीति राज्ञैव कृतं स्वपृष्टार्थविवरणम्। तस्यव्याख्यान मिदंच सुषुप्तजीवस्य ब्रह्मणि लय प्रति

तदाऽभूत् कुत एतदागात् ' इति प्रश्नः ; ' यत्रैष एतत् सुप्तोऽभूद्य एष विज्ञानमयः पुरुष स्तदेषां प्रणानां विज्ञानेन विज्ञानमादाय य एषोऽन्त र्हृदय आकाश स्तस्मिन् शेते ' इति प्रतिवचनम् । तस्मात् परमेश्वर एवाऽयं सकलजगत्कर्तेति सिद्धम् ॥

इति जगद्वाचित्वाधिकरणम् ॥ ३६ ॥

अथ वाक्यान्वयाधिकरणम् ३७

मैत्रेयिब्राह्मणे सर्वत्र जीवेश्वरयो रेकत्र शब्दविषयत्वे प्रतीयमाने तत्सामानाधिकरण्यं कथमित्येतन्निरूपणाय इद मधिकरण मारभ्यते॥

---

पादकम् । ' सता सोम्य तदा सम्पन्नो भव ' तीति श्रुत्यन्तरसमानार्थत्वात् । एवञ्चाऽस्मि न्वेदितव्यतयोपदिष्टे परब्रह्मणि जीवः सुषुप्तौ लीनो भवतीति तदर्थो ग्राह्यः

एताभ्यां प्रश्नव्याख्यानाभ्यां जीवाऽतिरिक्तः परमेश्वरोऽत्र प्रतिपाद्योऽवसीयत इति भावः ॥

' अपिचैवमेक ' इति सूत्रशेषं विवृणोति — एक इति । अपिच वाजसनेयिनोऽस्मि न्प्रकरणे स्पष्टमेतत्समानार्थं वाक्यजातमधीयते ' यत्रैष एत त्सुप्तोऽभूत् । य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत् । कुत एतदागा' दिति प्रश्नः । 'यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुष स्तथैषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोन्तर्हृदयआकाश स्तस्मिन्शेत ' इति व्याख्यानम् अत्र निर्दिष्टं जीवस्य सुषुप्त्यधिकरणं ब्रह्मेति स्पष्टम् ॥

आकाशशब्देन तन्निर्देशात् । तस्य ब्रह्मणश्श्रुत्यन्तरेषु प्रसिद्धतरत्वात् । एतत्स्थाने कौषीतकिब्राह्मणपठितस्य प्राणशब्दस्य एकार्थस्य वक्तव्यतया तयोर्ब्रह्मण्यैकार्थ्यस्य ' आकाश स्तल्लिङ्गात् अतएव प्राण ' इति सूत्रदर्शितन्यायत स्सिद्धत्वाच्च । अतोऽत्र जीवप्रतिपादनस्य जीवातिरिक्त परमेश्वरप्रतिबोधनार्थत्वं युक्तमिति भावः तस्मा त्परमेश्वरस्य सद्भावे तस्य जीवाद्भेदेना न विवदितव्यमित्याशयेनाऽधिकरण मुपसंहरति — तस्मादिति ॥

इति जगद्वाचित्वाधिकरणम् ३६

अथ वाक्यान्वयाधिकरणम् ३७

उत्तराधिकरणमवतारयति — सर्वत्रेति । उदाहरिष्यमाणे मैत्रीयीब्राह्मणे सर्वत्र

## वाक्यान्वयात् ॥ १–४–१९ ॥

बृहदारण्यके 'न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भव' तीत्यारभ्य 'आत्मावाऽरे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादि श्रूयते॥

आदिमध्यावसानेषु जीवेश्वरयो रेकशब्द विषयत्वे प्रतीयते जीवपरत्वेन सम्प्रतिपन्नाना मीश्वर परत्वं। ईश्वरपरत्वेन सम्प्रतिपन्नानां जीवपरत्वम्। एवमेकशब्दविषयत्वे प्रतीयमाने जीवेश्वरयो रन्यतरएव परिशिष्यत इत्यन्यतरः प्रत्याख्यातो भवति। तत्र प्रत्यक्षसिद्धजगत्प्रत्याख्यानायोगा दीश्वरस्यैव प्रत्याख्यानं पर्यवस्यति जीवेश्वरयो रभेदोवा पर्यवस्यति। एवमीश्वरस्य तत्र जीवाद्भेदस्य बाधकं तज्जीवेश्वरवाचित्वेन सम्प्रतिपन्नशब्दानां सामानाधिकरण्य मुपपादयितुं शक्यमित्या शङ्क्य तदुपपादनायाऽधिकरण मारभ्यत इत्यर्थः। अनेन माभूज्जीवाधिकरणवाक्य मीश्वरे तद्भे देवा बाधकम्। इदन्तु बाधकं स्यात् सामानाधिकरण्यस्याऽन्यथानिर्देष्टु मशक्यत्वा दित्या शङ्क्य प्रत्युदाहरणसङ्गतिर्दर्शिता भवति। तदुपपादनार्थ मधिकरण मारभ्यत इत्यर्थः॥

बृहदारण्यके मैत्रेयीब्राह्मणे याज्ञवल्क्यस्य स्वयं परिव्रिप्रजिगीषया मैत्रेयीकात्यायन्यो स्स्वभार्ययो र्वित्तसंविभाग ञ्चिकीर्षन् वित्तेन किममृतत्वं प्राप्तुं शक्यमिति मैत्रेय्यापृष्टो 'यथै वोपकरणवतां जीवितं तथैव ते जीवितं स्यात्। अमृतत्वस्य तु नाशास्ति वित्तेने' त्युक्त्वा 'येनाऽहं नामृतास्यां किमहन्तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूही' ति तथा पुन रमृतत्वसाधनं पृष्टो 'नवा अरे पत्युःकामाय पतिः प्रियोभवति आत्मनस्तु कामाय पतिःप्रियो भवती' त्यादिभिः। 'नवारे सर्वस्य कामाय सर्वंप्रियम्भव त्यात्मनस्तुकामाय सर्वंप्रियंभवती' त्यन्तै र्वाक्यैः पतिजायापुत्रमित्रपश्वादिसर्वं भोगार्थतयैव प्रियम्भवति। तं पत्यादिसर्वभोक्तार मात्मान मुपक्रम्य 'आत्मावारे द्रष्टव्य श्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यमृतत्वसाधनमात्मदर्शनं दर्शनसाधनानि श्रवणादीनि चोपदिश्य 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदित' मित्यात्मविज्ञानेन सर्वविज्ञानमुक्त्वा 'स यथाऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमाविनिस्सर न्त्येवंवा अरे अस्य महतोभूतस्य निश्वसितमेत दृग्वेदो यजुर्वेद स्सामवेद अथर्वाङ्गिरसः पुराणं विद्या उपनिषद श्श्लोका स्सूत्रा ण्यनुव्याख्यानानि इष्टं हुत माशित म्पायित मयञ्चलोकः परञ्चलोकः सर्वाणिच भूता न्यस्यैवैतानि सर्वाणि निश्वसितानी' ति तस्य नामरूपात्मक सकलप्रपञ्चकारणत्वं प्रदर्श्य 'यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नः रसघन एवंवा अरे अयमात्माऽनन्तरोऽबाह्यःकृत्स्नः प्रज्ञानघनएवैतेभ्यो भूतेभ्य स्समुत्थाय तान्येवाऽनुविनश्यति नप्रेत्य सञ्ज्ञास्ती' ति सोत्पत्तिवि

इह आत्मनस्तुकामायेत्यादि वाक्यै भोगप्रीतियुक्ततया संसारित्वाव गमा दत्र प्रतिपाद्यमानो जीवइति पूर्वपक्षे प्राप्ते सिद्धान्तयामः ॥

परमेश्वरइति कुतः ? 'अमृतत्वस्य तु नाऽशास्ति वित्तेन,' 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्', 'इदं सर्वं यदयमात्मा'

नाशविशेषविज्ञानाभावा वुक्त्वा 'एतावदरे खल्वमृतत्व' मिति वर्णितस्यैतस्यात्मनो वेदनममृतत्वसाध नमि त्युपसञ्जहारेति श्रूयते। अत्र 'आत्मावारे द्रष्टव्य' इत्यादिना निदिष्टत्वात दात्मा परमे श्वरः प्रतीयते। अमृतत्वार्थिन्यै मैत्रेय्यै तद्दर्शनाद्युपदेशा त्तद्विज्ञानेनाऽमृतत्ववर्णना त्तस्य नामरू पात्मक सकलप्रपञ्चोपादानत्वप्रतिपादनाच्च। 'स यथा सैन्धवघन ' इत्यादिनोक्तस्तु जीवः प्रती यते। 'एतेभ्यो भूतेभ्य स्समुत्थाय तान्येवाऽनुविनश्य' तीति देहाकारपरिणतभूतोपाधिकोत्पत्ति विनाशवत्ववचनात। एवमिह प्रतीयमान जीवेश्वरसामानाधिकरण्यनिर्देशे 'आत्मावारे द्रष्टव्य' इति प्रकृतस्यैवात्मनः 'एवंवा अरे अयमात्मे' ति इदमात्मशब्दाभ्यां परामर्शा च्चतुर्थे मैत्रेयी ब्राह्मणे 'एवंवा इदं महद्भूत मनन्त मपार' मिति विज्ञानघनवाक्यएवच तैस्सामानाधिकर ण्येन निर्दिश्यते। 'महद्भूतमनन्त मपार' मिति शब्दानां ब्रह्मपरत्वात् सर्वविज्ञानवाक्यादिगतै रात्मादिशब्दै स्ततो भिन्नविभक्तिकानां जीवविषयशब्दानां सामानाधिकरण्याभावे प्येकविषय त्वमविचलमेव। प्रतीतौसत्यामपि जीवेश्वरयो रन्यतरएवाऽत्र प्रतिपाद्यः नोभावप्यभेदेनेति व्यव स्थापनीयम्। तयोर्भेदस्य प्रबलानेक श्रुत्यन्तरसिद्धत्वादिति स्थितं किं जीवोऽत्र प्रतिपाद्य उत परमेश्वर इतिसंशय स्सूत्रावतारिकायां सूचितत्वा दिह पुनर्नोक्तः ॥

पूर्वपक्षमुपपादयति — इहेति ॥

अत्राऽयम्भावः 'नवारे पत्युः कामाये' त्यादि वाक्येषु स्वभोगाये पत्यादिप्रीति युक्ततया प्रतिपाद्यमानत्वाव दात्मा जीवएव। 'नवा अरे पत्युः कामाये' त्यादि सन्दर्भस्य 'आत्मावा अरे द्रष्टव्य' इत्यादिना वक्ष्यमाणस्य आत्मैव द्रष्टव्य इत्यस्य उपपादनार्थतया तदनुरोधेन द्रष्टव्य आत्मा जीवइत्येव सिध्यति। एवम्पतिजायादि वाक्यसन्दर्भेण द्रष्टव्यत्वादि वचनं जीवविषयमित्यगते तदुत्तरसन्दर्भोऽप्युपक्रमानुरोधेन तद्विषयएव पर्यवस्यति। तथा हि. सर्वविज्ञानवचनं शिवे पूजिते सर्वेदेवताः पूजिता इतिवचनमिवाऽन्येषां प्रकृति महदहङ्कारभूते न्द्रियाणां प्रत्येकं श्रवणमननाभ्या मुपासनेन यावत्फलं भवति तत्सर्वं पुरुषोपासनायामेवान्तर्भ वतीति गौणं वर्णनीयम्। अतएवाहुः 'श्लो॥ दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः भौतिकास्तु शतम्पूर्णं सहस्रं त्वाभिमानिकाः बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः पूर्ण

इत्यादेः 'येनेदं सर्वं विजानाति तं केन विजानीया' दित्यवसानस्य कृत्स्नस्य वाक्यस्य परमेश्वरेऽन्वयात्। भोगप्रीतियुक्तस्य जीवस्यानुवादेन परमेश्वर

- - - - - - -

शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः। पुरुषं निर्गुणं प्राप्य कालसङ्ख्या न विद्यत इति। 'एतावदरे अमृतत्वं' मित्येतत्तु अनात्मविविक्तजीवज्ञानस्य मोक्षसाधनत्वाभिप्रायेण योजनीयम्। एवञ्च मैत्रेयीब्राह्मणं जगदुपादान प्रकृतिविशिष्टत्वेन मोक्षार्थं प्रकृतिविविक्ततया ज्ञातव्यत्वेनैव प्रतिपाद्य इति पूर्वपक्षं स्थिरीकरोति जीवइति। इतिसन्देहेन पूर्वपक्षेप्राप्ते इत्यत्र जीवइति पूर्वपक्षे प्राप्ते इत्यन्वयः। सन्देहेनेत्यनन्तरं तात्पर्यलिङ्गिकायां सूचितस्यानुवादः 'वाक्यान्वया' दिति सूत्रस्य मैत्रेयी ब्राह्मणे प्रतिपाद्यः परमेश्वर इत्यध्याहृतेन साध्येन तत्रादिमध्यावसानवाक्यानां परमेश्वरे तद्विषयत्वेनाऽन्वयादिति सूत्रहेतो रन्वयगर्भिप्रेत्य सिद्धान्तयति — परमेश्वर इतीति। अत्र 'इत्यारभ्येत्यन्तेन अमृतत्वोपायप्रार्थनारूपं पुरस्ता दुपदेष्टव्य मुपक्रमगतं ब्रह्मलिङ्गं दर्शितम्। इत्यादेरित्यन्तेन सर्वविज्ञान प्रतिज्ञानं जगदुपादानत्वमित्यादिमध्यावसानगतं ब्रह्मलिङ्गजातन्दर्शितम्। इत्यवसानस्येत्यन्तेन येनेदं सर्वं विजानाति तं केन विजानीयात्। विज्ञातारमरेकेन विजानातीत्यादि रुपसंहारगतं ब्रह्मलिङ्गन्दर्शितम्। जीवः स्वाऽन्तर्यामितया स्थितेन येन परमेश्वरेणाहृतज्ञानशक्तिकस्स न्निदं सर्वं विजानाति तम्परमेश्वरं केनोपायेन विजानीयात्। तद्दर्शने तत्प्रसादहेतुं प्रागुक्तश्रवणमननपूर्वक मुपासनमेकं विहाय न किञ्चि दप्युपायान्तरमस्ती त्यभ्यासेन प्रतिपाद्यमानं दुरधिगमत्वरूपं ब्रह्मलिङ्गन्दर्शितम्। ननूपक्रमादीनां ब्रह्मणि स्वारस्यं भवतु तथाऽपि पतिजायादिवाक्यस्य भोगप्रीतियुक्तजीवविषयतायाः अपह्नोतु मशक्यतया अनन्यथासिद्ध जीवलिङ्गानुसारेण जीवएव प्रकृतिविविक्तो मुमुक्षुभिर्द्रष्टव्य स्परतत्त्वा न्तद्व्यतिरेकेण किमपि नास्तीति मैत्रेयी ब्राह्मणस्य तात्पर्यं वर्णनीयमिति तत्रैव ब्रह्मलिङ्गानि सर्वाणि योजनीयानी त्याशङ्क्याह — भोगप्रीतियुक्तस्येति। पतिजायादि भोगप्रीतियुक्तस्य जीवस्यैव द्रष्टव्यादि वाक्यविषयत्वावश्यम्भावेहि तस्यैव मुमुक्षुभि र्ज्ञातव्यत्वं शङ्क्येत तदेव नास्ति। पतिजायादिवाक्ये भोगप्रीतियुक्तस्य जीवस्यानुवादः उत्तरवाक्येषु मुमुक्षुद्रष्टव्यत्वादिना परमेश्वरस्य प्रतिपादनमिति सङ्गत्युपपत्तेः। जीवानुवादस्य परमेश्वरप्रतिपादनस्य च कथ मेकवाक्यतेति चे दित्थम्। यस्मा त्पतिजायादयः पतिजायादिप्रयोजनाय प्रियानभवन्ति। किन्तु स्वप्रयोजनायैव। तस्मा दस्यामृतत्वरूप स्वप्रयोजनस्य पतिजायादिविषयो रागो भङ्गकर स्तस्यसिद्धिमपेक्षमाणेन पतिजायादिभ्यो विरज्य परमेश्वरएव द्रष्टव्य इति। नन्वेवंसति एकस्यैवात्मशब्दस्य पतिजायादिवाक्यगतस्य जीवोऽर्थः। तदुत्तर वाक्यगतस्य परमेश्वरइत्यर्थभेदस्स्यात्। नाऽयं दोषः। पतिजायादिवाक्यगतस्य जीवपरत्वे द्रष्टव्यवाक्यस्य "यदा चर्मव दाकाश" मित्यादि श्रुत्यन्तरानुसारेण परमेश्वरपरत्वे चाऽवश्यं वक्तव्ये "स्वार्थकस्य ब्रह्मशब्दव" दितिन्यायेन तदर्थभेदाङ्गीकार स्योचितत्वात्। एवं द्रष्टव्यवाक्यस्य परमेश्वरपरत्वे तदुत्तरवाक्याना न्तत्परत्वं स्वतएव सिध्यति ॥

प्रतिपादनादविरोधः । कथमिह सर्वत्र जीवशब्देन परमेश्वराभिधान ? मिति चेत्तदिदं मतान्तरेणोपपादयति ॥

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ १–४–२० ॥

'आत्मनि खल्वरे दृष्टे' इत्यादिनोक्तस्यैकविज्ञानेन सर्वविज्ञानस्य सिद्धये जीवस्य तत्कार्यतया तदव्यतिरिक्ततां ज्ञापयितुं जीवशब्देन परमेश्वरस्याभिधान मित्याश्मरथ्यो मेने ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ १–४–२१ ॥

उत्क्रमिष्यतो मुक्तस्य परमेश्वररूप स्वभावादात्मशब्देन परमेश्वराभिधान मित्यौडुलोमिर्मेने ॥

## अवस्थितेरिति काशकृत्स्नः ॥ १–४–२२

'य आत्मनि तिष्ठन्' इत्यादिश्रुते जीवात्मनि परमेश्वरस्याऽऽत्मतयाऽव

---

ननु — सर्वविज्ञानप्रतिज्ञादिकं परमेश्वरविषयमेव भवतुनाम । "तान्येवानुविनश्यती' त्यादि जीवपरामर्शः कथं तद्विषयतां प्राप्नुया दित्याकाङ्क्षाया न्तत्र स्वाभिमतम्प्रकारम्प्र दर्शयिष्य न्मतान्तरेणताव दुपपादयती त्याह — । कथमिहेति । सर्वत्रेति । "एतेभ्यो भूतेभ्य स्समुत्थाय तान्येवाऽनुविनश्यति नप्रेत्यसंज्ञास्ति अविनाशीवा अरे अयमात्माऽनुच्छित्तिधर्मे" त्येतेषु वाक्येष्वित्यर्थः॥

सर्वविज्ञानस्य प्रतिज्ञासिद्ध्यर्थस्य जीवपरमेश्वरयोः कार्यकारणभावकृतस्यैकस्य लिङ्गन्तज्ज्ञाप नार्थं जीववाचिशब्दैः परमेश्वराभिधानमिति प्रकृताधिकरणे विषयवाक्ययोः प्रतिज्ञासिद्ध्यर्थ मिति भाव ॥

संसारदशायां जीवस्य परमेश्वराद्भेदेऽपि मोक्षदशायां तद्भावप्राप्तेः जीवशब्दैः परमेश्व राभिधानमि त्यौडुलोमिमतमिति सूत्रं व्याचष्टे — उत्क्रमिष्यत इति ॥

जीवेष्वन्तर्यामितया परमेश्वरस्याऽवस्थिते स्तन्नियम्यत्वेन तच्छरीरभूतानां जीवानां शब्दा श्शरीरिपरमेश्वरपर्यन्ताः । अतो जीवशब्दैः परमेश्वराभिधानमिति काशकृत्स्नमतमिति

स्थाना जीवशब्दवाच्यत्वं परमेश्वरस्येति काशकृत्स्नो मेने । इदमेवमतं सूत्रकारस्य मतद्वयमुपन्यस्य तद्विरोधेनाऽभिधानात्, अन्यस्याऽनभिधानाच्च निश्चीयते। बहुश्रुत्यानुगुण्यंचाऽत्र संभवति । तथाह्यथर्वशिरसि सर्वचिदचिदनुप्रवेशात् परमेश्वरस्य सर्वशब्दवाच्यत्वमिति श्रूयते प्रथमखण्डे 'देवाह वै स्वर्गंलोकमगमन् ते देवा रुद्रमपृच्छन् को भवा' निति 'सोब्रवीदहमेकः

सूत्रार्थ मभिप्रेत्य व्याचष्टे — य आत्मनीति परस्परविरुद्धेषु त्रिष्वेतेषु मतेषु सूत्रकारस्य किं मभिमतमित्याशङ्कायां तन्निर्धारयति — इदमेवेति। जीवानां कार्यत्वस्य 'नात्माश्रुते' र्नित्यत्वाच्च ताभ्यः ब्र॥ सू॥ २–३–१७ इत्यधिकरणे निराकरिष्यमाणत्वा न्मुक्तावागन्तुकरूपाभिनिष्पत्तेः 'सम्पद्याविर्भाव स्स्वेनशब्दा (ब्र॥ सू॥ ४–७–१) दित्यधिकरणे निराकरिष्यमाणत्वाच्च काशकृत्स्नमतमेव स्वाभिमतमिति पूर्वं मतद्वयोपन्यासपूर्वकं तदभिधानेन तदनन्तरमन्यस्याऽनभिधानेन च सूत्रकृत्सूचयामासेति भावः । काशकृत्स्नमतस्यैव सूत्रकारसम्मतत्वे किंकारणमि त्याशङ्क्याह प्रबलश्रुत्यानुगुण्यञ्चाऽत्र सम्भवतीति अथर्वशिरसि 'सोऽन्तरादन्तरं प्राविश' दित्यन्तेन रुद्रः प्राणिनां शरीरान्तरा त्प्राणादेरप्यन्तरं चेतनवर्ग मन्तर्यामितया प्राविशदित्युक्तम्। 'दिशश्चान्तरं स प्राविशदि' त्यन्तेन दिगन्तर्गतं सर्वासु दिक्षु स्थितमचेतनवर्गं मन्तर्यामितया प्राविशदित्युक्तम् ॥

"तत स्सोऽहं नित्यानित्यः ब्रह्माऽह" मित्यादिना प्रथमखण्डशेषेण "यो वै रुद्रस भगवान् भूर्भुवस्सः यश्च ब्रह्मे" त्यादिना द्वितीयखण्डेनच शिवस्य सर्वान्तर्यामितया सर्वशरीरकत्वप्रयुक्तं सर्वशब्दवाच्यत्वं दर्शितम् तथा 'घृतात्परं मण्डमिवाऽतिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् । एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये सन्निविष्टः' "योरुद्रो अग्नावप्सु य ओषधीषु योरुद्रो विश्वा भुवना विवेश'। 'नमस्स्रोतस्याय च द्वीप्याय' चेत्यादि ब्रह्मकर्मकाण्डगत सर्वश्रुतिषुच सर्वेषा श्चेतनाऽचेतनाना मन्तर्यामितया तान्यनुप्रविष्टोऽन्तर्यामित्वा दष्टमूर्तिरन्तर्यामिब्राह्मणादिषु पञ्चभूतचन्द्रसूर्य सकलचेतनरूपाष्टमूर्तित्व प्रसिद्धेश्च सर्वशरीरकः 'इमां रुद्राय स्थिरधन्वने गिरः' इतिश्रुतेश्च सर्वशब्दवाच्यश्च शिवएवेत्यवधार्यते । तस्मा त्काशकृत्स्नमतमेव वेदसम्मतमि त्युपसंहरति — अत इति । श्रुतिसूत्रेति श्रुतिसूत्राण्युदाहृतानि महाभिशुक्लसूक्तयः स्मृतिपुराणानि तेषु मानवधर्मशास्त्रोपसंहारे 'प्रशासितारं सर्वेषा मणीयांस मणोरपि। रुक्माभं स्वप्नधीगम्यं विद्यात्तु पुरुषं पर' मिति सर्वेषां नियन्तारं पुरुषं प्रस्तुत्य 'एत मेके वदन्त्यग्नि मरुतोऽन्ये प्रजापतिम् । इन्द्रमेके परेप्राण मपरे ब्रह्मशाश्वत' मिति तेषुतेषु वेदभागेषु तत्तन्नाम्याविशब्दै र्व्यवहारमुपन्यस्य सर्वेषामेषा मविरोध सिद्ध्यर्थं 'सेष सर्वाणि भूतानि

प्रथम मासं वर्तामिच भविष्यामिच नाऽन्यः कश्चिन्मत्तोव्यतिरिक्तः' इति सोन्तरादन्तरं प्राविशद्दिशश्चाऽन्तरं संप्राविशत् सोऽहं नित्यानित्यो ब्रह्माऽहं ब्रह्माहं प्रांचः प्रत्यंचोऽहं दक्षिणांच उदंचोऽहं अथश्चोर्ध्वंच दिशश्च विदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुपज्जग त्यनुष्टुप्चाहं छंदोऽहं गार्हपत्योऽहं दक्षिणाग्निराहवनीयोऽहं सत्योऽहं

---

पञ्चभि र्व्याप्यमूर्तिभिः जन्मवृद्धिक्षयै र्नित्यं संसारयति चक्रव" दिति श्लोकेन तस्य सर्व नियन्तृत्वं राज्ञः प्रजानियन्तृत्वमिव ताटस्थ्येन स्थितस्य नभवति किन्तु जीववर्गस्य स्वस्व शरीरनियन्तृत्वमिव नियम्यानि व्यप्यस्थितस्येतिवर्णितम् । तेन सर्वेषां तच्छरीरत्वसूचना त्तस्य स्वशरीरभूताग्न्यादिशब्दवाच्यत्व मुपपादितम् । शिवस्याग्न्यादिशब्देन व्यवहारस्तावत् "अग्निं पुरातनयित्नोरचित्तात् । रुद्रोवा एष यदग्निः 'इत्यदिश्रुतिषु प्रसिद्धः इन्द्रशब्देन व्यवहारः अथर्वशिरसि ईशाननामनिर्वचनान्तरपठिते "अभित्वा शूरनोनुम" इतिमन्त्रे प्रसिद्धः पञ्चभि र्व्याप्यमूर्तिभिरित्यनेन वियदादिभूतरूपाः शिवस्याष्टमूर्त्यन्तर्गता स्तदभिमानिन स्सद्यो जातादिपञ्चब्रह्मरूपावा मूर्तयो विवक्षिताः ॥

ननु — मानवधर्मशास्त्रोपक्रमे "आसीदिदं तमोभूत मप्रज्ञात मलक्षणम् । अप्रतर्क्य मनिर्देश्यं प्रसुप्तमिवसर्वतः । ततस्स्वयम्भू र्भगवा नव्यक्तो व्यञ्जयन्निव महाभूतादिवृत्तौजाः प्रादुरासी त्तमोनुदः । अभिध्याय शरीरात्स्वा त्सिसृक्षु स्सकलाःप्रजाः । अपएव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मि ञ्जज्ञे स्वयंब्रह्मा सर्वलोक पितामहः" । इत्युक्त्वा "आपो नारा इतिप्रोक्ता आपोवै नरसूनवः ता यदस्यायनं पूर्वं तेन नारायणस्स्मृतः" इत्यदिश्लोकेऽपि तामहस्यापि स्रष्टरि जगत्कारणे पुरुषे नारायणनामनिर्वचनेन नारायणस्यैव जगत्कारणत्वमाविष्कृतमितिचे दुच्यते। 'तत स्स्वयम्भू र्भगवा' नित्यादिना पिता महस्य स्रष्टृत्वेन प्रतिपाद्यमानस्य नारायणस्य 'प्रदुरासीत्तमोनुद' इति तमःप्रेरका न्मायाधिष्ठातुः परमेश्वरात् ततश्शब्दोदिते प्रळयानन्तरकाले प्रथमं प्रादुर्भावोक्त्या परमशिवस्यैव सर्वकारणत्व मनेनसिद्धम् ॥

तमोनुदइतिहि क्विप्प्रत्ययेन पञ्चम्यन्तम् । प्रादुरासीदित्युक्ते कस्मादित्याकाङ्क्षानु रोधात् । न त्विगुपधलक्षणकप्रत्ययेन प्रथमान्तम् प्रदुर्भवितृविशेषणम् । पश्चा त्प्रादुर्भवतः पूर्वसिद्ध तमोधिष्ठातृत्वायोगात् । ततश्च मानवधर्मशास्त्र मुपक्रमोपसंहाराभ्यां परमेश्वरमेव जगतः कारण

गौरोऽहं गौर्यहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहं मृग्यजुस्सामाथर्वांगिरसोऽहं अक्षरमहं क्षरमहं गुह्योऽहं गोप्योऽहं अरण्योऽहं पुष्करमहं पवित्रमहं अग्रंच मध्यंच बहिश्च पुरस्ताज्ज्योतिरित्यहमेकः सर्वेच मामेव मां योवेद स सर्वान् देवान्वेद " इत्यन्तेन ; द्वितीयखण्डेच सर्वानुप्रवेशा देव ' योवै रुद्र स्सभगवान् यश्च ब्रह्मा तस्मै नमोनमः ' । इत्यारभ्य ब्रह्म विष्णुमहेश्वरोमात्रिनायकादि सर्वप्रपंचशब्दवाच्यत्वं प्रतिपाद्यते तथा सर्वश्रुति

मावेदयन्तीति सिद्धम् । तथा—कात्यायनगृह्यसूत्रे " नदीमुत्तरिष्यन्नभिमन्त्रयते " नमोरुद्रायाऽप्सु पदे स्वस्तिमासम्पाद " येति वनस्पतिमारोक्ष्य न्नभिमन्त्रयते—" नमो रुद्राय वनस्पतिपदे स्वस्ति मासम्पादये " त्यादिना नदीतरुगिरिचतुष्पथाद्याक्रमणेषु तदभिष्ठातृत्वेन तत्रतत्र सन्निहितस्य रुद्रस्य नमस्कारमन्त्रा न्विधायैवमन्यत्राऽपि ' नमो रुद्राये ' त्येवमृथादित्यन्याक्रमणेष्वपि सामान्यत स्तन्नमस्कारमन्त्रं विधाय 'रुद्रोह्येवैतत्सर्व' मिति तदनन्तरवाक्येन रुद्रस्य सर्वधिष्ठातृत्वे " सर्वोवैरुद्र " इतिश्रुतिः प्रमाणत्वेन स्मारिता तेन " सर्वो वैरुद्रः " " सर्वखल्विदंब्रह्म " त्यादिसर्वपदसामानाधिकरण्यं विशिष्य तत्तद्वाचिकपदसामानाधिकरण्यञ्च सर्वाधिष्ठातृत्वप्रयुक्त सर्वशारीरकत्वकृतमिति दर्शितं भवति आश्वलायनसूत्रे शिवम्प्रस्तुत्य ' सर्वाणिहवा एतस्य नाम धेयानि भव' न्तीति साक्षादेव सर्वेषांनाम्नां तत्र पर्यवसानं स्थापितम् ॥

अत्र यद्यपि श्रीभाष्यकारैरपि नारायणस्य सर्वान्तर्यामित्वप्रतिपादनद्वारा सर्वशब्द वाच्यत्वं सिसाधयिषित न्तथाऽपि प्रबलश्रुत्याद्यानुकूल्यविरहा त्सर्वभूतान्तरात्मेत्यादि सौबाल वाक्येनैव कार्तार्थ्यं सम्भावितम् । तथाऽपि सुबालोपनिषदः पाञ्चरात्रतन्त्रानुग्राहकत्वा त्पूर्वोदाहृतबहुश्रुतिविरोधेन विप्रतिषिद्धधर्माणां समवाये " भूयसांस्यात्स्वधर्मत्व " मिति न्यायेन बाधितत्वाच्च न तथा परेषामिष्टं सिध्यतीतिदिक् ॥

*

अथ यदत्र शुद्धाद्वैतिनोऽपि " नवारे पत्युःकामाये " त्यादिना जीवात्मानमनूद्य "आत्मावा अरे द्रष्टव्यः" इति तस्यैवद्रष्टव्यत्वविधाना ज्जीवब्रह्मणो रभेदस्सिद्धइति "सू॥ अवस्थितेरितिकाशकृत्स्न" इति सूत्रस्य " अस्यैवपरमात्मनो विज्ञानात्मभावेनाऽवस्थानादित्यर्थ इतिच वदन्ति तदसङ्गतम् । " भेदव्यपदेशा " दिति, " अर्थान्तरव्यपदेशा " दिति ' सुषुप्त्यु त्क्रान्त्योर्भेदेने ' तिच, जीवब्रह्मणोर्भेदस्य बहुसूत्रनिर्धारितत्वेन प्रकृते अभेदरूपार्थग्रहणस्य तद्वि रुद्धत्वात् । अत्र यद्यपि न्यायरक्षामणौ "अवस्थितेरिति काशकृत्स्नः " रज्जोरेव भुजङ्ग रूपेणेव भ्याधकुलसंवर्धितस्य राजपुत्रस्यैव व्याधभावेनेवच परमात्मनएव जीवभावे नाऽवस्थिते

सामरस्यविचारे सर्वेषां चिदचिद्वस्तूना मन्तर्यामितयाऽनुप्रविष्टः सर्वशरीरः सर्वशब्दवाच्यः परमेश्वरश्शिव इति विज्ञायते अतः काशकृत्स्नमतमेव श्रुतिमहाभियुक्तसम्मतमिति समञ्जसम् । इति वाक्यान्वयाधिकरणम् ॥

---

रित्यारभ्य "केचित्तु अत्र अवस्थितेरितिपदस्य "यआत्मनितिष्ठ" न्निति श्रुत्युक्ताया ज्जीवात्मनि परमात्मनस्थिता स्वारस्यं मन्यमानाः परिदृश्यमानेशरीर जीवात्मनश्च जीवात्मनि परमात्मनआत्मतयाऽवस्थितः जीवशब्देन परमात्माभिधानमिति सूत्रार्थं वर्णयन्ति अत्र विपरीतमपि वक्तुं शक्यम् । अस्मिन्नर्थे अवस्थितेरिति पदस्य स्वारस्यं नास्तीति तथाहि, स्थितेरित्येव सूत्रणीयम् । 'यआत्मनितिष्ठ' न्निति मूलश्रुत्यनुरोधाल्लाघवाच्च स्थनादि व्यपदेशादित्यत्र अवोपसर्गाभावाच्च तस्मादिहाऽवोपसर्गासत्त्वा त्ततोऽन्यएव कश्चिदर्थो विवक्षितः । परमात्मनएव जीवात्मभावेनाऽवस्थानादित्येवंरूपः इत्युक्तमितिचेदुच्यते । निपातानां द्योतकतया धात्वर्थातिरिक्तार्थप्रदत्वाभावा दवस्थितिपदं स्थितिपदसमानार्थकमेव । अथाऽत्र यदिद मवोपसर्गमवलम्ब्य विपरीतार्थग्रहण म्परेषा न्तदसम्मतमेव सुतरां सूत्रकर्तुःयद्यभेदएव तस्येष्येत तर्हि अवस्थितेरिति नसूत्रयेत् । स्थितेरिति सूत्रणेऽपि परमात्मन एव जीवभावेनस्थितेरित्यर्थ लाभस्य तुल्यत्वात् । एवम्परपक्षे प्यवोपसर्गस्याऽनर्थकतया तस्य यस्स्वाभिलषितार्थप्रदत्वभ्रम स्स निरस्तएव । तस्मादभेदएव यदि सूत्रकृतइष्येत तर्हि अभेदादित्येव सूत्रणीयम् । रज्जोरवे त्यध्याहारपरिहारेण लाघवा दसन्दिग्धत्वाच्च इह यद्यपि तत्त्वमस्यादीनि वचनानि जीवब्रह्मणो रभेदमापाततो बोधयन्ति । तथाऽपि तानिसर्वाण्य प्यन्तर्यामिब्राह्मणानुसारेण जीवब्रह्मणो श्शरीर शरीरिभावाभ्युपगमे तादात्म्यसम्बन्धेन सुसङ्गतान्येव भवन्ति । अथ यदितत्त्वमस्यादिवाक्यै र्जीव ब्रह्मणो रभेदएव मुख्यतयाऽभ्युपगम्येत तर्हि "यस्यात्माशरीर" मित्यादिना ब्रह्मणोन्तर्यामित्व बोधक मन्तर्यामिब्राह्मणम् । "त मात्मस्थं येऽनुपश्यन्ति धीरा" इत्यादीनि "द्वासुपर्णा" इत्यादीनिचाऽनन्तानि श्रुतिवचना न्युपरुध्येरन् । सूत्रकारश्च अन्तर्याम्यधिकरणे "उभयेऽपिहि भेदेनैव मधीयत" इति ब्रुवन् जीवपरमात्मनोर्भेदं स्फुटमङ्गीचकार । एवं सर्वश्रुत्यनुगतत्वा ज्जीवब्रह्मणो श्शरीरशरीरिभावस्यैव याथार्थ्याभ्युपगमेन पारमेश्वरसर्वात्मत्वरूप महाविभूतिवर्णनपरएव वेदार्थः । अथ उपासनाङ्गाभेदस्यैव पारमार्थिकतामभ्युपेत्य भूयसीनां भेद श्रुतीनां श्रुतिसूत्राश्रुतस्वकल्पिताऽविद्याप्रत्युपस्थापितभेदपरत्वं प्रतिज्ञाय एकोहि प्रत्यगात्मा भवति न द्वौ प्रत्यगात्मानौ सम्भवत इत्यन्तर्यामिब्राह्मणं तदधिकरणञ्च स्ववचनैरेव निराकृत्य प्रसाध्यमानोऽर्थः कीदृग्वा सुधियां विदितएवेत्यलमधिकेन ॥

इति वाक्यान्वयाधिकरणम् २७

---

अथ प्रकृत्यधिकरणम् ३८

पूर्व 'जन्माद्यस्ययतः' इति द्वितीयाधिकरणे 'यतोवाइमानि भूतानि' पञ्चमीश्रुत्यु दाहरणेन परमेश्वरस्य जगदुपादानत्वं सामान्येन निरूपितम्। तद्विशेषत स्समर्थयितुमिदमधि करणमारभ्यते ॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १–४–२३ ॥

'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः,' 'द्यावाभूमीजनयन्। देवएकः' इत्यादिवाक्यान्यस्यविषयः।

एतेषु प्रसिद्धमुभयकारणत्वं युक्तं नवेति सन्देहः। सन्देहश्च निमित्तस्य कुलालादेरुपादान मृत्पिण्डादिभावादर्शनात्। उपादानस्य मृत्पिण्डादे र्निमित्त कुलालादिभावादर्शनात् कथमेतस्मि न्निमित्तत्वमुपादानत्वंच जग त्कार्ये प्रतीति।

पूर्वपक्षस्तु जगत्सृष्टौ निमित्तमेव नोपादानमिति। कुतः? असंभवात्। नहि घटंनिर्मिमाणः कुलाल स्स्वयमेव मृत्पिण्डीभूय घटंकरोति; पटंवा

सङ्गतिं सूचय न्नुत्तराधिकरण मवतारयति — पूर्वमिति।विशेषत स्समर्थयितुमिति। परमेश्वरः केवलं कर्तैव उपादानन्तु प्रधानमिति सेश्वरसाङ्ख्यमत निराकरणपूर्वकं ब्रह्मणउपादा नत्वं समर्थयितुमित्यर्थः। प्रकृतपादारंभे निरीश्वरसाङ्ख्यस्य निराकृतत्वेन सेश्वरसाङ्ख्यमतनिरा करणस्य प्रासङ्गिकीपादसङ्गतिरित्याशयः। अतीतवाक्यान्वयाधिकरणविषयवाक्ये "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदित" मिति सर्वविज्ञानप्रतिज्ञाया श्श्रुतत्वेन तन्मूलभूत निखिलजगदुपादानत्वस्याक्षेपा दाक्षेपरूपा पूर्वाधिकरणसङ्गतिरितिभावः ॥

दृष्टान्ताभ्यां सन्देहमुपपादयति — सन्देहश्चेति। पूर्वपक्षयति — पूर्वपक्षस्त्विति।

ननु — लोके घटादिकर्तॄणां कुलालादीनां घटादीन्प्र त्युपादानत्वाभावेऽपि इह जगत्कर्तुः प्रतिज्ञादृष्टान्ताभ्या 'मुपपादितं जगदुपादानत्वं परित्यक्तुं नयुज्यते अथ यदि निमित्तोपादानयो र्लोके भेदएवदृश्यतइति तदनुरोधेन जगदुपादानत्वं परित्यज्येत। तर्हि लोके कतिपयकार्यकर्तुः कार्यान्तरकर्तृत्वादर्शनात्। "इदग्ं सर्वमसृजते" ति श्रुतिसिद्धं सर्वकर्तृत्व मपि हातव्यमेवस्यात्। तस्मा ल्लोकादृष्टमपि सर्वकर्तृत्वमिव श्रुतिप्रामाण्यादेव जगदुपादानत्वम प्यवश्याङ्गीकरणीयमित्याशङ्क्याह — अतइति। कुलालस्येव निमित्तस्य ब्रह्मणउपादानत्वं

कुविन्दः ; किंत्वा कुलालीभूय मृत्पिण्ड स्तंकर्तुमीहते तन्नसंभवत्येव अतो निमित्तभूतस्य ब्रह्मण उपादानत्वं नसंभाव्यते निष्प्रयोजनंच निमित्तस्यस्यो पादानत्वकल्पनम् । विनाऽपितत्कल्पनं कार्यनिष्पत्तेः कुलालस्य मृत्पिण्डा दन्यत्रेऽपि घटनिष्पत्तिदर्शनात् । अतो ब्रह्म निमित्तमेव नोपादान मिति ।

अत्रोच्यते जगतो निमित्तमुपादानंच ब्रह्मैव 'स्तब्धोऽस्युत तमादेश मप्राक्ष्यो येनाऽश्रुतंश्रुतंभव त्यमतंमत मविज्ञातंविज्ञात' मिति श्रुत्या येऽनादेष्ट्रा निमित्तभूतेन विज्ञातेन चिदचिद्रूपं सर्वजग द्विज्ञातंभवती त्यादेष्टृविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् । यथैकेन मृत्पिण्डेन ज्ञातेन सर्वमिदं

---

नसम्भवति कर्मकर्तृभावविरोधस्य तुल्यत्वात् । तस्मादुपादानत्व प्रतिपादकश्रुतयस्तु 'प्रजा पतिस्स्ववपामुदखिद' दिति वाक्यव दौपचारिकतया नेया इतिभावः ॥

ननु — ऊर्णनाभा वुपादानत्वदर्शना न्नहिदृष्टेऽनुपपन्नमिति न्यायेन नविद्यते कर्तु रुपादानत्वे विरोधः एवञ्च "यथोर्णनाभि स्सृजते गृह्णते" चेतिश्रुत्या तन्तून् सृजत ऊर्णनाभे रेव तल्लयाधारत्वप्रतिपादनेन ब्रह्मणो जगदुपादानत्वसिद्ध्या छान्दोग्यादिगत प्रतिज्ञादृष्टान्त श्रुतयोऽपि मुख्यार्थपरा भवन्तीत्याशङ्क्याह — निष्प्रयोजनञ्चेति । चकारेण निरालम्बनमित्यपि सिध्यति । अत्रायऽम्भावः । तल्लयाधारस्य तदुपादानत्वं नियतमित्यङ्गीकर्तुं नयुक्तम् । मृदि घटाकारेण परिणममानायां तदाकारेण परिणममानस्य घटलयाधारस्याऽपि भूतलस्य तदुपादा नत्वाभावेनोक्तनियमासिद्धेः ऊर्णनाभिदृष्टान्तोऽनुपपन्नः । तन्तुसृष्टौ तदीयलालाजलस्य जडस्यै वोपादानत्वेन चेतनस्योर्णनाभे रुपादानत्वाऽदर्शनात् । तस्मादत्र सिद्धान्तिनाऽपि "मायान्तु प्रकृतिंविद्या" दिति श्रुतिमनुसृत्य परिणामिन्या मायाया उपादानत्व मवशतोऽभ्युपगम्यते । ब्रह्मणोऽप्युपादानत्वकल्पनं निरर्थकमेव । मायायां जगदाकारेण परिणममानायां निर्विकारं ब्रह्मा प्युपादानमितिवचनं निराधारम् । कार्याकारेण परिणामित्वस्यैवोपादानत्वात् । घटादिकर्तु रुपादानत्वादर्शनेन व्यभिचाराच्च प्रतिज्ञादृष्टान्तादिश्रुतय उपचरितार्थाएवेति । पूर्वपक्षमुप संहरिति — तत इति ॥

सूत्रगतं प्रकृतिपदमुपादानत्वपर श्चाकारोनिमित्तत्वसमुच्चायक इत्याशयेन व्याचक्षाण स्सिद्धान्तंप्रतिजानीते उच्यतइति । 'प्रतिज्ञादृष्टान्ताऽनुपरोधा' दितिहेतुं विवृणोति — तमादेशमित्यादिना । ननु सर्वविज्ञानप्रतिज्ञानं प्राधान्याभिप्रायम् । यथा प्रधानपुरुषाणां ज्ञाना ज्ञानाभ्यां ग्रामो ज्ञातोऽज्ञातइति व्यपदिश्यते । तत स्तदौपचारिकमित्याशङ्क्याह — ब्रह्मणइति ।

मृण्मयं विज्ञातंस्यदिति तदुपपादक भृत्पिण्डदृष्टान्तानुरोधाच्च ब्रह्मणो निमित्तमात्रत्वे तद्विज्ञानेन सकलप्रपंचविज्ञानं नसंभवति । तथाहि, कुलाले ज्ञाते घटादिकार्यं नज्ञायते किंतु तदुपादानमृत्पिण्डज्ञानेन अतो निमित्तस्य ब्रह्मणउपादानत्वे तत्संभवतीति ब्रह्मैवोपादानमपि । आदिश्यतेऽनेनेत्यादेश शब्देनाऽदेष्टृभूतं ब्रह्मोच्यते ॥

---

ब्रह्मणो निमित्तत्वमात्रेऽभ्युपगतं तद्विज्ञानेन सर्वप्रपञ्चविज्ञानं श्रूयमाणं गौणमेवस्यात् । तथै वाऽङ्गीक्रियतइतिचेन्न श्रुतिविरोधात् । तथाहि — एवं छान्दोग्यउपाख्यायते । उद्दालको महर्षि स्स्वपुत्रं श्वेतकेतुं स्वनियोगात् द्वादशवर्षाणि गुरुकुलेस्थित्वा सर्वान्वेदानधीत्य प्रतिनिवृत्तं वैदुष्य गर्वेणमनस्त्र मविनीतोऽय मप्राप्तब्रह्मविद्य इतिनिश्चित्य त ब्रह्मविदंचकर्तुं "सोम्य महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाऽश्रुतंश्रुतंभव त्यमतंमत मविज्ञातंविज्ञात" मितिपृष्ट्वा कथ मेकेनश्रुतेन सर्वं श्रुतं मतं विज्ञातंचस्या त्कथमिदमाश्चर्यमुपपद्यते इत्याशयवता श्वेतकेतुना पुनःपृष्टो मृत्पिण्डादिदृष्टान्तै स्तदुपपाद्य "नवै नूनं भगवन्त स्तएतदवेदिषु र्यद्ध्येतदवे दिष्य न्कथं मे नाऽवक्ष्य" न्निति भगवां स्त्वमेव मे तद्ब्रवीत्विति तेन पुनःपृष्ट स्तथा—" सोम्येति प्रतिज्ञाय "सदेव सोम्येद मग्रआसी" दित्यद्विनोपदिदिशेति । अत्रकिल यदिप्रतिज्ञागौणी तर्हि प्रधानज्ञानेन सर्वमन्यदप्रधानं विदितप्रायंभवतीत्यस्याऽर्थस्य लोकसिद्धत्वा त्तदुपपत्ति विदित वतः "कथंनु भगव स्स आदेश" इति प्रश्नस्य तदुत्तरवाक्ये मृद्घटादिदृष्टान्तै स्तदुपपादन स्याऽप्यसामञ्जस्यंस्यात् । तस्मा त्तद्यथामुख्यंभवति तथा समर्थनीयम् । "सदेवसोम्येद" मित्यत्र सत्पदं सूक्ष्मचिदचिद्विशिष्टवस्तुपरम् । अन्यथा ब्रह्मातिरिक्तस्य जीववर्गस्य सत्त्वेन सदेवेत्यवधारणं विरुध्येत । तस्मा त्पृथग्भूतवस्त्वन्तर व्यवच्छेदकत्वेनैवाऽवधारणं समर्थ नीयम् । एवञ्च तज्ज्ञाने तत्कार्यं सर्वमपि जगद्विषयोभवति । कार्यद्रव्यस्य कारणाऽनन्यत्वात् तत्र स्थौल्यापत्तिः परं नविषयीभवति । एवं सर्वविज्ञानप्रतिज्ञानमुपपद्यत इति । इत्थं प्रतिज्ञा मुख्यत्वोपपादनप्रकारमभिप्रेत्यैव भाष्ये हेतुविचारवाक्ये चिदचिद्विशिष्ट सर्वजगदिति विशे षितम् । स्थूलचिदचित्प्रकारकब्रह्मात्मकं सर्वकार्यमिति तस्याऽर्थः । एवं प्रतिज्ञानुरोधा द्ब्रह्मोपादान मभ्युपगन्तव्यमित्युपपाद्य दृष्टान्तानुरोधादपि तथैवाऽभ्युपगन्तव्यमित्यमुमंश मुपपादयति — तथाहीति । अत्र ब्रह्मणि केवलनिमित्तत्वे तज्ज्ञाना त्सकलज्ञान नसम्भवति किन्तूपादानत्वे सत्येवेतिभावः । नन्वेवं सौत्रहेतुना ब्रह्मण उपादानत्वसिद्धावपि सूत्रगत चकारेण समुच्चितं निमित्तत्वं नसिद्धमित्याशङ्क्य येनादेष्टा निमित्तभूतेनेति हेतुविवरण वाक्यगत यत्पदार्थविशेषणसूचिता त्तमादेशमिति श्रुतिगतप्रतिज्ञावाक्यगतादेशशब्देन विशेष्य निर्देशा त्तत्सिद्धिमुपपादयन् तस्याऽर्थमाह — आदिश्यतेऽनेनेति । अयमादेशशब्दः प्रशा

न तदर्थान्तरत्वमुपादानस्येति विज्ञपयितुं हेत्वन्तरमाह ॥

## अभिध्योपदेशाच्च ॥ १–४–२४ ॥

'तदैक्षत बहुस्यां प्रजाये' येति निमित्तभूतस्येक्षितु स्सर्वज्ञस्य ब्रह्मण एव विचित्रजगदाकारेण बहुभवनसंकल्प उपदिश्यते। अतो निमित्तादनन्य दुपादानम् ।

ननु, 'विश्वाधिको रुद्रो महर्षिः हिरण्यगर्भं पश्यत जायमान' मिति विश्वोत्तीर्ण एव परमेश्वरो निमित्तभूतः स्वव्यतिरिक्तप्रकृतौ स्वसंकल्पेन जायमानं सकलदेवप्रथमं हिरण्यगर्भं स्रष्टुमनुग्रहदृष्ट्या पश्यतीति विज्ञायते । कथमस्य विश्वाकारत्वं प्रकृतिरूपत्वेन संभवति ? 'मायान्तु प्रकृतिं विद्या' दिति मायायाः प्रकृतित्वं श्रूयते । 'तस्माद्विराडजायत । विराजो

---

सितृपरः । अकर्नरिच कारकइति विधानेन कर्त्रर्थे घञोऽप्राप्तेः आदिश्यते प्रशिष्यतेऽनेनेति कर्तुस्साधकतमत्वविवक्षयाऽयमादेशशब्दः करणार्थेव्युत्पन्नइतिभावः । निमित्तोपादानयोरभेदे हेत्वन्तरप्रदर्शनपरेणोत्तरसूत्रेणाऽपि निर्देश आदेशशब्दस्य निमित्तपर्यवसायित्वं ज्ञापयतीत्यभि प्रेत्य उत्तरसूत्रमवतारयति — इति ज्ञापयितुमाहेति ॥

अतो निमित्तादुपादानमनन्यदिति यद्विज्ञानेन सर्वविज्ञानं प्रतिज्ञातं तस्य प्रपञ्चेन निरूपणार्थंप्रवृत्ते मानाऽन्तराऽगोचरविषये "तदैक्षत बहुस्यां प्रजाये" येति श्रुतावुपचार कल्पनाया अयुक्तत्वात् ईक्षिता जगतो निमित्तं यः परमेश्वर स्सएव जगदुपादानमिति तदैक्ष तेति बहुभवनसङ्कल्पोपदेशा त्सिध्यति । प्रतिज्ञातार्थप्रपञ्चनपरवाक्यस्य निमित्तोपादानाभेद परत्वव्यवस्थितौ प्रतिज्ञावाक्ये प्युपादानत्वेन वर्ण्यमानस्य निमित्तत्वमप्यपेक्षणीयमि त्यादेश शब्दस्याऽऽदेष्टृपरत्वमस्मादेव सिद्ध्यतीतिचभावः । उत्तरसूत्रव्यावर्त्यां शङ्कां दर्शयति — स्वव्यतिरिक्तेति । ननु मन्त्रे 'जायमान' मित्येवश्रूयते । नतु स्वस्मिन्परस्मिन्वेति विशेषः कथं स्वव्यतिरिक्तप्रकृतिस्थानइति विवृतम् । उच्यते । तस्मिन्नेवमन्त्रे विश्वाधिकत्वेन वर्ण्य मानस्य विश्वाकारं नसस्भवति विश्वजीवसमष्टिरूप हिरण्यगर्भोपादानत्वेनच विश्वाकारत्वमवर्ज नीयम् । श्रूयतेहि श्रुत्यन्तरेषु मायापुरुषश्च त्युपादानान्तरम् । अतस्तस्मा ज्जायमानत्वमेव श्रुत्यर्थ

अधिपूरुषः' इति पुरुषस्य प्रकृतित्वमाम्नायते । अतस्तयोरेव प्रकृतित्वेन जगदाकारत्वमुचितमित्यतआह ॥

## साक्षाच्चोभयाम्नानात् ॥ १–४–२५ ॥

साक्षात् प्रत्यक्षमेव वेदान्तभागेषु परमेश्वरस्य प्रकृतित्वेन जगदाकारत्वं, निमित्तत्वेन जगदुत्पादकत्वंच श्रूयते ॥ तथाहि, 'विश्वधिकोरुद्रः' इत्यदिना यथा विश्वाधिकत्वमवगम्यते, तथा 'सर्वोवैरुद्रः' इत्यादिना प्रकृतित्वाद्विश्वरूपत्वमपि श्रूयते । शतरुद्रीये, 'नमोहिरण्यबाहवे' इत्या

---

इत्यभिप्रेत्य तथा व्याख्यातम् । अतएव मन्त्रार्थकथनं विश्वोत्तीर्णत्वेन विशेषितः उपादानान्तरसद्भावेच श्रुत्यन्तरोदाहरणं कृतम् ॥

प्रकृतित्वेनेति । नन्वन्तर्याम्यधिकरणे ह्यन्तर्यामिभावेन जगदाकारत्वं तत‌एव "सर्वोवैरुद्र" इत्यदिषु श्रुतिषु जगद्वाचिभिश्शब्दैः परमेश्वरस्य निर्देशइत्युक्तम् । इह कथम् सर्वोपादानत्वेन जगदाकारत्वादित्युक्तमितिचेदुच्यते । उभयथाऽपि श्रौतनिर्देशस्योपपन्नतया नदोषः । अनयोः प्रकारयो र्येनकेनाऽपिप्रकारेणोदाहृताधिकरणेषु प्राप्तशङ्कासमाधानस्यसम्भवात् । पूर्वोत्तरयोः प्रकारयोर्भेदेऽपि सूक्ष्मचिदचिद्विशिष्टः परमेश्वर उपादानं स्थूलचिदचिद्विशिष्टः कार्यमिति कारणशरीरेणवाऽचेतनात्मक प्रपञ्चानुप्रवेशोऽन्तर्यामिभावेनवे त्युभयथाप्य विशिष्ट परमेश्वरस्य तदनुप्रवेशे प्रपञ्चवाचिनां शब्दानां नीलादिशब्दवदप्रधानभूत विशेषणवाचितयावा देवमनुष्यादिशब्दव च्छरीरवाचितयावा परमेश्वरपर्यन्तत्वलाभा दुभयथाऽपि श्रुतिषु प्रपञ्चवाचिभिश्शब्दैः परमेश्वरस्य निर्देशउपपद्यतएव । यथाकथमपि तदुपपत्तौ कथं जीववाचिशब्दैः परमेश्वराभिधानमिति पूर्वाधिकरणशङ्कासमाधानंसम्भवति । विश्वातीतस्य कथं विश्वाकारत्वमि त्यन्तर्याम्यधिकरणं तदधिकरणकृतशङ्कासमाधानमपि विश्वान्तर्यामितया विश्वोपादानतयावा विश्ववाचकशब्दानां परमेश्वरेप्रयोगेण विश्वाकारत्वावसायाल्लभ्यते । विश्वोत्तीर्णत्वञ्च विश्वाकारत्वस्याम्नातस्य त्यागायोगादिति । नचोभयोर्विरोधः । जीवेषु देवमनुष्यत्वाद्याकारत्वस्य देवमनुष्यादिशरीरेभ्योऽधिकत्वस्य च समावेशात् । हेयवस्त्वनुप्रवेशप्रयुक्त दोषप्रसङ्गशङ्कातु "नस्थानतोपी" त्यधिकरणे सूत्रकृतैव निराकरिष्यते । इहत्वेवमपि विरोधशङ्कासमाधानं सम्भवति । यथा बृहत्त्वमात्रेण प्रवृत्तिनिमित्तेन परमेश्वरे ब्रह्मशब्दस्य प्रवृत्तौ प्रकरणोपपदादिसङ्कोचकाभावात् । स्वरूपतो गुणतश्च बृहत्त्वं तस्य लभ्यतइति कचित्परमेश्व

रभ्य कुलुंचानां पतय ' इत्यन्तेन विश्वाधिपत्यं, ततश्च ' नमःपर्ण्यायच पर्णशद्यायच ' इत्येतत्पर्यन्तेन जगदाकारत्वंच परमेश्वरस्य श्रूयते। प्रदेशान्तरेच ' ब्रह्मवनं ब्रह्म स वृक्ष आसीत् ब्रह्माऽध्यतिष्ठत् भुवनानि धारयन् ' इत्युभयश्रुतिः । अथर्वशिरसिच प्रथमद्वितीयखण्डयो र्जगदा

---

रस्य स्वरूपबृहत्वे प्रमाणत्वेनोपन्यस्तमेव ब्रह्मपदमन्यत्र तस्यगुणबृहत्त्वेऽपि प्रमाणत्वेनोपन्यस्यते । तथा तस्मिन् पृथक्प्रसिद्धचा विशेषणभूत चेतनाचेतनात्मक प्रपञ्चान्तर्गतस्यऽसाधारणाकारेण प्रवृत्तिनिमित्तेन तस्मि न्प्रवर्तमानस्य "सर्वोवै रुद्रः" "प्राञ्चोहं प्रत्यञ्चोह" मित्यदि तत्तद्वस्तुवाचकशब्दजातस्य तस्मिन्प्रवृत्तौ सङ्कोचकाभावा द्वाक्यान्तरानुसाराच्च सर्वोपादानत्वेन सर्वान्तर्यामितया सर्वशरीरत्वेनच स्वाऽपृथक्सिद्धप्रपञ्चाकारविशिष्टत्वं तस्य ततो लभ्यत इति प्रागन्तर्यामितया सर्वाकारतायां प्रमाणत्वेनोपन्यस्तमेवाऽत्र सर्वोपादानतया सर्वाकारतायां प्रमाणत्वेनोपन्यस्यतइति नकश्चिद्विशेषइति 'साक्षाच्चोभयाम्नाना' दितीदं सूत्रं शङ्काद्वयपरिहारार्थत्वेनाऽवतारितम् । तत्र विश्वाधिकस्य कथं विश्वाकारत्वमिति शङ्का विश्वाधिकत्वव द्विश्वाकारस्याप्याम्नाना दुभयोश्च विरोधाभावादिति परिहृता । ब्रह्म निमित्तमेव नतूपादानमपि मायापुरुषयो रुपादानयो श्श्रवणादिति शङ्कासमाधानबलादेव निमित्तत्वव दुपादानत्वमपि ब्रह्मणोऽङ्गीकार्यम् । श्रुतिबलान्मायापुरुषयोरिव ब्रह्मणो प्युपादानत्वसम्भवादि त्यभिप्रेत्य परिहरति — ब्रह्मवनमिति । निमित्तोपादानाऽभेदाङ्गीकरणाय " किंस्विद्वनं क उ सवृक्ष आसीत् । यतो द्यावा पृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदुतम् । यदध्यतिष्ठ द्भुवनानिधारय" न्निति मन्त्रेण श्रुतिरेव परमेश्वरेणकर्त्रा जगतिस्रष्टव्ये तक्ष्णा रथे निर्मातव्ये वनाध्यक्षइव किमुपादाना त्कुतःप्रदेशा दानीतम् । जगद्धारयित्रात्र परमेश्वरेण नृत्यद्दारुपुत्रिकादिधारकेण सूत्रधारेण सूत्रमिव किंवाऽधिष्ठितमिति प्रश्नमवतारयामास । तत्र द्यावापृथिवी — इत्यनेन सर्वाणि भुवनान्युच्यन्ते । 'अग्रे भुवनानि धारय' न्निति श्रवणात् । भुवनग्रहणञ्च तनुभुवनभोगोपकरणभोक्तॄणां सर्वेषामप्युपलक्षणम् । एकस्मिन्नेव परमेश्वरे निष्टतक्षुरिति छान्दसं बहुवचनम् । अनन्तरमन्त्रेण अस्यप्रश्नस्योत्तरमुच्यते । ' ब्रह्मवनं ब्रह्म स वृक्ष आसीत् ' । "यतो द्यावापृथिवीनिष्टतक्षुः । मनीषिणो मनमा विब्रवीमिवः ब्रह्माध्यतिष्ठद्भुवनानि धारय" न्निति । ब्रह्मैवजगत्कर्तृभूत मुपादानं तदधिकरणञ्च । जगद्धारणेच सूत्रव त्तदेवाऽधिष्ठेयमिति मन्त्रार्थः । अथर्वशिरसीति । तत्र प्रथमद्वितीयखण्डयोः ब्रह्माहमि त्यारभ्य विश्वाकारत्वम् पञ्चमखण्डे "एकोरुद्रो नद्वितीयायतस्थे, य इमं लोकमीशत ईशनीभि" रित्यादौ विश्वेश्वरत्वञ्चोक्तम् । तस्मादथर्वशिरसि विश्वाधिकत्व विश्वाकारत्वोभयाम्नानञ्चास्तीत्येतेन शङ्काद्वयस्याऽपि समाधानं लभ्यतइत्यर्थः । अत्राऽथर्वश्रुत्युदाहरण मानन्द

कारत्वं तदुपरि * जगदीश्वरत्वंच । ततः प्रत्यक्षमुभयाम्नानात् जगच्च जगदीश्वरश्च प्रकृतिनिमित्तत्वेन परंब्रह्म परमेश्वरः शिव इति युक्तमेतत् ॥

किंच प्रमाणान्तरमस्तीत्याह ॥

## आत्मकृतेः ॥ १–४–२६ ॥

'तदात्मानं स्वयमकुरुत' इति स्वस्यैव जगदाकारत्वेन कृति रव गम्यते परमेश्वरस्य अतः सएवोपादानं निमित्तंच ॥

नन्वज्ञानविकारास्पद हेयप्रपञ्चरूपेण प्रकृतिभावेन कथंवर्तते निरस्त समस्त दोषलवकलङ्को निस्सीममङ्गळगुणरत्नाकरो निरङ्कुशनित्यसिद्ध वैभवः प्रपञ्चातीतः परमशिव इत्यतआह ॥

## परिणामात् ॥ १–४–२७ ॥

नित्यशुद्धानन्दस्य निरतिशयमङ्गळस्वभावस्याऽपि निमित्तस्य परम

वल्ल्यादीनाम प्युपलक्षणम् । आनन्दवल्ल्यां हि "इदगुंसर्वमसृजत यदिदंकिञ्च" ति कर्तृत्वम् "आत्मनआकाशस्सम्भूत" इत्युपादानत्वञ्चाम्नानम् । पूर्वसूत्रयोः विषयैः प्रतिज्ञादृष्टा न्ताऽभिध्योपदेशैः शिवस्य निमित्तोपादानत्वद्वयमाक्षेपत स्सिध्यति । ब्रह्मवनमित्यादिभिस्तु श्रुतितएवेत्यभिप्रेत्य साक्षादितिविशेषितम ॥

सूत्रान्तरमवतारयति — किञ्चेति ॥

सर्वज्ञस्य निर्विकारस्य निरतिशयपुरुषार्थरूपस्य परमस्वतन्त्रस्य शिवस्य किञ्चिज्ज्ञत्व सङ्कोचविकासादिविकार दुःखद्वेषभयादिकलुषित परतन्त्रैकस्वभावचित्प्रपञ्चरूपेण विविधविका रास्पददु.खस्वभाव संसारपाशात्मकाचित्प्रपञ्चरूपेणच परिणामरूपं जगदुपादानत्वं नसम्भवतीति शङ्कोत्तरत्वेनोत्तरसूत्र मवतारयति — नन्विति ॥

ननु — परिणामासम्भवशङ्कायाम् परिणामादित्येतदेव कथमुत्तरंस्यादिति शङ्कते — हन्तेति । 'परिणामा' दिति सूत्रस्य निर्विकारत्वाद्यविरोधिपरिणामविशेषसम्भवादित्यर्थ मभि

* जगदीश्वर त्वं चेति भूयस्त इति शेषः ॥

शिवस्य प्रकृतित्वेन जगदाकारत्वं युक्तमेव, चिदचिदाकारेण परिणामात्। हन्त कारणरूपविकारो हि परिणामः। पूर्वरूपपरित्यागेन रूपान्तरापत्तिः, परिणाम इति कथं परमेश्वरोऽनर्थं धर्मात्परिभूत इतिचेत्सत्यम्, यथा निमित्तस्य प्रकृतित्वेऽपि न विकारादिस्पर्शः तथा परिणामस्संभवति। कोऽयमपूर्वः परिणामः कुतूहलिनो वयं तच्छ्रवणे विविच्यतामितिचेच्छृणु, विवेच

---

प्रेत्यपरिहरति — सत्यमिति। निर्विकारत्वविरोधिविकारवत्त्व रूपं परिणामित्वं नसम्भवतीति शङ्कते। — कोऽयमिति। तत्संभवमुपपादयितुं शङ्कते — कोऽयमिति। तत्संभवमुपपादयितुं प्रतिजानीते — विवेचयाम इति। अत्राऽयम्भावः "निष्कलं निष्क्रियं शान्त" मित्यादिश्रुतिभिः परमेश्वरस्य निर्विकारत्वमिव प्रागुदाहृतश्रुतिभिः प्रपञ्चोपादानत्वमपि सिध्यति। नचतयोर्विरोधइति शङ्क्यम्। स्वयं साक्षान्निर्विकारोऽपि शिवः किञ्चिद्द्वारा विकारवत्त्वेनोपादानतया विरोधाभावात्। तदेवं निर्विकारस्याऽपि परमेश्वरस्य प्रकृतिद्वारा विकाराश्रयत्वम् सम्भवतीति तस्य जगदुपादानत्वोपपादनं मनसिनिधाय शिवस्य प्रकृतिद्वारकमुपादानत्वं प्रकृतित्वेनाऽभिमताया स्तदीयचिच्छक्तेः परिणामित्वे सम्भवे तदेवमुपपद्यमि त्याशङ्का निराकरणाय तत्र श्वेताश्वतरोपनिषदिश्रुतोमन्त्रःप्रमाणमित्याशयेन तन्मन्त्रमुदाहृत्य तस्याऽर्थमाह — यदातम इति। महास्फुरत्तारूपा सकलप्रपञ्चानुगतस्फुरणरूपेत्यर्थः। अत एव तत्कालतमोपनोदिनी तस्मिन्काले प्रळयारम्भादारभ्य सुषुप्ताविव जीवानां प्रपञ्चास्फुरणरूपं यत्तमोऽनुवृत्तम् तस्याऽपनोदिनीत्यर्थः। ज्ञानशक्तिः प्रसूतेति। प्रळयदशायां शिवेनाऽविभागापन्नतया स्थितापराशक्तिः ज्ञानशक्तिरूपेण प्रवृत्तेत्यर्थः। अनेन मन्त्रे शक्तेः प्रसूतेत्युक्तिः तस्याःपरिणामित्वे प्रमाणमिति दर्शितं भवति। एवं शक्तेः परिणामित्वे सम्भाविते सति शरीरस्य परिणामित्वा च्छरीरविशिष्टस्य कृशोऽहं पुष्टःस्यामिति संकल्पइव सूक्ष्मचिदचित्प्रपञ्चरूपापन्नचिच्छक्तिविशिष्टस्य परमेश्वरस्य संविभक्तनामरूप चिदचित्प्रपञ्चापन्नचिच्छक्तिशरीरको भवेयमि त्येवंभूतः "सोकामयते" त्यादि श्रुत्युक्तः बहुभवनसङ्कल्पः "इदगुंसर्वमसृजते" त्यादि श्रुत्युक्त स्संविभक्तनामरूपस्थूलप्रपञ्चसर्गः "तस्माद्वे" त्यादिश्रुत्युक्तः सृष्टप्रपञ्चानुप्रवेशः, "तदनुप्रविश्ये" त्यादिश्रुत्युक्तः प्रविष्टचेतनाचेतनप्रपञ्चरूपापन्नचिच्छक्तिशरीरकतया प्राग्वर्णितरूप शिवस्य बहुधापरिणामः पुरुषस्य बालत्वयुवत्वव त्प्रपञ्चशरीरिणस्तस्य कारणत्वं कार्यत्वञ्च बालयुवपुरुषानन्यत्वव त्प्रतिज्ञादृष्टान्तसिद्धं कार्यकारणानन्यत्वञ्चेति सर्वमिदमुपपद्यत इत्याह — तत "स्सोकामाय" तेत्यादिना। ननु सर्वमिदमुपपद्यते यदि "प्रज्ञाच तस्मा" दितिश्रुतौ परिणामित्वेन प्रसिद्धा शैवी चिच्छक्तिः प्रपञ्चस्य प्रकृति

यामः । ' यदातम स्त न्नदिवा नरात्रि र्नस न्नचाऽस च्छिवएव केवलः तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञाच तस्मात् प्रसृतापुराणी " इति यस्मिन्काले विगतचन्द्रसूर्यादि तेजस्कतया दिवारात्रिविभागशून्यं, नामरूपविशेष राहित्येन स्थूलसूक्ष्मचेतनाचेतन सदसद्व्यवस्थारहितं, सर्वमिदं तमोभूतमवर्तत, तदाशिवएवाऽद्वितीयः केवल; स्वाविभागापन्न चिदचिच्छक्तिः स्वप्रकाशः

---

भवत् । तत्र प्रमाणंवक्तव्यम् । " यच्च किञ्चि ज्जगत्यस्मिन् दृश्यते श्रूयतेऽपिवा । अन्त र्बहिश्च तत्सर्वं व्याप्य नारायण स्स्थितः " इति नारायणस्याऽन्तर्बहिश्च जगद्व्याप्तिश्रुत्या जग दुपादानत्व मवसीयते । " तस्मा द्विराडजायते " त्यादिमन्त्रेषु साक्षाच्च तस्य तदाम्नायते तद्विरोधश्च परिहरणीयः । नारायणस्य शिवशक्त्यंशत्वा त्तद्द्वारा तस्याः प्रपञ्चप्रकृतित्वमिति नविरोधइतिचे त्तर्हि तत्र प्रमाणं वाच्यमित्याशङ्काया न्तत्रोभयप्रमाणत्वमभिप्रेत्य श्वेता श्वतरमन्त्रमुदाहृत्य तस्य तात्पर्यमाह — मायान्त्विति । वैदिकनिघण्टौ ज्ञानपर्यायेषु पठि तेन मायाशब्देनाऽत्र शैवीचिच्छक्तिरभिधीयते ॥

ननु " छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । तस्मा न्मायी सृजतेविश्वमेत त्तस्मिंश्चान्यो मायया सन्निरुद्धः " । इति पूर्वस्मिन्मन्त्रे मायाया जीवं प्रति निरोधकत्वरूपं बन्धहेतुत्वमुक्तम् । सैव " मायान्तुप्रकृतिविद्या " दित्यत्राऽपि परा मृश्यते । सा कथं सर्वानुग्राहकत्वेन प्रसिद्धाशैवीचिच्छक्तिस्स्यात् । स्यादेव । जीवानां जीवत्वापादकस्य सकलसंसारनिदानस्य मलावरणस्य रोधशक्त्याख्यस्य पाशत्वव्यपदेशस्य शिवा गमेषु तस्यां प्रसिद्धत्वात् । यदाहुः " तासां माहेश्वरीशक्ति स्सर्वानुग्राहिका परम् । परानु वर्तनादेव पाशइत्युपचर्यते " इति अतएवाऽजामन्त्रे भजनीयाया अपि तस्यास्स्वेनरूपेण हानव्यत्वमुक्तम् " जहात्येनां भुक्तभोगा मजोऽन्यः " इति । कूर्मपुराणेच " कैषा भगवती देवी शङ्करार्धशरीरिणी । शिवा सती हैमवती यथाव द्ब्रूहि पृच्छता " मिति प्रश्नोत्तरतया " तस्यसर्वजगत्मूर्ति श्शक्तिर्मायेति विश्रुता । तयेदं भ्रामयेदीशो मायावी पुरुषोत्तमः । सैषा माहेश्वरीशक्ति स्सर्वाकारा सनातनी । सैवरूपंमहेशस्य सर्वदा सम्प्रकाशयेत् । सर्वशक्त्यात्मिका माया दुर्निवारा दुरत्यया " । इत्यादिवचनजातं दृश्यते । या " माययासन्निरुद्ध " इति पूर्वमन्त्रे प्रकृता तां मायामेव प्रकृतिं प्रपञ्चाकारेण परिणामिनीं विद्यात् । परमेश्वरं मायिन मेव तथातथा परिणममानमायाधिष्ठातारमेव विद्यात् । ननु साक्षात्स्वयंपरिणामिनीमिति पूर्वार्धस्यार्थः । " तस्मान्मायीसृजतेविश्वमेत " दिति पूर्वमन्त्रे पञ्चम्यन्तपदनिर्दिष्ट मन्यदेव प्रकृतित्वेनोक्तम् । कथमस्मिन्मन्त्रे मायाप्रकृतिरुच्यते । नैषदोषः । " ऋचो अक्षरे परमे

परिशिष्टोऽभूत् । तदक्षरं तदेव तदानीं क्षररहितं नाशरहितं परंवस्तु । तत्सवितुर्वरेण्यं तत् सवितुरादित्यस्य पूर्वं तेजःप्रदत्वेन वरेण्यं अन्तर्वर्तितेजः तदपितदेव । तस्मात्तादृशात् स्वविलीनस्वेतर निखिलचिदचित् प्रपञ्चा दद्वितीयात् पुराणी नित्यसिद्धा तत्कालतमोऽपनोदिनी महास्फुरत्तारूपा परमाप्रज्ञा *(१) ज्ञानशक्तिः प्रसृता प्रावर्तत । ततः, "सोऽकामयत बहुस्या"

व्योमन् । यस्मि न्देवा अधिविश्वे निषेदुः । यस्तन्नवेद किमृचाकरिष्यति । यइत्तद्विदुस्त इमेसमासत " इति ततः पूर्वस्मिन्मन्त्रे " योवेदनिहितंगुहाया म्परमेव्योम " न्निति श्रुत्यन्तरेषु ब्रह्मणोभिन्नत्वेन प्रसिद्धं परमव्योम प्रकृतम् । तस्मादितिपदेन निर्दिश्यते ॥

ननु — तस्यप्रकृतित्वे कथमत्रामन्त्रादिषु शिवशक्तेः प्रकृतित्वमित्याशङ्कायां " मायान्तु प्रकृतिंविद्या " दित्युक्तम् । या पूर्वमुक्ता परमव्योमशब्दिता प्रकृतिः तां मायां शिवशक्तिमेव विद्यात् । ननु ततोऽन्यत्परमव्योमेति न तद्विरोध इतिभावः । मायायाः प्रकृतित्वेऽपि " आत्मन आकाश स्सम्भूतः " इत्यादिश्रुतिषु ब्रह्मणः प्रकृतित्वव्यवहारेण विरोधइत्याशङ्कायां तस्य प्रकृतित्वं मायाद्वारकं श्रुत्यन्तरेषूक्तम् । नतुसाक्षादित्याशयेन " मायिनन्तु महेश्वर " मिति शिवस्य मायाधिष्ठातृत्वमुक्तम् । एवं शिवपरमव्योममायाप्रकृतित्व व्यवहाराविरोधेऽपि " अन्त र्बहिश्च तत्सर्वं व्याप्य नारायणस्थितः " इत्यादिश्रुत्यन्तरे नारायणस्य प्रकृतित्वव्यवहारेण विरोधोऽस्तीत्याशङ्कायामुत्तरार्थम् । येन नारायणेन सर्वमिदं जग द्व्याप्तमिति श्रुत्यन्तरे प्रसिद्धम् । तेन मायाशब्दित परमव्योमांशभूतेनैवतद्व्याप्तं ननु स्वतन्त्रेणेति तस्यार्थः । एवमुत्तरार्थ येन नारायणेन व्याप्तं जगदिति श्रुत्यन्तरे प्रसिद्धम् । तमनूद्य तस्य परमव्योमांशत्वविधायकं ननु परमव्योमांशमनूद्य तस्य जगत्प्रकृतित्वविधायकम् । तदंशस्य कस्यचिज्जगदुपादानत्वे योग्यस्याऽनुवादार्हस्य कस्यचिदभावात् । नाऽपि तदवयवस्य तदीयजगद्व्यापकत्वस्यच विधायकं वाक्यभेदप्रसङ्गात् । अतो मन्त्रोय मुभयत्राप्युक्तार्थे प्रमाणं भवत्येवेति भावः । एवं नारायणस्य शिवशक्त्यंशत्वे "ममयोनिरप्स्वन्तस्समुद्र" इत्यारम्भणी सूक्तवचनमपि प्रमाणम् । स्वांशभूतस्य नारायणस्य समुद्रःयोनिः स्थान मित्येवंपरतायांहि ममयोनिरितिवचनं समञ्जसं भवति । इदञ्च नारायणस्य शिवशक्त्यंशत्वं हरिवंशपारिजात संहितायाम् पारिजातप्रार्थनार्थं भगवता निसृष्टार्थदूततया इन्द्रम्प्रति प्रेषितेननारदेन नाना

* (१) ज्ञानशक्तिः प्रसृतेति प्रळय दशायां शिवेनाविभागा पन्नतया स्थितापरा शक्तिः ज्ञानशक्ति रूपेण प्रसृतेत्यर्थः' ॥ इयमेव प्रसरणोक्तिःशक्तेः परिणामित्वे प्रमाण मिति तत्वं, मायाशब्दश्च ज्ञानपर्याय इतिवैदिक निघंटौ ॥

मिति नामरूपादिविभागरहितः सूक्ष्मचिदचिद्वस्तुशरीरको कारणावस्थः परमेश्वरः संविभक्तनामरूप चिदचिद्वस्तुशरीरको भवेयमिति संकल्प मकरोत्। ततश्च, 'इदंसर्वमसृजत यदिदंकिं' चेति स्वशरीरभूतं सूक्ष्मं चिद चिद्वस्तु स्वस्माद्विभज्य 'तत् सृष्ट्वा तदेवानुप्राविश' दिति स्वतोविभक्ते चिदचिद्वस्तुनि स्वयमात्मतया प्रविश्य 'सच्चत्यच्चाऽभव' दिति नानासद

---

त्रिधोपायैः प्रार्थितइन्द्रः यदा पारिजातं नदातुमैच्छ तदा "यएको विश्वमव्यास्ते प्रधानं जगतो हर. । प्रकृत्यायं पर सर्वे क्षेत्रज्ञं वै विदु र्बुधाः । तस्याऽव्यक्तस्य योव्यक्तोभाग स्सच मनोद्भवः । तस्यात्मा प्रथमो देवो विष्णु स्सर्वत्र धीमतः । प्रकृत्याः प्रथमोभाग उमादेवीह शाश्वती । व्यक्त स्सर्वमयोविष्णुः श्रीमज्ञो लोकभावनः । रुक्मिण्याद्याः स्त्रियस्तस्य व्यक्तत्वे प्रथमोगुणः । अव्यक्ता प्रकृति र्देवी गुणी देवो महेश्वरः । नविशेषोस्ति रुद्रस्य विष्णो श्चामरसत्तम । गुणिन श्चाव्ययायाश्च सादरः प्रभृतोगुणः । नारायणो महातेजाः सर्वक्ष लोक भावनः । भोक्ता महेश्वरो देवः कर्ता विष्णु रधोक्षजः । ब्रह्मा देवगणाश्चान्ये पश्चात्सृष्टा महात्मना । महादेवेन देवेशाः प्रजापतिगणा स्तथा । एवं पुराणपुरुषो विष्णु र्वेदेषु पठ्यते । अचिन्त्य श्चाप्रमेयश्च गुणेभ्यश्च पर स्तया " इति भगवद्वाक्यस्याऽवश्यपरिपालनीयत्वोपदेश नार्थे तस्य महिमातिशयं दर्शयता नारदेनाविष्कृतम् । तत्रहि — "यएक" इतिश्लोकेन शिवंप्रकृत्य "तस्याव्यक्त" स्येतिश्लोकार्धे "प्रज्ञाच तस्मा" दिति श्रुतिसिद्धम् तत श्चिच्छक्तयुन्मेषं पुरस्कृत्य "तस्यात्मे" ति तदुत्तरार्धेन विष्णो श्चिच्छक्त्यंशत्वमुक्तम् । एवं प्रकृत्याः प्रथमोभागइति श्लोकेनाऽपि श्रुतम् । तत्र श्रीमज्ञ इत्यस्य विष्णुरुमारूपतया श्रीत्वेन सम्यक्पुराणादिभि र्ज्ञायतइत्यर्थः । घञर्थे क विधान कर्तव्यमिति घञर्थे कर्मणि प्रत्ययः । इदंविष्णोरुमांशतया तद्रूपत्वं श्रीकूर्मपुराणे "कैषा भगवती देवी शङ्करार्धशरीरिणी । शिवा सती हैमवती यथाव द्ब्रूहि पृच्छता" मिति ऋषीणांप्रश्नमवतार्य "तेषा न्तद्वचनं श्रुत्वा ऋषीणां पुरुषोत्तमः । प्रत्युवाच माहायोगी ध्यात्वा स्वं परमंपद" मितिश्लोके तदानी मुपदेश्यत्वेनौचित्या द्ध्यानविषयतया प्राप्ताया मुमायां "स्वंपरमंपद" मिति विशेषणे नाविष्कृतम् । तत्रैव कृष्णतपश्चर्यानन्तरं शिवेनसह प्रत्यक्षीभूताया उमायाः कृष्णंप्रति "वत्स ज्ञानं तवाऽनन्तां निश्चलां सर्वदाऽच्युत । अनन्या गीश्वरेभक्ति मात्मन्यपिच केशव । त्वंहि नारायण स्साक्षा त्सर्वात्मा पुरुषोत्तमः । प्रार्थितो दैवतैः पूर्व सञ्जातो देवकीसुतः । पश्यत्वमात्मनात्मान ममलं परमंपदम् । नाऽवयो र्विद्यतेभेद ऐक्यं पश्यन्ति सूरयः" । इति वचनेनाऽपि स्फुटीकृतम् । एवमादिष्वपि वचनान्युदाहर्तव्यानि । एवं श्रीत्वेन पुराणादि

सत्प्रपञ्चरूपेण बहुधा परिणतोऽभव दिति पुरुषस्य बालत्वयुवत्वादिवत् ब्रह्मणो जगच्छरीरिणः कारणत्वं कार्यत्वंच "मायान्तु प्रकृतिंविद्या न्मायिनन्तु महेश्वरम् । तस्याऽवयवभूतेन व्याप्तं सर्वमिदंजग" दिति श्रवणात् * (२) मायाया स्सकलप्रकृतित्वं तद्विशिष्टत्वं महेश्वरस्य

---

प्रसिद्धस्य कथं रुक्मिण्याद्याःस्त्रिय इत्याशङ्कापरिहाराय "रुक्मिण्याद्या" इत्यर्थे शिवशक्तिरूपतया स्त्रीत्वेऽपि तस्य पुरुषरूपेण व्यक्तत्वेऽपि रुक्मिण्याद्याः स्त्रिय इत्येतदुपपन्नमिति भावः । प्रथमोगुणइति तासां प्रधानमहिषीत्वेन तदर्थं पारिजातप्रदानस्याऽवश्यकत्वज्ञापनाय प्रकृतोपयोगितयोक्तम् । "अव्यक्ताप्रकृति" रितिश्लोकेन शक्तिशिवयो र्गुणगुणिभावे नाऽविशेषं प्रदर्श्य शक्त्यंशत्वा द्विष्णोरपि शिवान्नास्तिविशेषइति समर्थितम् । एवं शिवशक्त्यंशत्वेन नारायणस्य तदुभयगुणत्वं रुक्मिणीसत्यभामादि स्वशक्तिसहितस्यैव नतु केवलस्येति प्रकृतोपयोग्यर्थो "गुणिन" श्चेतिश्लोकेन दर्शितः । "भोक्तामहेश्वर" इतिश्लोकेन संहारपालनसृष्ट्यधिकृनानां गुणमूर्तीना मिन्द्रादीनाञ्च सृष्टेःप्रागेव चिच्छक्त्यंशभूतादिनारायणोन्मेषप्रदर्शनेन तस्य सर्वोत्तरत्वमाविष्कृतम् । उक्तस्य सर्वस्याऽप्यर्थस्य वेदमूलतया श्रद्धेयत्वमेव 'पुराणपुरुष' इतिश्लोकेन दर्शितम् । तदीयचिच्छक्तिशकलेनेत्यनेन "विश्वोत्तरोत्तरविचित्रमनोरथस्य यस्यैकशक्तिशकले सकलस्समाप्त"इति पुराणवचनार्थ स्स्मारितः । भोक्तृत्वदशायां पुरुषसंज्ञिकेनेति अनेन ब्रह्मादिसकलचिदचित्प्रपञ्चाधिष्ठातृत्वरूप स्वातन्त्र्यनिमित्ता नारायणस्य पुरुषसंज्ञेत्युक्तम्भवति । एतदभिप्रायेणैवोक्तं नारसिंहपुराणे "सदैव वासुदेवोऽयं साक्षात्पुरुष उच्यते । स्त्रीप्राय मितर त्सर्वंजग द्ब्रह्मपुरस्सर" मिति । सकलजगद्व्याप्तिश्चेति ननूदाहृतमन्त्रेण महेश्वरस्य मुक्तौ जीवस्य स्वप्रभाद्वारेणेव नारायणद्वारा सकलजगद्व्याप्ति

---

* मायाया स्सकलप्रकृतित्वमिति, "यच्चकिंचि ज्जगत्सर्वं दृश्यते श्रूयतेऽपिवा, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थितः" इति नारायणस्य तच्छूनस्तु शक्त्यंशत्वादुपपन्नं, अत एव मायान्तु प्रकृतिं विद्यादित्यत्र तस्यावयव भूतेन व्याप्तं सर्वमिदं जगत् इत्युत्तरार्धेन शक्त्यंशस्य जगद्व्यापकत्वमुक्तम् ॥

येन सर्वमिदं जगद्व्याप्तं स तस्यावयवभूत इति नारायणस्य मायांशत्वविधायकत्वमे वेदं वाक्यमिति दीक्षितचरणै र्दीपिकायां विस्तृतं, अत एव "ममयोनि रप्स्वन्त स्समुद्रे" इति बह्वृची श्रुतौ देव्या समुद्रमध्यवर्तित्व माम्नायते, अहुश्चाभियुक्ताः, "योयं चकास्ति भगणार्णव रत्नमिंदुः यो य स्सुरासुरगुरुः पुरुषः पुराणः, यद्वामभर्धमिदमन्धकसूदनस्य देवि त्वमेव तदिति प्रतिपादयन्ति" इति ॥

तदवयवभूतेनांऽशभूतेन चिच्छक्तिशकलभूतेन भोक्तृत्वदशायां पुरुष संज्ञकेन सकलजगद्व्याप्तिश्च अवगम्यते। यथा केवलात् शरीरात् लोमनखा द्युत्पत्ति र्नसंभवति, आत्मनश्च तथा नकेवलं मायाया जगदुत्पत्ति र्महेश्वराच्च किंतु मत्या च्छरीरिणः केशनखाद्युत्पत्तिवत्। मायिनः परमेश्वरात् सकलचेतनाऽचेतनप्रकृतिः पुरुषोऽभिव्यक्तो भवति ॥

तद्रूपा दीश्वरा दव्यक्तचतुर्मुखाद्युत्पत्तिः। तथा च श्रुति रीश्वरस्य पुरुष

---

र्नावगम्यते किन्तु नारायणस्यैव तदवयवभूतेनेतिहि कर्तरि तृतीया। इतिचेदुच्यते। नारायणस्य महेश्वरशक्त्यवयवत्वोक्तिसामर्थ्या त्तदीयाव्याप्ति रवयवद्वारा शिवस्यैव। यथा देवदत्तावयवभूत हस्तकर्तृकस्स्पर्शोऽवयवद्वारा देवदत्तस्यैव भवतीति श्रुते स्तात्पर्य मवगम्यत इत्यभिप्रेत्य तथा व्याख्यातम। इयांस्तु विशेषः। जीवस्य मुक्तौ प्रभयैव जगद्व्याप्ति शिवस्यतु स्वरूपेण प्रभया तदंशभूतेन नारायणेन चेति ॥

ननु चिच्छक्तेः परिणामित्वम् "प्रज्ञाच तस्मा" दितिश्रुत्या जगदुपादानत्वं मायान्स्विनिश्रुत्याचावगम्यते। ततोऽस्याएवोपादानत्वमस्तु किं मपरिणामिस्वभावस्य शिवस्यऽपि पारिनापिकोपादानत्वाश्रयणेने त्याशङ्क्याह — यथेति। शरीरात्मनोः परिणा म्यपरिणामिस्वभाव त्वेऽपि केवलस्यशरीरस्य लोमनखाद्युपादानत्वं नास्ति किन्तु सात्मकस्यैव यथा। एवं परिणा मिन्या अपि केवलाया श्चिच्छक्ते र्न जगदुपादानत्वं किन्तु शिवाश्रिताया एव। अत श्शरीर विशिष्टस्यात्मनोऽपि केशनखादिव मायाविशिष्टस्य शिवस्याऽपि जगदुपादानत्वं न पारि भाषिकम् किन्तु "यथा सतःपुरुषा त्केशलोमानि तथाऽक्षरा त्सम्भवतीहविश्व" मिति सयुक्तिक श्रुतिसिद्धमितिभावः। दृष्टान्तदार्ष्टान्तिकवाक्ययो रात्मनः महेश्वराच्चेति केवलात्मनः केवलमहेश्वराच्च कार्योत्पत्त्यसम्भवप्रदर्शनं दृष्टान्तार्थम् ॥

ननु शरीरविशिष्टादात्मनः केशनखादेरिव मायाविशिष्टा न्महेश्वरा जगत उत्पत्ति रित्यङ्गीकारे तत्रैवोपादानत्वविश्रान्तिस्स्यात्। कथं पुरुषस्याप्युपादानकोटिप्रवेश इत्याशङ्क्याह — मयिन इति। सर्गादिकाले प्रथमोन्मिषिताया श्चिच्छक्तेस्सकाशा दभिव्यक्ते पुरुषे तच्छरीरात्परमेश्वरा दव्यक्तचतुर्मुखाद्युत्पत्तिरिति युक्तमस्याप्युपादानकोटिप्रवेश इतिभावः। यद्यप्यव्यक्तं सूक्ष्मरूपेण प्रळयेप्यस्ति तथाऽपि यथा चतुर्मुखस्य ज्ञानविकासवत्त्वेन शरीर विशिष्टत्वेनच पुरुषादुत्पत्ति स्तथा अव्यक्तस्याऽपि "ममयोनि र्महद्ब्रह्म तस्मिन्गर्भं न्दधाम्यह" मित्यादिवचनैरुक्त्या कार्योन्मुख्यविशिष्टरूपेण तत उत्पत्तिरस्ती त्यभिप्रायेणाऽव्यक्तग्रहणं

रूपत्व मभिधत्ते, 'पुरुषोवै रुद्रः' इति तत स्समुचितं चिदचिद्विशिष्टः परमेश्वरः कारणं कार्यंच तत्त दवस्थाविशेषा दिति ॥

## योनिश्च हि गीयते ॥ १-४-२८ ॥

साक्षात् परमेश्वर एव भूतयोनि रित्युच्यते 'उमासहायं परमेश्वर' मित्यारभ्य, 'भूतयोनिं समस्तसाक्षिं तमसः परस्ता' दिति समस्तसाक्षिण स्सर्वज्ञस्य तमसःपरस्य विश्वोत्तीर्णस्य परमशक्त्युमयासहितस्य परमेश्वरस्यैव भूतयोनित्वं भूतप्रकृतित्वंच गीयते । ततश्चोपादानमपि निमित्तं परंब्रह्मैव ॥

इति प्रकृत्यधिकरणम् ३८

---

कृतम् । परमेश्वरस्य पुरुषशरीरकत्वे श्रुतिमुदाहरति – "पुरुषो वै रुद्र" इति । सामानाधिकरण्यं पुरुषशरीरकत्वाऽभिप्रायमितिभावः । एवञ्च निर्विकारस्याऽपि परमेश्वरस्य जगदुपादानत्वं सर्वविज्ञानोपपादकं स्वयमेवोपादानत्वञ्चोपपन्नमि त्युपसंहरिति – तत इति ॥

ननु चिच्छक्त्यवस्थाविशेषरूपस्य पुरुषस्य जगदुपादानत्वाङ्गीकारे प्रतिज्ञादृष्टान्ताऽभिध्योपदेशसाक्षादुभयाम्नानात्मकृतय स्तद्विषयतया चिच्छक्तिविषयतयावा प्रामाण्यं लभन्ते । परिणामहेतुश्च समञ्जसो भवति निर्विकारसाक्षिरूपतया श्रुतिशतप्रतिपन्नस्य परमेश्वरस्य जगदुपादानतायां नैतानि प्रमाणानि भवितुमर्हन्ती त्याशङ्कानिराकरणार्थत्वे नेदंसूत्रं व्याचष्टे – साक्षा दिति । "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनि र्गच्छति भूतयोनिं समस्तसाक्षिं तमसःपरस्ता" दिति कैवल्योपनिषदि समस्तसाक्षित्वतमसः परत्व लिङ्गाभ्याम् "सब्रह्मा सशिव स्सेन्द्र स्सोक्षरः परम स्स्वराट्" "सएवविष्णु स्सप्राण स्सकालोऽग्नि स्सचन्द्रमाः । सएव सर्वं यद्भूतं यच्चभव्यं सनातनम् । ध्यात्वा तं मृत्यु मत्येति नाऽन्यः पन्था विमुक्तय" इति तद्वाक्यशेषे सकलप्रपञ्चशेषित्व मोक्षोपायसाक्षात्करणीयत्वलिङ्गाभ्या श्चाऽवगमिते साक्षात्परब्रह्मणि परमशिवएव सकलकार्योपादानत्व वाचि भूतयोनिशब्दो दृश्यते । तस्मा त्तस्योपादानत्वाऽभ्युपगम आवश्यकइति नोपादानत्वप्रापकाणां परब्रह्मपरश्रुत्यन्तराणामन्यत्र नयनक्लेश स्समाश्रयणीय इतिभावः । अधिकरणमुपसंहरति — ततश्चेति । यन्निमित्त म्परब्रह्म तदेवोपादानमपीत्यर्थः ॥

इति प्रकृत्यधिकरणम् ३८

अथ सर्वव्याख्यानाधिकरणम् ३९

# एतेन सर्वे व्याख्याता व्याख्याताः ॥ १-४-२९ ॥

'जन्माद्यस्ययतः' इत्यादिना एतदन्तेन वेदान्तवाक्यानां व्याख्यानेन ब्रह्मलिङ्गाभिधायिनो वेदान्तरूपाः कर्मकाण्डमध्यपातिनः पुरुषसूक्त

---

"एतेन योगः प्रत्युक्तः" इत्यादाविवैतेन त्वस्याऽव्यवहितपूर्वाधिकरण न्यायमात्रातिदेशार्थत्वशङ्का मपाकरोति — "जन्माद्यस्यपत" इत्यादिनैतदन्तेनेति । पूर्वोत्तराधिकरणेषूदाहृतादाहरिष्यमाणेभ्यो वेदान्तवाक्येभ्योऽन्यानि यानि ब्रह्मपरा ण्यनिर्णीतार्थानि वेदान्तवाक्यानि तेषामेव परामर्शार्थे सर्वशब्दो नभवति किन्तु ये कर्मकाण्डे ब्रह्मप्रतिपादका मन्त्रब्राह्मणभागा स्स्मृतिपुराणेतिहासा स्सिद्धान्ततन्त्रादय आगमा योगशास्त्रादयोऽभियुक्तसूक्तिविशेषाश्च तेषां सर्वेषामपि परामर्शार्थः । शास्त्रयोनिसूत्रे शास्त्रशब्दस्य ब्रह्मप्रतिपादकसकलशब्दज्ञानपरत्वादि त्यभिप्रेत्याह — कर्मकाण्डेत्यादि ॥

द्विरुक्तिरिति । नच द्विरुक्ते नित्य वीप्सयोरिव समाप्त्यनुशासनं नास्तीति शङ्क्यम् । "न स पुनरावर्तते, न स पुनरावर्तते" इत्यादिश्रुतिषु "मातस्येके मातस्येक" इत्यादिस्मृतिषुच द्विरुक्ते स्समाप्त्यर्थत्वावगमेनेहाऽपि तदर्थत्वावसायात् । प्रकरणभेदादिकमिति कर्मकाण्डमध्यपठितानां मन्त्रब्राह्मणानां पुरुषसूक्तादीनाञ्च प्रकरणभेदः पूर्वपक्षकोटिबीजमिति तेषां स्मृतिपुराणादीनाञ्च नानादेवताविषय श्रुतिलिङ्गादिकमादिशब्देन गृह्यते । पुरुषसूक्तादीनामिति । अत्रेदमवधेयम् । पुरुषसूक्तंहि कर्मकाण्डमध्य एवपठ्यते । तस्मा त्तत्प्रकरणात्कर्माङ्गत्वमवगम्यते । अग्निचयनादिषु चेतनस्य हविरादिरूपेण विनियोगाभावा त्पुरुषशब्दनिर्दिष्टदेवतान्तराविरहाच्च चेतनवाचिपुरुषशब्दसामर्थ्यरूपाल्लिङ्गा त्कर्तृप्रकाशनद्वारा कर्माङ्गमेव भवितुमर्हति । नच तत्र "सहस्रशीर्षा पुरुष स्सहस्राक्ष स्सहस्रपात्" इत्यादिना श्रुतानां सहस्रशीर्षत्वादीनां चेतनेऽनुपपत्तिरितिशङ्क्यम् । तत्र सहस्रपदस्यापरिमितवाचित्वेनाऽनादाविह संसारे पर्यायेणाऽपरिमितशरीरपरिग्रहा दपरिमितमूर्धादिमत्त्वसम्भवात् ॥

ननु "स भूमिं विश्वतोवृ" त्वेतिश्रुत सर्वभूमिव्यापकत्वं नसम्भवतीतिचेन्न तत्रतत्र जन्मनि नानाविधशरीरै स्सर्वभूमिव्याप्ते स्सम्भवात् । नाऽपि सहस्रपदस्य व्यवस्थितसङ्ख्याविशेषपरत्वेन चेतनस्य सहस्रशीर्षत्वादिके नसङ्गच्छतइतिशङ्क्यम् । तथाऽपि क्वचिज्जन्मनि विशेषभावेन सहस्रशीर्षत्वस्य क्वचनशक्रभावेन सहस्राक्षत्वस्य, कदाचिदादित्यभावेन सहस्रपात्त्वस्यच सम्भावितत्वात् । नच तत्र 'पुरुषस्महान्त' मितिश्रुतं महत्त्वं नसम्भवतीतिवाच्यम् । यजमानस्याऽनादिकालप्रवृत्ताऽपरिमितशरीराऽनुस्यूततया कालानवच्छिन्नत्वेन तत्रमहत्त्व

शतरुद्रीयप्रभृतयो मंत्रब्राह्मणभागा स्मृतीतिहासपुराणागमाभियुक्तसूक्ति विशेषाश्च सर्वे व्याख्याता इति द्विरुक्ति रध्यायसमाप्त्यर्था अत्र कर्मप्रकरण

---

स्याऽविरुद्धत्वात् । नाप्यादित्यवर्णमित्याम्नातमादित्यवर्णत्वं नघटतइतिशङ्क्यम् । "अङ्गुष्ठमात्रो रवितुल्यरूप स्सङ्कल्पाहङ्कारसमन्वितो य" इति चेतने रवितुल्यरूपत्वस्य प्रसिद्धत्वादि त्यभिप्रेत्याह — पुरुषसूक्तादीना मनुष्ठातृजीवपरत्वमेव समीचीनं नत्वित्यादिना । एवमनव स्थेति । अव्यवस्थेत्यर्थः । लिङ्गदर्शनादित्युक्तमर्थं विवृणोति तस्मादिति । अत्रेदमाकूतम् । "तस्मा द्विरा डजायत । विराजो अधिपुरुष" इत्यव्यक्तचतुर्मुखकारणत्वप्रतिपादनद्वारा सकलजगत्कारणत्वस्य प्रतिपादितत्वेन तस्य चेतनेऽनुपपन्नत्वात् । नचेदमारोपितमि त्यभ्युपगन्तुं युक्तं बाधकाऽभावात् । नच प्रकरणेन चतुर्मुखादिकारणत्वलिङ्गं बाध्यतइतिशङ्क्यम् । लिङ्गस्य प्रबलत्वेन दुर्बलस्य प्रकरणस्य लिङ्गबाधकत्वाऽभावात् । किञ्च "तमसस्तुपारे" इतिश्रुत न्तमःपारवर्तित्वमपि जीवे न सम्भवति । नच श्रवणमननादिसाध्य न्तज्जीवेऽपि सम्भवतीतिशङ्क्यम् । अत्र हेत्वाक्षेपकल्पनाया गौरवदूषितत्वेन नित्यसिद्धस्यैव ग्राह्यत्वात् । अपिच "तमेवं विद्वा नमृत इह भव" तीत्याम्नात ममृतहेतुत्वमपि जीवेऽसम्भवा द्ब्रह्मलिङ्गतया परमेश्वरविषयमेव प्रतिपादयति — इति । पुरुषसूक्तविषयसिद्धान्त मुपसंहरति — अत ईश्वरएवाऽत्र पुरुषशब्देन प्रतिपाद्यतइति । नन्वेवमपि शतरुद्रीयस्य "नमस्ते रुद्र मन्यव" इत्यादिमन्त्रश्रुतरुद्रश्रुत्या प्रकरणप्राप्त मग्निपरत्वं वारयितुं नशक्यम् । "रुद्रोवा एष यदग्नि" रिति श्रुत्यैव रुद्रशब्दस्याऽग्निपरत्वेन व्याख्यातत्वेन "गौणं लाक्षणिकंवाऽपि वाक्यभेदेनवा पुनः । वेदोय माश्रयत्यर्थं कोनु तं प्रतिकूलये" दिति तन्त्रवार्तिकोक्तन्यायेन साक्षा द्वेदकृतव्याख्यानस्य श्रुतिलिङ्गादिभि रन्यथयितु मशक्यत्वादित्याह — शतरुद्रीयेचेति । अत्राऽयमभावः । तत्र "दिशाञ्च पतय" इत्यादिनाश्रुतेन सर्वाधिपतित्वलिङ्गेन भवरुद्र शर्वपशुपतिशिवशङ्करादि श्रुतिबृन्देनच शतरुद्रीयश्रावणकालएव शतरुद्रीयस्य परमेश्वरपरत्वस्य सिद्धतया अर्थवादे श्रुतेन "रुद्रोवा एष यदग्नि" रितिवाक्येनाऽग्निपरत्वकल्पनस्य निरालम्बनत्वा दिति । नन्वेव मग्निपरत्वासम्भवेऽपि शतरुद्रीयस्य परशिवपरत्वग्रहणमयुक्तम् । "रुद्र मन्यव" इति तत्प्रतिपाद्यस्य क्रोधवत्त्वश्रावणेन कारुण्यादिमाङ्गल्यगुणनिधौ परशिवे क्रोधस्याऽसम्भावितत्वेन शतरुद्रीयश्रुतश्रुतिलिङ्गानां संहाररुद्रेऽपि सङ्गतत्वेन तत्परत्वौचित्या दित्याशङ्क्ते—नन्विति । नैवं विचारणीयमिति । अत्रेदमाकूतम् । "याते रुद्र शिवा तनू" रित्यादिमन्त्राणा म्मन्त्रोपनिषदि परशिवप्रकरणे आम्नाताना मिहाम्नानेन तत्प्रत्यभिज्ञाबला ज्जाबालश्रुतौ "किञ्जप्येनाऽमृतत्वं नो ब्रू" हीति प्रश्नस्य शतरुद्रीयेणे त्युत्तरानन्तरम् । "अमृतस्य हवा नामधेया" नीत्यस्मिन्नाम्नातानां नाम्ना मनादिमुक्तपरशिवनामत्वप्रतिपादनात् ।

पठितानां पुरुषसूक्तशतरुद्रियादीनां स्मृतीतिहासपुराणादीनांच तात्पर्यं लिङ्गसमन्वयेन ब्रह्मबोधकमस्ति नवेति संशयः। संशयबीजं प्रकरणमेदादिकम्।

---

"एकशतञ्च यजुश्शाखा स्तासु सर्वासु रुद्रोपनिषदाम्नायत" इत्युपनिषच्छब्दे नाऽस्य ब्रह्मविद्यात्वप्रतिपादनादप्यस्य परशिवपरत्व मविचलमिति। क्रोधश्रवणमसिद्धमित्याह — मन्युशब्दस्येति। तस्य क्रोधपरत्वं प्यदोष इत्याह — अथवेति। वस्तुतस्तु सर्वानुग्राहकस्य शिवस्य स्वतः क्रोधो नास्त्येवमपि दुष्टनिग्रहार्थं प्रकृतिगुणभूतस्य तस्य स्वेच्छया गृह्यमाणत्वे नाऽस्मदादीनामिव परमेश्वरस्य क्रोधेन सम्बन्धो नविद्यतइत्याशयः। अथ पुराणादीना मविरोधेन शिवपरत्व मुपपादयति — पुराणादीनाञ्चेति। अत्र केचित् वैष्णवपुराणविरुद्धानि शैवादिपुराणवचना न्यप्रमाणानि। पुराणानां प्रणेतृ गुणानुरोधेन प्राबल्यदौर्बल्यरूपस्य विशेषस्य न्याय्यत्वात्। यद्यपि सर्वेषामपि पुराणाना म्प्रणेता चतुर्मुख एकएव। तथाऽपि स केषुचि त्कल्पेषु सत्वोद्रिक्तो भवति। केषुचि द्रजोदूषितः। केषुचि त्तमोभिभूतश्च। एवं स्वीयसत्वोद्रेकाऽऽदिना सात्विकाभिधानेषु कल्पेषु वैष्णवानि। राजससंज्ञितेषु ब्राह्माणि तामसनामसु कल्पेषु शैवानि च पुराणानि प्रणिनाय। तेन तानि पुराणान्यपि वक्तृगुणानुसारेण सात्विकराजसतामससंज्ञितानी त्युच्यन्ते तस्मा त्सात्विकपुराणविरुद्धं तमोभिभूतचेतसा प्रणीतं शैवपुराणं मतं नग्राह्यम्। तदेतत्। "सङ्कीर्णा स्सात्विकाश्चैव राजसाश्चैव तामसाः"। इति कल्पानां सात्विकादिविभागप्रतिपादनपूर्वकं "यस्मिन्कल्पेतु यत्प्रोक्तं पुराण ब्रह्मणा पुरा। तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते। अग्ने श्शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते। राजसेषु तु माहात्म्य मधिकं ब्रह्मणो विदुः। सङ्कीर्णेषु सरस्वत्याः पितृणाञ्च निगद्यते। सात्विकेषु तु कल्पेषु माहात्म्य मधिकं हरेः। तेष्वेव योगसंसिद्धा गमिष्यन्ति परांगति" मिति मात्स्यपुराणे प्रतिपादितम्। तत्र तु "यस्मिन्कल्पे" इत्यादिश्लोकेन तत्तत्कल्पे ब्रह्मप्रोक्तानां पुराणानां तत्तत्कल्पविषयत्वमुक्त्वा "अग्ने श्शिवस्य माहात्म्य" मित्यादिना शैवादिपुराणानां तामसादिकल्पविषयत्वप्रतिपादना त्तेषां तामसादिकल्पेष्वेव ब्रह्मणा प्रणीतत्वं सिध्यति। तस्मा त्पुराणानां वक्तृगुणानुगुणो बलाबलविभागो लभ्यते। नच कल्पानां तामसत्वादिकं ब्रह्मविषयतत्तद्गुणोद्रेकमूलमितिनोक्तमितिशङ्क्यम्। इह कल्पानां सात्विकादिविभागस्य तत्तत्कल्पे पुराणवक्तु र्ब्रह्मण स्तत्तद्गुणप्राचुर्यमूल इत्येवाऽभ्युपेयः। नाऽप्येवंविधविभागो निष्प्रयोजनइतिवाच्यम्। तत्तत्कल्पेषु तेन प्रोक्तानां परस्परविरुद्धानां देवतोत्कर्षापकर्षपराणां पुराणानां कार्त्स्न्येन प्रामाण्यस्याऽयुक्ततया तेषु हेयोपादेयविशेष परिज्ञानाय वक्तृगुणाऽनुगुणप्रामाण्यसमर्पकतया सप्रयोजनत्वात्। अन्यथा सात्विकादि

कर्मप्रकरणगतानां पुरुषसूक्तादीना मनुग्राहृजीवपरत्वमेव समीचीनं न नित्यमुक्तब्रह्मविषयत्वं प्रयोजनाभावात्। स्मृतिपुराणादीनामपि नैकार्थ

---

विभागस्य निरर्थकत्वाच्च। तत्राऽपि विष्णुपुराणं प्रवरं पुलस्त्यवरदानलब्ध देवतापरमार्थ वेदनेन पराशरेणोपदिष्टत्वात्। जगत्कारणवस्तुविषयसामान्यप्रश्ने "विष्णोस्सकाशा दुद्भूतं जग त्तत्रैवच स्थित" मित्याद्युत्तरक्रमेणाऽवर्णितया देवताविशेषमहिमविषय प्रश्नोत्तरसन्दर्भरूपपुराणान्तरव 'न बुद्धिभेदं जनये' दिति न्यायेन प्रष्टरभिमतार्थो वहूक्तन्दति ननु मशक्यत्वेनाऽनन्यथासिद्धत्वाच्चेति। तस्यैतस्य सर्वस्याऽपिनिराम स्तात्पर्यलिङ्गवशेन त्यनेनसिद्धः। सर्वकारणत्वादिकं यद्ब्रह्मलिङ्गं तदेवाऽत्र तात्पर्यलिङ्गत्वेन विवक्षितम्। अत एवोत्तरत्र वक्ष्यति "यत्र यत्र चेतने अचेतने वा जगत्कारणत्वादिकं शिवतात्पर्यलिङ्गं श्रूयते इति। तस्माद्ब्रह्मविष्णुरुद्रादिषु सर्वकारणत्वं सर्वसंहर्तृत्वं सर्वान्तर्यामित्वमित्यादि ब्रह्मलिङ्गं साक्षात्परब्रह्मपदंवा श्रूयते तत्सर्वं तत्तदात्मभूते शिवएव परब्रह्मणि पर्यवस्यति। "यथैव प्राणोस्मि प्रज्ञात्मा तं मामायुरमृत मुपा" स्स्वेत्यादिक मिन्द्राद्यन्तर्यामिणि तस्मि न्तथैव ब्रह्मलिङ्गाऽनुगमाऽविशेषात्। "स्मृतयश्च पुराणानि भारतादीनि सत्तम। शिवमेव सदा साम्बं हृदिकृत्वा ब्रुवन्ति" हीति पराशरपुराणवचनाच्च एवं पुराणादीनां विरोधपरिहाराऽनङ्गी कारेऽतीताधिकरणोदाहृत विषयवाक्येषु सर्वकारणत्व मुमुक्षूपास्यत्वादीनां ब्रह्मलिङ्गानां प्राणाकाशेन्द्रादिषु श्रुतानां विरोधस्सदुष्परिहारस्त्वमेवापद्येत। श्रुतिवदेव पुराणादीनाम प्यविरोधेन प्रामाण्य मवश्याभ्युपेयम्। "पुराणं मानवो धर्म स्साङ्गोवेद श्चिकित्सितम्। आज्ञा सिद्धानि चत्वारि नहन्तव्यानि हेतुभि" रिति स्मरणात्। यदत्र शिवपुराणाऽप्रामाण्यसाधकतया परै र्मात्स्यपुराणवचनजातमुदाहृत न्तत्तु वृत्रं स्ववाग्वज्रमिव परपक्षमेव हिनस्ति तस्य वचन जातस्य ब्रह्मविष्ण्वादीनां परस्परस्मा दुत्कर्ष प्रतिपादयतां स्पुराणानां कल्पभेदप्रवृत्ततत्त दुत्कर्षविषयतयाऽविरोधेन सर्वेषामपि प्रामाण्य मुपपादयितु म्प्रवृत्तत्वेन पुराणेषु केषाञ्चि द्भ्रान्तकल्पिततयाऽप्रामाण्य मापादयितु म्प्रवृत्तत्वाऽभावात्। तथाहि — यथा उष्णागम हिमागमादीनां ग्रीष्महेमन्तादीना मुष्णत्वादिव्यपदेशः यथैवच तत्तद्गुणेषु सत्त्वादिगुणोत्कर्षा त्सात्त्विकादिव्यपदेश स्तथैव कल्पेषु सात्त्विकादि विभागोऽपि तत्तत्कालेषु परमेश्वराज्ञा सिद्धा त्सत्त्वादिगुणोत्कर्षादेव। नतु तत्तत्कल्पावस्थायिनो ब्रह्मण स्तत्तद्गुणोत्कर्षात्। तत्र तथाकण्ठोक्ते रभावात्। प्रयोजनाऽनुरोधेन तादृशविभागाऽभिप्रायः कल्प्यत इत्यपि वक्तु मयुक्तम्। मात्स्यएव "पुराणं मानवो धर्म स्साङ्गोवेद श्चिकित्सितम्। आज्ञा सिद्धानि चत्वारि नहन्तव्यानि हेतुभि" रिति पुराणमात्रप्रामाण्यस्मरण मविगीतमहाजनपरिग्रह ञ्चोल्लङ्घ्य केषाञ्चित्पुराणानां भ्रान्तिमूलत्वकल्पनस्य वैदिकमार्गप्रद्वेषमात्रविजृम्भितस्य

परत्वमस्ति। यत स्तेषु कतिचित् ब्रह्माणं परंब्रह्मेत्याहुः; कतिचित् विष्णुं, कतिचित् रुद्रं, कतिचि च्चेन्द्रं, कतिचि च्छक्तिमेव, कतिचित् अग्निं, कतिचि

प्रयोजनवत्त्वायोगेन परगीत्या शैवपुराणानां प्रधानस्य भूयसश्चार्थस्य बाधितत्वेन सर्वेषामनर्थ त्वस्य दुरुद्धरत्वात्। तस्मा त्सङ्कीर्णा स्सात्विका इत्यादिश्लोकोक्तस्य सात्विकादिविभाग स्याऽस्मदुक्तरीत्या सकलवैदिकसम्मत निखिलपुराणप्रामाण्योपपादकत्वमेव समञ्जसम। अत्र यस्मिन्कल्पे तु यत्प्रोक्तमि त्यनन्तरश्लोकोऽपि पुराणानां तत्तत्कल्पेषु ब्रह्मप्रणीतत्वविधिपरो नभवति किन्तु तत्तत्कल्पेषु ब्रह्मणाप्रणीतानि परस्परविरुद्धदेवतोत्कर्षपराणि पुराणान्यनूद्य तेषा न्तत्तत्कल्पविशेषप्रवृद्ध देवताविशेषमहिमवर्णनरूपतत्वविधिपरः नच "तस्य तस्य तु माहात्म्य" मित्युक्त्या तत्तत्कल्पमाहात्म्यवर्णनमात्रविधिपरइति प्रतीयतइतिशङ्क्यम्। पुराणानां कल्पमाहात्म्यवर्णनार्थं प्रवृत्त्यभावा त्तेषु देवताविशेषमाहात्म्यवर्णनस्यैवोपलभ्य मानत्वात्। "अग्ने श्शिवस्य माहात्म्य" मित्यनन्तरसन्दर्भोऽनुरोधेनाऽप्यस्मदुक्तार्थस्यैव सिद्धत्वाच्च अस्यश्लोकस्य परपक्षएवाऽसङ्गतत्वेन तत्सङ्गत्यनुरोधेनाऽप्यस्मदुक्तरीति रास्थेया एवञ्च "सङ्कीर्णा स्सात्विका" इत्यादिश्लोकः सत्वाद्युत्कर्षकालत्वेन कल्पानां सात्विकादि विभागपरः यस्मिन्कल्पे त्वित्यादिश्लोकस्तु पुराणानां तत्तद्गुणाधिककल्पभेदप्रवृत्त तत्तद्देवता माहात्म्यवर्णनपरत्वेन "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु" इत्यादिपौराणिकश्लोकव दविरोधप्रदर्शनपरइत्येवयुक्तम्। एवं प्रदर्शित मविरोधं सत्वाद्युत्कर्षसमयेषु तत्तदुपाधिकगुणमूर्त्युत्कर्ष मौचित्यरूपेण वस्तुसामर्थ्येनोपपाद यितुं देवतान्तराणामपि केषाञ्चि त्कल्पभेदेषूचितोत्कर्षप्रयोजक मुपाधिविशेषञ्च दर्शयितुं "अग्ने श्शिवस्य माहात्म्य" मित्यादिश्लोकाः। नतु परोक्तरीत्या किङ्गुणकेन ब्रह्मणा प्रोक्तं पुराणं किं देवतापरमिति जिज्ञासायां तद्विशेषमाख्यातुम्। "सात्विके ष्वथ कल्पे" ष्वित्यत्र कल्पग्रहणेन सात्विकादिशब्दानां कल्पपरत्वेन पुराणपरत्वाऽभावात्। कल्पविशेषेषुच "माहात्म्य मधिकं हरे" रिति स्वत स्सम्भवितएव माहात्म्याधिक्यस्य प्रतिपादना शिराकाङ्क्षेषु पूर्ववाक्येषु श्रुतनिगद्यतइत्यादि क्रियानुषङ्गस्यायुक्तत्वा त्पूर्ववाक्येषु प्रकीर्त्यते विष्णुर्निगद्यतइत्यादि क्रियाश्रवणेन तामसकल्पेऽसक्य प्यग्नेरुत्कर्षः कीर्त्यते इत्यादिक्रमेण कथञ्चि त्रेतुं शक्यत्वेऽपि "सात्विके ष्वथ कल्पेषु माहात्म्य मधिकं हरे" रिति हरेरुत्कर्षस्य कल्पविशेषे व्यवस्थाप्रतिपादनदर्शनेन पूर्ववाक्यानामपि देवताविशेषमहिम्नां कल्पविशेष व्यवस्थाप्रतिपादनपरत्वावसायात्। "असङ्ख्याताः स्मृताः कल्पा ब्रह्मविष्णुशिवात्मकाः कथिताश्च पुराणेषु मुनिभिः कालचिन्तकैः। सात्विके ष्वथ कल्पेषु माहात्म्य मधिकं हरेः तामसेषु महेशस्य राजसेषु प्रजापतेः" इति कौर्मे॥

त्मूर्य, कनिचि दन्यम् । एव मनवस्था । अत एतेषां न ब्रह्मबोधकत्व मिति प्राप्ते ब्रूमः । पुरुषसूक्तादीनां ब्रह्मबोधकत्वमस्ति तल्लिङ्गदर्शनात् । 'तस्मा

---

"क्वचि ब्रह्मा क्वचि द्रुद्रः क्वचि द्विष्णुः प्रशस्यते । नाऽनेन तेषा माधिक्यं न्यूनत्ववा कथञ्चन । तत्तत्कल्पान्तवृत्तान्त मधिकृत्य महर्षिभि । तानि तानि प्रणीतानि विद्वां स्तत्र नमुह्य" तीति वायुसंहितायाञ्च स्फुटमेव कल्पभेदेन ब्रह्मादीना मुत्कर्षापकर्ष प्रतिपादनाच्च । एवञ्च परोदाहृत मात्स्यवचनैरेव सर्वपुराणानां प्रामाण्यव्यवस्थापना त्तद्विरोधादेव निहतः परेषां शिवपुराणतामसत्ववादः । किञ्च मात्स्यवचनानां परोक्तार्थपरत्वेऽपि शैवपुराणादीनां तमोगुणा द्यधिक ब्रह्मप्रणीतत्वमात्रं सिध्येत् । नत्वप्रामाण्यं केषाञ्चित् । "ज्ञान मप्रतिमं यस्य वैराग्यं च जगत्पतेः । ऐश्वर्यञ्चैव धर्मश्च महसिद्ध चतुष्टय" मिति ब्रह्मणोऽप्याहतज्ञानशक्तिक त्वस्य स्मरणात् । ब्रह्मणः पुराणविशेषप्रणयनोपाधिभूतस्याऽपि तमसः परब्रह्मणः महत्तृन्दो पाधिभूतस्येव तत्त्वज्ञानप्रतिबन्धकत्वाऽयोगात् । यदि च ब्रह्माऽप्यस्मदादिव तमःप्रतिबद्ध तत्वज्ञानइति तत्कृतपुराणेषु कानिचि दप्रमाणानि स्यु. । तर्हि उदाहृतमात्स्यवचनेष्वपि तथात्वशङ्काया दुर्निवारत्वात् । तैः कथम व्यवस्थापना नसिद्ध्येत् । अपिच मात्स्यादि वचनप्रामाण्यादेव तत्तत्कल्पविशेषेष्वपि पुराणानां ब्रह्मप्रणीतत्वं नसिद्ध्यति । किन्तु सर्गाद्य कृतयुगे वेदप्रवर्तनसमये अविभक्तपाद्मादिप्रभेदोऽयं पुराणस्कन्धः शतकोटिप्रविस्तरो युगपदेव तेन प्रणीतइति तस्यैव पुन स्त्रेतायां ब्रह्मादिभि रष्टादशभीऋषिभि रष्टादशधा विभज्य ग्रन्थकोट्या संक्षेपःकृतः तस्यैव पुन र्द्वापरान्ते चतुर्लक्ष्या वेदव्यासेन संक्षेपः कृतइति विज्ञायते ॥

तथा मात्स्ये "पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतं । अनन्तरन्तु वक्त्रेभ्यो वेदा स्तस्य विनिर्गताः । पुराणमेकमेवासी च्छतकोटिप्रविस्तर" मित्यारभ्य तदर्थोऽत्र चतुर्लक्षे स्संक्षेपेण निवेशितः । इति तथाप्रतिपादना द्धर्मसंहितायामपि "ब्राह्ममेव कृतेचाद्ये पुराणं धर्मसंहितम् । अष्टादशविधं तच्च कृतं कोटिप्रभेदतः" इत्यादिना तथा प्रतिपादनाच्च एवञ्च तदनुरोधात् । "यस्मिन्कल्प" इतिवचनं कल्पभेदेषु पुराणविशेषाणां प्रवचनमात्रपरम् । न प्रणयनपरम् । 'तेनप्रोक्त' मिति पाणिनिसूत्रइव प्रोक्तपदेन प्रवचनमात्रसमर्पणात् । एवञ्च नानुवाद्यस्वारस्यादपि सात्विकादिविभागः प्रामाण्याप्रामाण्यसाधकइतिसिद्धम् । अन्यथा केनचित्तामसेन प्रवचनीकृतानां सात्विकानामपि पुराणा न्तामसत्वापत्तेः वस्तुतस्तु सर्गाद्य कृतयुगेऽपि ब्रह्मणा पुराणस्कन्धो नप्रणीतः । किन्तु तदानीं वेदैस्सहपरमेश्वराद्गृहीत्वा. ब्रह्मणा प्रवर्तितः "योवैवेदांश्च प्रहिणोति तस्मै" इति च शब्देन शिवागमसंहितानां पुराणस्कन्धस्य च समुच्चयात् । तस्मै" वेदा न्पुराणानि दत्तवा नग्रजन्मने" इति तदुपबृंहणदर्शनात् ।

द्विश उजायत,' 'आदित्यवर्णं तमसस्तु पारे,' 'त मेवं विद्वा नमृत इह भव' तीनि सकलकारणत्व तमःपरत्वामृतहेतुत्वादीनां परमेश्वरलिङ्गाना

---

"अस्य महतो भूतस्य निश्वसित मेत यदृग्वेदो यजुर्वेद स्सामवेदोऽथर्ववेद इतिहासपुराण" मित्यादिश्रुत्या "आदिकर्ता कवि स्साक्षा च्छूलपाणि" रिति श्रुतिरिति तदुपबृंहणेन "भूय स्स भगवान् ध्यात्वा चिरं शूलवरायुधः । असृज त्सर्वशास्त्राणि महादेवो महेश्वर" इत्यादिना "इत्येता श्शङ्करप्रोक्ता विद्या श्शब्दार्थसंयुताः" । इत्यन्तेन राजधर्मवचनेन सर्वविद्यास्थानाना मपि परमेश्वरकर्तृकत्वप्रतिपादनाच्च श्रवण स्समोभिभूत्या पुराणानां केषाञ्चि दप्रामाण्यमिति शङ्कायाएव नाऽवकाशइतिसिद्धम् ॥

एतेन वैष्णवनारदीयगारुडभागवतपाद्मवाराहपुराणानि सात्त्विकानि । ब्राह्मब्रह्माण्डब्रह्म कैवर्तमार्कण्डेयभविष्यद्वामनपुराणानि राजसानि । लैङ्गशैवाग्नेयस्कान्दकौर्ममात्स्यानि तामसानि । अत स्तामसै: लैङ्गादिभिरुक्त नग्राह्यमिति केषाञ्चि द्वैदिकानां पुराणविषयसात्त्विकादि विभाग: निराकृत: । तस्य सत्त्वाद्युद्रिक्तवक्तृकत्वस्याऽसिद्धत्वात् । सत्त्वादिगुणकदेवतापरत्व विषयस्य ह्यन्यभावात् । सात्त्विकत्वेन पराभिमते गारुडे शिवरहस्ये पाद्मे शिवराघवसंवादा द्यनेकप्रदेशेषुच लैङ्गादिभ्योऽप्यधिकशिवोत्कर्षव्यवस्थापनदर्शनेनानेनाऽस्य विभागस्य मृग तृष्णायमाणतया तेन परदुराशाया वृथायासमात्र फलकत्वादितिदिक् ॥

अथ यत्तु पराशरसंहितारूपस्य विष्णुपुराणस्य प्राबल्यकारणमुक्तम् । तदपि वायु संहितारूपस्य शिवपुराणस्य प्राबल्यसाधकतया परेषां विपरीतमेव । तथाहि — "ज्ञान मप्रतिमं यस्य वैराग्यञ्च जगत्पते. । ऐश्वर्यञ्चैव धर्मश्च सहसिद्ध चतुष्टय" मिति सहजसाक्षज्ञानवैराग्यादि मता पितामहेनोपदिष्टत्वात् । तत्र "मुनीनां सत्कुलीनानां ब्रुवता मितरेतरम । इदम्पर मिदं नेति वाद स्सुमहानभूत् । परस्य दुर्निरूपत्वा ज्जात स्तत्र ननिर्णय." इत्युपक्रम्य "तेषा म्मुनीना मन्योन्य विवदमानानां ब्रह्मसभोपसर्पणमुक्त्वा "भगव त्रन्धकारेण महता वय मावृता: । खिन्ना विवदमानाश्च नपश्यामोऽत्र यत्पर" मित्यारभ्य "केनेद चित्रकृत्येन प्रथमं सृज्यते जगत् । अन्तकाले पुनश्चेदं कस्मि न्प्रळयमेष्य" तीति सामान्येन सकलकारणस्य तस्य परदैवतस्य प्रश्नमुत्थाप्य एवपृष्ट स्तदा ब्रह्मेत्यारभ्य "उत्थाय सुचिरं ध्यात्वा रुद्रइ त्युच्चर न्गिरम् । आनन्दक्लिन्नसर्वाङ्ग. कृताञ्जलि रभाषत । यस्मा त्सर्व मिदं ब्रह्मविष्णुरुद्रेन्द्रपूर्वक । सहभूतेन्द्रियै स्सर्वै: प्रथम सम्प्रसूयते । कारणानाञ्च योधाता ध्याता परमकारणम् । नसम्प्र सूयतेऽन्यस्मा त्कुतश्च नकदाचन" इत्यारभ्य अनेकशाखाविप्रकीर्णं बहुविधं शिवस्य वैभवं प्रपञ्चेन प्रदर्श्य "तेनेदं चित्रकृत्येन प्रथमं सृज्यते जगत् । अन्तकाले पुनश्चेदं तस्मि न्प्रळय मेष्य" तीत्यादिना शिवएव सकलकारणभूत परमदैवतमिति व्यवस्थापितत्वेन विष्णुपुराणेतु

मत्र संबन्धो दृश्यते। अत ईश्वर एवाऽत्र पुरुषशब्देन प्रतिपाद्यते। शतरुद्रीये च साक्षात्परमेश्वरस्य जगदाधिपत्यं जगदात्मकत्वं नीलग्रीव इत्यादिलक्षणंच

---

प्रष्टुरेकस्य प्रागेव शिष्यभूतस्य मैत्रयस्य हृदयाऽभिज्ञेन गुरुणा सामान्यप्रश्नेऽपि तथैव पूर्वसिद्धभक्तिविवर्धनाय तदनुकूलं विशेषविषय मुत्तरमुक्तमि त्यन्यथासिद्धिवदिह परस्परं विवद मानाना म्बहूना मृषीणांप्रश्ने कस्यचिद्हृदयमनुसृ त्योत्तरमुक्तमित्यत्र विनिगमनाविरहेण तथा न्यथासिद्ध वक्तुमयुक्तत्वाच्च तस्माद्युक्तमुक्तं पुराणादीनामपि तात्पर्येण शिवेसमन्वय इति। उक्तन्यायमविचारितेषु वेदान्तवाक्ये ष्वतिदिशति अनेनेति। अयमर्थस्स्कान्दे सूतस्संहिताया न्दर्शित। " कानिचि द्वेदवाक्यानि ब्राह्मणा वेदवित्तमाः। रुद्रमूर्ति समाश्रित्य शिवे परमकारणे पर्यवस्यन्ति विप्रेन्द्रा स्तथा वाक्यानि कानिचित्। विष्णुमूर्ति समाश्रित्य ब्रह्ममूर्तिंच कानि चित्। आग्नेयमूर्ति माश्रित्य श्रुतिवाक्यानि कानिचित्। सूर्यमूर्ति मुनिश्रेष्ठा स्तथैवाऽन्यानि कानिचित्। एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः। प्रतिपाद्यो महादेवः स्थित स्सर्वासु मूर्ति" ष्विति। एवं क्वचित्। " सूर्य आत्मा जगत स्तस्थुष " श्रुतिश्रूयते। अत्र जगदात्मत्वरूप परमेश्वरलिङ्गात्। " सयश्चाऽयम्पुरुषे यश्चासावादित्ये " इति " यस्यादित्य श्शरीर " मित्यादिश्रुत्यन्तरेषु परमेश्वर स्यादित्यान्तर्यामित्वश्रवणाच्च तत्र प्रतिपाद्यः परमेश्वरएव; तथा " इन्द्रोराजा जगतो यईशे " इतीन्द्रस्य जगदीशत्वं श्रूयते। तत्राऽपि " इन्द्रस्यात्मानं शतधा चरन्तम् " इति शक्रा द्भेदव्यपदेशात्। " सहैवमन्तं नविजानन्ति देवा " इति देवाऽविज्ञेयत्व रूप परमेश्वरलिङ्गाच्च प्रतिपाद्यःपरमेश्वरएव। एवमेव " आपोवा इदंसर्वं " मित्यादिष्वपि सर्वात्मत्वलिङ्गा दबाद्यन्तर्यामी परमेश्वरएव प्रतिपाद्य इत्यनुसन्धेयम्। न न्वन्तर्यामिपरत्वं कारणत्वादि ब्रह्मलिङ्गयुक्तेषु वाक्येष्विति कुत स्सङ्कोचः क्रियते। अन्येष्वपि विद्यतएव सर्वेषा मपि शब्दानां तत्रमुख्यत्वादित्याशङ्क्याह — यत्र यत्रेति। अत्रायम्भावः। यत्र शरीरादिषु वैराग्यसिद्धये तेषां जुगुप्सितविकाराश्रयत्वं प्रतिपाद्यते यथा मैत्रायणोपनिषदि " भगव न्नस्थिचर्मस्नायुमज्जामांसशुक्लशोणितश्लेष्माश्रुदूषिकाविण्मूत्रवातपित्तसङ्घाते दुर्गन्धे निस्सा रेऽस्मि न्शरीरे किं कामोपभोगै " रिति ताद्दृग्वाक्यजातस्य शरीरादिदूषणएव तात्पर्यं नतु ब्रह्मण स्तदन्तर्यामित्वप्रतिपादने। यत्र जीवस्य वैराग्यार्थजननमरण परलोकगतागतक्लेशरूप विकारः प्रतिपाद्यते॥

यथा — गर्भोपनिषदि छान्दोग्यबृहदारण्यकादिषु तादृग्वाक्यजातस्य संसारदूषणएव तात्पर्यम्। नतु जननमरणादिव जीवान्तर्यामित्वप्रतिपादने तत्प्रतिपादनस्य दूषणानुपयोगि त्वात्। यत्र जीवान्तर्यामिब्रह्मप्रतिपादनार्थं जीवस्य ब्रह्माश्रयत्वब्रह्मशरीरत्वादिकं प्रदर्श्यते। यथा " यं पृथिवी नवेद यस्य पृथिवी शरीर " मित्यादौ तत्र पृथिव्यादिपदस्य नियम्यपृथिव्यादि

श्रूयते । अतः परमेश्वरस्य तद्बोध्यत्वं युक्तम् ॥

ननु, परमेश्वरस्य मङ्गळगुणैकनिदानस्य शतरुद्रीयप्रतिपाद्यत्वमयुक्त

देवतासमर्पणपरत्वं तात्पर्यं न तु तत्तदन्तर्यामिसमर्पणे । पृथिव्याद्यविज्ञेयत्वं तच्छरीरत्वादिना तत्तदन्तरमेवोपदेश्यस्य तदन्तर्यामिण । तस्मादेतादृशेषु वाक्येषु "देवदत्तो विद्वान् घटः श्यामः" इत्यादिलौकिकवाक्येष्विव चिदचिद्वस्त्वेव बोद्धव्यम । नहि लौकिकवाक्यवद्वैदिकवाक्येषु शक्तिभ्रमा त्वदप्रयोगः पदार्थप्रतिपत्तिर्वा वक्तुं शक्यते इत्याशङ्क्य शिवस्य ब्रह्मण शरीरमिदिचे वस्तु चिदचिद्वस्तुविशेषित । लोके चिदचिद्वस्तुषु प्रयुज्यमाना शब्दाः केवलस्यान्तर्यामिणः वाचकानेष्यन्ते । किन्तु तत्तद्वस्तुरूपशरीरविशिष्टस्य तथाऽपि विशिष्टवाचिनां शब्दाना मेकदेशैकदेशिसम्बन्धेन विशेषणेषु लक्षकत्वं युक्तमिति ॥

अथ — अत्राऽधिकरणे यत् श्रीभाष्यव्याख्यात्रा श्रुतप्रकाशिकाकृता नारायणस्य कारणत्व मुपपादयितुं वाचाटत्व माविष्कृतं तत्सर्वं मर्भमानमात्रमेव । तत्र यद्यपि तदीयवागाडम्बरेण सर्वेषामपि प्रमाणानां व्याकुलीभावमन्तरा नैव निष्पन्नोऽल्पीयानपि तदीयमनोरथः । तथाऽपि प्रमाणं रूप्य केषाञ्चि दाश्रमाश्च किञ्चि दिह प्रदर्शयामः ॥

इह यद्यपि नारायणस्य कल्पान्तरेऽवान्तरसृष्टौ कारणत्वं क्वचिदाम्नायते । तथाऽपि न तत्रैव आदिसृष्टिविषयं सर्वकारणत्वमिति भ्रमितव्यम । नव आदिसर्गोऽवान्तरसर्गमूल सर्वकारणत्व कल्पान्तरविषयसङ्कोचितकारणत्वरूपविशेषसाधकं बीज नोपलभ्यत इति शङ्क्यम् । ब्रह्मविष्णुरुद्ररूप त्रिमूर्तिजनकत्वरूपादिसर्गविषयसर्वकारणत्वस्य मूर्तिद्वयजनकत्वरूपाऽवान्तरसर्गविषय सङ्कोचितकारणत्वस्यच बहुप्रमाणसिद्धत्वात् । नाऽपि ब्रह्मविष्णुरुद्ररूपमूर्तित्रयमेव प्रामाणिकम् । तज्जनकं तुरीयं तत्त्वान्तरं नप्रामाणिकमितिशङ्क्यम् । त्रिमूर्त्युत्तीर्णपरतत्त्वस्य श्रुतिस्मृतिपुराणादिसिद्धत्वात् । तथाहि — ब्रह्मोपनिषदि "अकारं ब्रह्माण नाभौ उकार विष्णुं हृदये मकारं रुद्रं भ्रूमध्ये" इति मात्रात्रयवाच्यब्रह्मविष्णुरुद्राणा मुपासनविधानान्तरं "ओंकार सर्वेश्वर द्वादशान्त" इति समष्टिप्रणववाच्य सर्वेश्वराख्यतुरीयतत्त्वस्य प्रतिपादितत्वात् । मैत्रेयोपनिषदिच "तमोवा इदमेकमास तत्परेणेरित विषमत्वं प्रयाति अथ योह खलु वा वाऽस्य राजसोंशोऽसौ स योऽयम्ब्रह्मा । अथ योह खलु वा वाऽस्य सात्त्विकोंशोऽसौ स योऽयंविष्णुः । अथ योह खलु वा वाऽस्य तामसोंशोऽसौ स योऽयंरुद्रः" इति तमोधिष्ठातुः परस्य रजोगुणाद्युपहिता अंशभेदा ब्रह्मादयइति प्रतिपादनेन तेभ्यः परस्य तुरीयतत्त्वस्य स्पष्टीकृतत्वाच्च । नाऽपि तुरीयतत्त्वस्य शिवाऽभिधेयत्वं नश्रुतमितिशङ्क्यम् । माण्डूक्योपनिषदि "शिव मद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय" इति तुरीयतत्त्वस्य शिवसंज्ञा

मिति प्रतिभाति । प्रथममेवाऽत्र 'नमस्ते रुद्र मन्यव' इति हेयगुण

---

कत्वाम्नानात् । अथर्वोपनिषदि च शिवाऽसाधारण सर्वैश्वर्यसमाख्याकत्वश्रवणाच्च । ननु शिवस्य मूर्तित्रयकारणत्वं न श्रूयत इति वाच्यम् । अथर्वशिखायाम् । "ब्रह्मविष्णुरुद्रेन्द्रा स्सम्प्रसूयन्ते" इतीशानस्य त्रिमूर्तिकारणत्वाम्नानात् । त्रिमूर्तिस्रष्टृत्वस्य शिवविषयत्वेनैवानुशासनिके प्रतिपादितत्वाच्च । तथहि — "स एष भगवा नीश स्सर्वतत्त्वादि रव्ययः । सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वर । सोऽसृज द्दक्षिणा दङ्गा द्ब्रह्माण लोकसम्भवम् । वामपार्श्वा त्तथा विष्णुं लोकरक्षार्थ मीश्वरः । युगान्ते चैवसम्प्राप्ते रुद्रं प्रभु रथाऽसृज " दिति । किञ्च । तत्संरक्षकत्व स्याऽपि शिवविषयत्वेनैव शांतिपर्वणि प्रतिपादितत्वात् । तथाच " य विष्णु रिन्द्र श्शम्भुश्च ब्रह्मा लोकपितामहः । स्तुवन्ति विविधैःस्तोत्रै र्देवदेवं, महेश्वरम् । तमर्चयन्ति ये शश्व दुर्गा ण्यतितरन्ति ते " इति । अत्र शिवाराधनस्य दुर्गातितरणतयोक्तया ब्रह्मविष्ण्वादीनांस्तोत्रमपि तदर्थमिति पर्यवसायात् । स्तुतिभिः प्रीतस्य तस्यशिवस्य तत्संरक्षकत्वं विवक्षितमित्यवसीयते । एव शिवस्य तत्संहर्तृत्वमपि शांतिपर्वण्येव प्रतिपादितम् । "ईश्वर श्चेतनः कर्ता पुरुषः कारणं शिवः । विष्णु र्ब्रह्मा शशी सूर्यः शक्रो देवाश्च सान्वयाः । सृज्यते ग्रस्यते चैव तमोभूत मिदं यदा । अप्रज्ञातं जगत्सर्वं तदाह्येको महेश्वर " इति । अत्र महारुद्रस्याऽपि ग्रासो विव क्षितः । " तदा ह्येको महेश्वर " इति वाक्यशेषात् । एवं ब्रह्मविष्णुरुद्राणामपि सृष्टिस्थितिप्रळय कर्तृत्वकथनेन कैमुतिकन्यायेन सर्वस्य जगतः कर्तेति सिध्यति । एवञ्च " यतोवा इमानि भूतानि जायन्ते - येन जातानि जीवन्ती " त्यादि लक्षणलक्षित ब्रह्म शिवएवेतिसिद्धम् । एवं शिव पुराणे " त्रयस्ते कारणात्मान स्सञ्जाताहि महेश्वरात् । सृष्टेः प्रवर्तको ब्रह्मा स्थिते र्विष्णु र्विमोहकः । संहारस्य तथा रुद्र स्त्वयो र्नित्यं नियामकः । तस्मा त्त्रयस्ते कथ्यन्ते जगतः कारणत्रयम् । कारणत्रय मेतत्तु शिवः परमकारण " मिति । स्कान्देऽपि - ब्रह्मा विष्णुश्च रुद्रश्च परतत्त्वविभूतयः । एषां त्रयाणा मधिकः सर्वकारण मीश्वर " इति । श्रौतं त्रिमूर्ति कारणत्वं शिवविषयमिति महाभारतेन पुराणै श्चोपबृंहितम् ॥

ननु — महोपनिषदि " एको ह वै नारायण आसी " दिति नारायणस्य सृष्टिपूर्वसिद्ध त्वाम्नानेन " ब्रह्मविष्णुरुद्रेन्द्रा स्सम्प्रसूयन्त " इति वचनावगतविष्णुप्रसूतेः स्वेच्छाऽविर्भाव परत्वं ग्राह्यमितिचे " न्न - " हिरण्यगर्भ स्समवर्तताग्र " इति वचनेन हिरण्यगर्भस्याऽपि नारा यणतुल्ययोगक्षेमतया तत्प्रसूतेरपि तथाविधत्वापत्तेः प्रायपाठाविरोधायच त्रिमूर्तीनामपि महे श्वरसृज्यत्वमविशेषमित्येवाऽवश्याऽभ्युपेयत्वात् । वस्तुतस्तु " ब्रह्मविष्णुरुद्रेन्द्रा स्सम्प्रसूयन्त " इति वचनाऽनुरोधेनैव " एको ह वै नारायण आसी " दितिवाक्यगतस्य आसीदितिपदस्य " रोहितो लोहिता दासी त्सिन्धु स्तस्य सुतोऽभवत् । शक्ते रासी त्पराशरः " इत्यादाविवोत्पत्ति

मन्युसंबन्धावगमा दितिचेत् । नैवं विचारणीयम् । मन्युशब्दस्याऽत्र यज्ञ

---

वाचकतया कल्पान्तरे ब्रह्मरुद्राद्युत्पत्तेः पूर्वं सर्गाद्यसमये नारायणस्यैकाकिनः परमशिवा दुत्पत्ति बोधकत्वाऽसमायात् । ब्रह्मादीनां नारायणस्यच सृष्टत्वेन प्रतिपादयिष्यमाणतया पारिशेष्या त्परम शिवस्यैतदुत्पत्तौ हेतुकर्तृत्वेनाऽन्वयलाभात् । आसीदि त्यस्योत्पत्त्यर्थकत्वे एकइत्यवधारणस्य उत्पत्तिमदितरमात्रव्यवच्छेदकारितया अनादिमुक्त परमशिवसद्भाव प्रतिक्षेपाऽसामर्थ्यात् ।

अथ कथम स्यामीत्पदस्य सत्तामात्रार्थग्रहणेऽपि " एष वाव प्रथमो यज्ञ " इति ज्योति ष्टोमस्य सर्वयज्ञप्राथम्यबोधकश्रुतेः । " दर्शपूर्णमासाभ्या मिष्ट्वा सोमेन यजे " तेति श्रुत्यन्तर दर्शना त्संकोचवत्तिमूर्त्युत्तीर्णं सर्वमूलभूत परमशिवसूर्तिसद्भावप्रतिपादनपराऽनेकश्रुतिविरोध परिहाराय सङ्कोचएव वोपपद्यते । अतएव तदुपबृंहणे मनुधर्मशास्त्रोपक्रमे " आसी दिद तमो भूत मप्रज्ञात मलक्षणम् । अप्रतर्क्य मनिर्देश्यं प्रसुप्तमिव सर्वतः ।तत स्स्वयम्भू र्भगवा नव्यक्तो व्यञ्जयन्निद । महाभूतादि वृत्तौजाः प्रादुरासी त्तमोनुदः । अभिध्याय शरीरा त्स्वा त्सिसृक्षु र्विविधाः प्रजा । अपएव ससर्जादौ तासु वीर्य मवासृजत् । तदण्ड मभव द्धैमं सहस्रांशुसमप्रभम् । तस्मि ञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः " इत्युक्त्वा " आपो नारा इति प्रोक्ता आपोवै नरसूनवः । ता यदस्यायन पूर्वं तेन नारायण स्स्मृत " इति हिरण्यगर्भस्य स्रष्ट र्नारायणस्य " प्रादुरासी त्तमोनुद " इति तमःप्रेरका त्परमेश्वरा दुत्पत्ति रुपबृंहिता । नच - तमोनुदइतिपदस्य इगुपधलक्षण कप्रत्ययान्ततया प्रादुर्भवितु र्नाराय णस्यैव विशेषणत्वेन तमोधिष्ठातृत्वं नारायणात्परस्य नसिद्ध्यतीति वाच्यम् । " आसी दिद तमोभूत " मितिश्लोकेन सर्गादौ तमोरूपेण जगदवस्थान्तरं प्रतिपाद्य " तत स्स्वयम्भू र्भगवा " नित्यादिना तदनन्तरं प्रादुर्भूतत्वे नोच्यमानस्य रूपस्य पूर्वसिद्धतमोऽधिष्ठातृत्वायोगात् । तस्मा त्तमोनुदइतिपदं क्विबन्तत्वेन पञ्चम्यन्तम् । प्रादुर्भावयितृपरमेव । नच स्वयम्भुवः प्रादु र्भावोक्तौ नप्रादुर्भावयितृकिः युज्यते विरोधादितिशङ्क्यम् । स्वयम्भूशब्दस्य नारायणजन्ये चतुर्मुखेऽप्यन्यत्र प्रयुज्यमानत्वेन मनुस्मृतावेव . " तस्मिञ्जज्ञे स्वयं ब्रह्मे " ति नारायणसृष्टे चतुराननेऽपि स्वयम्भूत्वकथनेनच तथैव परमशिवसृष्टे नारायणे प्युपचरितार्थत्वेनाऽविरोधात् । एवं मनुधर्मशास्त्रोपक्रमेण " एकोहवै नारायण आसी " दिति श्रुतमासीदितिपद मुत्पत्तिपर मिति सिद्धम् । अतएव तदुपसंहारेऽपि " प्रशासितारं सर्वेषा मणीयांस मणोरपि । रुक्माभं स्वप्नधीगम्यं विद्यात्त पुरुषम्परम् । एष सर्वाणि भूतानि पञ्चभि र्व्याप्य मूर्तिभिः । जन्मवृद्धिक्षयै र्नित्यं संसारयति चक्रव " दिति सद्योजातादिमूर्तिपञ्चकेन " मूर्तय स्तस्य विख्याताः पञ्च ब्रह्मा ह्वयाः पराः । सर्वलोकशरण्यस्य शिवस्य परमात्मन " इति पुराणवचनप्रतिपादितेनवा पृथिव्यादि पञ्चकेन मूर्त्यष्टकान्तर्भूतेनवा परशिवासाधारणसर्वभूतव्याप्तिलिङ्ग स्योपन्यासेन शिवस्य तमो

वाचकत्वात् । अथवा क्रोधपर्यायत्वेऽपि मन्युशब्दस्य न दोषः * दुष्ट

---

धिष्ठातृत्वस्य हिरण्यगर्भजनकस्याऽपि नारायणस्य प्रथमोत्पादकत्व प्रतिपादनाच्च शिवएव आदि सर्गकर्ता सर्वकारण मिति सिद्धम् । तथा - योगयाज्ञवल्कीये धर्मशास्त्रेऽपि - पृथिव्यां वायु मारोप्य लकारेण समन्वितम् । ध्यायं श्चतुर्भुजाकारं ब्रह्माणं परमेष्ठिनम् । धारये त्पञ्चघटिका धारणा त्सिद्धिमाप्नुयात् । वारुणे वायु मारोप्य वकारेण समन्वितम् । शुद्धस्फटिकसंकाशं पीत वासस मच्युतम् । धारये त्पञ्चघटिका स्सर्वपापैः प्रमुच्यते । वह्नौ चानिल मारोप्य रेफाक्षर समन्वितम् । त्र्यक्षंच वरदं रुद्रं तरुणादित्यसन्निभ" मिति त्रिमूर्तिधारणा मुक्त्वा "आकाशे वायु मारोप्य हकारेण समन्वितम् । बिन्दुरूप महादेवं व्योमाकारं सदाशिवम् । शुद्धस्फटिक संकाशं बालेंदुकृतशेखरम् । पञ्चवक्त्रधरं सौम्यं दशबाहुं त्रिलोचनम् । सर्वायुधोद्यतकरं सर्व भूषणभूषितम् । उमार्धदेह वरदं सर्वकारणकारणं । चिन्तये च्चित्तविन्यस्तं मुहूर्तमपि धारयेत् । सएव मुक्त इत्युक्त स्तान्त्रिकेष्वपि शिक्षितैः" रिति त्रिमूर्त्युत्तीर्ण स्योमापतेः । धारणाया मुक्तिहेतुत्वात् सर्वकारणत्वमपि निगद्य "एत दुक्तंभव त्यत्र गार्गि ब्रह्मविदां वरे । ब्रह्मादिकार्यरूपाणि स्वेस्वे संहृत्य कारणे । युक्तश्चित्त स्तथात्मानं धारये त्परमेश्वर" इतिच वचनेन परमशिवस्य सर्वकारणत्वप्रतिपादनेनच "एको हवै नारायण आसी" दित्यत्राऽऽसीत्पदं नारायणस्य प्रथमोत्पन्नत्ववाचकमेवं त्यवगम्यते । एवं न्यायोपबृंहणाभ्यां महोपनिषदो महादेवा त्प्रथम मुत्पन्नस्य नारायणस्य सकलप्रपञ्चसर्गकारित्वबोधकत्वा न्नविरोधः । एवंसुबालनारायणोपनिषदादिषु तस्य कारणत्वप्रतिपादनस्याऽपीयमेव गति र्द्रष्टव्या । नन्वेवमपि कथं सर्वाविरोध उपपद्यते "यो ब्रह्माण" मिति मन्त्रे "यो देवाना" मिति मन्त्रेच सकलदेवोत्पत्तेः पूर्वं ब्रह्मणः परमशिवा दुत्पन्नत्वप्रतिपादनात् । "युजुर्भ्यो विष्णु" मितिश्रुता वष्टमूर्ति ब्राह्मणेच तेनैव पुन र्विष्णुरुद्रयोः सृष्टत्वाऽभिधानात् "अण्डं हिरण्मयं मध्ये समुद्रं रुद्रस्य वीर्या त्त्वयमं सम्बभूव । तत्र ब्रह्मा विष्णु र्जातो जातवेदा" इत्यादिश्रुतौ । रुद्रसंज्ञस्य देवस्य रूपं मूर्तिः प्रजायते । तेन सिक्त रसे वीर्यं परमूर्त्यभिमानिना । तदण्ड मभव द्दीर्यं सहस्रकिरणप्रभम् । विष्णु स्तत्प्राऽविश त्साक्षा न्ममशक्तेस्तु वैभवात् । पुनर्नारायणाभ्यां मे नियोगा त्प्रासवा नसौ" । इत्यादिवासिष्ठलैङ्गादिदृष्टतदुपबृंहणैश्च ब्रह्मनारायणयोः रुद्रसृष्टत्वोक्तेश्च महोपनिषदादिप्रक्रियया ब्रह्मरुद्रयो स्तदितरप्रपञ्चस्य नारायणसृष्टत्वोक्तेश्च निर्धारणायोगादितिचे दुच्यते । — अत्र भगवा न्वायुः ,' तपसा तोषयित्वा तं पितरं परमेश्वरम् ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् । कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः । विष्णुश्च भगवां स्तद्वत् ब्रह्माण्ड मसृज त्पुनः । नारायणं पुन र्ब्रह्मा ब्रह्माणंच पुनर्भवः । एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः । परस्परस्मा ज्जायन्ते परस्परजयैषिणः । तत्तत्कल्पान्तवृत्तान्त मधिकृत्य महर्षिभिः प्रभावः कथ्यते तेषां परस्परसमुद्भवः" इति । एतेन त्रिमूर्तिषु कार्यकारणभाव स्तत्तत्कल्प

निग्रहार्थं स्वेच्छागृहीतप्रकृतिगुणत्वेनाऽस्य परमेश्वरे संबन्धाभावात् ।

विषय इति तस्य अविरोधः समर्थितः । एवञ्च "नारायणाद् ब्रह्मा जायते नारायणाद् रुद्रो जायते" इत्यादिना नारायणस्य ब्रह्मरुद्रमात्रजनकत्ववचनं भवान्तरकल्पप्रवृत्तसृष्टिविषय मिति सिद्धम् । एवमेव सर्वाविरोध एष्टव्यः । अन्यथा "शिवएव केवलः", "एको ह वै नारायण आसीत्", "हिरण्यगर्भः समवर्तताग्रे" इत्यादिवचनानां परस्परविरोधाद प्रामाण्यमेव प्रसज्येत ॥

ननु - रुद्रस्य परमकारणत्वं नमिष्यति चतुर्मुखकार्यत्वस्य श्रुत्यन्तरागतस्याऽनपोदितत्वा दित्यादिना रुद्रस्य हिरण्यगर्भकार्यत्वादिति परै राशङ्क्यते इतिचेत् तत्सर्वं परमशिवगुणि रुद्रतदंशविशेषाविवेकमूलतयाऽकिञ्चित्करम् । तथाहि — सूतसंहितायाम् - "तताप परमं घोरं ततो विप्रा श्चतुर्मुखः । सृष्ट्यर्थं ब्रह्मणस्तस्य भ्रुवो र्घोणस्य मध्यतः । अविमुक्ताभिधा द्देशा त्स्वकीयात्तु विशेषतः । त्रिमूर्तीना म्महेशस्य द्विजा वेदान्तवित्तमाः । अंशभूतो महादेव स्सर्वदेवनमस्कृतः । अर्धनारीश्वरो भूत्वा प्रादुरासी त्कृपानिधि" रिति । तमुमेवार्थं स्मृहेणाह — राजधर्मे पराशरः । "सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटा दुत्थितः प्रभु" रिति । लैङ्गेच शिलादप्रति शक्रः । "तस्य हृत्कमलस्यस्य नियोगा दशजो विभोः । ललाटं तस्य निर्भिद्य प्रादुरासी त्प्रभो र्मुखात्" । अंशः परमशिवस्य संहाररुद्रः । ततो जात स्तदेवदेहाविभागरूप इति यावत् । एवञ्च - वायुसंहितायाम् — "निर्दिष्टः परमेशेन महेशो नीललोहितः । पुत्रो भूत्वाऽनुगृह्णाति ब्रह्माणं ब्रह्मणोऽनुजः" इति परमशिवनियोगा द्रुद्रस्य ब्रह्मणः पुत्त्रभावे नाऽविर्भाववर्णनं यच्चादित्यपुराणादिषु "त्वामेव पुत्र मिच्छामि" इति प्रार्थयमानाय तस्मै तत्तत्वरपरिपालनाय तत्र रुद्राविर्भाववर्णनं तत्सर्वं शिवा दुत्पन्नत्वेन महासंहारपर्यन्तायस्थायित्वेनच वर्णितस्य तस्यावान्तरकल्पेषु पुनःपुन रुत्पत्त्यसम्भवेन तेषु प्रत्यवान्तरकल्पं तदाविर्भाववर्णनस्य तदंशविशेषविषयत्वस्याऽवश्याऽभ्युपेयत्वात् । एकञ्च तस्य ललाटा त्त्र्यक्ष श्शूलपाणिः पुरुषोऽजायत । "भिक्षु त्सर्वं ब्रह्मचर्यं तप" इति प्रतिपादितस्याऽपि रौद्राविर्भावस्य-द्रोणपर्वणि — " ततः पार्श्वे वृषाङ्कस्य ब्रह्मचारी व्यवर्तत । पिङ्गाक्ष स्तपसा श्रेष्ठो बलवा न्नीललोहितः" इति कैलासे श्रीकण्ठपार्श्वेऽवस्थानोक्त्या - कौर्मे नारायणम्प्रति - "अहञ्च भवतो वक्त्रा त्कल्पान्ते घोररूपधृत् । शूलपाणि र्भविष्यामि क्रोधज स्तवपुत्रक" इति रुद्रोक्त्या चैच्छिकांशावतार त्वाविष्करणात् । तन्मूलः पौराणिक व्यवहारो व्यंशावताराऽभिप्राय एव । एतेन यत्रकचि त्कचि द्रुद्रस्य पितामहा न्नारायणाद्वा निकर्षवर्णनं तदपि तत्तदाविर्भूतस्यांशविशेषस्य स्थाण्वाऽविशब्दितस्य रामकृष्णाद्यवताराणां दशरथवसुदेवादिभ्यइव लोकदृष्ट्या निकर्षाभिनयपरम् । विष्णुपितामहयोस्तु स्वमूलरूपेणाऽपि रुद्रा न्निकर्ष स्सहजः । अतएव, ' परात्परतरो ब्रह्मा तत्परा त्परतो

पुराणादीनांच तात्पर्यलिङ्गवशेन ब्रह्मविष्ण्वादिनानाकारणस्य सर्वात्मके

हरि. । तत्परात्परतो हीश " इति श्रुतिः ब्रह्मविष्ण्वपेक्षया रुद्रस्याऽऽधिक्यं विदधाति - अत्र शाना नन्दस्य गोविन्दस्यच महेश्वरा त्प्रसूतिरेव मुख्या । अतएव "यो देवानां प्रथमं पुरस्ता द्विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं मनो देव शुभया स्मृत्या संयुन" क्त्विति नारायणे आम्नानात् " ब्रह्मविष्णुरुद्रेन्द्रा स्सम्प्रसूयन्त " इत्यथर्वशिखायां श्रुतत्वाच्च ब्रह्मविष्ण्वोः परस्परस्मा दुत्पत्तिस्तु गौण्येव - तदुक्तमादित्यपुराणे " प्रविष्टो ब्रह्मणोदेहं तत्र दर्शनलालसः । विस्मितः कमलाकान्तो निर्जगाम विधे र्मुखात् । सहस्रशीर्षा पुरुष. पुन र्ब्रह्माण मब्रवीत् । विधे त्व मद्य मद्देहं प्रविश्याऽऽशु विलोकय । चराचरात्मकान् लोकान् स देवासुरमानुषान् । ततो विरिञ्चि र्भगवान् सुन्दरं कमलापतेः । प्रविश्य सकलान् लोकान् दृष्ट्वाऽभू द्विस्मितो विधिः । नापश्य न्निर्गमद्वारं पिहितं चक्रपाणिना । ततोऽसौ नाभिचक्रस्य नाभिमार्ग मभिन्दत । निर्गत स्तेनमार्गेण ब्रह्मा ब्रह्मविदां वरः " इत्यादि ॥

अथाऽत्र यत्परैः रुद्रस्य पितामहकार्यत्वेन नारायणसृष्टत्वेनच कारणत्व मयुक्तमिति यदपि " ब्रह्मविष्णुरुद्रेन्द्रा स्सम्प्रसूयन्त " इति विष्णोः प्रसूति मुद्दिश्य भगवज्जन्मनोऽवताररूपत्व उत्पत्तिप्रापकवाक्येषु चाऽकर्महेतुत्वेनात्मफलार्थत्वेनच विलक्षणतया भगवज्जन्मनः स्वेच्छाकृतस्य निरङ्कुशैश्वर्याविरोधित्वा दिति भगवज्जन्मन स्वेच्छावतारत्वादेव यदोः कुले जायमानो नारायण इतिच तत्सर्व मवैदिकमतान्धकूपपतनमूल स्मतिविपरीत्य मेव । " अजात इत्येवं कश्चि द्भीरुः प्रपद्यते " "रुद्र यत्त " इति मन्त्रेण जन्मरहिततया श्रुतस्य सकलदेवगरि ष्ठयो र्ब्रह्मविष्ण्वोरपि प्रार्थनावशात् " कावै वरणा काच नासा - सर्वा निन्द्रियकृता न्दोषा न्वारयतीति वरणा - नाशयतीति ना " सेत्यादिना परशिवध्यानस्थानत्वश्रुततया प्रसिद्धा दवि मुक्तस्थला दाविर्भावस्य कर्ममूलत्व मिति " नमो विष्णवे बृहते करोमी " त्यादौ बृहत्पदेन व्यवहृतस्य " जातो बृह न्नभिपाति तृतीय मिति " जन्मवत्तया श्रुतस्य मनुष्यमात्रा दपि जायमानस्य पुरुषवीर्यकरणानुषङ्ग स्त्रैणगर्भनरकवास हीनयोनिजत्वादि सकलजन्मलक्षणभृत श्श्रीपते र्जन्मादिकं स्वेच्छावताररूप जन्माऽकर्मवश्य मिति प्रजल्पनस्य सर्वप्रमाणविरुद्ध त्वात् । नारायण मुद्दिश्याऽकर्मवश्यत्वादीनां क्वचि दप्यश्रुतत्वाच्च । अतएवोक्त मुत्तर रामायणे एकपञ्चाशे सर्गे दशरथम्प्रति दूर्वाससउक्ति मनूद्य " शृणु राजन् पुरावृत्तं तथा देवासुरे युधि । दैत्या स्सुरै र्भर्त्स्यमाना भृगुपत्नीं समाश्रिताः । तया दत्ताऽभया स्तत्र न्यवस न्नभया स्तदा । तया परिगृहीतां स्तान् दृष्ट्वा क्रुद्ध स्सुरेश्वरः । चक्रेण शितधारेण भृगुपत्न्या शिरोऽहरत् । तत स्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः । शशाप सहसा क्रुद्धो विष्णुं रिपु

सर्वज्ञं सर्वशक्तिकं सर्वाधिक मनन्यसामान्यवैभवं ब्रह्मशब्दार्थविश्रान्तिपदं

कुलार्दनम् । यस्मा द्वध्यां मे पत्नी गर्भी· क्रोधमूर्छितः । तस्मात्त्वं मानुषेलोके जनिष्यसि जनार्दन । तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिक " । इति शप्तो महातेजा भृगुणा पूर्वजन्मनि । इहाऽऽगतोहि पुत्रत्वं तव पार्थिवसत्तम । राम इत्यभिविख्यात स्त्रिषु लोकेषु मानद । तत्फल प्राप्स्यतेवाऽपि भृगुशापभवं महद् " दिति । ततएवहि श्रुतिसूक्तमालायां श्रीसुदर्शनाचार्य चरणैः ॥

श्लो॥ इच्छावतारमुरशासनगर्भवास
स्त्याद्य दुदाहरण मेष विमर्शनीयः
गर्भे वसामि परिवेष्ट्य जरायुणाऽहं
मासान्बहूनिति महेश्वर कस्यकामः ॥

श्लो॥ इच्छाऽपि नून मनुयाति पुराकृतानि
कर्माणि शंकर शुभाशुभलक्षणानि ।
इच्छावतारवचनानितु भारताद्यौ
नारायणस्य गुणवाद मुदाहरन्ति ॥

इति प्रतिपादितम् । एवञ्च श्रुतिस्मृतिपुराणै न्यायोपबृंहितैः परमशिवस्य त्रिमूर्तिकारणतया सर्वकारणत्वमिति ब्रह्मविष्णुरुद्राणां त्रिमूर्ति कारणतया कल्पान्तरविषयाऽवान्तरकारणत्व मितिच सिद्धम् । अतएव नारायणे - " विश्वाधिको रुद्रो महर्षि " रिति । श्वेताश्वतराणा म्मन्त्रोपनिषदि " यदा तम स्त न्नदिवा नरात्रि र्नस न्नचाऽस च्छिवएव केवलः " । इतिच परमशिवस्यैव सर्वकारणत्व न्तन्मूलं विश्वाधिकत्वञ्चाम्नायते ॥

न न्वस्या स्तृतीयेऽध्याये " वेदाह मेतं पुरुष म्महान्त " मिति पुरुषसूक्तपठितमन्त्रा म्नानेन तत्प्रतिपाद्यस्य नारायणस्य प्रत्यभिज्ञाना त्तत्परताऽवसीयत इतिचे दुच्यते - प्रत्यभिज्ञानं हि स्थलद्वयपरामर्शापेक्षतया विलम्बितोपस्थितिकम् । तस्मा दभिधानश्रुतीनामेव प्राबल्यम् । ततश्च " क्षरंप्रधान ममृताक्षरं हरः । शिवएव केवलः " । " मायिनन्तु महेश्वर " मिति हर शिवमहेश्वरादिभिः प्रबलाभि रभिधानश्रुतिभिः प्रापितमस्या श्शिवविषयत्व मपोदितुं देवतान्तर विषयत्व मापादितुञ्च नशक्नोति प्रत्यभिज्ञानम् । अथ यदि तस्यैव प्राबल्य मिष्यते चेत् । तर्हि " यातं रुद्र शिवातनूः " " या मिषुं गिरिश न्त हस्त " इति श्रीरुद्रगतमन्त्राणाम प्यत्र श्रूयमाणतया श्रीरुद्रप्रत्यभिज्ञया मन्त्रोपनिषदः मन्त्रोपनिषद्गत " वेदाहमेत " मित्यादि

मन्त्रप्रत्यभिज्ञया पुंसूक्तस्याऽपि शिवपरत्वसिद्ध्या परेषां वृद्धि मभीप्सता मूलमेव नष्टमिति न्याय भाजनतया हास्यास्पदत्व मवार्यम् ॥

किञ्च - विमृश्यमाने पुंसूक्तस्याऽपि नारायणपरत्व मलभ्यमिति स्पष्टीभविष्यति परस्तात् । यदत्र परैः बह्वृचशतपथब्राह्मणसुबालमहोपनिषत्सामवचनादिभि हिरण्यगर्भजन्यत्वे श्वेताश्वतरवाक्येन हिरण्यगर्भजनकत्वेच रुद्र स्याऽवगम्यमाने तयो र्विरोधेन निर्वाहाऽसम्भवे प्राबल्यदौर्बल्यचिन्ता युक्त्यादिना रुद्रस्य चतुर्मुखजन्यत्वं युक्तमित्यन्त मनल्पविकल्पं यत्प्र जल्पितम् तदखिलं पुरस्तादेव त्रिमूर्तीनां कल्पभेदेन परस्परस्मा दुत्पत्तिव्यवस्थापनेन रुद्रांश स्यैवाविर्भावनिरूपणेनच वातूलतूलीकृतम् । ततश्च — ननु - परमकारणत्वं शिवशब्दवाच्यस्यैव श्रूयते । "यदा तम स्त न्नदिवा नरात्रि र्नस न्नचास च्छिवएव केवल" इति न तस्य भगव दसाधारण्यस्य बहूपनिषद्वाक्यै र्न्यायानुगृहीतै निश्चितत्वात् । किञ्च नारायणमहापुरुषादिशब्दाना मसाधारणत्वा द्बहूपनिषत्स्थत्वात् साधारणाना मेकोपनिषत्स्थानां शिवादिशब्दाना तदनुरोधेन वर्णनीयत्वा द्विशेषतः पुरुषसूक्तैकार्थ्यावगमाच्च शिवरुद्रादिशब्दानामपि परमपुरुषपरत्वसिद्ध रिति "शिव श्शिवाना मशिवोऽशिवानाम" "शिवा स्ते सन्तु पन्थानः" "शिवम स्त्विति च शिवशब्दः प्रयुक्तः । पुंलिङ्गवचनान्त स्त्वसाधारण इतिचे त्तर्हि प्रातिपदिकत्वाऽ साधारण्य मनुमत स्भवतीतिच यदुक्त न्तदपि "कपि रपिच कापिशायनमदमत्त" इति न्यायेनाऽवैदिकस्य शिवप्रद्वेषदोष विलसितमेव ॥

तथाहि - शिवशब्दस्य शिवे असाधारण्यं नास्तीतिवदन्त मेवं प्रष्टव्यम् — कि न्तस्य "पन्थान स्सन्तु ते शिवा" इत्यादिप्रयोगविषयसाधारणशुभतारूढिव्यतिरेकेण शिवे असाधारण रूपेण रूढिरेव नास्तीत्युच्यते ? उत तत्सत्वे प्यक्षादिशब्दव दनेकशक्तिकत्वा त्स्वतो न निर्णाय कत्व मिति ? नाद्यः "कल्याणं मंगळं शिव" मित्याद्यनुशासनव्यतिरेकेण "शिव श्शूली महेश्वरः" "ईशान श्शशिशेखरः पशुपति श्शूली शिव श्शङ्करः" "व्योमकेशो महादेवः प्रमथाधिपति श्शिवः । "शिवं मोक्षे च भद्रे च सलिले च शिवो हरे । शिवो कीले पद्मरागे हरे कीले शिवं जले । शिवं भद्रं शिव श्शम्भु श्शिवा गौरी शिवाह" येत्या द्यनन्यथा सिद्धाने कानुशासनबलात् । "विष्णु र्नारायण' कृष्ण" इत्याद्यनुशासनबला त्कृष्णशब्दस्य वर्णविशेषे रूढिव्यतिरेकेण विष्णाविव "शस्त ञ्चाथ त्रिषु द्रव्ये पापपुण्यसुखादि च" इति स्मृतं मर्व द्रव्यसाधारण मर्थव लिङ्गतां विना नित्यपुंलिङ्गतया असाधारणरूपेण उदाहृताना मनेकेषा मनु शासनानां वैयर्थ्यापत्तेः । नाऽपि द्वितीयः । केवल योगेन कुमुदादिषु प्रयुज्यमानानां पङ्कजादि

मुमासहितं परमेश्वरं प्रतिबोधकत्वं युक्तमेव । यदुक्तं कर्मप्रकरणमिति

शब्दानां योगरूढ्यन्यायानुग्रहलाभेन पद्मादिपरत्वस्येव शिवशब्दस्य शुभत्वनीलकंठत्वादि विशिष्टरूपाभिधायशक्तिद्वयानुग्रहलाभेन परमेश्वरपरत्वस्यौत्सर्गिकतया प्रकरणोपपादयितुमपीडिता तस्मा त्सर्वत्र परमेश्वरस्य प्रतीतेः स्वतएवच तस्य निर्णायकत्वाच्च । अत्र पुंलिङ्गकान्तवचनान्त स्त्वसाधारण इतिचेत् तर्हि प्रातिपदिकमाधारण्य मनुज्ञात म्भवतीति यदुक्त न्तदज्ञानविल सितमेव । भिन्नाभिन्नशक्तिमतां शिवादिशब्दानां सारूप्येऽपि प्रातिपदिकानां विभिन्नत्वेन सारूप्यमात्रेण साधारण्याऽसिद्धेः ॥

अथ नारायणमहापुरुषादिशब्दाना मसाधारणत्वादिति यदसाधारण्य मभिमत न्तद् प्यभिमानमात्रमेव । तथाच विष्णुपुराणएव " ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवा न्यया " इति । " नारायणाख्यो भगवा न्ब्रह्मा लोकपितामह " इत्याद्यनेकप्रदेशेषु । कौर्मे "अवाप्य संज्ञां गोविन्दा त्पद्मयोनिः पितामहः" । इति प्रस्तुत्य "नारायणाख्यो भगवा न्यथा पूर्वं प्रजापतिः" इति । आश्वलायनस्मृतौ " तस्मादण्डा दभू त्स्रष्टा शिवात्मा चतुराननः । सर्व लोकस्य निर्माता ब्रह्मा विश्वसृजांपतिः । सवाप्सुशयनादेव शिवात्मा स्वेच्छया चिरं । नारायणाख्या मभज च्छक्तिरूप प्रजापतिः " इति । कूर्मपुराणे "ब्रह्मत्वब्रह्मणा वेदं जगतः प्रभवाप्यय" मिति ब्रह्माणंप्रस्तुत्य "आपो नारा इतिप्रोक्ता आपोवै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणस्मृत" इति नारायणपदस्यब्रह्मनिर्वचनात् । तत्रैव पुराणे । "नारा अप्ययनं यस्मा त्तेन नारायणस्मृत" इति नारायणपदस्य शिवपरत्वनिर्वचना त्तस्य विष्णुसाधारण्यभ्रांतं बहुपुराणनिर्धूनत्वात् ॥

अथ महापुरुषपदस्याऽपि क्वचिदपि नारायणनामत्वेनाऽनुशासनाभावात् । प्रयोग मात्रस्य गौतमस्मृतिपठितकृच्छ्रमंत्रेषु महापुरुषायेति शिवइव योगेनाप्युपपत्तेरितरस्याभिधानत्वात् । तथात्वेऽपि पृथक्पदयो रिह श्रावणेन तस्याश्रावणात् । अवयवार्थव्यवस्थितिसिद्धौ योगरूढिपद प्रतिपाद्यावयवार्थपरवाक्यस्याऽन्यत्राऽपि प्रयोगस्य दुर्वारत्वात् । अन्यथा पंकजादिशब्दानां योगरूढत्वादिना केवलयोगवादिनंप्र त्यन्यत्राऽपि प्रयोगप्रसंगस्यापादकोक्तौ मूकीभावस्य शरणी करणीयतेः । न व्यस्तयोः प्रकृते व्यस्तयोरपि । पृथक्पदयो रूढे रुपपादयितु मशक्यत्वात् । भवादिशिवनामाष्टकमध्येपठितस्य " अथाऽष्टमि र्नामभि " रित्यादि बोधायनसूत्र तन्नाम त्वेन व्यवहृतस्य पूज्यते य त्सुरै र्नित्यं महांश्चैव प्रमाणतः । धातु र्महेति पूजायां महादेव स्तत स्स्मृत " इति साम्बपुराणे तन्नामत्वेन निरुक्तस्य महच्छब्दस्य विशेष्यतया " पुरुष म्महान्त " मित्यत्र शिवपरत्वस्यैव प्रतीयते । एतच्च शिवाऽसाधारणनामत्वेनाऽनेकानुशासन पुरुषमहापुरुषादिशब्दानां शिवासाधारण्यानभ्युपगमः क्वचिद प्यनुक्तानां नारायणनामत्वे

तत्र । लिङ्गेन प्रकरणबाधो युक्तः । अनेन न्यायेन यत्र यत्र चेतनेऽचेतने वा

नाऽऽम्नातानां पुरुषमहापुरुषादिशब्दानां नारायणाऽसाधारण्याभ्युपगम इत्यपि परेषा मप्रामाणिकमतावलम्बमूलं स्वमतिपरीत्यमेवेति निराकृतम् ॥

अथ एकोपनिषत्स्थानां शिवादिशब्दानामिति यदुक्तं तदत्यन्ताऽनृतमेव । "ईशा वास्य मिदं सर्वं" मितीशावास्ये, "ईशानो भूतभव्य" स्येति कठोपनिषदि "शिवं मद्वैतं चतुर्थं मन्यन्ते" इति मांडूक्यादिषु चैव सर्वास्वपि निषत्सु श्रूयमाणत्वात् । नारायणमहापुरुषादिशब्दानां बहूपनिषत्स्थत्वादिति यदुक्तं तदपि तेषां शब्दानां विष्णवसाधारण्याभावस्य निरुक्तत्वेन भ्रान्तिमूलमेव । इयमन्त्रोपनिषत् नारायणपरीकर्तुं मशक्येति परेषामपि विदित मेव । अतएवाऽन्यत्र हठाभासैर्नारायणपरत्वं प्रतिज्ञाय "अजात इत्येवं कश्चिद्भीरुः प्रपद्यते" "रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्य" मिति मन्त्र मुपलक्ष्य दक्षिणमुखं शिवासाधारणं नारायणस्य दुर्वचमिति निश्चित्य छिद्रान्तराळ वृश्चिकदष्ट चोरन्यायेन मौनावलम्बनेन पलायनस्यैव शरणीकृतत्वात् । अथाऽपि यत् योगेन विष्णुनामसहस्रपाठमात्रेणच हरशिवशम्भुमहेश्वरादि 'शिवसाधारणश्रुतीनां' नारायणपरत्वं प्रत्यज्ञासीत् । तद प्यगतिकमेवेति निरस्तम् । योगरूढिरूपशक्तिद्वयानुग्रहसम्भवति योगशक्तिमात्रग्रहणस्याऽन्याय्यत्वात् । पदार्थनिर्णये स्तुत्यर्थत्वगन्धरहितानां लौकिकवैदसाधारणनामपरिगणनैकस्वार्थप्रवृत्ताना मभिधानकोशस्मृतीनामेव प्रमाणतया स्तुवन्नामसहस्रेणेति स्तुत्यर्थं प्रवृत्तस्य सहस्रनामस्तवस्य शक्तिग्राहकत्वाभावात् । नामसहस्रमध्येऽनेकशोऽनन्तनामपरिगणनदर्शनेन तेषां स्वद्वाचित्वे प्रमाणाभावात् । अन्यथा भारतलैङ्गादिपुराणादिपठित शिवनामसहस्रान्तर्भूतविष्णुनामाऽसम्भवात् । "नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नाऽत्र कार्या विचारणे"ति हरिवंशे कैलासयात्रायां शिववचनेन सर्वेषां विष्णुनाम्ना मन्येषा श्चोत्कृष्टनाम्नां हिमकरनाम्नां घनसारनामत्ववत् शिवनामत्वसिद्धेश्च क्वचिदपि नाम्ना विष्णुपरत्वनिर्णयएव लुप्येत । गणपतिहनुमदादिनामसहस्रस्तवादिष्वपि सकलदेवनामपरिगणनदर्शनेन सर्वासामपि श्रुतीना न्तत्तत्परत्वापत्तेश्च । "सर्वाणि ह वा एतस्य नामधेया" नीत्याश्वलायनस्मरणाच्च । अभिधानश्रुत्या शिवविषयत्वसिद्ध्या — परेषां मौनमेव शरणीकरणीय स्यादिति दिक् ॥

अथ "यमन्त स्समुद्रे कवयो वयन्ति विद्युतः पुरुषादधी"ति समुद्रान्तर्वर्तिविद्युद्वर्ण पुरुषप्रतिपादकत्वा "दम्भस्यपारे" इत्यनुवाको नारायणपरइति यदुक्तं तदप्यसत् । "लिङ्गमूर्तिं महाज्वालामालासंवृत मव्ययम् । लिङ्गस्य मध्ये रुचिरं चन्द्रशेखरविग्रहम् । व्योममार्गे तथा लिङ्गं ब्रह्माणं हंसरूपिणं । विष्णुं वराहरूपेण लिङ्गस्याधस्त्वधोमुखं । ब्रह्माणं दक्षिणे तस्य कृताञ्जलिपुटं स्थितं । वामे विष्णुं महाबाहुं कृताञ्जलिपुटं" तथा । "मध्ये लिङ्गं महाघोरं

जगत्कारणत्वादिकं श्रूयते देवादिषु प्रमाणवचनेषु तत्र तत्र तदात्मा

महादेव स्मर्यते । अस्मात् प्रदेशात् स सर्वसिद्धिमवाप्नुयात्" इति पुराणवचनात् महालिङ्गस्यैव जगत्सर्गहेतुत्वेन सर्वोत्कृष्टत्वप्रतिपादनात् ।

हिरण्यगर्भाद्यष्टकस्य च 'य ईशे अस्य द्विपदश्चतुष्पदः" इति "एतावन्तो वै पशवो द्विपदश्चतुष्पदः" इति श्रुत्यन्तरप्रतिपादित द्विपाच्चतुष्पात्पशुपतित्वरूप शिवासाधारणलिङ्ग विन्यासेन शिवपरत्वावगमात् ॥

ननूत्तरनारायणं नारायणासाधारणस्य लक्ष्मीपतेः श्रुतत्वात् तदेकवाक्यतयाऽस्यानुवाकस्याऽपि नारायणपरत्वं सिद्धमिति चेन्न । "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति हैमवतीवाच्योमापतित्वलिङ्गस्य प्रथमश्रुतत्वेन लक्ष्मीपतित्वलिङ्गस्य तदनुसारेण नेयत्वात् ।

लक्ष्मीशब्दस्याऽपि वायुसंहितायां "तत्र माहेश्वरी लक्ष्म्या मूर्तिः मूर्तिमतः प्रभोः" इत्यारभ्य "तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी परा । महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा" । इति श्रुतायां माहेश्वरशक्तिरूपायां परशक्तिशरीरजायां वृत्त्युपपत्तेः "श्रीश्च लक्ष्मीश्च पत्न्यौ" इति वाजसनेयिपाठेऽपि श्रीशब्दस्य समानप्रकरणगत हैमवती श्रुत्यनुरोधेन "श्रियं लक्ष्मीमौपलामम्बिकां गा"मित्यायुष्यसूक्ते अम्बिकायामेव प्रयोगदर्शनात् तदन्यथा नेयत्वस्य दुरुपपादत्वात् ।

न च ह्रीशब्दस्यैव लक्ष्म्यां वृत्तिरभ्युपेयतइति वाच्यं हैमवत्यां कमलायां प्रयोगादर्शनेन वैपरीत्यशङ्काया अनवकाशात् । "अम्भस्यपारे" इत्यनुवाके "पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि" "एषो ह देवः प्रदिशोऽनु सर्वाः, विश्वतश्चक्षुरुत विश्वतोमुखः" इत्यादीनां मन्त्रोपनिषदथर्वशिरस्समाम्नातानां मन्त्राणां प्रत्यभिज्ञानात् "प्रजापतिश्चरति गर्भे अन्तः" इत्यत्र प्रजापतिशब्दस्य "यस्मात् पाति प्रजाः सर्वाः प्रजापतिरिति स्मृतः । देवेषु च महान् देवो महादेव इति स्मृतः" । इति लैङ्गे शिवनामसु निर्वचनदर्शनेन शिव एव प्रवृत्तेः स्पष्टत्वात् । अथाऽत्र विष्णुस्मृतौ भगवत्समाराधने "हिरण्यगर्भ" इत्यष्टाभिर्हविर्निवेदने विनियोगादस्याऽष्टकस्य नारायणपरत्वमिति यदुक्तं तदप्ययुक्तम् ॥

"हिरण्यगर्भः समवर्तताग्रे" इत्याघारमाघारयतीति वायव्यपशौ वैन्द्रे द्वितीयाघारे विनियोगस्य नारायणाराधने विनियोगमात्रेण श्रुतिलिङ्गादिसिद्धशिवपरत्वाक्षतेः । हिरण्यगर्भशब्दस्याऽपि "हिरण्यरेता हुतभुगण्डोऽभूदस्य गर्भगः । तस्माद्धिरण्यगर्भोऽसौ पुराणेऽस्मिन्निरुच्यते" इति निर्वचनेन शिवपरत्वात् । एतेन "हिरण्यगर्भः शत्रुघ्नः" इति भगवन्नामसहस्रपाठेन हिरण्यगर्भशब्दवाच्यो नारायणइति स्थितमिति यदुक्तं तदपि निरस्तम् । नामसहस्र

शिवएव वाच्यः । यत्र यत्र पुरुषार्थविकारज्ञत्वादिको धर्म स्तत्र शिवस्य

स्तवस्य पदार्थविषयनिर्णायकत्वाभावस्य पुरस्तान्निरूपितत्वात् । अत्र श्रुतेन शत्रुघ्नेति नाम्ना नामिन श्शत्रुमित्रादियुक्ततया देवसामान्यता मृगीकुर्वता मंश्रुत्य दुर्गीकृतमिति देवता मन्तर्थान्तर मापन्नमिति च यत्किञ्चि देतत् ।

अथाऽत्र यद्यपि "सूर्या चन्द्रमसौ धाता यथापूर्व मकल्पय" दित्यत्र धातृशब्द नारायणपरं प्रतिज्ञाय "विश्वाधिको रुद्र इति श्रवणात् । "स पर स्स महेश्वर" इत्युप संहारे श्रुतत्वाच्च धातृशब्दस्याऽपि रुद्रपरत्व न्याय्यमि त्याशङ्क्य उपक्रमस्थतया धातृशब्दस्य रूढिपरित्यागे को हेतु. रुद्रमहेश्वरपदश्रुतिद्वय मितिचे त्तथाऽपि नबाधकम् । तुल्यबलत्वात् धातृपदश्रुति रेका प्युपक्रमस्थतया अनुगृहीता रुद्रमहेश्वरश्रुत्यो रनेकत्वे प्युपक्रमविरोधा दुर्बलत्व मित्यादि यत्प्रजल्पितं तदपि स्वपक्षे श्रुतिसमन्वयासिद्धिकल्पितत्वमनस्यमूलमेव । धातृपदस्य नारायणे रूढेरभावात् धातृपदस्य विधातृपरत्वपक्षेऽपि उपसंहारगतप्रमाणाना मनेकत्वे उपक्रमबाधकत्वस्य आकाशोऽर्थान्तरत्वा दित्यधिकरणे निर्णीतत्वात् । तथाहि — "आकाशो हवै ना" मेत्यादिवाक्यस्य उपक्रमस्थाभ्या माकाशश्रुतिप्रसिद्धिलिङ्गाभ्यां पाश्चात्यानामपि नामरूपनिर्वोढृत्व तदर्थान्तरत्वाऽमृतत्वलिङ्गब्रह्मात्मश्रुतीनां भूय स्तया प्राबल्या त्तदनुरोधे सोपक्रमप्राप्तमपि भूताकाशपरत्व मपोह्य ब्रह्मपरत्वं व्यवस्थापितम् । तस्मा दौपसंहारिकानेकरुद्रमहेश्वरश्रुत्यनुरोधेन धातृपद योगेन शिवपरतयैव नेयमिति सिद्धम् ॥

नन्वत्र "सहस्रशीर्ष न्देव" मित्यनुवाके नारायणपरम्ब्रह्मेत्यादिना नारायणस्य परब्रह्मत्वं श्रुतमितिचे त्तस्य "दीपो ज्योतिः परम्ब्र"ह्मेतिव दुपासकस्तुतिवादत्वेन न तेन नारायणस्य परब्रह्मत्वं सिध्यति — तथाहि — तत्र "दह्रं विपापं परवेश्मभूतं यत्पुण्ड रीकं पुरमध्यसंस्थम् । तत्राऽपि दह्रं गगनं विशोक स्तस्मि न्यदन्त स्तदुपासितव्य" मिति दह्रोपासनां विधाय "यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः पर स्स महेश्वर" इत्युपास्य महेश्वरशब्दवाच्यमेव प्रतिपादयति । नचाऽस्यानिषद् श्शिवोपासनाविधायकत्वेऽस्या नारायणसंज्ञा न सङ्गच्छत इतिशङ्क्यम् । नारायणाभ्यर्पिदृष्ट त्वेन वामदेव्यं सामेतिवत् तत्संज्ञकत्वेनाऽविरोधात् ॥

ननु नारायणए वोपास्यो भवति हृदय न्त्वन्येषामेवोपासकानां भविष्यतीतिचे दुच्यते । नारायणप्रकरणे "अनन्त मव्ययं कविं समुद्रेन्तं विश्वशम्भुव" मिति नारायणस्य प्रशंसा मनु "पद्मकोशप्रतीकाश" मित्यादिना निगदितं हृदयं नारायणस्यैव भवितु मर्हति ।

परब्रह्मण शरीरं चिदाकाशस्वरूपं बोध्यं प्रष्टव्यमिति

पूर्वानुवाकेन "दह्र" मित्यादिना श्रुत मुपासनाविषयन्तु" "सन्न्यासयोगा द्यतय शुद्ध सत्त्वा" इति सन्न्यासप्रकरणे दृष्ट हृदय यतिसम्बन्धि । यथा दर्शपूर्णमासप्रकरणे "समिधो यज" तीति वाक्यविहिता याजा दर्शपूर्णमासाङ्गा. यथाच "हृदयस्याऽग्रेऽवद्य" ती त्यत्र निर्दिष्ट हृदय प्राकृप्रस्तुतस्य पशोरेव । न तु यजमानस्य । तथा "पद्मकोशप्रतीकाश" मित्यादिना वर्ण्यमान हृदयपुण्डरीक मप्यनन्तरमभिधास्यमानस्योपासकस्य न भवति किन्तु प्राक्शब्दमभिधा पितस्य नारायणस्यैवेति युक्तम ॥

ननु नारायण स्योपासकत्वे 'नारायणपरम्ब्र' इत्यादिवाक्येन तस्य परब्रह्मत्वा द्युपास्य धर्माभिधान नसङ्गच्छत इतिचेन्न । अस्य वाक्य स्योपासकस्तुतिवादत्वेनाऽर्थवादत्वात् । नारायणस्य ध्यातृध्येयविवेकरहितसमाध्यवस्थाया परब्रह्मणा शिवे नैक्यानुसन्धाना द्गरुड भावनया गरुड मात्मान मन्यमानस्य मन्त्रिणइव परब्रह्मत्वादि धर्माणां सुसङ्गतत्वात् । अत एव "नारायण स्महाज्ञेय" मिति विशेषणमपि तस्य महाज्ञानित्वमेव व्यञ्जय न्नुक्तार्थं परिपुष्णाती त्यलम् ॥

ननु यद्येवं "सब्रह्मा सशिव स्सहरि स्सेन्द्र स्सोऽक्षर" इत्यादिवाक्येन ब्रह्मशिवादीना मुपास्यविभूतित्वाम्नानेनाऽत्रोपास्य शिवादन्य इत्येव प्रतीयते । तस्य शिवत्वे स शिव इति विभूतिषु परिगणनायोगादितिचे दुच्यते । तत्र हरिब्रह्मादिप्रायपाठानुरोधेन शिवपदस्य कालरुद्रवाचित्वाऽवगमात् । अत्र महर्गिरिति हरे स्तस्य विभूतित्वाम्नानेन तस्योपास्य त्वाऽसम्भवे तोपासकत्वावगमायादपि नारायणोपनिषदि दहरविद्योपास्य शिवएवेति सिध्यति ।

किञ्च – अत्र शिवस्यैवोपास्यत्वा दुपास्यरूपसमर्पकम् "ऋतगुं सत्य परम्ब्रह्म पुरुषं कृष्णपिङ्गल" मित्यादिमन्त्र श्रूयते । नारायण स्योपास्यत्वे तस्यैव हि रूपं समर्पणीयम् न तत्किमपि श्रूयते — तत श्चाऽत्रोपास्य शिवएवेति च द्रष्टव्य. ॥

किञ्च — इय हि निषदुपक्रमे दहरविद्यां तदनु अन्तरादित्यविद्यां ततो गायत्री विद्याञ्च प्रकाशयन्ती विद्याऽत्र यस्यैकत्रैवोपसंहार स्पष्टीकरोति । अत्रैवाऽन्तरादित्यविद्यायां श्रूयमाणा "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमा पतये पशुपतये नम" इत्यादिमन्त्रा: उमापतिमेव तत्र ध्येय मावेदयन्त स्ते कथमिव दहरविद्यायां श्रीपति मुपास्य मनुमन्येरन् । अतएव प्रकृतोपनिष दुदीरितविद्यात्रितये प्युपास्य रूपसमर्पणाय प्रवृत्तो "ऋतगुं सत्य म्पर ब्र ह्मेति मन्त्रः देवतान्तर मुपास्यपदा दुत्सारयन् "शिव एको ध्येय शिवंकर स्सर्वमन्य त्परित्य" ज्येत्यथर्वशिखासूक्तिं प्रोद्बलयति ॥

निपुणं निरूप्यमिति सर्वं समञ्जसमेव ॥

इति सर्वव्याख्यानाधिकरणम् २९

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये

प्रथमाध्यायस्य चतुर्थः पादः



किञ्च यद्यत्र श्रीपते रूपस्यान्य मिष्येत नहि तदीयमेवरूप मुपास्यरूपसमर्पणा योपदिश्येत नहि तदुपदिश्यते । किन्तु कृष्णपिङ्गलत्वविरूपाक्षत्वादियुतं शैवमेवरूप मुपदिश्यते । तस्मा त्सर्वत्र सर्वथा शिवएवोपास्य इति वज्रलेपः ॥

अपिचाऽत्र उपनिषदि "सद्योजातं प्रपद्या"मीत्यादि पञ्चब्रह्ममन्त्रमहिनम "ऊर्ध्वाय नमः, ऊर्ध्वलिङ्गाय नमः" इत्यादिना परैः दुर्वचं दुर्ग्रहं दुश्श्रवञ्च लिङ्गसूक्तमपि श्रूयते । अतोऽपीयं शैवी न कथमपि परैः स्वायत्तीकर्तुंशक्येति ध्रुवम् ॥

अथ पुंसूक्तं नारायणपरमेवेति यः परकीयोऽभिमान स्तदुन्मादन मावश्यकम् । ननु मुद्गलोपनिषदि पुंसूक्तं विष्णुपरतया व्याख्यातम् । श्रुतिनिश्चितस्यैवाऽर्थस्य यथार्थतया पुन स्तदर्थविचारोऽनर्थक इतिचे न्न । क्वचि त्पुंसूक्तस्य विष्णुपूजादिषु विनियुक्ततया विनियुक्तार्थप्रकाशनेन मुद्गलोपनिषद्विवरणस्य चरितार्थत्वेन श्रुतिलिङ्गाद्यवगमितयथार्थबाधक त्वाऽभावात् । अन्यथा "अपशवो वा अन्ये गो अश्वेभ्यः पशवो वै गो अश्वा" इति श्रुत्यैव गवा मश्वानाञ्च पशुपदार्थत्वेन विवृततया तादृशार्थग्रहणे "अग्नीषोमीय म्पशु मालभे" तेत्यत्र भूया नुपप्लव आपद्येत । पुंसूक्तस्य विनियोगानुसारेणाऽर्थान्तराणां श्रुत्यादि ष्वुपलम्भेऽपि "नान्यः पन्था अयनाय विद्यते" इति तदीयोक्त्या तस्यैकत्रैव तात्पर्यं विद्यतइ त्यवगम्यते । ततश्च तस्य श्रुतिलिङ्गानुसारेण यथार्थप्रकाशन मावश्यकमेव । अत्र "उतामृतत्व स्येशानः" इतीशानश्रुतिसूक्तं शिवपरतया निर्धारयति ॥

ननु — अमृतत्वस्ये तीशितव्योपादाना त्तदैश्वर्यरूपयौगिकार्थविवक्षया प्रयुक्त मीशानपदम् । न रूढ्या शिवं प्रतिपादयितुं शक मितिचे न्न । ईशितव्यानुपादानइव तदुपादाने प्यवयवशक्त्या यौगिकार्थं प्रतिपादयतएव तस्य समुदायशक्त्या शिवस्याऽपि प्रति पादकत्व स्यौत्सर्गिकस्य दुर्वारत्वा दिह केवलयौगिकत्वस्याऽसिद्धेः । अवयवार्थप्रतिसम्बन्धि

(३४१) * दुष्ट निग्रहमिति अत एव क्रोधोपि गुणायते, निदानज्ञस्य भिषजः स्रणे हिंसां प्रयुं जतः नकिंचिदपि नैघृण्यं घृणैवात्र प्रयोजिकेतिन्यायात् ॥

नोऽनुपादानएव समुदायशक्त्युन्मेषादिति कस्यचि द्व्युत्पत्तिसिद्धनियमस्याऽभावात् । अतएव "शब्दादेव प्रमित" इत्यधिकरणे "अङ्गुष्ठमात्र पुरुष" इति मन्त्रप्रतिपाद्यपुरुषस्य "ईशानो भूतभव्य" स्येतीशितव्यस्थोपादानेपीशानश्रुत्या परब्रह्मत्वं भगवद्बादरायणेन निर्णीतम् । अन्यथा तत्राऽपीशानशब्दा दैश्वर्यरूपपरमात्मलिङ्गस्यैव प्रतीत्यापत्त्या तदभिधानश्रुतिरूपशब्दा न्निर्णया नतिष्ठेत । नच तत्र लिङ्गादेव निर्णयोऽस्त्विति शङ्क्यम् । प्रथमश्रुतस्याऽल्पपरिमाण रूपलिङ्गस्य विरोधिना चरमश्रुतेन लिङ्गमात्रेण निर्णयस्याऽयुक्तत्वात् । ततोऽल्पपरिमाणत्वं जीवलिङ्गमेव तमवतीतिशङ्क्यम् । तस्य जीवलिङ्गत्वाऽभावे पूर्वपक्षबीजस्यैवाभावेनाऽधिकरण स्यानारम्भणीयत्वापत्तेः । पूर्वपि तस्मिन्नधिकरणे ईशानशब्दस्य स्वाभिमतं तत्वं शक्तिपरत्वाभि मानेनैव नेश्वरमस्वरसिद्धलिङ्गान्निर्णयः । किन्त्वीश्वरवाचिशब्दादेवे त्येवसूत्राऽभिप्रायइ त्युक्तत्वाच्च । तस्मा दङ्गुष्ठमन्त्रस्यैव पुरुषमू क्तस्याऽपीशानश्रुतिसमर्पिते परब्रह्मणि शिवे पर्यवसानमेव युक्तम् ॥

ननूपक्रमे "सहस्रशीर्षा पुरुष" इति नारायणाऽसाधारणः पुरुषशब्द श्श्रूयते । पुरुषशब्दोहि "पुरसंज्ञे शरीरेहि शयना त्पुरुषो हरिः" इत्यादिना हरेरभिधानतया पुराणेषु निरुक्तः । तस्मा दुपक्रमगतपुरुषश्रुत्या नारायणपरमेवसूक्त मितिचेन्न । पुरुषो हवै नारा यणोऽकामय" तेत्यादौ पुरुषशब्दस्य नारायणे प्रयोगस्य विद्यमानत्वेऽपि "पुरुषा वात्म मानवा" वित्यभिधानकोशस्मृते लौकिकवैदिकप्रयोगबाहुल्याच्च । आत्मसामान्ये तस्यशक्ते स्सिद्धत्वेन ततएव तदुपपत्तिसिद्धया न पृथग्विष्णौ तस्यशक्ति कल्पयितुंयुज्यते बर्हिराज्याधि करणविरोधात् । तत्रहि म्लेच्छ तृणघृतादिजातिमात्रे अर्थे ससंस्कृततृणादावेव प्रयुज्यमानानां बर्हिराज्यादिशब्दानां यवराहाधिकरणन्यायेन शास्त्रस्थप्रसिद्ध बलवत्त्वा त्संस्कारनिमित्तकत्व माशङ्क्य शास्त्रस्यप्रयोगस्य जात्यव्यभिचारात् जातिमात्रव्यवहारस्य संस्कारयुक्तेऽव्यभिचारा दव्यभिचारिजातिशक्तिमादाय सर्वेषामपि प्रयोगाणा मुपपन्नत्वेन विरोधाऽभावा ज्जातिवाचि नैवेति सिद्धान्तितम् । एवञ्च यदा म्लेच्छगतयाऽपि सामान्यप्रसिद्ध्या सामान्यशक्तिसिद्धौ तद्द्वारैवार्यव्यवहारसिद्धिविशेषपक्षभइति नविशेषशक्तिकल्पनं तदा का कथा प्रकृतविषये । इह सामान्यप्रसिद्धेर प्यार्यगतत्वेन दौर्बल्यशङ्कायाएवाऽनवकाशात् । न त्वेवमस्तु प्रयोगमात्र स्याऽन्यथासिद्धिः । तथाऽपि "पुरसंज्ञे शरीरेऽस्मिन् शयना त्पुरुषो हरिः" । इति पौराणि कानां तस्य तन्नामत्वेननिर्वचन मनन्यथासिद्धं विशिष्याऽपिशक्ति कल्पयतीतिचेन्न सामान्य शक्तस्याऽपि पुरुषशब्दस्य श्रुत्यादिषु कचि त्प्रकरणादिसामर्थ्या न्नारायणे पर्यवसान मस्ती त्येतावन्मात्रज्ञापनेन चरितार्थतया अर्थवादप्रधानपौराणिकनिर्वचनस्य चित्राधिकरणे स्तोत्र विशेषनामधेयत्वेन सिद्धस्य प्रष्टशब्दस्य कचि त्प्रष्ठेस्मतिष्ठत इत्यादौ तत्साधने स्यन्तरावावपि

लक्षणया प्रवृत्तिरस्तीति तन्निर्वहणेन चरितार्थस्य रथन्तरगतौ प्रवृत्तिनिमित्तप्रतिपादनपरस्य "आपोवा ऋत्विय मार्छन् तासां वायुः पृष्ठे व्यवर्तत" इत्यादेः श्रौतार्थवादस्येवाऽन्यथा सिद्धत्वेनाऽनन्यथासिद्धाभिधानकोश स्मृत्यादिक्लृप्तशक्त्या उपपादनीयप्रयोगविषये शक्त्यन्तर कल्पकत्वायोगात् । एवं श्रौतार्थवादस्यैव निरोधशक्तिकल्पकत्वाऽसिद्धौ किमुत पौराणि कार्थवादनिर्वचनस्य । एतेन तथा पुरुषशब्दोऽयं वासुदेवेऽवस्थितः । भगवानितिशब्दोऽयं तथा पुरुषइत्यपि निरुपाधौच वर्तते । वासुदेवे सनातने इत्यादीनि परोद्धृतानि पुरुषशब्दस्य विष्णा वसाधारण्यौत्सर्गिकत्वप्रतिपादनच्छायारत्नानि पौराणिकवचनानि व्याख्यातानि । नन्वेवमपि आरुणकेतुके "पूर्वमेवाऽहमिहासम्" मिति कूर्माकृतिलिङ्गोपस्थापितस्य नारायणस्य वचनं प्रदर्श्य "तत्पुरुषस्य पुरुषत्व" मिति तदर्थं तत्र पुरुषशब्दस्य प्रवृत्तिनिमित्त मभिधाय "सहस्रशीर्षा पुरुष स्सहस्राक्ष स्सहस्रपात् भूत्वोदतिष्ठ" दितिपाठा त्पुरुषशब्दस्य नारायणपरत्वं निर्णीयत इतिचेन्न । आरुणकेतुके "कूर्मःपुरुषोभूत्वोदतिष्ठ" दि त्यपुरुषस्य पुरुषभावापत्तिप्रतिपादनेन सहस्रशीर्षेत्यादिमन्त्रस्यपुरुषपद स्याऽनन्तरवाक्यप्रतिपन्न प्रवृत्तिनिमित्तकत्वव्यतिरेकस्याऽवगमा यात् । अन्यथा तेन प्रवृत्तिनिमित्तेन प्रागपि तस्य पुरुषशब्दाभिलप्यतया पुरुषोभूत्वे त्युक्ति विरोधापत्तेः ॥

किञ्च पुरुषशब्दस्य "सवै शरीरी प्रथमः सवै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत" । इति चतुर्मुखे प्यनेकपुराणेषु प्रयोगदर्शनेन — एव मनेकव्याशक्त्या साधारणत्वा न्न पुरुषश्रुत्या देवताविशेषनिर्णय स्सिद्ध्यति । यदीह ततो निर्णयस्स्या त्तर्हि "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते । 'य एषोऽक्षिपुरुषो दृश्यते । दिव्यो ह्यमूर्तः पुरुषःपरात्परं पुरिशय पुरुष मीक्षिते" ; "अङ्गुष्ठमात्रः पुरुषो मध्यआत्मनि तिष्ठति । इत्यादि श्रुतीनां परमते पुरुषश्रुत्यैव ब्रह्मपरत्वसिद्धौ "अन्त स्तद्धर्मोपदेशात् , आन्तर उपपत्तेः, अदृश्यत्वादिगुणको धर्मोक्तेः, ईक्षतिकर्मव्यपदेशा त्सः , शब्दादेवप्रमित" इति तद्विचारसूत्रा रम्भो व्यर्थस्स्यात् । कथञ्चि त्तदारम्भसमर्थनेऽपि धर्मोपदेशा दित्यादिना लिङ्गैः ब्रह्मपरत्व निर्णयोऽसङ्गतएवस्यात् । प्रबलश्रुतिसम्भवे ता मुपेक्ष्य लिङ्गोपन्यास स्याऽनुचितत्वात् । तस्मा द्विशेषशक्तिसम्भावनया नारायणपरत्वकल्पन मसमञ्जसमेव । एतेन अन्तरादित्यविद्याया म्पुरुष शब्देन हिरण्मयत्वविशेषणेनेति । मनोमयत्व भारूपत्व प्रत्यभिज्ञापितैः विद्युद्वर्णहिरण्मयपुरुष पदै रिति । अक्ष्यन्तः परमपुरुषः पुरुषशब्दवाच्यत्वा दित्यादिना पुरुषशब्देन परमात्मनिर्णय स्सर्वोऽपि निरस्तएव ॥

ननु पुरुषशब्दस्य बर्हिराज्याधिकरणन्यायेन देवताविशेषे शक्ते रलाभेऽपि पुरुषशब्दे शरीरेऽस्मिन् शयना त्पुरुषो हरि रित्यादि पौराणिकव्यवहारा न्नारायणे शक्ति रङ्गीक्रियत

इतिचेन्न । पौराणिका द्व्यवहारा त्स्त्रौतव्यवहारस्य गरीयस्त्वेन "पुरुषोऽपि रुद्रः" इत्यादिश्रौत व्यवहारा त्परशिवएव तस्य विशेषशक्तिरिति सिद्धं ॥

ननु आरण्यकेनुक्तं हिरण्यगर्भप्रति "पूर्णमेवाऽहं मिहासम" इति नारायणोक्त्या तत्पुरुषस्य पुरुषत्वमिति निर्वचनेनच श्रौतव्यवहारेणाऽपि पुरुषपदस्य नारायणपरत्वं सिद्धमितिचेन्न । तस्मा द्धिरण्यगर्भविषयकप्रतिपादितोपाधिना नारायणवाचकत्वेऽपि पूर्णत्वोपाधिना तत्पदस्य शिवपरत्वसिद्धेः । तथाहि — यत्र कर्मप्रयोगोवा यज्ञप्रयोगोवा तत्र पुरुषं चिन्तयन् पुरुष सूक्तं ब्रूयात् । पूर्णत्वा त्पुरुष इति विज्ञायत इति वाधूलवचनेन "पुरुषो वै रुद्रः" इतिश्रुत्युपबृंहणरूपेण "पुरुषोनाम सम्पूर्ण शिवः स्मृत्यादिलक्षणः । मात्स्यमूर्तिधरो नाऽन्यो ब्रह्मोऽसौ विष्णुरेवहि" । इति पुराणवचनेन "वृक्षइव स्तब्धो दिवि तिष्ठत्येक स्तेनेदं पूर्ण पुरुषेण सर्व" मितिश्रुत्या । "ईशो वृक्षइव स्तब्धो य एको दिवि तिष्ठति । तेनेदं मखिलं पूर्णं पुरुषेण महात्मना" । इति पुराणवचनोपबृंहितेन पूर्णत्वोपाधिना शिवपरत्वाऽवगमात् । "पुरुषएवेदं सर्व" मितिवचनस्य सर्वोह्येष रुद्रइति विवरणेनच पूर्णत्वोपाधिक पुरुषशब्दस्य शिवैकान्तिक त्वाऽवगमाच्च । अतएव "पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि । पुरुष कृष्णपिङ्गलम् । त मीशानं पुरुषं नेत्र मीक्षध्व" मित्यादिना पुरुषशब्दविषयस्य श्रौतव्यवहारस्य शिवएव भूयस श्श्रूयमाणत्वा द्देवं नारायणेऽभावाच्च एतदेवाऽभिप्रेत्य "वेदान्तेषु च माहु रेकपुरुष" मिति वेदान्तवाक्यगतपुरुषशब्दवाच्यत्वं शिवैकान्तिकमि त्यभियुक्तव्यवहाराच्च कारणवाक्येषु "परात्परं पुरुष पुरिशयं पुरुष मीक्षते" इत्याद्युपास्यविषयवाक्येषुच श्रूयमाणं पुरुषपदं शिवासाधारणमिति सिद्धम् । ततश्च पुरुषसूक्तस्यापि सूक्तस्य शिवपरत्वमेवाऽवसायत इति विदितम् ॥

अथ य न्नारायणपूजायां विनियोगेनाऽस्य नारायणपरत्व मभिमन्यते तदपि मृगतृष्णाय माणमेव । "यजे त्पुरुषसूक्तेन धनद मृक्षरूपिण" मित्यादिना कुबेरपूजायां शिवाराधनेऽपि विनियुक्तत्वा देवच्च पुरुषसूक्तं शिवपरमेवेति वक्तव्यः । एतेन य त्पुरुषसूक्तस्य हरिपरत्वाभि मानेन तत्प्रत्यभिज्ञया मन्त्रोपनिषदादीनां नारायणपरत्ववाद स्सगर्भस्रावं निरस्तः ॥

अथ — यत् कारणप्रकरणश्रुतानां ब्रह्मात्मादिसामान्यशब्दानां छागपशुन्यायेन नारायणपरत्वं प्रकल्प्यते परैः निरस्तसाधारण्य नारायणपदविषये "निश्चयं या न्त्यबाधं सङ्कोचाद्या स्समानप्रकरणपठिता श्शङ्कितान्यार्थशब्दा" इति तदपि नारायणपदस्य पुरस्ता च्चतुराननादिसाधारण्यप्रतिपादनेन निरस्तमेव ॥

अथवा उपनिषत्सु यत्रक्वचि न्नारायणनाम्नि श्रुतेऽपि कुत्राऽपि प्रसिद्धश्रुतौ तदीयरूप विशेषस्याऽप्रदर्शितत्वात् । "उमासहाय म्परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्" ।

"ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्ष" मिति पारमेश्वरासाधारण रूपविशेष स्याऽभ्यासेन प्रदर्शितत्वाच्च औपनिषदस्य पुरुष स्योमासहायत्वादि स्वरूपलक्षण लक्षितत्वावगमेनासाधारणस्याऽपि कारणप्रकरणगतस्य नारायणपदस्य प्राणाकाशादिपदवत् स्येव "आकाश स्तल्लिङ्गा" दिति न्यायेन परमेश्वरपरत्वौचित्याच्च परेषां पाञ्चरात्रमन्त्रेण श्रुतिषु नावकाश इति विदितम् ॥

किञ्च परमेश्वरनामस्मरणचरणपरिचरणादिक स्परित्यजतामपि भर्गपदाङ्कितसावित्रीजपस्य "रुद्रोवा एष यदग्नि" रिति रुद्रमूर्तितया श्रुताग्न्युपासनस्याऽवार्यत्वात् – जाग्रद्दशायां शिव लिङ्गदर्शनादिकं यत्नतोविसृजतामपि सुषुप्तौ तदनुसन्धान स्याऽपरिहार्यत्वाच्चाऽनिष्टमवार्यमेव ॥

तथाहि – श्रुतयोहि सुषुप्तौ जीवस्य हार्दब्रह्मसम्पत्तिं विदधति। हार्दस्य ब्रह्मण. अङ्गुष्ठमात्रश्रुत्या अङ्गुष्ठमात्रस्य शिवलिङ्गरूपत्वावगमाया लिङ्गरूपत्व माम्नायते। अतएवच – हंसोपनिषत् "लिङ्ग सुषुप्ति" रिति चेतनस्य हृदयकुहरवासिशिवलिङ्गनिष्ठाया मुपलब्धायामेव सुषुप्तिं कण्ठरवेण विदधाति ॥

एतेन शिवद्वेषिभि र्हन्त सुषुप्तिरपि परित्यज्यैवेति कष्टमापतितम्। अन्यच्च "प्राणानां ग्रन्थि रसि रुद्र" इति श्रुतिः रुद्रद्वेषिभिः प्राणाअपि नपरिग्राह्या इति निवेदयतीति हन्त तेषा मनिष्टपरम्परा ॥—

इति सर्वव्याख्यानाधिकरणम् २९



इति श्रीनागलिङ्गशिवाराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां

श्रीशिवचिन्तामणिप्रभाख्यायां श्रीनीलकण्ठभगवत्पादीय

ब्रह्मसूत्रभाष्यव्याख्यायां प्रथमाध्यायस्य

चतुर्थः पादः



शिवाभ्यां नमः।

# श्रीनीलकण्ठीयब्रह्ममीमांसाभाष्य विषयसूचिनी

## अविरोधाख्ये द्वितीयाध्याये

### प्रथमपादे साङ्ख्यादितर्कविरोधाशङ्कया स्वपक्षसाधनम्।

पुष्ठ



### द्वितीयपादे साङ्ख्यादिमतानां दुष्टत्वप्रदर्शनम्।

## तृतीयपादे श्रुतिवाक्यानां परस्परविरोधपरिहारः



## चतुर्थपादे भौतिकोत्पत्तिश्रुतिविरोधपरिहारः

## साधनाख्ये तृतीयेऽध्याये.

### प्रथमपादे उपासकस्य नित्यत्वादियुक्तस्य जीवस्य गत्यागतिनिरूपणम्



### द्वितीयपादे जीवावस्थानिरूपणपूर्वकं ईश्वरस्य स्वरूपलक्षणोक्तिः



### तृतीये पादे उपासनाविशेषाणां गुणोपसंहारः

## चतुर्थे पादे विद्यासहकार्याश्रमधर्मादिनिरूपणम्

## फलाख्ये चतुर्थाध्याये

## प्रथमपादे उपासनाप्रकारनिरूपणम्



## द्वितीये पादे उपासकस्य विदुषः शरीरात् उत्क्रान्तिनिरूपणम्

## तृतीये पादे अर्चिरादिगतिनिरूपणम्



## चतुर्थे पादे मुक्तिस्वरूपनिरूपणम्

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाराध्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ द्वितीयाध्यायस्य

## प्रथमः पादः

---

अथ स्मृत्यधिकरणम् १

### स्मृत्यनवकाशदोषप्रसंङ्ग इतिचेन्नाऽन्यस्मृत्यनवकाशदोष प्रसंगात् ॥ २-१-१ ॥

अतीतेऽध्याये सच्चिदानंदस्वरूपे सर्वज्ञत्वसर्वशक्तित्वादिस्वरूप लक्षणे सकलजगज्जन्माद्युपलक्षणे सर्वविलक्षणे सर्वात्मनि विरूपाक्षत्वकृष्ण पिङ्गलत्वनीलकण्ठत्वादि विशिष्टलीलामङ्गळस्वरूपस्वभावे भवशिवशर्व महादेवपरमेश्वरशब्दादिमुख्यवाचके परमकारुणिके परब्रह्मणि शिवेनिखिल वेदान्तवाक्यानां तदनुगुणानां स्मृत्यादीनां च तात्पर्येण समन्वयोऽभिहितः- इदानी मनेनाऽध्यायेन तस्य समन्वयस्य वेदान्तविरुद्धस्मृतितर्कादिभि

---

अथ स्मृत्याधिकरणम्

प्रथमद्वितीययो रध्याययो स्सङ्गतिप्रदर्शनार्थम् प्रथमाध्यायप्रतिपाद्य मुपन्यस्य द्विती याध्याय मवतारयति — अतीत इति ॥

भगवता सूत्रकृता "अथातो ब्रह्मजिज्ञा"सेति परब्रह्मणो विचारं प्रतिज्ञाय तस्य 'जन्माद्यस्ययतः' इति जगज्जन्मादिकारणत्वं सच्चित्सुखमयविग्रहविशेषवत्त्वञ्च प्रदर्श्य तत्र वेदान्त तदुपबृंहणस्मृतीनाञ्च प्रामाण्यं प्रतिज्ञाय तत्समर्थनाय तेषां तात्पर्येण समन्वयः प्रथमाध्याये नोपपादितः । नतु शिवइ त्याशङ्कां निराकर्तु म्परब्रह्मणीति विशेषितम् : तस्य परब्रह्मत्व मुपपादयितुं ब्रह्मविषयाणां स्वरूपतटस्थलक्षणाना न्तत्रैव पर्यवसानं लीलामङ्गळस्वरूपस्वभाव

विरोधः परिह्रियते । प्रथमं साङ्ख्यस्मृतिविरोधः परिह्रियते । अस्मिन् सर्वत्र पूर्वोक्तः समन्वयो विषयः ।

इह वैदिकसमन्वयस्य सांख्यस्मृत्या संकोचोऽस्ति न वेति संदेहः । कथम् । ब्रह्मणो जगत्कारणत्वं वेदोऽभिधत्ते । कपिलस्मृतिः प्रधानस्य । कपिलो हि महातपस्वी । तत स्तद्वचनमपि प्रमाणमेव । वेदोऽपि भगवानखिल

---

इत्यन्तं विशेषणं दर्शितम् । उक्तसर्वविधलक्षणोपपादकतया शिवसर्वत्वादिविशेषणं कृतम् । शिवस्य स्वोपासनानुगुणसकलफलप्रदानोन्मुखस्वभावत्वेन उपासनाभिरतिविश्वासेन उपासकसौलभ्यं सूचयितुं परमकारुणिकइति विशेषितम् — तस्य समन्वय स्येति । समन्वये निरूपिते तस्य स्मृतितर्कादिभि र्विरोधेनाक्षेपस्य प्रवृत्त्या तत्समाधान स्यावश्यकतया समन्वयप्रतिपादक प्रथमाध्यायानन्तर्यं विरोधपरिहारकद्वितीयाध्याय स्याक्षेपिकी सङ्गति रिति भावः ॥

स्मृतितर्कादिभि रित्यादिशब्देन भूतभौतिकसृष्ट्यादिविषयस्मृतीनाम परस्परविरोधः परिगृह्यते । समन्वयस्य सम्भावितसकलविरोधपरिहारोऽध्यायार्थइ त्यध्यायार्थ स्यैकर्यमिति भावः । पादार्थविशेष स्त्वग्रे प्रदर्शयिष्यते । प्रथमाधिकरणार्थ माह — प्रथम मिति । अस्मि न्सर्वत्रेति । अस्मि न्नध्याये सर्वेष्वप्यधिकरणेषु प्रथमाध्यायनिरूपित स्समन्वयो विषयइत्यर्थः । इहेति — ब्रह्मविषयो वेदान्तवाक्यसमन्वयः प्रधानविषयया कपिलस्मृत्या बाध्यते वा नवेति संशय इत्यर्थः ॥

ननु वेदान्तेष्वपि "प्रधानक्षेत्रज्ञपति र्गुणेशः" "अक्षरा त्परतः परः" इत्यादौ प्रधानस्य प्रसिद्धत्वात् सेश्वरसांख्य ब्रह्मणः प्रसिद्धत्वाच्च विरोधस्याऽभावा न्नाऽत्रसंशय इत्याशङ्क्य परिहरति ब्रह्मण इति । वेदान्तेषु ब्रह्मणः कपिलस्मृतौ प्रधानस्यच जगत्कारणत्व कथनेन विरोधस्य स्फुटत्वा दस्ति संशयइत्यर्थः ॥

ननु श्रुतिस्मृत्यो र्विरोधे "औदुंबरीं स्पृष्ट्वोद्गायेत्" इतिश्रुत्या "औदुंबरी सर्वावेष्टयितव्ये" तिस्मृत्या बाध्यत्वस्य सिद्धत्वेन संशयोनास्ती त्याशङ्क्याह — कपिलोहि महा तपस्वीत्यादि । "ऋषिं प्रसूतं कपिलं य स्तमग्रे ज्ञानै र्बिभर्ति जायमानंच पश्येत्" इति श्रुत्या हिरण्यगर्भस्येव कपिलस्य जायमानावस्थायामेव परमेश्वरकटाक्षलब्धाऽप्रतिमज्ञानतया प्रसिद्धत्वेन तस्यस्मृति स्सर्वावेष्टनस्मृतिवत् बाधयोग्या नभवती त्याशयः । एवमुभयोरपि प्रामाण्याविशेषा त्किं केन बाध्यत इति संशयो दुर्वारइ त्याशयः । अथ पूर्वपक्षमुपपादयन्ति — तत्रेति । स्मृत्यनवकाशदोषप्रसङ्ग इतिचे दिति सूत्रखण्डं विवृणोति — साङ्ख्यस्मृते रनवकाशत्वेन

प्रमाणसार्वभौमः । स चाऽप्रामाण्यगन्धमपि न सहते । तदनयोः कस्य केन बाध इति संशयप्राप्तिः । तत्र साङ्ख्यस्मृते रनवकाशत्वेन प्रबलत्वात वेदस्य धर्मेण सावकाशतया दुर्बलत्वा दनवकाशया स्मृत्या वेदस्य संकोचो युक्त इतिचे द्भवति पूर्वपक्षी वयमपि नेति वदामः । कथम ? अन्यासां वेदाऽविरोधिनीनां मन्वादिस्मृत्यादीना मनवकाशदोषप्रसंगात । 'अप एव ससर्जाऽदौ तासु वीर्य मवासृजत' इत्यादिना 'हिरण्यगर्भं पश्यत जायमानम्' इत्यादिप्रत्यक्षश्रुतिसिद्धब्रह्मकारणत्ववादिनीभि र्मन्वादि स्मृतिभि स्तद्विरुद्धाभिधायिन्या अनुमेयश्रुतिमूलायाः साङ्ख्यस्मृतेरेव बाधः प्रामाणिकजनपरिग्राह्य इति ॥

---

प्रबलत्वा दिति । वेदस्य अग्निहोत्रादिधर्मविषयत्वेन सावकाशत्वेन कपिलस्मृते निरवका शत्वेनाऽपवादत्वा त्प्राबल्यमि त्याशयः ॥

एवञ्च कपिलस्मृत्या वेदांतवाक्यसिद्धस्य ब्रह्मकारणत्वस्यैव बाधो युक्त इति पूर्वपा द्याशयः । नान्यस्मृत्यनवकाशदोषप्रसङ्गा दिति सूत्रभागगतविवरणमुखेन सिद्धान्तयति — वयमपि नेति वदामइत्यादिना । सिद्धान्तं विवरीतुम् पृच्छति—कथ मिति । मन्वादीना मिति । "यद्वै किञ्च मनुरवद त्तद्भेषज" मिति श्रुत्या यत्किञ्चिदित्यस्यासमानार्थशब्देन भेषजमि त्युक्त्याच भ्रान्तिविप्रलिप्साराहित्य न्दर्शितम् । कपिलेतु ज्ञानमात्र मुक्तम् । तत्कालिपयविषय ज्ञानवत्त्वेनाऽपि सार्थकम् न सर्वथा भ्रन्तिं वारयति । आदिशब्देन याज्ञवल्क्यादयो गृह्यन्ते । तेऽपि बृहदारण्यकादिषु वेदान्तवेदितया प्रसिद्धाः ॥

ननु कपिलस्मृति रनवकाशतया प्रबला मन्वादयस्तु कर्मविधिभि स्सावकाशतया दुर्बला इतिचे न्न । कर्मणो ब्रह्माराधनरूपत्वेन तद्विधीनामपि ब्रह्मप्रधानत्वात् । कूर्मपुराणे व्यासगीतासु— स्मृत्युक्तसकलाचारनिरूपणानन्तरम् "इत्येष मानवो धर्मो युष्माक कथितो मया । महेश्व राराधनाय यज्ञयोगश्च शाश्वतः । इत्युपसंहारात् । एवञ्च साङ्ख्यस्मृत्युक्तप्रधानकारणत्वपरिग्रहे ब्रह्मकारणत्वोपकारकमन्वादिस्मृतीनाम् निरवकाशत्वप्रसङ्गात वैदिकमन्वाद्युपबृंहितः वेदान्त सिद्धो ब्रह्मकारणत्ववादएव परिग्राह्य इति सिद्धम् । "अपएव ससर्जादा" वित्यादीनि मनुस्मृति वचनानि संज्ञामूर्तिकॢप्त्यधिकरणे (२–४–१७) विवरिष्यन्ते । अथ योगप्रभावसाक्षात्कृत सकलवेदार्थतत्त्वदर्शी कपिलएव प्रामाणिकमूर्धन्यः नतु कर्मयोगव्यग्रा मन्वादय स्तस्मा त्कपिलस्मृत्यनुसारेणैव वेदान्तार्थनिर्णयो युक्तइ त्याशङ्कानिराकरणार्थ मुत्तरसूत्रम् ॥

## इतरेषांचाऽनुपलब्धेः ॥ २—१—२ ॥

इतरेषांच मन्वादीनां सर्वज्ञानां स्मृतिषु कपिलदृष्टस्य प्रधानकारणत्वादे रनुपलब्धेः प्रधानस्मृति रनागममूलैवेति वक्तुं युक्तम्। अतः साङ्ख्यस्मृत्या समन्वयस्य न संकोचः ॥

इति स्मृत्यधिकरणम्

---

अथ योगप्रत्युक्त्यधिकरणम् २

## एतेन योगः प्रत्युक्तः ॥ २—१—३ ॥

योगाङ्गप्रतिपादिनी हिरण्यगर्भस्मृतिरपि प्रधानकारणत्वमेववदति। तथाच यथा प्रधानकारणत्ववादिन्या सांख्यस्मृत्या विरोधात् वैदिक समन्वयस्य संकोचो नाभवत् तथाऽनयाऽपि स्मृत्या संकोचो न भवति

---

यदिकपिलस्मृत्युक्त प्रधानकारणवादो वेदमूलस्स्यात्तर्हि सर्वविदां मन्वादीनां स्मृतिषु स निबध्येत। तस्मात्सनवेदमूलः। अथ यदि कर्मानुष्ठानव्यग्राणां मन्वादीनाम् योगनिष्ठाभावेन नसार्वज्ञ्यंसिद्ध मितिचेत्कपिलस्यैव परमेश्वराराधनभूतकर्मनिष्ठाऽभावेन योगवैकल्येन सार्वज्ञ्यमसिद्धमित्याशयेन सूत्रं विवृणोति — इतरेषामिति। अधिकरणार्थ मुपसंहरति — अत इति ॥

इति स्मृत्यधिकरणम्

---

अथ योगप्रत्युक्त्यधिकरणम्

अतिदेशाधिकरणत्वा दस्य पूर्वाधिकरणव त्पूर्वोत्तरपक्षौ दर्शयति — योगाङ्गेत्यादिना। अत्राऽधिकाशङ्काभावा दिदमधिकरण मनारम्भणीयमित्याशयेनाशङ्कते — कथमिति।

योगाङ्गेत्यादिविशेषणेन सूचिता मधिकाशङ्कां दर्शयति — श्वेताश्वतरेति। श्वेताश्वतराणा मन्त्रोपनिषदुपक्रमा दापरिसमाप्ति शिवस्यैव जगत्कारणत्व जगदन्तर्यामित्व बन्धमोक्ष

भवति वेति संदेहे भवतीति वदामः। कथं ? श्वेताश्वतरोपनिषदि ब्रह्म साक्षात्कारहेतुतया प्रपञ्चिता योगविद्या ॥

तथाच सांख्यस्मृते रनुमेयस्मृतिमूलत्वेऽपि प्रत्यक्षश्रुतिमूलया हिरण्यगर्भस्मृत्या प्रधानकारणवादिन्या ब्रह्मकारणवादिन्या श्श्रुते स्समन्वयस्य संकोचो युक्त इति प्राप्ते ब्रूमः ॥

न योगस्मृत्या श्रुतिसमन्वयसंकोचः। तस्य योग श्चित्तवृत्ति निरोधः इत्यारभ्य वैदिकाष्टाङ्गयोगप्रतिपादने हि तात्पर्यं नाऽवैदिके प्रधानकारणवादेऽपि। यदि तत्राऽपि तात्पर्यं सांख्यस्मृतिव दस्याऽपि प्रत्याख्यानमेव न्याय्यम्। ततो हिरण्यगर्भस्मृत्याऽपि प्रधानकारणवादिन्या

हेतुत्वादि धर्मवैशिष्ट्य न्तस्मिन्नेव सकलवेदान्तसूक्तिपरमतात्पर्यपर्यवसानभूमिताञ्च प्रपञ्चेन प्रतिपादयति। तत्र द्वितीयाध्याये शिवसाक्षात्कारकारिणी शिवयोगविद्या "त्रिरुन्नतं स्थाप्य समं शरीर" मित्यादिना प्रदर्शिता। सैवहि योगशास्त्रे प्रपञ्च्यते। तत्रहि "ईश्वरप्रणिधानाद्वा" (पातं १ सू २३) क्लेशकर्मविपाकाशयै रपरामृष्टः पुरुषविशेष ईश्वरः। स पूर्वेषामपि गुरुः। तस्यवाचकः प्रणवः। इत्यादी नीश्वरविषयाणि सूत्राणि शिवपुराणगतपरमेश्वरप्रतिपादकवचना न्यनुसृत्यैव रचितानि। तथा शिवपुराणे वायुसंहितायाम् "नशिवस्याणवो बन्धः कार्मो मायेय एववा। प्राकृतो वाऽथवा बन्धः अहंकारात्मक स्तथा। नरागो नत्रविद्वेष श्शंभो रमिततेजसः। प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम्। उपदेष्टा सएवाद्यौ कालावच्छेदवर्तिनाम्। कालावच्छेदयुक्तानां गुरूणामप्यसौगुरुः। सर्वेषामेव सर्वेशः कालावच्छेदवर्जितः। प्रणवो वाचक स्तस्य शिवस्य परमात्मनः" इति। एवञ्च कापिलस्मृते निरीश्वरवादपोषकतया तया ब्रह्मकारणवादिन्या श्श्रुते स्संकोचस्याऽसमञ्जसत्वेऽपि सेश्वरवादबोधिन्या योगस्मृत्या ब्रह्मकारणवादिन्या श्श्रुते स्संकोच स्समञ्जसएवेतिभावः। अत्राऽधिकाशङ्कांतरमपि दर्शयति — सांख्यस्मृते रनुमेयश्रुतिमूलत्वेपीति। एवञ्च अनुमेयवेदमूलया दुर्बलया सांख्यस्मृत्या ब्रह्मकारणवादिन्या श्श्रुते स्संकोचस्याऽयुक्तत्वेऽपि श्वेताश्वतरादिश्रुतिमूलत्वेन प्रबलया योगस्मृत्या ब्रह्मकारणवादिन्या श्श्रुतेर्बाधो युक्तएवेतिभावः। सिद्धान्तयति — नेत्यादिना ॥

ब्रह्मकारणवादिश्रुतेस्समन्वयस्य संकोचइत्ययुक्तमेव ॥

इति योगप्रत्युक्त्यधिकरणम्

---

अथ न विलक्षणत्वाधिकरणम् ३

पुनरपि साङ्ख्यतर्कबाध्यतां समन्वयस्याशक्य परिहरति ॥

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २-१-४ ॥

यथा साङ्ख्यस्मृत्या समन्वयस्य बाधो नाऽस्ति, तथा तत्तर्केणाऽपि बाधोऽस्ति न वेति संशये पूर्वपक्षः प्रवर्तते ॥

---

अत्राऽयम्भावः योगशास्त्रस्य वैदिकाष्टाङ्गयोगप्रतिपादनएव तात्पर्यवत्त्वेन अवैदिकप्रधानकारणवादे तात्पर्याऽभावेन योगशास्त्रोक्तप्रधानकारणवादेन ब्रह्मकारणवादिश्रुतिसमन्वयो नबाध्यत इति ॥

इति योगप्रत्युक्त्यधिकरणम्

---

अथ न विलक्षणत्वाधिकरणम् ३

योगाधिकरणस्याऽतिदेशत्वा त्तद्विहाय साङ्ख्यस्मृत्यधिकरणेन सङ्गतिंदर्शय न्नुत्तराधिकरण मवतारयति — पुनरपीति ॥

ननु साङ्ख्यस्मृतिः कर्तृगौरवा द्वेदान्ताना मन्यथानयन स्यापादनं शक्तिरहिताऽपि "युक्तियुक्तं वचो ग्राह्यं नतु पौरुषगौरव" मिति न्यायेन पौरुषगौरव मनाद्रियमाणानामपि युक्तिगौरव स्यादरणीयत्वा त्तदुपन्यस्ताभिः ब्रह्मकारणत्वाऽसम्भवापादयुक्तिभिः वेदान्ताना मन्यथानयन मापादयेदेव त्याशङ्कानिराकरणार्थ मुत्तराधिकरणस्यारम्भ इत्यर्थः ॥

यत्तु साङ्ख्यस्मृते श्श्रुतिविलक्षणत्वेन श्रुतिमूलत्वाऽसम्भवा न्मूलान्तराभावाच्च तदुक्तप्रधानकारणत्व मयुक्तमिति तदयुक्तम् । प्रपञ्चस्य ब्रह्मविलक्षणत्वा त्तदुपादानकत्वाऽनुपपत्तेः स्मृतेः प्रत्यक्षानुमेयस्मृतिमूलत्वाऽभावेऽपि तदुक्तस्य सालक्षण्यहेतुकाऽनुमानस्य व्याप्तिपक्षधर्मतारूप

सर्वथा तर्कबाध्योऽयं ब्रह्मकारणवादः । कथम् ब्रह्मणः प्रपंचस्याऽस्य विलक्षणत्वात् तत्कार्यत्वं न संभवति ? कुतो वैलक्षण्य मवगत ? मितिचेत् शब्दादेव । 'विज्ञानं चाऽविज्ञानं' चेत्यादि शब्दोहि प्रपंचस्य विकारास्पदत्वाज्ञत्वाद्यपुरुषार्थरूप मभिधत्ते । अतः सत्यज्ञानानन्दरूपात् ब्रह्म

---

दृष्टमूलवत्त्वेन प्रपञ्चसालक्षण्यवत. प्रधानस्यैव तत्कारणत्वौचित्यात् — ततएव स्मृते रनुमानमूलत्वेन मूलान्तराभावासिद्धश्च इति "नविलक्षणत्वा" दिति सूत्रभागस्याऽयमभिप्रेत्य पूर्वपक्षमाह— सर्वथेति । "प्राबल्य मागमस्यैव जात्या तेषु त्रिषु स्मृत" मिति स्मृते स्सकलप्रमाणमूर्धन्य स्यागमस्य कथं तर्केण बाधन मुपपद्यत इत्याशङ्कानिराकरणार्थम् सर्वथेतिविशेषणम् । तर्केण बाधनं नाऽप्रामाण्यापादनं किन्तु तदनुसारेण ग्राह्यार्थत्वम् । तदवश्यमेवाऽभ्युपगन्तव्यम् । "यत्तत्त्वं दृश्यते व्योम्नि खद्योते हव्यवाडिव । न तत्ते विद्यते व्योमि न खद्योते हुताशन । तस्मा त्प्रत्यक्षदृष्टेऽपि युक्त मर्थ परीक्षितुम् । परीक्ष्य ज्ञापयन्नर्थां न धर्मा त्परिहीयते" इति तर्कस्य सर्वप्रमाणाऽनुग्राहकत्वस्मरणात् "आर्षं धर्मोपदेशञ्च वेदशास्त्रानुरोधिना । य स्तर्केणाऽनुसन्धत्ते स धर्मम् वेद नेतर ' इति विशिष्यागमानुग्राहकत्वस्मरणादपि तर्कानुसारेण ब्रह्मकारणवाद स्याऽन्यथानयनं युक्तम् । अपिचाऽत्र न केवल ब्रह्मकारणताया मनिष्टापादनमेव ; किन्तु ब्रह्मकारणत्व प्रतिक्षेपकं प्रधानकारणत्वव्यवस्थापक मनुमानमपि विवक्षितम् । एवञ्च सर्वथा तर्कबाध्योऽय मित्यस्य ब्रह्मकारणताया मनिष्टापादनरूपेण ब्रह्मकारणत्वप्रतिक्षेपकानुमानरूपेण प्रधानकारणत्व व्यवस्थापकानुमानरूपेणचे त्येवं सर्वप्रकारेणाऽपि तर्केण बाध्योय समन्वय इत्यर्थः ॥

ननु कथमत्र वैलक्षण्याऽवलम्बन मनुमान मनिष्टापादनता प्रवर्तते । जग द्ब्रह्मप्रकृतिकं नभवति । तद्विलक्षणत्वात् । यदिजग द्ब्रह्मप्रकृतिकंस्या त्तद्विलक्षणं नस्यादित्येव मितिचेन्न । दृष्टान्ताऽभावात् । य द्यत्प्रकृतिक त न्न तद्विलक्षण मितिसामान्यव्याप्ते र्यत्तद्भ्या मननुगमात् मृत्पिण्डप्रकृतिकस्य घटादे र्घटत्वादिना मृत्पिण्डविलक्षणत्वेन व्यभिचाराच्च । तस्मा द्वैलक्षण्यावलम्बन स्तर्कोऽत्र नप्रवर्ततइत्याशयेनाशङ्कते—कथमिति । उत्तरमाह ब्रह्मणइति । अत्रायम्भावः । गगनादिकं ब्रह्मप्रकृतिकद्रव्यं नभवति । तद्विशेषणगुणचैतन्यानुगतिशून्यत्वादि त्यनुमानम् । यदित ब्रह्मप्रकृतिक द्रव्य न्तदा तद्विशेषगुणानुगतिमत् स्यादि त्यनिष्टापादनञ्च । सामान्यव्याप्तौ मृत्प्रकृतिकत्वादि रहितो जलादि र्मृत्प्रकृतिकोघटादि श्चात्र दृष्टान्त. । यत्तद्भ्यां सामान्यव्याप्तिः यो यस्यग्रन्थस्य प्रणेता स तस्मादधिकविषयज्ञानव नित्येवमादिरूपा सिद्धान्तिनां प्यभिमता नप्रत्याख्यातुं शक्या । प्रकृतिविकारगत तद्विशेषगुणत्वाऽवच्छेदेन निर्णीतस्य हेतुहेतुमद्भावस्य भङ्गप्रसङ्गोऽनुकूल स्तर्कइति । जगतो ब्रह्मवैलक्षण्यं केनाऽवगम्यत इत्याह तथात्वब्रशब्दा दिति ।

णोऽस्य वैलक्षण्यं सिद्धम् । कथ मनयो र्गोमहिषयो रिव कार्यकारणभावः संभवति ?

## अभिमानिव्यपदेश स्तु विशेषानुगतिभ्याम् ॥ २—१—५ ॥

यन्यचेतनत्वेन चेतनात् ब्रह्मणो विलक्षण मिदं जगत् कथ मस्मिन् ' तं पृथि व्यब्रवीत् ', ' अपोवा अकामयन्त ', ' शृणोत ग्रावाणो विदुष ' इत्यादौ चेतनकार्यव्यपदेशः ? तस्मा दिदं चेतनमेव सर्वं जगत् । अतो न ब्रह्मप्रपंचयोः चेतनाचेतनरूपतया न वैलक्षण्य मिति शङ्क्यम् । यत स्तथा सर्वत्र ज्ञानकार्यव्यपदेश स्तदभिमानिदेवताविषय एवे त्यव गम्यते ' हन्ताऽह मिमा स्तिस्रो देवता ' इति * देवताशब्दविशेषात् । ' अग्नि र्वाक्भूत्वा मुखं प्राविश ' दित्यादिना अचिद्वस्त्वभिमानिदेवतानु गतेश्च । तस्मा दचेतनत्वादिना विलक्षणमेव जगद्ब्रह्मणः । ततोऽस्य कार्यत्वं ब्रह्मकारणत्वंच युक्तिबाध्य मेव ॥

" विज्ञानञ्चाऽविज्ञान " ञ्चेत्यादिका त्रुटवाक्यादेव तयात्व विलक्षणत्वं जगतोऽवगम्यतइत्यर्थः । एवञ्चविकारास्पदत्वेनाऽज्ञत्वेनाऽपुरुषार्थाश्रयत्वेनच जगद्रूपकार्यस्य सत्यज्ञानानन्दात्मकब्रह्मकारणत्व नसम्भवतीत्यर्थः ॥

ननु " तं पृथि व्यब्रवीत् । आपोवा अकामयन्त, शृणोत ग्रावाणः " इत्यचेतनत्वे नाऽभिमतानामपि चैतन्ययोगस्य श्रुतिपुश्रुतत्वेन पिशाचादीनामिव पृथिव्यादीना मस्मदादि नाऽनवगत श्चैतन्य मित्यते । तस्मा च्चेतना द्ब्रह्मणो जगतो वैलक्षण्य मसिद्धमि त्याशङ्क्य ' पृथिव्यब्रवी ' दित्यादिश्रुतयः पृथिव्याद्यभिमानिदेवताविषया इत्युपपादनार्थं सूत्रम् ॥

देवताशब्दविशेषा दिति । तिस्रोदेवता इति चेतनवाचिना देवताशब्देन पृथिव्यादी नाम विशेषितत्वादित्यर्थः । अनुगते रिति । " अग्नि र्वाग्भूत्वा मुखंप्राविशत् । आदित्य श्चक्षुर्भूत्वाऽक्षिणीप्राविशत् । वायुः प्राणोभूत्वा नासिकेप्राविश " दित्यादिना वागाद्यभि मानित्वेनाग्न्यादीना मनुप्रवेशप्रतिपादना दित्यर्थः । एवञ्च जगतोऽचेतनत्वे न विलक्षणत्वात् ब्रह्मकार्यत्वाऽनुपपत्तेः तर्कानुकूलसाङ्ख्यस्मृत्यनुरोधेन जगतः प्रधानोपादानत्वं वेदान्तैः प्रति पाद्यत इ त्येष्टव्य मितिभावः । एवप्राप्ते सिद्धान्तोपपादकं सूत्रम् ॥

---

* देवताशब्द विशेषादिति देवताशब्देन चेतनवाचिना पृथिव्यादीना विशेषितत्वा दित्यर्थः ॥

## दृश्यते तु ॥ २-१-६ ॥

सिद्धान्त उच्यते – विलक्षणयोरपि ब्रह्मप्रपंञ्चयोः कार्यकारणभाव स्संभवाति । अचेतनाद्गोमयात् चेतनवृश्चिकोत्पत्तिदर्शनात्, चेतनात्पुरुषा दचेतनकेशाद्युत्पत्तिदर्शनाच्च । अत श्शुष्कतर्को न बाधकः श्रुति

इति तु शब्देन पूर्वपक्षो व्यावर्त्यते । ब्रह्मप्रपञ्चयो र्वैलक्षण्येऽपि उपादानोपादेयभावसम्भवे हेतुसमर्पकत्वेन योजयति – विलक्षणयो रिति । एवं गोमयादचेतना दुत्पन्नवृश्चिके प्रकृतिगताऽचेतनगुणानुगतिराहित्यात् पुरुषाच्चेतना दुत्पन्नेषु नखकेशादिषु स्वप्रकृतिभूतपुरुषगतचेतनगुणा नुगतिराहित्याच्च तर्कानुमानयो र्व्यभिचारः प्रकटितः । ननु गोमया द्वृश्चिकशरीरस्यैवोत्पत्तिः । न चेतनस्य । गोमयाकारपरिणतगवादुपयुक्त तृणाद्यनुशयिजीवविशेषस्यैव वृश्चिकात्मना प्रादुर्भावः । एवम् शरीरादेव केशनखादीना मुत्पत्तिः । नतु चेतनात् । एवम् गोमयपुरुषयोः वृश्चिक केशनखादिषु निमित्ततैव नोपादानत्व मितिचे न्न । गोमया द्वृश्चिकशरीरोत्पत्तौ वृश्चिकस्य ज्ञान विकासरूपावस्थान्तरापत्त्या तस्याऽपि गोमया दुत्पत्तिस्ताव दस्ति । पूर्वावस्थाप्रहाणेनावस्थान्त रापत्तिरेवहि द्रव्यस्योत्पत्तिः । तत्तच गोमय स्योपादानत्वम् पृथक्सिद्धकार्यावस्थाश्रयत्वरूप तल्लक्ष णाऽनुसारेण सिद्ध्यति । तथा पुरुषस्याऽपि केशनखादिषु कारणत्वमस्ति । मृतशरीरा त्तदनुत्पत्तेः । ततश्च तदुपादानत्वमपि लक्षणमुखेनायाति । केशनखादिमत श्शरीरस्य शरी र्यपृथग्भावात् । उदाहरणद्वयेऽपि अचेतनांशयोरेव प्रकृतिविकारभावाङ्गीकारेऽपि व्यभिचारो भवत्येव । वृश्चिक शरीरे केशादिषुच गोमयशरीरगतगन्धरूपाद्यनुवृत्त्यभावाच्च । एव मनुमानस्य व्यभिचारा त्तर्कस्य मूलशैथिल्याच्च न श्रुतिसमन्वयबाधकत्वमि त्याशयेनोपसंहरति - अत इति । शुष्कतर्क इति । तर्कशुष्कता श्रुतिविरोधमूला विरसता विवक्षिता । एव म्ब्रह्मकारणताप्रतिक्षेपके वैल क्षण्यावलम्बने तर्कानुमानदूषिते प्रधानकारणत्वाऽपवादके सालक्षण्यावलम्बनमनुमानन्तु द्वितीय पादे निराकरिष्यते ।

अत्र यद्यपि सूक्ष्मचिदचिद्विशिष्टम् ब्रह्मकारणम् स्थूलचिदचिद्विशिष्ट न्तदेवकार्यमिति सिद्धान्ते कारणकोटा वचेतनांशस्य कार्यकोटावपि चेतनांशस्याऽनुप्रवेशस्य विद्यमानतया कारणा त्कार्ये वैलक्षण्यशङ्काया नावकाश स्तथाऽपि कारणकोटौ विशेष्यभूतस्य ब्रह्मणः कार्यकोटौ विशेषणे ष्वचेतनेष्व प्युपादानत्व स्योपपादनीयतया अन्यथा तस्य सर्वोपादानत्वाऽसिद्धेः ।

समन्वयस्येति निर्णयः । पुन श्शङ्कित्वा परिहरति ॥

असदितिचे न्न प्रतिषेधमात्रत्वात् ॥ २–१–७ ॥

एवं कार्यकारणयो वैलक्षण्यात कारणे कार्य मसदेव, "असद्वा इद मग्र आसीत्" इति श्रुते रितिचे न्नैवं वाच्यम्। सालक्षण्यनियमप्रतिषेधमात्रविषयत्वाच्छ्रुतेः । अतः कार्यकारणयो र्जगद्ब्रह्मणो र्वस्त्वेकता नहीयत एव ॥

इति नवलक्षणत्वाधिकरणम्

---

अथ अपीतौ तद्वत्प्रसङ्गाधिकरणम् ४

अपीतौ तद्वत्प्रसङ्गा दसमञ्जसम् ॥ २–१–८ ॥

सत्कार्यवादेन कार्यकारणयो र्जगद्ब्रह्मणो र्वस्त्वेकत्वे समन्वयस्य तर्कबाध्यत्व मस्ति नवेति सन्देहेस त्यस्तीति पूर्वः पक्षः। कुतः ? यत एव जगद्ब्रह्मणो र्वस्त्वेकत्व मुक्तं, तथासति हि जगतइव ब्रह्मणोपि विकाराज्ञाना

---

नेषुच वैलक्षण्या दुपादानत्वं नसम्भवती त्येतमाक्षेपमपमानार्थ मिद मधिकरणमिति युक्तम् । पुनश्शङ्कित्वेति ॥

ननु विलक्षणयोः जगद्ब्रह्मणो रुपादानोपादेयभावो भवताऽभ्युपगतः । एवञ्च विलक्षणयो रैक्याऽयोगात् कार्यकारणयो र्द्वैरूप्य मभ्युपगतंस्यात् । एवञ्च कारणात्मनासतएव कार्यस्य स्थूलरूपाऽपत्तिरिति सत्कार्यवादं परित्यज्य कारणात्मना प्रागसदेवकार्य मुत्पद्यतइ त्यसत्कार्यवादोऽभ्युपगतस्स्यात् । एतेन "असद्वा इद मग्र आसी" दितिश्रुते र्यथाश्रुतएवार्थोऽङ्गीकृतस्स्यादि त्याशङ्क्य तत्परिहारार्थ मुत्तरसूत्र मित्यर्थः ॥

नेत्यादिपरिहारांशं व्याचष्टे—नैवं वाच्यमिति । दृश्यतेत्वितिसूत्रेण उपादानोपादेययो स्सालक्षण्यनियमएव प्रतिषिद्धः नत्वेकद्रव्यभावः । वैलक्षण्ये प्यारम्भणाधिकरणे वक्ष्यमाण न्यायेनैकद्रव्यत्व स्योपपन्नत्वा दितिभावः । अधिकरणार्थमुपसंहरति – अत इति ॥

इति वैलक्षण्याधिकरणम्

घ्यनिष्टप्रसङ्ग स्समुन्मिषति, ततो वेदान्तवाक्यानां * सामरस्यमसमञ्जसं भवति अत स्सर्केण समन्वयबाध इति ॥

## अथ अपीतौ तद्वत्प्रसङ्गाधिकरणम् ४

कार्यकारणयो र्वस्त्वैक्यश्रुतिसमन्वयसिद्धम् ब्रह्मणो निर्दोषकल्याणगुणाकरत्वम् पूर्वसूत्रेण प्रसक्त माक्षिप्य समाधीयत इतिसङ्गतिमभिप्रेत्य संशयं दर्शयति – सत्कार्यवादेनेति। वस्त्वैकत्वं ब्रह्मणि प्रपञ्चदोष मापादयति नवेति संशय इतिभावः। वस्त्वेकत्वे ब्रह्मणि प्रपञ्चगतदोषा स्समापद्येर न्निति तस्य दोषापादकत्व मुपपादयति – तथासतीति। ब्रह्मप्रपञ्चयो रैक्यं चेतनाचेतनगता स्सर्वेऽपि दोषाः प्रपञ्चइव ब्रह्मण्यपि प्रसज्येरन्। तस्मा न्निर्दोष कल्याणगुणाकरे ब्रह्मणि वेदान्तानां समन्वयव्यवस्थापन मसमञ्जसमेवभवे दित्यर्थः।

ननु प्रपञ्चस्य स्थितिकाले तदीयदोषै स्सहितत्वेऽपि तस्यप्रळयेसति निर्दोषं कल्याण गुणाकरंच ब्रह्माऽवतिष्ठतइति तद्विषयानां वेदान्तवाक्याना मुपपद्यते ''चैत्रस्सुखञ्जीव''तीति वाक्यानामि यथा व्यध्यादिरहितकालविषयत्वमि त्याशङ्कानिराकरणार्थ मपीताविति प्रळयस्य सूत्रे ग्रहणम्। प्रळयेऽपि भाविकल्पभोग्यफलहेतूनाम् पाप्मनां सूक्ष्मरूपापन्नेषु जीवे ष्ववश्याऽभ्युपेयत्वा त्तै र्दुष्टत्वं स्थितिकालइव प्रळयेऽपि ब्रह्मणःप्रसज्यतइ त्यपहतपाप्मत्वादि श्रुतीना मसाम ञ्जस्य मवार्यमिति। ननु ब्रह्मप्रपञ्चयो र्वस्त्वैकत्वं नाभेदः। किन्तु घटपटयोरिव स्वातन्त्र्या भावेनाऽपृथक्सत्त्वरूप मनन्यत्वमि त्यारम्भणाधिकरणे समर्थयिष्यते। तस्मा न्न ब्रह्मणि दोषप्रसङ्ग इत्यतआह–अत इति। एव मान्तर्गणिकभेदाङ्गीकारेऽपि मसूरिकादिमहारोगपरवश महाजनसमाक्रान्तस्य रोगित्वमिव दुष्टप्रपञ्चावृतस्य दुष्टत्व मवर्जनीयम्। दुष्टसंसर्गमात्रस्यैव दोषप्रदत्वे किमुवक्तव्यम्। तदपृथग्भावो दोषहेतुरिति ॥

ननु अपृथग्भावेऽपि बालत्वयुवत्वादय श्शरीरधर्मा श्शरीरिणां नस्पृशन्तीति दृश्यते। चेतनाऽचेतनात्मकंजग दिदंब्रह्मणश्शरीर मिष्यते। अन्तर्यामिब्राह्मणे तथा प्रतिपादनात्। तस्मात्प्रपञ्चदोषाः अन्तरात्मानं नस्पृशन्तीतिचे न्न। जगद्ब्रह्मणो श्शरीरशरीरिभा वस्यै वाऽभावात्। तथाहि – यत् कर्मफलभूतसुखदुःखभोगसाधनभूतेन्द्रियाश्रयम् प्राणधार्यम् भूतसङ्घात संस्थानविशेषम् तद्धि शरीरम्। " अपाणिपादो जवनो गृहीता " " अप्राणो ह्यमना श्शुभ्र "

---

* सामरस्य मसमंजस मिति, निर्दुष्ट कल्याण गुणे ब्रह्मणि समन्वयो संगत स्यादितिभावः॥ नचप्रपञ्चस्थितिकाले तद्दोषप्रसक्तावपि प्रळये निर्दुष्टत्वं ब्रह्मण स्संभव तीति वाच्यं, तदानिमपि भावि फलहेतु भूतपाप्मानां सूक्ष्मरूपेषु जीवेषु सद्भावात्, अयमेवार्थः अपीतौ तद्वदिति सूत्रभागस्य अपीतौ प्रळये, तद्वत् स्थितिकाल इव॥

## न तु दृष्टान्तभावात् ॥ २–१–९ ॥

नेति पूर्वपक्षं व्यावर्तयति । 'यस्याऽऽत्मा शरीरं' 'यस्याऽव्यक्तं शरीर' मित्यादिश्रुत्या, "विग्रहं देवदेवस्य जगदेत च्चराचरम् । एतमर्थं न जानन्ति पशवः पाशगौरवात्' इत्यादि पुराणोक्त्या च सिद्धचिदचि च्छरीरकस्य परब्रह्मणः शिवस्य कार्यतया कारणतया चाऽवस्थाने गुणदोष व्यवस्थायां दृष्टन्तसद्भावा त्तत्र वेदान्तवाक्यसमन्वयसामरस्य मसमञ्जसं न भवति । कथम्? यथा सशरीरस्य मनुष्याद्यात्मनो बालत्वयुवत्व स्थविरत्वादिभावेऽपि बालत्वादय श्शरीर एव, सुखादाय स्त्वात्मन्येव तद्वदत्रऽपि शरीरभूतचिदचिद्वस्तुगता न्यज्ञानविकाराद्यनिष्टादीनि शरीर भूते चिदचिद्रूपवस्तुन्येव तिष्ठन्ति, निरवद्यत्वाविकारत्वसार्वज्ञ्यसत्यसङ्कल्प त्वादयः आत्मभूते परमेश्वर एव । तदेवं दृष्टान्तभावात् श्रुत्यसामञ्जस्यं ब्रह्मणि नास्त्येव ॥

## स्वपक्षदोषा च्च ॥ २–१–१० ॥

केवलतर्कावलम्बने स्वपक्षएव प्रधानकारणवादे निर्विकार पुरुषसन्निधिवशात् प्रकृतिप्रवृत्तै सत्या मन्योन्यधर्माध्यासो दुरुपपादः ।

---

इत्यादिभि श्श्रुतिभिः परमात्मनः कर्मतत्फलभोगयोरभावा दिन्द्रियरहितत्वा त्प्राणवत्त्वा भावाच्च तत्प्रति भोगायतनत्वरहितस्य जगत श्शरीरत्व मयुक्तम् । तस्मा त्तज्जगत स्तच्छरीरत्वश्रावणम् तन्नियम्यत्वमात्रे णौपचारिक मेष्टव्यम् । एवञ्च प्रपञ्चब्रह्मणो रंगङ्गव सार्वदिकसंसर्गरूपाऽपृथग्भावेऽपि प्रपञ्चदोषैः ब्रह्म दूषितमेव भवेदिति भावः ॥

तुशब्देन प्रपञ्चस्य ब्रह्मशरीरत्वाऽसम्भवशङ्का निवर्त्यते । तस्मा दृष्टान्तलाभा त्पूर्वमापादितं ब्रह्मकारणवादे असामञ्जस्यं नविद्यतइति सूत्रार्थमभिप्रेत्य व्याचष्टे–नेतीति । प्रपञ्चस्य ब्रह्मशरीरत्वं "सर्वत्र प्रसिद्धोपदेशात्" (१–२–१) इत्यधिकरणे भाष्ये प्रति पादितम् । तत्रैवाऽस्माभिरपि शरीरलक्षणप्रदर्शनपूर्वकं जगतः ब्रह्मशरीरत्वं विस्तरे णोपपादितम् । तन्मर्ममेत दधिकरणसिद्धस्याऽनुवादरूपमेव ॥

अन्यत्राऽन्यधर्मानुसन्धानरूपो ह्यध्यासो निर्विकारस्य पुरुषस्य न संभवति। अचेतनायाः प्रकृते श्चाऽनुसन्धानरूपोऽध्यासो न संभवत्येव। अतः प्रधान कारणवाद एव तद्बाध्यः॥

## तर्काप्रतिष्ठानात् ॥ २-१-११ ॥

तर्कस्याऽप्रतिष्ठितत्वात् प्रधानकारणवादस्य तन्मूलत्वा त्तत्र प्रतितर्कसंभवा त्तस्यैव स्याज्यत्वं, न ब्रह्मकारणवादस्य॥

## अन्यथाऽनुमेयमितिचे देवम प्यनिर्मोक्षप्रसङ्गः ॥ २-१-१२ ॥

अन्यथा, यथा प्रतितर्कपराहति र्नभवति तथा प्रकारान्तरेण प्रधान मनुमेय मिति वादोऽपि युक्तो नभवति। तत्रा प्येवं प्रति तर्ककलहसंभावनया प्रतिष्ठितत्वाभावदोषा दनिर्मोक्ष एव प्रसज्यते।

---

चकार मेवकारार्थ मभिप्रेत्य साङ्ख्यानां स्वपक्षएव दोषा भवन्ति नत्वस्मत्पक्षे तदापादितादोषाइ त्याशयेन तत्पक्षे दोषंदर्शयति — केवलमिति। पुरुषसन्निधाना त्प्रकृति र्महदहङ्कारादिसृष्टौ प्रवर्तते। ततः प्रपञ्चपुरुषधर्माणा मध्यासस्य स्संभवइति साङ्ख्यप्रक्रिया। तस्या मन्यत्राऽन्यधर्मानुसन्धानरूपोऽध्यासो न ताव त्पुरुषस्य सम्भवति। तस्य निर्वि कारत्वात्। नाऽपि प्रकृतेः। तस्या अचेतनत्वाऽभ्युपगमात्। तस्मा त्केवलतर्कावलम्बनं प्रधान कारणवादएव तर्कबाध्यः स्यादिति द्वितीयेपादे साङ्ख्याधिकरणे वक्ष्यमाणादोषोऽत्र स्मारितः।

केवलतर्क मवलम्ब्य प्रधानकारणवादिभि रुत्प्रेक्षिता स्स्वपक्षोपपादका स्तर्काः परमाणुकारणवादिभि स्तादृशै र्दूष्यन्ते। तेचाऽन्यै रित्येवं शुष्कतर्काणा मप्रतिष्ठितत्वा त्तर्कावलम्बनं प्रधानकारणवाद स्परित्यज्य श्रुतिमूलो ब्रह्मकारणवादएव परिग्राह्य इत्येवं सूत्रार्थमभिप्रेत्यविवृणोति — तर्कस्येति।

इदानीं साङ्ख्यैः प्रधानकारणत्वोपपादकतया उपन्यस्यमानाना न्तर्काणां नैयायिकादि तर्कैः प्रतिहति र्यथानभवति तथाऽन्यादृशेनप्रकारेण प्रधान मनुमानेनसाधयिष्याम इ त्यभिमानमात्रमेव। तादृशस्य पुरुषबुद्धिकल्पितस्य तर्कस्यैवाऽभावात्। केनचित्कुशलेनाऽ

ततः शुष्कतर्कमूलः प्रधानकारणवाद एव त्याज्यः, नतु प्रबलश्रुतिप्रमाणसिद्धः ब्रह्मकारणवाद इति युक्तम् ॥

इति अर्पातो नद्दत्प्रसङ्गाधिकरणम्

अथ शिष्टापरिग्रहाधिकरणम् ५

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ २-१-१२ ॥

यथेदं सांख्यदर्शनं तर्कमूलत्वेनाऽप्रतिष्ठितत्वादिना प्रत्याख्यातं तथैव तेनैव हेतुना शिष्टाना मपरिग्रहात् कणभक्षाक्षपादादीनां पक्षा अपरिग्राह्या इति व्याख्याताः। एत दुक्तं भवति कणादगतसिद्ध

---

म्यूहितस्य तर्कस्य कुशलतरेणाऽन्येन प्रतितर्केण प्रतिहतं सम्भावितत्वा त्पुरुषबुद्धीना मव्यवस्थितमर्यादत्वात्। तस्मा त्सांख्यतन्त्रप्रामाण्यस्याप्रतिष्ठितत्वोपपादनरूपाया न्मोक्षस्याऽभावप्रसङ्ग इत्येवंसूत्रार्थ मभिप्रेत्य व्याचष्टे — अन्यथेति शुष्कतर्काविलम्बनेन प्रधानकारणवादस्य प्रतिष्ठापनाऽसम्भवा द्वेदान्तसिद्धे ब्रह्मकारणवादे कुतर्कोऽपमकर्तव्यश्च सएवयुक्तइत्यधिकरणार्थ मुपसंहरति — ततइति ॥

इति अर्पातो नद्दत्प्रसङ्गाधिकरणम्

अथ शिष्टापरिग्रहाधिकरणम् ५

एतेन तर्कस्याऽप्रतिष्ठितत्वदूषणेन प्रधानकारणवादनिराकरणहेतुना शिष्टाना मवशिष्टानां शुष्कतर्कावलम्बिनां कणभक्षादीना मपरिग्रहा. वेदपरिग्रहरहिता· पक्षास्तेऽपि व्याख्याता: वैदिकैरपरिग्राह्या इति व्याख्यातप्रायाइति सूत्रार्थमभिप्रेत्य विवृणोति यथेति। एतेने त्यतिदेशाधिकरणस्याऽधिकाशङ्कां दर्शयति एतदुक्तमिति। आदिशब्देनाऽक्षपादक्षपणकादयो गृह्यन्ते। एतेन बहुसम्मतत्व मधिकाशङ्काबीजं सूचितम्। परमाणुकारणवादापी त्यनेना प्यधिकाशङ्काकारणम् सूचितम्। कणभक्षादिभि स्सर्वैरपि परमाणुकारणवादस्यैव परिगृहीतत्वेऽपि परमाणुस्वरूपेऽपि शून्यार्थकत्वेन माध्यमिकैः ज्ञानात्मकत्वेन योगाचारैः क्षणिकत्वेन त्रिविधैरपि

परमाणुकारणवादोऽपि निराकृत इति ॥

इति शिष्टापरिग्रहाधिकरणम्

---

अथ भोक्त्रापत्त्यधिकरणम् ६

## भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्

॥ २-१-१३ ॥

यदुक्तं पूर्वत्र चिदचित्प्रपञ्चविशिष्टः शिव एवाऽद्वितीयः कारणं कार्यं च भवतीति विशिष्टशिवाद्वैतं, तस्य समन्वयसिद्धस्य युक्तिबाधा पत्तिरस्ति नवेति संशयः ॥

एवंसति पूर्वपक्षः प्रवर्तते; यदि चिदचिच्छरीरकत्व मिष्यते पर मेश्वरस्य; तदा सशरीरत्व मस्य सिद्धम् । तथाच जीववत् सशरीरत्वेन तस्याऽपि शरीरसंबन्धप्रयुक्तसुखदुःखभोक्तृत्वापत्ते रस्मात् संसारिणो जीवा त्तस्य परमेश्वर स्याऽविभागः प्राप्नोति । अतोऽयं जीवोऽय मीश्वर इति विशेषानुपपत्त्या जगद्विशिष्टत्ववादे परमेश्वरस्य निर्दोषस्वरूपा सिद्धिप्रसङ्ग इत्येवं पूर्वपक्षी मन्यते ॥

---

बौद्धैः सत्यत्वेन वैशेषिकादिभि रसत्यत्वेन योगाचारादिभिश्चेति संवाददर्शना त्तैस्सर्वैरपि स्वस्वानुकूलतर्केण विपक्षणा माभासीकरणेन सर्वेषामपि तर्कावलम्बिपक्षाणा मप्रतिष्ठितत्वेनन अपरि ग्राह्या वैदिकैः किन्तु वेदान्तवाक्यसमन्वयसिद्धो ब्रह्मकारणवादएव परिग्राह्य इति भावः ॥

इति शिष्टापरिग्रहाधिकरणम्

---

अथ भोक्त्रापत्त्यधिकरणम् ६

अतिदेशाधिकरण मपरित्यज्य प्रधानेन तत्पूर्वाधिकरणेन सङ्गतिन्दर्शयितु न्तदर्थ मनुवदति—यदुक्तमिति सर्वत्र । प्रसिद्धाधिकरणे सर्वचिदचिद्विशिष्टं ब्रह्म सर्वशब्दवाच्यमित्युक्त्वा अपीतौतद्वत्प्रसङ्गाधिकरणे चिदचिच्छरीरकस्य परब्रह्मणश्शिवस्य कार्यतया कारणतयाचाऽवस्थाने

नाऽत्र विरोध इति सिद्धान्तः; स्यादेव विभागो ज्ञ्यात् परमेश्वरस्य निष्कळङ्कनिखिलमङ्गळाकारत्वेन । नखलु सशरीरत्वप्रयुक्त मनिष्ट भोक्तृत्वं, किंतु पराधीनत्वप्रयुक्त मेव । यथा लोके राज्ञः सशरीरत्वेऽप्यनन्यवश्यस्य न स्वाज्ञानुवृत्तिकृतानिष्टप्रसङ्ग इति भोक्तृत्वं नेत रसमानम । 'ज्ञाज्ञौ द्वा वजावीशानीशौ' इति जीवेश्वरयोः स्वातन्त्र्य मस्वातन्त्र्यं च श्रुतिसिद्ध मेव । अतः स्वतन्त्रस्य परमेश्वरस्य जीवा दस्वतन्त्रा च्छरीरसंबन्धसामान्येन नाऽविभागप्राप्तिः । नाऽतो विशिष्टाद्वैत हानिः ॥

इति भोक्त्रापत्त्यधिकरणम्



गुणदोषव्यवस्थाया दृष्टान्तसद्भावा दसामञ्जस्यपरिहारेण विशिष्टशिवाद्वैत विवक्षितमित्यर्थः । तथैव ह्यारम्भणाधिकरणं समर्थयिष्यते । तत्र कार्यकारणावस्थयो रितरेतरभूतस्य चिदचि त्प्रपञ्चस्य तच्छरीरत्व मुपपादयिष्यते । तत्र मनुष्यादिशरीरगतबाल्ययुवत्वादिन्यायेन तदीयदोषाणाम् । सम्पर्क शिशवे नसम्भवतीति समर्थनारम्भ । एवञ्च चिदचिच्छरीरके ब्रह्मणि वेदान्तानां समन्वयइति पर्यवसितम् । इदञ्चोपपद्यते । दृष्टान्तसद्भावा च्छरीरशरीरिधर्माणा मसंकरेण व्यवस्थादर्शनेऽपि शरीरिणाम् शरीरप्रयुक्त सुखदुःखभोक्तृत्वस्याऽपि दर्शनेन ब्रह्मणोऽपि शरीरित्वे सुखदुःखभोक्तृत्व मापद्यत । तस्मा द्ब्रह्मणो जीवैरविभागोऽविशेषः आपद्यत इतिचे दित्यर्थमभिप्रेत्य पूर्वपक्षयति — यदीति । जगद्विशिष्टत्ववादे जगच्छरीरकत्ववादे । स्याल्लोकव दितिसूत्रभाग सिद्धान्तार्थम् व्याचष्टे — स्यादेवविभागइत्यादिना ॥

ननु सम्भोगप्राप्तिरितिचे न्न वैशेष्या दित्यत्र ब्रह्मणोभोगप्रसक्तिः परिहृता । अनेनाऽधिकरणेन पौनरुक्त्यमितिचे न्न प्रथमाध्याये अनुपपत्त्यधिकरणे पौनरुक्त्यभावस्य प्रतिपादितत्वात् ॥

इति भोक्त्रापत्त्यधिकरणम्



अथ आरम्भणाधिकरणम् ७

यद्यपि स्वातन्त्र्यादिविरुद्धधर्मसम्बन्धेन जीवेश्वरयो र्विभाग उच्यते तथाऽपि तयोः कार्यकारणयो रनन्यत्व मव्यतिरिक्तत्वं च सिद्धयत्येवेत्याह ॥

**तदनन्यत्व मारम्भणशब्दादिभ्यः** ॥ २–१–१५ ॥

इह कार्यकारणयोः प्रपञ्चब्रह्मणोः स्वसमन्वयसिद्ध मनन्यत्वं सन्दिह्यते युक्तं नवेति ॥ सन्देहस्य चेतनाचेतनत्वपारस्पर्यविरुद्धधर्मसम्बन्ध वैलक्षण्यं कारणम् ॥

**कथ मनयो रनन्यत्व मुपपद्यते ?** ॥ पूर्वाधिकरणे सर्वज्ञत्वादिमत्त्वेन परमेश्वरस्य भोक्तृत्वाज्ञत्वादिना जीवस्य चोभयो र्विभागो निर्दिष्टः । चिदचिद्वस्तुनो रत्यन्तविलक्षणत्वा दनन्यत्वकथा दूरत एव । नहि कार्यकारणत्व मनन्यत्वसाधकम् । गोमयवृश्चिकादौ सत्यपि तस्मिन् वैलक्षण्य

अथ आरम्भणाधिकरणम् ७

सङ्गतिनिदर्शनाय न्युत्तराधिकरण मवतारयति — यद्यपीति । पूर्वाधिकरणे सुखदुःख भोक्तृत्वं शरीरत्वप्रयुक्तं न भवति । किन्तु पारतन्त्र्यकृतम् । तस्मात् स्वतन्त्रस्य शिवस्य शरीरित्वेऽपि तन्न प्रसज्यत इत्युक्तम् । न न्वेवं ब्रह्मणः प्रपञ्चशरीरत्वांशे समन्वयस्य भङ्गो माभूत् । प्रपञ्चानन्यत्वांशे तु स्यादेव । येन हि स्वातन्त्र्याऽस्वातन्त्र्यरूपवैलक्षण्येन प्रपञ्च ब्रह्मणो रशरीरशरीरित्व मुपपाद्यते । येनैव तयो र्भोक्तृत्वाऽभोक्तृत्वरूप वैलक्षण्यम प्युपपाद्यते तस्य वैलक्षण्यस्यैव प्रपञ्चब्रह्मणो रनन्यत्वबाधकत्वादिति प्रत्युदाहरणसङ्गत्या पूर्वं स्वात्रतत्र सिद्धवत्कृत्य व्यवहृतस्य प्रपञ्चशिवयोः कार्यकारणभावेनानन्यत्वस्य वैलक्षण्यकृतान्तरङ्गिक भेदाऽविरोधेन निरूपणार्थ मुत्तराधिकरणारम्भ इत्यर्थः ॥

वैलक्षण्यं कारणमिति । यदि वैलक्षण्य मनन्यत्वाऽविरोधि तर्हि तद्युक्तम् । यदि तद्विरोधि तर्हि तदयुक्तमि त्यनन्यत्वस्य विरोधित्वाऽविरोधित्वाभ्यां सन्दिह्यमानं वैलक्षण्यं युक्तायुक्तरूपसन्देहस्य कारणमित्यर्थः । भेदसाधकस्य वैलक्षण्यस्याऽभेदविरोधित्वा दनन्यत्व मयुक्तमिति पूर्वपक्षयति — कथमिति । यदि किञ्चिद्विलक्षणेनाऽपि चेतनवर्गे णाऽनन्यत्वमयुक्तस्या त्तर्हि किमुताऽत्यन्तविलक्षणेनाऽचेतनवर्गेणे त्याह — चिदचिद्वस्तुनोरिति ।

दर्शनात्। घटमृत्पिण्डादिष्वर्थक्रियादिव्यवहारभेदादभेदो नास्त्येव। अथवा, कार्यकारणयोरत्यन्ताभेदे प्रपञ्चब्रह्मणोरैकण्ड्यतया सर्वत्र कर्तृकर्मक्रियादिव्यवहारलोपः स्यादित्येवं प्राप्ते ब्रूमः ॥

कारणाद्ब्रह्मणः कार्यंजगदनन्यदेव। कथमवगम्यते? आरम्भणशब्दादिभ्यः। यथा 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्', 'स देव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्,' 'तदैक्षत बहु स्यां प्रजायेयेति', 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो,' 'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् सर्वो ह्येष रुद्र' इत्यादि शब्देभ्यः ॥

---

ननु उपादानोपादेयभावस्याऽभेदव्याप्ततया तेन ब्रह्मप्रपञ्चयोरनन्यत्वसिद्धौ घटादिषु श्यामत्वरक्तत्वादिरूपवैलक्षण्यवद्देशकालाद्यवच्छेदभेदेन स्वातन्त्र्यपारतन्त्र्यादिना वैलक्षण्यमुपपादनीयमित्याशङ्क्य व्यभिचारात्तस्याऽभेदव्याप्तिरसिद्धेत्याह—नहीति। वस्तुगत्या विरुद्ध एवाऽयं हेतुः ननु क्वचिदेव मा व्यभिचारीत्याह — घटमृत्पिण्डादिष्वपीति। घटेनोदाहरणं क्रियते नहि मृत्पिण्डेन। एवं इष्टशरावादिष्वपि त्वर्थक्रियाभेदः। घटस्य मृत्पिण्डदण्डचक्रादि कारणम्। मृत्पिण्डस्य जलसंयोजनपूर्वकमर्दनादिः कारणभेदः। पृथुबुध्नोदराकारः पिण्डाकारश्चेत्याकारभेदः। तद्बुद्धिर्वा बुद्धिभेदः। तत्प्रवृत्तिनिमित्तकः शब्दभेदः। इदानीं मृत्पिण्डोऽस्ति घटो नास्तीति सत्त्वाऽसत्त्वभेदः। मृत्पिण्डो दृष्टः घटशरावादिर्न दृष्ट इति ज्ञातत्वाऽज्ञातत्वभेदः। एकः पटः बहवस्तन्तव इति सङ्ख्याभेदः। एवं सर्वत्रियाभेदास्सर्वत्राऽप्युपादानोपादेयभावे भेदव्याप्ता इति विरुद्धो हेतुरित्यर्थः ॥

अथवेति — किञ्चेत्यर्थः। अखण्डतयेति। अत्यन्तैक्यापत्त्येत्यर्थः। कर्तृकर्मेति। कुलालो घटं करोतीत्यादिव्यवहारेषु कर्तृकर्मक्रियाणां भेदस्य दृष्टत्वेन सर्वत्र कर्तृकर्मभावादीनां भेदभावादित्यर्थः। सूत्रमध्याहारेणसह योजयन् सिद्धान्तमाह — कारणादित्यादि। सूत्रार्थस्तु — तस्माद्ब्रह्मणः कारणात्कार्यस्याऽनन्यत्वमवगम्यते। कुतः आरम्भणशब्दादिभ्यः "वाचारम्भण" मित्यादिवाक्येभ्यस्तदुपपादकयुक्त्या च इत्यर्थः। आरम्भणश्रुतेः ब्रह्मप्रपञ्चयोरनन्यत्वसाधकत्वमुत्तरसूत्रे भाष्य एव स्पष्टीभविष्यति। आदिशब्दगृहीतानां

यदुक्तं न कार्यकारणत्व मनन्यत्वसाधक मिति तत्राह ॥

## भावे चोपलब्धे ॥ २-१-१६ ॥

घटादिकार्यभावे च तदेव मृद्द्रव्यं घटइ त्युपलभ्यते। ततः कारणा दनन्यदेव कार्यम । तथा, 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य' मित्यत्र श्रुत्याऽपि प्रतिपाद्यते। विकारो नामधेयं च वाचारम्भणं वाचायाः अभिलापार्थक्रियारूपव्यवहारस्य निष्पादकं भवति । मृद्द्रव्यस्यैव घटाद्यवस्था घटादिनामधेयं चाऽर्थक्रियाभि लापरूपव्यवहारनिष्पत्तये भवतीति यावत । वस्तुतो घटादिकमपि मृत्तिकेत्येव सत्यं प्रामाणिकं, मृद्व्यतिरेकेण घटस्याऽदर्शनात। अथवा वाचारम्भणं विकारः घटो वाचारम्भणं घटोऽयमिति वाचारम्भविषयमात्रं मृद्द्रव्य एव व्यवहारसिद्धयर्थं जायमान मवस्थान्तरम् । नतु मृदो द्रव्या न्तरं, मृत्तिकेत्येव नामधेयं सत्यम् । घटादिकं मृत्तिकेतिकृत्वैव तत्र सर्वत्र मृद्घटादिनामधेयं सत्यम् सतिप्रामाणिकेऽर्थे साधु नतु द्रव्यान्तर मितिकृत्वा यतो घटो मृदेवेति। अतः कारणा दनन्यदेव कार्यम् । अर्थ

---

"सदुवे" त्यादीनां "सर्वो ह्येष रुद्र" इत्यन्तानां सामानाधिकरण्यादिभि स्तन्माथ कत्वमिति स्पष्टम् । उदाहृतश्रुतीना मनुग्राहकस्याऽनन्यत्वसाधकानुमानस्य दृष्टान्तोप पादनार्थत्वेनोत्तरसूत्र मवतारयति – यदुक्तमिति

ननु घटाद्युत्पत्तौसत्यां तदेवेदंमृद्द्रव्यमि तीयम्प्रत्यभिज्ञा अर्थक्रियादिभेदरूपप्रत्यक्षेण बाधितत्वा भ्रान्तास्स्यादि त्याशङ्क्य द्रव्यैक्येऽप्यवस्थाभेदमूल स्तद्भेदइति श्रुत्यैव निवेदितमि त्यावेदयितु मारम्भणश्रुते रर्थमाह – तथेति। एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनार्थं "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातंस्या" दिति यथेत्यादिना दृष्टान्तउपन्यस्तः। तत्र नाऽयंदृष्टान्त उपपद्यते। मृत्पिण्डस्य तद्विकाराणां घटशरावादीनां चाभिलापार्थक्रियादिभेदेनाऽत्यन्तभिन्नतया मृत्पिण्डज्ञानेन तद्विकाराणां ज्ञात त्वाऽयोगादि त्याशङ्कायां तदुपपादनार्थं वाचारम्भणश्रुतिः प्रावर्तत । तत्र प्रतिज्ञादृष्टान्तौ

क्रियादिव्यवहारभेदस्तु मृद्घटयो र्द्रव्यैक्येऽप्यवस्थाभेदात् भवत्येव । ततो मृद्घटयोरिव ब्रह्मप्रपञ्चयोरपि व्याप्यव्यापकभावादनन्यत्वम् । तथा पुराणवाणी, 'शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् । तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा' इति मृदयंघट इत्यत्र यथा मृद्व्याप्तिर्घटे दृश्यते, तथा ब्रह्मेदं जगदिति ब्रह्मव्याप्तिर्न दृश्यत इतिचेन्न, सन् घटः सन् पट इति सर्वत्र दृश्यत एव सद्रूपस्य ब्रह्मणो व्याप्तिः । सच्चिद्रूपेण शिवेन यदि न व्याप्तं जगत् तदा सत्त्वस्फूर्तिभ्यां विनाकृतं कथमस्ति स्फुरतीति दृश्येत । असदेव भवेत् । अतो मृदा घटादिकमिव कारणेन शिवेन कार्यमिदं व्याप्तं तदनन्यमुपपन्नमेवेति सिद्धम् ॥

प्रकृत्याधिकरणं व्याख्याते । इह हेतुत्वेनविवक्षिता वाचारम्भणश्रुतिर्व्याख्यायते । विकारो घटत्व पृथुबुध्नोदरत्वादिः । नामधेयं तत्प्रवृत्तिनिमित्तक घटादिपदं चेत्येतत् वाचारम्भणं वाचा घटमानयेत्यादिरभिलाप । तेन तज्जन्यार्थक्रियाऽप्युपलक्ष्यते । आरभ्यते अनेनेत्यारम्भणं कारणम् । वाचाया आरम्भणं अभिलापार्थक्रिययोः कारणमितिभावः । अनेनैतदुक्तं भवति मृत्पिण्डतद्विकारयो र्द्रव्यैक्येऽपि पिण्डपृथुबुध्नोदराद्याकारभेदेन तत्प्रवृत्तिनिमित्तकनामधेयभेदेन चार्थक्रियाऽभिलापभेद इति ॥

ननु द्रव्यभेदेनैव तद्भेदइति किमितिनेष्यते इत्याशङ्क्योक्तम् "मृत्तिकेत्येव सत्य" मिति । घटशरावादिकमपि मृत्तिकेत्येव प्रामाणिकं । मृदेवाऽयंघट इत्यादिप्रत्यभिज्ञाप्रत्ययाभ्यां गुरुत्वादिगुणयोगाद्युक्तिभिश्च तदेवेदमिति निश्चीयत इत्यर्थः । एवं प्रमाणसिद्धैक्यनिर्वाहाय अर्थक्रियाऽभिलापभेदस्य विकारनामधेयभेदोपाधिकत्वं कल्पयितुं युक्तमिति भाव । पक्षान्तरेण वाक्यं योजयति — अथवेति । भाष्ये द्वितीयव्याख्याने यतो घटो मृदेवेतिवाक्येन मृद्घटयो र्द्रव्यैक्ये प्रत्यभिज्ञारूप प्रमाणं दर्शितम् । प्रथमव्याख्याने "मृद्व्यतिरेकेण घटभावाऽदर्शना" दितिवाक्येन मृद्व्यतिरेकेण घटे गुरुत्वादिधर्माणा मदर्शनरूपायुक्ति र्दर्शिता । एवञ्च इह यद्यपि मृत्पिण्डघटशरावादीना मभिलापार्थक्रियादिभेद स्तथैवेन्द्रियाणामिव द्रव्यान्तरत्वेनाऽप्युपपद्यते । बाल्ययुवस्थविराणामिव वाऽवस्थाभेदेनाऽपि । तथाऽप्यत्राऽभेदेनैव तदुपपादनंकार्यं । कार्यकारणानन्यत्वस्य युक्त्यानुभवानुग्रहश्रुतिसिद्धत्वादि त्युपसंहरति — अतइति । अत्र "मृदयंघट" इत्यत्र यथा मृद्व्याप्ति र्घटेदृश्यते इत्यारभ्य "अवस्त्वेनभवे"

* सत्वाच्चाऽपरस्य ॥ २–१–१७ ॥

कार्यस्य कारणे सत्वाच्च कारणादनन्यदेव कार्यम् । घटशरावादिकं पूर्वं मृदेवासीदितिहि घटादिकं मृदात्मनोपलभ्यते ॥

## असद्व्यपदेशान्नेतिचेन्न, धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च ॥ २–१–१८ ॥

'इदं वा अग्रे नैव किंचनाऽसीत्' दिति कार्यस्य पूर्व मसद्व्यपदेशात् कारणे कार्यं मसदितिचेन्न । स्थूलत्वविरोधिसूक्ष्मत्वरूपधर्मान्तरयोगादेवाऽस्य मसद्व्यपदेशः, नाऽभावात् । कुतः ? तदसदेव सन् मनोऽकुरुत' इति वाक्यशेषात् । मनस्कारो हि विद्यमानस्यैव भवति । युक्तिरपि तथा धर्मान्तरयोगनिमित्ततामसद्व्यपदेश स्याऽवगमयति, पिण्डत्वघटत्व कपालत्वरूपैः परस्परविरोधिभिः भावरूपैः धर्मैः घटः प्राङ्नासीत्, दिदानी मस्ति, तदानीं न भविष्यतीति सदा विद्यमानस्यैव मृद्रव्य स्याऽसदादिव्यपदेशोपपत्तौ न तद्व्यतिरिक्तः कश्चि दभावोनामाऽसद्व्यप

दित्यन्त वाक्यजातं प्रक्षिप्तम् । प्रकृतेत्त्वाधिकरणभाष्ये । ननु सन्घटः सन्पटः इत्यादिष्वनुवृत्तं सद्रूपं ब्रह्म सत्यमित्याशङ्क्य प्रकाशादिवच्चेत्यादि सूत्रभाष्ये "अतो घटादिष्वनुवृत्तं सन्मात्रं प्रत्यक्षब्रह्मेति विरुद्धमेवेति वक्ष्यमाणभाष्येण विरोधा द्भगवति भाष्यकृति स्ववचनव्याघातदोषस्याऽनाशङ्कनीयत्वात् ॥

कारणे सत्वादिति । कारणे कार्यस्य तादात्म्येन सत्वा दित्यर्थः । पूर्वसूत्रे मृदः पाश्चात्यघटशरावादिरूपताऽऽपत्तिविषया प्रतिज्ञोदाहृता । अत्रतु घटशरावादीनां मद्रूपतापत्तिविषयेति विशेषः ॥

ननु कारणे कार्यस्यासत्वं यदुक्तम् तदसङ्गतम् । "असद्वा इद मग्र आसीत्" दितिश्रुतेः । इदंसर्वं घटशरावादिकं पूर्वाह्णेनासीदिति लोकव्यवहाराच्च इतिचेन्न धर्मान्तरेणेति सूत्रभागं विवृणोति – स्थूलत्वविरोधिसूक्ष्मत्वरूपधर्मान्तरयोगादिति ।

* अपरस्य अपरकालिकस्य कार्यस्य पूर्वं सत्वात् । कारणात्मना सत्वा दित्यर्थः ॥

देशावलम्बनं तद्धर्मान्तरं कल्पनीयमिति । तथा शब्दान्तराच्च । 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत' इत्यादि । अय मभिप्रायः एवं स्वाभिन्ननामरूपविभागानर्हसूक्ष्मचिदचिद्रूपपरशक्तिगर्भित शिवः केवलो भवति । पुनस्स्वात्मिकां तादृशीं शक्तिं पूर्वदशाविरोधि स्थूलत्वयुक्तनामरूपविभागार्हचिदचिद्रूपां बहिर्विस्तारयति । तत्र शक्तिमतः शिवस्य संकोचावस्था प्रळयः, विकासावस्था सृष्टिरिति । तथाऽप्र वचनमपि, 'चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः । योगीव निरुपादानमर्थजातं प्रकाशयेत्' ॥ इति निरुपादानमित्यनपेक्षितोपादानान्तरं स्वयमुपादानं भूत्वेत्यर्थः । ततः परमकारणात् परब्रह्मणः शिवादभिन्नमेव जगत्कार्यमिति ॥

निदर्शनान्तरमुच्यते ॥

---

ननु वायो रूपं नास्तीत्यादेरिव वाऽस्याऽप्यसद्व्यपदेशस्य अभावविषयत्वं युक्तम् । न तु सूक्ष्मावस्थाविषयत्वं । प्रसिद्धविषयं विहाय विषयान्तरकल्पने मानाऽभावादित्याशङ्कते — कुत इति । वैदिकस्य लौकिकस्य चाऽसद्व्यपदेशस्य सूक्ष्मावस्थारूपधर्मान्तरपरत्वकल्पने क्रमेण वाक्यशेषा युक्तेश्चेति सूत्रशेषोक्तं हेतुद्वयमुपपादयन् परिहरति — तदिति । तत् असदेव । सन्न्यामिति । मनोऽकुरुतेत्यन्वय । मनस्कारो मानमसङ्कल्प. अभावेनामेति । अभावाभावस्येव भावाभावस्याऽपि तद्विरोधिभावधर्मोपपत्तेः । क्वचिदप्यभावनाम धर्मान्तरं नाऽङ्गीकर्तव्यमित्यर्थः । शब्दान्तरादिति सौत्रहेतुरुभयत्र साधारण । लोकेऽपि घटशरावादिकं पूर्वं मृद्रूपमासीदिति शब्दान्तरस्य सत्त्वात् ।

ननु ब्रह्मकारणवादे ब्रह्मणः प्रळये किमव्याकृतत्वं निम्व सृष्टौ व्याकृतत्वम् । नहि निर्विकारस्य मृद्घटन्यायेनाऽवस्थाभेदः सम्भवती त्याशङ्क्य स्थूलसूक्ष्मप्रपञ्चविशिष्टस्य ब्रह्मण. कार्यकारणभावाऽङ्गीकारा द्विशेषणगतस्थूलसूक्ष्मावस्थाभ्यां विशिष्टे व्याकृतत्वाऽव्याकृतत्व व्यपदेश इत्याह — अयमभिप्राय इति । उत्तरसूत्रद्वयमवतारयति — निदर्शनान्तरमिति । स्थूलसूक्ष्मावस्थाभ्यामेकस्यैव द्रव्यस्य कार्यकारणभावे मृद्घटादिदृष्टान्तः प्राक्प्रदर्शितः । इदानीमेकद्रव्यत्वे कार्यकारणभेदवादिनामपि लोकप्रसिद्धः पटकुटिकादृष्टान्तः "पंचधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारया" मीति श्रुतिसिद्धः प्राणवायुः दृष्टान्ततया उदाह्रियत इत्यर्थः ॥

## पटवच्च ॥ २–१–१९ ॥

## यथा च प्राणादिः ॥ २–१–२० ॥

यथा संकुचित तन्तुरूपः पटः प्रसारितो महापटकुटीरूपेण कार्यं भवति तथा ब्रह्माऽपि संकुचितरूपं कारणं प्रसारितं रूपं कार्यम् ॥

यथा वायु रेकएव वृत्तिविशेषेण प्राणादिभेदं भजते, तथा ब्रह्माऽपि शक्तिव्यापारभेदेन सदाशिवादिरूपभेदं भजते। ततो ब्रह्मणः कारणा दनन्यदेव कार्यं जग दिति युक्तम् ॥ उक्तमर्थ माक्षिप्य समादत्ते ॥

## इतरव्यपदेशा द्धिताकरणादिदोषप्रसक्तिः ॥ २–१–२१ ॥

'तत्त्वमसि', 'अयमात्मा ब्रह्म' इत्यादिना कार्यभूतस्य जीवस्य कारणभूतब्रह्मव्यपदेशा दनन्यत्व मुपपादितम्। एवं सति परमेश्वरस्य जगत्कारणं स्वस्य हितरूपं, तत्करण महितरूपं च प्रसज्यते। ततश्च सर्वज्ञ स्सत्यसंकल्प ईश्वर स्स्वस्मा दनन्यस्य जीवस्य

---

सदाशिवादीत्यादिशब्देन महेश्वरशुद्धविद्यादिपृथिव्यन्तत्रयस्त्रिंशत्तत्त्वजात न्तत्प्रभव न्तानुभुवनभोगस्थानभोगोपकरणनिकुरम्बं गृह्यते। ननूत्तरसूत्रेण जीवब्रह्माऽभेदे दोष आशङ्क्यते — तदनुपपन्नम्। अनन्यत्वं व्याप्यव्यापकभावेनाऽपृथग्भावरूपम्। नत्वभेदरूपमिति प्राग्दर्शितत्वेन शङ्कानवकाशादि त्याशङ्क्य शङ्कामुत्थापयितु मवतारयति — उक्तमर्थमिति। अधिकन्त्वि त्युत्तरसूत्रकर्तव्येन एतच्छङ्कासमाधानेनस्यास्यन्तमर्थ मालोच्य मृद्घटादि दृष्टान्तोक्तिसमर्थनसमये तदुपयोगितया भाष्ये परं व्याप्यव्यापकभावेनानन्यदित्युक्तम्। सूत्रकार स्त्वेतच्छङ्कासमाधानसमयएव तमर्थमाविष्करोति। तस्मा दुक्तिशङ्कावकाश इति भावः ॥

इतरव्यपदेशा दित्यत्र इतरस्यजीवस्य ब्रह्मत्वव्यपदेशा दित्यर्थः। "तदनन्यत्व" मित्यादिसूत्रात् अनन्यत्वमिति "असद्व्यपदेशा" दितिसूत्रात् चेदितिचाऽनुवृत्य "तत्त्व मसि", "अयमात्माब्रह्मे"त्यादिषु इतरस्मि ञ्जीवे ब्रह्मभावव्यपदेशा दनन्यत्वञ्चेत्",

तापं स्वस्येति जानन् कथं संसारिनिमित्त महितं दगत्करण मनुवर्तते, हितं जगद्करणं च नाऽनुवर्तते। ततश्च शिवाऽनन्यत्वे परमेश्वरस्य स्वहिताकरणे स्वाहितकरणे च विवेकशून्यत्वादिदोषप्रसक्तिः। अतः कार्यकारणयो र्जीवेश्वरयो रनन्यत्व मयुक्त मितिचे द्युक्तमित्युच्यते॥

## अधिकन्तु भेदनिर्देशात् ॥ २–१–२२ ॥

कार्यकारणयो रनन्यत्वेऽपि कार्यभूतात् चिदचित्प्रपंचात् कारण मत्राधिकमेव श्रूयते, 'विश्वाधिको रुद्रो महर्षिः' इति। तथा भेदनिर्देशात्, तथाहि जीवेश्वरयो र्भेदो निर्दिश्यते। 'विद्याऽविद्ये ईशते यस्तु सोन्यः', 'क्षरात्माना वीशते देव एकः,' 'पृथगात्मानं प्रेरितारं च मत्वा,' 'द्वासुपर्णा सयुजा सखायौ,' 'द्वे ब्रह्मणी वेदितव्ये परंचाऽपरंच,' 'ज्ञाज्ञौ द्वा वजा वीशानीशौ', 'नित्यो नित्यानां चेतन श्चेतनानाम्', 'अन्तः प्रविष्ट श्शास्ता जनानाम्,' 'अस्मान् मायी सृजते विश्वमेतत्। तस्मिं श्चान्यो मायया सन्निरुद्धः,' 'जुष्टं यदा पश्य त्यन्य मीशम,' 'प्रधानक्षेत्रज्ञपति र्गुणेशः,' 'एष मीशे पशुपतिः पशूना' मित्यादिभि रनन्तश्रुतिभिः। अतो विश्वस्मादधिकमेव शिवापरनामधेयं ब्रह्म॥

---

हिताकरणादिना योदोषः विवेकशून्यत्वं तस्यप्रसक्तिरित्यर्थः। उपपादितमिति। आरम्भण सूत्र इतिशेषः।

ननु ब्रह्मण स्स्वाऽभिन्नजीवसंसारहेतुप्रपञ्चसर्गाऽकरणं हितम्। तत्करण महितञ्च भवतुनाम। तथाऽपि प्रपञ्च सृजतु। दृश्यन्तेहि लोके स्वहित मकुर्वाणा स्वऽहितञ्च कुर्वाणा स्स्वतन्त्राऽपित्यादि त्याशङ्क्याह – ततश्चेति। तस्मा दितरद्वेत्यर्थं ॥

मन्यं जीवादितरद्ब्रह्म। ततोऽधिकञ्च ईशित्रीशितव्यादिभेदविषयाऽनेकश्रुतिविरोधात्। अत स्तद्विरोध्येनाऽनन्यत्व मभेदश्रुतीनामर्थो न मुख्याभेदइति नकश्चिद्विरोधइति प्रदर्शनार्थं सूत्रम्॥

न त्वभेदश्रुत्यनुसारेण तदनन्यत्वमिति भेदश्रुत्यनुसारेण "अधिकन्तु भेदनिर्देशा" दितिसूत्रितवत स्सूत्रकारस्य कोऽभिप्रायइति प्रश्नोत्तराभ्यां निर्धारयति – नन्वित्यादिना।

ननु 'तदनन्यत्वमि' त्यभेदप्रतिपादनात् 'अधिकं तु' इतिभेदप्रति पादनात् प्रपञ्चब्रह्मणो र्भेदाभेदम्साधितो भवतीति चेत् न भेदाऽभेदकल्पनम् ॥

* विशिष्टाद्वैतं साधयामः। न वयं ब्रह्मप्रपञ्चयो रत्यन्तमेव भेदवादिनः, घटपटयो रिव। तदनन्यत्वपरश्रुतिविरोधात्। न चाऽत्य न्ताऽभेदवादिनः, न वा शुक्तिरजतयोरिव एकतरमिथ्यात्ववादिनः, तत्स्वाभाविकगुणभेदपरश्रुतिविरोधात्। न च भेदाभेदवादिनः, वस्तु विरोधात्। किंतु, शरीरशरीरिणोरिव, गुणगुणिना रिव च विशिष्टा द्वैतवादिनः। प्रपञ्चब्रह्मणो रनन्यत्वनाम मृद्घटयोरिव गुणगुणिनो रिव च कार्यकारणत्वेन विशेषण विशेष्यत्वेन च विना भावरहितत्वम्। नहि मृदंविना घटो दृश्यते; नीलिमानंविना चोत्पलम्। तथा ब्रह्मविना न प्रपञ्चशक्तिस्थितिः, शक्तिव्यतिरेकेण न कदाचिदपि ब्रह्म विज्ञायते, वह्निरि वौष्ण्यं विना। येन विना यन्नविज्ञायते त त्तेन विशिष्ट मेव। तत्त्वं च तस्य स्वभाव एव। अत स्सर्वथा प्रपञ्चाऽविनाभूतं ब्रह्म। तस्मा दनन्यदि त्युच्यते। भेदश्च स्वाभाविकः। ततश्च विश्वस्मा दधिकमेव परंब्रह्म। कारणत्वकार्यत्वव्यवस्था,

एव मारम्भणसूत्रप्रतिपादिताऽनन्यत्वस्वरूपविशेषनिर्धारणार्थतया एव मितरव्यपदेशादित्यादि सूत्रद्वयं व्याख्यातं। एव ङ्किमर्थम्? तन्निर्धारण मेतत्सूत्रद्वय मनपेक्ष्याऽऽरम्भणसूत्र सामर्थ्येनैवसिद्ध्यति। इदंतु सूत्रद्वयं ब्रह्मण स्सदोपजीवसंसर्गप्रयुक्ततदुष्टत्वशङ्कानिराकरणार्थ मधिकरणान्तरं व्याख्यायतामि त्याशङ्क्याह — कारणत्वेति। "अपीतौ तद्वत्प्रसङ्गा दसमञ्जसम्" ब्रा॥ सू॥ — २-१-८ "नतु दृष्टान्तभावात्" २-१-९॥ इति पूर्वोत्तरपक्षसूत्राभ्यां ब्रह्मणो जडजीवसंसर्गप्रयुक्ततदुष्टत्वनिराकरणं स्पष्टमेवकृतम्प्रागि त्यतिस्पष्टं तात्पर्यंच मस्य नयुक्तं। किन्त्वारम्भणसूत्रस्य भेदसाधकसूत्रसाहित्येन

* विशिष्टाद्वैतं साधयाम इति अभेदश्रुत्यनुसारेण तदनन्यत्वमिति भेदश्रुत्यनु सारेण अधिकन्तु भेदनिर्देशादिति च सूत्रितवत स्सूत्रकारस्याऽपि भेदाभेदा त्यन्तभेदा त्यन्ताभेदान्यतर मिथ्यात्वरूपपक्षचतुष्टयनिराकरणेन विशिष्टाद्वैतमेवाभिमत मिति भावः॥

नतुदृष्टान्तभावा दित्यत्र निरूपिता । तस्मात् भेदाभेदश्रुतीना मविरुद्ध एवाऽयं मार्गः ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २–१–२३ ॥

सर्वथा जीवेश्वरयो रभेदएवाऽभेदश्रुतिभि रिति चे न्न । अनुपपत्तेः । अश्मकाष्ठलोष्ठतृणादे रचेतनस्येव जीवस्याऽप्यज्ञत्वादिना सर्वज्ञत्वादियुक्ता दीश्वरा दत्यन्तविजातीयत्वश्रवणात् तयो रेकभावानुपपत्तेः । तस्मा दीश्वरा जीवा दर्थान्तरभूतएव । एवं चेतनस्याऽप्यधिकगुणवैषम्या दीश्वरभावानुपपत्तिः । किमुताऽचेतनस्य स्वरूपविलक्षणस्येति तात्पर्यम् । सर्वथा श्रुतिस्मृतिन्यायैः कार्यत्वेन स्वानन्यभूतादपि चेतनाचेतनप्रपञ्चा दीश्वरस्या दधिकएव सर्वज्ञः सर्वशक्तिः परमेश्वरः ॥

इति आरम्भणाधिकरणम्

---

भेदादिरूपेण स्यानन्यत्वपर्यवसायित्वं नस्पष्टमिति तद्विषयत्वेनारम्भणाधिकरणशेषत्वमेवास्य युक्तमिति भावः । एतेन यत् श्रीभाष्यकृद्भिः पृथक् इतरव्यपदेशाधिकरणत्वेन व्याख्यात त्सदसदिति प्रकृतभाष्यार्थस्थैर्यगोपनार्थतया समाचरितमिति व्यक्तम् ।

सूत्रेण निवर्तनीयांशङ्का माह – सर्वथेति । तदनन्यत्वमिति त्यत्यन्ताभेद इत्येव युक्त मभेदश्रुतिबाहुल्या द्भेदश्रुतीना मौपाधिकभेद विषयत्वे नोपपन्नत्वा दिति शङ्कार्थः । अनुपपत्तेरिति अभेदश्रुते रुपपत्तिरहीतत्वा दुपपत्तिमहकृताभेदश्रुतेरेव प्रबलत्वात् । अश्मादिवच्च – अश्मकाष्ठलोष्ठतृणादे रचेतनस्येव जीवस्य तदनुपपत्तिः । ब्रह्मभावानुपपत्तिरिति सूत्रार्थः ॥

अत्राऽधिकरणे यत्केवलाऽद्वैतवादिभिः "तदनन्यत्वमि" त्यत्र तस्मात्कारणात्परमार्थतोऽनन्यत्व व्यतिरेकेणाऽभाव कार्यस्य अवगम्यतइ त्यसत्कार्यवाद । आलम्बितः सोऽपसिद्धान्तइति सर्वैर प्यास्तिकै निराकृतएव । "सत्वाच्चापरस्ये" ति सूत्रकृताऽपि सत्कार्यवादमवलम्बताऽत्र दूषितोऽकिञ्चित्करइ त्यलमधिकेन ॥

इति आरम्भणाधिकरणम्

अथ उपसंहारदर्शनाधिकरणम् ८

## उपसंहारदर्शनान्नेति चेन्न, क्षीरवद्धि ॥ २–१–२४ ॥

## देवादिवदपि लोके ॥ २–१–२५ ॥

'एकमेवाऽद्वितीयम', 'द्यावा पृथिवी जनयन् देव एकः' इत्यादिषु परमेश्वर एकएव जगतः कारण मवगम्यते। तस्यै कस्य विचित्रजगत्कारणत्वं युक्त नवेति संशये न युक्तमिति वदामः। तदसम्भवात्। कार्य मेत दाकाशवाय्वग्निसलिलरूपं विचित्र। कथ मेतत् कारणवैचित्र्य मन्तरेण सम्भवति? दृश्यते हि रथादि कार्येषु बहुकारकोपसंहारः। तस्मा देककारणत्वं न सम्भव तीति चेत् नैत द्युक्तम। एकस्याऽपि कार्यरूप परिणाम स्सम्भवप त्येव। यथा क्षीर स्यैकस्यैव दधिभावेन। तस्मात् ब्रह्मैककारणं जगत्कार्यम्। यदुक्तं कार्यवैचित्र्यं कारणवैचित्र्यापेक्ष मिति तदसत्। चेतना देकस्मात् पुरुषात् केशनखादिविचित्रकार्यनिष्पत्तिदर्शनात। अतो सर्वं विचित्रजगत्कार्यनिर्वाहि ब्रह्म न कारणान्तरापेक्षमिति॥

शक्तिमतां सम्भाव्यतएवेत्याह ॥

देवादे श्शास्त्रावगतशक्ते र्यथा स्वापेक्षितनानारूपादिभावः, एवं शास्त्रावगतशक्तेः परमेश्वरस्य सर्व मुपपद्यते। 'य इमान् लोका

---

अथ उपसंहारदर्शनाधिकरणम् ८

"द्यावा भूमी जनय न्देवएक" इतिविषय। असहायस्यब्रह्मणः विचित्रजगत्कार णत्वं युज्यतेवा नवेति संशयः। रथकारादीना सहकारिकारणकलापसहितानामेव रथादि कार्यकर्तृत्वदर्शना त्केवलस्य ब्रह्मणोऽनन्तविचित्रात्मकजगत्कारणत्वं नयुज्यतइति पूर्वपक्ष.। क्षीरस्यैकस्यैव दधिभावेनपरिणामात् पुरुषस्यैकस्यैव नखकेशादिजननत्वाच्च देवादीना

नीशात ईशनीभिः जननीभिः परमशक्तिभि' रिति। परमेश्वर स्याऽनन्तशक्तिमत्त्वं श्रूयते। तस्य किमसाध्यम ॥

इति उपसंहारदर्शनाधिकरणम्

---

अथ कृत्स्नप्रसक्त्यधिकरणम् ९

## कृत्स्नप्रसक्ति र्निरवयवत्वशब्दकोपो वा ॥ २–१–२६ ॥

अत्र ब्रह्मणो जगदाकारेण परिणामः पूर्वोक्तो युज्यते नवेति सन्देहः। कथं युज्यते? एकस्यैव जगदाकारेण परिणाम इत्युक्तम्। तस्य क्षीरस्येव दधिरूपेण सर्वात्मना जगदाकारेण परिणामे कृत्स्न स्याऽपि कार्यत्वप्रसक्तिः। न ब्रह्म परिशिष्येत। केनचिदंशेनचे त्तस्य निरवयवत्वश्रुतिकोपो वा भवति। तस्मा ब्रह्मणः परिणामो न युक्त इतिप्राप्ते ब्रूमः ॥

ससहायानामेव सङ्कल्पमात्रेण स्वाऽपेक्षितनानावस्तुजननशक्तिमत्वाच्च अनन्तशक्तिमतः परमेश्वरस्याऽसहायस्यैव सर्वजगत्कारणत्वं युज्यतएवेति सिद्धान्तः ॥ उपसंहारदर्शना त्कार्यनिष्पत्ता वनेककारकोपसंहारदर्शना न्नैकस्यब्रह्मणो जगत्कारणत्वं युज्यतइतिचे न्न क्षीरवत्। क्षीरस्यैकस्यैव दधिभावइव ब्रह्मणोऽपि सम्भवतीति सूत्राऽर्थः ॥

इति उपसंहारदर्शनाधिकरणम्

---

अथ कृत्स्नप्रसक्त्यधिकरणम् ९

कृत्स्नप्रसक्त्यादिदोषप्रसङ्गाऽप्रसङ्गाभ्यां संशयंदर्शयति – अत्रेति। पूर्वस्मिन्नधिकरणे क्षीरस्य दधिभावेनेव ब्रह्मणः प्रपञ्चरूपेण परिणामः प्रतिपादितः। तंविकल्प्य दूषयति– कथं युज्यत इति। ब्रह्म कृत्स्नमपि जगदाकारेणपरिणमते ? उत केनचि दंशेन क्षीरस्येव ? सर्वस्याऽपि ब्रह्मणो जगदाकारेणपरिणामे जगद्व्यतिरेकेण ब्रह्म नाऽवतिष्ठेत। अथ केनचि दंशेन परिणमतइत्युक्ते ब्रह्म निरवयवमिति वृत्तन्तीश्रुति र्व्याकुप्येत। तस्मा ब्रह्मणः परिणामो नयुक्तइति पूर्वपक्षः।

## श्रुतेस्तु शब्दमूलत्वात् ॥ २–१–२७ ॥

ब्रह्मणो जगत्परिणामो युक्त एव, तच्छ्रुतेः । श्रुतिरेवात्र प्रमाणम्, न प्रमाणान्तरम् । शब्दमूलत्वादेव तस्य सकलेतरप्रमाणावगतवस्तुविजातीयत्वेन तत्राऽदृष्टशक्तियोगेन विरोधाऽभावात् । अतः परिपूर्णस्य तस्यैव कार्यत्वं कारणत्वं च सम्भवति । यथा, जातिवादिनां जातेः खण्डमुण्डादिष्वत्यन्तविलक्षणेष्वनन्तेषु प्रत्येकमेकस्या एव परिसमाप्य वृत्तिः न तत्रेतरवस्तुदृष्टान्तेन चोद्यम् । तस्मात् ब्रह्मस्वरूपनिरूपणे शब्द एव मूलमिति न कश्चित् विरोधः ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २–१–२८ ॥

जीवात्मन्यचिद्धर्मविरोधिधर्मयोगोऽपि विजातीयत्वादेव भवति, अग्निजलादयोऽप्यचिद्विशेषात्मानोऽन्योन्यविलक्षणशक्तयो दृश्यन्ते विचित्रा एव । ततो ब्रह्माऽपि शब्दैकप्रमाणकं विचित्रानन्तशक्तिकमिति तत सर्वोऽविरोधः ॥

---

एवंविधशङ्कायां नावकाशोऽस्ति । कुत इति चेत् श्रुतिप्रामाण्यादेव । निरवयवं ब्रह्म जगदाकारेण परिणमते पूर्णब्रह्म तद्व्यतिरेकेणाऽवतिष्ठते चेति सिध्यति । श्रुतेरेव कुतर्काऽऽपाद्यमानविरोधस्य प्रसक्ति नास्ति, । "नैषा तर्केण मतिरापनी"येति श्रुते रित्यर्थः । तर्काऽगोचरे ब्रह्मणि रूपे श्रोतव्येऽस्य तर्कस्य साधकत्वव द्बाधकत्वस्याऽप्यसम्भवादित्याशयेन सूत्रोक्तं सिद्धान्तमाह –ब्रह्मण इति । श्रुतिमात्रेणाऽप्यपरितुष्ट तार्किकम्मन्यमुद्दिश्याह – यथेति । व्यक्तिषु जाति र्नोऽशेन वर्तते निरवयवत्वविरोधात् । परिसमाप्य वर्तत इत्येव हि वक्तव्यम् । तर्हि – व्यक्ता वेकत्र परिसमाप्य स्थिता–स्थानपरिशिष्यतं चेद्व्यक्त्यन्तरेऽनुपलम्भास्यादिति । एवमेव ब्रह्म श्रुतिप्रामाण्येन जगदाकारेण परिणमते यथा पूर्वं परिपूर्णमवतिष्ठते चेति तत्र नकाप्यनुपपत्तिरित्यर्थः ।

आत्मनि चैवमित्यंशं व्याचष्टे – जीवात्मनीति । यथा ब्रह्मणः परिणामित्वेऽपि तस्मिन्परिपूर्णत्वलक्षण श्चिदचित्प्रपञ्चधर्मविलक्षणोधर्म स्तथा जीवात्मन्यपि अचित्प्रपञ्चधर्म

## स्वपक्षदोषाच्च ॥ २–१–२९ ॥

कृत्स्नप्रसक्त्यादिदोषो निरवयवे अचित्सजातीये प्रधानादौ न ब्रह्मणि शास्त्रप्रमाणके, सर्वशक्तिमत्त्वेनतस्य सर्वोपपत्ति माह :—

## सर्वोपेता च तद्दर्शनात् ॥ २–१–३० ॥

'परास्यशक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच,' 'मायान्तु प्रकृतिं विद्या न्मायिनन्तु महेश्वर' मित्यादि दर्शनात सर्वाऽपि शक्तिः ब्रह्माश्रितेति विज्ञायते । अतः सर्वशक्तिमत स्तस्य किं न सम्भवति ॥

---

विलक्षण कर्तृत्वभोक्तृत्वादिविलक्षणोधर्म स्तस्मा दुचितप्रपञ्चदृष्टान्तेन बाधआपादितुं शक्यतइति भावः । विचित्राश्चहीति सूत्रभागं व्याचष्टे — अग्निजलादयोऽपीति । विचित्रा एवेति । नतु परस्परदृष्टान्तेन परस्परविलक्षणधर्ममूला इतिभाव । हिशब्दोऽवधारणार्थः ॥

निरवयवे इति । ननु प्रधानस्य सत्वरजस्तमसामे वाऽवयवत्वेनतस्य निरवयवत्वं नोपपद्यतइतिचे न । माभूच्चै स्सत्वरजस्तमसां प्रत्येकम प्युपादानत्वेनाऽङ्गीकृतत्वेनाऽवयवत्त्वाऽभावात् । अचित्सजातीयेनिमृत्पिण्डादिजडदृष्टान्तेन कल्प्यमानतया तत्सजातीयएव तद्दृष्टान्तेन दोषापादन मवकाशलभत इतिभाव । "प्रधानादा"वित्यादिशब्देन परमाणवो गृह्यन्ते । परमाणवोहि तार्किकै र्निष्प्रदेशा स्संयोगदेशवर्तिन श्चाऽभ्युपगम्यन्ते । तस्मा त्परमाण्वो स्संयोगस्य कृत्स्नपरमाणुव्यापित्वश निष्प्रदेशयो स्तयोः प्रदेशवत्त्वंवा तयो स्संयोगाभावेऽपि द्व्यणुकजनना दृष्टविरोधोऽनिवार्यः । शास्त्रप्रमाणके ब्रह्मणितु शुष्कतर्काणां शास्त्रविरोधेनैव शुष्कतर्कप्रमाणकप्रधानादौ केनचिदुपायेन तेषां कुतर्कत्व मुपपादयितुं शक्यमिति भाव । उत्तरसूत्र मवतारयति — सर्वशक्तिमत्त्वेनेति । ब्रह्मणः परिणामित्वेऽपि प्रकृतिबलेन परिपूर्णत्वमुपपादित मिदानीं श्रुतिसिद्धसर्वशक्ति मत्त्वेन तदुपपादनार्थम् सूत्रम् ॥

सर्वशक्तिमतइति । अल्पशक्तिमतामपि प्रपञ्चवर्तिचिदचिद्वस्तूना मतर्कणीयं बहुविधवैचित्र्यं दृश्यते । किमुत सर्वशक्तिमत इतिभावः । शक्तिमतामपि चेतनाना

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ २-१-३१ ॥

'न तस्य कार्यं करणं च विद्यत' इति ब्रह्मणो विकरणत्व मुच्यते। ततोऽस्य न कारणत्व मिति चेत तस्योत्तरं शब्दमूलत्वा दिति पूर्वं मुक्त मेव। विचित्रानन्तशक्तिशबलमायापरमशक्तिविशिष्टः परमेश्वर स्स्वशक्तिशकलेन प्रपञ्चाकारः स्वतः प्रपञ्चाऽतीतश्च भवती त्यत्र 'मायान्तु प्रकृतिं विद्या' दिति श्रुतिरेव भगवती प्रमाणम्। अत्र विषये पुराणं च 'विश्वोत्तरोत्तर विचित्रमनोरथस्य यस्यैकशक्ति शकले सकल स्समाप्तः। अध्वान मध्वपति मध्वविदो वदन्ति तस्मै नम स्सकललोकविलक्षणाय' इति। एवं सकलदोषकळङ्क रहितशब्दप्रमाणैकसिद्धे सर्वशक्तिसंपद्विलासे परमेश्वरे परब्रह्मणि संभावनाऽसंभावनाविचार स्सर्वोऽपि निरवकाश एव॥

इति कृत्स्नप्रसक्त्यधिकरणम्

---

करणकळेबरवैशिष्ट्यएव शक्त्युन्मेषो दृश्यते। तत स्तद्रहितस्य विद्यमानमपि सर्वशक्ति मत्त्व मध्ययनरहितस्य धीशक्तिमत्त्वमिव निरुपकारकमितिशङ्कानिराकरणार्थम् सूत्रम्॥

करणग्रहणम् कळेबरस्याऽप्युपलक्षणम्। तदुक्तमिति सूत्रखण्डं विवृणोति — तस्योत्तरमित्यादिना। तत्प्रश्नस्यशब्दमूलत्वादिति समाधान मुक्तमित्यर्थः। युक्तिकल्पि तेश्वरवादेऽयं दोषस्स्या न्नतु श्रुतिसिद्धेश्वरवाद इति भावः। स्वशक्तिशकलेनेति। शक्त्यावस्थारूपस्य पूरुषस्य शकलशब्देनग्रहणम् पुरुषावस्थापरिणामेऽपि शक्तेरवैकल्यं द्योतयितुं विश्वोत्तरेति। मनोरथ स्सङ्कल्पः। सकल ष्षड्विधोऽप्यध्वा। समाप्तः — विश्रान्तः अध्वविदः वेदपर्यंजानाना स्त्रयीविद्याविदः। वदन्ति "अध्वना मध्वपते श्रेष्ठस्याऽध्वनः पारमशीये"त्यामनन्ति। अधिकरणार्थ मुपसंहरति — एवमिति। सर्वोपेताचेति सूत्रविवरणे श्रीभाष्यकृद्भिः "पराऽस्यशक्ति र्विविधैव श्रूयत"इति श्वेताश्वतरोपनिषद्गतवाक्येनैव सर्व शक्तिमत्त्वस्योपपादितत्वा न्मन्त्रोपनिषद् दिशानैकविषयत्वेनाऽपि परमशिवस्यैव कारणत्व मवशतोऽङ्गीकृतमितिदिक्॥

इति कृत्स्नप्रसक्त्यधिकरणम्

---

अथ प्रयोजनवत्त्वाधिकरणम् १०

पुनरन्यथाऽऽक्षिप्य परिहरति ॥

## न प्रयोजनवत्त्वात् ॥ २-१-३२ ॥

शास्त्रावगतसर्वशक्तेः ब्रह्मणः सर्वेषु कार्येषु कारणसामर्थ्यं सम्भवतीति निर्णीतम्। तथाऽपि सर्वप्रवृत्तेः प्रयोजनवत्त्वात् अवाप्तसकलकामस्य परमेश्वरस्य जगत्सृष्ट्यादिव्यापारः सम्भवति, न वेति सन्दिह्यते।

कथं सम्भवति? 'आनन्दो ब्रह्म,' 'विभुं चिदानन्दस्वरूपमद्भुतम्' मित्यादिभिर्निरतिशयानन्दरूपो नित्यतृप्तो हि श्रूयते। तथाऽसौ सृष्ट्यादिव्यापारेषु प्रयोजननिरपेक्षः प्रवर्तेत, यदि सप्रयोज

न नु तर्कनिरूपणेनावाप्तसमस्तकामस्य राज्ञस्य परमेश्वरस्य निष्प्रयोजने जगत्सृष्ट्यादिव्यापारे न प्रवृत्तिरुपपद्यत इत्याक्षिप्य समाधीयते। एवंविधस्याक्षेपस्य नाऽवकाशोऽस्ति परमेश्वरस्याऽवाप्तसमस्तकामत्वेन जगत्सृष्ट्यादिप्रवृत्तिरपि श्रुतिसिद्धतया "श्रुतेस्तु शब्दमूलत्वा" दिति सूत्रेण उक्तोत्तरत्वादित्याशङ्कायामवतारयति — पुनरन्यथेति। अस्याऽयं भावः। अलौकिकेषु वेदैकसिद्धेष्वपि तद्विरोधिशुष्कतर्कैर्न प्रवर्तत इत्येवमाक्षेपस्याऽनवकाशेऽपि नतावता वैदिकमार्गश्रद्धाविहीनानां शुष्कतार्किकाणामाक्षेपाकाङ्क्षा शाम्येत्। अतएव पूर्वसूत्रे तदुक्तमित्यनेन परमेश्वरस्याऽपि स्थूलसूक्ष्मप्रपञ्चरूपशरीरकत्वमन्तर्याम्यधिकरणादिषूक्तम्। ज्ञानकर्मेन्द्रियरहितस्तु नित्यसिद्धसार्वज्ञ्यस्य सङ्कल्पमात्रेण देवादीन् स्रष्टुं शक्तस्य नाऽपेक्षितमिति "शास्त्रयोनित्वाधिकरणादि पूक्तप्राय मित्यपि विवक्षितम्। इह तु तदाकाङ्क्षाशान्तिकारणं प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वनियमस्य व्यभिचारदर्शनं प्रागनुक्तमिति तदर्थं मधिकरणाऽन्तरारम्भ इति ॥

सङ्गतिपूर्वकं संशयं दर्शयति — शास्त्रावगतेति। यद्यपि सर्वशक्तिमत्त्वहेतुना कृत्स्नप्रसक्त्यादिदोषनिराकरणं कृतेऽपि प्रेक्षावत्प्रवृत्तेः सप्रयोजनत्वनियमनिराकरणं न सम्भवतीति प्रत्युदाहरणसङ्गत्या निरुक्तनियमसम्भवाऽसम्भवाभ्यां संशय इत्यभिप्रायः।

नाऽस्य प्रवृत्तिः, नित्यतृप्तताहानिः स्यात् । अन्यथा जडादिव दनुचितकार्यतास्या दितिप्राप्तो ब्रूमः ॥

## लोकवत्तु * लीलाकैवल्यम् ॥ २–१–३३ ॥

यदुक्तं नित्यतृप्तस्य प्रयोजनाभावा दप्रयोजना जगत्सृष्ट्यादि प्रवृत्ति र्नसम्भवतीति, त न्नसम्भवत्येव । निष्प्रयोजनाऽपि प्रवृत्तिः केवलं लीलामात्रेण परमेश्वरस्य यथा लोके प्रयोजन

परमेश्वरस्य स्रष्टृत्व न्नसम्भवति प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वनियमादिति सूत्रोक्तपूर्वपक्ष मुपपादयति — अन्यथेति । निष्प्रयोजनत्वेदित्यर्थ । प्रयोजनं द्विविधम् स्वार्थं परार्थञ्चेति । परमेश्वरस्याऽवाप्तसमस्तकामत्वा त्सृष्टि स्स्वार्था नसम्भवति । बहुलदुःखाकरत्वा ज्जगत् । तत्सृष्टिः परार्थाऽपि करुणावत स्सम्भवती त्युभयथाऽपि निष्प्रयोजनत्वा त्प्रेक्षावत स्सम्भव तीतिभावः । नच बुद्धिमतामपि निष्प्रयोजना कन्दुकक्रीडादिप्रवृत्ति र्दृश्यत इति शङ्क्यम् । तत्राऽपि क्रीडापराणां तात्कालिकानन्दप्रयोजनस्याऽनुभवसिद्धत्वात् । नाऽपि परमेश्वरस्य जगत्सृष्टावपि तादृशं प्रयोजनं कल्प्यम् । अवाप्तसमस्तकामत्वश्रावणविरोधात् ॥

ननु क्रीडानन्दार्थाप्रवृत्ति राप्तकामत्वविरोधिनी । अवाप्तसमस्तकामानामपि राज्ञां कन्दुकक्रीडादिप्रवृत्तिदर्शना दितिचे न्न अवाप्तभोगान्तरप्रयुक्तसकामाना मपि राज्ञा मनवाप्तक्रीडानन्दानामेव तत्र प्रवृत्तेः । न ह्येवं परमेश्वरे वक्तुं शक्यम् । तस्य सर्वात्मना अवाप्तसमस्तकामत्वा दितिभावः ॥

स्वार्थिकतद्धितान्तः कैवल्यशब्दः । एवञ्च जगत्सृष्टिः केवलं लीलेत्यर्थः । सुखिन स्सुखानुभवप्रयुक्तवेगादि र्लीला । सा द्विविधा । तात्कालिकानन्दाद्यर्थाप्रयोजनलीला । तदपि प्रयोजनमनुद्दिश्य प्रवृत्ता केवललीलाच । नच द्वितीया नविद्यतइतिशङ्क्यम् ।

---

* लीलाकैवल्यमिति कैवल्यशब्द स्स्वार्थिकतद्धितान्तः वैरूप्यशब्दवत् लोके दुःखाद्यतिरेके निष्प्रयोजन रुदितादि करणवत् निरतिशयानन्द प्रयुक्ता केवल लीलैव ब्रह्मणो जगत्सृष्टि रित्यर्थः । यद्वा लीलाशब्द स्स्वाभाविकक्रियावाची तथाच लोके स्वाभाविकनिमेषादिवत् गान व्याख्यानादिषु केषाञ्चित् शिरोङ्गुलि चालनादिवच्च स्वभावीय मीश्वरस्य सृष्टि रिति भावः । "क्रीडार्थं सृष्टिरित्यन्ये भोगार्थ मिति चाऽपरे देवस्यैष स्वभावोय माप्तकामस्य कास्पृहे"तिश्रुतेः ॥

मन्तरेणाऽपि केवलं लीलया कन्दुकताडनादिषु प्रवृत्तिः, तथा परमेश्वरस्याऽवाप्तसमस्तकामस्याऽपि लीलया सृष्ट्याऽऽदिप्रवृत्तेरविरोधः ॥

इति लीलाकैवल्याधिकरणम्

अथ वैषम्यनैर्घृण्याधिकरणम् ११

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥२–१–३४॥

प्रयोजनाभावेऽपि लीलया परमेश्वरस्य जगत्सृष्ट्यादिषु प्रवृत्तिरिति निरूपितम्। तत्र पुनः सन्दिह्यते, सैषा सम्भवति न वेति ॥

दृश्यते लोके यथा सुखोद्रेके हासगानादेः प्रयोजनरहितस्य सर्वानुभवसिद्धत्वात्। अतएव श्वासनिश्वासादिषु कारणमेवापेक्ष्यते नतु प्रयोजनम्। एवमेव परमेश्वरस्य सृष्टिः नित्यनिरतिशयानन्दानुभवप्रयुक्ता केवललीलेत्याशयः। अत्र लीलाशब्दः क्रियावाची नतु विलासरूपक्रियाविशेषवाची। कैवल्यशब्देन प्रयोजनोद्देश्यव्यवच्छेदेन स्वाभाविकत्वं लभ्यते। एवञ्च यथा प्राणिनां निमेषादिक्रिया स्वाभाविकी। यथाच केषाञ्चित् [illegible] शिरःकम्पनादयः स्वाभाविकाः नतु प्रयोजनापेक्षास्तथैव परमेश्वरस्य सृष्ट्यादिव्यापारा इति भावः। अतएव 'स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतौ सृष्ट्यादिक्रियाया अपि स्वाभाविकत्वं श्रूयते। माण्डूक्येऽपि "क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चाऽपरे। देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा" इति श्रूयते। यद्वा — लीलाशब्दोऽत्र अनायासकर्मपरः लीलामात्रमेतस्य [illegible] इति तत्राऽपि प्रयोगदर्शनात्। कैवल्यशब्दस्तु प्रयत्नायासस्याऽनपेक्षाद्योतनार्थः। एवञ्च परमेश्वरस्याऽनायाससाध्या निश्वसितादिकल्पतया स्वाभाविकत्वेन श्रुता सृष्ट्यादिक्रिया न प्रयोजनाऽपेक्षा इति भावः। एवं सर्वं मनसि निधाय सिद्धान्तमाह — यदुक्तमित्यादिना ॥—

इति लीलाकैवल्याधिकरणम् ॥

अथ वैषम्यनैर्घृण्याधिकरणम्

पूर्वाधिकरणाऽर्थानुवादेनाक्षेपसङ्गतिं दर्शयति — प्रयोजनाभावेपीति। सृष्टौ वैषम्याऽपादकत्वाऽनापादकत्वाभ्यां संहारस्य नैर्घृण्यापादकत्वाऽनापादकत्वाभ्याञ्च संशयं दर्शयति तत्र पुनरिति ॥

लीलयाऽपि परमेश्वरस्य सृष्टि र्न सम्भवति. परिपूर्णतया रागद्वेषादिहीनत्वात् । सकलसमत्वेन मध्यस्थ एव हि परमेश्वरः । तस्य केषाञ्चित् सुखमयं देवादिशरीरं केषाञ्चि दुःखोत्तरं मनुष्यादि शरीरं सृजतो वैषम्यं दुर्वारम् । सृष्टे स्संहारपूर्वकत्वात् । सकलं युगप त्संहरतो नैर्घृण्यं च भवेत् । तदेव मपुरुषार्थसम्बन्धापादिन्या जगत्सृष्ट्या किं परमेश्वर स्येति प्राप्ते ब्रूमः ।

सर्वदा जगत् सृजतः परमेश्वरस्य वैषम्यनैर्घृण्ये न भवतः । कर्मसापेक्षत्वात् । सृष्टिवैषम्यस्य 'ज्ञाज्ञौ द्वा वजा वीशानीशा' वित्यादि श्रुते र्यथा जीवानां मनादित्वं, तथा तत्कर्मणाम प्यनादित्वं दृश्यते । हि यतः कर्मप्रवाहसिद्धोऽयं संसारः । परमेश्वरो हि जीवानां विचित्रं कर्म सर्वज्ञतयाऽवलोक्य स्वशक्त्या तत्तदनुगुणमेव भोगायतनं देवादिशरीरं सृजति । कर्ममूलमेव सृष्टिवैषम्यम् । संहारश्च जीवानां संसारव्यापारखिन्नानां सुषुप्तिवत् विश्रान्तिहेतुतया परमेश्वरस्य न नैर्घृण्यापादकः ।

---

ननु यदि लीलारूपः परमेश्वरस्य सृष्ट्यादिव्यापारः वैषम्यनैर्घृण्यादिदोषापादकस्त्वया तर्हि युज्येत । अयन्तु रागद्वेषादिदोषापादकः । तस्मा न्न युज्यते । न च "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इति श्रुतेः जगद्वैषम्यं कर्मविशेषमूलं ईश्वरस्तु तदुत्पत्तौ सस्योत्पत्तौ पर्जन्यवत् साधारणकारणं । यथा व्रीहियवादिवैषम्ये तत्तद्बीजगतान्येवाऽसाधारणानि सामर्थ्यानि कारणानि तथा सृष्टिवैषम्यम् । तस्मा दीश्वरस्य निरवद्यत्वं न हीयत इतिवाच्यम् । "सदेव सोम्येद मग्र आसीत्" एकमेवेति श्रुत्यैव सृष्टेःप्रा गेकत्वाऽवधारणेन कर्मणामभावावगमनसर्गादिकाले कर्माऽनपेक्षयैव प्राथमिक देवमनुष्यादिविषमसृष्टिं कुर्वत स्तस्य वैषम्यदोष स्सापरिहार्यत्वात् कथञ्चि त्तत्परिहारेऽपि सृष्टे स्संहारपूर्वकतया नैर्घृण्यादिदोषस्याऽपरिहार्यत्वाभावाच्च । कर्मापेक्षत्वे तस्याऽनीश्वरत्व प्रसङ्गाच्च "एषह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एषह्ये वाऽसाधुकर्म कारयति तं यमधो निनीषत" इत्यादिश्रुत्यनुसारेण कर्मणामपि तत्कारित

ननु जीवानां सुखदुःखादौ कर्मणएव प्रयोजकत्वात् किमप्रयोजकेन परमेश्वरेणेति चेन्न। कर्मणोऽपि तदधीनत्वात् तस्य न स्वातन्त्र्यहानिः। पुनरपि घट्टकुटीप्रभातन्यायेन कर्मण स्वातन्त्र्याभावे परमेश्वरस्य वैषम्यादिदोषापत्तिरिति नवाच्यम्। कर्मशब्दानामनन्तानां मायागतानां संस्थापकमात्रत्वात् परमेश्वरस्य कर्मणामेव स्वशक्तिवशात् सृष्टिवैषम्यहेतुत्वे तद्व्यवस्थापकमात्रस्य न वैषम्यम्॥

ननु जीवानां शरीरसृष्टौ वचेतनस्य कर्मण श्चेतनानधिष्ठितस्याऽसामर्थ्यात् परमेश्वरएव प्रयोजक इति वक्तव्यम्॥ कथमसौ सृष्टेःप्राक् संहृतभोगसाधनतया संसारक्लेशरहितान् सुखिनो जीवान् पुनरपि संसारहेतुना शरीरेण योजयति परमकारुणिकोऽपि स निर्घृणं इच्यते। सर्वानुग्राहकः परमेश्वरः। स जीवानां कर्मपाकमन्तरेण ज्ञानानुदयात्, तज्ज्ञानमन्तरेण निरतिशयानन्दमोक्षाभावात्, कर्मपाकस्य च भोगमन्तरेणाऽनुपपत्तेः, तत्कर्मफल

---

त्वाऽङ्गीकारे वैषम्यादिदोषस्य दुर्वारत्वाच्च। इतिपूर्वपक्षं दिङ्मात्रेण दर्शयति — लीलेत्यादिना। सापेक्षत्वादित्यन्तसूत्रभागोक्तं वैषम्यनैर्घृण्याऽऽपत्तिपरिहारं दर्शयन् सिद्धान्तयति — सर्वेश्वरेति। प्रथमप्रश्ने कर्माऽसम्भवशङ्कापरिहारं तथाहि दर्शयतीति सूत्रभागोक्तं दर्शयति — ज्ञाज्ञाविति। "ज्ञाऽज्ञौ द्वावजा वीशानीशा"विति श्रुतिः यथा जीवानामनादित्वं दर्शयति तथा तत्कर्मणामप्यनादित्वं दर्शयति। "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इत्यादिश्रुतिः "तथाहि दर्शय"तीतिसूत्रभागस्यार्थः। उदाहृतश्रुतिः कर्मणामनादित्वं नप्रतिपादयती त्याशङ्कापरिहारार्थो हिशब्दः। यस्मादियश्रुतिरिदानीन्तनकल्पतद्विषयसृष्टिवैषम्यस्य पूर्वकल्पकृतकर्मवैषम्याधीनत्वं गमयति। अन्यथा — तस्याऽऽकस्मिकत्वप्रसङ्गात् कृतहनाऽकृताभ्यागमप्रसङ्गाच्चेति हिशब्दस्यार्थः। एवञ्च यदेकमेवेत्यवधारणं व्यक्तनामरूपाभावपरमितिभावः। एवं सूत्रार्थप्रदर्शनाय कर्मसापेक्षत्वादितिहेतुना लब्धं वैषम्यपरिहारं दर्शयति — परमेश्वरो हीति। कर्ममूलमेवेति। तस्माद्यथा नरपतिः प्रजानां व्यवहारदर्शने तदीयसदसत्कर्मानुमार्गेणाऽनुग्रहनिग्रहविशेषमाचर

भोगाय पुनरपि तेषां शरीरादिकं कल्पयति। एवं क्रमात् भोगेन पक्वे कर्मणि शुद्धान्तःकरणानां जीवानां स्वविषयज्ञानमुत्पाद्य, निरति शयानन्दस्वरूपां मोक्षलक्ष्मीं प्रकाशयति। एवं शक्तिमान् परमेश्वरः परमकारुणिकः कथंवा युगपदेव सर्वजीवानां कर्म पाचयित्वा सममेव मोक्षानन्दं न प्रकाशयतीतिचेत् सत्यम्। परमेश्वरेण सम मेव सर्वेषा मनुग्रहे क्रियमाणेऽपि ये पक्वमलाः ते मुच्यन्ते, अपक्व मलाः कालक्रमादेव। यथा सवितृकिरणसन्दोहे सममेव सन्ततेऽपि

---

न्पक्षपातलक्षणं वैषम्य नप्रतिपद्यते। तथा परमेश्वरोऽपि तदीयकर्मविशेषाऽनुसारेण विषमसर्गं माचरन् नतत्प्रतिपद्यते। प्रत्युत निम्नोन्नतकर्मणा सेकाधिक्यनृपावेव सदसत्कर्म कारिणा सेकल्पानुग्रहे व्यवहारदृष्टिरिव परमेश्वरस्य वैषम्यमापद्यते न भाव.। एवम् कर्माऽपेक्षया वैषम्यदोषपरिहारेणैव नैर्घृण्यदोषपरिहारोऽपि ज्ञेयः। एवं स्परमेश्वरस्य वैषम्यनैर्घृण्ये नभवतः कर्मसापेक्षत्वादिति परिहार स्सूत्रकारेणदर्शित. स्यय परिहारान्तर माह — स्हारश्चेति। न कर्मापेक्षाया मीश्वरस्याऽनीश्वरत्वाऽऽपत्ति र्दोषः। कर्माऽनपेक्षायामेव यथेच्छमाचरतो नरपतेरिवाऽविवेकत्वादिदोषापत्ते.। एवं मत मनुपपत्तामि त्याशङ्कते — नन्विति। जीवानां देवमनुष्यादिशरीरसृष्टौ परमेश्वर मनधिष्ठाय केवलं कर्म नप्रभवति। अचेतनस्य चेतनाधिष्ठानाभावे कार्यासत्त्वस्य "रचनाऽनुपपत्ते"रित्यनन्तराधिकरणे वक्ष्य माणत्वात्। अतः प्रसुप्तानि कर्माणि परमेश्वर स्स्वयमेवोद्बोध्य तदुत्पादितै श्शरीरैः प्रळयविश्रान्तान् जीवान् संयोज्य पुनरपि तारतम्येन क्लेशयतो त्यङ्गीकर्तव्यत्वा त्कथं वैषम्यनैर्घृण्ये नस्याताम्। नच कर्माणि कर्तृभि रवश्य भोक्तव्यानीति, तदनुसारेण तान्यधि ष्ठाय तदुत्पादितै श्शरीरै स्सुखदुःखे भोजयतो न ते प्रसज्येयाताम्। ईश्वरत्वस्यैव तस्य समवृत्तित्वं नहीयत इति वाच्यम्। "परात्तु तच्छ्रुते" रित्यधिकरणे कर्मणाम पीश्वरेण कार्यमाणत्वस्य वक्ष्यमाणतया कैश्चि त्पुण्यकर्माणि कैश्चि दपुण्यकर्माणिच कारयितु वैषम्यादिप्रसङ्गनादवस्थ्यात्। नच पूर्वपूर्वाऽनादिकर्मप्रवाहापेक्षः कारयति। "कृतप्रयत्नाऽपेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः" (ब्र॥ सू॥ २–३–४१) इति। "परात्तु तच्छ्रुते" (२–३–४०) रित्यधिकरणेच तथाप्रतिपादयिष्यमाणत्वात्। अतो न तत्प्रसङ्ग इति वाच्यम्। पूर्वपूर्वकर्मणा मीश्वरकारितत्वे तत्प्रसङ्गाऽपरिहारात् तदकारितत्वे "परात्तु तच्छ्रुते" रित्यधिकरणविरोधात्। द्विविधंहि वैषम्यनैर्घृण्यम्। एकं कर्मादिक मनपेक्ष्य

पक्का एव पद्मा विकसन्ति, नाऽपक्काः । ततः पूर्णोऽपि परमेश्वरः परार्था मेव सर्वां प्रवृत्तिं करोति । तथा पौराणिक फणितिः, परमेश्वरस्य सर्वानु ग्राहकत्वप्रतिपादनमुखेनोक्तं सकलमर्थं स्पष्टयति: 'आदित्येन यथा हीनं तमोभूत मिदं जगत् । शिवेनाऽपि विना तद्वत् तमोभूत मिदं जगत ॥ वैद्यंविना निरानन्दाः क्लिश्यन्ते रोगिणो यथा । शिवंविना निरानन्दं क्लिश्यते हि जग त्तथा ॥ व्याधीनां भेषजं यद्वत् प्रतिपक्षस्वभावतः । शिव स्संसार दोषाणां प्रतिपक्षस्वभावतः ॥ यथाऽनादिः प्रवृत्तोऽयं घोर स्संसारमण्डलः ।

स्वयमेव विषमसृष्टिकरणप्रयुक्त मपर स्तत्सापेक्षत्वेऽपि पूर्वपूर्वकर्मप्रवाहस्याऽपि परमेश्वराधीनत्वप्रयुक्तम् । तत्राद्यं पुण्यपापयो स्सुखदु:खकारणत्वबोधकस्य वेदस्याऽ प्रामाण्यावहमिति तत्प्रामाण्यसंरक्षणार्थं सृष्टे कर्मवैषम्यमूलतया नदोषइति परिहृतम । नतु द्वितीयम । परमकारुणिकत्वविरोधिच वैषम्यनैर्घृण्य सर्वथा परिहरणीयमेव । तदेवच सूत्राक्षरस्यमपि लभ्यते । ततो यथा परमकारुणिकं परमेश्वरं वैषम्यनैर्घृण्यं कलयाऽपि नस्पृशे त्तथाच सूत्राक्षरस्यं मेवं त्तया परिहारो वर्णनीय इति । उच्यत इति परिहारग्रन्थ स्याऽयमाशय । "व्याधीनां भेषज यद्व त्प्रतिपक्षस्वभाव त" इत्यादिपौराणिकप्रसिद्ध्या परमकारुणिक परमेश्वर स्सकलचेतनानुग्राहक इति विज्ञायते । अनुग्रहोऽपि बन्धनिवर्तनेन स्वसाम्य प्रापणरूपः । बन्धश्च मुख्य सर्वज्ञत्वसर्वकर्तृत्वरूपस्वाभाविकगुणाच्छादक स्वयमेकोऽपि विचित्रा नन्तशक्तिक. ताम्रास्श्रितकालिकाव त्सहजसिद्धाऽऽवरणरूप । मलाख्य परिणामिद्रव्यविशेष । सतु व्रणव त्पाकेनैव निवर्तनीय । पाकश्च तस्यव्रणस्य क्षारादिनेव नित्यनैमित्तिक कर्मानुष्ठानेन सांसारिकक्लेशानुभवेनच सम्पादनीय । "कषाये कर्मभिः पक्वे ततो ज्ञान प्रवर्तते" इति नित्यनैमित्तिककर्माचरणेन तस्मिन्पक्वेसत्येव वैराग्यशिवभक्तिशिवजिज्ञासादिप्रणाडिकया मोचकज्ञानोत्पत्तिस्मरणात् । भोगेन तत्पाकस्यागमप्रसिद्धत्वाच्च । कर्मभोगश्च तदनुकरणभुवन भोगसाधनद्रव्यदेवतादिकंविना नसम्भवति । तत्रच प्राणिनां विचित्राणि कर्माणि कारणमिति तदर्थं परमेश्वरः कर्माणि कारयित्वा कर्मवैचित्र्यानुसारेण विचित्राणि तदनुकरणादीनि सृष्ट्वा क्लेशयुक्तानिकर्मा ण्यनुष्ठाप्य सुखदु:खानि भोजयतीति सर्वमेत त्करुणयै वोपपद्यते । अतो न वैषम्यनैर्घृण्यप्रसक्तिः । नहि प्राणिनां व्रणपाकार्थं तत्तद्व्रणगुणानुसारेण क्षारंनिवेश्य तारतम्येन क्षारनिवेशप्रयुक्तं क्लेशमनुभावयतः कारुणिकस्य वैद्यस्य वैषम्यनैर्घृण्यं प्रसज्यते । परमेश्वरस्य सर्वत्र करुणासाम्येऽपि विचित्रस्वभावाना न्तदावरणमलशक्तीनां व्रणानामिव पाकस्याऽ नयत

तथाऽनादिः प्रवृत्तोऽयं शिव संसारमोचकः" ॥ इत्यादिका । अतः परमेश्वरस्य सर्वानुग्रहप्रवृत्त जगत्सृष्ट्यादिव्यापार समम्भवत्येव ॥

इति वैषम्यनैर्घृण्याधिकरणम्

अथ सर्वधर्मोपपत्त्यधिकरणम् १२

## सर्वधर्मोपपत्तेश्च ॥ २-१-३५ ॥

किं बहुना, प्रधानपरमाणुकर्मकालादीनां ये धर्मा अनुपपन्नास्ते सर्वे ब्रह्मण्युपपद्यन्ते । अतो ब्रह्मैव सर्वातिशायि जगत्सृष्ट्यादिकारण मिति समञ्जसम् ॥

इति सर्वधर्मोपपत्त्यधिकरणम्

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसभाष्ये
द्वितीयाध्यायस्य प्रथमः पादः

कालस्था त्सर्वेषा स्मुक्ति रयोगपद्य चोपपद्यते । इति । एवञ्च सूत्रे "सापेक्षत्वा" दित्यस्य मलपाकसापेक्षत्वादितिवा, तत्पाकोपयोगिस्वकारित कर्मसापेक्षत्वादितिवाऽर्थो द्रष्टव्यः । परार्थमेवेति । परानुग्रहार्थमेव सकलमपि सृष्ट्यादिव्यापारं करोतीत्यर्थः । अधिकरणार्थ मुपसंहरति – अतः परमेश्वरस्येति ॥

इति वैषम्यनैर्घृण्याधिकरणम्

अथ सर्वधर्मोपपत्त्यधिकरणम् १२

प्रधानपरमाणवादीना स्वातन्त्र्येण जगत्कारणतायां तदुपयोगिनो येधर्मा, पूर्व तत्राऽनुपपन्नत्वेन सूत्रिताः अग्रिमपादे प्रपञ्चयिष्यन्तेतत्र तेसर्वे ब्रह्मण्युपपद्यन्तइति पादोपसंहरणार्थमिदंसूत्रम् । एवमेव पादार्थ मुपसंहरति – अत इति । सर्वातिशायी त्येतदपि ईक्षत्याधिकरणाद्युपपादितनिर्दोषत्वादिसङ्ग्रहार्थम् । जगत्सृष्ट्यादिकारणमित्येतत् न्नविलक्षणत्वाऽधिकरणाद्युपपादितोपादानत्वनिमित्तत्वसङ्ग्रहणाऽर्थम् ।

इति सर्वधर्मोपपत्त्यधिकरणम्

इति श्री नागलिङ्गशिवाराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकासमाख्यायां
श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीय
ब्रह्मसूत्रभाष्यव्याख्यायां द्वितीयाध्यायस्य प्रथमः पादः

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाख्यविरचिते शारीरकब्रह्ममीमांसासूत्रभाष्ये अथ द्वितीयाध्यायस्य

## द्वितीयः पादः

---

अथ रचनाऽनुपपत्त्यधिकरणम् १

## रचनाऽनुपपत्तेश्च नाऽनुमानं प्रवृत्तेश्च ॥ २–२–१ ॥

पूर्वपादे साङ्ख्यादितर्कविरोधमाशङ्क्य स्वपक्षसाधनं कृतम्। पुनरिह तर्कावलम्बनेन साङ्ख्यादिपरपक्षदूषणं क्रियते । प्रथमं साङ्ख्यानां प्रधानकारणवादो युक्तो नवेति सन्देहः । सन्देहबीजं सर्वत्रसिद्धमेवोहनीयम् ॥

---

अथ रचनाऽनुपपत्त्यधिकरणम् १

प्रथमद्वितीययोःपादयोरर्थविशेषप्रदर्शनेन पादभेदं सङ्गतिञ्च दर्शयन् द्वितीयपादारम्भं प्रतिजानीते — पूर्वपादइति । जगदभिन्ननिमित्तोपादाने परब्रह्मणि शिवे वेदान्तानां समन्वयः प्रथमाध्यायेन प्रतिपादितः । तस्मिन् प्रधानपरमाणुकारणवादिभिः साङ्ख्यवैशेषिकादिभिः केवलतर्कमवलम्ब्याऽऽपादितानि दूषणानि तस्मिन्नध्याये प्रथमपादे निराकृतानि । अस्मिन्पादेतु शुष्कतर्कावलम्बना ससाङ्ख्यादिपरपक्षास्तथाविधैरेव तर्कैर्दूष्यन्ते । अन्यथा — परपक्षाणामप्रतिष्ठिततर्काऽऽभासमूलतामजानतः कस्यचिन्मन्दधियस्तेषु प्रामाणिकत्वधिया वैदिके ब्रह्मकारणवादे श्रद्धा शिथिलीभवेत् । एवञ्च स्वपक्षस्थापनपरः प्रथमःपादः । द्वितीयपादस्तु परपक्षप्रतिक्षेपपर इत्यस्मात्पादभेदः सिद्धः । ततः स्वपक्षस्थापनस्याऽभ्यर्हितत्वात्प्रथमं निर्वृत्तस्मिंस्तस्य तदानन्तर्ययुक्तमिति पूर्वोत्तरपादसङ्गतिः । प्रथमाध्यायगतेऽधिकरणादिभिः पौनरुक्त्यशङ्का । तर्कावलम्बनेनेति निराकृता । साङ्ख्यादयः स्वतन्त्रतर्कैः प्रधानादिकं

प्रधानकारणवाद एव युक्त इत्यवगम्यते । प्रधानं हि रजस्सत्त्व तमोरूपम् । तदेव जगतः कारणं भवितुमर्हति, सर्वत्र तत्कार्ये सुखदुःख मोहाऽन्वयदर्शनात् । पटादयो ह्युपलब्धाः प्रावरणादिहेतुतया सुखात्मका

प्रसाध्य तत्र वेदविरोधाभावमिति वैदिकवाक्यानि स्वपक्षानुगुण्येन व्याचक्षते । तानि व्याख्यानानि न्यायानुसारिणा सम्यग्व्याख्यानेन निरस्तानि । इह तु ये स्वतन्त्रतर्कैः प्रधानादिकं कल्पयन्ति ते तथाभूतैरेव तर्कान्तरैर्निरस्यन्त इति न पौनरुक्त्यमिति भावः । ब्रह्मपारतन्त्र्येण प्रधानकारणत्वस्य वेदान्ताऽनुमतत्वात् तस्माद्वेदापरिगृहीतानुमानिकस्वतन्त्रप्रधानकारणवादस्य वैदिकमतनिदिष्टतया स एव प्रथमाधिकरणेन निराकर्तव्य इति तत्प्राथम्यहेतुं सूचयन् सङ्गतिं दर्शयति — प्रथममिति । सन्देहबीजन्तु कश्चिदपि विशिष्य नोद्घाटनीयम् । यदि तत्र पूर्वपक्षसिद्धान्तयोर्युक्तिजातं प्रकटयितुं प्रक्रान्तं तदेव बलाबलाऽनवधारणदशायां तद्बीजमिति तद्विशिष्य लक्ष्यनीयमित्याह — सन्देहबीजमिति । नन्वनुमानेन मूलकारणकल्पनायां परमाणुकारणवादं विहाय प्रधानकारणवादाश्रयणे कः पक्षपातहेतुरित्याशङ्क्य परिच्छिन्नस्य परमाणोरेकस्य सर्वकारणत्वाऽयोगेन तद्बहुत्वकल्पनाऽवश्यम्भावाद् गौरवात् परिच्छिन्नस्य कार्यत्वनियमेन परमाणोरपि कार्यत्वापत्त्या परिच्छिन्नतत्कारणपरम्पराकल्पनावशादनवस्थायाश्च प्रधानैककारणत्ववादे लाघवं प्राधान्यहेतुं सूचयन् पूर्वपक्षयति — प्रधानेति ॥

ननु परमसिद्धान्ते ब्रह्मकारणवादेऽपि कारणैक्यलाघवादिकं समानमित्याशङ्क्य निर्गुणस्य ब्रह्मणः कार्यानुगुण्यं नास्तीति सूचयन् प्रधानस्यैव प्रपञ्चकारणत्वेन कल्पनं युक्तमित्याह — प्रधानं हीति । प्रधानस्य कार्यानुगुण्यमुपपादयति — पटादयो हीति । पटो येन प्राप्यते तस्य प्रति सत्त्वगुणोद्भवात् पटः सुखात्मको भवति । यस्याऽयमन्येनाऽपहृयते तस्य प्रति रजोगुणोद्भवात् दुःखात्मको भवति । यस्य तस्मिन् स्वत्वं नास्ति तस्य प्रति तमोगुणोद्भवात् मोहात्मको भवति । पटेनाऽन्येऽप्याभरणादयस्तद्द्वारा व्याख्याताः । एवं सुखदुःखमोहात्मकस्य प्रपञ्चस्य तथाभूतमेव कारणं कल्पयितुं युक्तम् । कार्यकारणयोर्द्रव्ययोरभेदेन कारणस्याऽतथात्वे कार्यस्य तथात्वाऽयोगात् । तस्मात् त्रिगुणात्मकं प्रधानं तत्कारणं कल्पयितुं युक्तम् । सत्त्वरजस्तमोरूपास्त्रयो गुणा हि सुखदुःखमोहात्मकाः ॥

यदाहुः — "प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः । सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः । गुरु वरणक

भवन्ति; अन्यापहृता दुःखात्मका भवन्ति; कार्याभावा दुपेक्षिता मोहा त्मकाः। तदेवं सुखाद्यन्वयात् त्रिगुणमेव प्रधानं जगत्कारण मिति प्राप्तेऽभिधीयते ॥

मेव तमः प्रदीपवच्चार्थतोवृत्तिः" । इति । अयमर्थः — गुणा स्सत्त्वरजस्तमांसि प्रीत्यप्रीतिविषा दात्मकाः क्रमा त्सुखदुःखमोहात्मानः क्रमादेव प्रकाशप्रवृत्तिनियमप्रयोजनाः । पुंसश्च सत्त्वं प्रकाशयति । प्रकाशनकार्ये सत्त्वं प्रवर्तयति रजोगुणः । लघो स्सत्त्वगुणस्य रजसा सर्वत्र प्रवर्तनं प्रसक्त गुरुतमोगुणोनियच्छति । ततश्च तमोनिरुद्धंरज स्सकृदेव प्रवर्ततइति तेन क्वचि देव प्रवर्तितं सत्त्वं किञ्चिदेव प्रकाशयति । अतो न सर्वं सर्वदा सर्वस्य प्रकाशत इतिव्यवस्था । एवं गुणानां स्वरूपं प्रयोजनं श्चोक्तम् । तेषां व्यापार उच्यते । "अन्योन्याभिभवाश्रयजनन मिथुनवृत्तयश्च" । वृत्तिर्व्यापारः प्रत्येक मभिभवादिभि स्सम्बध्यते । अन्योन्याभिभववृत्तयश्च गुणाः । एषा मन्यतमेनाऽर्थवशा दुद्भूते नाऽन्यदभिभूयते । तथाहि — सत्त्वं रज स्तमसी अभिभूय शान्ता मात्मनोवृत्तिप्रतिलभते । एवं रज सत्त्वतमसीअभिभूय घोरां स्वप्रवृत्ति तथा तमः सत्त्वरजसीअभिभूय मूढां स्वप्रवृत्तिमिति । "अन्योन्याश्रयवृत्तयश्च गुणाः" । यदपेक्षया यस्यव्यापारोभवति स तस्याश्रयो विवक्षितः । "अन्योन्यजननवृत्तयश्च गुणाः" । अन्यतमेनाऽन्यतमो जन्यते । जनन मत्र परिणामविशेषः । "अन्योन्यमिथुनवृत्तयश्च अन्योन्यसहचराः अविनाभूता इत्यर्थः । "अन्योन्यमिथुना स्सर्वे सर्वत्रगामिनः । तेषा मादि स्सम्प्रयोगो वियोगोवोपलभ्यते" इतिहि तदागमः । सत्त्व लघुप्रकाशक मिष्ट माङ्ख्या चार्याणां । तत्राऽनलपवनादीना मूर्ध्वज्वलनतिर्यक्पवनादिहेतु र्लाघवं । सत्त्वतमसी रजसा स्वकार्योन्मुखे कार्येते । इत्येत द्रजसः उपष्टंभकत्व तदुपपादकञ्च चलमिति । रजस्सक्रिय मक्रियया स्सत्त्वतमसोः कार्योन्मुखावस्थापादकमिति चलनविशेषेण दर्शितम् । तमस्तु गुरु । अतएव स्वय श्चलतया लघुपत्त्वमपि चालय द्रजो गुरुणातमसा तत्रतत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवृत्तिम त्क्रियतइति वरणकं नियामकंच तमः । परस्परविरोधिनाम प्येषा मेककार्यकरत्व मुच्यते । "प्रदीपव च्चार्थतो वृत्तिः" । यथा वर्तितैले पावकविरुद्धअपि मिळिते सहपावकेन रूपप्रकाशनकार्यं कुरुत । एवं सत्त्वरजस्तमांसि परस्परविरुद्धान्य प्यर्थवशा त्सहकार्यंकुर्वन्ति । "पुरुषार्थएवहेतुः न केनचि त्कार्यते करण" मिति पुरुषार्थवशादेव प्रकृतिप्रवृत्त रभ्युपगमादिति । एवञ्च गत त्रैगुण्योपपादनेनाऽनुमानत स्त्रिगुणात्मकप्रधानकारणत्वसिद्धि सूचय न्पूर्वपक्ष मुपसंहरति —

न प्रधानं जगत्कारणं भवितुमर्हति। यदुक्तं सुखाद्यन्वयादिति तदसत्। सुखादीनामान्तरत्वात्, पटादीनां बाह्यत्वात्। अतः प्रधानकारणवादो न युक्तः॥ आशङ्क्य परिहरति॥

---

तत्त्वमिति। इद मिहाऽनुमान मभिमहितम्। कार्यम् सुखदुःखमोहात्मकवस्तुप्रकृतिकम् तत्सम न्वितत्वात् सामान्यव्याप्तौ मृद्व्यसमन्वितघटशरावादिवदिति। यद्वा कार्यं समप्रकृतिकम् कार्यत्वात् विशेषव्याप्तौ घटवदिति। लाघवा देकद्रव्यत्वं सिद्ध्यतीति न परमाणुद्व्यणुकादिप्रकृति कल्पनाऽर्थान्तरम्। जडं सुखदुःखमोहात्मकं कार्यप्रत्यतथाभूतस्य प्रकृतित्वेन सिद्ध्यनवकाशात्। नचाऽचेतनस्याचेतनाधिष्ठा नाऽभावे कार्यजनने स्वयमेव प्रवृत्त्यनुपपत्ते र्लाघवा त्सर्वजगत्कर्तृत्वेन परमेश्वरसिद्धावश्यम्भावे तस्यैव सर्वशक्तिमत्वेन विलक्षणं प्रपञ्चप्र त्युपादानस्या प्युपपत्ते न तद्व्यतिरिक्तं प्रधान मत्प्रकृतित्वेन सिद्ध्यतीति शङ्कनीयम्। अचेतनस्याऽपि चेतनानां भोगापवर्गहेतो र्विनाऽपि चेतनाधिष्ठान स्वयमेव प्रवृत्त्युपपत्तेः। वत्सवृद्धिहेतोः क्षीरस्य स्वयमेव प्रस्र वणदर्शनात् जन्तुमुक्तस्य जलस्य सस्यविवृद्धिहेतो स्स्वय निस्सारणदर्शनाच्च क्षीरजलयो र्धर्मो तक्रकरकादिभावेन स्वयमेव परिणतिदर्शनाच्च बन्धमोक्षवत्. पुरुषस्य चेतनस्य निर्व्यापारस्याऽपि सन्निधानमात्रेणाऽचेतनप्रधानप्रवर्तकत्वोपपत्तेश्च स्वयं प्रवृत्तिशक्तिरहितस्य दृक्शक्तिमतः पङ्गोः प्रवृत्तिशक्तिमन्तं दृक्शक्तिरहितमन्धम्प्रति प्रवर्तकत्वदर्शनात्। अय स्कान्तमणे स्सन्निधानमात्रेणाऽयःप्रवर्तकत्वदर्शनाच्च इत्येव पूर्वपक्षेप्राप्ते सौत्र मनुमानपदं कर्मणि व्युत्पत्तौ प्रधानरूपपक्षनिर्देशक नेतिपद निषेध्याऽध्याहारेण साध्यनिर्देशकञ्च परिगृह्य हेत्व ध्याहारेण स्वतन्त्रप्रधानकारणत्वसाधकाऽनुमानस्य बाधक मनुमानं सूत्राभिप्रत न्दर्शयन् सिद्धान्तयति — न प्रधानमिति। "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति श्रुतिसिद्धस्य प्रधानस्य सिद्धान्तेऽङ्गीकृतत्वा दाश्रयासिद्धिः। न जगत्कारणमिति साध्यस्य चेतनाधिष्ठानमनपेक्ष्य स्वातन्त्र्येण जगत्कारणं नभवतीत्यर्थः। तथैवाऽग्रिमग्रन्थप्रवृत्तेः। रचनानुपपत्ते श्चेतिसूत्रपद गृहीतां व्याप्तिं सदृष्टान्त दर्शयति — तथाहीति। "प्रवृत्ते" श्चेति सूत्रपदगृहीतं तदनुग्राहक तर्कं दर्शयति। तज्ज्ञाधिष्ठितस्येति। हेत्वसिद्धि मुपपादयितुं साङ्ख्योक्त हेतुसिद्धिप्रकार मनुवदति यदुक्तमिति। सुखादीना मान्तरत्वादिति। पटप्राप्तिहरणाभ्यां तत्स्वामिन स्सुखदुःखे जायेते। तदुपेक्षकस्य तद्ज्ञान मनुवर्तते। इत्येनाव दनुगतमसिद्धम्। नतु तद्विषयस्य सुखाद्यात्मकत्वं। पट स्सुखमि त्यनुभवाभावात्। अहं सुखीत्यादिरूपस्यैवाऽनुभव स्योदयाच्च। एवं प्रबलाऽनुमानबाधि तस्य प्रधानाऽनुमानस्याऽनुत्थानात् साङ्ख्यपक्षो नयुक्त इत्याह — अत इति। आशङ्क्येति। पयोम्बुनो र्व्यभिचार माशङ्क्येत्यर्थः॥

## पयोम्बुवच्चे त्त्राऽपि ॥ २–२–२ ॥

यथा पयोऽम्बु च दध्यादिकरकादिभावेऽधिष्ठानानपेक्षं तद्वत् प्रधानम पीतिचे न्न । तत्राऽप्युक्तएव हेतुः । तस्याऽप्यचेतनत्वेन पक्षीकृतत्वात् । किञ्च,

## व्यतिरेकाऽनवस्थिते श्चाऽनपेक्षत्वात् ॥ २–२–३ ॥

यदि प्राज्ञाधिष्ठानानपेक्षत्व मचेतनस्य प्रवृत्तौ तदा सृष्टिप्रसङ्गेन तद्व्यतिरेकस्य प्रळय स्याऽनवस्थितिः प्रसज्येत । ततो नाऽचेतनं कारणम ॥

## अन्यत्राऽभावाच्च न तृणादिवत ॥ २–२–४ ॥

क्षीरपरिणामायोपयुक्ततृणादिव दचेतनमपि प्रधानं कारण मिति वक्तुं नयुक्तम् । अनुडुदाद्युपयुक्ते, केनाऽप्यनुपयुक्तेच तृणादौ क्षीरपरि णामाऽभावात् । तदपि प्राज्ञाधिष्ठितमेव ॥

---

पक्षीकृतत्वादिति । अचेतनत्वहेतुना तत्राऽपि प्रधान इव चेतनाधिष्ठानसिद्धिसम्भवेन पक्षसमत्वात् पक्षे पक्षतुल्येवा व्यभिचाराऽभावा दितिभावः ॥

प्रवृत्ते रिति प्रथमसूत्रभागेन स्वतन्त्रप्रधानाऽनुमानबाधकाऽनुमानस्य – व्याप्तिग्राहक स्तर्कः प्रदर्शितः । विषयपरिशोधकस्तर्क स्त्वनेन प्रदर्श्यते । यदि परमेश्वराधिष्ठानाऽनपेक्षं स्वतन्त्रं प्रधानं स्वयमेव जगत्सृष्टौ प्रवर्तेत तर्हि अन्यस्याऽनपेक्षणीयत्वा त्सर्वदा सृष्टि प्रसङ्गेन तद्व्यतिरेकस्य सृष्टिविरामस्य प्रळयस्याऽनवस्थिति रसत्त्वं प्रसज्येत । तस्मा न्न स्वतन्त्रं प्रधानं कारण मिति ॥

ननु प्राज्ञाऽनधिष्ठितायाः प्रकृतेः प्रवृत्ति र्नसम्भवतीति यदुक्तं तन्न । धेन्वादिनोप युक्तस्य तृणोदकादे रचेतनस्य क्षीरादिभावेन परिणामदर्शना त्तथाऽचेतनस्याऽपि प्रधानस्य जगदा कारण परिणामसम्भवादि त्याशङ्कानिराकरणार्थं सूत्रम् ॥

आनडुदाद्युपयुक्त इति । यदि तृणोदकादिकम् स्वतन्त्रमेव क्षीरादिरूपेण परिणमेत तर्हि तदनडुदाद्युपयुक्तं केनाऽप्यनुपयुक्तं वा क्षीरादिरूपेण परिणमेत । तथा नपरिणमते । तस्मा दचेतनं प्राज्ञाऽनधिष्ठितं स्वतन्त्रं कारणमिति वक्तु मयुक्तमिति भावः ॥

## पुरुषाश्मवदितिचेत्तथाऽपि ॥ २-२-५ ॥

अचेतनमपि प्रधानं पुरुषसन्निधानात् प्रवर्तयति, यथा पङ्गुरन्धं, यथा वा अयस्कान्तमणिरयः। ततो न प्राज्ञापेक्षेतिचेत्तथाऽपि न प्रधानस्य प्रवृत्तिरसम्भवति। पुरुषस्याऽविकृतत्वात्। पङ्ग्वन्धादेर्मार्गोपदेशार्थं सन्निहितदेशान्तरप्राप्त्यादिः कश्चिद्विकारो भवत्येव। तस्मादविकृतपुरुषसन्निधिः प्रधानप्रवृत्तौ न हेतुः ॥

## अङ्गित्वाऽनुपपत्तेश्च ॥ २-२-६ ॥

गुणानामुत्कर्षापकर्षभावोऽङ्गाङ्गीभावः। ततो जगत्प्रवृत्तिरुच्यते साङ्ख्यैः। प्रतिसर्गावस्थायां गुणानां वैषम्याभावात्

ननु प्रधानस्य जगज्जनने परमेश्वराधिष्ठानं नापेक्ष्यते निर्व्यापारस्याऽपि पुरुषस्य सन्निधानमात्रेण प्रवर्तकत्वसम्भवादिति सदृष्टान्तशङ्कां दृष्टान्ताऽसम्प्रतिपत्त्या निराकर्तुं सूत्रम् ॥

यथा पङ्गुरिति। तदुक्तं पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतस्सर्ग इति। तथाऽपीत्यस्यशेषमध्याहरति। न प्रधानस्येति। पुरुषस्याऽविकृतत्वादिति। पङ्गोः संनिधावप्यन्धस्य मार्गदर्शनतदुपदेशाशक्तिमत्त्वात्। एवमयस्कान्तमणेरप्ययस्सन्निहितदेशप्राप्तिरूपविकारयुक्तत्वाच्च दृष्टान्ताऽसम्प्रतिपत्त इतिभावः ॥

व्यतिरेकाऽनवस्थितेरितिसूत्रेण स्वतन्त्रप्रधानकारणवादे प्रळयाऽनुपपत्तिदोष उक्तः। तदुपपादकत्वेन तदनन्तरसूत्रद्वयमप्रवृत्तम्। तत्रेदमाशङ्क्यते साङ्ख्यमते सत्वरजस्तमसामन्योन्यगुणप्रधानभावमुत्सृज्य साम्येन यदवस्थानं स प्रलयस्यैव प्रधानावस्था। तेषामुत्कर्षापकर्षात्मकवैषम्यरूपेणाऽङ्गाङ्गीभावेन यदवस्थानं सासृष्टिस्सैव विकारावस्था। एवञ्च सति जगत्कारणत्वेन सृष्टिपूर्ववर्तितयाऽनुमीयमानं त्रिगुणं गुणसाम्यावस्थात्मकप्रधानरूपेणाऽनुमेयमिति धर्मिग्राहकमानसिद्धसाम्यावस्थारूपः प्रळयो न निरसितुं शक्यतइति तन्निराकरणार्थं सूत्रम् ॥

तथासति गुणसाम्यावस्थं प्रधानं क्षोभकचेतनव्यापाराभावात् स्वयमेव गुणवैषम्यावस्थां प्राप्तुमक्षमं। तस्मात्सृष्ट्यनुपपत्तिरिति दूषणार्थः ॥

तत्कृताऽङ्गाङ्गीभा वाऽनुपपत्तिः। अतश्च जगदारम्भो न युज्यते प्रधान कारणवादे ॥

## अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ २–२–७ ॥

उक्तप्रकारा दन्यप्रकारेण प्रधानेऽनुमीयमानेऽपि ज्ञातृत्वशक्तिवियो गात् रचनाऽनुपपत्ति स्तदवस्थैव ॥

## अभ्युपगमेऽप्यर्थाऽभावात् ॥ २–२–८ ॥

प्रधानस्याऽभ्युपगमे यदि प्रयोजनं तदा यथाकथञ्चि दभ्युप गच्छामः। न किञ्चि दपि प्रयोजन मस्ति। यतः, पुरुषस्य निर्विकारत्वात्।

---

ननु त्रिगुणं न साम्यावस्थ मनुमीयते। नाऽपि वैषम्यावस्थम। किन्तु अनादिसृष्टि प्रळयप्रवाहमूलद्विविधसंस्कारानुवृत्तिमद्द्वारा तत्तत्संस्कारोद्बोधानुसारेण पर्यायेण साम्यवैषम्यभा गुभयस्वभाव मनुमीयते। तस्मा न्न सृष्टि र्नाऽपिप्रळयस्याऽनुपपत्तिरि त्याशङ्कानिराकरणार्थं सूत्रम् ॥

रचनाऽनुपपत्ति रिति। अत्राऽयम्भाव। प्रधानस्य ज्ञातृत्वंमति सङ्कल्पा दधिष्ठात्रन्तर निरपेक्षेण प्रवृत्ति रुपपद्येत। तस्याऽभावा न्नित्यसर्गादि प्रसज्येतैव तस्मा त्तस्य रचयितृत्वं नोपपद्यत इति। एवं साङ्ख्याभिमतस्वतन्त्रप्रधाने प्रमाणं निरस्त मथ तदभिमततत्प्रयोजन निरासार्थं सूत्रम् ॥

पुरुषस्य भोगापवर्गौ प्रधानस्य प्रयोजनमिति साङ्ख्याः। तदुक्तम्। "पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य। पङ्ग्वन्धव दुभयोरपि संयोग स्तत्कृत स्सर्गः"। इति। प्रधान कर्मकं सविकारप्रधानविषयं पुरुषस्य यद्दर्शनं भोगरूपं तदर्थ स्पुरुषस्य कैवल्यार्थश्च परस्परा पेक्षकयोः प्रधानपुरुषयोः पङ्ग्वन्धयोरिव संयोग स्तत्कृतो महदादिप्रपञ्चसर्ग इत्यर्थः। अपवर्गः प्रधानस्य प्रयोजन मित्यपि प्रपञ्चेन वर्णितम्। "वत्सविवृद्धिनिमित्तं क्षीरस्यप्रवृत्ति रज्ञस्य। पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य। औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः पुरुषस्यविमोक्षार्थं प्रवर्तते तद्वदव्यक्तम्। नानाविधैरुपायै रुपकारि ण्यनुपकारिण पुंसः। गुणव त्यगुणस्य सत स्तस्याऽर्थ मपार्थकं श्चरति"। इति। इदं द्विविधमपि प्रयोजनं नोपपद्यतइत्याह—

प्रधानदर्शनादिरूपविकाराऽसम्भवः । अत एव प्रकृतिधर्माध्यासनिमित्तो भोगः, तद्विवेकानुसन्धानकृतं कैवल्यं च न सम्भवति । अतः प्रयोजनाभावात् प्रधानं नस्वीकार्यम् ॥

**विप्रतिषेधाच्चाऽसमञ्जसम् ॥ २-२-९ ॥**

पुरुषस्य द्रष्टृत्वभोक्तृत्वनिर्विकारत्वादिविरुद्धधर्मसहस्राभ्युपगमश्च दृश्यते । अतोऽप्यसमञ्जसमेव कापिलम्मतम् ॥

इति रचनाऽनुपपत्त्यधिकरणम्

---

यत· पुरुषस्येति । निष्क्रियस्य चैतन्यमात्ररूपस्य निर्विकारस्य पुरुषस्य प्रकृतिदर्शनरूपभोगस्य तद्वियोगरूपाऽपवर्गस्य चाऽसम्भवात् । प्रकृतिसन्निधानेन तत्परिणामविशेष सुखदु:ख भोगाऽभ्युपगमे प्रकृतिसन्निधानस्य नित्यत्वा दपवर्गस्याऽसम्भावितत्वा च्चेति भाव. । इद मिह साङ्ख्याना न्दर्शनम् — पुरुषः चैतन्यमात्ररूप· । कूटस्थो निर्विकारो नित्यमुक्तः । तस्मा त्सांसारिकसुखदु:खानुभवरूपभोगो न तस्य धर्मः । किन्तु परिणामिन्या बुद्धे र्धर्म· । पुरुषस्यतु बुद्धिच्छायापत्त्या तदैक्यमि वापन्नस्य तद्दर्शन भोगः। तेन तस्य विवेकाग्रहा दाध्यासिकं भोक्तृत्वं विवेकख्यात्या भोक्तृत्वाऽध्यासमात्रनिवृत्ति र्मोक्षः । वस्तुत· पुरुषो न बद्धो नाऽपि मोक्ष्यते । मोक्षोपायविधयोऽपि न स्वाभाविकबन्धनिवृत्त्यर्था. । इति । तदेतत् "न नित्य शुद्धबुद्धमुक्तस्वभावस्य तद्योग." तद्योगा दृते न स्वभावतो बद्धस्य मोक्षसाधनोपदेश. । "स्वभाव नाशा त्स्वरूपनाशप्रसक्ते" रित्यादिकापिलसूत्रैः "वस्तुस्थित्या न बन्धोऽस्ति तदभावा न्नमुक्तता । विकल्पघटिता वेता वुभावपि नकिञ्चन । आत्मनो नहि बन्धोऽस्ति वस्तुनो निर्गुणत्वतः । अविवेका द्बन्धइव तन्नाशे शशात्मनो भवेत्" । "तस्मा न्न बध्यतेऽद्धा नमुच्यते नाऽपि संसरति कश्चित् । संसरति बध्यते मुच्यतेच नानाश्रया प्रकृति" रित्यादिभि स्तदागमस्थवचनै श्चाऽवगम्यते । तदेत न्नोपपद्यते । भोगाश्रयबुद्ध्यैक्यदर्शनरूपस्य भोगस्य तद्विवेकाऽनुसन्धान रूपस्य मोक्षजनकज्ञानस्य च पुरुषे निर्विकारचैतन्यात्म न्युदयाऽसम्भवात् । तस्मा त्प्रयोजना भावा दपि स्वतन्त्रं प्रधानं न स्वीकरणीय मितिभावः । इतोऽपि साङ्ख्यमत स्याऽसामञ्जस्य प्रतिपादनार्थ मिदं सूत्रम् ॥

पुरुषस्य द्रष्टृत्वभोक्तृत्वादिक मभ्युपगच्छन्त एव तद्विरुद्धं निर्विकारत्वम प्यङ्गीकुर्वन्ती त्यन्योन्यविरुद्धधर्माऽभ्युपगमा त्कापिलम्मत मसमञ्जसमेवेति भावः । येत निर्विशेष

अथ वैशेषिकाधिकरणम् २

एवं प्रधानकारणवादो निष्प्रमाणक इति निरूपितम् । अतःपरं परमाणुकारणवादनिरासायाऽधिकरण मारभ्यते ॥

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ २–२–१० ॥

अत्र वैशेषिकमतसिद्धः परमाणुकारणवादो युक्तो न वेति सन्देहः ॥

प्रधानमते अधिष्ठातृपरमेश्वराऽनङ्गीकारात् तत्कारणवादे विरुद्धे निरस्तेऽपि परमाणुकारणवादो युज्यते । तथाहि, प्रलीने जगति परमेश्वरस्य

---

स्वप्रकाशं ब्रह्म विद्यामाक्षितयाऽपारमार्थिकबन्धमोक्षशालीति वदन्ति तेषाम् प्युक्तन्यायेन अविद्यामाक्षित्वाऽध्यासाद्यसम्भवा दसामञ्जस्य मविशिष्टमेव । तथाऽपि तयो रयं विशेषः । साङ्ख्यैः जननमरणबन्धमोक्षादिव्यवस्थासिद्ध्यर्थं पुरुषबहुत्व मिष्यते । अन्यैस्तु तदपि नेष्यत इति । अतएव बादर्युपज्ञस्य शुद्धाद्वैतस्याऽनुजस्थानीय ङ्कापिलस्मतम् । ततएवच ज्ञातिगुण मनुबध्नता कपिलेन साङ्ख्यशास्त्रप्रथमाध्याये "नाऽविद्यातोऽप्यवस्तुना बन्धाऽयोगात् – वस्तुत्वे सिद्धान्तहानि" रित्यादिना बादरे मतं निहतम् । भगवता बादरायणेन तु "रचनाऽनुपपत्तेश्च" त्यादिना कापिलस्मतं विनिहतम् । एवञ्च "देवदत्तस्य हन्तरि हते देवदत्तस्य न पुनरुज्जीवन" मिति न्यायेन साङ्ख्यमतनिराकरणेन बादरिमतं सुनिराकृत न्तत एवच विशिष्य निराकर्तुमपि तत्राऽनूदितं बादरायणेन शुद्धाद्वैतम् । एतेन यत् सात्यवतेयेनाऽनिराकृतत्वा त्केवलाद्वैतमेव तस्यमतमिति जल्पन न्तन्निरस्त मितिदिक् ॥

इति रचनाऽनुपपत्त्यधिकरणम्

---

अथ वैशेषिकाधिकरणम् २

प्रधानवादव त्परमाणुवादोऽपि विप्रतिषेधा दसमञ्जस इति दृष्टान्तसङ्गति मभिप्रेत्याऽवतारयति – एवमिति ॥

संशयं प्रत्युदाहरणरूपसङ्गत्यन्तरमपि वर्णयति – अत्रेत्यादिना । ननु परमेश्वराङ्गीकारा द्यद्यपि रचनाऽनुपपत्ति दूषणं नभवति तथाऽपि व्यतिरेकाऽनवस्थितिदूषण मवार्यमेव । प्रळयेऽपि

सिसृक्षायां सत्यां प्राणिनां कर्मवशात् निश्चलेषु परमाणुष्वाद्यं कर्मोत्पद्यते। तस्मात् कर्मण एकः परमाणुः परमाण्वन्तरेण संयुज्यते। तस्माच्च संयोगाद् द्व्यणुकमारभ्यते। तेभ्यस्त्रिभ्यो द्व्यणुकेभ्यस्त्र्यणुकमित्यादिक्रमेण सर्वं जगदुत्पद्यते। अतः परमाणुकारणवादे न विरोध इति पूर्वपक्षे सिद्धान्त उच्यते ॥

ह्रस्वपरिमण्डलाभ्यां महत्त्वदीर्घत्वयुक्तत्र्यणुकाणुत्वह्रस्वत्वयुक्तद्व्यणुकोत्पत्तिरुच्यते कणादमते। कथमेतत्सम्भवति? तथाहि, परमाणवः पारिमाण्डल्यपरिमाणयुक्ताः। न त्वणुपरिमाणयुक्ताः। द्वाभ्यां परमाणुभ्यामणुपरिमाणरहिताभ्यामणुपरिमाणोपेतं द्व्यणुकमुत्पद्यत इत्युपगम्यते। तथा ह्रस्वपरिमाणोपेतत्वात् दीर्घपरिमाणरहितं द्व्यणुकं तादृशेभ्यस्त्रिभ्यो द्व्यणुकेभ्यो दीर्घपरिमाणोपेतमणुपरिमाणरहितत्र्यणुकमुत्पद्यत इत्यभ्युप

सतां परमाणूनां सक्रियाणां क्रियाभिः परस्परसंयोगस्याऽवर्जनीयत्वेन द्व्यणुकोत्पत्तेः द्व्यणुकादिभिः त्र्यणुकाद्युत्पत्तेश्चाऽनिवारणात्। ननु तदानीं परमेश्वरस्य सिसृक्षाभावात् क्रियासम्भवाद् द्व्यणुकाद्यनुत्पत्तिः। तदीयनित्यसर्वविषयेच्छायाः सर्वदा सिसृक्षारूपत्वात् इत्याशङ्क्य पूर्वपक्षमुपपादयति — तथाहीति। "प्राणिकर्मवशादि" त्येतत् काकाक्षिन्यायेन सिसृक्षायामित्यत्राऽपि सम्बध्यते। तस्मात् परमेश्वरेच्छायाः सिसृक्षात्वमपि सृष्ट्युन्मुखप्राण्यदृष्टोपहितत्वरूपमिति लभ्यते। एवं भाष्यमतेऽपादितदूषणाऽस्पर्शनात् परमाणुकारणवादो युक्त इति पूर्वपक्षमुपसंहरति — अत इति। सूत्रे पूर्वसूत्रादसमञ्जसमित्यनुवर्तते। वाकार इवार्थे वर्तमानोऽणुह्रस्वद्व्यणुकवदिति दृष्टान्तान्तरसमुच्चयार्थः। एवञ्च ह्रस्वाद् द्व्यणुकान्महतो दीर्घस्य त्र्यणुकस्योत्पत्तिवादवत् परिमण्डलात् परमाणोरणोर्ह्रस्वस्य द्व्यणुकस्योत्पत्तिवादश्चान्यदपि वैशेषिकमतप्रक्रियासिद्धं सर्वमसमञ्जसमिति सूत्रार्थः। अत्र परमाणुकारणवादो युक्तो वा नेति संशयः। अवयवसंयोगाद् द्रव्योत्पत्तिदर्शनादवयवाल्पत्वप्राचुर्याभ्यां सर्षपमहीधरवैषम्यदर्शनाच्च अवयवाल्पत्वाऽवधेरवश्याऽभ्युपगन्तव्यत्वात् परमाणवः सिध्यन्ति। ते चतुर्विधाः परमाणवः प्राणिकर्मप्रेरितपरमेश्वराधिष्ठिताः द्व्यणुकादिक्रमेण जगदारभन्त इति पूर्वपक्षः। सिद्धान्तस्तु — अवयवाः स्वकीयैः षड्भिः पार्श्वैः संयुज्यमानाः स्वस्मान्महान्तमवयविनमुत्पादयन्तीति परमाणुष्वपि तथैवोत्पादकत्वमभ्युपेतव्यम्। तथा सति परमाणवोऽपि सांशा

गम्यते। इदं सर्वं मसमञ्जसमेव, तदभ्युपगतकारणगुणप्रक्रियाविरोधात्। अवयवाश्च स्वीयै ष्षड्भिः पार्श्वैः संयुज्यमानाः पृथुतर मवयविन मारभन्ते। परमाणूनां पार्श्वाभावात् पृथुतरद्रव्यारम्भका स्ते न भवेयुः। अतः परमाणु कारणवादो नस्युक्तः।

पुन रनुपपत्ति माह॥

## उभयथाऽपि न कर्माऽत स्तदभावः ॥ २–२–११ ॥

अणुगताद्यकर्माभावे तत्कृताणुसंयोगाभावः। जीवादृष्टानां विपाकानपेक्षत्वे प्राग प्यणुगता कर्मोत्पत्ति स्स्यात्। तदपेक्षत्वेऽपि न तत्कृतकादाचित्काणुगतकर्मसम्भवः। विपाकोहिनामाऽदृष्टगतः कश्चि द्धर्मो न चायते। किन्तु, कर्मविधिना कालविशेषनियतफलदायित्व यस्य कर्मण श्चोदितं तस्य तत्कालागमएव विपाकः। अनियतकालविशेषाणां

---

स्वकीयै रवयवै स्तैश्च स्वकीयैरवयवै रिति नकचिदपि व्यवस्थिति रस्ति। तन्तुप्रभृतयो ह्य यथा ष्षड्भिःपार्श्वैः स्वांशैस्संयुज्यमानाः महान्तमवयविन मुत्पादयन्ति। तथैव परमाण वोऽपीति वक्तुं नयुज्यते। परमाणूनां निरवयवत्वेन पार्श्वाऽनभ्युपगमात्। एवं प्रदेशभेदाऽन भ्युपगमे सहस्रपरमाणुसंयोगेऽपि परमाणोरेकस्मा दनतिरिक्तपरमाणुतया अणुत्वद्व्यणुकत्वा दयो नतिष्ठेयु। तस्मा त्सर्षपमहीधरयो रेव विशेषो नतिष्ठेत्। अथ परमाणूनां सांशत्व मभ्युपगम्यत इतिचेत् कारणत्वं कचिदपि नव्यवस्थितमि त्यनवस्थापत्त्या दितिभाव। सूत्रार्थस्तु – ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्यां महद्दीर्घवतो स्त्र्यणुकद्व्यणुकोत्पत्तिव दन्यदपि तदभ्युपगत सर्वं मसमञ्जस मिति ॥

किमन्यदसमञ्जसमि त्याकाङ्क्षाया न्तत्प्रपञ्चयितु मुत्तरसूत्राणि। पुनरनुपपत्ति मिति। दृष्टान्तकरणव्याजोद्भाविताऽनुपपत्तिव्यतिरेकेण दार्ष्टान्तिकत्वेनाऽपेक्षिता मनुपपत्ति माहेत्यर्थः॥

परमाणुषु संयोगोत्पत्तिसम्भव मङ्गीकृत्य तत्संयोग स्याव्याप्यवृत्तित्वाऽसम्भवा त्कार्ये महत्वाऽसम्भव उक्तः। इदानीं संयोगोत्पत्तिरेव नसम्भवती त्युच्यते। प्रळयकाले निश्चलाः परमाणव स्सन्तिष्ठन्ते। सर्गाऽऽद्यकाले प्राणिकर्मवशा त्तेष्वाद्यंकर्म जायते। तत

कर्मणां प्रबलकर्मान्तर प्रतिबन्धभावोऽपि विपाकः। अनुष्ठानि तत्तत्कर्मानुगुण फलदानस्वभावानि। अतोऽनन्तै रात्माभि र्विविधकालफलदायित्वे नाऽनुष्ठितानामेकदैकरूपविपाको न सम्भवति। अतः परमाणुकारणवादो न युक्तः॥

इयंचाऽन्याऽनुपपत्तिरित्याह॥

## समवायाऽभ्युपगमाच्च साम्या दनवस्थितेः ॥ २–२–१२ ॥

समवाय इति सम्बन्धोऽभ्युपगम्यते। अतए वाऽसमंजस मेतत्। कथं समवयस्याऽपि जातिगुणादे रिवाऽपृथक्सिद्धहेत्वपेक्षासाम्या दनवस्थानात्। ततः काणादमत मसमञ्जसम्॥

---

स्तेषां संयोगेनेति द्व्यणुकादिक्रमेण जगदुत्पत्ति रिति काणादा वदन्ति। परमाणूना माद्यंकर्म प्राण्यदृष्टकारित मितिकिलाऽभ्युपगम्यते। तददृष्टं किमणुगत मुत जीवगतम? उभयथा प्यदृष्टस्य कादाचित्कत्वाऽभावात् सदोत्पादकत्व प्रसज्येत। प्राणिकर्मण कादाचित्कत्व नसम्भवति। परमाणुकर्मण प्राणिकर्मविपाकापेक्षत्वेऽपि नानाविधै रनन्तैः प्राणिभि स्तत्तत्कालफलदायित्वे नाऽनुष्ठितानां मेकदैवैकरूपविपाक स्याऽसम्भवा देकदा जगदुत्पत्ति रसम्भवास्या दितिभाव.। उभयथाऽपि कर्मणोऽणुगतत्वे जीवगतत्वेवाऽपि परमाणु ष्वाद्यंकर्म नसम्भवति। तस्मा त्परमाणुसयोगा ज्जगदुत्पत्तेरभाव इति सूत्रार्थ·। ननु परमाणुकारणत्वाऽनुपपत्ति प्रदर्शनप्रस्तावे समवायाऽभ्युपगमप्रयुक्तदोषवर्णन मसङ्गतमि त्याशङ्क्य तदपि तदनुपपत्तिपर्यवसायी त्यवतारयति – इयंचेति॥ अत्र पूर्वनिर्दिष्ट परमाणुकारणवादे॥

एत त्परमाणुकारणत्वम्॥

ननु समवायाऽभ्युपगमेन परमाणुकारणवादे किंहीयत इतिपृच्छति – कथ मिति। अस्याऽय मभाव। द्व्यणुकादिकारणत्वेन परमाणु र्जगतां मूलकारणमि त्यभ्युपगम्यते। यत्समवेत ङ्कार्य मुत्पद्यते तत्समवायीति समवायिकारणलक्षण मुच्यते। तत्र समवायः कार्यस्य विशेषणम्। अयुतसिद्धविशेषणेषु जातिगुणादि ष्वयुतसिद्ध्युपपादक स्समवायोऽभ्युपगम्यत इति समवायस्याऽप्ययुत सिद्ध्युपपादक सम्बन्धापेक्षा समाना। पृथग्भूताना माधाराधेयभावोप पादक स्सम्बन्धस्संयोगः। अपृथग्भूताना न्तदुपपादक स्समवाय·। एवञ्च अयुतसिद्धानां जात्यादीना मपृथक्सिद्धिनिर्वाहकत्वेन समवायोऽभ्युपगम्यतेचे त्तर्हि समवायस्याऽप्यपृथक्सिद्धिर

## नित्यमेव च भावात् ॥ २-२-१३ ॥

समवायस्य नित्यत्वाङ्गीकाराभावात् संबन्धिनित्यत्व मन्तरेण तदनुप पत्ते रवयवावयविनो रपि नित्यत्वप्रसङ्गा दसमञ्जस मेतत ॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ २-२-१४ ॥

परमाणूना मत्र रूपादिमत्त्व मङ्गीक्रियते । तत स्तन्नित्यत्वादि विपर्ययः । तथा घटादिषु दर्शनात । तस्माद प्यसमञ्जसम ॥

---

त्युपलब्धित्वसाम्या त्तन्निर्वाहकत्वेन सम्बन्धान्तर मन्वेषणीयमि त्यनवस्था प्रसज्येत । तस्मा दणूनां जगत्कारणत्व मसमञ्जस मितिभाव. ॥

समवायस्य नित्यत्वा दिति । प्राभाकरा स्समवायस्याऽनित्यत्व बहुत्वञ्चाभ्युप गच्छन्ति । काणादैस्तु समवायस्य नित्यत्व मेकत्व ञ्चाभ्युपगम्यते । तदनुपपत्ते स्समवायस्य नित्यत्वाऽनुपपत्त रित्यर्थः । यत्किञ्चि त्सम्बन्धिनाशेऽपि सम्बन्धनाशइति नियम स्संयोगे दृश्यते । तस्मा त्र्यणुकादिनाशे तद्गतस्य समवायस्याऽपि नाशप्रसक्त्या समवायस्य नित्यत्व मभ्युपगच्छता त्र्यणुकादीनामपि नित्यत्व मङ्गीकर्तव्यं स्यात् । ततश्च जगतो नित्यत्व मनिष्ट मापद्येत । तस्मा दणूनां जगत्कारणत्व मसमञ्जस मितिभाव ॥

परमाणूना मिति । पार्थिवा आप्या तैजसा वायवीया श्चेति चतुर्विधा. परमाणव । सावयवद्रव्येऽवयवशो विभज्यमाने य परोविभागो नसम्भवति सएव परमाणुः । चतुर्विधस्याऽपि रूपादिमतो भूतभौतिकजातस्य आरम्भका पार्थिवाद्या श्चतुर्विधाः रूपादिमन्तः परमाणवो निरवयवा नित्या इति काणादा अभ्युपगच्छन्ति । तदपसमञ्जसमेव । तत इति । रूपादिम त्त्वाङ्गीकारा दित्यर्थः । घटादिषु दर्शनादिति । दर्शनानुसारेण ह्यदृष्टार्थः कल्प्यते । रूपादि मत्सु घटादि ष्वनित्यत्वं दृश्यते । तस्मा त्परमाणूनामपि रूपादिमत्त्वाङ्गीकारा दनित्यत्व सावयवत्त्वा द्यनिष्ट मापद्येत । तस्मा द्वैशेषिकाऽनुमितं परमाणुकारणत्व मसमञ्जस मितिभावः । एवं पराभिमतरीत्यैव तदभिमत मसमञ्जस मितिभावः ॥

अथ ननु परमाणूनां रूपादिमत्त्वं नाऽभ्युपगम्यतइ त्याशङ्क्याह ॥

## उभयथाच दोषात् ॥ २–२–१५ ॥

अनित्यत्वादिपरिहाराय रूपादिशून्यत्वाङ्गीकारे कारणगुणपूर्वकत्वाऽसिद्धिः। तत्सिद्धये पुनरपि रूपादिमत्त्वाङ्गिकारे चाऽनित्यत्वाद्यनर्थोऽपात्तिरित्युभयथाऽपि दोषा दसमञ्जस मेवंप्रकारेण काणादमतम् ॥

## अपरिग्रहा च्चात्यन्त मनपेक्षा ॥ २–२–१६ ॥

साङ्ख्यपक्षस्य श्रुतिन्यायविरुद्धस्याऽपि सत्कार्यवादादौ क्वचिदंशे वैदिकपरिग्रहोऽस्ति । काणादपक्षस्य तु केनाऽप्यंशेनाऽपरिग्रहा दत्यन्त मनपेक्ष्यैव निश्श्रेयसार्थिभिः कार्या ॥

इति वैशेषिकाधिकरणम्

---

कारणगुणपूर्वकत्वाऽसिद्धि रिति । कार्येषु पृथिव्यादिषु कारणगुणपूर्वकत्व मुपपादयितुं काणादैः परमाणूनां रूपादिमत्त्व मभ्युपगम् । यदि रूपादिमत्त्व मनित्यतापादक मिति तन्नाऽभ्युपगम्येत तर्हि कार्यगुणानां कारणगुणपूर्वकत्व नसिद्ध्येत् । अथ यदि तत्सिद्ध्यर्थं परमाणूनां रूपादिमत्त्व मूरीक्रियेत – तर्हि तेषा मनित्यत्वादिक मवार्यमेवेति रूपादिमत्त्वस्य अभ्युपगमेऽनभ्युपगमेच दोषताद्वस्थ्य मवार्यमेवेतिभावः ॥

इह यद्यपि यथा कपिलाऽभिमतः प्रधानकारणवादो निराकृत स्तथा कणादाभिमतः परमाणुकारणवादोऽपि निराकृत स्तथा प्युभयोः परमाणुकारणवादए वाऽत्यन्त मनपेक्ष्य इत्याह ॥

सत्कार्यवादादौ क्वचिदंश इति । आकाशादिकार्यं प्रधानरूपकारणात्मना सदेव सर्गादा वभिव्यज्यतइति वैदिकैर प्यभ्युपगम्यते । किन्तु प्रधानस्य स्वातन्त्र्यं परं नेष्यते । तस्मा त्प्रधानकारणवादः क्वचिदंशे वैदिकैः परिगृह्यते । परमाणुकारणवादस्तु न सुतरां परिगृहीतः । परमाणूनां स्वरूपतएव वैदिकै रनभ्युपगतत्वात् ॥

ननु "जालान्तरगते भानौ योऽणीयोदृश्यते रजः । पर स्तत्परमाणूनां परमाणुं प्रचक्षते" ॥ इति पौराणिकवचनात् परमाणुशब्दार्थस्य वैदिकप्रसिद्धत्वा त्तस्य परिग्रहो आवश्यक

अथ समुदायाधिकरणम् ३

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ २-२-१७ ॥

वैदिकैकदेशिनां मतं निराकृतम् । इदानीं वेदबाह्यबौद्धानां मतं निरस्यते । प्रथम मिह बौद्धमतसिद्धान्तसिद्ध स्समुदायकारणवादो युज्यते नवेति सन्देहः ॥

युज्यत इति पूर्वपक्षः । तथा ह्यामनन्ति - द्वौ समुदायौ बाह्याभ्य न्तरौ । बाह्यः पृथिव्यादिः । आन्तर श्चित्तचैतन्यात्मक स्समुदायः । द्वय मेव सर्व मिदं जगत् । तथाहि - बाह्यसमुदायस्य परमाणवः कारणम् ।

---

इतिशङ्क्यते । जालसूर्यमरीचिदृश्याऽत्यन्तसूक्ष्मपदार्थस्य त्र्यणुकत्वेनैव काणादै र्व्यवहृतत्वेन — तदभिमतपरमाणुपदार्थस्य वैदिकप्रसिद्धत्वाऽभावात् ॥

ननु न्यायशास्त्रस्य चतुर्दशविद्यास्थानान्तर्गतत्वेनाऽत्यन्ताऽनादरणीयत्वं नयुज्यत इतिचेन्न । साङ्ख्यशास्त्रस्य प्रधानस्वातन्त्र्याभ्युपगमांश इव न्यायशास्त्रस्याऽपि परमाणुकारणवादाऽभ्युपगमांशए वोपेक्षणीयत्वोपपत्ते रितिदिक् ॥

इति वैशेषिकाधिकरणम्

---

अथ समुदायाधिकरणम् ३

माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञा श्चतुर्विधा बौद्धाः । ते सर्वे प्यादिबुद्धस्य शिष्याः क्रमेण सर्वशून्यत्व बाह्यार्थशून्यत्व बाह्यार्थानुमेयत्व बाह्यार्थप्रत्यक्षत्व वादिनः । ते सर्वेऽपि "बुद्ध्या विविच्यमानानां स्वभावो नाऽवधार्यते । अतो निरभिलप्या स्ते निस्स्वभावाश्च देशिकाः । यथा यथा विचार्यन्ते विशीर्यन्ते तथा तथे" त्यादिन्याये र्गुरुणा सर्वशून्यत्वं बोधिताः । तेषु ये गुरूक्तं तथैवाऽङ्गीकृत्य पर्यनुयोगं नाकार्षु स्ते गुरूक्तस्य श्रद्धयाऽङ्गीकरणा दुत्तमाः । अथ ये गुरूक्तस्य पर्यनुयोग मकार्षु स्तेऽधमाः । ये पुन स्तयो र्मध्यमां स्थिति मास्थिता स्ते माध्यमिकाः । येतु बाह्यार्थानां शून्यत्वमङ्गीकृत्य कथं विज्ञानस्याऽपि शून्यत्वं जगदान्ध्यप्रसङ्गा दिति पर्यनुयोग मकार्षु स्ते गुरूक्ताङ्गीकरणस्य आचारसंज्ञया बौद्धमते

तच चतुर्विधाः पार्थिवाप्यतैजसवायव्याः । तेभ्यो युगप त्पुञ्जीभूतेभ्य स्समुदायो बाह्यो जायते । आन्तरस्य समुदायस्य स्कन्धपञ्चकं कारणम् । रूपवेदनाविज्ञानसंज्ञासंस्काररूपाः पञ्चस्कन्धाः । चित्तेन निरूप्यमाणाः शब्दस्पर्शरूपादयो रूपस्कन्धाः । तद्धर्मिव्यक्ति विज्ञान स्कन्धः । तज्जन्यं दुःखं वेदनास्कन्धः । देवदत्तादि नाम संज्ञास्कन्धः । तेषां वासना

---

परिभाषितस्य तत उपरि पर्यनुयोगस्य तन्मतं योगाज्ञया परिभाषितस्य च सद्भावा द्योगाचाराइ त्युच्यन्ते । गुरुणा शिष्यान्प्र त्यान्तर विज्ञानमात्र मस्ति तदेव नीलाद्याकारं न तु तद्व्यतिरिक्तेण बाह्य नीलादिक मस्ति सहोपलम्भनियमेन नीलादीनां तत्तद्विज्ञानादी नां च अभेदसिद्धेः । भेदे गवाश्ववत् तन्नियमाभावप्रसङ्गात् । तदेव विज्ञानाकारात्मकं नीलादिकं मनादिवासनावशा द्बहिरिवभासत इति बोधितं कथं सर्वथैव बाह्यार्थस्य शून्यत्वं बाह्यस्य नीलादे र्भासमानत् । अह मुल्लेखेन विज्ञानस्याऽन्तरतया इदमुल्लेखेन नीलादे र्बाह्यतयान भेदेऽवभासमाने सहोपलम्भनियममात्रस्याऽप्रयोजकस्याऽभेदसाधनशक्तत्वाऽभावात् । सहत्वोक्त्यैव भेदानुमतेश्चेति यैः पर्यनुयुक्तं तान्प्रति "सत्य मस्ति बाह्यं नीलादिकं । न तु तत्प्रत्यक्षम् । अनुत्पन्न स्याऽविद्यमानस्य प्रत्यक्षत्वाऽयोगात् । उत्पन्नस्य क्षणिकस्य स्थित्यभावात् । किन्तूत्पद्यमानं नीलादिकं विज्ञानं स्वाऽऽकारमर्पयित्वा नश्यति । ततो विज्ञानगतेनाऽऽकारेणाऽनीत नीलादिक मनुमीयत" इति बोधितं सति ते गुरोस्य शिष्यप्रश्नानुरोधेन कियत्पर्यन्त मुपदेशसूत्रं प्रवर्तिष्यत इति सूत्रस्याऽन्तं पृष्टे गुरुणाऽभिहितम् । "भवन्त स्सूत्रस्याऽन्त पृष्टवन्त स्सौत्रान्तिका भवन्त्वि"ति । अत स्ते सौत्रान्तिका । ततश्च "विज्ञानेनाऽनुमेय बाह्यमि तीयं विरुद्धा भाषा । तस्यैवविज्ञानस्य तद्विषये प्रत्यक्षत्वात् । प्रत्यक्षस्य कस्यचिदर्थे स्याऽभावे व्याप्तिसंवेदनस्यसंभावनाऽनुमानाऽप्रवृत्ते"श्चेति यैः पर्यनुयुक्त ते वैभाषिकाः । तान्प्रति बाह्यप्रत्यक्षत्वम प्युपगतम् । एवं विनेयबुद्ध्यनुसारेण चतुर्थोपदेशेऽपि क्षणिकत्वादिभावनया सर्वेऽपि क्रमेण सर्वशून्यत्व प्रतिपद्यन्त इति गुरो रभिप्रायः । तथाऽपि पर्यनुयोक्तारः यथाश्रुतम् गुरो स्तत्त्ववाक्यस्याऽर्थं श्रद्दधाना मतान्तरा ण्यावालम्बिषत । तत्र वैभाषिकादिक्रमेण चतुर्विधान् बौद्धा न्निरसितुं चत्वार्यधिकरणानि । ततो जैनान्निरसितु मेकमधिकरणम् । एतेषा मधिकरणानां पूर्वाधिकरणाभ्यां पेटिकासङ्गतिमाह — वैदिकेति । वैदिकत्वेन सिद्धान्तप्रत्यासन्नतया बुद्धिस्थाः कापिलकाणादाऽक्षचरणाः पूर्वं निराकृताः । इदानी मवैदिका निरस्यन्त इति पेटिकासङ्गतिः । अर्धवैनाशिकनिरासानन्तरं सर्ववैनाशिका निरस्यन्तइ त्यवान्तर सङ्गतिः । केषाञ्चि त्क्षणिकत्व

संस्कारस्कन्धः । तेषां पुर्वोक्तस्य आन्तर समुदायो जायते । अत समुदायकारणवादे को विरोध इत्येवं प्राप्ते निरूप्यते ॥

न युक्तः समुदायवाद इति । ते हि क्षणिकत्ववादिनः । कथ

मभ्युपगच्छन्ति स्थायिका अर्धवैनाशिका । केवल माहरा वृषा पच्यमानाना मुक्त पीताऽऽहारोपचयमङ्गव्यपदेशावयवानां प्रतिक्षण मुपचयापचयं तस्या स्वयं शरीरमपि प्रतिक्षण मुपचयापचयवद् इत्य इन्य ब्रुवन्ति । यद्यपि शरीरस्य प्रतिक्षण मुपचयापचयौ न दृश्येते । तथाऽपि वर्षधारानिपाते स्तटाकजलस्येव शरीरस्यान्तःक्षेपणे कूपजलस्येव तयो स्ते दृश्यमानत्वा यौक्तिकं प्रतिक्षण मुपचयापचयज्ञान मस्त्येव । यथा चन्द्रतारकादीनां मुहूर्तादिकालव्यवधानेन बहुदेशान्तरप्राप्तिदर्शना त्प्रतिक्षण स्वल्पदेशान्तरप्राप्ति रवगम्यते । तथेत्यभ्युपगच्छन्ति । एवं प्रतिक्षण मदृश्यमानाविति. खननपूरणादिभि र्भूगोलकस्य नदी जलसंसर्गशीकरोत्पतनैः समुद्रस्य चोपचयापचयवत क्षणिकत्व मभ्युपगच्छन्ति । अत स्तेऽर्धवैनाशिकाः । बौद्धास्तु सर्वप्रपञ्चस्य क्षणिकत्व मभ्युपगच्छन्त स्सर्ववैनाशिकाः । बौद्धेष्वपि वैभाषिकसौत्रान्तिका परमाणुकारणवादिन इति तत्प्रत्यासत्त्या तदुभयसाधारण दूषणोक्त्या तेषामुभयेषां प्रथमाधिकरणे निरास । द्वितीयाधिकरणे बाह्यार्थाऽनुमेयत्ववादेन किञ्चिद्वैषम्यतां सौत्रान्तिकाना मसाधारणदूषणोक्त्या निरास । ततः क्षणिकत्वाऽभ्युपगम साम्या द्योगाचाराऽणां ततो बौद्धत्वसाम्या न्माध्यमिकानां तदनन्तर मवैदिकत्वसाम्या त्क्षपणकाना मिति विवेकः ॥

इत्थ मवान्तरसङ्गतिं सूचयन् संशयं दर्शयति — प्रथममिहेति । सूत्रोक्तदूषणं विशदयितुं परमतं दूषणीयांश मनुवदति — तथाहीति । पृथिव्यादि रिति । भूभूधर समुद्रादि विषय इत्यर्थः । चित्तेति ' चित्तविज्ञानचैतन्यानि स्कन्धान्तराणि । समुदायद्वय मेवेति । परमाणवएव द्व्यणुकादिभूतभौतिकपर्यन्तं बाह्यसमुदायरूपेण संहन्यन्ते नाऽवयविन मारभन्ते । एवं पञ्चस्कन्धाः आन्तरसमुदायरूपेण संहन्यन्तइ त्यनेनप्रकारेण सर्वजग त्समु दायद्वयात्मक मित्यर्थः । तदेव प्रपञ्चयति — तथाहीति । तदभिव्यक्तिरिति । रूपा द्युपलब्धि रित्यर्थः । तज्जन्यं दुःखमिति । दुःखग्रहणं सुखोपेक्षावस्थयोर प्युपलक्षणं । सूत्रस्याऽणुस्कन्धहेतुके द्विविधेऽपि समुदाये समुदायभावाऽप्राप्तिरित्यर्थ माविष्कुर्व न्नस्मि न्भाष्ये सूत्रकारस्याशयस्थितंहेतु मुत्तरसूत्रपर्यालोचनोन्नेयं दर्शयति — तेहीत्यादिना । योव्यकैकाऽणुहेतुकः पृथिव्यादिभूतात्मको यस्समुदायः यश्च एकैकस्कन्धहेतुको रूपादि स्समुदाय स्तस्मि न्नुभयहेतुकेऽपि परमाणूनां स्कन्धानाञ्च क्षणिकत्वाऽभ्युपगमा त्तेषां

मेतेषां समुदाय स्सम्भवति? कारणानां क्षणिकत्वेन अन्योन्यं भेद नष्टत्वात्। कार्योपादानासमर्थत्वात् ॥

इतरेतरप्रत्ययत्वा दुपपन्नमिति चे न सङ्घातभावानिमित्तत्वात् ॥ २-२-१९ ॥

अस्थिरेषु स्थिरत्वबुद्धिरूपाया अविद्यायाः रागादीनां चान्योन्य कारणत्वात् सङ्घातभावादिक मुपपद्यत इति चे न। अविद्याय स्सङ्घातभावानिमित्तत्वात्। नहि शुक्तिकादिषु रजतादिबुद्धिरूपाय

समुदाययो रेकैकाणुस्कन्धहेतुकत्वे मेळनाभिमुखापारमाणत्वं(?) ... हेतुव्यापारनिष्ठाना मनेकेषां समुदायहेतुकत्व मेष्टव्यम्। न तत् क्षणिकत्वादिभि रूपपा यितुं शक्यम्। येषां व्यापारावेश स्तेषां मेळनक्षणे नष्टत्वात् येषां मेळन तेषां व्यापारक्षणे नुपपन्नत्वात्। केषाञ्चि न्मेळनहेतुव्यापारणाऽन्येषां मेळनाऽभ्युपगमेऽतिप्रसङ्गात्। न व्यापारवतां मेळनवताञ्चैकसन्तानवर्तित्वा दतिप्रसङ्गो नाऽस्तीति वाच्यम्। क्षणिक सन्तानव्यति रिक्तस्याता दनुयायिनः स्थिरस्य सन्तानस्य सर्वक्षणिकत्ववादिभि रनभ्युपगतत्वा दिति भावः।

अस्थिरे ष्विति। अस्थिरेषु स्थिरत्वभ्रान्तिरूपाऽविद्या रागादिहेतुः। रागादि पारवश्यञ्चाऽविद्याहेतुरि त्यनुभवसिद्धम्। एव मन्योन्यहेतुत्वेनानुभवसिद्धस्याऽविद्यारागादि रूपस्य संसारचक्रस्य शरीरेन्द्रियविषयादिरूपसमुदायाऽभावेऽनुपपन्नत्वा त्तदाक्षिप्त स्समुदा स्सिद्ध्यतीति शङ्कार्थः। सूत्रे प्रत्ययशब्द स्तन्मतपरिभाषया हेतुवाची। अन्यो रागादि शब्देन तन्मतेऽविद्याकार्यत्वेन परिगणिता स्संस्कारादय स्सङ्गृह्यन्ते। ते: परिगणित हि – अविद्या – संस्कारः – विज्ञान – नामरूपं – षडायतनम् – स्पर्श – वेदना - तृष्णा – उपादानम् – भवः – जातिः – जरा – मरणम् – शोक. – परिदेवनम् - दुःखम् – दुर्मनस्ता – इत्येवंविधाः। तेषु क्षणिकत्वकार्य दुःखशून्येषु स्थायि नित्यसुखत्वस्य बुद्धिरविद्या। ततो रागद्वेषमोह स्ततो धर्माधर्मसंस्कारा इत्येतत्सर्वं संस्कारः संस्कारवशाज्जीवस्य गर्भाशयद्रव्ये वृत्तिलाभो विज्ञानम्। विज्ञानसंसर्गा दूर्मद्रव्यस्य कललत्वस्य

* इतरेतरेति इतरेतरप्रत्ययत्वा दितिचे न्नोत्पत्तिमात्रनिमित्तत्वा दिति भाष्यान्तरादि पाठः।

अविद्यायाश्शुक्तिकादिवस्तुनो रजतादिकार्यं करोति । विदुष स्तदानीमेव नष्टत्वात् तन्निमित्तरागादयोऽपि तत्र न सम्भवन्ति । तस्मा दयुक्त स्समुदायकारणवादः । युक्त्यन्तर माह ॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २–२–१९ ॥

उत्तरघटक्षणोत्पत्तौ पूर्वघटक्षणस्य नष्टत्वा दभावस्यै वोत्पादकत्वाऽविशेषात् सर्वदा सर्वत्र सर्वोत्पत्तिरपि स्यात् ॥

व्याकारणाऽभिव्यक्ति र्नामरूपम् । तदभिव्यक्तिक्रमेण षडिन्द्रियायतनशरीरनिर्वृत्ति ष्षडायतनम् । निर्वृत्तशरीरेन्द्रियस्य गर्भगत विषयेन्द्रिय संसर्गजंज्ञानं स्पर्शः । तन्निमित्त सुखदुःखे वेदना । सुखप्राप्ति दुःखपरिहारार्था विषयोपादानेच्छा तृष्णा । तया विषयेषु प्रवृत्ति रुपादानम् । ततः क्रमेण गर्भा न्निष्क्रमणं भवः । निर्गतस्य मनुष्यत्वाद्विजात्यभिमानो जातिः । जरामरणे प्रसिद्धे । म्रियमाणस्य पुत्रकलत्राद्यभिषङ्गा दन्तर्दाह श्शोकः । तदुत्थः प्रलापः परिदेवना । मरणक्लेशो दुःखम् । मानसं दुःखं दौर्मनस्य मित्यादिना व्याचक्षते । "न सङ्घातभावानिमित्तत्वा"दिति परिहार सूत्रभागं व्याचष्टे – नेत्यादिना । कारणाऽभावेन समुदायभावो नोपपद्यत इत्युक्तौ कारण प्रदर्शनेनैव तदुत्पत्ति र्भवति निर्वाह्या । तत्र किं मविद्याकार्यरागादिमध्ये समुदायद्वयम प्यन्तर्भूतमि त्यविद्यैव कारणमि त्युच्यते ? उताऽविद्यारागद्वेषादिप्रवाहस्याऽऽनुभवसिद्धस्य अन्यथाऽनुपपत्त्या अवश्याङ्गीकरणीये शरीरेन्द्रियविषयादिरूप बाह्याभ्यन्तरसमुदायभावे तत्कारणं किञ्चि दवश्य मेष्टव्य मिति । आद्य आह अविद्याया इति । यद्यविद्यैव केवला परमाण्वादिव्यापारनिरपेक्षा समुदायहेतुःस्या त्तर्हि शुक्तिरजतभ्रान्तिरूपयाऽप्यविद्यया शुक्ते श्शुक्तिरूपताप्रहाणेन रजतरूपसमुदायताऽऽपत्तिस्स्या दित्यर्थः । अविद्यादीना मितरेतर हेतुकत्व मनुपपन्न मित्याह – विदुष इति । अन्यस्याऽविद्ययाऽन्यस्यरागादिजननेऽतिप्रसङ्ग इतिभावः । द्वितीयेतु क्षणिकवादे परमाण्वादिव्यापाररूपकारणाऽसम्भवउक्तएवेति भावः । अथ समुदायस्य कारणत्वाऽयोगे युक्त्यन्तरपरतया उत्तरसूत्र मवतारयति ॥

घटएव क्षणो घटक्षणः । बौद्धमते वस्तुतः कालो नाऽस्ति । उत्पन्नएव सहजभङ्गुरो घटादिः – क्षणपरिकल्पनामात्रनिमित्तं भवति । सएव घटादिः स्वोदयविनाशपरिकल्पितं क्षणवत्त्वात् क्षणिकोऽपि भवति । वपुष्मान् शिलापुत्त्रक इतिवत् । वस्तुतः स्वव्यतिरिक्त

# असति प्रतिज्ञोपरोधो यौगपद्य मन्यथा ॥ २–२–२० ॥

असत उत्पत्त्या वधिपतिसहकार्यादीनां ज्ञानहेतुत्वप्रतिज्ञाविरोध स्स्यात् । तस्याऽपि स्थित्यभ्युपगमे युगपत् घटद्वयोपलब्धिप्रसक्तिः । अस्थितौ सम्प्रयोगज्ञानादे यौगपद्यम् ॥

क्षणाऽभावात् स्वयमेव क्षणोऽपि भवतीति तेषां प्रक्रिया । उत्तरघटक्षणोत्पत्तिवेळायां पूर्वघट क्षणस्य नष्टत्वा द्भावस्यैव हेतुत्वेनाऽविशेषा त्सर्वेषां सर्वदोत्पत्तिः प्रसज्येतेतिभावः ।

ननु चिरनष्टस्य निवर्त्यापारस्य माभू त्कारणत्वम् । स्वरूपेण स्वव्यापाररूपेण पूर्वक्षणवर्तिनस्तु स्यात् । अवश्यञ्च कारणस्य पूर्ववर्तित्वं वाच्यम् । तेनैव कारणत्वसिद्धौ किं कार्यकालवर्तित्वेन । लोकेच विनष्टस्यैव बीजस्याऽङ्कुरे क्षीरस्य दध्नि मृत्पिण्डस्य घटेच कारणत्वं सम्प्रतिपन्नं दृश्यते । यदि तु कारणस्य कार्यकालवर्तित्व मपेक्ष्यते तर्हि बीजादिविनाशोऽ ङ्कुरादिकारणं पूर्वघटक्षणादिनाश उत्तरघटक्षणादिकारणमि त्यास्त्वित्याशङ्कानिराकरणार्थ मुत्तरसूत्रं ॥

तत्राद्यशङ्कानिराकरणार्थ मिदं सूत्रम् ॥

असतीति । कार्यदशाया मिति शेषः । अधिपतीति । अधिपतिसहकार्यालम्बन समनन्तरप्रत्यया श्चत्वारः चित्तचैत्योत्पत्तिहेतव इति बौद्धानाम् प्रतिज्ञा । अधिपति रिन्द्रियम् । तद्धि ज्ञानस्य रूपादिषुपञ्च स्वेकैकमात्रविषयत्वनियामकम् । नियामकञ्च लोकेऽधिपति रुच्यते । सहकारि अलोकादिकम् । आलम्बनं घटादि र्विषयः । समनन्तर प्रत्ययः पूर्वज्ञानम् । एते चत्वारः चित्तस्य ज्ञानस्य चैत्यानां तदभिन्नानां सुखादीना ञ्चोत्पत्तिहेतव इति प्रतिज्ञार्थः । यदि कार्यदशायाम् कारणम् नस्या दियंप्रतिज्ञा विरुध्येत । निर्हेतुकेफलोत्पत्तौ अधिपत्यादय श्चित्तचैत्योत्पत्तिहेतव इत्युक्तप्रतिज्ञाया नष्टत्वात् । अथ यदि कारणस्य कार्यकालवर्तित्व मभ्युपगम्येत तर्हि युगपत् पूर्वोत्तरघटद्वयस्याऽप्युपलब्धिः प्रसज्येत क्षणिकत्वञ्च विहन्येत । अन्यथा एतद्दोषवारणाय कारणस्य कार्योत्पत्ति क्षणेस्थिति मनभ्युपगम्य कारणक्षणएव तस्य विषयत्व मभ्युपगम्येत । तर्हि सम्प्र योगज्ञानयो र्हेतुहेतुमतो र्यौगपद्यं स्या दित्यर्थः ।

## प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्ति रविच्छेदात्

॥ २–२–२१ ॥

निरोधो निरन्वयविनाशः स स्थूलःसूक्ष्मश्च न सम्भवति ।कप ालादि भावरूपावस्थाप्राप्ते रपि नाशशब्दवाच्यत्वात् । सतो द्रव्यस्याऽपि विच्छेदा त्ततो न क्षणिकत्वसिद्धिः ॥

## उभथा च दोषात् ॥ २–२–२२ ॥

उत्पन्नस्य तुच्छतापत्तौ तुच्छा दुत्पत्तौ चाऽभावा दुत्पत्त्यसम्भवात् अभावात्मककार्योत्पत्तिरूपदोषा च्चाऽसमञ्जस मिदं दर्शनम् ॥

---

निरोध इति । असत्कार्यवादिनां बौद्धानां नाऽनुवर्तमानस्य द्रव्यस्याऽवस्थान्तरप्राप्ति र्विनाशः । किन्तु निरन्वयो निरनुवृत्तिको विनाशः । स तै र्निरोधशब्देन परिभाष्यते । स द्विविधः । स्थूल स्सूक्ष्मश्च । मुद्गरपाताद्यनन्तरम् सर्वै रुपलभ्यमानो घटादीनां विनाशः स्थूलः प्रतिसङ्ख्यानिरोधइ त्युच्यते । प्रतिसङ्ख्या विषयसत्त्वप्रतिकूला तदसत्त्वग्राहिणी लौकिकानां बुद्धि स्तद्विषयो निरोध इ त्यवयवार्थान्वयात् । तद्विपरीतो निरोधः अप्रति सङ्ख्यानिरोधः सूक्ष्मः । लौकिकोपलब्ध्यविषयो बौद्धै र्युक्त्या साध्यमानः प्रतिक्षण विनाशः । तयो रुभयोर प्यप्राप्ति रसम्भवः । कुतः । अविच्छेदात् । घटादिरूपेण स्थितस्य द्रव्यस्य स्वरूपतो विच्छेदाऽभावात् । नच द्रव्याऽनुवृत्तौ विनष्टो घट इत्यादिप्रतीतिव्यवहारयो र्निर्विषयत्वाऽऽपत्तिः । अवस्थान्तरापत्ते स्तद्विषयत्वा दित्यर्थः । इदञ्च निरोधाऽभावसाधनम् कार्यसहभाविकारणनिरासइव क्षणिकत्वनिरासे प्युपयुज्यत इति । तेन क्षणिकत्वमपि नसिध्यती त्याह – तत इति । प्रतीपाप्रतिकूला सङ्ख्या सन्तं भाव मसन्तंकरोमी त्येवंरूपा बुद्धिः प्रतिसङ्ख्या । तया निरोधः कस्यचि द्भवति । अबुद्धिपूर्वकस्तु तद्विपरीतोऽप्रतिसङ्ख्या निरोधः । वैनाशिका स्तयोः कारणत्व मभ्युपगच्छन्ति । प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधयोः अप्राप्तिः कारणत्वाऽसम्भव इत्यर्थः । "आकाशं द्वौ निरोधौ च नित्यं त्रय मसंस्कृत" मिति बौद्धै र्नित्यत्वेन अङ्गीकृतयो स्तयोः क्वचिदपि कदाऽपि विच्छेदाऽभावेन सर्वदा सर्वत्र सर्वकार्योत्पत्तिः प्रसज्येते त्यर्थः ॥

अथ मर्ये उपेतुं शक्यमिति भाष्ये न प्रदर्शितः ॥

निरोधयोः कारणत्वनिरासे हेत्वन्तरप्रदर्शनार्थम् सूत्रम् ॥

# आकाशे चाऽविशेषात् ॥ २–२–२३ ॥

आकाशे च न तुच्छत्व मुपपद्यते । अबाधितप्रतीति सिद्धत्वा दस्य श्येनादिपतनदेशत्वेन ॥

चकारो भिन्नक्रमः । प्रकारद्वयेन दोषप्रसङ्गा च्चे त्यर्थः । तथाहि – बौद्धा एवं कल्पयन्ति । "बुद्धिबोध्यं त्रया दन्य त्संस्कृतं क्षणिक" ञ्चेति । संस्कृत मुत्पाद्यं किन्तत्त्रयं यस्मा दन्य द्बुद्धिबोध्य मुत्पाद्यं क्षणिकञ्चेत्याकाङ्क्षायां तदपि त्रयं ते परिगणयन्ति । "प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधा वाकाश" ञ्चेति तत्त्रयमेववस्तु । अभावात्मकं निरुपाख्यं तुच्छ मिति मन्यन्ते । तत्र पूर्वोत्पन्नस्य घटक्षणस्य तदानीमेव नष्टत्वप्राप्त्या तुच्छा न्निरोधादेव कार्यघटक्षण स्योत्पत्तिरिति यदभ्युपगम्यते । तत्र तुच्छा दुत्पत्त्यसम्भव एको दोषः । तुच्छा दुत्पत्त्यङ्गीकारे तुच्छस्य निर्विशेषत्वेन कारणविशेषकृतः कार्यविशेष इति व्यवस्थाया उपपादयितु मशक्यत्वा द्घटक्षणानन्तरम् सर्वस्य जगतः उत्पत्ति स्स्यात् । तथा तुच्छा दुत्पत्ता वुत्पद्यमानं कार्यमपि तुच्छमे वोत्पद्येत । ननु सद्रूपं कारणऽनुसारित्वा त्कार्यस्ये त्यपरो दोषः । इति ।

इह यद्य प्याकाशस्य तुच्छत्वनिरासः प्रकृते क्षणिकत्वनिराकरणेनोपयुज्यते तथाऽपि निरोधप्रसङ्गा त्ताभ्यांसह पतितस्याकाशस्य बुद्धिस्थतया प्रसङ्गवशा त्तस्य तुच्छत्व निरासः प्रकृतः । अविशेषा दित्यस्य तात्पर्यतो विवरणम् । अबाधितेति । पृथिव्यादिव दाकाशस्याऽपि "अत्र श्येनः पतति अत्र गृध्र" इत्यबाधितप्रतीतिसिद्धत्वाऽविशेषा दित्यर्थः । अकाशेच न तुच्छत्वं अबाधितप्रतीतिसिद्धत्वाऽविशेषा दबाधितप्रतीतिसिद्धपृथिव्यादिव दिति सूत्रार्थः । प्रसङ्गागत माकाशस्याऽवस्तुत्वनिराकरण मवसितम् । प्रकृतम् क्षणिकत्व निराकरण मनुवर्तते । अत्रेयंशङ्का प्रवर्तते । प्रत्यक्षानुमानसिद्धम् भावानां क्षणिकत्वं निराकर्तु मशक्यम् । प्रत्यक्षंताव द्वर्तमानविषय मतीता दवर्तमाना पूर्वक्षणवर्तिनोऽनागता दुत्तरक्षणवर्तिनश्च स्वविषय व्यावृत्त मवगमयति । यथा – नीलो घट इति ज्ञानं स्वविषय मस्मादिव्यावृत्तम् ।' तथाऽनुमान मपि । घटादिः 'क्षणिकः अर्थक्रियाकारित्वात् शरीरादि वत् । व्यतिरेकेण तुच्छवत् । नचाऽन्वयदृष्टान्ताऽसिद्धिः । शीर्यतेहि प्रतिक्षणं शरीरम् । तथाहि – जायमानस्य शिशो श्शरीरं प्रतिदिवस मुपचितपरिमाण मनुभूयते । तच्च भवो वर्षधारापूर्यमाणतटाकस्येव सूक्ष्मतमसूक्ष्मतरादिप्रणाडिकया क्रमोपचितदर्शनयोग्यपूर्व परिमाणवैलक्षण्यस्थूलपरिमाणविषयतयैव समर्थनीयः । ननु झटिति मृत्पिण्डद्वयसंयोजनेन

## अनुस्मृतेश्च ॥ २-२-२४ ॥

प्रत्यभिज्ञाना दपि न क्षणिकत्वसिद्धिः । तदे वेद मिति सामानाधिकरण्येनाऽतीतवर्तमानकालविशिष्टं वस्त्वेक मिति विज्ञायते । सामग्री च तस्याः पूर्वानुभवजनितसंस्कारवतः पुरुष स्येन्द्रियसंयोगः । ततः क्षणिकत्वाद्यनुपपन्नार्थाभिधाना दसम्बद्ध एव समुदायकारणवादः ॥

इति समुदायाधिकरणम्

---

जातस्य महामृत्पिण्डस्येव उक्तप्रणाडीनिरपेक्षोत्पत्तिक महापरिमाणविषयतया शरीरे तदा महापरिमाणोत्पत्ते रदर्शनात् । क्रमोपचीयमानपरिमाणभेदाश्च मुहूर्तनाडिकादिव्यवधानेन लवनिमेषादिव्यवधानेनवा विलम्ब्य विलम्ब्य जायन्तइ त्यत्र न किञ्चि द्बाधक मस्ति । ततः क्रमिकेषु क्षणेषु प्रतिक्षणं जायन्तइ त्यभ्युपगन्तव्यं । एकस्मिन् क्षणे परिमाणद्वयाऽदर्शनेन क्षणभेदमात्रस्याऽपेक्षितत्वा दिति देहपरिमाणस्य ताव त्सिद्धं क्षणिकत्वम् । अयं न्यायः क्रमसंवर्धमानतृणतरुगुल्मलतादिपरिमाणेषु च योजनीयः । परिमाणभेदश्च द्रव्यभेदनियत स्तद्भेद मवगमयति । तस्मा त्सर्वेषा मपि भावानां क्षणिकत्व मवार्यमि त्याशङ्कानिराकरणार्थं सूत्रम् ॥

तदेवेदमिति । अत्राऽय माशयः । प्रत्यभिज्ञाना दपि घटादीनां न क्षणिकत्वं सिध्यति । तदेवेद मिति खलु प्रत्यभिज्ञायते । प्रत्यभिज्ञानं नाम अतीतवर्तमानकालव तैक्यक वस्तुविषयं प्रत्यक्षज्ञानम् । तस्य कालद्वयसम्बन्ध मेकमेववस्तुविषयः । ततश्च प्रत्यक्षं न क्षणिकत्व साधकमितिसिद्धम् । अनुमानमपि विरुद्धमेव । तथाहि — सत्त्वा दर्थक्रियाकारित्वा द्वा घटादिकं स्थिरं यदस्थिरं तदस दनर्थक्रियाकारिच । यथा शशविषाण मिति वक्तुंयुक्तत्वात् । तस्मा दबाधितार्थविषयया प्रत्यभिज्ञया घटादीनां स्थैर्यमेव सिध्यति । तथा योऽहं बाल्ये पितरा वन्वभूवं सएवाऽहं वार्धके प्रणप्तृ ननुभवा मीत्यादि प्रत्यभिज्ञाऽपि क्षणिकत्वं निराकरोति । किञ्च परेषा मिदं क्षणिक मित्यादि प्रत्यभिज्ञापूर्वकहेतुपन्यासादिक मपि नोपपद्यते । प्रतिज्ञोपक्रमक्षणएव वक्तु र्विनष्टत्वात् । नच स्तेनैवोपक्रान्त मज्ञाततयाऽन्येन समापयितुं शक्यम् । तथा अनुभवितु र्नष्टत्वा दन्यस्य स्मरणमपि नसम्भवति । एवं संशयितु र्नष्टत्वा दन्यस्य निर्णयोऽपि नयुज्यते । तस्मात् क्षणिकत्व

अथ दृष्टत्वाधिकरणम् ४

बाह्यार्थास्थिरत्ववादिषु गोघटादीनां प्रत्यक्षवादिनो बौद्धा निरस्ताः। ज्ञानानुमेयत्ववादिनो निरस्यन्ते॥

## नाऽसतो दृष्टत्वात् ॥२–२–२५॥

इह बौद्धैकदेशिनां ज्ञानानुमेयत्ववादो युक्तो न वेति संशये पूर्वःपक्षः।

ज्ञाने स्वाकारम् समर्प्य विनष्ट मर्थम् ज्ञानाकारवैचित्र्येणाऽनुमिनोति ज्ञाता। अतो ज्ञानवैचित्र्येण बाह्यार्थवैचित्र्य मनुमीयत इति।

एत न्न सम्भवति। अर्थस्य क्षणिकत्वात् असता विनिष्ठस्य धर्मिणो धर्मसंक्रमण स्याऽदृष्टत्वात् ॥

---

वादिना मनुभवस्मरणादिव्यवस्थाः न सम्भवेयु रित्येवम् नानाविधाऽव्यवस्थाप्रसङ्गा त्समुदायकारणवाद स्सुतरा मसम्बद्ध एवेति ॥

इति समुदायाधिकरणम्

अथ दृष्टत्वाधिकरणम्

एवं वैभाषिकमतं निराकृत्य तत्सङ्गत्या सौत्रान्तिकमतनिराकरणार्थ मधिकरणान्तर मवतारयति — बाह्यार्थेति। यद्यपि समुदायभावनिराकरणं क्षणिकत्वनिराकरणञ्च सौत्रान्तिकानामपि समानम् तथाऽपि प्रागुक्त स्समुदायभावनिराकरणहेतु र्न सौत्रान्तिकमते प्रवर्तते। तथाहि — कारणाऽभाऽवेनतन्निराकरणं कृतम्। असिद्धः कारणाऽभावः। पूर्वपूर्वकारणक्षणाना मुत्तरोत्तरकार्यक्षणान्प्रति पूर्ववर्तनमात्रेण कारणत्वसम्भवात्। विनष्टात्खलु बीजा दङ्कुर उत्पद्यते। तथाविधादेव क्षिरा द्दधि। मृत्पिण्डादेव तादृशाद्घटश्च। तस्मा त्कार्यकाले विद्यमानस्यैव वस्तुनः कारणत्वं युक्तमिति यदुक्त न्तदसङ्गतमि त्याशङ्का निराकरणार्थ मिद मधिकरणम्॥

## उदासीनाना मपि चैवं सिद्धिः ॥ २-२-२६ ॥

क्षणिकत्वाभ्युपगमात् अन्यएवाऽनुष्ठाता, अन्य एव फलस्वामी। अतो निष्प्रयत्नाना मपि सर्वार्थसिद्धिस्स्या दिति दुरुपपादोऽयं वाद इति ॥

इति दृष्टत्वधिकरणम्

---

अत्रेदं सौत्रान्तिकमतम्। ज्ञानगतै नीलाद्याकारै र्बाह्यार्थगतास्तेऽनुमीयन्ते। यद्यपि नीलादिज्ञान मपरोक्षतयाऽनुभूयते तथाऽपीन्द्रियसन्निकृष्टेन येनाऽर्थेन यत् ज्ञानं जायते न तज्ज्ञान न्तद्विषयकम्। किन्तु स्वयम प्यर्थेव न्नीलाद्याकारं भवति। तज्ज्ञानं स्वप्रकाशतया स्वात्मानं विषयीकुर्वत् स्वगतं नीलाद्याकारमपि विषयीकरोति। अतो नीलादि ज्ञानस्य नाऽपरोक्षानुभवविरोधः। नीलाद्यर्थिनो बहिःप्रवृत्तिस्तु नाऽपरोक्षज्ञानात्। किन्तु तदनन्तरभाविन आनुमानिकज्ञानात्। यथा वायुनिषेवणार्थिनः शाखाचलनं दृष्ट्वा वृक्षमूले प्रवृत्ति र्न चाक्षुषशाखाचलनज्ञानात्। किन्तु तल्लिङ्गकवायुसञ्चारविषयानुमानिक ज्ञाना दिति। अत्रेदन्दूषणम्। अर्थस्य क्षणिकत्वा दित्यादि। अत्राऽय म्भावः। इन्द्रियसन्निकृष्टभावक्षणानन्तरक्षणेहि ज्ञानं जायते। तत्र यथा वर्तमानत्वग्राहि ण्यतीतस्य तस्य भावस्य विषयत्व न्न युज्यते। विद्यमान स्यैव जपाकुसुमादेः स्फटिकादिषु स्वधर्म सङ्क्रमणस्य दृष्टत्वात्। तदाऽपि नीलादिसङ्क्रमणाऽभ्युपगमे तद्गतं पुरोवर्तित्वनेदीयस्त्वदवीयस्त्व जडत्वादिक मपि सङ्क्रामति? नवा सङ्क्रामति? सङ्क्रामतिचे दान्तरत्वज्ञानत्वादे स्तद्विरोधिनोऽवभासो नस्यात्। स्फटिके लौहित्यसङ्क्रान्तौ तद्विरोधिन शौक्ल्यस्येव। अथ न सङ्क्रमति दर्पणे मुखगतप्राङ्मुखत्वनेदीयस्त्वादिव त्तदा, लिङ्गाऽभावेन तद्व भासो नस्यात्। तस्मात् क्षणिकवादे बाह्यार्थप्रत्यक्षस्येव तदनुमेयत्वस्याऽप्यसम्भवा द्बाह्यार्थव्यवहारसिद्ध्यर्थं तेषां स्थायित्वमेवाङ्गीकरणीय मिति ॥ वैभाषिक सौत्रान्तिक साधारणं दूषण माह —

न नूदासीनानां सिद्धि रापादयितुं न शक्यते। तेषां तत्कारणकर्मतज्जन्यव्यापार रहितत्वात्। नच क्षणिकपक्षे यागाद्यनुष्ठानानन्तरं स्वर्गादिफलभाजामपि तद्राहित्यं तुल्य मिति वाच्यं। तेषां स्थायिव्यापाररहितत्वेऽपि यावत्फलप्राप्ति सन्तन्यमानक्षणिकव्यापार शालित्वा दित्याशङ्क्य कर्म तद्व्यापारक्षणिकत्वप्रयुक्तं नेद मापादनं किं त्वनुष्ठातृभोक्तृ भेदप्रयुक्त मिति सूत्रतात्पर्य माह — क्षणिकत्वेति। अत्राऽय म्भावः। क्षणिकत्वाऽभ्युप

अथ उपलब्ध्यधिकरणम् ५

## नाऽभाव उपलब्धेः ॥ २–२–२७ ॥

इह बौद्धानां केवलविज्ञानवादो युक्तो न वेति संशये युक्त इति पूर्वपक्षः ।

तथाहि, साकारं विज्ञानमेव तत्त्वमान्तरम्, न बाह्याःपदार्थाः । स्वप्ने बाह्यपदार्थाननपेक्ष्य केवलया बुद्ध्या व्यवहारदर्शनात् । तद्व ज्जाग्रद्व्यवहारस्याऽपि व्यवस्था युज्यते । ततो विज्ञानमात्रं तत्त्व मित्येवं प्राप्ते उच्यते ॥

गमे अनुष्ठानभोगक्षणयो र्भिन्नत्वात् अनुष्ठात्रपेक्षया भोक्तु र्भिन्नतयाऽननुष्ठातुरेव भोक्तृत्वं प्रसज्येत । यद्येवम् क्षेत्रकर्म ण्यप्रयतमानस्याऽपि कृषीवलस्य सस्यं सिध्येत् । मृत्संस्कारेऽ प्रवृत्तस्याऽपि कुलालस्य घट उत्पद्येत । एव मुद्योगरहितानाम प्यैहिकाऽमुष्मिकफलं मोक्षश्च सिध्येत् तस्मा दयं क्षणिकत्ववादोऽयुक्त इति भावः ॥

इति समुदायाधिकरणम्

---

अथ उपलब्ध्यधिकरणम्

क्षणिकत्वे नीलाद्यर्थानां प्रत्यक्षत्व मनुमेयत्वं वा नोपपद्यत इति बाह्यार्थव्यवहारार्थं तेषां स्थैर्यमास्थेय मिति वैभाषिकसौत्रान्तिकमतयोः दूषण मुक्तम् । तदयुक्तम् । नीलाद्यर्थाना मान्तरविज्ञानरूपत्वेनस्वप्रकाशै स्तैरेवविज्ञानै स्तत्प्रत्यक्षीकरणसम्भवात् विज्ञानरूपाणामेव तेषां बहिर्वदवभासो भ्रम इति तद्व्यतिरिक्तानां बाह्यार्थाना मभावा दिति योगाचारमतस्याऽ शङ्कया सङ्गति मभिप्रेत्य संशय न्दर्शयति — इहेति । न बाह्याः पदार्था इति । आन्तराद्विज्ञाना द्व्यतिरेकेण बाह्याः पदार्थाः न विद्यन्त इत्यर्थः । नच नानाविधार्थाना मभावे ज्ञानवैचित्र्यं न सिद्ध्यतीति शङ्क्यम् । ज्ञानानामेव साकाराणां स्वयमेव विचित्र त्वात् । तत्र कारणं नास्तीति चोद्यम् । ज्ञानगताकारवैचित्र्यस्याऽपि वासनामूलत्वात् ।

घटं जानामीति कर्तुः कर्मतया अर्थ स्योपलब्धे स्तदभावो न शक्यते वक्तुम् । पुरुष स्याऽर्थविशेषव्यवहारानुगुण्यापादन मेव हि ज्ञानस्याऽकारः ॥

यदुक्तं स्वप्नदृष्टान्तेन जाग्रद्व्यवहारस्याऽपि शून्यत्वं तत्राऽऽह ॥

## वैधर्म्या च्च न स्वप्नादिवत् ॥ २-२-२८ ॥

कारणदोषबाधराहित्यरूपवैधर्म्या न्न स्वप्नादिव जागरितज्ञानस्य मिथ्यात्वम् । अतो न विज्ञानमात्रं तत्त्वम् ॥

---

ननु बाह्यार्थाना मभावे नीलपीतादिज्ञानानां निरालम्बनत्व मितिचे न्न ज्ञानानामेव नीलपीताद्याकारत्वात् । नच नीलतद्विज्ञानयो रभेदे इदं जानामीति क्रियाकर्मभावभेदाऽव भासो विरुध्येतेतिचे न्न तस्य द्विचन्द्रज्ञानवत् भ्रन्तत्वात् । नच बाह्यस्य नीलादेः कय मान्तरज्ञानभेदावभासो भ्रम इति शङ्क्यम् । बाह्यत्वाऽवभासस्याऽपि भ्रमत्वात् । उपरिस्थितानां नक्षत्रादीना मुद्यतां भूमिस्थत्वावभासव द्युक्तत्वात् ।

ननु बाह्यार्थतदवभासयो रभावे कथं बाह्यार्थव्यवहारः इत्याशङ्क्य दृष्टान्ते नोप पादयति – स्वप्न इति । ज्ञानातिरिक्तस्याऽर्थस्य नाऽभावः उपलब्धेः प्रत्यक्षोपलब्धिविरोधेन ज्ञानाऽभेदाऽनुमानस्याऽनुत्थानादिति सूत्रार्थंदर्शयन् सिद्धान्तयति – घट ज्ञानामीति ।

ननु ज्ञानविषययो स्सम्बन्धस्य दुर्निरूपत्वात् नातिरिक्तबाह्यर्थोपलब्धिरेव भ्रान्ति रितिचे न्न चिच्छक्तिपरिणामरूपस्य प्रदीपप्रभातुल्यद्रव्यस्य ज्ञानस्य चक्षुरादिगोलकद्वारा बहिर्दीर्घप्रभाकारेण निर्गतस्य विषयै स्संयोगस्यसम्भवात् । स्वप्नदृष्टान्तेन नीलादिज्ञानानां बाह्यार्थशून्यत्वं यदुच्यते तत्स्वप्नमायादीनां बाह्यार्थशून्यत्वं परमतानुसारेणाऽभ्युपगम्यैव दृष्टान्तवैधर्म्यप्रदर्शनार्थं सूत्रम् ॥

करणदोषेति । नीलादिज्ञानानि नहि स्वप्नमायाज्ञानादितुल्यानि । स्वप्नादिज्ञानानां निद्रादिदोषकलुषितेन्द्रियबाधितविषयत्वेन जाग्रद्विषयनीलादिज्ञानाना मतथाविधत्वात् । वस्तुतः ज्ञानानां न क्वचिद प्यर्थशून्यत्व मस्तीति स्वमतप्रदर्शनार्थं मिदं सूत्रम् ॥

## * न भावोऽनुपलब्धेः ॥ २–२–२९ ॥

अर्थशून्यस्य ज्ञानस्याऽप्यर्थवत्ता सम्भवत्येव। ततो विज्ञान मात्रवादोऽनुपपन्नः ॥

इति उपलब्ध्यधिकरणम्

---

अथ सर्वथानुपपत्त्यधिकरणम् ६

## सर्वथाऽनुपपत्तेश्च ॥ २–२–३० ॥

इह सर्वशून्यत्ववादो युक्तो न वेति सन्देहः ॥

युक्त इति पूर्वः पक्षः ॥ तथाहि, सर्वं जगन्न सत्। बाधितत्वात्। नाऽसत्, प्रतीयमानत्वात्। नोभयात्मकम्, विरोधात्। नाऽनुभयात्मक मसम्भवात्। किन्तु, चतुष्कोटिनिर्मुक्तं सर्वं शून्यमेव। प्रत्यक्षावभासस्तु

---

सम्भवत्येवेति सन्ध्याधिकरणे तत्त्वं समर्थयिष्यमाणत्वा दितिभावः।

इति उपलब्ध्यधिकरणम्

---

अथ सर्वथाऽनुपपत्त्याधिकरणम् ६

निराकृतो विज्ञानवादः। अथ बौद्धसिद्धान्तरहस्यभूतशून्यवादनिराकरणार्थ मधिकर णान्तरम् ॥

माध्यमिका एव ममिप्रयन्ति। शून्यमेव तत्त्वं सुगतस्याऽभिमतम्। शिष्ययोग्य तानुसारेण बाह्यार्थविज्ञानाऽस्तित्व मुपदिष्टम्। वस्तुतो विज्ञानमात्रमपि न निरूपयितुं शक्यम्। तथाहि – न विज्ञानंसत्। नीलंवा पीतंवा शीतंवा उष्णंवा एकंवा अनेकंवेति

---

* नभाव इति इत उपरि क्षणिकत्वाच्चेति किर्मापसूत्रं शाङ्करभाष्यादा वुपलभ्यते इहतु नास्ति ॥

संवृतिमूलः । तस्मात् शून्यवाद स्समीचीन इत्येवं प्राप्ते सिद्धान्त उच्यते ॥

न सम्भवति सर्वशून्यवादः । कुतः ? सदितिप्रतिज्ञाया मिवाऽसदिति प्रतिज्ञाया मन्यथा प्रतिज्ञाया स्तुच्छत्वानुपपत्तेः । सदसद्बुद्धिशब्दानां वस्तुगतान्योन्यविरुद्धभावाभावरूपावस्थाविशेषविषयत्वात् । यत संवृतिमूलः प्रत्यक्षावभास इति तदुपहास्यम् । सर्वस्य शून्यत्वे कः संवृते राश्रयः यस्यैव मवभासः । तत स्सर्वशून्यत्ववादः सर्वविरुद्ध एव ॥

इति सर्वथानुपपत्त्यधिकरणम्

---

विकल्पासहत्वात् । नाऽप्यसत् प्रत्यक्षावभासविषयत्वात् नच सदसत् विरुद्धत्वात् । तस्माच्छून्यमेव तत्त्व मिति । तदाहुः — "नेष्टं तदपि धीराणां विज्ञानं पारमार्थिकम् । चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदु"रिति ।

ननु शून्यं सत्त्वेन कथम् प्रत्यक्ष मवभासत इतिचेन्न संवृतिमहिम्ना तस्य सदात्मकत्वेन व्यवहारविषयत्वसिद्धेः । यया शून्यतत्त्वं सम्वीयते सा संवृतिः भ्रान्तिवासना रूपेति तेषा माशयः । अत्र दूषण मुक्तम् । सूत्रकृता सर्वथाऽनुपपत्तेश्चेति । चकारो भिन्नक्रमः । सर्वविधाभिश्च अनुपपन्नत्वा दित्यर्थः । सत्त्वादिप्रकारै श्चतुर्भिःकिल निषेध श्शून्यवादिना प्रतिज्ञायते । चतुष्कोटिविनिर्मुक्त मिति । नसत् — नाऽप्यसत् — नोभयात्मकम् — नाऽप्यनुभयात्मकमिति कोटिचतुष्टयम् । तेन सर्वप्रकारैश्च निषेधप्रतिज्ञायाम् सर्वशून्यत्वरूपं तुच्छत्वरूपं नोपपद्यते । किन्तु परिशेषत स्सद्वस्तु सम्पद्यत इति तस्मान्न युक्त श्शून्यवाद इति सूत्रार्थः । अमु मर्थ माविष्कुर्वन् सिद्धान्त माह — न सम्भवतीति । सर्वं न सदितिवा नाऽसदितिवा प्रतिज्ञायां जगत स्तुच्छत्वं न सम्भवति । किन्तु सत्त्वमेव सम्भवती त्यर्थः । तथाहि — भावाभावयो स्सम्प्रतीत्योश्च विद्यमानस्यैव वस्तुनोऽवस्था विशेषविषयत्वेन सर्वं शून्य मितिप्रतिज्ञया सर्वस्याऽपि सत्त्वस्यैव सिध्या तुच्छत्वस्याऽनुपपन्नत्वा दिति भावः । सर्वस्य शून्यत्व इति । संवृतिर्हि संवरणीयमात्र मिति । सर्वस्य शून्यत्वे संवृतेः कश्चि दाश्रयएव नास्ति यन्निष्ठासती तदाच्छाद्याऽसत्यं प्रपञ्च सत्यतयाऽवभासये दित्यर्थः । यस्यैव मवभास इति । यस्य वस्तुता निष्प्रपञ्चस्य सत्यस्या

अथ एकस्मिन्नसम्भवाधिकरणम् ७

## नैकस्मिन्नसम्भवात् ॥ २–२–३१ ॥

गता बौद्धाः। जैनमतं निरस्यते। जैना हि सप्तभङ्गिन्यायेनैकस्मिन्नपि वस्तुनि नानाभाव मापादयन्ति। तेषां मतं युक्तं न वेति विचारः॥

एवं तेषां प्रक्रिया जीवोऽजीव श्चेति द्वौ पदार्थौ। जीव श्चेतन श्शरीरपरिमाण स्सावयवः। अजीव ष्षड्विधः। वनमहीधरादि

---

सत्यप्रपञ्चात्मनाऽवभासो भवेत्। तादृशं किञ्चि त्संवृतिशब्दिताऽविद्याश्रयभूत मधिष्ठानं नास्ती त्यर्थः॥

अथ सर्वथाऽनुपपत्त्याधिकरणम्

---

अथ एकस्मिन्नसम्भवाधिकरणम् ७

बौद्धमतनिरासानन्तर मवशिष्टाऽवैदिकमतनिरास इति सङ्गति माह — गता इति। स्यादस्तीत्यादिना वक्ष्यमाणस्सप्तभङ्गीन्यायः। तस्य प्रथमसूत्रेण निराकरणं क्रियते। द्वितीयादिसूत्रे जीवानां जैनाभिमतस्य देहपरिमाणत्वस्य। तन्निराकरण ञ्जैनपरिगणितानां जीवादीनां सर्वेषामपि पदार्थानां तदभिमतप्रकारनिराकरण स्योपलक्षणम्। तत्तु शिष्यै रूहनीय मिति सूत्रकृता न प्रदर्शितम्। तत्स्वरूपाऽवगतौ तत्र निराकरणं शिष्यै स्स्वयमे वोहितुं शक्यमिति तत्परिगणितान् जीवादिपदार्थान् सङ्क्षेपेणोपन्यस्यति — एव न्तेषामिति। वनमहीधरादि रिति। जीवभोग्यस्य सर्वस्य वस्तुजातस्य उपलक्षणम्। आस्रवतीति। विषयेन्द्रियसम्बन्धवशात् जीवस्य रूपादिज्ञानपरिणामित्व मास्रवणम्। संवृणोति विवेकमिति। अन्येतु "संवृणो तीन्द्रियप्रवृत्ति"मिति गुप्तिसमित्यादिकं मोक्षकारणं संवरण इत्याचक्षते। यदाहुः — "आस्रव स्स्रोतसां द्वारं संवृणोतीति संवरः। आस्रवो भवहेतु स्स्या त्संवरो मोक्षकारण"मिति। कायमनोवाङ्निग्रहो गुप्तिरिति जैनैः परिभाष्यते। भूमिगतजन्तुहिंसापरिहाराय प्रहते मार्गे सम्यगादित्यरश्मिप्रकाशिते निरीक्ष्य सञ्चरणम्। मितभाषणं नियताऽऽहारनिषेवण मित्यादिकं समितिरिति परिभाष्यते।

रकः; आश्रवसंवरनिर्जरबन्धमोक्षाख्याः पञ्च। आश्रव त्यनेन जीवो विषयेष्वि त्याश्रव इन्द्रियसङ्घातः। संवृणोति विवेकमि त्यविवेकादिः संवरः। निश्शेषं जीर्य त्यनेन कामक्रोधादि रिति केशोल्लुञ्छन तप्तशिलारोहणादितपो निर्जरः। कर्माष्टकेनाऽपादिता जन्मपरम्परा बन्धः। चत्वारि घातिकर्माणि पापरूपाणि, चत्वा र्यघातिकर्माणि पुण्यरूपाणि। तेभ्यो मुक्तस्य जीवस्य सन्ततोर्ध्वगमनं मोक्षः। एते

---

कामक्रोधादि रिति। चत्वारीति। ज्ञानदर्शनसुखवीर्यगुणकस्य जीवस्य ज्ञानादीनां चतुर्णां गुणानां मोक्षदशाया माविर्भविष्यतां संसारदशायां प्रतिघातकानि प्रत्याहानादीनि चत्वारि पापरूपाणि घातिकर्माणि शरीरसंस्थान तदभिमान तत्स्थिति, तत्प्रयुक्त सुखादिनिमित्तानि। चत्वा र्यघातिकर्माणि पुण्यमिश्रितत्वा त्पुण्यरूपाणि। स ततोर्ध्वगमन मिति। बन्धमुक्त स्योर्ध्वगमनं स्वभावः। यथा पञ्जरमुक्तस्य शुकस्य। यथावा निर्भिन्नस्य। परिणतै रण्डबीजस्य। यथावा दृढपङ्कलिप्तस्य जलनिमज्जनप्रक्षीणपङ्कलेपस्य शुष्काऽलाबुनः। इह त्वनादिकाल प्रवृत्तबन्धविगमा त्सततोर्ध्वगमनम्। तन्मते लोकाकाश स्योपर्युपरिस्थितानां लोकाना मन्तर्वर्तित्वेऽपि तेषा मुपरिस्थितो निरवधि रलोकाकाशः स ततोर्ध्वगमन स्यावकाशः। तथा पठन्ति — "गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः। अद्याऽपि न निवर्तन्ते त्वलोकाकाशमार्गगाः" इति अन्येतु विगतसमस्तक्लेश तद्वासनस्याऽनावरणज्ञानदर्शनसुखवीर्य स्याऽऽत्मन उपरिदेशावस्थानं मुक्ति रित्याहुः। सप्तभङ्गीन्याये नेति। सप्तानां भङ्गीनां प्रकाराणां सत्त्वादिनियमभङ्गानांवा समाहारः सप्तभङ्गी। के ते इत्यकाङ्क्षाया न्तानाह — स्यादस्तीति। "सत्त्वासत्त्वसदसत्त्व सदसद्विलक्षणत्वरूपाऽनिर्वचनीयत्वविषया श्चत्वारः पक्षाः। पुन श्चानिर्वचनीयत्वे सत्त्वासत्त्वसदसत्त्वमेलने त्रयः पक्षा इत्येवं सप्त पक्षाः वादिभि रुत्प्रेक्षितुं शक्याः। सर्वेऽपि ते पक्षाः जैनै रीषदीषत्स्वाङ्गीकृतेषु सर्वेष्वपि पदार्थे ष्वङ्गीक्रियन्ते। अत्र स्याच्छब्दस्याऽर्थ माह — स्यादिति। अनैकान्त्यार्थ इत्यन्ये। उभयथाऽपि तिङन्तप्रतिरूपकोऽव्ययशब्दः। सत्त्वे प्रदर्शितस्य सप्तभङ्गीन्यायस्य नित्यत्वभिन्नत्वादिधर्मान्तरे ष्वपि योजनमभिप्रेत्योपसंहरति — अत इति। सप्तभङ्गीन्यायो नयुक्तः। एकस्मि न्वस्तुनि तेजस्तिमिरशीतोष्णादिव द्विरुद्धाऽनेकधर्मसमावेशाऽसम्भवा दितिसूत्रार्थ माविष्कुर्वन् सिद्धान्तयति — एत दयुक्त मिति। न ह्येकस्मिन्नपि देशकाला द्युपाधिभेदेन इह घटोऽस्ति तत्र नाऽस्ति इदानी मस्ति तदानीं नाऽस्तीति यथा सत्त्वा

सप्तपदार्थाः सप्तभङ्गिन्यायेन व्यवस्थाप्याः। स्यादस्ति, स्यान्नास्ति, स्यादस्तिचनास्तिच, स्यादवक्तव्यम्, स्यादस्तिचावक्तव्यम्, स्यान्नास्ति चावक्तव्यम्, स्यादस्तिचनास्तिचावक्तव्य मिति सप्तभङ्गिन्यायः। स्याच्छब्द ईषदर्थः। अतः सप्तभङ्गिन्यायात् सप्तपदार्थसिद्धि रिति।

एत दयुक्तम्। कुतः? एकस्मिन्वस्तुनि सत्त्वासत्त्व नित्यत्वा नित्यत्व भेदाभेदादीना मसम्भवात्। अपर्यायभावितिनश्च द्रव्य स्याऽनित्व

सत्त्वादिविरुद्धधर्मसमावेश स्तथा देशकालाद्युपाधिभेदंऽविना प्यस्तु। नच तत्र लोक सिद्धानि प्रमाणानि सन्तीति शङ्क्यम्। इहाऽपि प्रपञ्चसत्यत्वासत्यत्वादिक मुपपादयद्भि रस्तै रस्तै राचार्यैः प्रतिपादितानां प्रमाणानां विद्यमानत्वादि त्याशङ्क्याह — पर्यायभावित्व इति। सत्त्वासत्त्वादयः पिण्डत्वघटत्वादिव त्पर्यायभावित्वेनैव लोकानुभवसिद्धा। नैते वादिभि रुन्यस्तानि यानिप्रमाणा न्येतादृश सत्त्वासत्त्वादिक मावेदयन्ति तानि सर्वाण्यपि प्रमाणानीत्येत दयुक्तम्। परस्परविरोधेन केषाञ्चि दाभास्यमानत्वात्। अन्यथा प्रपञ्चाऽसत्यत्ववादिभि स्तत्सत्यत्वाऽभ्युपगमे दोषाणा मुच्यमानत्वेन तेषाम प्यनुरोध्यत्वा पत्त्या अनेकान्तवादिन स्तत्तद्वादयुक्तसकलदोषभाक्त्वस्याऽपि प्रसङ्गा दिति भावः॥

ननु सप्तभङ्गीन्यायो लोकाऽविरोधेनैव सिद्ध्यति। तथाहि — एकस्य सत्त्वाऽसत्त्वे कालभेदेन सर्वैर प्यङ्गीक्रियन्ते। तस्मा त्तयोः स्वस्वकालविवक्षया अस्ति नाऽस्तीति भङ्गद्वय मुपपद्यते। क्रमविवक्षया सदसदिद मिति तृतीयभङ्गो युज्यते। युगपत्सत्त्वा सत्त्वविवक्षयाऽनिर्वचनीयमिति चतुर्थभङ्गो घटते। नहि युगप देकस्य सत्त्व मसत्त्वञ्च निर्वक्तुं शक्यम्। युगपत्सत्त्वासत्त्वयो रनिर्वचनीयत्वेन सहैसत्त्व स्यासत्त्वस्य क्रमिकोभयस्यच मेलनेऽवशिष्ट भङ्गत्रयं सम्पद्यते। इति चेन्न नैवं पारिभाषिकस्य सप्तभङ्गीन्याय स्येष्टापत्तेः। घटादिः स्वदेशेऽस्ति अन्यदेशे नाऽस्ति स्वकालेऽस्ति अन्यकालेनाऽस्ति स्वात्मनाऽस्ति अन्यात्मनानास्तीति देशकालप्रतियोगिरूपोपाधिभेदेन सत्त्वाऽसत्त्वसमावेशे लौकिकपरीक्षकाणाम् विप्रतिपत्त्यभावात्। नचैतावता पराभिमतं वस्त्वनैकान्त्यं सिध्यति स्वकाले सदेव अन्यकाले असदेव इत्यादिनियमस्य भङ्गाभावात्।

ननु वस्तुनो देशकालाद्युपाधिभेदो नाऽपेक्ष्यते। स देश इह नाऽस्ति — स काल इदानीं नाऽस्तीत्यादिप्रतीतौ देशकालाद्युपाध्यन्तराभावात् तत्रा प्युपाध्यन्तरान्वेषणेऽनवस्थानात्। किञ्च सर्व मनैकान्तिकं वस्तुत्वात्। विप्रपटव दित्यनुमानमपि तत्र प्रमाणम्। नहि

नास्तित्वादिशब्दबुद्धिविषयाः परस्परविरुद्धाः पिण्डत्वघटत्वकपालत्वा द्यवस्थाव द्युगप न्न सम्भवन्ति। अतो विरुद्धएव जैनवादः॥

## एवं चात्माकात्स्न्र्यम् ॥ २–२–३२ ॥

एव मात्माऽकात्स्न्र्यंचानुऽपपन्नम्। आत्मनः शरीरपरिमाणत्वे हि बृहत श्शरीरा दल्पीयसि प्रविशतो विकलत्वं प्रसज्येत। अत आत्मन श्शरीरपरिमाणादिमत्त्व मयुक्त मेव॥

---

चित्रपटे नीलपीताद्यसङ्करार्थं प्रदेशभेद आश्रयितव्य·। प्रदेशभेदाऽसङ्करार्थ मुपाधिभेदाऽन्वेषणेऽनवस्थानात्। तस्मा त्सर्वत्रस्त्वनैकान्तिकमेवेति स्याद्वादरहस्य मितिचे दुच्यते। सर्वथोपाधिभेदं प्रत्याख्याय सर्वमनैकान्तिक मङ्गीकुर्वाणे रय मस्याः पुत्रोऽय मस्याः पति रय मस्याः पिताऽयमस्या श्श्वशुर इत्यादिव्यवस्थाया असिद्धेः मातृत्वादि व्यवहारान् व्यवस्थया अनुष्ठातु मशक्यत्वेनाऽस्याऽनैकान्त्यवास्य सर्वबहिष्कार्यत्वादि त्यलं विस्तरेण।

एवं जैनाभिमतः स्याद्वादो निराकृतः। अथ तदभिमतेषु पादार्थेषु प्रथमपरिगणितस्य जीवस्य देहपरिमाणत्व न्तदुक्तमुत्तरसूत्रे निराक्रियते॥

जैनाःकिल सर्वाङ्गीणसुखादियुक्त्याभासेन जीवस्य शरीरपरिमाणत्व मभ्युपगच्छन्ति। एवं स्याद्वादव जीवविषयशरीरपरिमाणत्ववादोऽप्यनुपपन्न इत्यर्थः। कुतोऽनुपपन्नइत्या काङ्क्षाया माह – आत्मन श्शरीरपरिमाणत्वेहीति। तदनुपपत्तौच हेतु माह। बृहत श्शरीरादित्यादि। मातङ्गदेहा न्मशकदेहं प्रविशत स्तस्याऽल्पदेशव्याऽपित्वे नाऽकात्स्न्र्यं कृत्स्ननिजरूपेण व्यापित्वं नप्रसज्ये दिति वैकल्य मापद्येत। एवं मशकदेहा न्मातङ्ग शरीरं प्रविशतोऽपि कृत्स्नशरीरव्यापित्वाऽभावः प्रसज्येतेत्यर्थः। सर्वाङ्गीणसुखानुभवादिकञ्च नस्यात्।

ननु . वटमणिकगृहोदरादिगतप्रदीपप्रभाव. जीवस्य सङ्कोचविकास रूपाऽवस्थाशालित्वं स्यादित्याशङ्कापरिहारार्थं सूत्रम्॥

# न च पर्यायाद प्यविरोधो विकारादिभ्यः ॥२–२–३३॥

तथाविधाल्पत्वावस्थान्तरयोगाद प्यविरोधो न सम्भवति घटादिव द्विकारादिदोषप्रसङ्गात् ॥

# अन्त्यावस्थिते श्चोभयनित्यत्वा दविशेषः ॥ २–२–३४॥

अन्त्यस्य मोक्षदशापरिमाण स्यैकरूपावस्थिते स्तस्य स्वाभाविकत्वे नात्मतत्परिमाणयो रुभयो रपि नित्यतया पूर्वावस्थायाम प्यविशेषः। विविधदेहपरिमाणत्वे हि वैकल्यं भवे देव। अत एकस्मिन् सत्त्वा सत्त्वादिवादा दात्मन श्शरीरपरिमाणवादा च्च जैनमत मपि विरुद्ध मेव ॥

इति एकस्मिन्नसम्भवाधिकरणम्

---

जैनमते पर्यायशब्दोऽवस्थासु पारिभाषिकः। अल्पत्वेति। बृहच्छरीरा दल्प शरीरप्रवेश इव मुक्तन्। वैपरीत्येतु महत्त्व मवस्थान्तरमपि तेन विवक्षितम्। उभय थाऽपि विकारादिदोषप्रसक्ते घटादेरिवाऽनित्यत्व प्रसज्येत। आदिशब्देनाऽनित्यत्वसावय वत्वादिक विवक्षितम्। विकारो जन्म विनाशश्च। जीवस्य शरीरपरिमाणत्वाऽभावे युक्त्यन्तर माह ॥

मोक्षदशायां यज्जीवस्य परिमाणं तस्य नित्यत्व मभ्युपगम्यते जैनैः। तदनन्तर देहाऽन्तराभावेन देहान्तरोचितपरिमाऽणान्तराऽप्रसक्ते रिति तेषा माशयः। ततश्च जीव स्वरूपं मोक्षदशावस्थितं यावत्परिमाण तावत्परिमाणमेव स्वाभाविकमिति युक्तम्। एव मुभयो र्जीवस्य तत्परिमाणस्य च नित्यत्वा द्बद्धमुक्तदशयो रुभयोर प्यविशेष मेक रूपत्वमेव युक्तम्। तदनङ्गीकृत्य बद्धदशायां भिन्नभिन्नपरिमाणत्वाङ्गीकरण। जैनमत मयुक्तम्। सिद्धान्ते चिच्छक्तं स्संसारदशायां सङ्कोचविकासशालित्वेऽपि न स्वरूपतो जन्म विनाशौ स्तः। नाऽपि सावयवत्वादिकम्। मोक्षदशायां व्यापित्वेऽपि न पूर्व परिमाण मितिव्यवस्थायां जैनाभिमतजीवविषयदोषो नभविष्यति। "श्रुतेस्तु शब्दमूलत्वा"दिति

अथ पाशुपताधिकरणम् ८

## पत्यु रसामञ्जस्यात् ॥ २–२–३५ ॥

पत्युः परमेश्वरस्य श्रुतिसिद्धजगदुभयकारणत्व स्याऽपि तदागम निष्ठा स्तदभिप्रायानभिज्ञा एकदेशिन स्तान्त्रिकाः केवल निमित्तत्वं वदन्ति। त युक्तं न वेति सन्देहः ॥

न्यायात्। जैनानान्तु दृष्टानुमानेण कल्पयतां जीवस्य सावयवत्वादिकमपि स्यात्। तथा भूतानामेव प्रभादीनां सङ्कोचविकासदर्शनात्। तथैव मोक्षदशापन्नपरिमाणमेव प्रागपि स्वाभाविकं स्यात्। जीवस्वरूपे तथादर्शना दिति दोषः प्रसज्यते। एवमेव पाशुपताधि करणे स्वाभिमतस्यैव परमेश्वरस्याऽनुमानिकत्वाङ्गीकारेऽधिष्ठातृत्वाऽनुपपत्ति वक्ष्यति ॥

इति एकस्मिन्नसम्भवाधिकरणम्

---

अथ पाशुपताधिकरणम् ८

अत्राऽधिकरणे परमेश्वरस्याऽनुमाना तिमद्धि स्तस्याऽनुमानसिद्धं निमित्तत्वमेव केवलं नोपादानत्व मपीति मतं निराक्रियते। अत्रेयं शङ्का समुन्मिषति। शास्त्रयोनि त्वाधिकरणे शास्त्रमेव परमेश्वरे प्रमाणं नाऽनुमानमिति व्यवस्थापितम्। प्रकृत्यधि करणे च तस्य शास्त्रत उपादानत्वमपि सिध्यतीति प्रतिपादितम्। आनुमानिकेश्वरवादिनां काणादानां गौतमीयानाञ्च मतं पूर्वमेव तर्काऽप्रतिष्ठानवैदिकापरिग्रहाभ्यां निराकृतम्। पुनरने नाऽधिकरणेन निराकरणीयं किमवशिष्यत इत्याशङ्क्य निरसनीयमतविशेषोपन्यासेन तन्निरासार्थ मित्याह – पत्युरिति। अत्राऽयम्भावः। परमेश्वरस्याऽनुमानिकत्वं केवलं निमित्तत्वञ्च वैशेषिकादिशास्त्रेष्वेव नोच्यते। सकलवेदसामरस्यरहस्यनिधिभूतेषु शिवागमे ष्वपि निगद्यते। तत्कथं निराकरणीयम्। नहि वेदसमानैः शिवागमैः पूर्वपूर्वशैवाचार्य प्रणीतै स्तद्व्याख्यानैश्च महता प्रबन्धेन निरूपितं परमेश्वरसाधकानुमानं केवलनिमित्तत्वञ्च कतिपयवेदवाक्यविरोधेन किंपचानपुरुषबुध्युत्प्रेक्षीततर्कविरोधेन च निराकर्तुं युक्तम्। वेदतुल्यशिवागमाम्नातबहुवाक्यानुरोधेन कतिपयवेदवाक्यानामेव अर्थान्तरवर्णन स्योचितत्वा द्वेदविरोधेनेव शिवागमविरोधेनाऽपि पुरुषबुद्धिकल्पिततर्काणा माभासीकरण स्योचितत्वाच्चेति शङ्कान्तरनिराकरणार्थ मिद मधिकरणमिति। तन्निराकरणं त्वेवम्। शिवागमानां परमेश्वरस्य

तत्रैवं पूर्वपक्षः। कुलालादि रनुपादानभूत एव दण्डादिकं नियच्छन् कर्ता भवति। तथा तटस्थ ईश्वरोऽपि निमित्तमात्रम्। शक्तयः कारणम्। अन्यथा मृदादिव दीश्वरस्योपादानत्वे विकारादि प्रसक्तिः। अतो निमित्तमेव परमेश्वर इति॥

अत्रोच्यते, यत् पत्यु रीश्वरस्य केवल निमित्तत्वं तदपि न युक्तं श्रुतिन्यायविरोधे नाऽसामञ्जस्यात्।

न्यायविरोध माह :—

---

स्वतन्त्रानुमानतस्सिद्धौ केवलनिमित्तत्वे च न तात्पर्यम्। तथाऽपि तत्तात्पर्यसाराऽनभिज्ञाः केचन तान्त्रिका स्तद्व्याख्यातारः तथा मत प्रत्यतिष्ठिपन्। पुरातनव्याख्यान परम्पराप्राप्तं तन्मतं शृण्वतां तथैव शिवागमानां तात्पर्य मिति भ्रान्तिस्स्यात्। तन्निराकरणार्थ मिद मधिकरण मिति। यद्येव शैवानामपि प्रधानकारणवादित्वा त्साङ्ख्याधिकरणानन्तर मनेनाऽधिकरणेनभाव्यम्। सत्यम्। अवान्तरसङ्गतिवशा दिह कृतम्। पूर्वाधिकरणेहि सत्त्वासत्त्वयो र्विरोधा देकत्राऽसम्भव उक्तः। एवमेवाऽधिष्ठातृत्वोपादानत्वयोरप्येकत्रासम्भव इत्यत्र प्रत्यवस्थान मिति। तथैव पूर्वपक्ष मुपपादयति — कुलालादि रिति।

ननु प्रकृत्यधिकरणे प्येवमेव पूर्वपक्ष उपन्यस्तः ततोऽस्य पौनरुक्त्य मिति चेन्न। तत्रोपादानत्वविषयश्रुतीनां केवलनिमित्तविषयत्वे पूर्वपक्षयुक्तन्यायाभासस्य निर्विकारत्व श्रुतिविरोधेत्प्रेक्षायाश्च मुख्यावलम्बनत्वात्। ततएव च तत्र सिद्धान्तसूत्राणां श्रुत्यनुसारितया तदुपोद्बलकतयैव भाष्यकृताऽत्रत्या युक्ति रुपन्यस्ता। अत्र त्वस्या युक्तेरेव मुख्यतया पूर्वपक्षावलम्बनत्वेन पौनरुक्त्यशङ्काया अभावात्। चिच्छक्ति रपि नोपादानं चेतनत्वा त्परमेश्वरवत्। अत श्शक्ति र्जगत्कर्तुः परमेश्वरस्य करणापेक्षायां करणतयाऽवतिष्ठते। उपादानन्तु जडा श्शुद्धाऽशुद्धमायाप्रकृतय इत्याशयेनाह — शक्तिः करण मिति। शक्तय इतिपाठे बहुवचन मौपाधिभेदाभिप्रायम्। श्रुतिविरोधे नेति॥ प्रकृत्यधिकरणनिर्णीततात्पर्यै रुपादानत्वप्रतिपादकानेकश्रुतिभि र्विरोधेनेत्यर्थः॥ यस्तुकाणादादि रीत्या युक्तिप्राधान्य मवलम्ब्य पूर्वपक्षयुक्तिभि र्निर्णीतेऽर्थे तदनुसारेण श्रुतीनां तात्पर्यं परिगृह्णन् श्रुतिविरोधं न ङ्गीकरोति। सोऽपि तद्युक्तीनां प्रतियुक्तिपराहतिप्रदर्शनेन श्रुति शरणतां प्रापणीय इत्याशयेन तदुक्तेश्वरानुमानस्य प्रतियुक्तिपराहतिप्रदर्शनपरा ण्युत्तरसूत्रा ण्यवतारयति — न्यायविरोधे नेति।

## अधिष्ठानानुपपत्ते श्च ॥ २–२–३६ ॥

अशरीरस्य परमेश्वरस्य मायोपादानाधिष्ठानं नोपपन्नम् । लोके शरीरिण एव कुलालादेः मृत्पिण्डाद्युपादानाधिष्ठानं दृष्टम् । अतः कुलालादिदृष्टान्तो विरुद्धः । अनधिष्ठाने मायाया ईश्वरस्याऽनङ्गीकारात् साङ्ख्यमत मेव युक्तम् । ईश्वरेण प्रयोजनाभावात् । अतः परमेश्वरस्य निमित्तत्वं न सम्भवती त्याशङ्क्याऽह ॥

## करणव च्चे न्न भोगादिभ्यः ॥ २–२–३७ ॥

अधिष्ठाने शरीरापेक्षा नाऽस्ति । यथा करण मिन्द्रियशरीरम प्यशरीरोऽधितिष्ठति तद्वत् प्रधानमपीश्वर इतिचे न्न । तत्कृतानर्थ

---

मायोपादानेति । मयाशब्दोऽत्र शुद्धमायापरः । अशुद्धमायाप्रकृतिरूपोपादानाधिष्ठाने परमेश्वरस्याऽनन्तेशश्रीकण्ठशरीराभ्यां शरीरवत्त्वस्य पूर्वपक्षिणाऽङ्गीकृतत्वात् । दृष्टमिति । यदि कुलालमृत्पिण्डादिषु निमित्ता दुपादान मन्यदेव दृष्टमिति दृष्टान्तमात्रमवलम्ब्य पूर्व पक्षिणा परमेश्वरा दन्यदेवोपादान मिति व्यवस्थाप्यते । तर्हि दृष्टानुसारेण कुलालादिव दधिष्ठान मङ्गीकरणीयम् । ततश्च कुलालादिरूपाऽधिष्ठाता शरीरवानेव दृष्टइति पूर्वपक्षुचन्नी ताऽनुमानात् जगत्कर्तृतयासिध्य न्परमेश्वर श्शरीरवानेव सिध्येत् । एवञ्च शुद्ध मायाधिष्ठातार म्परमेश्वर मशरीर मनुमानेन सिसाधयिषतः कुलालादिदृष्टान्तो विरुद्ध स्स्यात् । तर्हिचदासीनएवेश्वर स्सिध्यत इति मन्दशङ्कां निराचष्टे – अनधिष्ठान इति । तस्मा दशरीरस्याऽधिष्ठानाऽनुपपत्तेः शरीरिणएव कर्तु रनुमानत स्सिद्धिस्स्यात् । नतु पूर्वपक्ष्यभिमत स्याऽशरीरस्य कर्तु रितिभावः ॥

ननु अनुप्रविश्य नियम्यत्वं शरीरत्वं तच्च परमेश्वरंप्रति मायादीनां सर्वेषा मविशिष्टम् । ततश्च यन्नियम्यं तेनैव शरीरवान् परमेश्वर स्तस्याधिष्ठाते त्युपपाद्यतइति न तस्य करचरणादिमच्छरीरान्तसिद्धिः प्रसज्यते । नच नियम्यातिरिक्तशरीरेण शरीरवतएव तदधिष्ठातृत्व मिति नियमोऽस्ति । जीवानां स्वस्वशरीराधिष्ठाने तदाभावा दित्याशङ्का निराकरणार्थ मुत्तरसूत्र मवतारयति – आशङ्क्याहेति ।

भोगादिभ्यः। यथाऽऽत्मनोऽशरीरस्य शरीराऽधिष्ठाने शरीरगतसुखदुःख भोगादि स्तथा परमेश्वरस्याऽपि तदधिष्ठाने तद्गतभोगादिप्रसक्तिः। अतो न निमित्तमात्र मीश्वरः॥

## अन्तवत्त्व मसर्वज्ञता ॥ २—२—३८ ॥

वाशब्द श्चार्थे। सशरीरएव परमेश्वरः कुलाल इव मृत्पिण्डं पार्थक्येनोपादान मधितिष्ठतीतिचेत् तथामति पत्यु रीश्वरस्य संसारिण इव अन्तवत्त्व मसर्वज्ञत्व ञ्च भवेत्। अतो भोगादि प्रसक्तेः प्रधानाऽधिष्ठान मीश्वरस्य न सम्भवति। प्रधानाऽधिष्ठातृत्वेऽपि परमेश्वरस्य "अनश्न न्नन्यो अभिचाकशीति" इतिश्रुते स्तद्गतभोगादि

---

करग्रहणं शरीरस्याऽप्युपलक्षण मिति व्याचष्ट — शरीरमपीति। अशरीर इति। नियम्यातिरिक्त शरीररहित इत्यर्थः। अत्राऽयमाशयः। अधिष्ठातृत्वशरीरत्वव्याप्तौ नोक्तलक्षणं शरीरत्वं निवेशयामः। किन्तु भोगाश्रयत्वरूपम्। तत्रैव विपक्षबाधकसत्त्वात्। भोगार्थं शरीर मधितिष्ठतो हि सुखार्थं दुःखपरिहारार्थंवा क्वचि त्कर्तृत्वं दृष्टम्। तथा च नियम्यमेव मयादिकं यदि परमेश्वरस्य भोगाश्रयरूपं शरीरम् यद्वा तद्व्यतिरिक्तम् करचरणादिम दन्यच्छरीर मिष्यते उभयथाऽपि तस्य सुखदुःखभोग स्तन्मूलपुण्य पापवत्त्वञ्च प्रसज्यत इति॥

करचरणादिम च्छरीराङ्गीकारे दोषान्तरसमुच्चयार्थं सूत्रम्॥

अन्तवत्त्वं "अन्तवन्त इमे देहा" इति स्मृत्या करचरणादिमत श्शरीरस्याऽनित्यत्वनियमदर्शनात्। असर्वज्ञता च जननमरणावृत्तिमतां किञ्चिज्ज्ञत्वदर्शनादित्याशयेन सूत्रार्थ माचष्टे — वाशब्द इत्यादिना। एव मनुमाना दीश्वरो यदि सिद्ध्येत् तर्हि लोकदृष्टेघव कुलालादि रिव शरीरसुखदुःखभोक्ता पुण्यपापवश्यो जननमरणवा नसर्वज्ञश्च सिध्येत्। ननु सर्वज्ञत्वाद्यमाकल्याणगुणनिधिरिति सूत्रैः प्रतिपादित मासीत्।

ननु शास्त्रयोनित्वाधिकरणे अनुमानस्येश्वरसाधकत्वं निराकृत्य "तन्त्वौपनिषद" मित्यादिना ब्रह्मण उपनिषन्मात्रवेद्यत्वं निर्धारितम् पुन रिह अनुमानप्रामाण्यं निराक्रियतेऽतः पौनरुक्त्यमितिचे न। शास्त्रयोनित्वाधिकरणोक्तेश्वरानेकत्वापत्त्यादिदूषण मेतदधिकरणस्य मेव। अत्रैव सूत्रकृताऽनुमानस्य कण्ठरवेण दूषितत्वेन। तत्र तु "तन्त्वौपनिषद" मित्यादि

प्रसक्तिः न भवतीतिचेन्न । तथासति तर्कबल मपहाय श्रुति रेवाऽवलम्बनीया । 'तदात्मानं स्वय मकुरुत बहु स्यां प्रजायेय' इति, 'सर्वो वै रुद्र' इत्यादिश्रुतिभि रुपादान मपि परमेश्वर इत्य भ्युपेयम् । जगदुपादाननिमित्तभूतस्याऽपि परमेश्वरस्य "निष्कळं निष्क्रिय"

---

श्रुतितात्पर्यविचारेणैव शास्त्रप्रमाणकत्वस्य व्यवस्थापितत्वा च्च भाष्यकृता तु शिष्याकाङ्क्षोप शान्त्यर्थ मेतदीयस्यैव किञ्चिद्दूषणस्य तत्रोद्भावितत्वा च्च । तदेवं युक्त्या केवलनिमित्त मीश्वरं साधयन्त मुद्दिश्य स्वतन्त्रयुक्त्याश्रयणे परमेश्वरस्याऽनिष्टमपि शरीरित्व भोक्तृत्वादिकं सिध्येदिति दोष मूत्रै रुद्भाव्य तेषां सूत्राणां स्वतन्त्रयुक्तिभि श्श्रुति विरुद्धोऽर्थो न सिध्यति । पुरुषबुद्धिकल्पितयुक्तिभ्यः श्रुतीनां प्रबलत्वा दित्येतस्मि न्नर्थे तात्पर्य माविष्कर्तु म्परमुखेन शङ्का मुद्भावयति – प्रधानेति । अधिष्ठानाऽनुपपत्तिसूत्रा पादितं शरीरित्वन्तु नोपात्तं श्रुत्यवलम्बनेऽपि कैवल्योपनिषदादिसिद्धस्य तस्याऽप्रत्याख्ये यत्वात् । तर्हि प्राप्तोऽसि पन्थान मिति परिहरति – तथासतीति । श्रुतिरेवेति "अनश्न न्नन्यः" "न कर्मणा वर्धते नो कनीयान्" द्यावाभूमी जनय न्देवएकः" "य स्सर्वज्ञ सर्ववित्" इत्यादिश्रुति रित्यर्थः । परमेश्वर इति । शक्तेरप्युपलक्षणम् । निर्विकारत्व मपीति । प्रकृत्यधिकरणे तयोपपादितत्वा दितिभावः । एव मनेनाऽधिकरणीय शिवस्य केवलनिमित्तत्ववादो नागममूलः किन्तु तदभिप्रायानभिज्ञव्याख्यातृपरम्परामूल इत्येत दाविष्कर्तुं शिवस्योपादानत्वसत्प्रतिपत्तौ सर्वज्ञानोत्तरागममूलं वायुसंहितावचनजात मुदाहरति – शक्ति रिति । सूक्ष्मचिद्रूपापन्नचिच्छक्तिविशिष्ट स्सकलतत्त्वातीत शिवएकएव सर्गाऽऽद्य समयेऽवतिष्ठते । सिसृक्षो स्तस्मा त्प्रथमं शिवतत्त्वपरबिन्दुपरमायाशुद्धमायामहामायाकुटिलाकुण्ड लिन्यादिशब्दालम्बनत्वेन प्रसिद्धाशुद्धाध्वगत सकलतनुभुवनभोगस्थानभोगोपकरणाना मुपादान भूता पराशक्ति रुत्पद्यते । तत इशक्ति स्सदाशिवो महेश्वर श्शुद्धविद्येति चत्वारि तत्त्वा न्युत्पद्यन्ते । तदनन्तर मपरमाया मिश्राध्वगत सकलतनुभुवनाद्युपादानभूता जायते । ततः कालो, नियतिः, कला, विद्या रागः पुरुष इति षट् तत्त्वानि जायन्ते । तदनन्तर मशुद्धाध्वगततनुभुवनाद्युपादानभूत मव्यक्त माविर्भवति । ततो बुद्धि रहंकारो मनः पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि पञ्चशब्दादीनि, तन्मात्राणि पञ्चवियदादीनि भूतानीति त्रयोविंशति स्तत्त्वा न्याविर्भवन्ति । एव मेतानि परशक्त्यादीनि पृथिव्यन्तानि जडानि षट्त्रिंशत्तत्त्वानि शिवशास्त्रेषु प्रसिद्धानि । तत्र तत्र श्रुतिन्यायै र्व्यवस्थापितानि । एतेषां परशक्तिव्यतिरिक्तना न्तत्त्वानां तत्ततत्त्वप्रतिष्ठितभुवनानाञ्चाधारभूताः, निवृत्तिः,

मित्यादिश्रुतिभि र्निर्विकारत्वम प्युपपद्यते । " शक्तिः प्रथमसम्भूता शान्त्यतीतपदोत्तरा । ततो माया ततोऽव्यक्तं शिवा च्छक्तिमतः प्रभोः ॥ शान्त्यतीतपदं जज्ञे तत श्शान्तिपदं क्रमात् "

---

प्रतिष्ठा – विद्या – शान्ति – शान्त्यतीतेति संज्ञाभिः प्रसिद्धाः उपर्युपर्यवस्थिताः पञ्च कलाः परशक्तिप्रभवाः । तत्र शतकोटियोजनमितब्रह्माण्डरूपं पृथिवीतत्त्वं निवृत्तिकलाया मवतिष्ठते । जलाद्यव्यक्तानि त्रयोविंशतितत्त्वानि प्रतिष्ठायां । पुरुषादीनि मायान्तानि सप्ततत्त्वानि विद्यायाम् । शुद्धविद्यामहेश्वरश्च शान्तिकलायाम् । परशक्तिस्तु तत्त्वान्तराणा न्तत्तत्प्रतिष्ठितभुवनानाञ्च भेदोपभेदै र्विना षष्ठिसङ्ख्यानां तै स्सह चतुर्विंशत्युत्तरत्रिशत सङ्ख्याकाना माधारभूताः पञ्चापि कलाः कारणत्वेन व्याप्य तत उपर्युपरिस्थिता शान्त्यतीत पदोत्तरा भवति । तदेतत्सर्वं संक्षिप्योच्यते "शक्तिः प्रथमसम्भू" तेत्यादिभि श्श्लोकैः । अत्र शक्तिशब्दश्शिवतत्त्वरूप परशक्तिपरः । स तत्कार्याणां शक्त्यादीनां चतुर्णां तत्त्वानाम प्युपलक्षकः । अत्र शिवादिति पञ्चम्या उपादानत्वप्रतिपादनं नातिस्फुटमिति तत्रत्यमेवश्लोकान्तर मुदाहरति पुन श्चेति । शक्त्यादीति । शक्तिशब्देन शिवतत्त्वरूपा पराशक्ति रुच्यते । शिवतत्त्वशब्देन तु शिवए वोच्यते । नत्वत्र शिवतत्त्वशब्दः परशक्तिपरः । शक्तिशब्द स्तत्कार्यं द्वितीयतत्त्वरूपशक्तिपरः । "शिवतत्त्वादिभूम्यन्तं शरीरादिघटादि च ।" व्याप्याऽधितिष्ठतिशिव स्तस्मा द्विष्णु रुदाहृतः ।" इति तत्रत्यनामाष्टकनिर्वचनप्रस्ताव पठितश्लोकैकार्थ्यात् । शिवतत्त्वशब्दस्तु वायुसंहितायामेव शिवेपिप्रयुक्तः । "आदि मध्यान्तरहितं भेषजं भवरोगिणाम् । शिवतत्त्व मिति ख्यातं शिवार्यं जगतः स्थिरं । पञ्चोपचारव द्भक्त्या पूजये च्छिवमूर्धनि"इति ॥ आगमान्तरश्लोके ॥ अन्तस्स्थितमि त्यस्य स्वात्मनि सूक्ष्मरूपेण स्थित मित्यर्थः । अत स्तस्योपादानत्वे प्रामाण्यसिद्धिः । एवमागमानां शिवस्योपादानत्वेऽपि तात्पर्यसद्भावा त्तन्निराकरणार्थं नेद मधिकरणम् ॥ किन्तु तदभिप्रायाऽनभिज्ञ व्याख्यातृमतनिराकरणार्थ मित्येकं मतं प्रदर्शितम् । मतान्तर माह – शिवागमैकदेशाइति ॥

नतु यद्यपि वायुसंहितैकार्थे सर्वज्ञानोत्तराख्ये वैदिकशिवागमे शिव स्योपादानत्व मपि प्रतिपादितम् । तथाऽपि कामिक, कारणादिषु सिद्धान्ततन्त्राख्येषु शिवागमेषु कण्ठोक्त्या तत्प्रत्याख्यात मत स्तद्विषय मिद मधिकरणमिति केषाञ्चि दाचार्यदेशीयान व्याख्यान मित्यर्थः । किमत्र तत्त्व मित्याकाङ्क्षाया माचार्य स्स्वयं निर्धारयति – वय न्त्विति ॥

इत्यादिना मायादिरपञ्च शक्तिमतः शिवस्यै वोपादानत्व मवगम्यते वायुसंहितायाम् । पुनश्च "शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् । ते नैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथ" इत्यादिना तत्रैव

---

अत्र केचित् "अङ्गानि वेदा श्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रञ्च विद्या ह्येता श्चतुर्दशेति परिगणितासु विद्यासु चतुर्दशस्व प्यनन्तर्भूततया शिवागमा नप्रमाण मित्याचक्षते ।। तदसत् । तथाहि – अङ्गा नीत्यादिवचने धर्मशास्त्र मिति धर्मप्रतिपादकं शास्त्रं गृहीतम् । तत्कि मित्याकाङ्क्षायाम् वेदाना मागमानां कल्पानां पुराणानाञ्च धर्मप्रतिपादकतया सर्वेषामपि वाचकं भवितु महति । यद्यपि वेदानां कल्पानाञ्च परिगणितत्वेन व्यावृत्ति स्सिध्यति । आगमानां स्मृतीनाञ्च तद्ग्राहक मिवाऽऽभाति । तथाऽपि तच्छिवागमानामेव बोधकम् । स्मृतयस्तु चशब्देन समुच्चीयन्ते । तदुक्तं शिवधर्मे "स योनि स्सर्वविद्यानां पुरुषः कारणं परः । निश्श्वास तुल्य मुद्भृता नखिलान्निगमानपि । सावशेषान् क्रियाभागै र्वेद्या न्पशुचेतनम । विचिन्त्य धर्मशास्त्रं तच्चैव माख्यातवां स्तदा । अनन्तवेदसन्दिष्टमर्थाय स्योपबृंहणम् । कामिकादि प्रभेदेन भिन्न मेकार्थशोभितम् । तत्तत्कालावतीर्णैस्तु मुनिभि श्शंशितव्रतैः । शास्त्रं तदनुसृत्यैव कथ्यते धर्मसङ्ग्रहः । आदित श्शैवमे वाहु रार्षं तदनुसारतः । धर्मशास्त्र मिति प्राज्ञा श्शास्त्रनिर्णयतत्पराः" । इत्येतेन शिवागमानां धर्मशास्त्रत्वं सुस्थितम् । एतेन य च्चतुर्दशविद्यास्थानबहिर्भूतत्वेन शिवागमाना मप्रामाण्यप्रतिपादन न्तत्पारे समुद्रं विनिपातितम् । अतएव श्रीविद्यारण्यै· जैमिनीयन्यायमालायां "सर्वासूपनिषत्सु प्रतीय मानं यत्परंब्रह्म तदेव शैवागमेषु प्रतिपाद्यत इति शिवागमानां प्रामाण्यपरिग्रह मुपपद्यते ।

नच "ऋषिकर्तृकाणां स्मृतीनां शिवागमाना ञ्चोभयेषा मपि धर्मशास्त्रत्वे तुल्यता समापद्ये तेति शङ्क्यम् ।' कर्तृगतकिञ्चिज्ज्ञतासर्वज्ञतामूलस्य प्रामाण्यवैषम्य स्याऽनिवार्यत्वात् । तस्मा त्पतिवचनस्य पशुवचना दधिकतरत्वस्य न्यायसिद्धत्वा त्कल्पेभ्यः स्मृतिभ्य श्शिवागमानां प्राशस्त्य मधिकतमम् । किञ्च भूयस्त्वा च्चिरवशेषधर्मसङ्ग्रहतत्तत्कल्पव धकत्वा त्सङ्कोचाऽसहत्वा दाद्यत्वा त्परमाप्तमन्त्रप्रोक्तत्वा "च्छास्त्रयोनित्वा" दिति सूत्राकृत्सम्मत प्रामाण्यकत्वाच्च शिवागमानां स्मृतिकल्पा दधिकं परत्वं निर्विवादम् ।

ननु सूतसंहितायां ।। "विष्णवागमोदिता द्धर्मा दशेषा दास्तिकोत्तमाः । शैवागमोदितो धर्मो द्विधा पूर्व मुदीरितः । अधस्स्रोतोद्भव स्त्वेकः ऊर्ध्वस्रोतोद्भवः परः । अध स्स्रोतोद्भवा द्धर्मा दशेषा दास्तिकोत्तमाः । उर्ध्वस्रोतोद्भवो धर्मो वरिष्ठो नैव संशयः ।

शिवेनोपादानभूतेन जग द्व्यासं मृद्घटादिन्यायेनाऽवगम्यते । "चिदात्मैव हि देवोऽन्तःस्थित मिच्छावशा द्बहिः । योगीव निरु पादान मर्थजातं प्रकाशयेत्" इत्याद्यागमप्रामाण्या च्च परमेश्वरस्य

ऊर्ध्वस्रोतोद्भवा द्धर्मा त्स्मार्ता धर्मा महत्तराः । स्मार्तेभ्य श्श्रौतधर्माश्च वरिष्ठा मुनिसत्तमाः" इति शिवागमापेक्षया स्मृतीनामेव प्राशस्त्य मुक्त मितिचे न्न उक्तन्यायानुगृहीत प्रमाणविरोधा त्प्रकृतवचनस्य प्रक्षिप्ततायां विशदत्वात् ।

ननु शिवागमानां स्मृतिकल्पात्वधिकमरत्वसिद्धावपि श्रुतिभ्यो न्यूनता दुर्वारै वेतिचे दुच्यते । "निगमशिवागमा वभिन्नौ समानकर्तृकत्वेसति परस्परोपजीव्यमन्त्रतन्त्रात्म कत्वात् मन्त्रब्राह्मणवत् व्यतिरेकेण स्मृतिकल्पवत्" स्मृतिकल्पादिव्यावृत्त्यर्थं समानेत्यादि अश्रौतागमपुराणव्यावृत्त्यर्थं परस्परेत्यादि । तथाच – वेदेषु हि "भस्म मेत च्छाम्भवं भस्म मेत त्पाशुपत" मित्यादिना शाम्भवपाशुपतादिसंज्ञितभस्मरुद्राक्षशिवलिङ्गधारणात्मकव्रताद्य आम्नायन्ते । आगमेष्वपि तत्तत्कल्पाएव विशेषेण निगद्यन्ते । यथा श्रुतिशतगृहीतशाम्भवादि संज्ञितस्यैव भस्मरुद्राक्षादिधारणात्मकस्य नित्यव्रतस्य समय – वेधा – क्रियेत्यादिना क्वचि दभिधानान्तरेण तत्र बहुषु स्थलेषु श्रुतिसिद्धसंज्ञयाऽपि तत्तत्कल्पविशेषतद्दीक्षादीनां प्रपञ्चनात् । तथा श्रुतिसिद्धस्यैव गायत्रव्रतस्य तद्विधानपूर्वकं तदङ्गभूतानां मङ्गन्यासकरन्यास ध्यानमुद्रादीनां निरूपणात् । तथा निगमेषु आग्नेयस्याऽपि व्रतस्य – "रुद्रोवा एष यदग्निः" "त्व मग्ने रुद्र" इत्यादिना अग्नेः रुद्रत्वकथनेनोक्ततया तादृशरुद्रस्वरूपा विर्भावभावकशैवसंस्कारा आगमे चूक्यन्ते । अपिच श्श्रौत स्याध्वरस्य विधानस्य आवश्यकानि कुण्डमण्डपयूपस्रुक्स्रुवलक्षणा न्यागमेषु प्रतिपाद्यन्त इति परस्परोपजीव्यमन्त्रतन्त्रात्मकता प्रसिद्धा । यत्त्वाऽभिहितं परैः । गायत्रीमन्त्राङ्गन्यासकरन्यासध्यानमुद्रादिकानि – अध्व राङ्गकुण्डमण्डपयूपस्रुक्स्रुवादिलक्षणानि च वासिष्ठस्मृति चूक्तानि वैदिकाना मनावश्यकानीति च तन्निखिलानुष्ठानविरुद्धम् । वासिष्ठादिस्मृतिषु सावशेषमेव निरूपितानीति प्रत्युक्तम् ।

अपिच "एककर्तृकत्वेस त्यनुष्ठापकत्वा च्च निगमशिवागमा वभिन्नौ व्यतिरेकेण स्मृतिकल्पवत्" । स्मृतिकल्पादिव्यावृत्त्यर्थं मेककर्तृकेति । अश्रौतागमपुराणव्यावृत्त्यर्थं मनुष्ठापकेति । अनुष्ठापक हि शास्त्रं श्रुतिसममेव भवितुमर्हति । नतु भिन्नमन्मितादिकभि न्नकयं सिद्धम् ।

ननु अपौरुषेयत्वा द्वेदानां पौरुषेयत्वा दागमानां च एककर्तृकता नसिद्ध्यतीतिचे न्न – महाभारते ॥ "अष्टादशानां विद्याना मेतासां भिन्नवर्त्मनां । आदिकर्ता कवि

जगदुभयकारणत्व मित्यनवद्य मिति शिवागमैकदेशे शिवस्य परब्रह्मणः केवलनिमित्तत्व मुपपादितम् तत्परिहरणार्थं मिदमधिकरण मिति पूर्वाचार्याणां व्याख्या । वयं तु वेदशिवागमयो र्भेदं न पश्यामः ।

---

स्साक्षा च्छूलपाणि रिति श्रुति"रित्युक्तेः, "ईशान स्सर्वविद्याना"मितिश्रुतेः, "शास्त्र योनित्वा" दितिसूत्राच्च वेदादिकर्तृत्वस्येशितुः प्रमितत्वात् ॥

अन्यच्च – "निगमशिवागमा वभिन्नौ अनुष्ठापकत्वेसति व्याख्याव्याख्येयभाववत्त्वा द्व्यतिरेकेण स्मृतिकल्पवत्" । अश्रौतागमव्यावृत्त्यर्थ मनुष्ठापकेति स्मृतिकल्पादिव्यावृत्त्यर्थं व्याख्याव्याख्येयेत्यादि इदञ्च प्रभुसम्मितत्वात् । प्रभुतुल्यत्वं निगमागमोभयसाधारणम् । नचैकाऽसाधारणं विनिगमनाविरहात् । उभयोरपि प्रभूक्तित्वाऽविशेषात् । आगमाना मीशितु रवयवत्वेन प्रमितत्वाच्च ।

एतच्च कर्मज्ञानोभयप्राधान्याच्च निगमेषु शिवागमेष्वपि कर्मज्ञानयो रुभयोरपि प्राधान्याङ्गीकारा च्च – कर्मणएव स्मृतिषु ज्ञानस्यैव पुराणेषु प्रधान्य मिति तदुभय व्यावृत्त्यर्थं कर्मज्ञानोभयपदग्रहणम् । एतच्च अविरोधेसति शिवाज्ञारूपत्वाच्च ।

ननु "महतो भूतस्य निश्श्वसित मेव यदृग्वेद"इत्यनेन निगमाना मपौरुषेयत्वा त्परमेश्वरप्रोक्तत्वेन पौरुषेयत्त्वा दागमानाञ्च दुर्निरूप मैक्यम् । तन्मूलो हीनाधिकभावोऽ वार्यइतिचे दुच्यते । न ह्यपौरुषेयत्वं निगमेष्वेव परं त्वागमेष्वपि । अय मत्र विशेषः शब्दानां निगमेषु अर्थाना मागमे ष्विति । तथात्र सूतसंहितायां "अष्टादशपुराणानां कर्ता सत्यवतीसुतः । कामिकादिप्रभेदानां यथा देवो महेश्वर" इति ।

यथा पुराणाना मर्थतोऽपौरुषेयत्वेऽपि तत्सङ्ग्रहा द्व्यासकर्तृकत्वमुक्त न्तथाऽऽगमाना मर्थतोऽपौरुषेयत्वे पीश्वरसङ्गृहीतत्वा दीश्वरकर्तृकत्व मनुसन्धेयमिति तदर्थः ।

किञ्च अपौरुषेयत्वं सर्वज्ञपरमाप्तपरमेश्वरप्रोक्तत्वा न्नातिरिच्यते । पुरुषबुद्धि गतरागद्वेषादिकृताऽप्रामाण्याऽनाशङ्कनीयत्व स्योभयत्राऽपि तुल्यत्वात् । अपौरुषेयत्व मसाधकं धर्मनिर्णये न्यूनेषु पुराणेष्वपि सिद्धम । हन्त पौरुषेयीभ्य स्स्मृतिभ्य इति विदितम् ।

ननु निगमशिवागमयो र्व्याख्याव्याख्येयभावस्य प्रमाणसिद्धतयाऽभेदो दुर्वारः । व्याख्या नस्य मूलानुसारितया च मूलभूतानां निगमानां प्रधानत्वा दागमावधिकमाधिक्यं सिद्ध मितिचे दुच्यते ।

वेदेऽपि 'शिवागम' इति व्यवहारो युक्तः। तस्य तत्कर्तृकत्वात्। अत शिवागमो द्विविधः – त्रैवर्णिकविषयः सर्वविषय श्चेति। वेद स्त्रैवर्णिकविषय, स्सर्वविषय श्चान्यः। उभयो रेक एव शिवः कर्ता।

---

यद्यपि व्याख्याव्याख्येयभावस्य भेदसाधकत्वं व्याख्यानस्य मूलानुसारित्वञ्च लोके दृश्यते। तथाऽपि नाऽयं सार्वत्रिको निबन्धः। व्याख्याव्याख्येयभूतयो र्मन्त्रब्राह्मणयो र्हीनाधिकभावस्याऽदर्शनात्। किञ्च अन्यकर्तृकयो रसर्वज्ञकर्तृकयोश्च तथादर्शने प्येककर्तृकयो स्सर्वज्ञकर्तृकयोश्च हीनाधिकभावो न दृश्यते। एककर्तृकयो र्मूल – व्याख्यानयोः क्वचि त्प्रतिपाद्यभेदेऽपि प्रामाण्य मप्रामाण्यं वा द्वयोरपि तुल्यमेव। तथा सर्वज्ञकर्तृकस्य व्याख्यानस्य प्रतिपाद्यतः प्रामाण्यतश्च मूलानुसारिता नहि शिष्टसम्मता। यथा पाणिनीयपातञ्जलयो रिति दिक्।

ननु स्वतन्त्रो वेदः अनपेक्षतया प्रमाणत्वात् न तथा शिवागमः। यदि तथा "श्रुतिसारमय श्श्रौत स्स्वतन्त्र इतरो मतः। स्वतन्त्रो दशधा पूर्वं न्तथाऽष्टादशधा पुनः" रितिशिवपुराणोक्त्या स्वतन्त्रस्याऽश्रौतता दुर्वारा। अथ यदि वेदपरतन्त्रता शिवागमस्याऽभ्युपेयते तर्हि श्रुतिपरतन्त्रत्वा च्छिवागमस्य तदपेक्षयाऽवरत्व मूरीकृतम् स्यादितिचे दुच्यते। वेदशिवागमा वुभावपि स्वतन्त्रावेव। नचैतावता शिवागमस्याऽश्रौतता सिध्येत् प्रामाण्याऽनपेक्षस्य स्वातन्त्र्यस्य उभयसाधारणत्वा च्छिवपुराणोक्तस्य शिवागमस्वातन्त्र्यस्य क्रियानपेक्षाविषयत्वेन तेन शिवागमानां पारतन्त्र्याऽसिद्धेः। वस्तुतस्तु प्रामाण्याऽनपेक्षं क्रियानपेक्षञ्चेति स्वातन्त्र्यं द्विविधम्। वेदाना मागमोक्तक्रियामपेक्ष्यतया शिवागमानां वेदोक्तमन्त्रापेक्षतया च क्रियानपेक्षं स्वातन्त्र्यं नोभयोरपि। प्रामाण्यानपेक्ष न्तूभयोरपि स्वातन्त्र्यं सहजम्। अथ ये शिवागमाः कर्मसु वैदिकमन्त्रा नपेक्षन्ते तेषां वेदाऽपेक्षाऽभावमूलम् स्वातन्त्र्यमेव शिवपुराणोक्तिविवक्षितमि त्येतेन न किमपि हीयते॥

न न्वस्तु वेदशिवागमयोः कर्तृसामान्यं क्वचि त्क्वचि दैकार्थ्यञ्च तावन्मात्रेण सर्वात्मना न तयो रैकार्थ्य मुपपादयितुं युक्तम्। शिवागमस्य अवैदिकत्वमोहशास्त्रत्व प्रसिद्ध्या तद्विरोधापत्तेः। तथाहि – महाभारते "साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा। ज्ञाना न्येतानि राजर्षे विद्धि नानामतानि वै"॥ इति पाशुपतागमस्य साङ्ख्य योगादिव द्वैदिकप्रस्थाना द्भिन्नप्रस्थानत्वं ताव त्प्रतिपादितम्। तथाभूतस्य च तस्य मोहशास्त्रत्वं कूर्मपुराणे प्रतिपादितम्। "एवं संचोदितो रुद्रो माधवेन मुरारिणा। चकार मोह शास्त्राणि केशवोऽपि शिवेरितः। कापालं लाकुलं शाक्तं भैरवं पूर्वपश्चिमं। पाञ्चरात्रं

"ईशान स्सर्वविद्यानाम्" "अस्य महतो भूतस्य निश्श्वसित"मित्यादिश्रुत्या 'अष्टादशानां विद्याना मेतासां भिन्नवर्त्मनाम । आदिकर्ता कवि स्साक्षात शूलपाणि रिति श्रुति' रिति स्मृत्या च वेदे तस्य कर्तृत्व

---

पाशुपतं तथाऽन्यानि सहस्रशः" इति तन्निष्ठानां वैदिकाऽपरिग्राह्यत्वञ्च तत्रैव प्रतिपादितम । "बुद्धश्रावकनिर्ग्रन्थाः पाञ्चरात्रविदोजनाः । कापालिकाः पाशुपताः पाषण्डा येच तद्विधाः । यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः । न तस्य तद्भवे च्छ्राद्धं प्रेत्येह च न तत्फल" मिति । प्रमाणभूतेनाऽपि मोहशास्त्रं कृत मिति युज्यते । विप्रलम्भार्थे वैदिकार्थस्पर्शोऽपि भवति । तस्मा त्तावन्मात्रेण वेदैकार्थ्य मुपपादयितु मयुक्तमितिचे दुच्यते । मोहशास्त्रत्वादि प्रसिद्धिः वामपाशुपतादिविषया । तथाहि कूर्मपुराणेऽत्र "निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभं। गुह्या द्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये" इत्यारभ्य "एष पाशुपतो योग स्सेवनीयो मुमुक्षुभिः । भस्मच्छन्नैस्तु सततं निष्कामै रितिहि श्रुति" रित्यन्तेन प्रमाणभूतं वैदिकपाशुपतमुक्त्वा "वामं पाशुपतं सोमं लाकुलञ्चैव भैरवं । नसेव्यमेत त्कथितं वेदबाह्यं तथेतर"दिति मोहशास्त्र रूप मवैदिक मन्य त्संकीर्तितम् । तस्मा दप्रतिषिद्धानां वेदतुल्यत्व मव्याहतम् ॥

न त्वेतावता कामिकाद्यष्टाविंशतिप्रभेदस्य सिद्धान्ततन्त्रस्य वैदिकत्वं नोपपादितं भवति । वायुसंहितायां "शैवागमोऽपि द्विविध श्श्रौतोऽश्रौतश्च स स्स्मृतः । श्रुतिसारमय श्श्रौतः स्वतन्त्र इतरोमतः । स्वतन्त्रो दशधा पूर्वं न्तथाष्टादशधा पुनः । कामिकादिप्रभेदेन बहुधा स व्यवस्थितः । श्रुतिसारमयोऽन्यस्तु शतकोटिप्रविस्तरः । एवं पाशुपतं यत्र व्रतं ज्ञान ञ्च कथ्यते" । इति शैवागमस्य वैदिकाऽवैदिकविभागपूर्वकं कामिकादे रवैदिकत्वस्य वायुसंहितैकार्थसंज्ञानोत्तरादे वैदिकत्वस्य च विभज्य प्रतिपादना दितिचे दुच्यते । तत्र कामिकादे रवैदिकत्वोक्ति स्सर्वथैवाऽवैदिकत्वाऽभिप्रायेण नभवति । किन्तु वेदानुक्तमपि तत्र वेदोक्तपूजाद्यपेक्षितं कर्षणादिप्रतिष्ठान्तप्रभृतिप्रमेयरूपं प्रतिपादितमस्ती त्येतदभिप्रायेण वराहपुराणे ॥ "निश्श्वासंहितायां हि लक्ष्यमात्रप्रमाणतः । सैव पाशुपतीदीक्षा योगः पाशुपतश्च सः । एतस्मा द्रुद्रमार्गाद्धि यदन्य दिह जायते । तच्छूद्रकर्म विज्ञेयं रौद्रं शौचविगर्हित" मिति निश्श्वाससंहितोपलक्षितसकलसिद्धान्ततन्त्रव्यतिरिक्तस्य वामाचारयुक्ततया शौचविवर्जितस्य लागुडपाशुपतकापालिककालामुखादेरेव रौद्रागमस्याऽवैदिकत्व प्रतिपादना च । अतएव सिद्धान्तशिखामणौ-अगस्त्यंप्रति रेणुकवचनम् ॥ "वेदैकदेशवर्तिभ्य स्साङ्ख्यादिभ्यो महामुने । सर्ववेदानुवर्तित्वा च्छैवतन्त्रं गिरिशिष्यते । शैवतन्त्र मितिप्रोक्तं सिद्धान्ताख्यं शिवोदितं । सर्ववेदार्थरूपत्वा त्प्रामाण्यं वेदव त्सदा । आगमा बहुधा

मवगत मन्यत्राऽपि तस्यैव परमेश्वरस्य । अतः कर्तृसामान्या दुभयम प्येकार्थपरं प्रमाणमेव । एव मन्यत्राऽपि वञ्चब्रह्मप्रणवपञ्चाक्षरप्रासादादि मन्त्राणां पतिपशुपाशादिवस्तुव्यवहाराणां भस्मोद्धूळनत्रिपुण्ड्रधारणलिङ्गार्चन

---

प्रोक्ता शिवेन परमात्मना । शैवं पाशुपतं सोमं लाकुलं चेति भेदत" इति । तत्र शैवागमविशेषा न्निरूपयति - "तेषु शैवं चतुर्भेदं तत्र सर्वं विनिश्चितम् । वामञ्च दक्षिणञ्चैव मिश्रं सिद्धान्तसंज्ञिकम् " । इति । तत्र वामाद्यागमानां लक्षण मुक्तम् । "शक्तिप्रधानं वामाख्यं दक्षिणं भैरवात्मकं । सप्तमातृपरं मिश्रं सिद्धान्तं वेदसम्मत" मिति॥

ननु कर्त्रैक्येऽपि बृहस्पतिप्रणीताया स्स्मृतेः लोकायतसूत्राणाञ्च प्रामाण्याऽप्रामाण्यवैषम्यं दृष्ट मित्याशङ्क्याह - एकार्थपरमिति । ऐकार्थ्यमुपपादयति-पञ्चब्रह्मेति । "ईशान स्सर्वविद्याना" मित्यादयो यजुर्वेदारण्यके समाम्नाताः पञ्चब्रह्ममन्त्राः । प्रणव ओमितिब्रह्मेत्यादिप्रदेशे ष्वाम्नात । पञ्चाक्षरी यजुस्संहिताया माम्नाता । एवं प्रासादस्याम्नानप्रदेशो लिङ्गकाण्डे ष्वन्वेष्टव्यः । काळिकापुराणे तदाम्नानं दृश्यते—यथा "क्रमा त्सम्भवसन्दोहमादमारवसंज्ञिकाः । प्रासादस्तु भवे च्छेषः पञ्चमन्त्राः प्रकीर्तिताः । एकैकेन तयैकैकं वक्त्रं शम्भोः प्रपूजयेत् । एकं समुदितं कृत्वा पञ्चभिर्वा प्रपूजयेत् । प्रासादेनाऽथवा पञ्चवक्त्रं देवं प्रपूजयेत् । सम्भवादिषु मन्त्रेषु प्रासादस्तु प्रशस्यते । शम्भोः प्रसादनेनैव यस्मा द्दृष्टस्तु मन्त्रकः । तेन प्रासादसञ्ज्ञोऽयं कथ्यते मुनिपुङ्गवैः । तस्मा त्सर्वेषु मन्त्रेषु प्रासादः प्रोदितः परः" रिति । वैतालिकभैरवौप्रति वसिष्ठवचनम् ॥ ह्रींकारादिमन्त्रार्थ मादिपदम् । पशुपाशपतिव्यवहारः श्वेताश्वतराणा म्मन्त्रोपनिषदि "एतावन्तो वै पशवो द्विपद श्चतुष्पदः" "एष ईशो पशुपतिः । पशूना" मित्यादिना च प्रसिद्धः । आदिशब्देन "काल स्स्वभावो नियति र्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् " । इत्यादिप्रदेशगतो नियतिपुरुषतत्त्वादिव्यवहार स्सङ्गृहीतः । भस्मोद्धूळनत्रिपुण्ड्ररुद्राक्षमहालिङ्गधारणा न्यथर्वशिरः कालाग्निरुद्रबृहज्जाबालमहालिङ्गजाबालादि षूपनिषत्सु प्रसिद्धानि । "नित्यं त्रिसन्ध्यं शिवलिङ्ग मभ्यर्चयेम् । " "तदग्न्याये मरुतो मर्जयन्ते" त्यादिमन्त्रेषु प्रसिद्धम् । उपबृंहितश्च स मन्त्रः पौराणिकैः "रौद्रं लिङ्ग महाविष्णु र्भक्त्या शुद्धं शिलामयम् । चाहचिरं समभ्यर्च्य लब्धवा न्परमं पद मिति ॥

शिवागमेषु केचन शिवाधिक्यप्रतिपादकाः । केचन पशुपाशपतिरूपपदार्थत्रयप्रतिपादकाः । केचन भस्मरुद्राक्षशिवलिङ्गधारणशिवाराधनप्रणवपञ्चाक्षरादिप्रतिपादकाः । केचन षडध्वप्रति पादकाः । केचन षट्त्रिंशत्तत्त्वप्रतिपादकाः । एते सर्वेऽपिपदार्था वेदेष्वपि श्रूयन्तएव । तथाच– "शिवएव केवलः " "विश्वाधिको रुद्रो महर्षि" रिति मन्त्रोपनिषदि । षट्त्रिंशत्तत्त्वानि च

रुद्राक्षधारणादिपरधर्माणा मन्येषा ञ्च सर्वेषा मुभयत्राऽपि समसेव दर्शना दुभावपि प्रमाणभूतौ वेदागमौ कर्तृसामान्या देकार्थपरत्वेन च विरोधाभावात् । इद मधिकरणं केवलेश्वरनिमित्तत्ववादिहिरण्य गर्भोक्तयोगस्मृतिविषय मिति वयं वदामः । अतो हिरण्यगर्भागमपर मिद मधिकरण मिति युक्तम् । अथवा वियदाद्युत्पत्तिशङ्कापरिहारव

प्राणापानादिद्वादशमन्त्रैस्सह " त्रैगुण्यप्रकृतिरागकलाविद्या — नियति काल — माया — शुद्ध विद्यामहेश्वरसदाशिवशक्तिशिवा मे शुध्यन्ताम् विरजाविपाप्माभूयासग्गुस्वाहा " इति नाराय णोपनिषद्याम्नायन्ते । तथा —"वर्णः पद न्तथा मन्त्रः कला भुवनतत्त्वक " मिति षडध्व न्यासोऽपि "अध्वना सञ्जयतं श्रेष्ठम्याऽध्वनः पारमशीय" त्याम्नायन्ते। शिवलिङ्गधारणञ्च "नमो ब्रह्मणे धारणं मे अस्तु" "सर्वलिङ्गग् स्थापयती" त्यादिना श्रूयते । शिवपञ्चाक्षरीयजुस्संहिताया माम्नायते। तस्मा द्वेदशिवागमयोः प्रतिपाद्यानि सर्वाणि समानान्येव। इयांस्तु विशेषः। कल्पसूत्रेषु प्रत्यक्षश्रुति रुद्धांशे प्रणेतृभ्रान्तिमूलत्व माशङ्कास्पदम् । ननु शिवकर्तृकेष्वागमेष्विति । शिवस्य उपादानत्वनिराकरणं तेषु श्रूयतइतिचे द्वेदेच निर्विकारत्वं किं नश्रूयते । तस्यैव प्रपञ्चनपरं तत् । अतए वैतेषु निराकारस्य उपादानत्वस्य विकारित्वरूपतयैवाऽनभिमतत्वं प्रदर्शितम् । "परिणामोहि वस्तूनां पूर्वावस्थापरिच्युतिः । अवस्थान्तरसंप्राप्तिः क्षीरस्य दधिभाववत्" दित्यादिना । यत्तु "नाऽत्र शक्ति रुपादानम् चिद्रूपत्वा द्यथा शिवः । परिणामोचितः प्रोक्त श्चेतनस्य नयुज्यते " । इत्यादिना शक्तेः परिणामित्वनिराकरणं तच्छक्ते श्चेतनत्वेऽपि परिणामित्वं तद्व च्छिवस्याऽपि तदस्त्विति शङ्काऽवकाशनैराश्यसिद्धयर्थं प्रौढिवादमात्रम् ॥

तेष्वपि निमृशामग्नशीर्षादिव्यवहारेण शिवचिच्छक्तेः " चिच्छक्ति रर्थसंयोगोऽध्यक्ष मिन्द्रियमार्गत " इति चिच्छक्तिवृत्तिनिर्गमव्यवहारेण जीवचिच्छक्तेश्च परिणामित्व स्याऽऽभिख्यु तत्वा दितिभावः ॥

एव मुपादानत्वनिराकरणस्याऽप्यभिप्रायान्तरग्रहणेन सिद्धान्ततन्त्रस्याऽपि प्रामाण्य व्यवस्थापने तद्व्याख्यानानामपि तथैव प्रामाण्यसिद्धौ किंविषय मिद मधिकरणं स्यादि त्याकाङ्क्षाया माह — इद मधिकरण मिति । आचार्यान्तरोक्त मधिकरणस्य विषय माह — अथवेति । तन्त्रान्तरनिराकरणार्थं नेद मधिकरणम् । किन्तु वियदाद्युत्पत्तिशङ्कापरिहारार्थानि वियदधिकरणादीनि तथेदं केवलनिमित्तत्व शङ्कापरिहारार्थं मधिकरणम् । न चैवंसति तन्त्रान्तरनिराकरणार्येऽस्मिन्पादे सङ्गत्यभावो

द्वान्तरशङ्कापरिहारप्रवृत्तौ न दोष इति कश्चित् । सर्वथा न केवल मीश्वरो निमित्त मित्यस्माकं राध्दान्तः ॥

इति पाशुपताधिकरणम्

अथ पाञ्चरात्राधिकरणम् ९

## उत्पत्त्यसम्भवात् ॥ २–२–३९ ॥

पाञ्चरात्रमतं वासुदेवोक्तम् । तत्र जीवोत्पत्त्यादिक मुच्यते । तत्सम्भवति न वेति संशयः ॥

दोषस्या डिति,शङ्कयम् । पादसङ्गत्यभावेऽपि पूर्वाधिकरणन्यायप्रसक्तताऽवान्तरशङ्कापरिहारार्थत्वेन प्रासङ्गिकत्वोपपत्ते रित्यर्थः । किमत्र मतं ग्राह्य मित्याकाङ्क्षाया माह — मर्थेति । केवलनिमित्तेश्वरवादनिराकरण स्योभयथाऽपि सिद्धे नैकत्राऽभिनिवेशो किंचित्फलमस्तीति भावः । पादसङ्गतेरपिलाभा द्धैरण्यगर्भविषय मतिमतं न्यायइति विभिःतमंर । यत्तु श्रुतप्रकाशिकाकृता प्रधानकारणत्वाभ्युपगमा त्साङ्ख्यनिरासानन्तरभावित्वे पाशुपतनिरासस्य प्राप्तेऽपि सौगतार्हतमतनिरासानन्तरं तत्प्रतिक्षेप स्तस्याऽत्यन्तवेदबाह्यत्वज्ञापनाय कृत इत्युक्त न्तत्स्वमतभूतपाञ्चरात्रविषयप्रतिक्षेप स्येतोऽपि पाश्चात्यतयाकृततेन तस्य निकृष्टतमताऽभ्युपगमरूपत्वा त्पूर्वाधिकरणप्रकृते. प्रदर्शितत्वा च न विमर्शसह मित्युदास्यते ॥

इति पाशुपताधिकरणम् ८

अथ पाञ्चरात्राधिकरणम् ९

हैरण्यगर्भमतनिराकरणानन्तरं वैष्णवमतनिराकरणार्थ मिद मधिकरणम् ॥

जीवोत्पत्त्यादिकमिति । आदिशब्देन जीवा न्मनउत्पत्ति र्वासुदेवस्य परमकारणत्व मित्यादि गृह्यते । इह यद्यपि जीवविशेषे हिरण्यगर्भे भ्रान्तिसम्भवात् सदुक्त मीश्वरस्य केवलनिमित्तत्वं नग्राह्यम् । तथाऽपि पारमेश्वरपरशक्त्यंशतया परमेश्वरस्यैवाऽवस्थाविशेषरूपे भगवति वासुदेवे भ्रान्तिलेशस्याऽसम्भवा त्तदुक्त ञ्जीवोत्पत्त्यादिक न्मथैवग्राह्य मिति पूर्वपक्षयति.

सम्भवतीति पूर्वः पक्षः। कुतः ? भगवता वासुदेवेन प्रोक्तस्य प्रमाणत्वात् । तथा ह्यत्र प्रक्रिया । भगवा नेको वासुदेवः परमात्मा । तस्मात् । सङ्कर्षणाख्यो जीवो जायते । जीवाच्च प्रद्युम्नाख्यं मनः । मनस श्चाऽनिरुद्धाख्योऽहङ्कारः । एते चत्वारो व्यूह स्सर्वात्मान इति । अतो वासुदेवस्य हिरण्यगर्भादिभ्योऽपि परत्वेन तदुक्तस्य प्रामाण्या दिदं सर्व मुपपन्न मिति प्राप्ते ब्रूमः ॥

जीवोत्पत्त्यभिधायक मिदं शास्त्र मप्रमाणं, कृतनाशाकृताभ्यागम प्रसङ्गेन जीवोत्पत्त्यसम्भवात् । एकस्मि न्न पुण्यात्मकं कर्म कृत्वा प्रळये नष्टे तदन्यः कश्चिज्जीवः प्राप्नोती त्यकृतागमः, पूर्वस्य कृतनाश इत्यादि दोषः । ततो जीवोत्पत्त्यभिधायकं शास्त्र मप्रमाणम् ॥

इयश्चान्याऽनुपपत्ति रित्याह ॥

## न च कर्तुः करणम् ॥ २–२–४० ॥

सङ्कर्षणाख्या ज्जीवात् प्रद्युम्नाख्यं मनो जायत इत्युच्यते, कर्तु र्जीवा न्न करणोत्पत्ति र्नसम्भवति तस्य प्रकृतिकार्यत्वेन चेतनकार्यत्वा नुपपत्तेः ॥

---

सम्भवतीति । ऐते चत्वार इति । भगवद्व्यूहचतुष्टयात्मक स्सर्वः प्रपञ्च इत्यर्थः । जीवोत्पत्तिवादे "नजायते म्रियते वा विपश्चित्" इत्यादिश्रुतिविरोधो "नात्मा श्रुतेः" [ब्र –२–३–१४ सू] इत्यधिकरणे व्यक्तोभविष्यतीति युक्तिविरोध माह – ऐकस्मि न्निति । जीवोत्पत्तिरिव जीवा न्मनउत्पत्तिरपि नोपपद्यत इत्येतदर्थ मुत्तरसूत्र मित्याह- इयश्चेति ॥

चेतनकार्यत्वाऽनुपपत्ते रिति । पञ्चम्योच्यमानं जीवोपादानकत्वं नैवोपपद्यत इत्यर्थः ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ २–२–४२ ॥

विज्ञानशब्दो जीववाचकः अत्र जीवादीना मुत्पत्ति र्नाभिधीयते, किन्तु सङ्कर्षणादीनां जीवादिभाव उच्यते, जीवा द्यधिष्ठातृत्वं जीवादिभाव इति, तत स्तच्छास्त्रप्रामाण्यप्रतिषेधो माभूदितिशङ्कार्थः ॥

## विप्रतिषेधाच्च ॥ २–२–४३ ॥

एवं जीवोत्पत्त्यभिधाने परिहृतेऽपि पाञ्चरात्रमतस्य नाऽभ्युपगमः श्रुतिविरुद्धेश्वरकारणवादयुक्तिहेतुत्वतप्तमुद्राधारणादिधर्मपरत्वादिना विप्रति-

---

वा शब्दा त्पक्षविपरिवृत्त रिदं पूर्वपक्षसूत्रम् । जीववाचक इति । "विज्ञानं यज्ञं तनुते" इत्यादिश्रुतिप्रयोगा दित्यर्थः । परमकारणा द्वासुदेवा ज्जीवो जायत इत्यादि पाञ्चरात्रग्रन्थे जीवाद्युत्पत्त्यभिधान मनभ्युपगम्य तेषु सङ्कर्षण-प्रद्युम्नाऽनिरुद्धानां भावे अधिष्ठातृत्वेन सद्भावेऽभिधेयेऽभ्युपगम्यमाने तस्य ग्रन्थस्य अप्रतिषेधः प्रामाण्यनिषेधो नभवति । परिपूर्णषाड्गुण्यशालिनो वासुदेवस्य एकैकगुणयुगलाभिव्यक्तिमज्जीवाद्यधिष्ठातृ सङ्कर्षणादिव्यूहरूपेण प्रादुर्भावे तात्पर्योपपत्ते रिति सूत्रार्थं दर्शयति—अत्र जीवादीना मिति । "शङ्कार्थ इति । अस्याऽयम्भावः । सङ्कर्षणादीनां जीवाद्यधिष्ठातृत्वे शास्त्रस्य तात्पर्यं यदिस्या त्तर्हि तस्य प्रामाण्यनिषेधो न स्यात् । तदुभयम प्यसम्भव मिति ॥

किञ्च सङ्कर्षणादीनां त्रयाणां विज्ञानैश्वर्यादिरूपत्वेऽपि तदप्रतिषेधः । तस्य उत्पत्त्यसम्भवरूपदोष स्याऽप्रतिषेधः प्रकारान्तरेण प्राप्ति रित्यर्थः । वासुदेवादय श्चत्वारोऽपीश्वरा इतिपक्षे भगवानेको वासुदेव इति स्वसिद्धान्तहानिः । सङ्कर्षणादय स्त्रयो वासुदेवतुल्या इतिपक्षे उत्पत्त्यसम्भवदोष स्तदवस्थएवेतिभाव · । उत्तरसूत्रे विप्रतिषेधान्तरस्य समुच्चीयमानतया प्रकृतसूत्रस्य पाञ्चरात्रप्रामाण्याऽप्रतिषेधेनतात्पर्यमुचितम् ॥

परिहृतेपीत्यपिशब्देन परिहारस्याभासतां सूत्रगतचकारसमुच्चितयुक्तिसिद्धां द्योतयति । तत्राऽय माशयः । जीवविज्ञानशब्दानां प्रसिद्धार्थमपहायाऽप्रसिद्धजीवाद्यधिष्ठातृस्वरूपार्थान्तर कल्पनायां प्रमाणं नाऽस्ति । उदाहृतग्रन्थे तेषां सङ्कर्षणादिविशेषणत्व प्रमाण मस्तीतिचे द्भ्रान्तोऽसि । सङ्कर्षणादिशब्दाः किन्त्वाऽत्र संज्ञात्वेन जीवादिविशेषणतया निर्दिष्टाः । तेन प्रसिद्धानामेव जीवमनोऽहङ्काराणां पाञ्चरात्रपरिभाषया सङ्कर्षणप्रद्युम्नाऽनिरुद्धनामानि भवन्ति ।

षेधात् । अतः पाञ्चरात्रमत मसमञ्जसम् । " पाञ्चरात्रे च बौद्धे च तथा कालामुखेऽपि च । श्रद्धया दीक्षितायूयं भवत ब्राह्मणाधमाः " इत्यादिषु च विशेषेणाऽस्य प्रतिषेधो दृश्यते । अतोऽपि विप्रतिषेधा दप्रमाणं पाञ्चरात्र मतम् ॥

---

यत्र शास्त्रे यश्शब्दो यदर्थे परिभाषितः तत्र तस्य शब्दस्य सएवह्यर्थो ग्राह्यः । शब्दशास्त्रगतनदी वृद्ध्यादिसंज्ञार्थवत् । तस्मा त्पिहार आभासमात्रएवेति । ननु पाञ्चरात्रएव जीव मुद्दिश्य " स ह्यनादि रनन्तश्च परमार्थेन निश्चित " इत्युक्त त्वेन शास्त्रस्य प्रामाण्यप्रतिषेधो नसिद्ध्य तीतिचे न्न । एतेन वक्ष्यमाणवेदविरोधेनसह परस्परविरोधोऽपि कश्चन सूत्रार्थविषयो विप्रतिषेधो लभिष्यते ॥

ननु यत्रभ्रान्तिलेश स्याऽपि शङ्का न प्रवर्तते कथं भगवान्वासुदेवः श्रुतियुक्तिस्ववचन विरुद्धां जीवोत्पत्तिं ब्रूयात् । सत्यम् । भ्रान्त्या न ब्रूया दिति । विप्रलिप्सया तु ब्रूयादेव । दृष्टोहि तस्यावतारविशेषे विप्रलम्भः । सिद्धश्च पाञ्चरात्रेऽपि सः मोहशास्त्रत्वप्रसिद्धेः ।

ननु भारतादिषु पाञ्चरात्रस्य प्रामाण्यमपि प्रतिपादितम् । तर्हि अयमपि कश्चन विप्रतिषेधः सूत्रोक्तो भविष्यति । वस्तुतस्तु नाऽयं विप्रतिषेधोऽस्ति । अननुष्ठेयांशेषु कुण्डगोळकस्त्रीशूद्रादिवेदाऽनधिकृतविषयतया प्रामाण्यम् । तत्र वैदिकाधिकारवर्णनविषये जीवोत्पत्त्यादिश्रुतियुक्तिस्ववचनविरुद्धविषयेचाऽप्रामाण्य मिति व्यवस्थोपपत्तेः । इयं व्यवस्था कौर्मे दर्शिता । तत्रहि " स तेषां मायया जातं गोवधं गौतमो मुनिः । केनाऽपि हेतुना ज्ञात्वा शशापाऽतीवकोपनः । भविष्यथ त्रयी बाह्याः महापातकिभिस्समाः । इत्यदिना वेदबाह्यत्वेन गौतमशप्ता न्प्रस्तुत्य " सर्वे सम्प्राप्य देवेशं शङ्करं विष्णु मव्ययम् । अस्तुवन् लैकिकै स्स्तोत्रै रुच्छिष्टाइव सेवकाः । इत्यादिना शिवकेशवसन्निधौ तेषां वैदिकमन्त्रैः स्तोत्रेऽनधि कारात् । भाषाप्रबन्धै स्स्तुतिपूर्वकं गतिप्रार्थना मुपन्यस्य " तस्मा द्वै वेदबाह्यानां रक्षणार्थं तु पापिनां । सम्मोहनाय शास्त्राणि करिष्यामो वृषध्वज । एवं सञ्चोदितो रुद्रो माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरित " इत्यादिना वेदबाह्यत्वे प्यन्तःकरणशुद्धिमतां रक्षणार्थं वैदिकत्वेऽपि मलिनचित्तानां च विमोहनार्थञ्च शिवकेशवाभ्यां पाशुपतपाञ्चरात्रादीनि निर्मितानीतिश्रुतम् । कुण्डगोळकादीनां पाञ्चरात्रेऽधिकारोऽपि कौर्मे दर्शितः । " अथांशो स्मात्वतोनाम विष्णुभक्तः प्रतापवान् । महात्मा दाननिरतो धनुर्वेदविदां वरः स नारदस्य वचना द्वासुदेवार्चने रतः शास्त्रं प्रवर्तयामास कुण्डगोळादिभिश्श्रितम् ।

ननु पुरुषो वै रुद्र इत्यादिश्रुत्या परमेश्वर एव पुरुषो वासुदेवः। तज्ज्ञानाराधनादिकमपि क्रमेण परमेश्वरपदप्राप्तिसाधन मिति श्रूयते। तदाराधनप्रतिपादकस्य पाञ्चरात्रस्याऽप्रामाण्ये तस्यानाराध्यत्व प्रसङ्ग

---

तस्य नाम्ना तु विख्यात सात्वतं नाम शोभनं। प्रवर्तते महाशास्त्रं कुण्डादीनां हितावह" मिति। पाञ्चरात्रे स्त्रीशूद्राधिकार स्त्रिनकापुत्र मुपश्लोकं प्रस्तुत्य भागवते वर्णितः। "तेनास्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत्। यत्र स्त्रीशूद्रदासाना मधिकारः परस्स्मृतः। संस्कारो वैष्णव इति" पाञ्चरात्रप्रतिपाद्यस्य च क्रमेण वैदिकमार्गोऽवाप्तिद्वारा श्रेयःप्राप्ति रित्युक्तम्॥

वासिष्ठलैङ्गे॥ तत्रहि शाण्डिल्यंप्रति भगवद्वचनम्। "मत्तन्त्राश्रागर्णेनैव मत्पूजाचकृता त्वया तथा नप्रीतवानस्मि तेन शाण्डिल्य दुर्मते। कुमार्गेणाऽपि शाण्डिल्य कृतापूजा मम त्वया। अतः कालेनमहता वेदमार्गगमिष्यसि" इति। येतु पाञ्चरात्रमार्गेण विष्णुं प्रपन्नाअपि प्राचीनदधीच्यादिशापदोषेण शिवनिन्दादिषु प्रवर्तन्ते। तेषा माकल्पं निरयएव। नतु भवान्तरेऽपि वेदमार्गप्राप्तिः। तदुक्तं कौर्मे। "एव मुक्त्वातु विप्रर्षि श्शशापेश्वरविद्विषः। समागता न्ब्राह्मणां स्ता न्दक्षसाहाय्यकारिणः। यस्मा द्बहिष्कृता वेदा भवद्भिः परमेश्वरः। विनिन्दितो महादेव श्शङ्करो लोकवन्दितः। भविष्यथ त्रयीबाह्या स्सर्वेऽपीश्वरविद्विषः। निन्दन्तोह्यैश्वरं मार्गं कुशास्त्रासक्तमानसाः। मिथ्याधीतसमचारा मिथ्याज्ञानप्रलोभिनः। प्राप्य घोरं कलियुगं कलहैःकलिपीडिताः। त्यक्त्वातपोबलं कृत्स्नान् गच्छध्वं नरकान् पुन.। भविष्यति हृषीकेशः स्वाश्रितोऽपि पराङ्मुखः।" इति। ता नधिकृत्य सौरपुराणे पठ्यते "पुरुषोत्तम माश्रित्य शिवनिन्दापरा द्विजाः। कलौ युगे भविष्यन्ति त्राता तेषां न माधव" इति। स्कान्दे शङ्कर संहितायां शिवपूजाविधौ—"नेक्षेत पूजावेळायां नरं वत्स बहिष्कृतम्।" इत्युक्त्वा कोऽसौ बहिष्कृत इति जिज्ञासाया मुक्तम्। "दधीचिना गौतमेन ये शप्ता ब्राह्मणाधमाः। कला ववतरिष्यन्ति निन्दका स्ते बहिष्कृता" इति। एवमुदाहृतनानापुराणवचनानुसारेण भारतादिषु पाञ्चरात्रप्राशस्त्यवचना न्यधिकारिविशेषविषयतया तत्प्रामाण्यव्यवस्थापनपराणी त्युपपादनीयम्। भारतेऽपि हि—"साङ्ख्यं योगः पाञ्चरात्रं योगः पाशुपत न्तथा। किमेता न्येकनिष्ठानि पृथङ्निष्ठानि वा मुने"। इति प्रश्ने — "ज्ञाना न्येतानि राजर्षे विद्धि नानामतानि वै"। इति पाञ्चरात्रादीनां वैदिकमार्गा न्मार्गान्तरत्वोक्त्याऽवैदिकत्व माविष्कृतम्। अवैदिकेषु च न वैदिकाना मधिकारः। "या वेदबाह्या स्स्मृतयो याश्च काश्च कुदृष्टयः। सर्वा स्ता निष्फलाः प्रोक्ता निष्ठा तेषां हि तामसी" इति मनुस्मरणात्। वराहपुराणे च बहुधा पाञ्चरात्रप्रशंसां

इतिचेत् न । श्रुतिविरोधात् पाञ्चरात्रस्याप्रामाण्येऽपि तस्य का हानिः । श्रुति प्रसिद्धमार्गेण तदाराधनसम्भवात् । अतो न विरोधः ॥

इति पाञ्चरात्राधिकरणम्

---

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
द्वितीयाध्यायस्य द्वितीयः पादः

---

प्रस्तुत्याऽपि अवैदिकाधिकारिकत्व माविष्कृतम् । "अभावे वेदमन्त्राणां पाञ्चरात्रोदितेन च मार्गेण मां प्रपद्यन्ते ते मां प्राप्स्यन्ति मानवा" इति । अत्रहि – नित्यानां वेदमन्त्राणां स्वरूपेणाऽभावो नविवक्षितः । किन्तु तेष्वधिकाराऽभावएव । नच पाशुपतइव पाञ्चरात्र वैदिकाऽवैदिकविभागःकृतो दृश्यते । येन – "ज्ञाना न्येतानि राजर्षे" इत्यादिषु पाशुपतस्येव पाञ्चरात्रस्या प्यवैदिकस्यग्रहणमिति नीयेतेत्यलम् । श्रुतिविरुद्धेश्वरकारणवादः "शिवएवकेवल" इत्यादिश्रुतिविरुद्धः । वासुदेवः परमकारण मिति वादः । तस्य मुक्तिहेतुत्वं "यदा चर्मवदाकाश" मित्यादिश्रुतिविरुद्धम् ॥

नन्वित्यादिशङ्कापरिहारग्रन्थस्याऽयम्भावः । यद्यपि नारायणः परमेश्वरशक्त्य – वस्थाविशेषत्वा त्तदभिन्नः तदाराधनादिकञ्च क्रमेण परमेश्वरप्राप्तिसाधन मिति प्रसिद्धम् ॥ तथाऽपि वैदिकाना न्तदाराधनार्थम् न पाञ्चरात्रमेवाश्रयणीयम् । वैदिकेष्वेव बोधायनवैखानसादि सूत्रेषु तत्प्रतिष्ठोत्सवादिप्रपञ्चनादिति । पाशुपताधिकरणे यत् श्रीभाष्यकृता वेदविरुद्ध श्वरतत्त्वपरिकल्पन मुपासन माचार श्चेत्युक्तम् तत्सर्वं परत्र स्वीयदोषारोपण मिति विदितमेव । किञ्च यदपि पाशुपताधिकरणस्य पशुपत्यधिकरण मिति पाञ्चरात्राधिकरण-स्योत्पत्तिसम्भवाधिकरण मिति च नामकरण न्तदपिस्वीयस्तेयगुणाविष्करणमेव। वासुदेवकारणत्वस्य सर्वश्रुतिविरुद्धता सर्वव्याख्यानाधिकरणे प्रपञ्चिता । वस्तुतस्तु वासुदेवस्य सर्वेश्वरत्वकल्पनं भ्रान्तिमूलमेव ॥

तथाहि । महाभारते- "समा भवन्ति मे सर्वे दानवाश्चाऽमराश्च ये । शिवोऽस्मि सर्वजन्तूनां शिवत्वं तेन मे सुरा" इतिवचनेन शिवस्य सर्वेश्वरत्वमूक्तं सर्वहितैषित्व माख्यातम् । तद्धि दैत्यारितया सर्वप्रमाणसिद्धस्य वासुदेवस्य दुराप मिति विदितमेव । एवं दैत्यारित्वं वासुदेवस्य न केवलं सर्वेश्वरत्वाऽभावबोधक मपि तु "गीर्वाणा दानवारय" इत्यादिकोश प्रामाण्या त्सर्वदेवतासाधारण्यसाधक मपीति सिद्धम् । अतएव हयग्रीवाऽऽख्यायिकाऽपि

तस्याऽनीशतामेव स्थिरीकरोति । तथाच-एवमाख्यायते । वासुदेवो हि कदाचिद्दानवैर्दीर्घसमरे श्रान्तः स्वशार्ङ्गस्योपरि चुबुकमारोप्य तस्थौ । तदा कश्चिदसुरो वज्रकीटरूपेण शार्ङ्गगुणमदशत् तदा शार्ङ्गकोटिप्रहारेण वासुदेवस्य शिर उच्छिन्नं ततश्च देवैर्हयशिरसा संयोजित इति ॥

एतेन सर्वान्तर्यामित्वसर्वज्ञत्वसर्वशक्तिमत्त्वरूपेश्वरगुणा न विद्यन्त इति विज्ञायते । यदि तस्य सर्वान्तर्यामित्वं सर्वज्ञत्वं च तर्हि स्वमूर्धोत्पाटनाय प्रयतमानस्य रिपोः सङ्कल्पः कथं न विज्ञायेत । यदि नु सर्वशक्तिमत्त्वं तदा कथं स्वशिरःपरिरक्षणं न कृतम् । तस्मात् तस्येशत्वकल्पनं भ्रान्तिनिबन्धनमिति सिद्धमेव । "हयग्रीवोत्पत्तिगाथा बह्वागमैर्यया गीयते । एतेन हि सुपर्याप्ता वैष्णवाम्भोधिशोषणे" ॥

अथाऽत्र परेषां हयग्रीवस्य तदीयगाथाया तदीश्वरत्वस्य नाऽयाथार्थ्यमवश्यमङ्गीकरणीयं पर्यवसन्नमिति त्यलम् विस्तरेणेति ॥

इति पाञ्चरात्राधिकरणम्

---

इति श्री नागलिङ्गशिवाराध्याङ्कितमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां
श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीय
ब्रह्मसूत्रभाष्यव्याख्यायां द्वितीयाध्यायस्य द्वितीयः पादः

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाराध्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ द्वितीयाध्यायस्य

## तृतीयः पादः

---

### अथ वियदधिकरणम् १

निरस्त स्समस्तो विरुद्धेतरदर्शनन्यायः । अध्यायशेषेण पुनरत्रान्तरविरोध परिहारः क्रियते ॥

**न वियदश्रुतेः** ॥ २–३–१ ॥

निरवयवत्वेनाकार्यत्वभ्रमा दाकाशस्योत्पत्ति स्सन्दिह्यते सम्भवति नवेति। वियन्नोत्पद्यत इति प्राप्तम्। कुतः। अश्रुतेः। तथाहि छान्दोग्ये "सदेव सोम्येद मग्र आसी" दित्यारभ्य "तत्तेजोऽसृजते"ति तेजःप्रभृतिभूतसृष्टि रभिधीयते। तत्र नाकाशस्योत्पत्तिः श्रूयते। या तु "तस्माद्वा एतस्मा दात्मन

---

अथ वियदधिकरणम् १

ननु विरोधपरिहाराध्याये वियदादीना मुत्पत्त्यादिचिन्ता न सङ्गता इत्याशङ्क्याह– निरस्त इति। अयम्भावः। अध्यायसङ्गतिः प्रासङ्गिकी। कारणविषयश्रुतिविरोधप्रसङ्गा त्कार्यविषयश्रुतिविरोधोऽपि समाधीयत इति। द्वितीयाध्यायस्य प्रथमपादे कारणविषये परोक्तदोषाः परिहृताः। अत्र तृतीये कार्यविषये परोक्तदोषाः परिह्रियन्तइति बाह्यहेतूत्थ– समन्वयविरोधपरिहारानन्तर मान्तरहेतूत्थतत्परिहार इति तृतीयचतुर्थपादयो द्वितीयपादानन्तर्य मिति। अनयोः पौर्वापर्यहेतु श्चतुर्थपादारम्भे दर्शयिष्यते ॥

वियदुत्पद्यते नवेति तदुत्पत्तिप्रतिपादनक्षमश्रुतिसम्भवाऽसम्भवाभ्यां संशये पूर्वपक्षः। वियन्नोत्पद्यते तदुत्पत्तिप्रतिपादनक्षमश्रुत्यभावात्। छान्दोग्ये वियदुत्पत्तिपराश्रुतिरेव नाऽस्ति। निरव-

आकाश स्सम्भूतः" इति तैत्तिरीये सा गौणी भवितु मर्हति, आकाशोत्पादक-समवाय्यादिनिरूपणासम्भवात ॥

अतो जीववदाकाशोऽपि नोत्पद्यत इतिप्राप्ते ब्रूमः ॥

## अस्ति तु ॥ २–३–२ ॥

वियत उत्पत्ति रस्त्येव, "तस्माद्वा एतस्मा दात्मन आकाश स्सम्भूतः" इत्यादिश्रुतेः। आत्मनस्तु, "न जायते म्रियते वा विपश्चि" दिति प्रतिषेधा दनुत्पत्तिः। न वियदुत्पत्तिप्रतिषेधश्रुति रस्ति। अतो विय दुत्पद्यतएव ॥

यदुक्त मुत्पत्तिर्गौणीति तत्राह–

## गौण्यसम्भवा च्छब्दा च्च ॥ २–३–३ ॥

"तत्तेजोऽसृजते"ति तेजसः प्रथमसृष्टिवचनात "आकाशस्सम्भूत"इति श्रुति र्गौणी, तस्य निरवयवस्य उत्पत्त्यसम्भवात् "वायुश्चान्तरिक्ष श्चैतदमृत" मिति नित्यत्वशब्दाच्च ॥

---

यवत्वेन सङ्गतत्वेन च तस्याऽकार्यत्वावगमाच्च। अथ तैत्तिरीये "आत्मन आकाश स्सम्भूतः" इति याश्रुति राम्नायते सा वियत उत्पत्तिं बोधयितुं नशक्नोति। तस्मा द्गौणी। तस्मा जीववदाकाशोऽपि नोत्पद्यत इतिप्राप्तं सिद्धान्तमाह॥

वियत उत्पत्ति रस्त्येवेति। अतीन्द्रियविषयाया श्रुतेः वियदुत्पत्तिप्रतिपादनक्षमत्वा दित्यर्थः। तुशब्दः पूर्वमतोपात्तजीवदृष्टान्तवैषम्यप्रदर्शनार्थ इति व्याचष्टे—आत्मन स्त्विति। "न जायत" इत्यादिप्रतिषेधा दात्मनो नोत्पत्तिः ॥

पूर्वपक्षबीजोद्घाटनार्थ मुत्तरसूत्रद्वयम् –

असम्भवादित्यनेन श्रुत्यर्थापत्त्यनुमानविरोधा द्वियतउत्पत्त्यसम्भव उक्तइति व्याचष्टे— तत्तेजइति। तेजसःप्रा गाकाशवाय्वो रुत्पत्ति र्यदिस्या त्तर्हि तत्तेजोऽसृजतेति तेजसःप्रथम मुत्पत्तिश्रावणं नोपपद्येत इत्यर्थापत्तिः। निरवयवस्येति। निरवयवस्योत्पादिका सामग्री नसम्भवतीति निरवयवत्वहेतु रनुकूलतर्कसहकृत इत्यर्थः। एव मुत्पत्ते रसम्भवात् "वायुश्चान्तरिक्ष श्चैत दमृत" मिति नित्यत्वबोधकशब्दा च्च "आकाश स्सम्भूत" इतिश्रुति र्गौणीत्यर्थः ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २–३–४ ॥

एकस्य सम्भूतशब्दस्याकाशे गौणत्वमन्यत्र मुख्यत्वमनुषङ्गेऽपि श्रवणादावृत्ताविव सम्भवत्येव । यथैकस्य ब्रह्मशब्दस्य 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इति प्रकृतौ गौणत्वम् 'तपसा चीयते ब्रह्मे' ति मुख्यत्वमावृत्तौ तद्वदत्रापि । तस्मादाकाशोत्पत्तिरयुक्तेति ॥

अथ परिहार उच्यते—

## प्रतिज्ञाऽहानिरव्यतिरेकात् ॥ २–३–५ ॥

'येनाश्रुतं श्रुतं भवती' त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अहानि र्वियदादेर्ब्रह्मकार्यत्वेन तदव्यतिरेकादेव भवति । अतो न सम्भूतशब्दस्य गौणत्वम्, प्रतिज्ञाहान्याद्यापत्तेः । यथा प्रतिज्ञाऽहानिर्न भवति तथा योजनीयम् ।

---

"आत्मन आकाशः सम्भूतः आकाशाद्वायुः वायोरग्नि" रित्यादिवाक्ये आकाशाद्वायु रित्यादौ मुख्यार्थतयाऽनुषक्तस्य सम्भूतशब्दस्य आकाशे गौणार्थकत्वम् न सम्भवतीति शङ्क्यम् । "तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इत्येकस्मिन्प्रकरणे श्रूयमाणब्रह्मशब्दस्यैकस्यैव यथा प्रधाने गौणार्थकत्वम् "तपसा चीयते ब्रह्म" इत्यत्र मुख्यार्थकत्वम् तथैव वाय्वादौ मुख्यार्थकस्याऽप्याकाशे गौणार्थकत्वम् स्यादेवेत्यर्थः ॥

अथ परिहार इति । सिद्धान्तो निगद्यत इत्यर्थः ॥

यत्र छान्दोग्ये तेजसः प्रथमसृष्टिः श्रुता तत्रैव मृत्पिण्डघटशरावादिदृष्टान्तोदाहरणपूर्वकम् "येनाऽश्रुतं श्रुतम् भवती" त्येकविज्ञानेन सर्वविज्ञानम् प्रतिज्ञातम् । तस्याहि वियदादेर्ब्रह्मकार्यत्वेन तदव्यतिरेकत्वाऽभ्युपगमएव अहानि स्सिद्ध्यति । वियदादेः ब्रह्मकार्यत्वाऽभावे तस्याः प्रतिज्ञाया हानिरेव स्यात् । सम्भूतशब्दस्य गौणत्वाऽभ्युपगमे प्रतिज्ञाया हानिरापद्येत । एव मप्रतिज्ञाभङ्गो यथा नभवति तथैव छान्दोग्यश्रुति र्योजनीये त्याशयेन सूत्रंव्याचष्टे— येनाश्रुतमिति । एतेन दृष्टान्तरूपोपपत्त्युपन्यासपूर्विकायाः प्रतिज्ञाया स्तात्पर्यलिङ्गत्वा त्तद्रहितात् "वायुश्चाऽन्तरिक्षञ्च" त्यादिश्रुतितो प्रबलत्वा त्प्रतिज्ञाबलादेव पूर्वपक्षाऽऽधारभूतनिरवयवत्वादिहेतुत्रयस्याऽपि निराकरणं सिद्धमिति भावः ॥

छान्दोग्यस्य वियदुत्पत्तिप्रतिपादनार्थम् सूत्रम् ॥

## शब्देभ्यः ॥ २—३—६ ॥

'आत्मन आकाशसम्भूत' इत्यादिशब्देभ्योऽवगतां वियदुत्पत्तिम् 'तत्तेजोऽसृजते' त्यत्राकाशावचनावगतम् तेजःप्राथम्यम् न विचालयितुम् क्षमते ॥

## यावद्विकार न्तु विभागो लोकवत् ॥ २—३—७ ॥

'ऐतदात्म्यमिदम् सर्व' मित्याकाशादेरपि विकारत्वावगमा त्तेजःप्रभृति-विकारवचनम यावद्विकारजातम् तस्य सर्वस्याऽपि प्रदर्शनार्थमिति विभाव्यते। यथा लोके 'दश मे पुत्रा' इत्युक्त्वा तेषु केषाञ्चिदुत्पत्तिकथनम्तथाऽत्राऽपि। तस्मात् वियदुत्पद्यत इति युक्तमेव ॥

इति वियदधिकरणम्

---

आत्मन आकाश स्सम्भूत इति । छान्दोग्ये वियन्नोत्पद्यत इति वा, तेजः प्रथम मुत्पद्यत इति वा न श्रूयते किन्तु वियदुत्पत्ति र्नश्रूयते । वियदुत्पत्त्यवचनमात्रम् "आत्मन आकाश स्सम्भूत" इत्यादिशब्दावगताम् वियदुत्पत्तिम् नवारयितुम् शक्नोतीत्यर्थ ॥

ननु "तत्तेजोऽसृजते"ति तेजस्सृष्टेः प्राथम्य मवगम्यत इतिचे न्न स्यानप्रमाणकल्प्य प्राथम्यान्यथानुपपत्त्या वियदनुत्पत्तिकल्पनत स्तत्सम्भूतादिश्रुते र्बलवत्त्वात् तेजस्सृष्टिप्राथम्ये वियत्सृष्टि .स्तत्प्राथम्य मुभय म बाध्यं वियत्सृष्टिप्राथम्ये तु तेजस्सृष्टिप्राथम्य मात्रम् बाध्य मिति बाधककल्पनालाघवेन तेजस्सृष्टिबाधस्यौचितत्वात् । तस्मा च्छान्दोग्योपनिष दाकाशोत्पत्तिम् नवारयतीतिभावः ॥

छान्दोग्ये तेजःप्रभृत्युत्पत्तिवचनमेव वियदुत्पत्तेर प्युपलक्षक मितिप्रतिपादनार्थम् सूत्रम्॥

तुशब्दोऽप्यर्थः । विक्रियतइति विकारम् कार्यम् । सामान्यवचनसङ्क्षिप्तम् 'यावत्कार्य जातमस्ति तत्सर्वकर्म । विभाग विभज्यैकदेश स्योदाहरण, व्याकथनरूपः । ननु यावद्विशिष्योदाहृतम्'

अथ मातरिश्वाधिकरणम् २

## एतेन मातरिश्वा व्याख्यातः ॥ २-३-८ ॥

'तेजोऽत' इति वक्ष्यति। तदर्थम् पृथगुपादानम्। आकशाद्वायोरुत्पत्तिरस्तिनवेति संशये वायुर्नोत्पद्यत इत्युच्यते। छान्दोग्ये तेजः प्राथम्यात् वायोरुत्पत्तेरश्रुतेः बृहदारण्यके 'सैषाऽनस्तमिता देवता यद्वायु' रिति तज्जन्मनिषेधाच्च सर्वथा वायुर्नोत्पद्यत इति प्राप्ते सिद्धान्त उच्यते— छान्दोग्ये वायोर्जन्माश्रवणेऽपि गुणोपसंहारन्यायेन 'आकाशाद्वायु'रिति

---

तावन्मात्रापरः। यथा "लोके दश मे पुत्रा" इत्युक्त्वा तेषु केषाञ्चि त्परमेश्वरप्रसादलब्धत्व कथन मन्येषा मनुत्पत्तिम् बोधयति। किन्तु सर्वेषा मुत्पत्तिम् बोधयत्येव। तथा छान्दोग्ये "ऐतदात्म्य मिदगुम्सर्व" मित्यादिना आकाशादेस्सर्वस्याऽपि ब्रह्मकार्यत्ववचनात् "तत्तेजोऽसृज" तेति तेजःप्रभृतिमात्रविकारवचनम् सर्वस्याऽपि ब्रह्मकार्यत्वप्रतिपादकमेवेतिभावः॥

अधिकरणार्थ मुपसंहरति — तस्मादिति।

इति वियदधिकरणम्



अथ मातरिश्वाधिकरणम् २

ननु किमर्थ मिद मतिदेशाधिकरण मित्याशङ्क्याह — तेजोऽत इति। वियन्मातरिश्वनो रुभयोर प्येकसूत्रे णोत्पत्तौ समर्थयितुम् शक्यायाम प्युत्तरसूत्र सर्वनाम्ना मातरिश्वनएव परामर्शार्थम् पृथक्सूत्राकरण मित्यर्थः। ये तु मन्यन्ते "वायुश्चाऽन्तरिक्षञ्चैतदमृत" मित्युभय साधारण्येनाऽमृतत्व मुक्त्वा पुन र्वायो र्विशिष्योच्यते "सैषाऽनस्तमिता देवता यद्वायु" रिति। ततोऽभ्यामा द्वायो रमृतत्वम् विवक्षितमिति ज्ञायतइ त्यधिकाशङ्का व्यावृत्त्यर्थ मातिदेशिकाधिकरणान्तरमेवेदमिति तन्मतानुसारेणाऽधिकरण मुपन्यस्यति—आकाशा द्वायो रित्यादिना। एतदेव भाष्यकाराभिमतम् मतम्। पृथग्योगकरण मुत्तरार्थ मिति तु मतान्तरप्रदर्शनमात्रम्। नहि "तेजोऽत स्तथाह्याहे" त्युत्तरसूत्रे अत इत्यनेन वायुरेव परामर्शनीयः। किन्त्वाकाशोऽपि तत्र सूत्रे वायोरग्नेऽरग्निरितिव दाकाशादेव वायुरित्यपि पूर्वपक्षस्य विवक्षितत्वेन तदर्थम् वायुरिति

तैत्तिरीयवाक्यस्योपसंहारे सति श्रुतमेव छान्दोग्येऽपि वायोर्जन्म। 'सैषाऽनस्तमिते' ति श्रुतिः स्तुतिपरा। उपासनाप्रकरणात्। तस्मात् वायुरपि जायत एव ॥

इति मातरिश्वाधिकरणम्

---

अथ असम्भवाधिकरणम्

## असम्भवस्तु सतोऽनुपपत्तेः ॥ २–३–९ ॥

'सदेव सोम्येद मग्र आसी' दिति सद्रूपाद्ब्रह्मण आकाशादीना मुत्पत्तिरितिनिरूपितम्। तादृश सर्वकारणस्य सतोऽपि ब्रह्मणः कुताश्चित्कारणा दुत्पत्ति रस्ति न वेति सन्देहे सति ब्रह्मणोऽप्युत्पत्तिरस्तीत्युच्यते। यथा कारणत्वोऽप्याकाशस्य। किन्तु 'अग्र आसी' दिति श्रवणात् सर्वविकारेभ्यः

---

पवेऽप्याहृतस त्यावृत्त्या तदन्वयिनोऽत इत्यस्याऽऽकाशपरत्वस्या ऽप्यवश्यम्भावा दिति। उपासना प्रकरणादिति। बृहदारण्यके हि "अनेन ह्येतत्सर्वम् वेदे" त्यात्मविज्ञानेन सर्व विज्ञानम् प्रतिज्ञाय तदुपपादनार्थ मात्मकार्यम् वाय्वादिकम वायुश्चेत्यादिना प्रदर्श्यते। अथ स्वर्गकामवाक्यानुसारेण कोहि तत्रेद "यथमुष्मिन् लोके" इत्यादिवाक्यव दिहाऽपि प्रधानवाक्यानुसारेण गुणवाक्यस्य योजनीयत्वात् आत्मकार्यस्यैव वाय्वादे रमृतत्वकीर्तनम् स्तुतिपर मवमीयतइतिभावः ॥

इति मातरिश्वाधिकरणम्

---

अथ असम्भवाधिकरणम् ३

ननु तर्हि तद्वदेव "स बाह्याभ्यन्तरो ह्यजः", "नित्यम् विभुम् सर्वगतम् सुसूक्ष्म"मित्यादौ ब्रह्मणो प्यजत्वनित्यत्वादिकीर्तनम् स्तुतिपरम्स्यादित्याशङ्कानिराकरणार्थ मधिकरणान्तरम् ॥

आकाशादेरिव ब्रह्मणोऽप्युत्पत्ति रस्तीति पूर्वः पक्षः। सिद्धान्तस्तु-सतो ब्रह्मण उत्पत्ते रसम्भवः। कुतः "शिवएव केवल इति" सृष्टेः प्राक्काले तदन्यस्य निषेधात्।

पूर्वमस्योत्पत्तिः । किमस्य कारणमितिचे दसदेव । 'असद्वा इदमग्र आसी त्ततो वै सदजायत' इतिश्रवणात् । तत स्सद्रूपम् ब्रह्माऽपि जायत इति पूर्वपक्षः । सिद्धान्तस्तु—न जायते ब्रह्मेति । कुतः । "सदेव सोम्येद मग्र आसी देकमेवाऽद्वितीयम्" "यदा तम स्तन्न दिवा न रात्रि र्नस न्नचाऽस च्छिव एव केवलः' इति शिवस्य ब्रह्मणएवाऽवधारणात् । तस्यासम्भव एव । निषेधात् । तदन्यस्य त्वनुपपत्तेस्सम्भव इति । यथा ब्रह्मकारणत्वेन श्रूयते सर्वेषां तथा तस्याऽपि किञ्चित्कारणान्तरम् श्रूयते । 'असद्वा इद मग्र आसी त्ततो वै सदजायते' ति मतः कारण ममदिति चेत् । तदसत् । 'कथ मसतस्सज्जायेते' ति निषेधात् सत एव सदुत्पत्तावात्माश्रयापत्तेः । ततः सतो ब्रह्मण एवासम्भवोऽनुत्पत्तिः । तदन्यस्य सर्वस्य सर्वविज्ञानप्रतिज्ञानुपपत्तेः सम्भव उत्पत्तिरिति ॥

इति असम्भवाऽधिकरणम्

---

अथ तेजोऽधिकरणम् ४

## तेजोऽत स्तथा ह्याह ॥ २–३–१० ॥

अत्र वाय्वादिकार्यम् साक्षाद्ब्रह्मण उत्पद्यते स्वस्वपूर्वकारणाद्वेति सन्देहे सति स्वस्वपूर्वकारणादिति पूर्वपक्षः । तथा हि 'आकाशाद्वायु' रिति

---

ब्रह्मणएव ब्रह्मण उत्पत्त्यङ्गीकारे आत्माश्रयापत्ते श्च । तदन्यस्य त्वनुपपत्ते रसम्भवएव । कुतः अनुपपत्तेः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अनुपपत्ते रित्यर्थः । ब्रह्मणोऽन्यस्य कस्यचि दनुत्पत्त्यभ्युपगमे तस्य ब्रह्मकार्यत्वाभावेन ब्रह्मविज्ञानेन तदन्यभूतसर्वविज्ञानप्रतिज्ञा पीड्येत । अतो ब्रह्मणएवाऽनुत्पत्ति स्तदन्यस्य त्वनुत्पत्त्यसम्भव इत्यवश्य मेष्टव्यमिति भावः ॥

इति असम्भवाऽधिकरणम्

श्रुते र्वायुराकाशादेवोत्पद्यते न साक्षाद्ब्रह्मणः। तेजोऽपि तथा वायोरेव। तथा 'वायोरग्नि'रित्याह श्रुतिः॥

इति तेजोऽधिकरणम्

---

अथ अबऽधिकरणम्

## आपः ॥ २–३–११ ॥

'अग्नेराप' इति श्रुते रापोऽप्यग्नेरेवेति ॥

इति अबद्धिकरणम्

---

अथ तेजोऽधिकरणम् ४

एवम् ब्रह्मव्यतिरिक्तस्य कृत्स्नस्यप्रपञ्चस्य ब्रह्मकार्यत्व मविरोधेनोपपादितम्। अथ तत्कार्यत्वम् साक्षादेव न परम्परयेत्येतदविरोधेनोपपादयितु मधिकरणम् ॥

"आत्मन आकाश" इत्यादि सृष्टिवाक्यगतानाम् पञ्चम्यन्ताना माकाशादिशब्दानाम् महाभूतपरत्वस्य तदन्तर्यामिपरत्वस्यवाऽनवधारणा त्संशयम् दर्शयति– अत्रेति। "आकाशाद्वायु" रितिश्रुते रिति। आकाशशब्दस्य वियति तदन्तर्यामिणि ब्रह्मणि च शक्ते स्साधारण्येऽपि वियत्परत्वयेवयुक्तम्। लौकिकवैदिकप्रसिद्ध्यतिशयानुग्रहा दिति भावः। तेजोऽपि तथा वायोरेवेति। "वायोरग्नि"रितिश्रुतेरित्यर्थः। ननु छान्दोग्यश्रुतौ "तत्तेज ऐक्षत" त्यत्र तेजश्शब्दस्याऽन्तर्यामि परत्वम् वाच्यम्। ईक्षणलिङ्गात्। अत स्तैत्तिरीयकगतानामपि कारणपराणा माकाशादिशब्दाना मन्तर्यामिपरत्वम् स्यादितिशङ्कानिराकरणार्थम् सूत्रम् ॥

इति तेजोऽधिकरणम्

---

अथ अबधिकरणम्

अत स्तथाह्याहेति पूर्वसूत्रा दनुषङ्गः। आपोऽप्यग्ने रेवेति। छान्दोग्येऽपि कारणपरतेजश्शब्दस्य पूर्वोक्तयुक्तिभिः भूतविशेषपरत्वमेवयुक्त मीक्षणन्तु गौणम् भविष्यतीतिभावः ॥

इति अबधिकरणम्

---

अथ पृथिव्यधिकरणम्

## पृथिवी ॥ २-३-१२ ॥

'अद्भ्यः पृथिवी' ति श्रुते रद्भ्य एव पृथिवी। अतो ब्रह्मण एव साक्षान्नोत्पद्यन्ते भूतानि ॥

## अधिकाररूपशब्दान्तरेभ्यः ॥ २-३-१३ ॥

छान्दोग्येऽपि 'ता अन्नमसृजन्त' त्यन्नशब्देन पृथिव्येवोच्यते। सर्वभूतसृष्ट्यधिकारात 'यत्कृष्णम् तदन्नस्ये' ति रूपविधानाच्च। 'अद्भ्यः पृथिवी'ति शब्दाच्च। अतः पृथिव्येवाद्भ्य उत्पद्यते। तदेवम्न्यायेन ब्रह्म न सर्वेषाम् साक्षात्कारणम् किन्तु परम्परयेति ॥

इति पृथिव्यधिकरणम्

---

अथ पृथिव्यधिकरणम्

अत्राऽपि पूर्ववदनुषङ्गः। यद्यपि पूर्वसूत्रोक्तन्यायेनैवाऽद्भ्यएवपृथिवीत्येतत्सिद्धम् तथाऽपि छान्दोग्ये "ता अन्न मसृजन्ते"ति श्रावणा त्तद्विरोधशङ्काम् प्रसज्य एतदविरोधोप पादनस्याऽवसरदाना येदम् सूत्रम् ॥

तामेव प्रसक्ताम् शङ्काम् निराकर्तु मुत्तरसूत्रम् ॥

"यत्कृष्णम् तदन्नस्ये"ति रूपविधाना च्चेति। पृथिव्यामेव हि प्रायिकतया कृष्णम् रूप न्दृश्यते। न व्रीहियवादि ष्वदनीये ष्विति भावः। अतः पृथिव्येवाऽद्भ्यउत्पद्यत इति महाभूताऽधिकाररूपस्य प्रकरणस्य कृष्णरूपात्मकस्य लिङ्गस्य श्रुत्यन्तरगतयथासङ्ख्याम्नानरूपस्य-स्थानप्रमाणस्य चेति प्रमाणत्रयस्याऽन्नश्रुतिवर्षणनयुक्तभूयिष्ठत्वलिङ्गरूपप्रमाणद्वयापेक्षया बलवत्त्वा दितिभावः ॥

इति पृथिव्यधिकरणम्

अथ तदभिध्यानाऽधिकरणम्

सिद्धान्त उच्यते—

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ २—३—१४ ॥

ब्रह्मण एव तु साक्षात्सर्वभूतोत्पत्तिः । तथा हि—

'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इत्यारभ्य वाय्वादीनाम् पृथिव्यन्तानाम् न पूर्वपूर्वकारणादुत्पत्तिरुच्यते । किन्तु पूर्वपूर्वकारणादाकाशादिविशिष्टात् ब्रह्मणएवोत्तरोत्तरवाय्वादिकार्योत्पत्तिरुच्यते इति परमात्मा शिव एव साक्षात्सर्वभूतोत्पादकः 'तदैक्षत बहु स्याम् प्रजायेये' तिवत्, 'तत्तेज ऐक्षत बहु स्याम्प्रजायेयेति' 'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि' इति तदभिध्याना त्तल्लिङ्गात् ।

'सदाशिवश्शब्दमूर्तिः स्पर्शमूर्तिरथेश्वरः । रुद्रस्तेजोमयस्साक्षात् रसमूर्तिर्जनार्दनः । गन्धमूर्तिश्चतुर्वक्त्रः इत्येताः पञ्च मूर्तयः' । इति वचनात् सदाशिवादिरूपात् शब्दाद्यात्मनो ब्रह्मणो वाय्वादिसम्भवः । एते हि सदाशिवादयः पञ्चब्रह्मसंज्ञकाः पञ्चभूतात्मानः परब्रह्मणश्शरीरम् । पञ्चब्रह्मशरीरादेव परब्रह्मणः प्रपञ्चस्य सृष्ट्यादयः प्रवर्तन्ते । पञ्चभूततापन्नाश्चैते सदाशिवादयः परमात्मन उत्पद्यन्ते ॥

---

एवम् प्राप्ते सिद्धान्तसूत्रम् ॥

आकाशादिविशिष्टा दिति । इद माकाशाद्यभिमानिसदाशिवादिशरीरकत्वस्याऽपि वक्ष्यमाणस्योपलक्षकम् । शिवएवेति । अनेन सौत्रएवकार स्सहेत्यनेनाऽन्वेतीति दर्शितम् । तेन प्रथमान्ताऽऽकाशपदोक्तोऽपि तत्तद्विशिष्टशिवएव । "तदैक्षत बहुस्या" मिति तदभिध्यानात् । तस्य स्वरूपान्यथाभावरूपकार्यत्वाऽसम्भवेऽपि स्वविशेषणभूतधर्मान्यथाभावरूपकार्यत्वसम्भवा दिति सूच्यते । "तदैक्षत बहुस्याम् प्रजायेये"तिवदिति दृष्टान्तोपपादनस्याऽयमाशयः । इदंवाक्यम्—यथा बहुभवनसङ्कल्पं ब्रवीति तथैव "तत्तेजऐक्षते" त्यादिवाक्यद्वयमपि ब्रवीति । तेज-स्सृष्टिमात्रेण तद्विषयबहुभवनाऽनिवृत्तेरिति । अनेनैषाशङ्का व्यावार्तयते । जडाना माकाशादीना

ननु भूतानामेवात्रोत्पत्तिरुच्यते 'आकाशस्सम्भूत' इत्यादिना, सदाशिवादीनाम् न साक्षात्सृष्टिरुच्यत इति चेत। उच्यत एव। श्रुत्यन्तराध्याहारात्। तथाऽथर्वशिखायाम 'ध्यायीतेशानम प्रध्यायितव्यम सर्वमिदम् ब्रह्मविष्णुरुद्रेन्द्रा स्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभूतै र्न कारणम् कारणानाम् ध्याता कारणम तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुराकाशमध्यग' इति ब्रह्मादीनामिन्द्रियाणाञ्च भूतैस्सहोत्पत्तिः श्रूयते। कारणानामपि कारणत्वेन स शम्भुः परमाकाशमध्ये ध्येयः श्रूयते। तत स्साक्षादेव ब्रह्मण स्तत्तत्कारणरूपा त्तत्तत्व र्योत्पत्तिरिति निर्णयः॥

इति तेजोऽधिकरणम्

---

अथ पारम्पर्याऽधिकरणम् ५

## पारम्पर्येण क्रमोऽत उपपद्यते च ॥ २-३-१५ ॥

इह पूर्वाधिकरणे निरूपितः सृष्टिक्रम उपपद्यते न वेति सन्देहः॥

मीक्षणाऽसम्भवेऽपि प्राथमिक तेजश्श्रुत्यनुसारात् गौण मीक्षण मस्तु। तदभिमानिनाम् सदाशिवादीनां तत्सम्भवात्। आकाशादिपदानाम् तन्मात्रपर्यवसायित्वम् वाऽस्तु। नशिवपर्यन्तत्वम्। नच सदाशिवादीना मीक्षणमात्रसम्भवेऽपि महाभूतरूपेण बहुभवनसङ्कल्पोनसम्भवतीतिशङ्क्यम् तेषा मागमसिद्धानामिव भूतवशित्वेन सर्वशरीरकत्वोपपत्ते रिति। एवमभिध्यानस्य प्राक्प्रदर्शितबहुभवन-सङ्कल्परूपत्व तत्सिद्धब्रह्मसाधारण्यसूचनार्थम् "तदभिध्याना" दिति "तल्लिङ्गा"दिति च सौत्र-तत्पदम्। एवं तत्पदद्वयम् प्रयुञ्जानस्य सूत्रकारस्याशयस्त्वेव सदाशिवादीना माकाशाद्यभिमानित्वम् "सदाशिव श्शब्दमूर्ति" रित्यादिनादर्शितम्। एवम् तेजःप्रभृतिसृष्टे र्बहुभवनसङ्कल्परूपत्वसिद्धौ तुल्यन्यायतया वाय्वादिसृष्टेरपि तत्पूर्वकत्वम् सिध्यतीति ब्रह्मलिङ्गस्य व्यापकत्व मनुसन्धेयम्। श्रुत्यन्तराऽध्याहारा दिति। श्रुत्यन्तरश्रुतगुणोपसंहारादित्यर्थः॥

इति तेजोऽधिकरणम्

---

नोपपद्यत इति पूर्वः पक्षः । तथा हि—मुण्डकोपनिषदि 'एतस्माज्जायते प्राणो मन स्सर्वेन्द्रियाणि च । खम् वायु र्ज्योति रापः पृथिवी विश्वस्य धारिणी ॥'

इति प्राणादीनाम् वियदादिभ्यः पूर्वमुत्पत्तिः श्रूयते । अथर्वशिखायाञ्च 'ब्रह्मविष्णुरुद्रेन्द्रा स्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः' इति सहोत्पत्तिर्ब्रह्मादीनाम् भूतेन्द्रियाणा ञ्चाम्नायते । अत आकाशादेः पूर्वोक्तसृष्टिक्रमो नोपपद्यत इत्युच्यते ॥

सिद्धान्तस्तु—उपपन्नः पूर्वोक्तसृष्टिक्रमः । 'अन्नमयम् हि सोम्य मन आपोमयः प्राणः तेजोमयी वाक्' इति प्राणादीनाम् भौतिकत्वश्रवणात् भूतेष्वन्तर्भावा न्नपृथक्क्रमापेक्षा । ब्रह्मादीनाम् सहोत्पत्तिस्तु भूतैस्तद्रूपत्वात् तेष्वन्तर्भावात् । ततः पूर्वोक्तक्रमे न विरोधः ॥

अथ पारम्पर्याऽधिकरणम् ५

सङ्गतिपूर्वकं संशयम् दर्शयति—इहेति । आकाशशरीरका ब्रह्मणो वाय्वाद्युत्पत्तिसमर्थना दाकाशादिक्रमेण सृष्टि रित्यपि पूर्वाधिकरणेन सिद्धम् । तद्युक्तम् नवेति । उत्क्रम-क्रमान्तर-क्रमाभावश्रुतिविरोधसमाधानसम्भवाऽसम्भवाभ्यां संशयेसति नसम्भवति तत्समाधान मिति पूर्वः पक्षः । तथाहि— पूर्वाधिकरणसिद्धआकाशादिक्रमोऽसङ्गतः । मुण्डकोपनिषदि "एतस्माज्जायते प्राणो मन स्सर्वेन्द्रियाणि च । खम् वायु र्ज्योति रापः पृथिवी विश्वस्यधारिणी ।" ति मन्त्र तत्क्रमप्रत्यभिज्ञारूपाल्लिङ्गात् प्राणान्तःकरणेन्द्रियभूताना मिति क्रमान्तरम् विवक्षित मिति ज्ञायते । इदमपिस्थिरमेव । अथर्वशिखायान्तु "ब्रह्मविष्णुरुद्रेन्द्रा स्सम्प्रसूयन्ते सर्वाणिचेन्द्रियाणि सहभूतै" रिति सहश्रुत्यैव क्रमाभाव स्स्पष्टीकृतः । तस्मा त्सृष्टिक्रमो विरुद्धएवेतिप्राप्ते सिद्धान्तः—"आत्मन आकाश" इत्यादिसृष्टिपरम्पराक्रमो युक्तएव । कुतः पूर्वसूत्रोदिता त्तदभिध्यानात् । पारमेश्वरबहुभवनसङ्कल्परूपाभिध्यानानुवर्तनेनावगमितम् हि पूर्वपूर्वभूतशरीरक स्यैव परमेश्वर स्योत्तरोत्तरभूतस्रष्टृत्व मित्येत द्विचालयितु मशक्यम् । प्रबलेन तेन विरोधे सति च सहश्रुतिः भूताद्युत्पत्ते स्तदभिमानिब्रह्माद्युत्पत्तिसाहित्यमात्रपरतया योजनीया । मुण्डकोपनिषन्मन्त्रपाठावगतं क्रमान्तर न्तूपेक्षणीयम् । मनोवाक्प्राणादीनाम् भौतिकत्वश्रवणात् भूतेष्वन्तर्भावेन पृथक्क्रमस्याऽनपेक्षितत्वात् । विवक्षितभूतक्रमप्रत्यभिज्ञानलिङ्गात् तत्सहपठितप्राणादिक्रमो विवक्षितोऽवसीयत इति शङ्कानिराकरणार्थम् सूत्रम् ॥

# अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादितिचेन्नाऽविशेषात्

॥ २-३-१६ ॥

प्राणभूतानामिन्द्रियग्राममनसो क्रमेणान्तरा उत्पद्येते इति हीदम वाक्यम् प्रतिपादयति । 'खम् वायु र्ज्योतिः' इत्यादौ श्रुत्यन्तरसिद्धक्रम प्रत्यभिज्ञानरूपाल्लिङ्गात् । तत इदमपि पारम्पर्यक्रमपरमिति चेन-न, 'एतस्माज्जायते' इत्यस्य प्राणादिपृथिव्यन्तेषु सर्वेषु प्रत्येकमन्वयाविशेषात्। अतः सर्वेषामीश्वर एव कारणम् । तथा च पौराणिको फणितिः-

'शक्त्यादि च पृथिव्यन्तम् शिवतत्त्वसमुद्भवम ।

तेनैकेन तु तद्व्याप्तम मृदा कुम्भादिकम् यथा ॥' इति ।

क्रमसद्भावोऽपि सर्वस्य शिवतत्त्वा दुत्पत्तिमभिधत्ते । अतः सर्वकारणम ब्रह्मेति समीचीनम ॥

इति पारम्पर्याऽधिकरणम्

---

प्राणभूताना मिति । प्राणस्य भूताना ञ्च । अन्तरा-मध्ये । क्रमेण-मनइन्द्रियक्रमेण । विज्ञानमनसी-विज्ञानसाधनत्वा दिन्द्रियाणि विज्ञानशब्देनोच्यन्ते । इन्द्रियग्राममनसी । उत्पद्यन्त इति । इदं वाक्यम्- "एतस्मा ज्जायते प्राण" इत्यादिवाक्यम् प्रतिपादयति । तल्लिङ्गात्- "खम वायु र्ज्योति" रित्यादौ श्रुत्यन्तरसिद्धक्रमप्रत्यभिज्ञानरूपा ल्लिङ्गा दितिचे न्न । अविशेषात्- "एतस्मा ज्जायते" इत्यस्य प्राणादिपृथिव्यन्तेषु सर्वेषु प्रत्येक मविशेषे णाऽन्वयात् । तस्मा त्सर्वेषा मीश्वरएव कारण मित्यर्थः । इदमपीत्यनेन छान्दोग्यादिवाक्यव न्मुण्डकवाक्यमपि क्रमपरमेवेत्यर्थः । अन्वयाऽविशेषा दिति । प्राणस्येव मनःप्रभृतीनामपि कीर्तनम् ब्रह्मकार्यत्वप्रतिपादनार्थमेवेत्यर्थः । अत स्सर्वेषा मित्यादि रेतत्सूत्रार्थोपसंहारार्थः ॥

"एतस्मा ज्जायत" इत्यादिवाक्यं प्राणभूताना मन्तराळे इन्द्रियमनसी क्रमेण उत्पद्येते त्येतत्परम् तल्लिङ्गा च्छ्रुत्यन्तरसिद्धक्रमप्रत्यभिज्ञानरूपा ल्लिङ्गात् तस्माऽच्छ्रुत्यन्तरविरुद्धत्वा त्साक्षाद्ब्रह्मण स्सर्वेषां सृष्टिपर मिदंवाक्य मिति चे न-अविशेषात्-भूततन्मात्रान्तराळे

अथ चराचरव्यपाश्रयाऽधिकरणम् ६

## चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्त स्तद्भाव- भावित्वात् ॥ २—३—१७ ॥

पूर्वत्राकाशादिशब्दवाच्यत्वम ब्रह्मणः प्रतिपादितम । तदिह विचार्यते—

चेतनाचेतनचराचरवस्तुसम्बन्धी तद्वाचिशब्दो ब्रह्मणि मुख्यो न वा ?

इति सन्देहे न मुख्य इति वदामः अन्यत्रवाचकशब्दस्य मुख्यतयान्यत्र वृत्त्यभावात् । तथा हि— ' आदित्यो यूपः ' ' यजमानः प्रस्तरः ' इत्यादिषु यूपादेरादित्यादिशब्दवाच्यत्वम् सारूप्यादिगुणसम्बन्धादेव दृश्यते, न मुख्यत्वेन । अत्राऽपि ' तत्तेज ऐक्षत ' इत्यादिषु तेजःप्रभृतीना मचेतनानाम् चेतनधर्मेक्षितृत्वायोगात् तच्छब्दै स्तदाश्रित श्चेतनम् ब्रह्म लक्ष्यते, 'मञ्चाः क्रोशन्ती'त्यादिवत । तस्मा दाकाशादिशब्दवाच्यत्वम् ब्रह्मणि तदाश्रये गौणमिति ॥

विज्ञानमनसो रुत्पत्तावपि तत्सच्छरीरकब्रह्माभिधायित्वात् भूतेन्द्रियमनःप्राणशब्दानाम् सर्वेषाम् साक्षदुत्पत्त्यविशेषा त्तत्परमेवैतद्वाक्यमिति ॥

इति पारम्पर्याऽधिकरणम्

---

अथ चराचरव्यपाश्रयाऽधिकरणम् ६

सङ्गतिपूर्वकम् संशय न्दर्शयति—पूर्वत्रेति । तेजोऽत इत्यधिकरणे ब्रह्मणः सृष्टिवाक्यगताकाशादिशब्दप्रतिपाद्यत्व मुक्तम् । तन्मुख्य ममुख्यम् वे त्युत्पत्तिसम्भवासम्भवाऽभ्याम् संशयः॥

पूर्वपक्षस्तु — आकाशादिशब्दानाम् भूतविशेषादिषुरूढत्वा द्ब्रह्मणि वृत्त्यभावेन तत्प्रतिपाद्यत्वम् न मुख्य मिति । एवं प्राप्तेऽथ सिद्धान्तः । चराचरव्यपाश्रयः जङ्गमस्थावरसम्बन्धी

एवम् प्राप्ते ब्रूमः—चराचरवस्तुसम्बन्धी तद्व्यपदेशशब्दो ब्रह्मणि न भाक्तः, किन्तु मुख्य एव। 'तेषाम् खल्वेषाम् भूतानाम् त्रीण्येव बीजानि भवन्ति । अण्डजम् जीवजमुद्भिज्जमिति । सेयम् देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्यनामरूपे व्याकरवाणि' इति सर्वस्य वस्तुनो नामरूपविभागाय तत्तदात्मनया ब्रह्मणोऽनुप्रवेशभाव भाविनत्वात् । यूपादीना मादित्यादिशब्दवाच्यत्व मनुपपत्त्या न मुख्यम । मञ्चादिषु पुरुषाणामवस्थातृमात्रत्वात् तेषामपि तच्छब्दवाच्यत्वम् न मुख्यम् । इहात्मतया प्रपञ्चानुप्रवेशा द्ब्रह्मणस्तच्छब्दवाच्यत्वम् मुख्यमेव, यथाऽऽत्मनो ब्राह्मणादिशरीरानुप्रविष्टस्य ब्राह्मणादिशब्दवाच्यत्वम् मुख्यम्। अन्यथा 'अष्टवर्षम् ब्राह्मण मुपनयीत' इत्यादिषूपनयनसंस्कारादेः शरीरमात्रपर्यवसाना दात्मनः संस्कर्यित्वाभावप्रसङ्गात् । ततो 'यस्यैते चत्वारिंशत्संस्कारा अष्टौ चात्मगुणाः स ब्रह्मणः सायुज्यम्' इत्यादिरात्मनः संस्कारवतः फलश्रुति रपार्था भवेत् । 'ब्रह्मणो यजेत' इत्यादिविधिवैयर्थ्यं च भवेत् । तस्मात् सकलचराचरवस्तुशरीरप्रविष्टस्य ब्रह्मणस्तच्छब्दवाच्यत्वम् मुख्यमेव ॥

इति चराचरव्यपाश्रयाऽधिकरणम्

---

तद्व्यपदेशः तद्वाचकत्वेन लोकगृहीत श्शब्दः ब्रह्मणि अभाक्तः—अमुख्यो नभवति । किन्तु मुख्यएव । कुतः तद्भावभावित्वात् । तस्य ब्रह्मणो योभावःचराचरवस्तु ष्वात्मतया सद्भाव स्तस्मा द्धेतो र्भवति । "अनेनजीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी" ति श्रुत्या ब्रह्मण श्चराचरवस्त्वात्मकतया तदनुप्रवेशहेतुकत्वेनैव चराचरवस्तुसम्बन्धिनामरूपव्याकरणस्य ब्रह्मपर्यन्तताया: प्रतिपादितत्वात् । तद्वाचिशब्दस्य तदात्मनामपि स्याऽन्यत्र प्रवृत्तावपि मुख्यत्वमेव भवति। शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्य व्युत्पत्तिसिद्धत्वात् । ततएव च "ब्राह्मण मुपनयीते" त्यादिषु श्रुतिषु ब्राह्मणादिशब्दाना मात्मपर्यन्तत्वम् मुख्यमेवेति ॥

इति चराचरव्यपाश्रयाऽधिकरणम्

अथ आत्माऽधिकरणम्

## नात्मा श्रुतेर्नित्यत्वा च्च ताभ्यः ॥ २-३-१८ ॥

पूर्वत्राकाशादीनाम् ब्रह्मणः साक्षादुत्पत्तिरभिहिता । जीवोऽपि तन्न्यायेन ब्रह्मणः समुत्पद्यते न वेति सन्देहः ॥

समुत्पद्यत इति पूर्वः पक्षः । 'यदा तम स्त न्न दिवा न रात्रि र्न स न्नचाऽस च्छिवएव केवलः' 'एकमेवाऽद्वितीयम्' इत्यादिश्रुतेः प्राक्सृष्टे ब्रह्मैक त्वाऽवधारणात् , सदसतोर्निषेधा च्च । अतः सृष्टिकाले ब्रह्मण उत्पद्यत एव जीवः । विस्फुलिङ्गदृष्टान्तोऽपि जीवोत्पत्त्यनुगुणः श्रूयते 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवैतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्वएवात्मानो व्युच्चरन्ति' इति । तस्मा द्यथाऽग्नेर्विस्फुलिङ्गा जायन्ते तथा ब्रह्मणआत्मानो जायन्ते ॥

इति प्राप्ते ब्रूमः:—आत्मा न जायते । 'न जायते म्रियते वा विपश्चित्' इतिश्रुतेः, 'नित्यो नित्यानाम् चेतन श्चेतनानाम्' 'ज्ञाज्ञौ द्वावजावीशानीशौ' इत्यादिश्रुतिभ्यः नित्यत्वावगतेश्च । सृष्टेः प्राक्

---

अथ आत्माधिऽकरणम् २

आकाशादीनाम् स्वरूपान्यथाभावरूपोत्पत्तौ प्रतिपादितायाम् तद्व ज्जीवस्याऽप्युत्पत्ति रस्ति नवेति श्रुतिविप्रतिपत्त्या संशयेसति पूर्वपक्षः—सृष्टेःप्रा गेकत्वाऽवधारणरूपेण "नस न्नचाऽसदि"ति सदसदात्मकसकलवस्तुनिषेधरूपेण च लिङ्गद्वयेन "सर्व एत आत्मनो व्युच्चरन्तीति" श्रुतेश्च जीवस्याऽप्यन्यथाभावरूपोत्पत्ति रस्ति । तदनुत्पत्तिपरा श्रुतिस्तु आकाशामृतत्वादिश्रुतिवत् स्तुतिपरतया नेयेति-अत्र सिद्धान्तः । जीवो नोत्पद्यते । 'नजायते म्रियतेवे'त्यादिश्रुतेः ताभ्यः 'नित्यो नित्याना' मित्यादिश्रुतिभ्योऽवगता न्नित्यत्वलिङ्गा च्च । उत्पत्तिश्रुतिस्तु तत्तच्छरीरोपाधिक तत्तदवच्छिन्नभोक्तृत्वाऽनुगुणज्ञानविकासवत्त्वनिबन्धना । सृष्टेःप्रा गेकस्यैव ब्रह्मणोऽवधारणम् नहि जीवादिस्वरूपासत्तया, किन्तु तदाकृतिभूतस्य तस्य चाऽचिद्वस्तुनश्च नामरूपव्यवहाराभावा देव । विस्फुलिङ्गश्रुतिश्च तेषां नामरूपसमुन्मेषाभिप्राया न जन्मपरा । अन्यथा "ब्रह्मविदाप्नोतिपर"

ब्रह्मणोऽवधारणम् तदाकृतिभूतस्य तस्यचाचिद्वस्तुनश्च नामरूपव्यवहारा-भावात्, न जीवादिस्वरूपासत्तया। विस्फुलिङ्गश्रुतिश्च तेषाम् नामरूप समुन्मेषाभिप्राया, न जन्मपरा। अन्यथा कृतनाशादिदोषप्रसङ्गात्। तस्मा द्ब्रह्मणो न जायत एव जीवः॥

इति आत्माऽधिकरणम्

---

अथ ज्ञाऽधिकरणम् ८

## ज्ञोऽत एव ॥ २–३–१९ ॥

पूर्वत्र नित्यतया जीवः सिद्धः। पुनरत्राऽस्य स्वाभाविकम् ज्ञान मस्ति न वेति सन्दिह्यते॥

एवम् सति पूर्वपक्षः—जीवस्य स्वाभाविकम् ज्ञानधर्मित्वम् नास्तीति। 'ज्ञाज्ञौ द्वौ' इति जीवस्याज्ञत्वमेव हि श्रूयते। तस्मा दज्ञएवाऽसौ चैतन्यमात्ररूपः, किन्तु मायाशक्त्यवच्छेदा दवाप्तशरीरकरणादिरयम्

---

मित्यादिमोक्षफलप्रतिपादकवाक्यविरोधोऽप्यापद्येत। तस्मा जीवो ब्रह्मणो नजायत एवेति सिद्धमिति। * इदमधिकरणम् शुद्धाद्वैतवादिना म्पक्षे नसङ्गच्छते। तत्पक्षेहि ब्रह्मणोऽविकृतस्यैव जीवभावेनाऽवस्थितत्वात् ब्रह्मण श्चोत्पत्ते रसम्भवाऽधिकरणे निराकृतत्वेन तदनन्यस्य जीवस्य पुनरनुत्पत्त्युपपादनस्याऽनुपपन्नत्वात्॥

इति आत्माऽधिकरणम्

---

अथ ज्ञाऽधिकरणम् ८

जीवस्यानुत्पत्ति रुपपादिता। तत्प्रसङ्गा दन्यानपि जीवधर्मा न्निरूपयितु मापादसमाप्ते रधिकरणानि। इहाऽधिकरणे तु जीवस्य ज्ञानधर्म आगन्तुकः? उत स्वाभाविकः? इति विचार्यते। श्रुतिविप्रतिपत्त्या संशयेसति पूर्वपक्षः—"ज्ञाज्ञौ द्वा" वित्यादिषु जीवस्याऽज्ञत्व

घटोऽयम् पटोऽयम् मनुष्योऽहम् देवोऽहमिति कल्पिताहङ्कारबद्धः संसरतीति संसारदशायाम् ज्ञानात् जीवस्य स्वतो ज्ञातृत्वम् नास्त्येव, अन्यथाऽस्य कुतो मुक्तिरिति ॥

एवम् प्राप्ते ब्रूमः— ज्ञातैवाऽयमात्मा । 'अथ यो वेदेदम् जिघ्राणीति स आत्मा...मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' 'मनोऽस्य दैवम् चक्षुः' इत्यादिश्रुतेर्धर्मभूतम् ज्ञानमेवाऽस्य मनः । अतः स्वत एवाऽयम् ज्ञाता । यदुक्तम् मायाशक्तिसम्बन्धात् संसारदशायाम् ज्ञातृत्व मस्येति, तत्सत्यम् । मायाशक्तिकबलितस्वाभाविकज्ञानशक्तिविलासोऽयम् प्राकृत मनःसम्बन्धात् भोक्ता सुखदुःखयोर्ज्ञाता शारीराहङ्कारमात्रविश्रान्तः संसरति हि जीवः । यदा पुनरस्य ब्रह्मज्ञानोपासनाभ्यासात् मलत्रयसम्बन्धोऽपैति, तदाऽसौ ब्रह्मसदृशोऽभिव्यक्तनैजनिरतिशयज्ञानधर्मो मुक्त इत्युच्यते ॥

किञ्च—'प्राणारामम् मनआनन्दम्' इति ब्रह्मणोनिरतिशयात्मानन्द विषयम् मनः स्वाभाविकम् करण मवगम्यते । तत्सदृशगुणत्वा

---

मौत्सर्गिकम् श्रूयते । सुषुप्तिदशायाम् "नकिञ्चिदवेदिष" मिति ज्ञानाऽभावोऽनुभूयते । जीवस्य स्वप्रकाशचैतन्यस्वरूपत्वेऽपि अह मिदम् जानामीति जीवाश्रयत्वेनाऽनुभूयमानम् ज्ञान मनित्य मवगम्यते । मायादिसम्बन्धा त्तत्सरतोऽस्य तेनचाऽनित्यज्ञानेन ज्ञानवत्त्वा दस्याऽऽगन्तुकज्ञान धर्मित्वमेव, न स्वाभाविकज्ञानधर्मित्व मिति । सिद्धान्तस्तु—आत्माज्ञः—स्वाभाविकज्ञानधर्मी । कुतः— अतएव—श्रुतेरेवेत्यर्थः । तथाहि—"अथ यो वेदेदम् जिघ्राणीति" "स आत्मा" "मन-सैता न्कामा न्पश्य न्रमते" "मनोऽस्य दैवम् चक्षुः" इत्यादि श्रूयते ॥

अतः धर्मभूतम् ज्ञानमेवाऽस्य मनः । अत स्वतएवाऽयम् ज्ञाता । "ज्ञाऽज्ञौ द्वा" विति श्रुति स्संसारदशायां सर्वज्ञत्वाऽनभिव्यक्तिपरा । सुषुप्तिदशायाम् ज्ञानाभावानुभवस्तु विषयविशेषावच्छिन्नज्ञानपरिणामाभावविषयः । मायादिबद्धस्य ज्ञातृत्वम् किञ्चिज्ज्ञत्वरूपम् । मुक्तस्य तु मलमायाद्यपगमा दभिव्यक्तनिरतिशयज्ञानस्य सर्वज्ञत्वरूप मिति विशेष इति ॥

दपगतसंसारस्य जीवस्य स्वरूपानन्दानुभवसाधनम मनोरूपमन्तःकरणमनपेक्षितबाह्यकरण मस्तीति गम्यते । 'ज्ञाज्ञौ' इति जीवस्याज्ञत्वम् किञ्चिज्ज्ञत्वमेव । असंसारिणःपरमेश्वरस्य तु सर्वज्ञत्वमुच्यते । अतः संसारे किञ्चिज्ज्ञत्वम् मुक्तौ सर्वज्ञत्वमिति ज्ञातैवात्मा ॥

इति ज्ञाऽधिकरणम्

---

अथोत्क्रान्त्यधिकरणम् ९

## उत्क्रान्तिगत्यागतीनाम् ॥ २–३–२० ॥

पूर्वत्र ज्ञातृत्वेन सिद्धस्यात्मन उत्क्रान्त्यादिदर्शनात् अणुत्वमवगम्यते । तद्युज्यते न वेति सन्देहः ॥

नास्याणुत्वमुपपद्यते । 'सवा एष महानज आत्मा' इति जीवस्य विभुत्वावगमात् 'अहम् विश्वम् भुवन मभ्यभवाम्' इति तस्य व्याप्त्या सकलभुवनाभिभावित्वावगमाच्च सर्वथायमात्मा विभुः ॥

* इद मप्यधिकरणम् शुद्धाद्वैतवादिना स्वपक्षेऽसङ्गतमेव । जीवस्याऽविकृत ब्रह्मात्मकतया ब्रह्मण स्सहजस्य ज्ञानात्मकत्वस्य जीवेऽप्यसन्दिग्धत्वेन पुनस्तद्विषयज्ञान स्यागन्तुकत्वस्वाभाविकत्वविचाराऽनवकाशात् ॥

इति ज्ञाऽधिकरणम्

---

अथोत्कान्त्यधिकरणम्

अणुर्वाऽय मात्मा उत विभु रिति । अणुत्वविभुत्वबोधिन्यो श्श्रुत्योः किमनुसारेण काश्रुति र्नेतव्येति तयो र्बलाबलाऽनवधारणा त्संशयः । तदर्थम् सन्देहान्तर मपि । पूर्वाऽधिकरण प्रसाधितो जीवस्वरूपाऽतिरिक्तधर्मज्ञानसद्भाव उपपद्यते नवेति । उपपद्यते चे त्तदीयज्ञानव्याप्त्या सर्वाङ्गीणसुखानुभवस्यसिद्धतया ज्ञानव्याप्तिविषयतया विभुत्वश्रुते श्चोपपन्नत्वेन उत्क्रान्ति

इति प्राप्ते निरूप्यते—अणुरेवायमात्मा, उत्क्रान्तिगत्यागतीनाम् श्रुतेः । 'तेन प्रद्योतेनैष आत्मा निष्क्रामति' इति ह्युत्क्रान्तिः श्रूयते । 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते गच्छन्ति' इति गतिः । 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इत्यागतिः । विभुत्वे जीवस्यैता उत्क्रान्तिगत्यागतयो नोपपद्येरन् ॥

यद्यपि शरीरवियोगरूपोत्क्रान्तिर्विभुत्वेऽप्यात्मनः स्यात् तथाऽपि गत्यागती नैवमित्याह—

गत्यागतिलिङ्गानुगृहीताऽणुत्वश्रुतिबलात् अणु रात्मेति सिद्धान्तकोटि स्सिध्येत् । नोपपद्यतंचे त्सर्वाङ्गीणसुखाऽनुभवस्य आत्मव्याप्तिमन्तरेणाऽनुपपन्नतया तदनुगृहीतया विभुत्वश्रुत्या विभुरेवाऽयमात्मा । तदणुत्वश्रुति "स्त्वेषम आत्माऽन्तर्हृदयेऽणीया" निति पारमेश्वराणुत्व श्रुतिव दौपाधिकाऽणुत्वपरा । उत्क्रान्त्यादिश्रुतयोऽपि औपाधिकार्थविषया इति पूर्वपक्षकोटि स्सिध्ये दिति संशययोःफलफलिभावः ॥

तत्र पूर्वपक्ष.— "स वा एष महानज आत्मे"ति श्रुते र्विभु र्जीवः । नचेयम् श्रुतिः परमेश्वरविषय इति शङ्क्यम् "योयं विज्ञानमय प्राणेष्वि"ति जीवस्यप्रस्तुतत्वात् । "अहम् विश्वम् भुवनमभ्यभवा मि"ति मुक्तजीवस्य व्याप्त्या सकलभुवनाभिभावित्वश्रावणाच्च । "बुद्धे रात्मा महान्पर"इति मुक्तामुक्तसाधारण्येन जीवस्य महत्त्वश्रुतेश्च । अणुत्वे च तस्य सर्वाङ्गीणसुखानुभवायोगाच्च । देहपरिमाणत्वस्याऽपि जैनाऽधिकरणे निराकृतत्वा त्तस्य विभुत्व मवार्यम् । इति प्राप्ते सिद्धान्तमाह सूत्रकारः । "सू ॥ उत्क्रान्तिगत्यागतीनाम्" ॥ "नात्माश्रुते"रिति सूत्रात् आत्मा श्रुतेरिति । "नाणु रतच्छ्रुते" रितिसूत्रात् अणु रिति चाऽनुवर्तते । उत्क्रान्तिगत्यागतीनांश्रुतेःअयमात्मा अणुः । 'तेन प्रद्योते नैषआत्मा निष्क्रामती'ति उत्क्रान्तिश्रुतिः । "चन्द्रमसमेव ते गच्छन्तीति गतिश्रुतिः । तस्मा ल्लोका त्पुनरेती" त्यागतिश्रुतिः । जीवस्य विभुत्वे सर्वगतत्वात् उत्क्रान्तिगत्यागतयो नोपपद्येरन्निति ।

उत्तरसूत्रशङ्कामाह-यद्यपीति । शरीरनाशरूपोत्क्रान्तिः स्थितस्याऽपि जीवस्योपपद्यत इति भावः ॥

## स्वात्मना चोत्तरयोः ॥ २–३–२१ ॥

उत्तरयोर्गत्यागत्योः स्वात्मनैव सम्पाद्यत्वा दणुरयमात्मा। यदुक्तम् ' महानज आत्मा ' इति तदीश्वरप्रकरणात्तेनद्विषयमिति वक्ष्यति । व्याप्त्या विश्वभुवनाभिभावित्वम् यदुक्तम् , तत्तु मलनिरोधानापगमप्रकटितशक्ति-मरीचिव्याप्तमुक्तजीवविषयम् । तस्मादणुरेवात्मा ॥

आशङ्क्य परिहरति–

## नाणुरतच्छ्रुतेरितिचे न्नेतराधिकारात् ॥ २–३–२२ ॥

' स वा एष महानज आत्मा ' इति श्रुते र्नाणुर्जीव इति चेत्–न, ' यस्यानुवित्तः प्रतिबुद्ध आत्मा ' इति परमेश्वराधिकारात् ॥

## स्वशब्दोन्मानाभ्याश्च ॥ २–३–२३ ॥

' एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' ॥ इति श्रुतावणुशब्दात् , ' आराग्रमात्रो ह्यवरोऽपि दृष्टः '

---

चशब्द मवधारणार्थ मभिप्रेत्यव्याचष्ट–उत्तरयो रिति । उत्तरयोः गत्यागत्यो र्गमनागमनयो रित्यर्थः । तयोः स्वात्मना च निजस्वरूपेणैव सम्पाद्यत्वाऽदिति शेषः । अणु रयमात्मा न विभुः । वक्ष्यतीति । उत्तरसूत्र इतिशेषः । शक्तिमरीचिव्याप्तेति । मुक्तस्य धर्मभूतज्ञानस्य प्रभया सकलजगद्व्यापकत्वम् "प्रदीपवदावेश " इति ब्र॥ ४–४–१९ सूत्रे वक्ष्यते । तद्विषयमित्यर्थः । "बुद्धे रात्मा महान्पर" इत्युक्तम् । महत्त्वन्तु प्रकृतेन्द्रियादि नियन्तृत्वरूपप्राधान्यपरम् न विभुत्वप्रतिपादकम् । अन्यथा उक्तवक्ष्यमाणबहुश्रुतिविरोध-प्रसङ्गा दिति भावः ॥

अतच्छ्रुतेः– अणुत्वविरुद्धविभुत्वबोधिन्याः "स वा एष महानज आत्मेति " श्रुते रणु र्नभवतीतिचे न्न । तस्याश्श्रुतेः । इतराधिकारात्–जीवेतरपरमेश्वरविषयत्वेन तया जीवस्य विभुत्वाऽसिद्धे रित्यर्थः ॥

इत्युन्मानाच्च अणुरात्मा। अणुसदृशम् वस्तूदाहृत्य तन्मानत्वप्रदर्श मुन्मानम् ॥

अणुत्वेऽस्य सकलदेहव्यापिवेदनानुभवः कुत इत्यत आह ॥

## अविरोध श्चन्दनवत् ॥ २—३—२४ ॥

यथा चन्दनबिन्दुरेकदेशस्थोऽपि सकलदेहव्यापि सुखं जनयति तद्वदविरोधः॥ पुनराशङ्क्य परिहरति ॥

## अवस्थिति वैशेष्या दिति चे न्नाभ्युपगमाद्धृदि हि ॥ २—३—२५ ॥

---

ननु "योऽयम् विज्ञानमयः प्राणे ष्विति" जीवमेव प्रस्तुत्य "स वा एष महा नित्युक्ततया प्रकरणा त्तया जीवस्यैव विभुत्वम् सिध्यतीत्याशङ्क्याऽह— "यस्यानुवि इति। तत्रोपक्रमे जीवस्य प्रस्तुतत्वेऽपि मध्ये यस्यानुवित्त इत्यादिना परमेश्वरस्यापि प्रति पादिततया "स वा एष महा" नित्यादिवाक्यम् परमेश्वरसम्बन्ध्येवेत्यर्थः । "प्रतिबु आत्मा"—प्राज्ञः परमेश्वरः यस्यानुवित्तः—श्रवणमननादिभिः प्राप्त इत्यर्थः । तत्र जीवर प्रस्तुतत्वेऽपि परमेश्वरस्यापि प्रतिपादितत्वा त्तत्परमेवेति भावः ॥

ननु तत्र जीवस्य प्रस्तुतत्वेऽपि "स वा एष महा" नित्युक्तेः परमेश्वरपरत्वनयनर किम्बीज मित्याशङ्क्य अणुत्वश्रुतिबाहुल्यम् तद्बीजमिति प्रतिपादनपरम् सूत्रम् ॥

एषोऽणु रात्मेति। अणुत्वप्रतिपादको अणुरितिशब्दस्स्वशब्दः । तेन उन्माने चेत्यर्थः । आराग्रम्—चर्मभेदिसूच्यग्रम् । अवरो—जीवः ॥

तद्वदविरोध इति । एकदेशस्थस्यापि व्यापिकार्यजनकत्वम् दृष्टम् । नच दृष्टे कापि ह्यनुपपत्ति रस्तीतिभावः ॥

ननु शरीरैकदेशस्थस्यापि हरिचन्दनबिन्दो स्सर्वाङ्गीणसुखानुभवहेतुत्वम् दृष्टम् सर्वशरीरव्यापिन स्त्वगिन्द्रियस्यापि तद्दृष्टम्॥ उभयविधदृष्टान्तसत्त्वे हरिचन्दनदृष्टान्तस्यैवाणुत्वे किम्नियामक मित्याशङ्कानिराकरणार्थत्वेनोत्तरसूत्र मवतारयति ॥

पुनराशङ्क्येति—

देशविशेषस्थिति श्चन्दनस्यास्तीतिचेत् — न, आत्मनोऽपि तदभ्युपगमात्, 'हृदि ह्येष आत्मा' 'योऽपि विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' इति श्रुतेः। इति मतान्तरम् ॥

स्वमतमाह—

गुणाद्वाऽऽलोकवत् ॥ २–३–२६ ॥

आत्मा स्वगुणेन ज्ञानेन सकलदेहम् व्याप्यानुभवति । यथा मणिः स्वकीयेन तेजसा सन्निहितम् व्याप्य प्रकाशयति । तस्मादविरोधः ॥

ज्ञानात्मनोर्व्यतिरेको नास्तीत्यत्राह—

---

देशविशेषस्थिति रिति । चन्दनबिन्द्वादे र्देहप्रदेशविशेषस्थितिविशेषा त्सकलदेहव्यापिसुखजनकत्वम् युज्यते। आत्मन स्तदभावा न्न युज्यत इतिचे न्न । तदभ्युपगमा दात्मनोऽपि देहैकदेशवर्तित्वाऽभ्युपगमात् । "हृदि ह्येष आत्मा" इत्यादिश्रुते र्देहैकदेशवर्तित्व मिष्यत इत्यर्थः ॥

मतान्तरमि त्यनेन एतदस्वारस्यम् द्योत्यते । सावयवस्य चन्दनबिन्दो स्सूक्ष्मावयव प्रसरणेन सकलदेहव्याप्त्या सर्वाङ्गीणसुखानुभवजनकत्वम् युक्तम् । न त्वणो र्जीवस्याऽवयवाभा वात् । अवयवव्याप्त्या सकलशरीरसुखानुभवजनकत्वम् वा कायव्यूहे बहुशरीरव्यापकत्वम् वा युक्तमिति ॥

आत्मा स्वगुणेनज्ञानेन सकलदेहम् व्याप्याऽनुभवति । आलोकेनेवाऽऽलोकवत् यथा मणि रालोकेन वस्त्वन्तरम् व्याप्य प्रकाशयतीत्यर्थः । ननु जीवा दतिरिक्तम् धर्मज्ञानम् स्या त्तर्हि प्रदीपस्य प्रभया प्रासादोदरव्याप्तिवत् जीवस्य ज्ञानेन सर्वशरीरव्याप्ति स्सम्भवे त्तदेव नास्ति कथम् युज्यत इति शङ्कानिराकरणार्थत्वेनोत्तरसूत्र मवतारयति— ज्ञानात्मनो रिति ॥

## व्यतिरेको गन्धवत्तथा हि दर्शयति ॥ २–३–२७ ॥

गन्धवती पृथिवीतिवत् जानामीति गुणत्वेनोपलब्धेर्ज्ञानात्मानोः व्यतिरेकोऽस्ति। दर्शयति च श्रुतिर्व्यतिरेकम् 'जानात्येवायम् पुरुषः' इति ॥

## पृथगुपदेशात् ॥ २—३—२८ ॥

आत्मनः पृथगुपदिश्यते ज्ञानम्। 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति ॥ एवम् नित्यज्ञानगुणक आत्मा सिद्धः। एवम् ज्ञानगुणकत्वेऽप्यात्मनः कथम् ज्ञानमात्रत्वव्यपदेश इत्यत आह–

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २–३–२९ ॥

ज्ञानगुणसारत्वादात्मनो ज्ञानव्यपदेशः, न ज्ञानमात्रत्वात्। यथा प्राज्ञस्य विपश्चितोऽपि 'सत्यम् ज्ञान' मिति। ततो ज्ञानमात्रत्वव्यपदेशे दोषो न भवत्यात्मन इति ॥

पुनरुपपत्तिमाह–

---

गन्धवतीति। गुणत्वेन व्यपदिश्यमानस्य गन्धस्य पृथिव्या यथा व्यतिरेकस्तथा गुणस्य ज्ञानस्याऽपि जीवाद्व्यतिरेकः। तथाहि–जानात्येवाऽयम् पुरुष इति ज्ञानगुणस्य व्यतिरेकम् दर्शयतीत्यर्थः ॥

आत्मनइति। प्रज्ञया शरीर मारुह्य "न विज्ञातुर्विज्ञाते" रित्यादिश्रुतिभिः। विज्ञानमात्मनः पृथगुपदिश्यतइत्यर्थः। ननु जीवस्य ज्ञानगुणकत्वे "विज्ञानम् यज्ञम् तनुत" इत्यादिना ज्ञानमात्रत्वव्यपदेशः कथ मुपपद्यत इत्याशङ्कानिराकरणार्थ मुत्तरसूत्रद्वय मित्यवतारयति–एव मित्यादिना ॥

यत आत्मनो ज्ञानगुणः कर्तृत्वादिनिर्वाहकतया सारभूतस्तत स्तेनगुणेन तद्व्यपदेशः। दृष्टो हि ब्रह्मणो हि सारभूतेन गुणेन व्यपदेश इत्यर्थः। वस्तुतस्तु "सत्यम् ज्ञान" मित्य

## यावदात्मभावित्वाच्च न दोष स्तद्दर्शनात् ॥ २-३-३० ॥

आत्मस्वरूपानुबन्धित्वात् ज्ञानस्य, तेन व्यपदेशे न दोषः। स्वरूपानुबन्धिधर्मत्वेन गोत्वादिना खण्डादेर्गौरित्यादिव्यपदेशो दृश्यते। अतः स्वरूपानुबन्धित्वाज्ज्ञानधर्मस्य तद्व्यपदेशः॥

सुषुप्त्यादि ष्वसतो ज्ञानस्य यावदात्मभावित्वम् कथमित्यत आह—

## पुंस्त्ववदिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ २-३-३१ ॥

सुषुप्त्यादिषु सतो ज्ञानस्यानभिव्यक्तस्याऽपि जागरितादावभिव्यक्ति सम्भवात् स्वरूपानुबन्ध्येव ज्ञानम्, यथा पुंस्त्वासाधरणसप्तमधातो र्बाल्येऽपि सतो युवत्वेऽभिव्यक्तिः। ततो ज्ञानस्यात्मस्वरूपानुबन्धित्वे न दोषः॥

आत्मनो ज्ञातृत्वाणुत्वप्रतिपादनप्रयोजनमाह—

---

न्तोदात्तेन चित्स्वरेण मत्वर्थीयाच्प्रत्ययान्ततया ज्ञानशब्दो ज्ञानवत्पर एव। तथाऽपि ज्ञानमात्रपरत्वग्रहणेऽपि तस्य प्रकृते नकाचि दनुपपत्ति रिति तदुदाहृतम्॥

यावदात्मभावित्वाज्ज्ञानस्य आत्मस्वरूपानुबन्धित्वा त्तेनशब्देन व्यपदेशो नदुष्यत इत्यर्थः। चकारेण ज्ञानव दात्मनोऽपि स्वप्रकाशत्वेन ज्ञानशब्देन व्यपदेशो युक्त इत्यर्थः। तद्दर्शना द्गोत्वादीनाम् स्वरूपानुबन्धिधर्मत्वेन खण्डादिषु व्यक्तिषु गौरित्यादिव्यवहारदर्शना दित्यर्थः। लाक्षणिकत्वेन पूर्वनिर्वाहः। अयन्तु मुख्यत्वेनेतिविशेषः। पूर्वसूत्रोक्तहे त्वाक्षेपकत्वे नोत्तरसूत्र मवतारयति—सुषुप्त्यादि ष्विति॥

ननु ज्ञानस्य स्वरूपानुबन्धिधर्मत्वे तत्सुषुप्त्या व प्यनुवर्त्येत। तत्र तस्याऽभावा त्स्वरूपानुबन्धिधर्मत्वम् नयुक्त मितिचे न्न। यथा वीर्यरूपस्य पुंस्त्वधातो र्बाल्ये विद्यमानस्यैव युवत्वेऽभिव्यक्ति स्तथा सुषुप्तौ सतएव जागरादिष्वभिव्यक्तत्वात्। "नहि द्रष्टु र्दृष्टे" रिति जीवस्वरूपानुबन्धित्वेन प्रतिपन्नस्य धर्मज्ञानस्य सुषुप्तौ बाह्यान्तरसकलेन्द्रियव्यापारोपरमेण विषयावभासाऽभावा दभिव्यक्ति र्नास्तीति भावः। तस्मा ज्ज्ञानस्याऽऽत्मस्वरूपानुबन्धिधर्मत्व

# नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा

॥ २–३–३२ ॥

अन्यथा ज्ञप्तिमात्रसर्वगतात्मपक्षे तावन्नित्यवत् सर्वदोपलब्धिः स्यात्, सङ्कोचाभावात् । विद्यमानाया अनुपलब्धेरपि स एव हेतुरिति

मविचल मित्याशयः । उत्तरसूत्रेण जीवस्य ज्ञानरूपतया आगन्तुकज्ञानरूपतया वा सर्वगतत्वाऽभ्युपगमे दूषण मुच्यते । तदुक्तं स्वमते तद्दूषणाऽप्रसङ्गरूपप्रयोजने पर्यवस्यतीत्याशयेन स्वमत प्रयोजनतयोत्तरसूत्र मवतारयति— आत्मन इति ॥

"आत्मा शरीरस्यान्त रुपलभ्यते ततो बहि र्नोपलभ्यत इति तत्र देह मिहैवास्मि सदने जानान" इति सार्वलौकिकानुभवसाक्षिकम्, नान्यथाकर्तुम् शक्यम् । तदिदम् पक्षद्वयेऽपि नोपपद्यते । तथाहि— "ज्ञानरूप स्सर्वगत आत्मे"ति पक्षे स उपलभ्यैकस्वभावः ? उताऽनुपलभ्यैकस्वभावः? उभयस्वभावो वा? आद्ये सर्वत्र तस्योपलब्धि स्स्यात् । द्वितीये सर्वत्राऽनुपलब्धि र्भवेत् । तृतीये सर्वत्र तस्योपलब्ध्यनुपलब्धी स्याताम् । देह स्याऽन्त रुपलभ्यस्वभाव स्ततो बहि रनुपलभ्यस्वभाव इति व्यवस्था तु न सम्भवं देव । न ह्येकस्य क्वचि दंशे स्वप्रकाशत्व मन्यत्राऽस्वप्रकाशत्व ञ्चेत्युपपद्यते । आगन्तुकज्ञानसर्वगतात्मपक्षेऽप्येवमेव विकल्पत्रयेऽपि दोषो दुर्वारः ॥

ननु शरीर स्यान्तर्ज्ञानहेतूनाम् मनस्संयोगादीनाम् विद्यमानत्वा त्तत्रैवाऽहमि त्युपलब्धि र्न बहिरिति व्यवस्थोपपद्यत इति चे न्न स्वशरीरा द्बहिरपि सर्वगते स्वात्मनि मनोऽन्तरसंयोगस्य सम्भावितत्वात् ।

न च स्वादृष्टाकृष्टस्यैव मनस्संयोगस्य स्वज्ञानहेतुत्व मिति व्यवस्था कल्प्यत इति वाच्यम् । सर्वात्मसन्निधावुत्पद्यमानाना मदृष्टानाम् साधारण्यस्याऽवार्यत्वा दिति सूत्रस्यार्थम् वर्णयति—अन्यथेति । पूर्वोक्त मिति । सङ्कोचविकासवन्नित्यज्ञानवा नणुर्जीव इति प्रागुक्त मित्यर्थः ॥

* इद मधिकरणम् शुद्धाद्वैतवादिनाम् पक्षे नसङ्गच्छते । प्रकृते महत्त्व प्रतिकूलस्याऽणुत्वस्य जीवे निर्धारितत्वात् ।

न च अणुत्वेन पूर्वपक्षम् कृत्वा तद्गुणसारत्वा दिति महत्त्वेन सिद्धान्तित मिति शङ्क्यम् । तस्य महत्त्वप्रतिपादकत्वाऽभावात् । तथाहि—कथ मस्यसूत्रस्य प्रवृत्ति रिति चिन्त्यते ।

सापि सर्वदा स्यात् । आगन्तुकज्ञानसर्वगतात्मपक्षेऽपि स एव दोषः, सर्वात्मनाम् सर्वगतत्वेन ज्ञानहेतूनाम् मनस्संयोगादीनाम् सर्वसाधारणत्वात् ।

---

किं जीवस्य ज्ञानगुणकत्वे ज्ञानाभेदव्यपदेशस्य कागति रित्याकाङ्क्षाया मिदम् प्रवृत्तम् ? उत जीवस्य महत्त्वसिद्धे अणुत्वादिव्यपदेशस्य कागति रित्याकाङ्क्षाया मिदम् प्रवृत्तम् ? अत्र ज्ञानाभेदव्यपदेशस्य कागति रित्याकाङ्क्षाया मिदम्प्रवृत्त मित्येव युक्तम् ॥

तथाच—"उत्क्रान्तिगत्यागतीना मि" ति "स्वात्मनाचोत्तरयोरि" ति च जीव स्याणुत्वे साधिते "स वा एष महानज आत्मे"ति महत्त्वश्रुते र्नाणुत्वमित्याशङ्क्य महत्त्वश्रुतेः ब्रह्मविषयत्वा न्नाणुत्वविरोध इति "नाणु रतच्छ्रुते रिति चेन्नेतराधिकारा" दित्युक्त्वा पुनश्च "स्वशब्दोन्मानाभ्याञ्च" ति चाणुत्वमेव स्थिरीकृत्य जीवस्याऽणुत्वे कथम् सकलशरीर-व्यापिकार्य मिति शङ्कायां मविरोध श्चन्दनव दिति चन्दनबिन्दो श्शरीरैकदेशस्थस्याऽपि सकलशरीरव्याप्याह्लादकारित्ववत् जीवस्याऽप्युपपद्यत इत्युक्त्वा पुनरपि चन्दनबिन्दो रेकदेशस्थत्वस्य प्रत्यक्षसिद्धत्वा त्तत्र तथा भवतु । इह तु जीवस्य एकदेशस्थत्वे प्रमाणाभावा त्सकलशरीरव्यापि कार्यानुरोधेन व्यापित्वमेव किम् नस्या दित्याशङ्क्य "अवस्थितिवैशेष्या दिति चे न्नाभ्युपगमा द्धृदि ही" ति सूत्रेण जीवस्याऽपि "स वा एष आत्मा हृदी"त्यादिश्रुत्या शरीरैकदेशहृदयस्थत्वस्य प्रमाणसिद्धत्वा च्चन्दनबिन्दुन्यायेनैव कार्यकरत्वम् युज्यत इत्युपपाद्य तत्राऽपि "गुणाद्वाऽऽलोकव दि"त्यणो रपि जीवस्य चैतन्यगुणव्याप्त्या व्याप्यकार्यकरत्व मुपपाद्य तदनन्तरम् "ननु कथम् गुणस्य गुणिव्यतिरेक इति शङ्कायाम् "व्यतिरेको गन्धव दि"ति गन्धवत् चैतन्यस्य व्यतिरेकत्व मुपपाद्य "अथ चैतन्यस्य गुणत्वे स्या देत देवम् नतु चैतन्यम् गुणः । किन्तु स्वरूपमेव । तथाच—तस्य व्यापित्वे आत्मनएव व्यापित्व मायात मित्याशङ्कायाम्—सू॥ "पृथगुपदेशादि"ति सूत्रेण प्रज्ञया शरीरम् समारुह्येति ज्ञानात्मनो र्भेदोपदेशा न्न स्वरूपम् ज्ञानम् किन्तु गुणएवेति राद्धान्तितम् । यद्येवम् विज्ञानस्य गुणत्वे "विज्ञानम् यज्ञम् तनुत"इति कथ मात्मनि ज्ञानाभेदव्यपदेश इत्याशङ्कायां मिदम् प्रवृत्तम् सू॥ "तद्गुणसारत्वा त्तद्व्यपदेशः प्राज्ञवदि"ति । अत्र तच्छब्दद्वयेन पूर्वप्रकृतम् ज्ञानमेव गृह्यते सर्वनाम्नाम् प्रकृतपरामर्शित्वात् । सचाऽसौ गुणश्चेति कर्मधारयः । तद्गुण स्सारो यस्य स तद्गुणसारः । तस्य भाव स्तत्त्वम् । तस्मा त्तद्व्यपदेशः । लवणगुणसारस्य सैन्धवस्य लवणमिति व्यपदेशवत् । प्राज्ञवदिति । सर्वज्ञ स्येश्वरस्य ज्ञानगुणसारत्वा ज्ज्ञानमिति व्यपदेशः । "प्रज्ञानम् ब्रह्मे"त्यादौ तद्वदित्ययमेवार्थो युक्तः । तस्मा ज्जीवस्य ज्ञानगुणकत्वे ज्ञानाभेदव्यपदेशस्य कागति रित्यशङ्कायां मिदम् प्रवृत्त मिति सिद्धम् ॥

अदृष्टहेतूनामपि तथात्वात् तेनापि न नियमः। अथोपलब्ध्यनुपलब्ध्यो विरोधादुपलब्धेरेव हेतवः स्युः, अनुपलब्धेरेव वा। तथा सति अन्यतर

---

यदि पूर्वं जीवस्य महत्त्वे प्रतिज्ञाते प्रमाणं चोपन्यस्ते ग्ध्यात्मा महान् स्तर्हि तस्याऽणुत्वव्यपदेशस्य कागति रित्याशङ्काभवे नच पूर्वंआत्मनो महत्त्वम् प्रतिज्ञातम् न प्रमाणञ्चोपन्यस्तम् कथ मकस्मा त्तदाकाङ्क्षा भवेत् ॥

नच ब्रह्मणो महत्त्वा त्तदभेदा ज्जीवस्य महत्त्व मुक्तप्राय मेवेति शङ्क्यम्। य द्येवम् " नाणुरतच्छ्रुते रितिचे न्नेतराधिकारा" दितिसूत्र मनुपपन्नमेव स्यात्। तद्धि सूत्रम् "स वा एष महानज आत्मे" ति श्रुत्या जीवस्य महत्त्वप्रतीते र्नाणुत्व मिति शङ्कायां म्महत्त्वश्रुते र्ब्रह्मादिपयत्वा न्न जीवस्य विभुत्वमिति प्रतिपादनाय प्रवृत्तम्। यदि हि ब्रह्ममहत्त्वेनैव जीव महत्त्वम् सिध्ये त्तर्हि कथम् नेतराधिकारा दित्यनेन जीवमहत्त्वशङ्काया परिहारः कुतो भवेत्। तस्मा त्पूर्वम् जीवे महत्त्वप्रतिज्ञायाः प्रमाणस्यचानुपन्यासा दणुत्वव्यपदेशस्य कागतिरित्याशङ्काया मिदम् सूत्रम् प्रवृत्त मित्ययुक्तमेव।

ननु अद्वैतसिद्धिकारैः "स वा एष महानज आत्मे"ति श्रुतिप्रामाण्येन जीवमहत्त्वम् समर्थित मितिचे न्न– " नाणु रतच्छ्रुते " रिति सूत्रकृतैव प्रकृतश्रुते र्ब्रह्ममहत्त्वप्रतिपादकत्व निर्धारणेन जीवविषयत्वभ्रान्ते र्निर्धूतत्वात्।

सूत्रार्थोऽपि तन्मतेऽसङ्गतएव। एवम् हि विमते सूत्रार्थः–प्रथमेन तच्छब्देन अन्तःकरणम् गृह्यते। तस्य गुण स्तद्गुण इति षष्ठीसमासश्च। द्वितीयेन तच्छब्देन अणुत्वादिकम् परामृश्यते। तथाचान्तःकरणगुणसारत्वा त्तद्व्यपदेशः प्राज्ञव दिति। नहि प्रथमेन तच्छब्देनान्तःकरणग्रहणम् युक्तम् तस्याऽप्रकृतत्वात्। प्रकृतवचनत्वा त्तच्छब्दस्य षष्ठीसमासे लुप्तषष्ठ्यर्थे पूर्वपदस्य लक्षणाश्रयणम् दोषः। अन्तःकरणगुणसारत्वादि त्यसिद्धश्च हेतुः। नहि जीवस्यान्तःकरणोपाधित्वम् लोकवेदाभ्याम् सिद्धम्। न केनचि दभ्युपगम्यते। नैव दृष्टान्ते प्राज्ञे अन्तःकरणगुणोपाधिकत्व मस्ति। नाऽपि प्राज्ञमहत्त्वेन जीवमहत्त्व मभ्युपगच्छतः प्राज्ञजीवयो र्दृष्टान्तदार्ष्टान्तिकभावो वा सम्भवति। उत्तरसूत्रम प्यस्मत्पक्षानुगुणमेव। "यावदात्मभावित्वाच्च नदोष स्तद्दर्शना"दिति। ज्ञानस्य मुक्ता वभ्युपगमेन यावदात्मभावित्वस्य तत्र सम्भवात् ॥

नच सुषुप्त्यादौ ज्ञानाभावा त्कथम् यावदात्मभावित्व मिति वाच्यम्। पुंस्त्वादिव त्वस्य सतोऽभिव्यक्तियोगादिति करणात्मना सतएव कार्यात्मना आप्रबोधा दनभिव्यक्ते.

नियमः स्यात्। अतः पूर्वोक्तमेव समीचीनम् ॥

इति उत्क्रान्त्यधिकरणम्

---

अथ कर्त्रधिकरणम् १०

## कर्ता शास्त्रार्थवत्त्वात् ॥ २-३-३३ ॥

पूर्वत्र ज्ञातृत्वमणुत्वञ्च निरूपित मात्मनः । कर्तृत्वमस्ति न वेति सन्देहः । कूटस्थस्यात्मनः कर्तृत्वम् न सम्भवति । बुद्धे र्वा कर्तृत्वमुचितम्, प्रकृते र्वा । तदध्यासात् स्वस्मिन्नारोप्य कर्तेव प्रतिभाति । तस्मादात्मनः कर्तृत्वमनुपपन्नमिति पूर्वः पक्षः ॥

---

परिहृतत्वात्। त्वत्पक्षे त्वन्तःकरणस्य मुक्तौ निरन्वयनाशेन यावदात्मभावित्वासम्भवएव। यावत्संसार्यात्मभावित्वा दिति सङ्कोचस्य स्वयमेव दर्शितत्वात्। तथा—नित्योपलब्ध्यनुपलब्धि प्रसङ्गोऽन्यतरनियमोवाऽन्यथेति विपक्षबाधकसूत्रम प्यस्मत्पक्षानुगुणमेव।

तथाहि—आत्मनोऽणुत्वम् ज्ञानगुणत्वञ्च साधितम्। तदनङ्गीकारे आत्मनो विभुत्वे ज्ञानस्वरूपत्वे च विभुना आत्मचैतन्येन विषयस्य नित्यसम्बन्धा न्नित्योपलब्ध्यादिप्रसङ्ग इति। त्वत्पक्षे त्वन्तःकरणानङ्गीकारे आत्मेन्द्रियविषयाणाम् सन्निधाने सति नित्योपलब्धि स्स्यादिति सङ्कोचितत्वात्। तस्मा दणुत्वमेव सूत्रार्थइति महत्त्वप्रतिपादनम् जीवस्य सूत्रविरुद्धमेव।

ननु "सू॥ तद्गुणसारत्वा त्तु तद्व्यपदेशः" इत्यत्र तुशब्देन पूर्वसूत्रैः प्रतिपादितम् जीवाणुत्वम् प्रत्याख्यात मितिचे त्तदसत्। कण्ठरवेण नवसूत्रचानिर्धारितस्याऽप्यर्थस्य तुशब्देन प्रत्याख्यातु मनुचितत्वात्। परकीया त्पुरातने भाष्ये नीलकण्ठीये प्रकृतसूत्रे–तुशब्दस्यैवाऽभावेन वैयासिकसिद्धान्तव्यावर्तनपरैरेव तुशब्दस्य प्रक्षिप्तत्वावगमाच्च।

एवञ्च वैयासिकसमयपूर्वपक्षभूतएव जीवमहत्त्ववादः परै स्स्वीकृतइति सर्वमनवद्यम् ॥

इति उत्क्रान्त्यधिकरणम्

---

सिद्धान्तस्तु—आत्मा कर्तैव, शास्त्रार्थवत्त्वात् । अन्यथा कुर्यान्नकुर्यादिति शास्त्रस्य वैयर्थ्यम् स्यात् ॥

## उपादाना द्विहारोपदेशाच्च ॥ २–३–३४ ॥

' एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामम् परिवर्तते' इत्युपादानविहारोपदेशाभ्या मयम् कर्तैव ॥

---

### अथ कर्त्रधिकरणम् १०

आगन्तुकज्ञानसर्वगतात्मपक्षे सर्वात्मसन्निधा वुत्पाद्यमानाना मदृष्टादीनां सर्वसाधारण्या दुपलब्ध्यनियम उक्तः पूर्वाऽधिकरणे । तथैव प्रकृतेः कर्तृत्वे तस्या स्सर्वसाधारणत्वा त्कर्तृत्वस्याऽप्यनियम स्स्यादित्युच्यत इति दृष्टान्तसङ्गतिप्रदर्शनाय वृत्त मनुकीर्तयति— पूर्वमिति । श्रुतिविप्रतिपत्त्या संशयम् दर्शयति— कर्तृत्वमिति । कूटस्थस्येति । आत्मनः कूटस्थत्वम् " असङ्गो ह्ययम् पुरुष" इति श्रुत्या सामान्यतः प्रतिपन्नम् । विशिष्य च " य एनं वेत्ति हन्तारं यश्चैनम् मन्यते हतम् । उभौ तौ न विजानीतो नायम्हन्ति नहन्यत " इति स्मृत्या निगदितम् ।

नन्वात्मनः कूटस्थत्वे कथ महं करोमीति प्रतिभासः इत्याशङ्क्य साङ्ख्यमर्यादया प्रकृतिकार्यबुद्धिधर्मस्य प्रकृतिधर्मस्य वा कर्तृत्वस्याध्यासरूपतया तदुपपादयति—बुद्धेर्वेति । शास्त्रमपि भोक्तु रात्मन स्तथाभूतमेव कर्तृत्वमपेक्ष्य प्रवर्तत इति भावः ।

अन्यथेति । बुद्धेः प्रकृते र्वा कर्तृत्वे " कुर्या न्नकुर्या"दिति नियुञ्जानयो र्विधिनिषेधशास्त्रयो र्वैयर्थ्यम् स्यात् । कर्ताहि नियुज्यते । भोक्तैव च कर्ता भवितुमर्हति । शास्त्रफलं प्रयोक्तरीतिन्यायात् । नचाऽचेतनाया बुद्धेः प्रकृते र्वा भोक्तृत्व मस्ति । अपिच—शास्त्रेण कर्ता बोधजननद्वारा नियज्युते । नचाऽचेतनयो र्बोधनीयत्व मस्ति । अतो भोक्तृत्वात् बोधनीय त्वाच्च आत्मैव शास्त्रैर्नियुज्यतइति सएव करोति युक्तम् । असङ्गत्वश्रुतिरात्मन स्स्वयमेव ज्ञान कृत्यादिपरिणामित्वाभावविषया भविष्यति । "य एनं वेत्ति हन्तार"मित्यादिस्मृतिस्तु शरीरातिरिक्तस्यात्मनो हननायोग्यत्वेन भ्रमरूप स्तद्धन्तृत्वाभिमान इत्येतद्विषयतयोपपद्यत इति भावः ॥

एवमेवैष इति । स यथा महाराज इति प्रकृत्य " एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे परिवर्तत, इत्यत्र " स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामम्

यदुक्तम् बुद्धिप्रकृत्योरेव कर्तृत्वमिति तत्र बुद्धेः कर्तृत्वपक्षम दूषयति-

## व्यपदेशाच्च क्रियायाम् न चे न्निर्देशविपर्ययः

॥ २—३—३५ ॥

'विज्ञानम् यज्ञम् तनुते' इत्यादिना यज्ञादौ कर्तृत्वव्यपदेशाच्चात्मैव कर्ता। विज्ञानशब्देन बुद्धेः व्यपदेशः, नात्मन इति चेत् न, तथा सति 'विज्ञानेन' इति निर्देशविपर्ययः स्यात्। अन्यत्र हि बुद्धिविवक्षायाम् विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते 'तदेषाम् प्राणानाम् विज्ञानेन विज्ञानमादाय' इति। अतो बुद्धेः करणत्वात् कर्तृत्वम् नास्तीति॥

प्रकृतेः कर्तृत्वपक्षम् दूषयति–

## उपलब्धिवदनियमः ॥ २—३—३६ ॥

प्रकृतेः कर्तृत्वे तस्याः, सर्वसाधारणत्वेन पूर्वोक्तोपलब्ध्यनियमवत् फला-नियमः स्यात्॥

---

परिवर्तत इति पूर्ववाक्यनिर्दिष्टः दृष्टान्तः। अत्र गृहीत्वेत्युक्त मिन्द्रियाणाम् ग्रहण मुपादानम् "यथाकामम् परिवर्तत इत्युक्त स्स्वामसञ्चारो विहारः। दूषयतीति। आत्मनः कर्तृत्वे प्रमाण मुपन्यस्य तस्य बुद्धिविषयत्वशङ्कोद्भावनेन तस्याः कर्तृत्वम् दूषयतीत्यर्थः॥

विज्ञानमिति। "विज्ञानम् यज्ञम् तनुते। कर्माणि तनुतेऽपि च" इत्यात्मनो वैदिक लौकिकक्रियाकर्तृत्व माम्नातम्। तस्मा दात्मैव कर्तेत्यर्थः। निराकर्तु माशङ्कते—विज्ञानशब्देनेति। विज्ञानशब्देन बुद्धिरेव व्यपदिश्यते न ह्यात्मेतिशङ्कार्थः। निराकरोति—तथासतीति।

यदि विज्ञानशब्देन बुद्धि र्व्यपदिश्येत तर्हि विज्ञानेनेति करणार्थकतृतीयाविभक्त्यन्तेनैव भाव्यम्। "प्राणानाम् विज्ञानेन विज्ञानमादाय" त्यन्यत्र विज्ञानशब्दस्य बुद्धिपरत्वे करणविभक्ते श्श्रूयमाणत्वा दित्यर्थः। स्वप्नदशाया मेतेषाम् प्राणानाम् चक्षुरादीनाम् विज्ञानम्= ग्रहणशक्तिम् विज्ञानेन = बुद्ध्या गृहीत्वेति श्रुते रर्थः॥

## शक्तिविपर्ययात् ॥ २—३—३७ ॥

प्रकृतेः कर्तृत्वे कर्तुरेव भोक्तृत्वमिति सैव भोक्त्री स्यात्। ततश्चात्मनो भोक्तृत्वशक्तेर्विपर्ययो हानिः स्यात् ॥

## समाध्यभावाच्च ॥ २—३—३८ ॥

किञ्च। प्रकृतेरेव कर्तृत्वे प्रकृतेरन्योऽस्मीति समाध्यभावप्रसङ्गाच्च कर्ताऽऽत्मा ॥

## यथा च तक्षोभयथा ॥ २—३—३९ ॥

आत्मनः कर्तृत्वे इच्छायाम् करोति अन्यथा न करोत्यात्मेति व्यवस्था, यथा तक्षा स्वकार्ये तथेति। बुद्धेरेवेच्छासम्भवान्नाऽव्यवस्थेति चेत्—न।

प्रकृते रिति। यथा आत्मन स्सर्वगतत्वपक्षे अदृष्टमनस्संयोगादीनाम् सर्वसाधारणत्वात् उपलब्धे र्नियमाभावः प्रसक्त स्तथैव प्रकृतेरपि सर्वसाधारणत्वा त्तस्याः कर्तृत्वेऽभ्युपगम्यमाने कर्मफलत्याऽप्यनियमः प्रसज्येते त्यर्थः ॥

सैवेति। प्रकृतिरेवेत्यर्थः। ततश्चेति। प्रकृतेः भोक्तृत्वापत्त्या आत्मनः भोक्तृत्वशक्तेः विपर्ययो-हानि स्स्यात्। तस्मा दित्यर्थः। किञ्च बुद्धेरेव कर्तृत्वाभ्युपगमेन तस्याएव भोक्तृत्वापत्तौ तदतिरिक्तात्मसिद्धिश्च नस्यात्। अपिच करणभूतायाबुद्धेः कर्तृत्वाभ्युपगमे तस्याः करणशक्ति र्हीयेत। कर्तृशक्ति श्चापद्येत। शक्तस्याऽपि करणरहितस्य क्रियासु प्रवृत्त्यसम्भवा त्तस्याः करण मन्य त्कल्पनीयञ्च स्यात्। तस्मा द्बुद्धेः प्रकृते र्वा कर्तृत्वपक्षो नयुक्त इति भावः ॥

समाध्यभावा दिति। प्रकृतेः कर्तृत्वे समाधावपि सैव कर्त्री स्यात्। एवंसति प्रकृति पुरुषविवेकस्य समाधौ भाव्यत्वेन सा प्रकृते रन्यत्वेन स्वात्मानम् ध्यातुम् नशक्नोतीति समाधिरेव लुप्येते त्यर्थः ॥

आत्मनः कर्तृत्व इति। यथा तक्षा वास्यादिकरणसम्पन्नोऽपि स्वकार्यविषये इच्छायाम् सत्याम् करोति तस्याम् नसत्यान्तु नकरोतीति व्यवस्था। तथा आत्माऽपि स्वस्य कर्तृत्वे

चेतनधर्मत्वादिच्छायाः। तस्मादात्मनः कर्तृत्वम्, न बुद्धेर्नाऽपि प्रकृतेरिति निर्णयः॥

इति कर्त्रधिकरणम्

---

अथ परायत्ताऽधिकरणम् ११

## परात्तु तच्छ्रुतेः ॥ २—३—४० ॥

ज्ञातृत्वम् कर्तृत्वञ्च प्रतिपादितमात्मनः। तत् कर्तृत्वम् स्वायत्त मीश्वरायत्तम् वेति सन्देहः॥

स्वायत्तमिति प्राप्तम्। अन्यथा कर्मस्विष्टानिष्टरूपेषु व्यापारयन् जीव मीश्वरो वैषम्यादिदोषभाजनम् स्यात्। किञ्च-जीवस्य प्रवृत्ते

---

यदा इच्छा जायते तदा करोति तस्या अभावे नकरोतीति व्यवस्था सिध्यति। प्रकृतेः बुद्धे र्वा कर्तृत्वाभ्युपगमे तयो रचेतनत्वेन स्वेच्छायाअभावा द्व्यवस्था नसिद्ध्येत्।

अथ बुद्धेः प्रकृते र्वा भोगतदिच्छयो रङ्गीकारे तदतिरिक्तआत्मा नसिद्ध्येद् इति भावः।

* अत्र केवलाद्वैतवादिभि रेतत्सूत्र मात्मन औपाधिककर्तृत्वप्रतिपादकतया यद्विवरणम् कृत न्तदसत्। तथाहि—सूत्रे औपाधिकशब्दाभावात्। तद्दृष्टा औपाधिककर्तृत्वाऽभावेन तद्दृष्टान्तबलेनाऽप्यौपाधिककर्तृत्वाऽलाभाच्च। किञ्च जीवगतकर्तृत्व स्यौपाधिकत्वे स्वाभाविककर्तु रन्यस्याऽनुपलम्भाच्च। नच बुद्धेः स्वाभाविककर्तृत्व मस्तीति शङ्क्यम्। तस्याऽन्त करण मिति लोकवेदयोः करणतया प्रसिद्धायाः कर्तृत्वाऽसम्भवात्। उक्तम्हि सूत्रकृता सू॥ "शक्तिविपर्यया" दिति॥ अस्य सूत्रस्य परैरपि बुद्धेः कर्तृत्वासम्भवपरतयैव विवृतत्त्वा च्च। एवञ्चाऽत्र आत्मनः औपाधिककर्तृत्वप्रतिपादनपरतया कृतम् परेषाम् विवरणम् "कर्ता शास्त्रार्थवत्त्वा" दित्यादिना सूत्रकृता निर्धारितस्य सिद्धान्तस्य स्वसमयविरुद्धतया तन्निराचिकीर्षाकृतमेवेति वेदान्तार्थ परिष्कारे विस्तर इति च दिक्॥

इति कर्त्रधिकरणम्

---

रीश्वरायत्तत्वे तस्य कर्तृत्वाभावा द्विधिप्रतिषेधवैयर्थ्यञ्च स्यात्। तस्मा जीवस्य स्वायत्ता प्रवृत्तिः ॥

इति प्राप्ते ब्रूमः- परमेश्वरायत्तमेव जीवस्य कर्तृत्वम्, न स्वायत्तम्। 'य आत्मान मन्तरो यमयति' इति श्रुतेः ॥

यदुक्तमीश्वरस्य जीवम् प्रवर्तयतो वैषम्यादिकम्, अस्य च विधिप्रतिषेधवैयर्थ्यमिति, तत्राह-

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः

॥ २—३—४१ ॥

जीवः स्वेच्छया प्रवृत्तिनिवृत्तिहेतुम् करोति स्वकर्मपाकवशेन, जीवकृतप्रयत्नम् प्रवृत्तिनिवृत्तिहेतुमवेक्ष्य तदनुमतिदानेन परः प्रवर्तयतीति विधिनिषेधावैयर्थ्यम् निग्रहानुग्रहादिभ्योऽवगम्यते। यथा गुरुतरदारापि-हरणम् बालः प्रबलसहायः कुर्वन्नपि स्वप्रयत्ने विधिनिषेधयोग्यो भवति,

अथ परायत्ताऽधिकरणम् ११

कर्तृत्वे चिन्तिते तद्विशेष श्चिन्त्यतइति सङ्गति मभिप्रेत्य वृत्तानुकीर्तनम्। कर्तृत्वोपपादक तया ज्ञातृत्व मनूदितम्। तत्कर्तृत्व मिति। विधिनिषेधशास्त्राणा मन्तर्यामित्वश्रावणानाञ्च विप्रतिपत्तिस्सन्देहबीजम्। वैयर्थ्य ञ्च स्यादिति। विधिनिषेधशास्त्रयो रवैयर्थ्यायहि प्रा गात्मनः कर्तृत्वम् समर्थितम्। तस्य कर्तृत्वस्य परायत्तत्वे तद्वैयर्थ्यम् तदवस्थमेव स्यादितिभावः।

ननु जीव स्स्वेच्छया कञ्चिद्यत्नम् करोति यदि तर्हि तत्र तस्यैव स्वातन्त्र्य मभ्युपगतम् स्या दित्याशङ्क्याह — स्वकर्मेति। स्वकर्मपाकवशेन या स्वेच्छा जाता तयेति योजना। तथाच — परमेश्वरकारितपूर्वकर्ममूलस्वेच्छाधीनेयत्ने परमेश्वराधीनत्वम् नहीयत इति भावः। पूर्वकर्माऽपि परमेश्वरकारितपूर्वकर्ममूलस्वेच्छाधीनमि त्यनादिः कर्मप्रवाह इत्यतो नाऽनवस्था दोषः। तदनुमतिदानेनेति। यथा द्वयो स्साधारणे धने परस्वत्वाऽपादन मन्यतरानुमति मन्तरेण नोपपद्यते। अथापीतरानुमति स्स्वेनैव कृतेति तत्फलम् स्वस्यैव भवति।

एवम् जीवः परमेश्वरसहायः प्रवर्तमानोऽपि स्वयम् विधिनिषेधयोग्यो भवति। अतो जीवकृतप्रयत्नापेक्षत्वात् कर्मसु जीवस्य प्रवर्तक ईश्वरो न वैषम्य-भाक्। तस्याऽपि स्वाधीनप्रवृत्तिसद्भावात् विधिनिषेधादिवैयर्थ्यञ्च न सम्भवतीति सिद्धम्॥

इति परायत्ताऽधिकरणम्

---

अथांशाऽधिकरणम् १२

## अंशो नानाव्यपदेशा दन्यथा चाऽपि दाशकितवादित्व मधीयत एके ॥ २–३–४२ ॥

नित्यो ज्ञाताणुः कर्ता परमेश्वरसाहाय्यापेक्षप्रवृत्ति र्जीव इति पूर्वत्र निरूपितम्। स इह परमेश्वर एव? किम्वा तदंशभूतः?॥

---

ननु प्रयत्नकारणेच्छाजनककर्मकारयितृत्वेन प्रयत्नमूलकारणभूत, ईश्वरो नाऽनुमन्तेति व्यपदेशार्हः। किन्तु प्रयोजयितेतिव्यपदेशार्ह इतिचे दुच्यते। यस्येच्छाम् विज्ञाय य स्तदिष्टम् निर्वर्तयितुम् प्रवर्तते तस्य प्रयोजयितेति व्यपदिश्यते। यथा राजा भृत्यस्य। न चेश्वरः पुरुषेच्छाम् विज्ञाय तदिष्टो याग इति तम् निर्वर्तयितुम् प्रवर्तते। किन्तु विधितः स्वेष्टसाधन मिति विज्ञाय पुरुषः प्रवर्तते। अतोऽत्र न प्रयोजयितृत्वव्यपदेशः कृतः। स्वरसोदितया स्वेच्छया प्रवर्तमानम्प्रति प्रवर्तकत्वा दनुमन्तृत्वव्यपदेशः कृतः। विधिनिषेधेति। एवम् स्वरसोदितस्वेच्छाधीनामेव जीवप्रवृत्तिम्प्रति परमेश्वरस्याऽपि कालाऽदृष्टादिव त्कारणत्वाऽभ्युपगमे विधिनिषेधयो र्नवैयर्थ्यम्। स्वेच्छाधीनप्रवृत्तिमतो नियोगार्हत्वात्। नाऽपि कोपप्रसादादिकृतलौकिकप्रवृत्तिनिवृत्त्यनुभवविरोध इति भावः। एवञ्च वैषम्यदोषोऽपि नप्रसज्यत इति दर्शय न्नधिकरणार्थ मुपसंहरति–अत इति। जीवेश्वरस्य स्वरूपैक्य मभ्युपगच्छताम् सर्वज्ञतया स्वानन्यत्वेनजीवान्जानत ईश्वरस्य सर्वप्रवृत्ति ष्वनुमन्तृत्वे हिताऽकरणाहितकरणदोषप्रसक्ति रनिवार्या। अत इदमधिकरणम् विरुद्धम्।

ननु जगत ईश्वरशरीरत्वपक्षेऽपि हिताकरणादिदोषः प्रसज्येतेतिचे न्न शरीरगतदोषाणाम् शरीरिण्यप्रसङ्गेनजीवगतदुःखादीनाम् परमेश्वरेऽप्रसक्तेः॥

इति परायत्ताऽधिकरणम्

इति संशये परमेश्वर इति पूर्वः पक्षः। परमेश्वर एव बहु. विधोपाधिवशा ज्जीवभावमुपगतो दृश्यते, यथैकमाकाशम् घटाद्युपाधिवशा न्नानाकारम् दृश्यते परिच्छिन्नञ्च ।तथा हि श्रुतिः — 'अयमात्मा ब्रह्म ' इति वदति। तस्मा दीश्वरएवाज्ञाना ज्जीवभावमुपगत इति ॥

सिद्धान्तस्तु जीवात्मा परमेश्वरस्यांशो मूर्त्येकदेश एव। 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ' ' य आत्मनि तिष्ठन् ' 'पृथगात्मानम् प्रेरितारञ्च मत्वा '॥ 'मायान्तु प्रकृतिम् विद्या न्मायिनन्तु महेश्वरम्। तस्यावयवभूतेन व्याप्तम् सर्वमिदम् जगत् '॥ इत्यादिषु नानाव्यपदेशात्। यदुक्तम् ' अयमात्मा ब्रह्म ' इत्यादिना ब्रह्मण एव जीवत्वमिति, तत्राह— अन्यथा ' तत्त्वमसि ' 'अयमात्मा ब्रह्म ' इत्यादिकाद्व्यपदेशात् तयोर्जीवब्रह्मणो र्व्याप्यव्यापक भावेनानन्यत्वम्। अपि च तथैवानन्यत्व मधीयत एके— 'ब्रह्म दाशा

## अथांशाऽधिकरणम् १२

सुबोधाय जीवप्रकरणे वृत्तमर्थ मनुवदन् सङ्गतिम् सूचयति—नित्य इति। यत्साहाय्यकमपेक्ष्य जीवः प्रवर्तत इति निरूपितम् सएव परमेश्वरः सत्येन मिथ्या-भूतेन वा उपाधिना युक्तः कल्पितभेदस्सन् जीव इति व्यवह्रियते ? उताऽन्तर्गणिकभेदे पारमार्थिकेसत्येव विशेषणत्वेन विशिष्टैकदेशतया परमेश्वरांशो जीवइति "अभेदश्रुते र्भेदश्रुतेश्च विप्रतिपत्तित स्संशयेसति पूर्वपक्षः—भेदाभेदश्रुत्यो रन्यतरस्याऽमुख्यार्थत्वे कल्पनीये लाघवा दभेदश्रुति र्मुख्यार्थेति भेदश्रुते र्घटाकाशादिभेदव्यपदेशवदमुख्यार्थत्वम् कल्प्यत इति प्राप्ते—सिद्धान्तः—जीवः परमेश्वरस्यांऽशः शरीरत्वेन विशिष्टैकदेश इत्यर्थः । नाना व्यपदेशात् " य आत्मनि तिष्ठ" न्नित्यादिश्रुतिषु भेदव्यपदेशात्। अन्यथा च व्यपदेशात्। "तत्त्वमस्यादि" श्रुति ष्वभेदेनाऽपि व्यपदेशात् । अपि चैके शाखिनः आथर्वणिकाः परमेश्वरस्यैव दाशकितवादित्व मधीयते— " ब्रह्मदाशा " इत्यादिना । एवम् जीवपरयो श्शरीरशरीरिभावकृतविशिष्टरूपत्वाऽभ्युपगमेन भेदाभेदश्रुत्यो रुभयोरपि मुख्यार्थत्वे समर्थनसम्भवे क्वचिदमुख्यार्थत्वाश्रायण मयुक्तम्। अभेदश्रुते र्मुख्यत्वाश्रायणे न केवलम् भेदश्रुतिविरोधमात्रम्। किन्तु " नाहम् सर्वज्ञ " इत्यादिप्रमाणाऽन्तरविरोधोऽपि दुर्वार इति।

ब्रह्म दासा ब्रह्मेमे कितवा उत' इत्यादिना ब्रह्मणोंऽशत्वेऽपि जीवस्य तद्व्याप्ततया तद्व्यपदेशो युक्तः, यथा वह्निना व्याप्तस्य काष्ठादे र्वह्नि व्यपदेशः। तथाऽपि हि तयोर्वह्निकाष्ठयोर्नभिदः। तस्मा ज्जीवो ब्रह्मणोंऽशभूत एव तत्स्वरूपम् प्रतिपद्यते। ब्रह्मणएवाज्ञाना ज्जीवभावकल्पने बहुश्रुतिविरोधादिदोषप्रसक्ति र्दुर्वारा ॥

## मन्त्रवर्णात् ॥ २-३-४३ ॥

'पादोस्य विश्वा भूतानि' इति मन्त्रवर्णाच्च ब्रह्मणोंऽश एव जीवः।

'मायान्तु प्रकृतिम् विद्या न्मायिनन्तु महेश्वरम्। तस्यावयव भूतेन व्याप्तम् सर्वमिदम् जगत्'॥ इति श्रुतिः प्रकृतित्वम् मायाया स्तद्विशिष्टत्वम् महेश्वरस्य तदवयवभूतत्वम् सर्वस्य जगतः प्रकटयति। ततो मायिनः परमेश्वरस्यावयवलेशः पुरुषः॥

## अपि च स्मर्यते ॥ २-३-४४ ॥

'आत्मा तस्याष्टमी मूर्तिः शिवस्य परमात्मनः। व्यापिकेतर-

---

भाष्ये व्याप्यव्यापकभावेनेत्य स्याऽयमर्थः। कायव्यूहवतः काया इव परमेश्वरस्य जीवा श्शरीरत्वेन व्याप्याः व्यापनीयाः। परमेश्वर स्तान् सर्वान् व्याप्नुवन् व्यापक इत्येवम् रूपेण व्याप्यव्यापकभावेनेति। यथा वह्निना व्याप्तस्येतिभाष्य स्याऽयमर्थः। शरीरशरीरिभावाभावेऽपि वह्निव्याप्तम् काष्ठम्निर्दिश्याऽयम् वह्निरिति निरूढव्यवहारो दृश्यते। इह शरीरशरीरिभावस्याऽपि सत्त्वा दयम् ब्राह्मणइत्यादिव्यपदेशव "दय मात्मा ब्रह्मे" ति व्यवहारस्तु सुतरा मुपपद्यत इति ॥

उदाहृतपुरुषसूक्तमन्त्रस्य मन्त्रान्तरैकार्थ्येन परमेश्वरपरताम् स्पष्टयितुम् मन्त्रान्तर मुदाहरति— मायान्त्विति ॥

इतरमूर्तीनाम् वियदादीना मचेतनानाम्। तासा मभिमानित्वेन जीवरूपामूर्ति र्व्यापिकेत्यर्थः ॥

मूर्तीनाम् विश्वम् तस्मा च्छिवात्मकम् ॥' इति स्मरणाच्च शिवस्य मूर्त्येकदेश आत्मा ॥

## प्रकाशादिव तु नैवम् परः ॥ २–३–४५ ॥

ब्रह्मणोंऽशत्वेऽपि जीवस्य जीवो यत्स्वरूपो यत्स्वभावश्च नैवम् परमेश्वरः, किन्तु सर्वज्ञत्वादियुक्त एव । कथम् ? प्रकाशादिवत् । प्रकाशविशिष्टानाम् मणिप्रभृतीनाम् प्रकाशो विशिष्टैकदेशो यथांशः, तद्वज्जीवशरीरतया जीवविशिष्टस्य ब्रह्मणोंऽशो जीवः । आदिशब्दा द्विशेषणतैकस्वभावा जातिगुणादयो गृह्यन्ते । विशेषणानाम् विशिष्टैकदेशतया तदंशत्वेऽपि स्वरूपभेदो न विरुद्धः, 'य आत्मनि तिष्ठन्' इत्यादिश्रुतेः ॥

## स्मरन्ति च ॥ २–३–४६ ॥

'विग्रहम् देवदेवस्य जगदेतच्चराचरम् । एतमर्थम् न जानन्ति पशवः पाशगौरवात्'॥ इत्यादि । ततो ब्रह्मणोंऽश एव जीवः । तद्विशिष्टतया स्वरूपभेदश्च सिद्धः ॥

---

यथा विशेषणम् विशिष्टैकदेशतया तदंश स्तथा विशेष्यमपि । तथाच अंशत्वाऽविशेषा ज्जीवब्रह्मणो स्साम्यमेव भवेत् । किञ्चिज्ज्ञत्वसर्वज्ञत्वनियम्यनियामकत्वादि वैषम्यम् नस्यादिति शङ्काम् दृष्टान्तमुखेन निराकर्तु मिदम् सूत्र मित्यभिप्रेत्य व्याचष्टे—ब्रह्मण इति ।

स्वरूपभेदो जीवब्रह्मणो वैलक्षण्यम् लौकिकाना मन्यविशेषणैकस्वभावानाम् प्रकाशजातिगुणानाम् विशेष्यमपि लौकिक मिति नियमदर्शना दलौकिक मीश्वरम्प्रति लौकिकस्य विशेषणत्वम् मनुक्तमि त्याशङ्कानिराकरणार्थम् सूत्रम् ॥

येषाम् विशेषणतैकस्वभावत्वमपि लोकसिद्धम् तेषामेव विशेष्यस्य लोकसिद्धत्वनियम इत्यभिप्रेत्य तथा नियमसङ्कोचापादिनीम् स्मृति मुदाहरति— विग्रह मिति ।

ननु सर्वथा मात्मना मीश्वरविग्रहत्वाऽविशेषे कथम् ब्राह्मणादीनाम् वेदाध्ययनादि ष्वनुज्ञा शूद्रादीनाम् तत्परिहार इत्याशङ्कानिराकरणार्थम् सूत्रम् ॥

## अनुज्ञापरिहारौ देहसम्बन्धा ज्ज्योतिरादिवत् ॥ २-३-४७ ॥

सर्वेषाम् जीवानाम् ब्रह्मांशत्वेऽपि कथम् कस्यचिद्वेदादिष्वनुज्ञा, कस्यचित् परिहार इति चेत्--ब्राह्मणदेहादिसम्बन्धात् तदुपपत्तिः, यथाऽग्न्यादेः श्रोत्रियागारश्मशानादिसम्बन्धा त्तद्वत् ॥

## असन्ततेश्चाव्यति रेकः ॥ २-३-४८ ॥

असन्ततिरव्याप्तिः। प्रतिशरीरम् भिन्नत्वात् तत्रतत्राणुत्वेनावच्छिन्नत्वा दसन्ततेरव्याप्तधा च स्थूलोऽहम् कृशोहम् सुख्यहम् दुःख्यहम् ब्राह्मणोऽहम् क्षत्रियोऽह मिति देहाभिमानिनाम् ज्ञानसुखाद्यव्यतिरेको भवति। किमुक्तम् भवति ? देहाभिमानिनाम् व्याप्त्यभावस्य समानत्वात् परिच्छिन्नज्ञानसुखादिकम् सांसारिकमेकप्रकारकमेवासङ्कीर्णम् भवतीति। अनेन परब्रह्मज्ञानविशेषेण विगलितदेहाभिमानानाम् महाव्याप्त्या पराहंभाव

---

यथाऽग्न्यादे रिति । अग्न्युदकादीनाम् येषाम् श्रोत्रियागारस्थितिदशायाम् कर्मार्हत्वम् तेषामेव हि श्मशानादिदेशम् प्राप्तानाम् कर्माऽनर्हत्वम् दृष्टमेव मात्मनाम् ब्राह्मणादिदेहेषु स्थितिदशाया मनुज्ञा—शूद्रादिदेहस्थितिदशायाम् परिहारश्चे त्युपपद्यत इत्यर्थः ॥

न न्वीश्वरविग्रहत्वाऽविशेषेऽपि ब्राह्मणादीनाम् शूद्राद्यलभ्यवेदाध्ययनाद्यनुज्ञाव त्तदलभ्यनिरतिशयज्ञानसुखादिप्राप्तिरपि किम् नस्यात् तेषाम् तत्प्राप्त्यभावे मुक्तानाम् वा तत्प्राप्तिः कथम्स्यादविशिष्टाःखल्वीश्वरविग्रहत्वेन बद्धाः मुक्ताश्चेति शङ्काद्वयस्य श्रुत्यर्थाभ्याम् निराकरणार्थ मिदम् सूत्रम् ॥

तत्र प्रथमशङ्कानिराकरणप्रकारम् दर्शयन् सूत्रम् व्याचष्टे—"असन्तति रव्याप्ति"रिति । समन्ता त्तति स्सन्ततिः । विभुत्वम् । तदभावोऽसन्तति रव्याप्ति रिति सिद्धम् । चकार समुच्चितम् हेतुद्वयम् दर्शयति— प्रतिशरीर मिति । अत्राऽय माशयः प्रतिप्राणि व्यवस्थितानां ज्ञानादिगुणानाम् सर्वेषाम प्युपलब्ध्यनुपलब्धिसूत्रोक्तरीत्या ब्राह्मणादिगत-

मुपगतानाम् मुक्तात्मनाम् निरतिशयत्वेन नित्यत्वेन च ज्ञानादीनाम् स्वाभाविकानाम् सांसारिकज्ञानादितो व्यतिरेक इति सिद्धम् ॥

अज्ञानोपाधिभ्याम् ब्रह्मैव सम्बध्यत इति यदुक्तम्, तत्र न व्यवस्थेत्याह—

## आभासा एव च ॥ २–३–४९ ॥

सत्यामिथ्योपाधिभ्याम् बद्धस्य ब्रह्मण एव जीवभाव इति पक्षद्वयेऽपि युक्तय आभासा एव ॥

तथा हि—

---

ज्ञानसुखादिजनकत्वापादनेन तेषाम् सर्वविधज्ञानसुखादिप्राप्ति राशङ्क्यते ? उत मुक्तानाम् यादृशी निरतिशयज्ञानसुखादिप्राप्ति स्तादृशी तेषा माशङ्क्यते ? आद्ये प्रतिप्राणिव्यवस्थितज्ञानसुखादिकारणसाधारण्यापादनम् सर्वशरीरे ष्वात्मैकत्वे जीवविभुत्वे तदीयचिच्छक्तिव्याप्तौ वा अङ्गीक्रियमाणाया मशक्यम् वक्तुम् । न चैत त्त्रितय मङ्गीक्रियते । अतः प्रतिशरीरम् भिन्नानाम् तत्रतत्रैव शरीरे व्यवस्थितानाम् तत्तच्छरीराऽनतिलङ्घिचिच्छक्तिव्याप्तिकानाम् ब्राह्मणादीनाम् ज्ञानसुखादेः शूद्रादिगतज्ञानसुखाद्यव्यतिरेक स्तद्वैरूप्यमेव भवति । यथा शूद्रादीनाम् ज्ञानसुखादिकम् यथा कारणलाभं परिमितं भवति तथैव ब्राह्मणादीनामपि भवतीति यावत् । अतः प्रथमकल्पो नसम्भवति । द्वितीयकल्पस्तु बद्धानां मलावृतचिच्छक्तिकत्वा न्नसम्भवति । अत एव बद्धमुक्तसाम्यापादनरूपा द्वितीयशङ्काऽपि नप्रवर्तते । परमेश्वरसाक्षात्कारसम्पन्नां चिच्छक्तिव्याप्ति मुपगतानां हि मुक्तानां ज्ञानसुखादिकाऽभिव्यक्तं परिमिता त्सांसारिकज्ञानसुखैश्वर्यादितो निरतिशयत्वेन विलक्षणमेव भवतीति ।

एवम् बद्धानां ज्ञानसुखादिकं यथा कारणलाभं व्यवस्थित मेकप्रकारं भवति । मुक्तानान्तु तत्स्वाभाविक मावरणापाया दभिव्यक्तं निरतिशयत्वेन तद्विलक्षणं भवतीति व्यवस्थोपपद्यते । एवम् व्यवस्था मिथ्योपाध्यवच्छिन्नब्रह्मजीववादे सत्योपाध्यवच्छिन्नब्रह्मजीववादे च पूर्वपक्षिते—न सम्भवतीति प्रतिपादनार्थत्वेनोत्तरसूत्रा ण्यवतारयति—अज्ञानेति ॥

असत्य मज्ञानम् सत्यं शरीरान्तःकरणादिकं वोपाधि र्भवत् स्वयं भिन्नभिन्नमप्येकस्यैव ब्रह्मण उपाधि र्भवत् । न तावता तदुपहितं ब्रह्म भिद्यते । नखलु दारुखण्डे

## अदृष्टानियमात् ॥ २—३—५० ॥

सत्यामिथ्योपाधिकृतत्वे ह्यात्मनाम् ब्रह्मणएवाज्ञान मुपाधिश्चेति तत्कृतेनादृष्टेनाऽपि न नियमः ॥

किञ्च—

## अभिसन्ध्यादिष्वपि चैवम् ॥ २—३—५१ ॥

अदृष्टहेतुभूताभिसन्ध्यादिषु चैवमेव नियमाभावः ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥ २—३—५२ ॥

उपाधिसम्बन्धिब्रह्मप्रदेशभेदात् व्यवस्थेति चेत्—न, उपाधिषु गच्छत्सु सर्वप्रदेशानाम् तदन्तर्भावात् । तस्मात् सत्यमिथ्योपाधिपरिच्छिन्न-

---

निपतन् कुठारः दारुखण्डमिव ब्रह्मणि समवय न्नुपाधि र्ब्रह्म भिनत्ति । तथाच भोगाश्रयाणा मुपाधीनां भेदेऽपि विचित्रभोगाश्रयस्य ब्रह्मणएकत्वेन भोगसाङ्कर्य मपरिहार्य मिति । इत्येव तदसाङ्कर्योपपादकयुक्तय आभासाइति भावः । अदृष्टादे र्भोगव्यवस्था भविष्यती त्याशङ्कानिराकरणार्था न्युत्तरसूत्रा णीति दर्शयति— तथाहीति ।

अदृष्टम प्यज्ञानाद्युपाधिभि स्सहित स्यैकस्यैव ब्रह्मणो धर्मो भव न्न व्यवस्थापकइत्यर्थः —

अदृष्टहेतुसङ्कल्पानुष्ठानशरीरादिप्रतिनियमा द्व्यवस्था भविष्यतीति शङ्कानिराकरणायाऽदृष्टेदर्शितस्याऽनियमापादकन्यायस्य सङ्कल्पादि ष्वतिदेशार्थ मिदम् सूत्रम् ।

न न्वात्मप्रदेशव्यवस्थया भोगव्यवस्था भविष्यतीति शङ्कानिराकरणार्थ मुत्तरसूत्रम् ॥

ब्रह्मणः प्रदेशा श्शरीरान्तर्भूताएव भोगाश्रया वाच्याः । तदन्तर्भूतप्रदेशास्तु न व्यवस्थिताः । प्राय स्सर्वेषामपि प्रदेशानाम् सञ्चरत्सु तेषुतेषुशरीरे ष्वन्तर्भावात् । तथाच ब्रह्मप्रदेशव्यवस्थया

ब्रह्मजीवत्वपक्षद्वयेऽपि न व्यवस्था सम्भवति। ततो ब्रह्मणोंऽशभूतो जीव स्तद्विशेषणैकस्वभाव इति युक्तमेव ॥

इत्यंशाऽधिकरणम्

---

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
द्वितीयाध्यायस्य तृतीयः पादः

---

भोगव्यवस्थोपपादनमपि विवक्षितम्। विवेकेन शरीरव्यवस्थयैव तदुपपादनम् पर्यवस्यति ॥ शरीरव्यवस्था च पूर्वसूत्रेण निराकृता। ब्रह्मोपाधिभूतानि सर्वाण्यपि शरीराणि ब्रह्मात्मकसर्वजीव-साधारणया कस्यचित्किञ्चिदिति व्यवस्थितानि भवेयु रिति। तस्मा त्सर्वगतात्मपक्षेऽपि भोगव्यवस्था दुरुपपादेतिभावः।

इत्यंशाऽधिकरणम्

---

इति श्री नागलिङ्गशिवाराध्यकृतिसुख्यायां लघुशिवार्कमणिदीपिकाख्यायां
श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीय
ब्रह्मसूत्रभाष्यव्याख्यायां द्वितीयाध्यायस्य तृतीयः पादः

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाराध्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ द्वितीयाध्यायस्य

## चतुर्थः पादः

---

अथ प्राणोत्पत्त्यधिकरणम् १

### तथा प्राणाः ॥ २–४–१ ॥

पूर्वत्र भूतानि ब्रह्मण उत्पद्यन्त इति निरूपितम्, जीवो नित्य इति। इह भूतानामिवेन्द्रियाणाम् ब्रह्मण उत्पत्तिः, उत जीववन्नित्यत्वमिति विचार्यते। यथा नित्यत्वा न्न जीवः समुत्पद्यते तथेन्द्रियाण्यपि। जीववदमीषामपि नित्यत्वे श्रुतिसम्भवात्। तथा हि, 'असद्वा इदमग्रआसीत्'

---

अथ प्राणोत्पत्त्यधिकरणम् १

कारणविषयश्रुतिविरोधसमाधानाऽनन्तरम् कार्यविषयश्रुतिविरोधसमाधित्सया तृतीयचतुर्थपादा वारब्धौ। तत्र पारम्पर्यक्रमाऽधिकरणोक्तरीत्या भूतसृष्टेः प्राथमिकत्वात् आकाशादि भूतोत्पत्त्यनुत्पत्तिविषयश्रुतिविरोधसमाधानं तृतीयपादेन कृतम्। तत्र ब्रह्मव्यतिरिक्तस्याकाशादेः कृत्स्नस्य कार्यत्वे समर्थिते जीवस्य कार्यत्वेऽपि स्वरूपान्यथाभावलक्षणं कार्यत्वम् नास्तीति विशेषो दर्शितः। तत्प्रसक्त्या जीवस्य ज्ञातृत्वादिविषयश्रुतीनामपि विरोधसमाधानं तृतीयपादएव कृतम्। इदानीं जीवोपकरणभूतेन्द्रियमुख्यप्राणोत्पत्त्यनुत्पत्त्यादिविषयश्रुतिविरोधसमाधानार्थम् चतुर्थपाद आरभ्यते ॥

नन्विन्द्रियाणा मुत्पत्त्यादिविचारो नोपपद्यते। "प्रतिज्ञाऽहानि रव्यतिरेका" दिति। वियदधिकरण सिद्धान्तसूत्रोक्तरीत्या ब्रह्मव्यतिरिक्तस्य सर्वस्याऽप्युत्पत्तिनियमा दित्याशङ्क्य उत्पत्तिसामान्ये नियमेऽपि स्वरूपान्यथाभावोत्पत्तिनियमो नाऽस्ति तथाभूतोत्पत्ति तदभावविषयएव विचारःकरिष्यतइति दर्शयन् वृत्त मनुवदति-पूर्वत्रेति- श्रुतिविरोधेन संशय न्दर्शयति-इहेति। सूत्रगतं तथाशब्दं विवृण्वन् पूर्वपक्षयति—यथेति। ननु जीवविषये कृतहानाऽकृताभ्यागमप्रसङ्गरूपतर्कानुगृहीतत्वेनाऽ

'ऋषयो वाव ते अग्रे सदासन् । तदाहुः । के ते ऋषय इति। प्राणा वा ऋषयः' इति प्रलयकाले प्राणानाम् स्थिति राम्नायते । प्राणा स्ततो ब्रह्मणो नोत्पद्यन्ते ॥

इति प्राप्ते ब्रूमः—

## गौण्यसम्भवा त्तत्प्राक्छ्रुते श्च २—४—२ ॥

न प्राणानाम् सृष्टेः प्रागवस्थितिः, किन्तु परमेश्वरस्यैव, 'सदेव सोम्येद मग्र आसीत्' इति श्रुतेः । ऋषिशब्दः प्राणशब्दश्च परमेश्वर एव वर्तते । तस्य बहुत्वासम्भवात् बहुवचनश्रुति स्तत्र गौणी । ततो ब्रह्मण एव प्रागवस्थिति र्नेन्द्रियाणाम् ॥

---

नन्ययासिद्धा नित्यत्वश्रुतिर्विद्यते । नतथेन्द्रियेषु । तन्नित्यत्वश्रुतिसद्भावेपि तस्या वाय्वाकाशाऽमृतत्व श्रुतिव च्चिरकालावस्थायित्वपरतया नेतुं शक्ये त्याशङ्क्य अनन्यथासिद्धां श्रुति मुदाहरति— तथाहीति । इयंहि श्रुति रिन्द्रियाणां महाप्रळये स्थितिं वर्णयति । साच ब्रह्मण इवेन्द्रियाणां नित्यत्वमन्तरेण नोपपद्यते । प्राणशब्देनेन्द्रियाण्येव गृह्यन्ते । प्राणशब्दस्य "प्राणमेवाऽभिसंविशन्ती" त्यादिश्रुत्यन्तरे ब्रह्मणि प्रयोगस्य सत्त्वेऽपि तस्मिन् बहुवचनस्याऽनन्वयात् । ऋषिशब्दस्य "तस्यासते ऋषय स्सप्ततीर" इतीन्द्रियेष्वपि प्रयोगसद्भावेन तेषु तदन्वयसम्भवात् । "एतस्मा ज्जायते प्राणो मन स्सर्वेन्द्रियाणि" चेति इन्द्रियोत्पत्तिश्रुतिस्तु जीवोत्पत्तिश्रुतिव न्नेतव्येति भावः । पूर्वपक्ष मुपसंहरति—प्राणा इति ॥

साध्यनिर्देशपूर्वकं द्वितीयहेतुयोजनक्रमेण सूत्रं व्याचष्टे—"न प्राणाना" मिति । इन्द्रियाण्युत्पद्यन्त एव । इन्द्रियाणां सृष्टेः प्रागवस्थिति र्नाऽस्ति । किन्तु परमेश्वरस्यैव तदाऽवस्थितिः । श्रुतेश्च—"सदेव सौम्येद मग्र आसीत्" "शिवएव केवलः" इत्यादिश्रुते श्च ।

ननु तत्र ऋषयइति बहुवचन स्याऽसम्भवा द्ब्रह्मणि गौणीत्यर्थः । बह्वीषु श्रुतिषु ब्रह्मणएव एकत्वावधारणसहितसृष्टिप्रागवस्थानस्य श्रुतत्वात् । सृष्टिप्राग्भावरूपा वनुत्पत्तिलिङ्गात् "एतस्मा ज्जायते प्राण" इत्याद्युत्पत्तिश्रुतेः प्रबलत्वात् "ऋषयोवाव" त्युत्पत्तिप्राग्भावश्रुतावपि प्रथमश्रुतस्य ऋषिशब्दस्य द्रष्टरि ब्रह्मणि स्वारस्या द्दर्शनकरणे ष्विन्द्रियेषु

युक्त्यन्तरमाह—

## तत्पूर्वकत्वा द्वाचः ॥ २–४–३ ॥

परमेश्वरसृष्टिपूर्वकत्वा दितरेषाम् नामरूपयोगस्य । तदानीम् प्राणशब्दो नेन्द्रियविषयः । ततो ब्रह्मैव पूर्वभावि ॥

इति प्राणोत्पत्त्यधिकरणम्

---

अथ सप्तगत्यधिकरणम् २

## सप्तगतेर्विशेषितत्वा च्च ॥ २–४–४ ॥

पूर्वत्र ब्रह्मकार्यतया सिद्धानीन्द्रियाणि कियत्सङ्ख्यानीति सन्देहे सप्तेति पूर्वः पक्षः। कुतः ? 'यदा पञ्चावतिष्ठन्ते ज्ञानानि

---

स्वारस्याऽभावात् । कर्मेन्द्रियेषु कथम प्यप्रवृत्तेश्च । ऋषयइति बहुवचनस्य ब्रह्मण्यसम्भवात्। "अदितिः पाशान्प्रमुमोक्त्वैता" नित्यत्र पाशावयवबहुत्वविषयतयेव ब्रह्मविशेषणबहुत्व-विषयतया औपचारिकत्वोपपत्तेश्च "प्राणावा ऋषय" इति श्रुति र्ब्रह्मविषयेतिभावः ॥

तच्छब्दार्थ माह—परमेश्वरसृष्टीति ॥ वाच इत्यस्याऽर्थ माह । नामरूपयोगस्येति । सूत्रोक्तहेतुं साध्ये योजयति–तदानी मिति । जीवानां प्रळये स्थितिः कृतहानाकृताभ्यागम-दोषान्यथानुपपत्त्या अभ्युपगता । प्राणानां तदास्थित्यनभ्युपगमे बाधकाभावात्। प्राणविषय-नामरूपव्याकरणस्य सृष्टिपूर्वकत्वनियमो न बाधनीय इति भावः, "तद्धेदम् तर्ह्यव्याकृत मासी त्तन्नामरूपाभ्यां व्याक्रियते" ति श्रुतेः । वाचः इतरेषां नामयोगस्य तत्पूर्वकत्वात् परमेश्वरकृत वियदादिसृष्टिपूर्वकत्वात् । प्राणशब्दो इन्द्रियविषयो नभवति । किन्तु परमेश्वरवाचक-एवेत्यर्थः ॥

इति प्रणोत्पत्त्यधिकरणम्

---

मनसा सह। बुद्धिश्च न विचेष्टेत तामाहुः परमाम् गतिम्'॥ इति सप्तानामेवावगतेः, 'सप्तप्राणाःप्रभवन्ति' इत्यादिश्रुतौ सप्तेति विशेषितत्वाच्च ॥

इत्येवम्प्राप्तेऽभिधीयते —

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ २–४–५ ॥

न सप्तैवेन्द्रियाणि। हस्तादयोऽपीन्द्रियाणि, जीवे देहान्तःस्थिते उपकरणत्वाविशेषात्। अपि त्वेकादश। 'दशेमे पुरुषे प्राणा आत्मैकादशः' 'इन्द्रियाणि दशैकञ्च' इति श्रुतिस्मृतिभ्याम्। बुद्ध्यादीनाम् न पृथगिन्द्रियत्वम्, किन्तु ते मानोवृत्तिभेदा एव। सप्तानाम्

---

अथ सप्तगत्यधिकरणम्

प्रासङ्गिकसङ्गतिम् सूचयति—पूर्वत्रेति। कियत्सङ्ख्यानीति। सप्तसङ्ख्यानि वा–एकादशसङ्ख्यानि वेत्यर्थः। श्रुतिविप्रतिपत्ते स्सन्देहः। सूत्रस्थं गतिशब्द मवगतिपर मभिप्रेत्य सप्तसङ्ख्याबोधिनीम् स्मृति मुदाहरति– यदेति। ज्ञानानीति। करणव्युत्पत्त्या ज्ञानशब्द इन्द्रियपरः। मनोबुद्धिसहपाठात्। परमां गति मिति। परमगतिरूपमोक्षसाधनम् योगमाहु रित्यर्थः। विशेषितत्वा दिति सूत्रस्थपदम् सप्तसङ्ख्याम् सप्तपदेनोपादाय तया विशेषितत्वा दित्यर्थपरतया व्याचष्टे–सप्तेति। न्यूनाधिकसङ्ख्याश्रवणे न्यूनसङ्ख्याग्रहणम् न्याय्यम् लाघवादिति युक्त्यन्तरसमुच्चयार्थ श्चकारः। ननु अधिकसङ्ख्याग्रहणे न्यूनसङ्ख्याया स्तत्राऽन्तर्भावा दुभयबाधो नभवति। अत स्तदर्थं मधिकसङ्ख्याग्रहणमेव न्याय्यमितिचे दुच्यते। तथासति क्वचि ज्ज्ञानेन्द्रियाणि पञ्च—कर्मेन्द्रियाणि पञ्च—मनो हृदय मिति द्वादशेन्द्रियाणि श्रूयन्ते। क्वचि त्तान्येव प्राणाधिकानि त्रयोदश श्रूयन्तइति सर्वाधिकसङ्ख्याग्रहणे एकादशसङ्ख्याव्यवस्था न सिद्ध्येत्। सप्तप्राणा इति सप्तशब्देन विशेषितत्वा त्तदवगते र्लाघवाच्च इन्द्रियाणि सप्तैव नैकादशे त्यर्थः ॥

अतो नैव मिति व्याख्यास्यमानसूत्रभागलभ्यम् साध्यम् दर्शयति—न सप्तैवेति। तुशब्द मप्यर्थमुक्त्वा व्याचष्टे—हस्तादयो पीति। "स्थिते अत" इति सूत्रखण्डेन विवक्षितम् हेतु मपेक्षिताध्याहारपूर्वकम् विवृणोति—जीव इति। हस्तादिसत्त्वोपन्यासलभ्याया

गतिश्रवणं विशेषणञ्च तेषाम् प्राधान्यात्। अतो न सप्तेन्द्रियाणि, किन्त्वेकादश ॥

इति सप्तगत्यधिकरणम्

---

अथ प्राणाऽणुत्वाऽधिकरणम् ३

## अणवश्च ॥ २–४–६ ॥

तानीन्द्रियाणि विभूनि किमणूनीति सन्देहे चक्षुरादीनाम् दूरगतवस्तुग्रहणसामर्थ्या द्विभूनीति प्राप्तेऽणूनीत्युच्यन्ते–कथम्? 'प्राणमनूत्क्रामन्तम् सर्वे प्राणा अनूत्क्रामन्ति' इति श्रवणात्। न विभूनि। विभुत्वे हि तेषाम् न गतिः सम्भवति। चक्षुरादे र्दूरगतवस्तुग्रहणसामर्थ्यम्

---

मिन्द्रियसङ्ख्यायाम् श्रुतिम् दर्शयति— दशम इति। आत्मा–मनः। श्रुतिस्मृतिभ्या मिति। अयमपि हेतु रतश्शब्दे नावृत्तेन विवक्षितः। बुद्ध्यहङ्कारचित्तानाम् मनस्यन्तर्भावा भावेऽधिकसङ्ख्या प्रसज्यत इत्याह— बुद्ध्यादीना मिति। नानाविधसङ्ख्याश्रवणे कार्यानुसारेण सङ्ख्यानियमनम् युक्तम्। कार्यञ्च गन्धाद्युपलब्धिपञ्चक मादानादिक्रियापञ्चक मान्तरज्ञानजातञ्चे त्येकादशविध मिन्द्रियगणम् व्यवस्थापयति। यानि तु बुद्ध्यहङ्कारचित्तवृत्तित्वेन प्रसिद्धानि अध्यवसायाभिमानचिन्तारूपाणि कार्याणि तानि मनोव्यतिरेके जायमानत्वाऽनवगमा न्न करणान्तरव्यवस्थापनार्हा णीति बुद्ध्यादयो मनोऽवस्थाभेदा इत्येव युक्त मिति भावः। पूर्वपक्षयुक्तिम् निराकरोति–सप्ताना मिति। योगदशायाम् कर्मेन्द्रियेभ्यो ज्ञानेन्द्रियाणि यत्नेन वशीकरणीयानीति तेषाम् वशीकर्तव्यत्वेऽस्ति प्राधान्यम्। तदभिप्रायेण "यदा पञ्चावतिष्ठन्ते" इत्यादिस्मृतिः प्रवृत्ता। अतो नैवमिति सूत्रांशम् व्याकुर्व न्नधिकरणाऽर्थ मुपसंहरति–अतो न सप्तेति। पुनरावृत्तस्याऽतश्शब्दस्य हस्तादीनां सत्त्वा दित्यर्थः॥

इति सप्तगत्यधिकरणम्

---

न विभुत्वेन, किन्तु तेजोरूपत्वादणुत्वाच्च शीघ्रगतिमत्त्वात् । तस्मादिन्द्रियाण्यणून्येव ॥

इति प्राणाऽणुत्वाऽधिकरणम्

---

अथ श्रेष्ठ्याऽधिकरणम् ४

**श्रेष्ठश्च ॥ २—४—७ ॥**

'प्रणमनूत्क्रामन्तम् सर्वे प्राणा अनूत्क्रामन्ति' इति सर्वप्राणश्रेष्ठतया श्रूयमाणः पञ्चवृत्त्यात्मा प्राणवायु र्ब्रह्मण उत्पद्यते ? न वा ?

इति संशये न जायते प्राणवायुः नासदासीये सूक्ते 'आनीदवातम्' इति सृष्टेः प्रागपि प्राणचेष्टाश्रवणात् ॥

---

अथ प्राणाऽणुत्वाधिकरणम् ३

"अत एते सर्वएव समा स्सर्वेऽनन्ता" इति श्रुतेः "सऽर्वे प्राणा अनूत्क्रामन्ती"ति श्रुतेश्च विरोधेन संशयम् दर्शयति—तानीन्द्रियाणीति । अणुत्व मिह परिच्छिन्नत्वम् । दूरगतेति । तस्मा दुक्तयुक्तिसहकृतत्वा दानन्त्यश्रुतिः प्रबला । यथा कार्यदर्शनयुक्तिसाहित्या देकादशसङ्ख्याश्रुति स्तथेति भावः । आनन्त्यश्रुतिः "सयो हैता ननन्ता नुपास्ते अनन्तम् वै स लोकं जयती"ति वाक्यशेषदर्शना दुपासनाऽर्थत्वेनाऽन्यथासिद्धा । ततः प्रबल्या उत्क्रमणश्रुत्या परिच्छिन्नत्व मुपपादयति—प्राणमिति । शीघ्रगतिमत्त्वा दिति । दूरगतवस्तुग्रहणसामर्थ्यञ्च मिन्द्रियाणाम् विषयपर्यन्तप्रसृमरप्रवृत्त्यात्मना विषयसम्बन्धेन युज्यत इत्यन्यथासिद्ध मित्यर्थः ॥

इति प्राणऽणुत्वाऽधिकरणम्

---

अथ श्रैष्ठ्याऽधिकरणम् ४

उत्तरचिन्तार्थम् पृथग्योगकरणम् । श्रेष्ठः प्राण श्चोत्पद्यत इत्यर्थः । प्राणस्य भूतवायो रिन्द्रियवृत्तिभ्य श्चाऽन्यत्वम् श्रुतिविरोधपरिहारे णोपपादनीयम् । तदन्य

इति प्राप्ते वदामः—प्राणवायुरपि जायत एव। आनीच्छब्दो न प्राणव्यापारम् वक्ति। अवातमिति तन्निषेधात्। किन्तु ब्रह्मसत्त्वमेव ब्रूते। अतो न प्राणानादित्वम् सम्भवति॥

भवति त्वयम् प्राणवायुरुत्पत्तिमान्। स तु 'सामान्यकरणवृत्तिः प्राणाद्यावायवः पञ्च इति तन्त्रान्तरोक्तरीत्येन्द्रियवृत्तिभ्यः 'योऽयम् प्राणः स वायुः' इति श्रुत्या भूतवायो र्वा न पृथग्भूत इत्यत आह—

---

त्वाऽनन्यत्वविचार स्तदुभयस्वरूपस्य ज्ञानेन सुकरो भवतीति तद्विचारचिकीर्षया तस्य कार्यत्वविचारमुखेन प्रासङ्गिकत्वमम्पादना येन्द्रियकार्यत्वोपपादकन्यायम् प्राणकार्यत्वेऽतिदेष्टु मिदम् सूत्रम्। अस्य पूर्वाऽधिकरणेन सङ्गतिम् प्राणवायौ सूत्रगतश्रेष्ठपदप्रवृत्तिनिमित्तञ्च विवृण्वन्नेव श्रुतिविप्रतिपत्त्या संशय न्दर्शयति—प्राण मिति। य दनूत्क्रमणेनेन्द्रियाणाम् परिच्छिन्नत्वम् समर्थितम् तस्य कार्यत्वन् समर्थ्यत इति पूर्वाऽधिकरणसङ्गतिः।

तत्राच श्रेष्ठपद मिन्द्रियेभ्यः श्रेष्ठ्यपर मिति द्वयम प्यनेन विवृतम्। किन्तु ब्रह्मसत्त्वमेवेति। अनन्यव्यापारो हि वाताश्रयः। सतु अवातमिति वातनिषेधेन प्रतिपाद्यमान स्सत्तारूपएव पर्यवस्यति। सत्ता च वस्तुविशेषाऽनवच्छिन्ना निरुपाधिकब्रह्मसत्तैव भवे दिति भावः। एवम् प्रसङ्गम् सम्पाद्य प्रासङ्गिक मर्थम् पूर्वपक्षमुखेनाऽवतारयति—भवति त्वयमिति।" सामान्येति। यथा पञ्जरस्थानाम् सर्वेषाम् शुकानाम् साधारणो व्यापारः पञ्जरचालनम् यथावा सर्वासाम् खलकपोतिकाना मुपरिपतितवागुरोत्क्षेपणम् साधारणव्यापार स्तथा शरीरस्थानाम् सर्वेषा मिन्द्रियाणाम् साधारणव्यापारः प्राणादिवायुपञ्चक मिति साङ्ख्या वदन्ति। तथै वोपपत्तौ प्राणादिपञ्चवृत्ति र्मुख्यप्राणोऽन्यो न स्वीकरणीयः। य दीन्द्रिय-कार्येभ्यो गन्धोपलब्ध्यादिभ्योऽन्यस्य श्वसनकार्यस्य दर्शना न्मुख्यप्राणइन्द्रियवृत्तिभ्योऽन्य स्स्यात्। तदा प्राणापानादयोऽपि कार्यभेदा द्भिन्ना स्स्यु रिति पञ्चवृत्तिमुख्यप्राण इति नसिद्ध्येदिति पूर्वपक्षः। एवम् वादिविप्रतिपत्तिनिरासार्थेऽस्मिन्पादे सङ्गतिरहितत्वा दन्वाचय शिष्टः। पूर्वपक्षाऽन्तरार्था त्वधिकरणसूत्रप्रवृत्तिः। तत्पूर्वपक्षान्तर मित्थम्। "यः प्राण स्स वायु" रिति श्रुतेः। प्राणो भूतवायो र्नभिद्यते। पृथगुपदेशश्च द्भूतवायो रवस्थान्तरेम् प्राणः न वायुरेवेतिचे त्तर्हि तदवस्थान्तररूपस्य तेजस इव प्राणस्याऽपि पूर्वावस्थारूपवायुत्वपरित्याग स्स्या दिति॥

## न वायुक्रिये पृथगुपदेशात् ॥ २—४—८ ॥

पञ्चवृत्तिः प्राणोऽयम् न वायुः । न चेन्द्रियवृत्तिः,—

"एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च । खम् वायु र्ज्योति रापः पृथिवी विश्वस्य धारिणी ॥" इति श्रुत्या पृथगुपदेशात् । ततो वायो रिन्द्रियवृत्तिभ्य श्चान्य एव प्राणाः ॥

वायोरन्यत्वेऽपि न तस्य भूतान्तरत्वमित्याह—

## चक्षुरादिव त्तु तत्सहशिष्टयादिभ्यः ॥ २—४—९ ॥

वायोः पृथग्भूतोऽप्ययम् नाग्न्यादिवत् भूतान्तरम्, किन्तु वायुरेव देहधारणायोग्यतामापद्यते स्वयम् परमेश्वराधारः । 'भर्ता सन् भ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्टः' 'त्वमेकोऽसि

---

वायुक्रिये—प्राणः वायुमात्रम् वा तदीयस्पन्दरूपक्रिया वा नभवति । पृथगुपदेशात्-"एतस्मा ज्जायते प्राण" इति प्राणस्य पार्थिक्येनोपदेशा दित्यर्थः । अन्यएवेति । "यःप्राण स्स वायु" रिति श्रुतिः प्राणस्य वाय्ववस्थान्तरत्वेन वायुविशेषत्वा दुपपद्यत इतिभावः ।

तदवस्थान्तरत्वे तेजसइव वायुत्वपरित्यागेन भूतान्तरत्वप्रसङ्ग इति शङ्कोत्तरत्वे नोत्तरसूत्र मवतारयति— वायो रन्यत्व इति ॥

न ह्यनेन सूत्रेण प्राणस्य वायुत्वपरित्यागप्रसङ्गस्य तेजोदृष्टान्तोपपादितस्य न कश्चि त्परिहार उच्यते । वायुत्वपरित्यागेऽपि चक्षुरादिव ज्जीवोपकरणत्वसम्भवा दित्याशङ्क्य सूत्रेण विवक्षितम् परिहार माह—वायो रिति । सत्येव तन्तूनाम् तन्तुत्वे परस्परसंयोगेन शकटाकर्षणयोग्यतापत्ति रिव सत्येव प्राणस्य वायुत्वे देहधारणयोग्यतापत्ति रस्याऽवस्थान्तरापत्ति रिति न भूतान्तरत्वप्रसङ्ग इति भावः । एकैकतन्तु ष्वदृष्टा शकटाकर्षणयोग्यता मिळितेषु तन्तुषु संयोगविशेषेणेव वाय्वन्तरे ष्वदृष्टा देहधारणयोग्यताऽस्यकेन विशेषेणे त्याशङ्कायाम् आह—स्वयमिति । यथाऽयम् देहधारणयोग्यो भवति तथैनम् परमेश्वर उत्तभ्नाती त्यर्थः । भर्ता सन्निति । परमेश्वरेण भ्रियमाणएव भर्ता भरणशक्तस्सन्

बहूननुप्रविष्टः' 'प्राणानाम् ग्रन्थिरसि रुद्रो मा विशान्तकः' इत्यादिश्रुतेः। किञ्च। अयम् चक्षुरादिव जीवोपकरणम्। प्राणसंवादादिषु चक्षुरादिभिः सहोपदेशात् तत्तुल्योपकारमुख्यत्वादिभ्यश्च ॥

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ २—४—१० ॥

अकरणमक्रिया। न जीवोपकारक्रियारहितत्वात् दोषः। यतः श्रुतिरेव देहेन्द्रियाद्यशैथिल्यकारणम् वायुरिति दर्शयति। प्राणसंवादे 'यस्मिन्नुत्क्रान्त इदम् शरीरम् पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' इति प्रजापतिवचनानन्तरम्, वागाद्युत्क्रमणेऽपि देहस्येन्द्रियाणाञ्च स्थितिम् दर्शयित्वा प्राणोत्क्रमणे देहेन्द्रियशैथिल्याभिधानात् ॥

---

कार्यकरणसङ्घातम् भिमर्तीत्यर्थः। एको देवो मुख्यप्राणः बहुधा प्राणापानादि बहुप्रकारेण निविष्ट इत्यर्थः। प्राणानाम् प्राणापानादिवृत्तीनाम् ग्रन्थिः ग्रथयिता—तत्रतत्र स्थापक इत्यर्थः। आदिशब्देन " न प्राणेन नाऽपानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेता वुपाश्रिता" वित्यादिश्रुतिं गृह्णाति। प्राणस्य देहधारकत्वे युक्त्युपन्यासपरत्वेन सूत्रम् योजयति — किञ्चाऽय मिति। चक्षुरादिवदेव प्राणोऽपि जीवस्योपकरणमिति मन्तव्यम्। प्राणसंवादादिप्रदेशेषु तस्य चक्षुरादिभि स्सहपाठात्। तुशब्द श्शङ्कानिराकरणाऽर्थः। प्राणो नाऽऽकाशादिव द्भूतान्तरम् किन्तु वायुरेवाऽवस्थान्तर मापन्न श्चक्षुरादिव जीवोपकरणम्। तदुपकरणत्व मुपकरणभूतै रिन्द्रियैस्सह शिष्ट्यादिभ्योऽवगम्यते। शिष्टि श्शासन मुपदेशः। उपदिश्यते ह्ययम्प्राण श्चक्षुरादिभिस्सह प्राणसंवादादिषु। अय योऽयम् मुख्यप्राण इति विशिष्याऽभिधान मादिशब्देनोक्तम्। तदपि तत्सजातीयत्वे सम्मतत्वी त्यर्थः।

नन्वप्राणस्य पाषाणादे रिव देहस्याऽपि प्राणेनधारणं नाऽपेक्षितम्। अतो न देहधारणम् जीवोपकारः। इत्याशङ्क्य प्राणस्य देहनियतधारकत्व मन्वयव्यतिरेकाभ्यां तत्प्रदर्शनपरां श्रुति मुदाहृत्य व्यवस्थापयितुम् सूत्रम् ॥

करण मुपकारक्रिया। तद्रहितत्वा द्यो दोष स्स नप्रवर्तते। श्रुतिरेव हि तथा देहधारकतया जीवोपकरणत्वेन प्राणं दर्शयतीति सूत्रार्थम् विवृण्व न्नुक्तशङ्काम् निरस्यति— अकरण मिति।

## पञ्चवृत्ति र्मनोव द्व्यपदिश्यते ॥ २–४–११ ॥

प्राण एक एव स्ववृत्तिभिः पञ्चभिः प्राणाऽपानादिसंज्ञाभेदभाग्भवति, यथा कामादिभि र्मन एकमेव। अतः प्राण एकएव भूतवाय्विन्द्रियवृत्तिव्यतिरिक्तो जीवोपकारक इति सिद्धम् ॥

इति श्रेष्ठ्याऽधिकरणम्

---

अथ मुख्यप्राणाऽणुत्वाऽधिकरणम् ५

## अणु श्च ॥ २–४–१२ ॥

पञ्चवृत्ति रयम् प्राणवायु रिन्द्रियवदणुर्विभुर्वेति सन्देहे सति, नाऽणुरयम्, 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः

---

इन्द्रियवृत्तित्वपूर्वपक्षबीजनिराकरणार्थम् सूत्रम् ॥

मुख्यप्राणस्य कार्यभेदा दिन्द्रियवृत्तिभ्यो भेदाऽभ्युपगमे प्राणाऽपानादयोऽपि मुख्यप्राणवृत्तिभ्यो भिन्ना स्स्युः कार्यभेदादेवेति हि शङ्का। नेय मुपपद्यते। प्राणस्येन्द्रियवृत्तित्वकल्पने हि न तावन्मिलितानां मिन्द्रियाणां स वृत्तिः। चक्षुराद्येकद्वित्रचतुरभावे प्राणनाभावप्रसङ्गात्। नाऽप्येकस्यैव त्वगिन्द्रियस्य वृत्तिः। सामान्यकरणवृत्तित्वाऽभ्युपगमभङ्गप्रसङ्गात्। शरीरैकदेशे त्वगिन्द्रियोपहता तत्र प्राणनव्यापाराऽभावप्रसङ्गाच्च। तस्मा त्पृथगुपदेशा त्सामान्यकरणवृत्तित्वाऽनुपपत्तेश्च प्राणः करणवृत्तिभ्यो भिन्नइति युक्तम्। न तथा प्राणापानादीनां मुख्यप्राणतः पृथगुपदेशोऽस्ति। नाप्यनन्यथासिद्धः कार्यभेदोऽस्ति। एकस्यैववायोः हृदयादिस्थानविशेषावच्छेदेन तत्तत्कार्यकरत्वोपपत्तेः तत एव प्राणापानादीनां भेदोपपत्तेश्च। तस्मात् "पञ्चधात्मानम् प्रविभ ज्यैतत्प्राण मवष्टभ्य धारयामी" ति श्रुते र्मुख्यप्राण एकएव प्राणापानादिभेदेन पञ्चवृत्तिरिति युक्तम्। यथा "काम स्सङ्कल्पो विचिकित्से"त्यादिश्रुते रेकमेव मनः कामसङ्कल्पा द्यनेकवृत्तीति। —अधिकरणार्थ मुपसंहरति - अत इति ॥

इति श्रेष्ठ्याधिकरणम्

समोऽनेन सर्वेण' 'प्राणे सर्वम् प्रतिष्ठितम्' 'सर्वम् हीदम् प्राणेनावृतम्' इति श्रुतेः सर्वावारकतया व्यापी प्राणः ॥

इति प्राप्ते ब्रूमः—अणुरेव प्राणवायुः, 'प्राणमनूत्क्रामन्तम्' इति तस्य गतिश्रवणात्। आधिदैविकस्य हिरण्यगर्भप्राणस्य विभुत्वम न व्यष्टिरूपस्येति न विरोधः। तस्मा दणुरेव प्राणः पञ्चवृत्ति रिति ॥

इति मुख्यप्राणाणुत्वाऽधिकरणम्

---

अथ ज्योतिराद्यधिष्ठानाऽधिकरणम् ६

## ज्योतिराद्यधिष्ठान न्तु तदामननात् प्राणवता शब्दात्

॥ २—४—१३ ॥

इह 'आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत' इत्यादिश्रुत्या चक्षुरादीना मादित्याद्यधिष्ठानम् श्रूयते। जीवस्य च रूपादिग्रहणाय

---

अथ मुख्यप्राणाणुत्वाऽधिकरणम् ५

ननु सर्वेऽनन्ता इति इन्द्रियाणा मानन्त्यता श्रुतौ सत्यामपि उत्क्रमणलिङ्गेन तेषां परिच्छिन्नत्वं प्रसाधितम्। "समोऽनेन सर्वेण"ति व्यपित्वश्रुतौ सत्यामपि तेनैवलिङ्गेन प्राणस्याऽपि परिच्छिन्नत्वम् सिद्धेच्च त्किमनेनाऽधिकरणेन ? इत्याशङ्क्य अधिकरणारम्भहेतुभूता मधिकाशङ्कां दर्शयति—सर्वावारकत येति। उदाहृतश्रुतौ हि प्राणस्य सर्वसाम्य मुक्त्वा तत्रोपपत्तितया—"सर्वम्हीदम् प्राणेनावृत "मित्युक्तम्। अत स्सोपपत्तिकतया उत्क्रमणलिङ्गतः प्रबलेन सर्वसाम्यलिङ्गेन प्राणस्य विभुत्वसिद्धा वुत्क्रमणलिङ्ग मौपाधिकोत्क्रमणतया नेतव्यम्। "सम एभि स्त्रिभि र्लोकै" रित्यतः प्राक् "समः प्लुषिणा,समो मशकेन, समो नागेने"ति वाक्यान्यपि घटकरकाद्याकशादिन्यायेन औपधिकपरिच्छेदपरतया योजनीयानीति भावः। किमयम् प्राण स्सर्वगतः?उताऽणु रिति संशयः। "सम एभि स्त्रिभि र्लोकै" रित्यानन्त्यश्रावणा द्विभुरिति पूर्वपक्षः। प्राणोऽनूत्क्रामतीति प्राणस्य गतिश्रावणा दणुरेवेति सिद्धान्त इत्यर्थः ॥

इति मुख्यप्राणाऽणुत्वाऽधिकरणम्

तदधिष्ठानमुपादिश्यते ' एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामम् परिवर्तते ' इति । तदिदम् जीवेनसहेन्द्रियाऽधिष्ठान मादित्यादीनाम् परमेश्वरायत्त मुत स्वतन्त्रम् ।।

इति संशये ' आदित्यश्चक्षुर्भूत्वाक्षिणी प्राविशत् ' इत्यादिषु स्वातन्त्र्यश्रवणा दादित्याद्यधिष्ठानम् न परमेश्वरायत्तमिति पूर्वःपक्षः ॥

सिद्धान्तस्तु—परमेश्वरायत्तमिन्द्रियाद्याधिष्ठानमादित्यादीनाम् । कुतः ? ' य आदित्य मन्तरो यमयति ' ' य आत्मान मन्तरो यमयति ' इत्यादिश्रवणात् , परमेश्वरसङ्कल्पपूर्वकत्वाच्च सर्वप्रवृत्तीनाम् । तस्मा दिन्द्रियाद्याधिष्ठानम् जीवस्यादित्यादीनाञ्च परमेश्वरायत्तमेव ॥

---

अथ ज्योतिराद्यधिष्ठानाऽधिकरणम् ६

आदित्यादीना मभिमानिदेवतानां जीवस्य च प्राणाऽधिष्ठातृत्वं श्रुतिसिद्धम्। तत्राऽभिमानिदेवताना न्तदधिष्ठातृत्व मीश्वरायत्तम् स्वतन्त्रं वेति संशये यद्यपि " परात्तु तच्छ्रुतेः " ब्र ॥ २–३–४० ) इत्यधिकरणे जीवानां कर्तृत्व मीश्वरायत्त मित्यविशेषे णोपपादितम् । तथाऽप्यादित्यादीना मीश्वरदत्तैश्वर्याणा मीश्वरव दाराध्यत्वफलप्रदत्वादिमत्त्वेन स्वातन्त्र्यम प्यस्तु । कर्तृत्वस्य परायत्तताश्रुतेः मनुष्यादिविषयत्वेन सङ्कोचसम्भवं तत्तदैश्वर्यश्रवणानुगृहीतस्य स्वातन्त्र्यश्रावणस्य बाधनायोगा दिति पूर्वःपक्षः ।

अत्र सौत्रं सिद्धान्त माह—सिद्धान्त स्त्विति । ज्योतिरादीना मादित्यादीनां यदधिष्ठानं चक्षुराद्यधिष्ठातृत्व मस्ति तत् तदामननात् तस्य परमेश्वरस्य सङ्कल्पात् । कुतः शब्दात्—तस्याऽन्तर्यामित्वश्रुतेरिति सूत्राऽर्थः । प्राणवता जीवेनसहेति दृष्टाऽन्तार्थ मुपादानम् । यथा जीवस्य स्वातन्त्र्यश्रावणेऽपि तस्येन्द्रियाऽधिष्ठातृत्वं परायत्तम् । एव मिन्द्रियाभि- मानिदेवताना मपीति भावः ॥

ननु परमेश्वरदत्तैश्वर्येण देवतानां मनुष्यादिजीवा द्विशेषोऽस्तीति शङ्कानिराकरणार्थं सूत्रम् ॥

## तस्य च नित्यत्वात् ॥ २–४–१४ ॥

सर्वस्य च परमेश्वरनियम्यत्वम् नित्यमेव। अतोऽपि परमेश्वर-सङ्कल्पायत्तमेवैषामधिष्ठातृत्वम् ॥

इति ज्योतिराद्यधिष्ठानाऽधिकरणम्

---

अथ त इन्द्रियाऽधिकरणम् ७

## त इन्द्रियाणि तद्व्यपदेशा दन्यत्र श्रेष्ठात् ॥ २–४–१५ ॥

इह पूर्वोक्तानि वागादीनीन्द्रियाणि प्रणावृत्तिभ्यो भिन्नाति न वा ?

इति संशये तानि मुख्यप्राणवृत्तय एव, 'एतस्यैव सर्वे रूपमभवन्' इत्यादिना तेषाम् प्राणरूपत्वश्रवणात्, वागादीनामुपरमरूपे मरणे प्राणो गत इति व्यवहारसामान्याच्च। तस्मात् प्राणादनन्यानीन्द्रियाणि ॥

---

"स ईशोऽस्य जगतो नित्यमेवे"ति श्रुते नित्यम् संसारिणां परमेश्वरनियम्यत्वम्। अतः परमेश्वरनियम्याना मधिकारप्राप्तेः प्रागिव तदनन्तरमपि नियम्यत्व मवर्जनीय मिति भावः। तस्य सर्वनियमनस्य नित्यत्वा च्चावर्जनीयत्वा दित्यर्थः ॥

इति ज्योराद्यधिष्ठानाऽधिकरणम्

---

अथ त इन्द्रियाऽधिकरणम् ७

इन्द्रियवृत्तिः प्राणइति शङ्का–"न वायुक्रिये" इत्यधिकरणे निरस्ता–इह प्राणवृत्तय इन्द्रियाणीतिशङ्का निरस्यते ॥

इति प्राप्ते ब्रूमः—मुख्यप्राणादन्यान्येवेन्द्रियाणि, श्रेष्ठादन्ये ये प्राणा स्त इन्द्रियाणीति चक्षुरादिष्वेव 'इन्द्रियाणि दशैकञ्च' इत्यादिष्विन्द्रिय व्यपदेशात् ॥

## भेदश्रुते र्वैलक्षण्या च्च ॥ २–४–१९ ॥

'एतस्मा ज्जायते प्राणो मनःसर्वेन्द्रियाणि च' इति प्राणेन्द्रियाणाम् भेदेनोत्पत्तिः श्रूयते। इन्द्रियाद्युपरमेऽपि प्राणवृत्त्यनुपरमरूपम्

न न्विन्द्रियाणा मादित्यादी नधिष्ठातॄ न्सिद्धवत्कृत्य तेषा मधिष्ठातृत्वं परमेश्वरायत्त मिति पूर्वाऽधिकरणे प्रसाधितम्। त च सिद्ध्येत्। यदि प्राणवृत्तयः इन्द्रियाणि स्युः नहि वृत्तिमदधिष्ठातृव्यतिरेकेण वृत्तीना मधिष्ठात्रपेक्षाऽस्ति। वृत्तिप्रसणार्थत्वा द्वृत्तिमदधिष्ठानस्य। सत्यम् इह तदे वाक्षिप्यते। अतए वाक्षेपिकी सङ्गति रस्याऽधिकरणस्य। अस्मदादीन्द्रियाणा मादित्याद्यधिष्ठानेन ज्ञानकर्मार्जकत्वे हि तत्प्रयुक्तपुण्यपापफलभोक्तृत्व मपि तेषां प्रसज्यते। कर्तृत्वभोक्तृत्वयो रैकाधिकऽरण्यनियमात्। जीवाऽधिष्ठिताना मिन्द्रियाणा मादित्यादिभिरप्यधिष्ठितत्वे जीवस्याऽऽदित्यादीनाञ्च कदाचि द्वैमत्येन कार्याऽनिष्पत्ति प्रसङ्गाच्च। इति तदित्थम् पूर्वाऽधिऽकरणसिद्धार्थाक्षेपेणास्याऽधिकरणस्य प्रवृत्ति रिति श्लिष्यते। अत्राऽयम् पूर्वपक्षः ॥

इन्द्रियाणि प्राणवृत्तयः। तादधीन्य–ताद्रूप्य - तत्कृत–तन्नामभाक्त्वश्रवणात्। प्राणाधीनस्थितिकत्वम् हीन्द्रियाणां श्रूयते। "प्राण उच्चिक्रमिषन् स यथा सुहयः पड्वीशशङ्कून् सङ्खिदे देव मितरा न्प्राणा न्समखिद" दिति। तथा ताद्रूप्यं तत्कृततन्नामभाक्त्वञ्च श्रूयते। "त एतस्यैव सर्वे रूप मभवन् तस्मा देत एतेनाख्यायन्ते" इति। अत इन्द्रियाणि प्राणवृत्तयइति सूत्रं योजयन् सिद्धान्त माह। मुख्यप्राणा दिति। इन्द्रियाणीतिसूत्रे पक्षनिर्देशः। "श्रेष्ठा दन्यत्रे"ति साध्यनिर्देशः। श्रेष्ठा दन्यानीत्यर्थः। एतैः पदै रावृत्तै रन्यैश्च सूत्रपदै र्हेतुनिर्देशः। इतिशब्दश्चाऽध्याहर्तव्यः। तथाच—श्रेष्ठादन्यत्र–ते श्रेष्ठादन्ये चक्षुरादयः प्राणाइन्द्रियाणीति तेष्वेव तद्व्यपदेशा दिन्द्रियत्वव्यपदेशा दित्यर्थः। यत्तु प्राणाधीन-स्थितिकत्वतद्रूपत्वतन्नामत्वश्रावणा दिन्द्रियाणां प्राणवृत्तित्व मवपीयत इतिपूर्वपक्षे शङ्काबीजम् तन्निराकरणार्थं सूत्रम् ॥

प्राणसंवादे खल्विन्द्रियाणां प्राणाधीनस्थितिकत्वादिकं त्रयमपि श्रूयते। तत्र प्राणेनसह तेषां कलहोपक्रमेणैव ततो भेद स्स्पष्टीकृतः। चक्षुरादीना मेकैकस्य प्रवासेऽप्यन्येषाम्

वैलक्षण्यञ्च दृश्यते । अतोऽपि प्राणवृत्तिभ्यो भिन्नानीन्द्रियाणीति ॥

इति न इन्द्रियाऽधिकरणम्

---

अथ संज्ञामूर्तिकॢप्त्यधिकरणम् ८

## संज्ञामूर्तिकॢप्ति स्तु त्रिवृत्कुर्वत उपदेशात् ॥ २—४—१७ ॥

पूर्वमाकाशादीनाम् भूतानाम् सह सदाशिवादिभिरधिष्ठातृभिः परमेश्वरा दुत्पत्ति रभिहिता । तदेवम् तेषु जातेषु ततो देवानाम् नामरूपादिकॢप्ति स्तस्मादेव मूलकारणात् उतान्यस्मादिति सन्देहः ॥

---

यथापूर्व मवस्थानं प्राणस्य प्रवासोद्योगएवाऽन्येषां शैथिल्यापत्ति रिति प्राणस्य चक्षुरादिभ्यो वैलक्षण्यञ्च तत्राऽनन्तरमेव प्रतिपादितम् । इद मुभय मिन्द्रियाणां प्राणस्य च वृत्तिवृत्तिमद्भावे नसङ्घटते । नवा वृत्तीनां वृत्तिमतासह समस्वातन्त्र्याऽभिमानेन कलहाभिधानं युज्यते । नहि वृत्तयो वृत्तिमन्तमपहाय प्रवसन्ति । वृत्तिमत्प्रवासे परम् नावतिष्ठन्त इत्युपपद्यते । तस्मा त्प्राणसंवादोपक्रमादिपर्यालोचनयै वेन्द्रियाणां प्राणव्यतिरेके स्पष्टेसति तदधीनत्वादिकं न प्राणाभेदसाधनक्षमम् । तस्मा दिन्द्रियाणां प्राणरूपत्वश्रवणं प्राणश्रैष्ठ्यप्रतिपादनार्थं प्राणाना ममात्त्वश्रावणञ्च प्राणप्राधान्यात् अच्छत्राणां छत्रिपदेनेव प्राणनाम्ना लक्षणीयत्वप्रतिपादनपरं योज्य मित्येवं सूत्रतात्पर्यं "चक्षुरादिव तु तत्सहशिष्ट्यादिभ्य" इति सूत्रगतहेत्वर्थकथनेनैव स्पष्टमितिमत्वा सूत्रस्याऽर्थान्तरमाह — एतस्मा दिति । तत्सहशिष्ट्यादिभ्य इति सौत्रहेतुपर्यालोचनयैवाऽवगन्तुं शक्यम पीन्द्रियाणां प्राणवृत्ति व्यतिरेकं हेत्वन्तरैरपि स्पष्टीकर्तु मिदमधिकरण मारब्ध मतोऽस्य नैरर्थक्यम् ॥

इति इन्द्रियाऽधिकरणम्

---

अथ संज्ञामूर्तिकॢप्त्यधिकरणम् ८

"आकाशोह वै नाम नामरूपयो निर्वहिते" ति वाक्ये नामरूपव्याकर्तृत्वं परमेश्वरस्य प्रतीयते । "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवद न्यदास्ते"

एवम् सति ' तत् तेज ऐक्षत बहु स्याम् प्रजायेयेति, तदपोऽसृजत ' इति श्रुते स्तेजोऽभिमानी रुद्रोऽपः सृजति, तासु च स्ववीर्यम् क्षिपति, तासु सत्त्वसहितो विष्णुरभिवर्तते इति। ' आपो नारा नरो रुद्रः ' इति श्रुतिदर्शना द्रुद्रसम्भूतापस्त्वायतनत्वेन विष्णोर्नारायणसंज्ञता। ' ता आप ऐक्षन्त ' ' ता अन्न मसृजन्त ' इति श्रुते स्तदभिमानी नारायणोऽन्न-शब्दवाच्याम् पृथिवी मुत्पादयति। तत्र पृथिवीतत्त्वरूपे अण्डे हिरण्य-गर्भः संवर्तते। तथा हि श्रूयते–"अण्डम् हिरण्मयम् मध्येसमुद्रम् रुद्रस्य वीर्यात् प्रथमम् मम्बभूव। तस्मिन् ब्रह्मा विष्णुर्जातो जातवेदाः" इति ॥

' अप एव ससर्जादौ तासु वीर्यमवासृजत्। तदण्डमभवद्धैमम् सहस्रांशुसमप्रभम् ॥ तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः। आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ अयनं तस्य ता यस्मात् ततो नारायणः स्मृतः। नारायणः परोऽव्यक्ता दव्यक्तादण्डसम्भवः॥ अण्डस्यान्त स्त्विमे लोका स्सप्तद्वीपा च मेदिनी '

इति मनुस्मृतिः ॥

---

पुरुषस्य नारायणस्य। "वेदेन. रूपे व्याकरोत्. सतासती प्रजापति''रिति वाक्ये हिरण्यगर्भस्य। अत्र हि रूपग्रहणं नाम्नोऽप्युपलक्षणम्। नामरूपव्याकरणयो स्समानकर्तृकत्वनियमात्। इत्येवं जीवोपकरणसृष्ट्यात्मकनामरूपव्याकरणकर्तृत्वविषयश्रुतिविरोधसमाधान मिह क्रियते। अध्यायपेटिकापादसङ्गतय . । पूर्वाऽधिकरणे प्राणनामरूपमात्त्र मिन्द्रियाणां पूर्वपक्षबीजतया बुद्धिस्थ मासीदिति नामरूपप्रसङ्गा त्तद्व्याकर्ता निरूप्यत इत्यनन्तरसङ्गतिः।

अत्रायं पूर्वपक्षाऽभिप्रायः। "तत्तेज ऐक्षते" त्यादिश्रुते स्सम्बृंहणानुसारेण वीर्यक्षेपादिद्वारा पृथिव्यादिसृष्टिपरत्व मङ्गीकरणीयम्। वीर्यक्षेपकत्वञ्च मूर्त्यात्मन स्तेजोऽभि-मानिनो रुद्रस्यैवे त्युदाहृतपुराणवचना दवगम्यते। "तेन क्षिप्तम् रसेवीर्यम् परम् मूर्त्यभिमानिने"ति। अतो यस्य जले पृथिव्युत्पादनसामर्थ्याधायकबीजक्षेपकत्वम् तस्यैव जलस्रष्टृत्वं तत्सृष्टिसङ्कल्परूपेक्षणकर्तृत्वञ्च वक्तुं युक्तमिति। "तत्तेज ऐक्षते" ति वाक्यन्तु

पुराणञ्च—

'रुद्रसंज्ञस्य देवस्य रूपे मूर्तिः प्रजायते। तेन क्षिप्तम् रसे वीर्यम् परम् मूर्त्यभिमानिना॥ तदण्डमभवद्वीर्यम् सहस्रकिरणप्रभम। विष्णु स्तत्प्राविशत्साक्षा न्मम शक्तेस्तु वैभवात्॥ पुनर्नारायणाख्याम् मे नियोगा त्प्राप्तवा नसौ। इम ञ्चोदाहर त्यत्र श्लोकम् नारायणम् प्रति। आपः सूक्ष्मो रसो ज्ञेयो रसो नारः प्रकीर्तितः। नरजात स्ततो ब्रह्मा नरः साक्षाच्छिवः स्मृतः॥ नारमस्यायनम् प्रोक्तम् तेन नारायणः स्मृतः॥ ब्रह्माऽपि नरशार्दूल गन्धमूर्तिम् समाविशत॥' इत्यादि। एवञ्च 'वेदेन रूपे व्याकरोत्। सतासती प्रजापतिः' इत्यादिश्रुतेः अण्डान्तर्वर्ती हिरण्यगर्भो वा। 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' इत्यादिश्रुते नारायणो वा देवादीना मण्डान्तर्वर्तिनाम् नामरूपकर्ता भवितुमर्हति, न ब्रह्माण्डादेरुत्तीर्णः परमेश्वर इति पूर्वः पक्षः॥

सिद्धान्तस्तु—न युक्तः प्रतिपादितसृष्टिक्रमः। किन्तु 'सदेव सोम्येद मग्र आसी देकमेवाऽद्वितीयम्' 'तदैक्षत बहु स्याम् प्रजायेयेति

---

रुद्रविषयम्। एवं "ता आप ऐक्षन्ते"ति वाक्यमपि जलाभिमानिनारायणविषयमेव। "यतो विष्णु स्तत्प्राविशदि" त्याद्युपबृंहणश्लोकेन। तद्वीर्यं कथं ब्रह्माण्डमभव दित्याकाङ्क्षाया म्परमेश्वरदत्तसामर्थ्यचस्य विष्णो स्तदेववीर्य मण्डरूपेणपरिणामयितुं तन्मध्ये हिरण्यगर्भं स्रष्टुञ्च तद्वीर्याऽऽहितसामर्थ्यचजलप्रवेशं तमेव निमित्तं कृत्वा परमेश्वरनियोगा न्नारायणसंज्ञा भाक्त्वञ्च प्रतिपाद्यते। ऐवञ्च तदनन्तर मण्डमध्ये देवादिनामरूपव्याकर्तृत्वञ्च यथार्हं तेषामेव रुद्रनारयणहिरण्यगर्भाणा मिति युक्तम्। अतएव श्रुतावपि। "सेयं देव तैक्षत हन्ताह मिमा स्तिस्रो देवता" "अनेनजीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकणवाणी" ति तेजोऽबन्नाभिमानिरुद्रनारायणहिरण्यगर्भात्मकजीवरूपेणैव नामरूप व्याकर्तृत्वम् प्रतिपाद्यते। "अण्डम् हिरणमय" मिति भाष्योदाहृतश्रुतौ विष्णु स्सेन्द्रः। तोयाभिमानिनो नारायणस्योत्पत्ते रण्डसृष्टितः प्राचीनत्वात्। "अपएव ससर्जादा" वित्यादिमानववचनानाम् "तत स्स्वयम्भू र्भगवा नव्यक्तो व्यञ्जय न्निदम्। महाभूतादि-

तत्तेजोऽसृजत ' इत्यादिश्रुतेः सच्छब्दवाच्यम् ब्रह्मैव पञ्चभूतकारणम्। तेजःप्राथम्यम् परिहृतम् । ततश्चाकाशादिपृथिव्यन्तम् सदाशिवादि- संज्ञया पूर्वपूर्वकारणरूपम् ब्रह्म उत्तरोत्तरम् कार्यम् सृजतीति, ' तदैक्षत तत्तेज ऐक्षत ता आप ऐक्षन्त ' इति श्रुत्यावगम्यते। 'हन्ताह मिमा स्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तासाम् त्रिवृतम् त्रिवृत मेकैकाम् करवाणि' इति त्रिवृत्कुर्वत एव परमेश्वरस्य वाय्वादिरूपस्य तिस्रो देवता स्तेजोऽबन्नात्मिकाः ब्रह्मविष्णु. रुद्ररूपजीवात्मनानुप्रविश्य नामरूपकृति रवगम्यते । अत स्त्रिवृत्कुर्वत एव चतुर्मुखाद्यात्मनः सकलनामरूपकृतिरिति युक्तम्। त्रिवृत्करणन्तु केवलम् चतुर्मुखस्य न सम्भवति। त्रिवृत्कृतै र्हि तेजोऽबन्नै रण्डमुत्पद्यते। तत्र पश्चा च्चतुर्मुखसृष्टिः, ' अण्डम् हिरण्मयम् मध्येमसुद्रम् रुद्रस्य वीर्या त्प्रथमम् सम्बभूव, तत्र ब्रह्मा विष्णु र्जातो जातवेदाः' इति श्रुतेः॥

---

वृत्तौजाः प्रादुरासी त्तमोनुदः । योऽसा वतीन्द्रियग्राह्य स्सूक्ष्मोऽव्यक्त स्सनातनः । सर्वभूतमयोऽचिन्त्य स्सएव स्वय मुद्बभौ । सोऽभिध्याय शारीरा त्स्वा त्सिसृक्षु र्विविधाः प्रजा" इति पूर्वभागः । तत्र तमोनुदइति पञ्चम्यन्तपदं परमेश्वरा त्सदाशिवमहेश्वरक्रमे णोत्पन्नम् तेजोऽभिमानिनम् रुद्र माचष्टे। तत स्स्वयम्भू र्भगवा न्नारायण स्तोयाभिमानी प्रादुर्भूत इत्यर्थः । "सोऽभिध्याये"ति तच्छब्द स्तमोनुदम् रुद्र म्परामृशति । ननु तत. प्रादुर्भूतम् नारायणम्। "रुद्रस्य वीर्या"दिति श्रुते रुद्राद्धनत्वा त्तदनुसारिपुराणवचन स्योदाहरिष्यमाणत्वा च्च। "आपो नारा इति प्रोक्ता" इति नारायणनामनिर्वचनम्। "तत स्स्वयम्भू र्भगवानि" त्युक्तप्रादुर्भवितृविषयम् । ननु वीर्यक्षेप्तृविषयम् "विष्णु. स्तत्प्राविश त्साक्षा" दित्युदाहरिष्यमाणपुराणवचने यौगिकार्थस्य तत्रैव प्रतिपादनात्। अत उदा- हृतश्रुतिस्मृतिपुराणवचनाना मैकार्थ्य मिति। सिद्धान्त स्त्वेवति । अय माशयः। "तदैक्षत बहुस्यां प्रजायेयेति" प्रतिपाद्यमानः परमेश्वरस्य बहुभवनसङ्कल्प स्साक्षा त्तस्यैव बहुभवनविषयः स्वरसतः प्रतीयते। न तस्याऽसतिबाधके तत्कार्यपरम्पराप्राप्यगौणबहुभवन- विषयतया योजनम् कर्तुम् युक्तम् । नचाऽत्र किञ्चिद्बाधक मस्ति । पुराणेषु पूर्वपूर्वकार्याधिष्ठातॄणा मुत्तरोत्तरकार्यस्रष्टृत्वं प्रतिपाद्यतइतिचे त्किन्ततः । न तेन बहुभवन-

ननु त्रिवृत्करणस्य केवलम् चतुर्मुखकर्तृत्वम् सम्भवति अण्डसृष्ट्यु-त्तरकालम् चतुर्मुखसृष्टजीवेषु त्रिवृत्करणप्रकार उपदिश्यते 'यथा खलु सोम्येमा स्तिस्रो देवताः पुरुषम् प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानी

---

सङ्कल्पादिप्राप्तं परमेश्वरस्य सर्वत्र कार्ये साक्षात्कर्तृत्वं बाध्यते। उभयकर्तृकत्वाऽविरोधात्। अतएव प्रत्यक्षतः कुलालादिकर्तृकत्वेनाऽवगतस्य घटादेः श्रुतिप्राप्तम् परमेश्वरकर्तृकत्व मभ्युपगम्यते।

ननु तेषां पुराणवचनानां "तत्तेज ऐक्षते" त्यादिनैव मूलेन भाव्यमिति तस्य परमेश्वरविषयत्वं नसम्भवतीतिचे त्तन्मूलानां"अण्डम् हिरण्मय" मित्यादिवचनान्तराणां सत्त्वात्"तेन क्षिप्तम् रसे वीर्य" मित्यादिपुराणवचनार्थानां "तत्तेज ऐक्षते" त्यादि प्वप्रतिपादनेन तेषां "अण्डं हिरण्मय"मित्यादिश्रुत्यन्तरमूलत्वस्याऽवश्य मभ्युपगन्तव्यत्वा च। ततः "तेजोऽत स्तथाह्याहे"त्यधिकरणोक्तरीत्या "तत्तेज ऐक्षत, ता आप ऐक्षन्ते"ति वाक्ययोः परमेश्वरबहुभवनसङ्कल्पप्रपञ्चनपरतया तस्यैव सर्वेषु भूतेषु साक्षात्कर्तृत्वप्रतिपादने पर्यवसान मभ्युपगन्तव्यम्। ततश्च-तदनन्तरम् प्रतिपाद्यमाने नामरूपव्याकरणेऽपि तस्य साक्षादेव कर्तृत्वप्रतिपादनं पर्यवस्यति। प्राचीनसन्दर्भैकरूप्यात् त्रिवृत्कुर्वतएव नामरूपव्याकरणकर्तृ-त्वोपदेशाच्च। एवञ्च "व्याकरवाणी"त्युत्तमपुरुषस्याऽपि मुख्यत्वं लभ्यते। "जीवेनात्मने"ति तु तेजोभिन्नाभिमानिरुद्रनारायणहिरण्यगर्भजीवरूपशरीरेणोपलक्षित इत्येतदर्थकत योपपाद-नीयम्। पूर्वोत्तरसन्दर्भानुसारेण व्याकरणस्य परमेश्वरकर्तृकत्वाऽवगमा त्तथाभूतेन शरीरेण सहे त्येतदर्थकतया वोपपादनीयम् देवादिनामरूपसृष्टौ हिरण्यगर्भादीनाम प्यप्राधान्येन कर्तृत्वस्य पुराणादिषु प्रतिपन्नत्वात्॥

सूत्रार्थस्तु— तुशब्द श्शङ्काव्यावृत्त्यर्थः। संज्ञामूर्तिक्लृप्तिः = नामरूपव्याकरणम्। परमेश्वरस्यैवेति शेषः। कुतः— त्रिवृत्कुर्वतः=त्रिवृत्करणं कुर्वतएव। उपदेशात्—नामरूप। व्याकरणोपदेशात्। "नामरूपे व्याकरवाणी"त्युक्त नामरूपव्याकरणम्। "तासां त्रिवृतं त्रिवृत मेकैकांकरवाणी"ति त्रिवृत्करणं कुर्वतः परमेश्वरस्यै वोपदिश्यते-तस्मा दित्यर्थः। उत्तरसूत्र मवतारयितु माशङ्कते—न न्विति। त्रिवृत्कुर्वत उपदेशा दिति सूत्रेण नाम-रूपव्याकरणं त्रिवृत्करणे—नैककर्तृकत्वा त्परमेश्वरकर्तृक मित्युक्तम्। त अयुक्तम्। त्रिवृत्करणस्याऽपि केवलहिरण्यगर्भकर्तृकत्वसम्भवात्। नच त्रिवृत्कृते स्तेजोऽबन्न रूपादितेऽण्डे हिरण्यगर्भसृष्टि रत स्त्रिवृत्करणे तस्य कर्तृत्वं न सम्भवतीति वाच्यम। त्रिवृत्करणस्याऽण्ड-सृष्टिपूर्वभावाऽसिद्धेः। अण्डसृष्ट्युत्तरकालं तदन्तर्वर्तिदेवमनुष्यादिनामरूपव्याकरणे च

ह्यीति अन्नमसितम् त्रेधा विधीयते तस्य यः स्थविष्ठो धातु स्तत्पुरीषम् भवति यो मध्यम स्तन्मांसम् योऽणिष्ठ स्तन्मनः' इत्यादिना इत्याशङ्क्य परिहरति—

**मांसादि भौमम् यथाशब्दमितरयो श्च ॥ २—४—१८ ॥**

'अन्न मशितम् त्रेधा विधीयते' इत्यादौ प्राङ्निरूपितात् त्रिवृत्करणा न्नर्थान्तरभूतएवाण्डान्तर्वर्तिपुरुषोपभुक्तान्नादीनम् परिणामप्रकार उच्यते, न तु त्रिवृत्करणम् । अन्यथा हि मांसमनसोः पुरीषादणीयस्त्वेना प्यतैजसत्वप्रसङ्गः । तथा सति 'अन्नमसितं त्रेधा' इति भूमे रेव त्रैविध्योपक्रमः 'अन्नमयम् हि सोम्य मनः' इति मनसो भौमत्वञ्च विरुध्येत । तथेतरयो

---

निर्वृत्ते प्राणिभि र्भुज्यमानेषु तेजोऽबन्नेषु हि त्रिवृत्करणप्रकार आम्नायते । "यथाखलु सोम्येमा" इत्यादिना अण्डान्तर्वर्तिषु चाग्न्यादित्यादिषु त्रिवृत्करणप्रकारः प्रदर्श्यते । "यदग्ने रोहितम् रूपम् तेजस स्तद्रूपम् यच्छुक्लम् तदपां यत्कृष्णं तदन्नस्ये"त्यादिना नामरूप व्याकरणानन्तरञ्च त्रिवृत्करणं पठ्यते । "स्वयं देव तेमा स्तिस्रो देवता अनेन जीवेनात्मनाऽनु प्रविश्य नामरूपे व्याकरोत् । तासाम् त्रिवृतम् त्रिवृत मेकैका मकरोत्"। इति । अत स्त्रिवृत्कुर्वत उपदेशा दिति मौत्रहेतु रयुक्त इत्याशङ्कार्थः ।

"अन्न मशितं, त्रेधा विधीयत" इत्यादिना" "प्राक् तासां त्रिवृतं त्रिवृत मेकैकां करवाणी"ति निर्दिष्टं त्रिवृत्करणं नोपदिश्यते । किन्तु तस्मा दतिरिक्तएव पुरुषोपभुक्तान्नादीनां परिणामप्रकारएवोच्यत इत्यर्थः ॥ अन्यथेति । अत्रिवृत्कृतानि पृथिव्यप्तेजांसि कार्यकारण-भावापन्नानि स्थूला न्यणू न्यणीयांसि । ततस्त्रिवृत्कृतेष्वपि तत्तद्भूतांशानां स्वकारणानुगुण्येन स्थूलत्वाऽणुत्वाऽणीयस्त्वानि स्युः । "तस्मा दन्न मशित"मित्यादिवाक्यं त्रिवृत्करण-प्रदर्शनपरश्चेत् । "स्थविष्ठम् पुरीषम् पार्थिव मणु मांस माप्य मणीयो मनश्च तैजस मि"त्याप-द्येत । तथा "आपः पीता स्त्रेधा विधीयन्ते तासाम् य स्थविष्ठो धातु स्तन्मूत्रम् भवति । यो मध्यम स्तल्लोहितम् योऽणिष्ठ स्सप्राण"इति । द्वितीयपर्यायेऽपि मूत्रं पार्थिवं लोहित माप्यं प्राण स्तैजस इति च भवेत् । एवम् "तेजोऽशितम् त्रेधा विधीयते तस्य यस्थविष्ठोधातु स्तदस्थि भवति । यो मध्यम स्स मज्जा । योऽणिष्ठ स्स वाक्"। इति तृतीयपर्यायेऽपि स्थविष्ठ मस्थि पार्थिव मणु मज्जा आप्या अणिष्ठा वाक् तैजसीति भवेत् ॥

रप्तेजसो स्त्रैविध्यम् विरुध्येत । तदिदमाह- 'मांसादि भौमम् यथाशब्दमितर योश्च 'ति । पुरीषव न्मांसमनसी अपि भौमे इष्येते । तथा मूत्रवल्लोहित-प्राणावाप्यौ, तथास्थिवत् मज्जावाचौ तैजस्ये ॥

ननु पूर्वमेव त्रिवृत्कृत श्चेत् त्र्यात्मकम् वस्तु कथमन्नमापस्तेज इत्युच्यत इत्यत आह—

अस्तु को दोष इत्याशयङ्क्य सूत्रलभ्य मर्थ माह—तथासतीति । " अन्न मशितम् त्रेधा विधीयत " इति पुरीषमांसमनसां पार्थिवत्व मुक्तम् । " आपः पीता स्त्रेधा विधीयन्त " इति मूत्रलोहितप्राणाना माप्यत्व मुक्तम् । " तेजोऽशितम् त्रेधा विधीयत" इति अस्थिमज्जावाचाम् तैजसत्व मुक्तम् । पुनश्च " अन्नमयम् हि सोम्य मनः आपोमयः प्राणः " इति मनः प्राणयोःपार्थिवाप्यत्व मुक्तम् । एतत्सर्वं विरुद्ध्येतेत्यर्थः । उपन्यस्तविपर्ययपर्यवसानं सूत्रारूढं करोति—तदिद माहेति । आदिशब्देन मनो गृह्यते । यथा शब्द मुदाहृतश्रुत्यनुसारे णेतरयोरपि पर्याययो विकारा बोद्धव्या इति सूत्रशेषार्थः ।

यथाशब्दं " अन्न मशित " मिति श्रुत्यनुसारेण मांसादि—मांसमनसी । भौमम्—भूमेर्विकार इतीष्यते । तद्विरुध्येत । तथा—इतरयो रप्तेजसोः त्रैविध्यञ्च विरुद्ध्येत । तस्मात "अन्न मसित"मित्यादिकम् " तासाम् त्रिवृतम् त्रिवृत मेकैकाम् करवाणी " ति प्रागुक्तत्रिवृत्करणं नभवतीति सूत्रार्थः ॥ त्रिवृत्करणस्य प्रयोजनन्तु अत्रिवृत्कृतानां तेषां कार्यारम्भसामर्थ्याभावात् त्रिवृत्कृतैरेव हि तेजोऽबन्नै रण्ड मुत्पादनीयमित्येव । तदुक्तम् " नानावीर्याः पृथग्भूता स्तत स्ते संहतिम् विना । नाशक्नुव न्प्रजा स्स्रष्टु मसमागम्य कृत्स्नशः । समे त्यान्योन्यसंयोगम् परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्ड मुत्पादयन्ति ते " इतिपुराणे ।

एवञ्च यद्य प्यण्डसृष्टयुत्तरभाविनो हिरण्यगर्भस्य त्रिवृत्करणकर्तृत्वाऽयोगेऽपि तत्पूर्वभाविनो नारायणस्य रुद्रस्य वा तत्कर्तृत्व माशङ्कितुम् शक्यम् तथाऽपि "हन्ताऽह मिमा स्तिस्रो देवताः" " अनेन जीवेनात्मानाऽनुप्रविश्य " त्यत्र जीवशब्दस्य तेजोऽबन्नाभिमानिरुद्रनारायण-हिरण्यगर्भपरत्वात् । तन्मध्ये हिरण्यगर्भस्य त्रिवृत्करणकर्तृत्वाऽसम्भवेन नामरूपव्याकरणकर्तृत्वाऽसम्भवे स्थिते त्रितयसाधारणं जीवशब्द मवलम्ब्य रुद्रस्य नारायणस्य वा त्रिवृत्करण-कर्तृत्वाशङ्कामूलं नामरूपव्याकरणकर्तृत्वबोधं नप्रवर्तेइति व्यर्था तयो स्त्रिवृत्करणकर्तृत्वाशङ्का निरालम्बना चेतितात्पर्यम् ।

# वैशेष्या त्तु तद्वाद स्तद्वादः ॥ २–४–१९ ॥

अन्नादिभूयस्त्वेन वैशेष्यादन्नवाद इति । तस्मा त्त्रिवृत्कुर्वतः परमेश्वरस्य चतुर्मुखाद्यात्मना सकलनामरूपसृष्टिरिति युक्तमेव ॥

इति संज्ञामूर्तिकॢप्त्यधिकरणम्

---

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः

---

अन्न मशित " मित्यादिना प्रागेव त्रिवृत्कृतानां तेजोऽबन्नानां प्राणिभि र्भुक्तानां परिणामप्रकारमात्र मुच्यते । नतु त्रिवृत्करणमिति युक्तम् । प्रागेव त्रिवृत्कृतत्वे त्र्यात्मकेषु वस्तु ष्वेकैकाभिशब्दप्रयोगस्याऽयुक्तत्वा दित्याशङ्कोत्तरत्वेनोत्तरसूत्र मवतारयति । नन्विति ॥

अन्नादीति । अर्थं मन्न मर्थं मितर द्वन्द्वय मित्येवंप्रकारे णाऽन्नादिभूतानां त्रिवृत्करणेन स्वभागस्य वैशेष्या दाधिक्या द्धेतो स्तद्वादः अन्नादिशब्दै र्व्यवहारो युक्तइत्यर्थः । द्विरुक्ति रध्यायसमाप्तिम् द्योतयति ॥

इति संज्ञामूर्तिकॢप्त्यधिकरणम्

---

इति श्री नागलिङ्गशिवाराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभाष्यतात्पर्यीय ब्रह्मसूत्रभाष्यव्याख्यायां द्वितीयाध्यायस्य चतुर्थः पादः

---

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाचार्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ तृतीयाध्यायस्य

## प्रथमः पादः

---

अथ तदन्तरप्रतिपत्त्यधिकरणम् १

**तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्**

॥ ३-१-१ ॥

अतीतेऽध्याये प्रथमाध्यायसिद्धस्य ब्रह्मकारणवादसमन्वयस्य विरोधः परिहृतः। तथा हि—प्रथमे पादे साङ्ख्यादितर्कविरोधः परिहृतः। द्वितीये प्रधानकारणवादादिषु तर्कविरोधः प्रदर्शितः। तृतीये भूतसृष्ट्यवान्तरविरोधपरिहारपूर्वकम् जीवस्य नित्यत्वादिधर्मो निरूपितः। चतुर्थे प्राणेन्द्रियाणाम् स्वरूपम् ब्रह्मणः सकाशात् तेषामुत्पत्तिमप्यभिधाय सर्वेषां नामरूपव्याकरणञ्च निरूपितम्। अत्र तृतीये प्रथमपादे नित्यत्वादियुक्तस्य जीवस्य गत्यागतिनिरूपणम् क्रियते। द्वितीये तदवस्थानिरूपणपूर्वक मीश्वरस्य स्वरूपलक्षण मुच्यते।

तृतीये तदुपासनाविशेषाणाम् गुणोपसंहारः। चतुर्थे त्वाश्रमादिधर्म इति विवेकः॥

---

अथ तदन्तरप्रतिपत्त्यधिकरणम् १

सुखबोधाय वृत्तवर्तिष्यमाणाऽध्यायपादार्था ननुकीर्तयन् सङ्गति न्दर्शयति —

अतीतेऽध्याय इति। आद्येनाऽध्यायद्वयेन वेदान्तवेद्यं सिद्धरूपं परम्ब्रह्म सम्भावितसकलविरोधपरिहारेण निरूपितम्। अन्तिमेनाऽध्यायद्वयेन तत्प्राप्तिसाधनात्मकम् तत्प्राप्तिप्रकारात्मकञ्च साध्यरूपं वस्तु निरूप्यते।

अत्र प्राथमाधिकरणे जीवः परलोकगतागतेषु देहान्तरप्राप्तये भूतसूक्ष्मै र्वेष्टितो याति उतावेष्टित इति संशयः ॥

जीवो देहान्निर्गच्छन् भूतसूक्ष्मै र्भाविशरीरबीजैरपरिष्वक्त एव यातीत्युच्यते, भूतानाम् सर्वत्र सुलभत्वेनापार्थकत्वादायासस्य ॥

इति प्राप्ते ब्रूमः—जीवो देहान्तरप्राप्तये भूतसूक्ष्मैः परिष्वक्तो यातीति पञ्चाग्निविद्यायाम् प्रश्नप्रतिवचनाभ्या मवगम्यते। कथम् 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रश्नः 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रतिवचनम्। तत्र चायमर्थः संपिण्डितः—ब्राह्मणादिदेहस्थो जीवः स्वाहादानादि कर्म कृत्वा तत्फलभोगायास्माद्देहादुत्थाय गच्छन्नेतद्देहस्थाभिरद्भि र्भूतान्तर-संसृष्टाभिः सूक्ष्माभिः परिष्वक्तः अग्नित्वेन निरूपितम् द्युलोकम् प्राप्य ताभिरेवामृतमयदेहाकारेण परिणताभिरद्भिः परिष्वक्तो देवानाम् शेष-भाव मुपगम्य तैः सह तत्र भोगविशेषाननुभूय भुक्तावशिष्टेन ब्राह्मणादि-देहप्रापकेन कर्मणा सह पुनरिमंलोक मागत्य कर्म कर्तुम् ताभिरेव परिष्वक्तोऽग्नित्वेन निरूपितम् पर्जन्यम् प्राप्य वर्षधाराभिः सह अग्नित्वेन

---

ब्रह्मप्राप्तिसाधननिरूपणस्य ब्रह्मप्राप्तिप्रकारनिरूपणस्यच ब्रह्मस्वरूपावधारणाधीनत्वा दस्याऽध्यायद्वयस्य पूर्वाध्यायद्वयानन्तर्य मिति पूर्वोत्तराध्यायद्विकयो र्हेतुहेतुमद्भावसङ्गतिः।

तत्र साधनाधीनत्वा त्साध्यलाभस्य साधननिरूपणार्थस्य तृतीयाध्यायस्य फलाध्याया त्पूर्वभाव इत्येतयो रध्याययो रवान्तरसङ्गतिः।

ब्रह्मप्राप्तिसाधनं संसारा द्वैराग्यं ब्रह्मदिप्सा तदुपासना तदङ्गाश्रमादिधर्मकलाप श्चेति चतुर्विधम्। तत्राऽधिकारिणो वैराग्यदृढीकरणाय क्षयिष्णुत्वसातिशयत्वादिना संसारस्य दुःखरूपतां ख्यापयितु मिह परत्र परिभ्रमणेन तस्य दोषवत्त्वं प्रथमपादे निरूप्यते। अत्र जीवस्य परलोकगतागतिविषयः देही देहान्तरगमने देहकारणभूतसूक्ष्मै स्संयुक्तो गच्छति? उताऽसंयुक्त? इति संशये-देहारम्भाय तत्रतत्र भोग्यभोगोपकरणभोगस्थानक्रोगायतनानामपि तत्रत्यैरेव भूतै रदृष्टाकृष्टै रारम्भस्य सम्भावितत्वा त्तदर्थम् भूतसूक्ष्मै

निरूपिताम् पृथिवीमुपगम्य व्रीह्यादिसस्येन अन्नाकारपरिणतेन सह अग्नित्वेन निरूपितम् पुरुषम् प्राप्य तत्र शुक्लाकारपरिणताभिरद्भिः परिष्वक्तोऽग्नित्वेन निरूपिताम् योषितम् प्राप्य तत्र देहाकारपरिणताभिः पुरुषशब्दाभिलापनीयाभिरद्भिः परिष्वक्तः कर्मानुरूपब्राह्मणादिदेहेन जायत इति। तदेतत्सर्वमुत्तरत्राभिव्यज्यते। तस्मात् पुरुषो भूतसूक्ष्मैः वेष्टित एव देहान्तरम् प्राप्नोतीति ॥

नयनापेक्षाभावात् भूतसूक्ष्मैरसंयुक्तएव गच्छतीति पूर्वपक्षेप्राप्ते—सिद्धान्तमाह— तदन्तरप्रतिपत्ताविति ॥

तदन्तरप्रतिपत्ता वित्यत्र तच्छब्देन संज्ञामूर्तिसूत्रगता मूर्तिः परामृश्यते । तस्मा त्तदन्तरप्रतिपत्तौ—देहान्तरप्राप्तौ जीवः सम्परिष्वक्तः भूतसूक्ष्मैः संयुक्तएव रंहति= गच्छतीतिप्रश्ननिरूपणाभ्यां पञ्चाग्निविद्यायाम् "वेत्थ यथा पञ्चम्या माहुता" वित्यादि-प्रश्नोत्तराभ्या मवगम्यत इति। तथाहि—श्वेतकेतु मारुणेय म्पाञ्चालराजः प्रवाहणः "वेत्थ यथा पञ्चम्या माहुता वापः पुरुषवचसो भवन्ती" ति पप्रच्छ। तस्मि न्निमं प्रश्नम् प्रतिवक्तु मजानति तत्पितरि चाजानति तत्पित्रा समागत्य पृष्टः प्रवाहण स्स्वयमेव प्रश्नविषयम् निरूपयन् का स्ताः पञ्चाहुतयो यासा मुत्तमाहुता वापः पुरुषशब्दाभिलपनीयतां भजन्त इत्याकाङ्क्षायाम् "असौ वाव लोको गौतमाऽग्नि" रित्यादिना द्युपर्जन्यपृथिवीपुरुषयोषितः पञ्चाग्नित्वेन रूपयित्वा तेषु श्राद्धासोमवृष्ट्यन्नरेतोद्रव्यकाः पञ्चाहुती रुपदिश्य तदनन्तरमिति तु पञ्चम्या माहुता वित्यादि स्वपृष्टार्थोपसंहारः कृतः ।

प्रश्नप्रतिवचनयोः भूतवेष्टितो जीवो यातीत्येतदर्थपर्यवसायित्वं सूत्राकार एवोत्तरसूत्रैः प्रपञ्चयिष्यति। अत्र श्रोतॄणा माकाङ्क्षाशान्तये तमर्थम् सर्वम् निष्कृष्य दर्शयति— तत्राचाऽय मर्थइति। प्रश्नप्रतिवचनयो रापएव केवला श्श्रूयन्ते न भूतान्तरश्रावण मस्तीति शङ्कानिराकरणार्थ मिदम् सूत्रम् ॥

## त्र्यात्मकत्वा त्तु भूयस्त्वात् ॥ ३–१–२ ॥

सर्वस्य त्रिवृत्करणेन त्र्यात्मकत्वा द्भूतान्तरसंसृष्टा एवापो भूयस्त्वा दप्छब्देनोच्यन्ते । अतः 'पञ्चम्यामाहुतावापः' इति केवलाप्छब्दग्रहणेऽपि न विरोधः ॥

## प्राणगतेश्च ॥ ३–१–३ ॥

' प्राणमनूत्क्रामन्तम् सर्वे प्राणा अनूत्क्रामन्ति ' इति जीवेन सहेन्द्रियगत स्तदाश्रयत्वेन देहगमनमपि प्रतीयते । अतोऽपि भूतसूक्ष्मदेह-वेष्टित एव यातीति ॥

आशङ्क्य परिहरति —

---

सर्वस्येति। प्रश्नप्रतिवचनयो रपाम् पुरुषशब्दाभिलपनीयत्वम् श्रूयते । तद्धि पुरुषाधिष्ठानदेहारम्भकत्वेनैवोपपद्यते । देहारम्भकत्वं हि न केवलाभि रद्भि स्सिध्यति । देहाद्यारम्भार्थमेव तेजोऽबन्नानां त्रिवृत्कृतत्वात् । एवं त्रयाणां देहारम्भकत्वेऽपि देहेऽपां कार्यस्य रसलोहितादे र्भूयसो दृश्यमानत्वा द्भूतसूक्ष्मास्त्रयोऽप्यप्छब्देनोच्यन्त इत्यर्थः।

न केवलं प्रश्नप्रतिवचनयो श्श्रूयमाणाना मपां त्र्यात्मकत्वादिना त्रिविधभूतसूक्ष्म-परता । किन्तु तासाम् सूक्ष्मदेहरूपत्वादपीति हेत्वन्तरप्रदर्शनार्थम् सूत्रम् ॥

अस्मादपि जीवो भूतसूक्ष्मै र्वेष्टितएव परलोकगतागतेकरोती त्यवगम्यते । कुतः । " तमुत्क्रान्तम् प्राणोऽनूत्क्रामति । प्राण मुत्क्रामन्तम् सर्वेप्राणा अनूत्क्रामन्ती"ति । परलोकम्प्रति गमनसमये जीवस्येन्द्रियसाहित्यम् श्रूयते । देह मनाश्रि त्येन्द्रियाणाञ्च न गति स्सम्भवति । तस्मा न्मार्गे स्थूलदेहाभावा दिन्द्रियाश्रयत्वोपपत्त्यर्थ मेतासा मपामेव त्र्यात्मकतया सूक्ष्मदेहत्व माश्रयणीय मिति भावः ।

नन्वेव मिन्द्रियाणां जीवानुगत्यभ्युपगमे तथा मन्त्राद्यप्ययश्रावणस्य कागतिरित्याशङ्का-निराकरणार्थं सूत्रम् ॥

## अग्न्यादिगतिश्रुते रितिचे न्न भाक्तत्वात् ॥ ३-१-४ ॥

'यत्रास्य पुरुषस्य मृतस्याग्निम् वागप्येति वातम् प्राण श्चक्षु रादित्यम्' इत्यादाविन्द्रियाणा मग्न्याद्यभिगमः श्रूयते। ततो जीवेनेन्द्रियाणाम् न सहगमन मितिचेत्—न, वागाद्यभिमानिदेवतासु वागादिशब्दानाम् भाक्तत्वात् , 'ओषधी र्लोमानि वनस्पतीन् केशाः' इत्यनपियाद्भि र्लोमादिभिः सह पाठात ॥

## प्रथमेऽश्रवणा दिति चे　　ता एव ह्युपपत्तेः ॥ ३-१-५ ॥

प्रथमे द्युलोकाग्नावपामश्रवणात् नापो गच्छन्ति 'एतस्मिन्नग्नौ देवाः श्रद्धाम् जुह्वति' इति श्रद्धैव श्रूयते इतिचेत्—न । आप एव श्रद्धाशब्देनोच्यन्ते। कथम्? अप्सु पृष्टासु तदुत्तरोपपत्तेः । श्रद्धाशब्द श्चाप्सु युज्यते, 'श्रद्धा वा आपः' इति श्रुतेः ॥

---

अग्न्यादिगतिश्रुतेः "यत्राऽस्य पुरुष स्याग्नि वागप्येती" त्यादिश्रुतौ वागादीन्द्रियाणा मग्न्याद्यप्ययश्रवणा न्न तेषां जीवेन सह गमन मितिचे न्न भाक्तत्वात् इन्द्रियाणां अग्न्याद्यप्ययश्रुतेः गौणत्वा दित्यर्थः । तस्या श्श्रुतेः कथम् गौणत्व मित्याशङ्क्याह—ओषधी र्लोमानीत्यादि । अनपियद्भि र्लोमादिभि स्सह पाठा दितिभावः। द्युलोकाग्निहोमे अपामश्रवणा द्भूतान्तरसंसृष्टाभि स्सूक्ष्माभिरद्भि स्संसृष्टो जीवो यातीति प्रश्नप्रतिवचनाभ्या मवगम्यत इत्युक्त मयुक्तमिति शङ्कानिराकरणार्थं सूत्रम् ॥

प्रथमे "एतस्मि न्नग्नौ देवा श्श्रद्धाम् जुह्वती" ति द्युलोकाग्निहोमे बुद्धिवृत्तिरूपा श्रद्धैव होमद्रव्यत्वेन श्रूयते तस्मा न्नापो होमद्रव्यत्वेन प्रतीयन्त इतिचे न्न आपएव श्रद्धाशब्देनोच्यन्ते "श्रद्धा वा आप" इति श्रुतेः । उपपत्तेः प्रतिवचनस्य प्रश्नाऽनुगुण्योपपत्ते रित्यर्थः ।

पुनराशङ्क्य परिहरति—

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ३–१–६ ॥

अत्र प्रश्नप्रतिवचनयोरापएव प्रतीयन्ते, न तत्परिष्वक्तो जीव इति चेन्न, उत्तरत्र 'अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिम् रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान् नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाश माकाशाच्चन्द्रमस मेष सोमो राजा तद्देवानामन्नम् तम् देवा भक्षयन्ति तस्मिन् यावत्सम्पातमुषित्वाथैतमेवाध्वानम् पुनर्निवर्तन्ते, यथेतमाकाश माकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रम् भवति अभ्रम् भूत्वा मेघो भवति मेघो भूत्वाप्रवर्षति त इह व्रीहियवा ओषधिवनस्पतय स्तिलमाषा इति जायन्ते अतो वै खलु दुर्निष्प्रपततरम् यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' इति वाक्ये द्युलोके सोमराजशब्दोक्तामृतमयदेहवैशिष्ट्येन पुण्यफलमनुभूय

नन्वस्त्वपाम् श्रद्धात्मकानाम् पञ्चस्वप्याहुतिषु होमद्रव्यत्वेन चाऽनुवृत्तया गतागमसिद्धिः। तथाऽपि भूतान्तरसंसृष्टाभि स्ताभिरद्भि स्सम्परिष्वक्तो जीवो गच्छती त्येत न्नसिद्ध्यति। अश्रुतत्वा दित्याशङ्कानिराकरणार्थं सूत्रम् ॥

"आपः पुरुषवचसो भवन्ति-श्रद्धाम् जुह्वति" इति द्युलोकादिष्वप एव गच्छन्तीति श्रूयते। नहि तत्परिष्वक्तो जीवो गच्छतीति। एवं प्रश्नप्रतिवचनयो र्जीवस्याऽश्रुतत्वा त्तत्संयुक्तो जीवो गच्छतीति वक्तु मयुक्तमिति चेन्न—उत्तरत्र "अथ य इमे ग्रामे" इत्यादि-वाक्ये इष्टादिकारिणां जीवाना म्प्रतीतेः द्युलोकाऽभिसम्बन्धव्यञ्जकशब्दस्य "तस्याहुतं स्सोमो राजा सम्भवती" ति सोमभूतानामेव सोमो राजा इति प्रत्यभिज्ञाना दप्छब्दं नाऽद्भि स्सम्परिष्वक्तानां जीवानामेव प्रतीते रित्यर्थः। "अथ य इम" इत्यादि। अस्याऽय मभावः। पितृयाणवाक्ये सोमराजशब्दनिर्दिष्टा इष्टापूर्तादिकर्मफलं भोक्तुं द्युलोके चन्द्रमसं प्राप्ता इष्टादिकारिण एव। "अथ य इमे ग्रामे इष्टापूर्ते," इत्यादिना उपन्यस्तानां तेषा मेव कर्मफलभोगपर्यन्तं तत्र स्थित्वा तदवसाने पुनराकाशादिक्रमेण भूमा ववतीर्य

पुण्यकर्मावसाने पुनरिहागत्य गर्भप्राप्तवता मिष्टादिकारिणां प्रतीते स्तेषामेव 'तस्मिन्नेतस्मि न्नग्नौ देवाः श्रद्धाम् जुह्वति तस्या आहुतेः सोमो राजा सम्भवति' इत्यत्र सोमराजशब्देन प्रत्यभिज्ञानात् । तस्मात् प्रश्नप्रतिवचनयोरप्यद्भिः परिष्वक्त स्तच्छरीरको जीव एवाप इत्युच्यन्त इति गम्यते । अतो न विरोधः ॥

## भाक्तं वानात्मवित्त्वात् तथा हि दर्शयति ॥३-१-७॥

'एष सोमो राजा तद्देवानामन्नम् तम् देवा भक्षयन्ति' इति सोमराजभावापन्नस्यैव देवै र्भक्ष्यमाणत्वश्रवणा न्नासौ जीव इति चेत्—तन् भाक्तमेव भक्ष्यमाणत्वम् अनात्मवित्त्वेन देवोपकरणभावाभिप्रायम् । तथा हि 'यथा पशु रेवम् स देवानाम्' इति श्रुति रनात्मविदाम् पशुवद्देवोपकरणत्वं दर्शयति । तस्मा दात्मविदां परमेश्वरोपकरणत्ववत् अनात्मविदां देवोपकरणत्वमिति मन्तव्यम् । अतः सर्वथा जीवो देहान्तरप्राप्तौ भूतसूक्ष्मवेष्टित एव यातीति सिद्धम् ॥

इति तदन्तरप्रतिपत्त्यधिकरणम्

---

ब्राह्मणादिजन्मने गर्भप्राप्तेः प्रतिपादनात् । तदत्राऽत्राऽपि सोमराजशब्दनिर्दिष्टा भवितु मर्हन्ति । सोमराजश्रुतिसाम्या द्युलोकस्थितिसाम्या च्चत्येव मिष्टादिकारिणाम् प्रतीतेः जीवस्याऽश्रावण मसिद्धमिति ।

ननु पितृयाणवाक्येऽपि सोमराजशब्दनिर्दिष्टा इष्टादिकारिणो नभवन्ति देवै र्भक्ष्यमाणत्वश्रावणा दितिशङ्कानिराकरणार्थं सूत्रम् ॥

वाशब्द इशङ्कां निवर्तयति । "त न्देवा भक्षयन्ती" ति भक्ष्यत्ववचनं भाक्तं गौणम् । अनात्मवित्त्वात्=इष्टादिकारिणा म्परमेश्वरोपासकत्वाऽभावा द्देवोपकरणत्वाऽभिप्रायम् । तथाहि दर्शयति—" यथा पशुरेवम् स देवानामि"ति श्रुति रनात्मविदाम् पशुव द्देवोपकरणत्वम् दर्शयती त्यर्थः । " एष सोमो राजा " इत्यादि । अत्राऽय म्भावः ।

अथ कृतात्ययाऽधिकरणम् २

# कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् यथेतमनेवञ्च

॥ ३–१–८ ॥

पूर्वत्र भूतसूक्ष्मशरीरयुक्त एव जीवः स्वर्गादिकमुपेत्य देवादिशरीरे निजकर्मानुगुणं भोगं प्राप्नोतीति सिद्धम्। तदिह भोगानन्तरम् स जीवः पुनरिमं लोकं सकर्मशेषोऽवरोहति, निश्शेषभुक्तकर्मा वेति संशयः ॥

तथा सति पुरुषो निरनुशय एव स्वर्गादिमम्लोक मवरोहतीति युक्तम्। अनुशयो नाम कर्मशेषो जीवमनुशेत इति। न स्वर्गादवरोहतोऽनुशयः सम्भवति। अनुशयफलस्य तत्र भुक्तत्वात्। 'यावत्सम्पातमुषित्वा अथैनमेवाध्वानम् पुनर्निवर्तन्ते' इति श्रुति स्तद्विषया। अत्र सम्पातः

---

इष्टादिकारिणःप्रकृत्य श्रुत्यन्तरे "ते चन्द्रम् प्राप्याऽन्नम् भवन्ति। तां स्तत्र देवा यथा सोमम् राजान माप्यायस्वाऽपक्षीयस्वे त्येव मेनाम् स्तत्र भक्षयन्ती"ति तेषामेव देवान्नभावश्रवणात्। इहाऽपि पूर्वापरपर्यालोचनाल्लब्धाना मिष्टादिकारिणामेव देवै र्भक्ष्यमाणत्वश्रावणा त्तेषां व्याघ्रादिभिरिव देवै र्मुख्यतया भक्ष्यमाणत्वे स्वर्गकामादिश्रुतिविरोधप्रसङ्गा त्तेषा मिह कर्मभि र्देवाराधकत्वेन परत्र तत्परिचारकत्वेनच देवोपभोग्यत्वाभिप्रायं भाक्तं तदनीयत्वश्रावणं व्याख्येय मिति ॥

इति तदन्तरप्रतिपत्त्यधिकरणम्

---

अथ कृतात्ययाऽधिकरणम् २

एवं सकलसांसारिकदुःखहेतु र्देहारम्भकभूतबन्धो मरणेऽपि न मुञ्चती त्यात्मज्ञान तेषा मनुवृत्ति रुक्ता। अथ "माकम् वा नात्मविद्यादि"ति पूर्वसूत्रे क्षयिष्णुमातिशयफलकतया दुःखप्रायफलकत्वेन प्रदर्शितस्य कर्मबन्धस्याऽप्येव मामरणान मनुवृत्तिप्रतिपादनार्थ मधिकरणम् ॥

कर्मसमूहः। सम्पातमननिक्रम्येति यावत्सम्पातमित्युच्यते। ततो निश्शेषम् कर्मफलं भुक्त्वा कर्मरहित एव स्वर्गादवरोहति जीव इति पूर्वः पक्षः॥

सिद्धान्तस्तु—स्वर्गात् सुकृतक्षये पुन रिमं लोक मवरोहन् सकर्मशेष एवागच्छति। कथमवगम्यते? श्रुतिस्मृतिभ्यामेव। यथा '**रमणीयचरणा** अभ्याशो ह यत्ते रमणीयाम् योनि मापद्येरन् ब्राह्मणयोनिम् वा क्षत्रिययोनिम् वा वैश्ययोनिम् वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयाम् योनि मापद्येरन् श्वयोनिम् सूकरयोनिम् वा चण्डालयोनिम् वा' इति श्रुतिः। 'जायन्ते पुण्य**कर्मणा**' इत्यादिकास्मृतिः। अन्यथा सद्यः समुत्पन्नस्य बालस्य धर्माधर्माद्यभावात् सुखदुःखभोगो न स्यात्। तस्मा दनुशयवानेव यथेतमनेवञ्च समागच्छति। आकाशावरोहणा दारोह-

---

ये इष्टादिकारिणः धूमादिमार्गेण स्वर्ग मारुह्य पुण्यकर्मफलं भुक्त्वा ततः पुनः प्रत्यवरोहन्ति ते कर्मशेषयुक्ता निवर्तन्ते? उत निश्शेषभुक्तकर्माण इतिसंशयः। "यावत्सम्पात मुषित्वे" ति श्रुत्या सम्पत न्त्यनेन स्वर्गमूलोक मिति सम्पातशब्दितस्य कर्मणः कृत्स्नोपभोगश्रावणात्। "रमणीयचरणा" इति श्रुत्या चरणशब्दितस्य कर्मणः साहित्यश्रावणाच्च संशय इत्यर्थः। "यावत्सम्पातमुषित्वे" ति श्रुते रुपक्रमगतत्वेन प्रबलत्वात् 'प्राप्यान्तम्। कर्मण स्तस्य यत्किं चेह करोत्ययम्। तस्मा ल्लोका त्पुनरै त्यस्मै लोकाय कर्मण' इतिश्रुत्यन्तराच्च निश्शेषभुक्तकर्माणएव निवर्तन्त इतिपूर्वपक्षः। एवं प्राप्ते सिद्धान्त माह—कृतात्ययइति—कृतात्यये-सुकृतक्षये पुन रिमंलोकं प्रत्यवरोहन् जीवः अनुशयवान् अनुशयशब्दो भुक्तशिष्टकर्मपरः कर्मशेषसहितएव पुनरागच्छतीति। दृष्टस्मृतिभ्यां श्रुतिस्मृतिभ्या मवगम्यत इत्यर्थः। तद्यथा- "रमणीयचरणा" इतिश्रुतिः ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठान मिति प्रपद्यन्ते। तच्चक्रव दुभयो र्लोकयो स्सुखएव वर्तत इति। यथेतमनेवञ्चेति सूत्रशेषस्यारोहणप्रकारेण प्रकारान्तरेण चावरोहन्ती त्यर्थः। तदेव प्रकारद्वयं विशदयति—आकाशावरोहणा दिति। चन्द्रारोहणं धूमरात्र्यपरपक्षदक्षिणायनषण्मासपितृलोकाकाशक्रमेण। ततोऽवरोहण न्त्वाकाशवायुधूमाभ्रऽमेघक्रमेणत्येव मारोहणक्रमेण प्रकारान्तरेण चाऽवरोहन्ती त्यर्थः। यावत्सम्पात मित्युपक्रमगतस्याऽपि

प्रकारेण वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्च प्रकारान्तरेण च पुनर्निवर्तन्त इत्यर्थः ॥

पुनराशङ्क्य मतान्तरेण परिहरति—

## चरणा दितिचे न्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३—१—९ ॥

रमणीयचरणाः, कपूयचरणाः इति चरणशब्दान्नानुशयसिद्धिः। चरणशब्दस्य स्मार्ताचरणविषयत्वादितिचेत्—न, अनुशयोपलक्षणार्था हि चरणश्रुतिः। तस्यैव सुखादिसाधनत्वात् ॥

## आनर्थक्य मितिचे न्न तदपेक्षत्वात् ॥ ३—१—१० ॥

एवम् सति स्मार्ताचरणस्यानुपयोगा दानर्थक्यम् स्यादितिचेत्-न। तदपेक्षत्वादेव सर्वस्य पुण्यकर्मणः, ‘सन्ध्याहीनोऽशुचि र्नित्यमनर्हः

---

यावच्छब्दस्य स्मृत्यनुगृहीतोपसंहारगतरमणीयचरणादिश्रवणानुसारेण तदानीन्तनस्वर्गशरीरभोग्य-कर्मसाकल्यमात्रविषयत्वेन सङ्कोचः कर्तुं युक्त इति भावः।

न न्वौपसंहारिकबहुवाक्यानुरोधा दुपक्रमगतैका यावच्छ्रुति स्सङ्कोचनीये त्येत दयुक्तम्। उपसंहारे चरणशब्दयोः स्मार्ताचारपरत्वेनोपक्रमान्तगतस्य कर्मणो निरवशेषस्याऽभ्युपगमे विरोधाभावा दिति शङ्कानिराकरणार्थत्वेनोत्तरसूत्र मवतारयति—पुनराशङ्क्येति ॥

“रमणीयचरणा” इति चरणशब्दो नाऽनुशयपरः। तस्य स्मार्ताचारविषयत्वा दितिचे न्न। अनुशयोपलक्षणार्था चरणश्रुतिः तस्यैव सुखादिसाधनत्वा दिति कार्ष्णाजिनि राचार्यो मन्यत इत्यर्थः। तस्यैवेति। इष्टापूर्तादिरूपस्य कर्मण एव स्वर्गादिसाधनत्वेन विहितस्य सुखादिजनकत्वात् स्मार्ताचारस्य तथाविधत्वाभावा दित्यर्थः। एवं तर्हि सन्ध्यावन्दनादे वैयर्थ्य प्राप्त मितिशङ्कानिराकरणार्थं सूत्रम् ॥

स्मार्ताचारस्याऽनुपयोगा द्वैयर्थ्य मितिचे न्न। तदपेक्षत्वात् “सन्ध्याहीनोऽशुचि” रित्यादिवचनप्रामाण्येन स्मार्ताचारवतैवाऽनुष्ठितानां स्वर्गादिसाधनभूतानां यागादिकर्मणाम्

सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत ॥' इत्यादिवचनात । इति काष्र्णाजिनिमतम ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥३-१-११॥

बादरिस्तु 'रमणीयचरणाः, कपूयचरणाः' इति चरणशब्देन सुकृतदुष्कृते एवोच्येते, पुण्यं कर्माचरतीति प्रसिद्धेः इति मन्यते । एतदेव सूत्रकारस्य मतम् । यद्वा चरणशब्दः सुकृतदुष्कृतयोर्वाचकः, न तु लक्षकः, इति बादरेर्मतम् , स्मार्ताचारापेक्षं कर्मेति तु स्वीकृतमेव । अतः सुकृतदुष्कृतानुशयवानेव स्वर्गादवरोहति जीव इति सिद्धम् ॥

इति कृतात्ययाऽधिकरणम्

---

फलप्रदत्वा दित्यर्थः । अतएव दिवारात्रौच कर्माधिकारविरो ध्यशुचित्वापादकानि यानि पापा न्यवर्जनीयानि तानि स्नानसन्ध्यावन्दनादिभि र्निरस्यन्ते। "आप श्शुन्धन्तु मैनसः । य दुच्छिष्ट मभोज्यम् । यद्वा पाप मकार्षम् ।" इत्यादिमन्त्रलिङ्गात् । अतो न तेषां वैयर्थ्यञ्च मित्यर्थः ॥

"रमणीयचरणाः कपूयचरणा" इति चरणशब्देन सुकृतदुष्कृते एवोच्येते इति बादरिराचार्यो मन्यते । पुण्यम् कर्माचरति-पापम् कर्माचरतीति चरतेः कर्मणि प्रयोगदर्शना दित्यर्थः । काष्र्णाजिनिमता द्बादरिमतं सूत्रकाराभिमतं चरणशब्दस्य कर्म-वाचकत्वमेव विशेषः । आनर्थक्यसूत्रोक्तार्थस्तु समान एवेत्याह—स्मार्तेति । सुकृतदुष्कृ-तानुशयवानेवेति । येषां कर्मणां स्वर्गनरकमात्रफलकत्वं श्रुत न्तत्फलान्यनुभूयाऽवरोहतां कर्मान्तरबृन्दमेवानुशयः । येषान्तु कर्मणां स्वर्गनरक भोगानन्तर मिह योनिविशेष-प्राप्त्यादिकमपि फलानन्तरं श्रुतम् । तत्फला न्यनुभूयाऽवरोहता मैहिकफलप्रदायीकर्मंश स्त्यश्शेषोऽनुशयः । एवञ्च स्वर्गा दवरोहत्सु केषाञ्चि त्कपूयचरणत्वेन श्वसूकरादियोनि-प्राप्तिमपि प्रतिपादयन्त्या श्श्रुतेः वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय तत श्शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते । विष्वञ्चो विपरीता विनश्यन्ति । ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं

अथ अनिष्टादिकार्यधिकरणम् ३

## अनिष्टादिकारिणामपि च श्रुतम् ॥ ३–१–१२ ॥

इह यथेष्टापूर्तादिकारिणां चन्द्रगमनम्, तथान्येषामप्यस्ति न वेति संशयः।

तथा सतीष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनमस्त्येव, 'य एवैके चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इत्यविशेषेण सर्वेषां चन्द्रगमनश्रवणात्। यद्यपि तत्र पापिनां भोगो नास्ति, तथाऽपि

मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठान मिति प्रतिपद्यन्ते तत्र क्रमा दुभयो र्लोकयो स्सुखएव वर्तन्ते "शुचीनाम् श्रीमताम् गेहे योगभ्रष्टोऽभिजायत" इति स्मृतिवचनजातस्य न विरोधः विषयभेदात्।

इति कृतात्ययाऽधिकरणम्

---

अथ अनिष्टादिकार्यधिकरणम् ३

सङ्गति सूचनपूर्वकं संशय न्दर्शयति–इहेति ॥

"अश्रुतत्वा दितिचे न्नेष्टादिकारिणाम् प्रतीते" रिति ॥ ब्र ३–१–६ सूत्रे इष्टादिकारणामिति विशेषग्रहणकृतं तद्वद्यर्थम्। "येके चास्मा दि" ति श्रुता विष्टानिष्टादिकारिसाधारण्येन सर्वेषामपि चन्द्रप्राप्तिश्रावणा दित्याक्षेपिकी व्यवहिताऽधिकरणसङ्गतिः। यावच्छ्रुते रिव येकेचेत्यविशेषश्रुते "श्चन्द्रमसमेव ते सर्वे गच्छन्ती" ति सर्वश्रुतेश्च न स्वयम् सापेक्षेति प्रत्युदाहरणरूपा समनन्तराऽधिकरणसङ्गति श्चाऽत्र विवक्षिता। येकेचेत्यादिश्रावण "मथैतयोः पथो" रित्यादिश्रावणाच्च संशयबीजम्।

ननु ये विहित मिष्टादिकं नकुर्वन्ति ये निषिद्धमपिकुर्वन्ति तेखल्वनिष्टादिकारिणः। तेषामपि चन्द्रप्राप्तौ पुण्यकर्मिणां पापिनाञ्च गति रविशिष्टा स्यादित्याशङ्क्याह–यद्यपीति। चन्द्रलोके स्वर्गभोगाभावः पापिनां पुण्यकृद्भ्योऽयं विशेषः। भोगाभावेऽपि चन्द्रलोकगमनं न व्यर्थम्। शरीरकारणपञ्चमाहुतिलाभार्थत्वात्। नच– "अथैतयोः पथो र्न कतरेणच" ति श्रुतिविरोधः। नहि सा पापिनां पथि द्वयमपि निषेधति। स्वयं पथ्यन्तरानुपदेशात्।

पुनरागत्य शरीरग्रहणार्थम पञ्चमाहुतिलाभाय स्वर्गगतिरपेक्ष्या। तस्मा दिष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनम् युक्तम्॥

इति प्राप्तेऽभिधीयते—

## संयमने त्वनुभूयेतरेषा मारोहावरोहौ तद्गतिदर्शनात्

॥ ३–१–१३ ॥

इष्टापूर्ताद्यकुर्वतां चन्द्रगमनं नास्ति, किन्तु यमसदने कर्मफल मनुभूय प्रत्यवरोहणम्। एवंभूतावेव तेषामारोहावरोहौ, "वैवस्वतम् सङ्गमनम् जनानाम्" इति तद्गतिदर्शनात्। भोगार्थमेव हि स्वर्गगमनम्, न पञ्चमाहुतिलाभाय, द्रोणादीनां योषिदाहुतेरभावेन व्यभिचारात्। अतो यमलोकप्राप्तिरेव पापिना मिति युक्तम्॥

---

नच पापिनामपि चन्द्रलोकप्राप्तौ "तेनाऽसौ लोको नसम्पूर्यत" इत्युक्तस्याऽसम्पूरण स्याऽनुप पत्तिः। तेषां यमसदनप्राप्तौ चन्द्रलोकस्य मार्गमात्रत्वेन तत्र तेषां मङ्क्षीभूयाऽवस्थानाभावा दसम्पूरणोपपत्तेः। अत स्साश्रुति र्देवयानपितृयाणमार्गप्राप्त्ययो र्ब्रह्मचन्द्रलोकयो र्भोगाभावमात्रपरा। न पापिनां मार्गद्वयस्याऽपिनिषेधपरेति भावः।

अनिष्टादिकारिणामपि इष्टापूर्ताद्यकुर्वतामपि चन्द्रगमनं "ये वै चैकेऽस्माल्लोका त्प्रयन्ति ते चन्द्रमसमेव गच्छन्ती" त्यविशेषेण श्रुत मस्ती त्यर्थः।

सिद्धान्तमाह —

अनुभूयेत्यस्यशेष मध्याहरति—प्रत्यवरोहण मिति। एवंभूता विति। संयमनारोह स्ततोऽवरोहश्चे त्येवंभूतावेवेत्यर्थः। वैवस्वत मिति। यदि "येकेच" त्यविशेषश्रावणा त्सर्वेषा श्चन्द्रप्राप्तिः कल्प्येत। तर्हि "वैवस्वतम् सङ्गमनम् जनाना" मित्यविशेषश्रावणा त्सर्वेषां यमप्राप्तिरपि कल्प्येत। तस्मात् यथा "अयम् लोको नास्ति परः इति मानी पुनः पुन र्वशमापद्यते मे" इत्यादिविशेषवचना द्यथा यमप्राप्तिवचन मनिष्टादिकारिविषयम् तथा "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते" इत्यादिविशेषवचना च्चन्द्रप्राप्तिवचन मपीष्टादिकारिविषय मिति भावः॥ इतरेषाम् पापिना न्त्वयं विशेषः। यमसदने यमलोके

## स्मरन्ति च ॥ ३–१–१४ ॥

अस्मिन्नर्थे स्मरन्ति च, 'सर्वे चैते वशम् यान्ति यमस्य भगवन् किल' इत्यादि ॥

## अपि च सप्त ॥३–१–१५॥

सप्त रौरवादीनपि पापिनो महानरकान् स्मरन्ति ॥

## तत्राऽपि च तद्व्यापारादविरोधः ॥ ३–१–१६ ॥

तत्राऽपि चित्रगुप्ताद्यधिष्ठितेषु नरकेष्वपि तेषां प्रेरकस्य यमस्य

पापफल मनुभूय आरोहावरोहौ गतागते सम्भवतः तद्गतिदर्शनात् "वैवस्वतम् सङ्गमनम् जनाना" मिति यमलोकगमनदर्शना दिति सूत्रार्थः ॥

सर्वेचेति । पापिन इत्यर्थः । "सर्वे चैते वशम् यान्ति यमस्य भगव न्किले" त्यादिना पराशरादय स्स्मरन्तीत्यर्थः ॥

स्मरन्ती त्यनुवर्तते । पापिना मेव हि पापफलानुभवार्थान् सप्तनरकानपि स्मरन्ति । ततोऽपिहेतोः यमप्राप्तिवचनानां विशेषविषयत्वा त्तद्व चन्द्रप्राप्तिवचनमपि विशेषवचनाऽनुसारेण विशेषविषय मिति भावः । यमसदनएव केषाञ्चि द्यातनानुभवः । तदभिप्रायं यमसदने त्वनुभूयेति सूत्रम् । केषाञ्चि द्यमसदनप्रा प्त्यनन्तरं यमाज्ञया पाताळाना मधोभागं प्राप्य तत्रत्येषु रौरवादिषु यातनानुभवः । तदभिप्राय "मपिच सप्ते"ति सूत्रम ।

संयमनसप्तनरकरूपयातनानुभवस्थानद्वैविध्यसूचनार्थ मेव "अपिच सप्तेत्ये"तस्मिन् सूत्रे समुच्चयार्थोऽपिशब्दः ।

ननु रौरवादय श्चित्रगुप्ताद्यधिष्ठिता श्श्रूयन्ते । अतो यमप्राप्तिवचनस्य पापिविषयत्वकल्पनायां रौरवादिस्मरणस्य प्रमाणत्वेनोपन्यासो विरुद्ध इत्याशङ्कानिराकरणार्थं सूत्रम् ॥

तत्राऽपि=रौरवादिषु सप्तस्वपि नरकेषु तद्व्यापारा द्यमाज्ञावशादेव गमनाद्यमवश्यताया अविरोधः = विरोधो नास्तीत्यर्थः ॥

तदधिष्ठातृत्वव्यापारसत्त्वात् यमवश्यताया विरोधाभावः ॥

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३-१-१७ ॥

विद्याकर्मणोः फलभोगाद्यर्थं ब्रह्मगमनं चन्द्रगमनञ्च कथम् ? 'तद्य इत्थम् विदु र्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति अथ य इमे ग्रामे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति ब्रह्मगमने चन्द्रगमने च विद्याकर्मणो रेव प्रकृतत्वात् । अतो न पापिनां तद्गतिप्रसङ्गः ॥

---

चित्रगुप्तादीनाम प्यधिष्ठातृ र्यमस्य समीपं प्राप्य तदाज्ञया तद्भृत्याधिष्ठिता न्नरका न्पापिनः पश्चात्प्राप्नुवन्तीति न विरोध इति भावः ॥

पञ्चमाहुतिलाभार्थम् पापिनामपि चन्द्रप्राप्ति रैकल्प्येति शङ्कां निराकर्तुं चन्द्रप्राप्ति स्तदर्था नभवति किन्तु कर्मफलभोगार्था । यथा ब्रह्मप्राप्ति विद्याफलभोगार्थेति प्रतिपादनार्थं सूत्रम् ॥

देवयानपितृयाणे इति विशेषः । विद्याकर्मणोरिति सम्बन्धसामान्ये षष्ठी । तादर्थ्यपर्यवसायिनी । तादर्थ्यञ्च तत्फलप्राप्त्युपायतया । इति हेतौ । एवञ्च देवयानपितृयाणे विद्याकर्मफलप्राप्त्यर्थे इति हेतो रित्यर्थः । तुशब्दः पञ्चमाहुत्यर्थत्वव्यवच्छेदार्थः । कथं तयो स्तादर्थ्यं च मित्याकाङ्क्षायां तत्साधको हेतुः प्रकृतत्वा दित्युच्यते । अत्राऽय म्भावः । विद्याकर्मणी प्रकृत्य "तेर्चिषमभिसम्भवन्ती"ति । "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ती"ति च गतिद्वयं प्रतिपादितम् । पापिनां विद्यारहितत्वेन ब्रह्मगमनाभाववत् पुण्यकर्मराहित्येन चन्द्रगमनमपि नसम्भवतीति ।

"पञ्चम्या माहुता वापः पुरुषवचसो भवन्ती" ति पञ्चमाहुत्या देहारम्भश्रवणा च्चन्द्रप्राप्तेः पुण्यकर्मफलभोगार्थेव देहारम्भार्थपञ्चमाहुतिलाभार्थत्वमपि स्यादित्याशङ्कानिराकरणार्थं सूत्रम् ॥

## न तृतीये तथोपलब्धेः ॥ ३–१–१८ ॥

न च पापिनामपि पञ्चमाहुतिप्राप्तिमूलत्वाद्देहारम्भस्य तदर्थं द्युलोकापेक्षा, तेषां द्युलोकगमनाभावोपलब्धेः 'अथैतयोः पथो र्न कतरेण च तानीमानि क्षुद्रा ण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयम् स्थानम् तेनासौ लोको न सम्पूर्यत' इति। तृतीयं स्थानमिति पापकर्माण उच्यन्ते। अतः पापिनां न स्वर्गगमनम्॥

## स्मर्यतेऽपि च लोके ॥ ३–१–१९ ॥

लोके द्रौपद्यादीनां पुण्यकर्मणामपि पञ्चमाहुत्यनपेक्षा देहा-रम्भाय स्मर्यते ॥

---

केवलपापकर्मणां तृतीयं स्थानम् । यत्र देहारम्भाय पञ्चमाहुत्यपेक्षा नाऽस्ति। तथोपलब्धेः । तेषां द्युलोकगमनाभावोपलब्धे रित्यर्थः । अत्राऽयम्भावः । अथैतयो रिति "वेत्थ यथाऽसौ लोको नसम्पूर्यते" इत्यपि श्वेतकेतुम्प्रति प्रवाहणस्य प्रश्नः। अयं लोक इव स्वर्गलोकोऽपि बहुषुप्रयत्सु येन कारणेन सम्पूर्णो नभवति तत्कारणं वेत्थ किमितिप्रश्नः। श्वेतकेतौ प्रतिवक्तु मशक्ते प्रवाहणस्यै वेदं प्रतिवचन मथैतयो रित्यादि । एतयो र्देवयानपितृयाणयो र्मध्ये येपा मन्यतरेण मार्गेण गमनं नाऽस्ति तानीमानि क्षुद्राणि यूकालीक्षामशकादीनि भूता न्यसकृदावृत्तीनि भवन्ति । असकृदावृत्ति र्जननमरणपौनः पुन्येनेति "जायस्व म्रियस्वे" त्यनेनोच्यते । एत दसकृदावृत्तिरूपं तृतीयं स्थानं प्रकृतदेवयानपितृयाणरूपमार्गद्वयापेक्षया क्षुद्रजन्तूना मयं तृतीयो मार्गः। तेन क्षुद्रजन्तूना मनन्तानां मार्गान्तरसत्त्वा द्देवयानपितृयाणप्राप्त्यचन्द्रप्राप्त्यभावेन हेतुना क्षुद्रजन्तुभि र्व्याक्रान्तोऽयंलोक इवाऽसौ लोको नसम्पूर्यतइति प्रतिवचनार्थ इति ।

नन्वेवं पञ्चमाहुति मन्तरेणाऽपि शरीरोत्पत्त्यङ्गीकारे तस्या स्तत्कारणत्वं नस्या द्व्यतिरेकव्यभिचारा दिति शङ्कानिराकरणार्थं सूत्रम् ॥

पुण्यकर्मणामपि देहारम्भाय पञ्चमाहुत्यनपेक्षा स्मर्यत इत्यर्थः । पञ्चमाहुत्यनपेक्षेति। एवञ्च शरीरविशेषम्प्रत्येव पञ्चमाहुतेः कारणत्वकल्पन मावश्यक मिति भावः।

## दर्शनाच्च ॥ ३-१-२० ॥

किञ्च श्रुतिदर्शनञ्च भवति 'तेषाम खल्वेषाम् भूतानाम् त्रीण्येव बीजानि भवन्ति अण्डजम् जीवज मुद्भिज्जमिति'। तत्र स्वेदजोद्भिज्जयो स्तदनपेक्षत्वम् दृश्यते ॥

ननु 'जीवजमुद्भिज्जमिति' श्रुतौ स्वेदजग्रहणम् नास्तीत्यत आह-

## तृतीयशब्दावरोधः संशोकजस्य ॥ ३-१-२१ ॥

संशोकजस्य स्वेदजस्याऽपि तृतीयेनोद्भिज्जशब्देन सङ्ग्रहोऽस्तीत्यर्थः। ततः पापिनां न स्वर्गगमनमिति निर्णयः॥

इत्यनिष्टादिकार्यधिकरणम्

---

ननु तपोविशेषप्रभवेषु शरीरेषु कायव्यूहरीत्या पञ्चमाहुत्यनपेक्षायाम प्यन्यत्र सर्वत्राऽपि तदपेक्षास्यादितिशङ्कानिराकरणार्थं सूत्रम् ॥

"तेषामख ल्वेषाम् भूतानाम् त्रीण्येवबीजानि भव न्त्यण्डजम् जीवज मुद्भिज्ज"मिति। केषाञ्चि देहारम्भे पञ्चमाहुत्यनपेक्षत्वस्य श्रुतौ दर्शनाच्चेत्यर्थः।

ननु अण्डजमित्यादिश्रुतौ स्वेदजस्य ग्रहणं कुतो नदृश्यत इत्याशङ्कानिराकरणार्थं सूत्रम् ॥

संशोकजस्य स्वेदजस्य तृतीयशब्दावरोधः=तृतीयेनोद्भिज्जशब्देनैव अवरोध स्सङ्ग्रह इत्यर्थः। उद्भिज्जशब्देनेति। स्वेदजमपि प्राणिजातं लौकिकप्रमाणसिद्ध मवश्यं क्वचि दिहाऽन्तर्भावनीयम्। अन्यथा त्रीण्येवेत्यवधारणश्रुते रप्रामाण्य मापद्येत। तस्मा त्पार्थिवत्वोष्मप्रभवत्वायोनिजत्वाविशेषा दुद्भिज्जेषु तेषा मन्तर्भावो विवक्षितः कल्प्यत इति भावः ॥

इत्यनिष्टादिकार्यधिकरणम्

अथ तत्स्वाभाव्यापत्त्यधिकरणम् ४

## तत्स्वाभाव्यापत्ति रुपपत्तेः ॥ ३–१–२२ ॥

पूर्वत्र फलभोगानन्तरं स्वर्गात् सानुशय एव जीवोऽवतरतीति निरूपितम्। तस्यावरोहत आकाशादिभावः श्रूयते 'अथैतमेवाध्वानम् पुनर्निवर्तन्ते यथेतमाकाश माकाशाद्वायुम् वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रम् भवति अभ्रम् भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति। तत्र जीवस्याकाशादिरूपताऽऽपत्तिः तत्सादृश्यापत्तिर्वेति संशयः॥

तत्र भूत्वेति शब्दा दाकाशादिरूपत्व ञ्जीवस्य ॥

इति प्राप्ते ब्रूमः— नावरोहतो जीवस्याकाशादिरूपताऽऽपत्तिः, किन्तु तत्सादृश्यापत्तिः, तत्र सुखदुःखानुभवाभावात्। तदनुभवार्थं हि तत्तच्छरीरसम्बन्धः। अन्यस्यान्यत्वानुपपत्तेश्च। तस्मात् तत्सादृश्यापत्ति रवरोहत इत्येवोपपद्यत इति निर्णयः॥

इति तत्स्वाभाव्यापत्त्यधिकरणम्

---

अथ तत्स्वाभाव्यापत्त्यधिकरणम् ४

आपादसमाप्ते रवरोहप्रकारविषयां चिन्तां प्रवर्तयितुं प्राक्सिद्धमर्थ मनुवदति– पूर्वत्रेति—धूमादिना चन्द्रमसं प्राप्तस्याऽवरोहप्रकार आम्नायते । "यथेत माकाश माकाशा द्वायुः वायुर्भूत्वा धूमो भवतीति । धूमो भूत्वाऽभ्रम् भवति । अभ्रम् भूत्वा मेघो भवति । मेघो भूत्वा प्रवर्षती" ति । अत्राकाशादिभावः किन्देवमनुष्यादिभाव दाकाशादिशरीरित्वम् ? उत तत्सादृश्यापत्ति रितिसंशयः, । आकाशादिशरीरित्वमिति पूर्वपक्षः।

सिद्धान्तस्तु— सोमादिशरीरित्वस्य सुखदुःखादिभोगार्थत्वा दाकाशादिप्राप्तौ सुखदुःखभोगाभावा त्तत्सादृश्यापत्ति रेवेति ।

तत्स्वाभाव्यापत्तिः आकाशादिसादृश्यापत्तिः उपपत्तेः=सुखदुःखभोगाभावोपपत्ते रिति सूत्रार्थः ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम्

अथ नातिचिराऽधिकरणम् ९

## नातिचिरेण विशेषात् ॥ ३–१–२३ ॥

अत्रावरोहन् जीवो विलम्बते न वेत्यनियमः, उत न विलम्बत एव इति संशयः ॥

तत्र प्रवर्षणानन्तरं व्रीह्यादिभावः श्रूयते 'त इह व्रीहियवा ओषधिवनस्पतय स्तिलमाषा जायन्ते' इति । प्रागेतस्मात व्रीहियवादि. भावा दाकाशादौ विलम्बत्वरयो र्न नियमः ॥

इति प्राप्ते ब्रूमः– व्रीह्यादिप्राप्तेः प्रागाकाशादिषु नातिचिरं तिष्ठति जीवः । कथम् ? व्रीह्यादिभावानन्तरम् 'अतो वै खलु दुर्निष्प्रपतरम्' इति व्रीह्यादिभावान्निर्गमनं दुश्शकमिति हि श्रूयते । अतो व्रीह्यादौ विलम्बात अन्यत्र त्वरेत्यवगमा दाकाशादौ न विलम्बते जीव इति ॥

इति नातिचिराऽधिकरणम्

---

अथ नातिचिराऽधिकरणम् ९

आकाशवायुधूमाभ्रमेघवर्षप्राप्तौ तत्रातत्र किं नाऽतिचिरं तिष्ठति उताऽनियम इति संशये नातिचिरेणेति विशेषवचनाऽभावा दनियमइति पूर्वपक्षेच प्राप्ते सिद्धान्तः— उत्तरत्र व्रीह्यादिभावे "अतो वै खलु दुर्निष्प्रपतर" मिति विशिष्य चिरगमनवचनमेव ततः प्राचीने ष्वचिरगमनं द्योतयती त्याकाशादि "यावद्व्रीह्यादिभावप्राप्ति नातिचिरम् तिष्ठती"ति ॥

विशेषा दुत्तरत्र व्रीह्यादिभावे दुर्निष्प्रपतर मित्यचिरगमनविशेषा ततः प्राचीनेषु चिरगमन मित्यवगम्यत इति सूत्रार्थः ॥

अथ अन्याधिष्ठिताऽधिकरणम् ६

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३–१–२४ ॥

इह व्रीह्यादावपि जीवस्य संश्लेषमात्रम, उत जन्म !

इति संशये व्रीह्यादिरूपेण 'जायन्ते' इति श्रवणात् तस्य व्रीह्यादिजन्म ॥

इतिप्राप्ते ब्रूमः— अन्यजीवाधिष्ठिते व्रीह्यादौ जीवस्य संश्लेषमात्रम् । आकाशादाविवावरोहत एतत्र जननहेतुसङ्कीर्तनविरहिताभिलापात् 'जायन्ते' इति श्रुतिर्गौणी । यत्र ब्राह्मणादिजन्मास्ति तत्र 'रमणीयचरणाः

व्रीह्यादिषु यावान्विलम्ब स्तावा नाकाशादिषु नाऽस्ती त्येतावन्मात्र मिह सूत्रकृतोक्तम् । उभयत्राऽपि कातीयत्तायां व्यवस्थापकानि श्रुतिस्मृत्यादिवचनानि यद्युपलभ्येरं स्तर्हि सा तत एवावगन्तव्या । दुर्निष्प्रपतरमिति दुःखनिष्क्रमणतर मित्यर्थः ॥

इति नातिचिराऽधिकरणम्

---

अथ अन्याधिष्ठिताऽधिकरणम् ६

अवरोहता माकाशादिभाव स्तत्संश्लेषमात्रम् नतु ताद्रूप्यम् । तच्च नातिचिर मित्याकाशादिमेघान्तेषूभयं सिद्धम् । तदनन्तरपठितव्रीह्यादिभाव स्त्वतिचिरमित्यपि विशेष सिद्धः । तर्हि तथैव व्रीह्यादिभाव स्ताद्रूप्य मित्यपि विशेषोऽस्त्विति दृष्टान्तसङ्गत्या प्रत्यवस्थान मित्यभिप्रेत्य जायन्तइति जन्मसङ्कीर्तनात् जन्मनिमित्तकर्मासङ्कीर्तनाच्च संशय माह—इहेति । जायन्त इति श्रवणा दिति । "मेघो भूत्वा प्रवर्षति— त इह व्रीहियवा ओषधिवनस्पतय स्तिलमाषा जायन्त" इति जन्मश्रावणा दित्यर्थः । जननहेतुसङ्कीर्तनेति । कपूयचरणाभिव्यक्ते रप्रेमङ्कीर्तनात् श्वादियोनिप्राप्तिव व्रीह्यादिजन्मप्राप्ते स्तन्निमित्तत्वं वक्तुं नशक्यते । नच प्राक्सङ्कीर्तित स्येष्टादिकर्मणोऽभिव्यक्तस्य स्वर्गे दत्तफलस्य शेषानुवृत्तिसद्भावेऽपि तस्योत्तमजन्मप्राप्तिहेतोः पापफलस्थावरजन्मनिमित्तत्वमस्ति । नचाऽत्र स्थावरजन्मनिमित्तस्य कस्यचित्कर्मण स्सङ्कीर्तन मस्ति । तस्मात् स्थावरजन्मनिमित्तकर्माभिव्यक्तिव्यतिरेकावगमा दाकाशादिष्विव व्रीह्यादिष्वपि संश्लेषमात्र मिति भावः ॥

कपूयचरणाः ' इतिहेतु गमिलप्यते । अतो ब्राह्मणादावेवास्य जन्माभिलापा दन्यत्रास्य सम्बन्धमात्रमिति निर्णयः ॥

## अशुद्धमिति चे न्न शब्दात् ॥ ३–१–२५ ॥

अवरोहतः पुरुषस्य पूर्वानुष्ठितयागादि ष्वग्नीषोमीयादिहिंसामिश्रत्वा दशुद्धं कर्मेति तत्फलभोगाय व्रीह्यादिष्वप्युत्पत्तिरस्त्विति चेत्-न, श्रूयते हि ' हिरण्यशरीर ऊर्ध्वम् स्वर्गम लोकमेति ' ' न वा उ वेतन्म्रियसे न रिष्यसि ' इति पशुहिंसाया अहिंसात्वम ॥ ततो न तत्प्राप्तिरस्ति ॥

अवरोहन्तो जीवाः व्रीह्यादिशरीरा जायन्ते ? उत व्रीह्यादिशरीरै रन्यैः क्षेत्रज्ञै रधिष्ठिता न्व्रीह्यादीनाश्लिष्यन्तीति संशयः ? जायन्त इतिवचना द्व्रीह्यादिशरीरभोक्तारो जायन्त एवेति पूर्वपक्षः । सिद्धान्तस्तु—व्रीह्यादिजन्महेतुभूतकर्मविशेषाश्रवणा द्व्रीह्यादिसंश्लेषमात्रमेव । जायन्त इतिवचन मौपचारिक मिति ।

सूत्रार्थस्तु—अन्याधिष्ठिते–अन्यक्षेत्रज्ञाधिष्ठिते । व्रीह्यादौ संश्लेषमात्रम् । कुतः–पूर्ववदभिलापात्-आकाशादिभाववत्केवलव्रीह्यादिभावाभिलापात्-जन्महेतुभूतकर्मानभिलापा दित्यर्थः ।

ननु यागादिकर्मशेषफलमेवास्तु स्थावरजन्म यागादिकर्मणो हिंसादियुक्तत्वेन पापमिश्रितत्वा दिति शङ्कानिराकरणार्थं सूत्रम् ॥

यद्यपि " तिलमाषा जायन्त " इत्यत्र जन्महेतुभूतं कर्म नश्रुतम् तथाऽपि पूर्वश्रुत मिष्टादिकर्म अग्नीषोमीयादिहिंसागर्भत्वेनाऽशुद्धम् । हिंसात्वेनाऽशुचिव्रीह्यादिजन्मनो हेतु र्भवतीति । स्थावरभावश्च पापफलत्वेन स्मर्यते " शरीरजैः कर्मदोषै र्याति स्थावरतां नर ,, इति । तस्मा त्तदेव स्थावरजन्ममूलं कर्मेति चे न्न शब्दात्-अहिंसात्ववाचक शब्दादित्यर्थः । तथाहि–"हिरण्यशरीर ऊर्ध्वस्वर्ग मेति"– " नवा उवैतन्म्रियसे न रिष्यसि" इति । हिरण्यशरीरइत्यादिः क्रतौ संज्ञप्तस्य पशोः स्वर्गप्राप्तिप्रतिपादकोऽर्थवादः । नवा उवैत दित्यादिः । तस्य मृतिहिंसादिभावबोधको मन्त्रः । तत्र–वैइति प्रसिद्धौ । उइत्यवधारणे । एतदिदानी मित्यर्थः । हे पशो त्वं खलु इदानीं नैवम्रियसे नाऽपि हिंस्यमीत्यर्थः । अहिंसात्व मिति । क्रतौ पशुसंज्ञपनस्य पापयोनिविमोचनपूर्वकं स्वर्गप्रापकत्वेन तद्रक्षणरूपत्वा च्चिकित्सककृतव्रणदाहच्छेदादिव न हिंसात्वमिति न तत्र " नहिंस्या " दिति निषेधस्पर्शः । तस्मा न्न यागस्य पापमिश्रत्व मिति भावः ।

उपपत्त्यन्तरमाह —

**रेतस्सिग्योगोऽथ** ॥ ३–१–२६ ॥

'यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति' इत्यनेन रेतस्सिचायोगमात्रमस्यानन्तरमुच्यते । अतः पूर्वमपि व्रीह्यादिषु योगमात्रमेव ॥

**योनेः शरीरम्** ॥ ३–१–२७ ॥

यदा योनिप्राप्तिस्तस्य तदैव शरीरमुत्पद्यत । अतः पूर्वं तु संश्लेषमात्रमिति भावः ॥

इति अन्याधिष्ठिताऽधिकरणम्

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
तृतीयाध्यायस्य प्रथमः पादः

---

कथं तर्हि जायन्त इत्युक्ति रित्याकाङ्क्षायां तदुपपत्तिप्रदर्शनपरं सूत्र मवतारयति— उपपत्त्यन्तरमिति ।

तद्भूयएव भवतीति रेतस्सिग्भाव आम्नायते । नच पूर्वसिद्धपितृभावः पुत्रस्य सम्भवति । अत स्तत्रावश्यं तद्योगएव तद्भाव उपचरित इत्युपपादनीयम् । एव मत्राऽपि जायमानव्रीह्यादिसंश्लेषएवाऽनुशयिनां जनन मित्युपचरित इतिभावः ॥

योनेः प्राप्त्यनन्तरमेव शरीर मुत्पद्यते । तदनन्तरमेव सुखदुःखादिभोगसत्त्वात् श्रुतौ ब्राह्मणादिशरीरप्रतिपादनाच्च । अतो योनिप्राप्तेःप्रागाकाशादिपितृवीर्यान्तेषु संश्लेषमात्र मिति भावः ॥

इति अन्याधिष्ठिताऽधिकरणम्

इति श्री नागलिङ्गशिवाराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां
श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीय
ब्रह्मसूत्रभाष्यव्याख्यायां तृतीयाध्यायस्य प्रथमः पादः

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाराध्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ तृतीयाध्यायस्य

## द्वितीयः पादः

---

### अथ सन्ध्याधिकरणम् १

## सन्ध्ये सृष्टिराह हि ॥ ३–२–१ ॥

पूर्वत्र जीवस्य गत्यागतिनिरूपणं कृतम्। इह तदवस्था विचार्यते। सन्ध्ये स्वप्ने 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ राथान्रथयोगा न्पथः सृजते' इत्यादिना सृष्टिरभिधीयते। सैषा जीवकृता परमेश्वरकृतावेति संशयः॥

---

### अथ सन्ध्याधिकरणम् १

वृत्तवर्तिष्यमाणयोः पादयो स्सङ्गतिमाह—पूर्वत्रेति। पूर्वस्मिन्पादेऽधिकारिणां वैराग्यदृढीकरणाय जीवस्य गत्यागतिनिरूपणं कृतम्। तथाहि—प्रथमेऽधिकरणे संसारदुःखा यतस्य भूतेन्द्रियसङ्घातस्य सूक्ष्मदेह स्योपासनासाध्यब्रह्मसाक्षात्काररूपतन्निवृत्तिसाधनलाभपर्यन्त मिह परत्र च गतागतयोर प्यनुवृत्ति रस्तीतिनिरूपिम्। तत्रैव "भाक्तम् वा नात्मवित्त्वादि" ति [ब्र ३–१–१] सूत्रेण देवभृत्यभाव मवलम्ब्य तत्प्रयुक्तक्लेशभाजनस्य स्वर्गभोगानुभवस्य प्रहीणत्वं सातिशयत्वञ्चाविष्कृतम्। द्वितीये सूक्ष्मदेहस्याऽपि कारणतया सकल-संसारक्लेशमूलस्य कर्मबन्धस्य मुक्तिपर्यन्त मनुवृत्ति र्निरूपिता। तत्रैव स्वर्गभोगस्य क्षयिष्णुत्वदोषोऽपि कृतात्यय इतिसूत्रखण्डेन दर्शितः। एव मनेकदोषदूषितस्याऽपि स्वर्गभोगस्य जनकं यागादिकमपि यावज्जीवकर्तव्यस्नानसन्ध्यादिविहितानुष्ठाननिषिद्धपरिहाररूपबहुविधक्लेश-सध्यस्मार्ताचारसापेक्षत्वा ददिदुष्करमिति चरणादित्यादिसूत्रैः प्रकटितम्। अनिष्टादिकारिणान्तु-न स्वर्गप्राप्तिमात्राभावः किन्तु यमसदने रौरवादिषु च भूयान्यातनानुभवः कीटादि

एवं सति जीवकर्तृत्वमवगम्यते । 'अथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्ता' इति स्वप्नदृशं जीवमेव कर्तारमाह हि श्रुतिः ॥

जन्मप्राप्तिश्चेति तृतीये वर्णितम् । चतुर्थे तु—स्वर्गादवरोहतामाकाशादिभावप्राप्तावाकाशाद्यभिमानिदेवतानामिवाकाशादिशरीरकत्वप्रयुक्तः किञ्चिद्दिव्यभोगानुभवोऽस्तीति शङ्कावारणायाकाशादिषु संश्लेषमात्रमिति वर्णितम् । पञ्चमे—चिरमचिरं वाऽवस्थानमित्यनियमनिरासव्याजेन व्रीह्यादिषु सुखभोगरहितमचिरावस्थानं दृढीकृतम् । षष्ठे—तेष्ववस्थानं सुखलेशरहितम्- तदभिमानिजीवात्मनां च तच्छेदनपर्यन्तमेव भवेदिति त्वनतिदेयत्वशङ्कानिरासाय तेषु संश्लेषमात्रमिति प्रदर्श्य स संश्लेषस्तेषां शोषणावहननफलीकरणपाकभक्षणादिदशास्वनुवर्तमानः पितृवीर्यात्मना परिणामपर्यन्तः । पुरुषभक्षणविषयत्वमनापन्नेषु व्रीह्यादिषु संश्लिष्टानामनुशयिनां तेषु संश्लेषः तत्तद्व्रीह्यादिपरिणामान्तरपरम्पराक्रमेण यथाकथञ्चित्पुरुषभक्षणविषयत्वप्राप्त्यनन्तरं तेषां तद्वीर्यात्मना परिणामपर्यन्त इति रेतस्सिक्सूत्रेण संसूच्य पुरुषवीर्यानुप्रवेशोऽपि योषितमप्राप्य तेषां न शरीरलाभः । तद्यदि वीर्यमपरिग्रहाणां वन्ध्यादिषु प्रवृत्तानां वा स्यात्तदा तद्वीर्यं परिणामान्तरक्रमेण पुनरपि पुरुषभक्षणविषयत्वं प्राप्य तद्वीर्यसंसक्ततया ऋतुमतीनां योषितां गर्भगोलकप्रवेशानन्तरमेव कश्चिज्जन्मनि भोगाश्रयस्य भोगमोक्षसाधनोपयोगिनश्च शरीरस्य लाभ इति "योनेश्शरीरमि" ति [ ब्र ३-१-२१ सूत्रेण संसूचितम् । एवं वैराग्यदृढीकरणाय गतागतनिरूपणेन जीवस्य जागरावस्थाविचारो निष्पन्नः । इह पादे तदवस्थान्तरविचारः क्रियत इत्यर्थः । सूत्रगतं सन्ध्यशब्दं विषयवाक्यगतं तत्रशब्दं च विवृण्वन्नेव विषयवाक्यमुदाहृत्य संशयं दर्शयति—सन्ध्ये स्वप्न इति । जागरसुषुप्त्योस्सन्धौ भवनं सन्ध्यशब्दप्रवृत्तिनिमित्तम् । तेन जागराऽवस्थाविचाराऽनन्तरं प्रथमं स्वप्नावस्थाविचारेऽपि सङ्गतिर्लब्धा । स हि कर्तेत्यस्य प्रकृतजीवपरामर्शकत्वसंभवाऽसम्भवाभ्यां संशयः । पुष्करिण्यः स्रवन्त्य इति द्वितीयार्थे प्रथमा । स्वप्नदृशं जीवमेवेति । अत्राऽयमभावः । स्वप्नदृशो जीवस्य सन्निधानात् स हि कर्ता इति परामृश्यते । जीवस्याऽपि सत्यसंकल्पत्वं प्रजापतिवाक्योदितमिति स एव स्रष्टेति पूर्वपक्षः ॥

सूत्रार्थस्तु— सन्ध्ये—स्वप्ने श्रूयमाणा रथादिसृष्टिः स्वप्नदृशा जीवेन कृता । कुतः आह हि । स हि कर्ता इति तस्यैव परामर्शादिति । ननु य एष सुप्तेषु जागर्ति इति काठकीमन्त्रे परमेश्वर स्तेषां स्रष्टा प्रतिपाद्यते । तस्यैव हि तत्र प्रकरणम् "अन्यत्र धर्मादि" ति । अत स्तदैकार्थ्यात् स हि कर्तेत्येतदपि तद्विषयं स्यात् । तस्य प्रकृतत्वाभावेऽपि तदेते श्लोका

## निर्मातारञ्चैके पुत्रादयश्च ॥ ३-२-२ ॥

'य एष सुप्तेषु जागर्ति कामंकामं पुरुषो निर्मिमाणः' इति जीवमेव स्वप्ने कामानां निर्मातार मेके शाखिनोऽधीयते। तत्र कामशब्द-निर्दिष्टाः काम्यमानाः पुत्रादयः, पूर्वत्र 'सर्वान् कामान् छन्दतः प्रार्थयस्व' इत्युक्त्वा 'शतायुषः पुत्रपौत्रान् वृणीष्व' इति विवृतत्वात्। ततश्च जीवकृतैव स्वप्नसृष्टिः॥

इति प्राप्तेऽभिधीयते—

## मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्
## ॥ ३-२-३ ॥

स्वप्ने यद्रथादि सृष्टमर्थजातं तदिदं मायामात्रमीश्वरकृतम्, न जीवकृतम्। स्वप्नदर्शैकेनानुभाव्यं तत्कालमात्रावसायीति आश्चर्यरूपतया

भवन्तीति प्रक्रान्ते तदनन्तरश्लोके "स्वप्नेन शरीर मभिप्रहत्यासुप्त स्सुप्ता नभिचाकशीती"ति वर्णयिष्यमाणत्वात्। तत्रहि शारीरस्य जीवस्य स्वप्नावस्थाप्रदानेनाऽभिप्रहन्ता परमेश्वरएवेति शङ्कानिराकरणार्थं सूत्रम्॥

चकारोऽवधारणार्थ इत्याशयेनाह —जीव मेवेति

ननु विषयवाक्ये कामशब्द इच्छार्थः परमेश्वरोऽपि मन्त्र इच्छत इत्याशङ्कानिराकरणाय "पुत्रादय श्चे"ति सूत्रखण्डं व्याचष्टे—तत्रेति। द्वितीयचकारो व्यवधाणार्थतया इच्छार्थत्व-व्यवच्छेदार्थः। अत्र प्रकरणे कामशब्दस्य पुत्रादिषु प्रयुक्तत्वा दिहाऽपि मन्त्रे तस्य तादर्थ्यं मवमीयते। अतः पुत्रादिसम्बन्धलिङ्गं परमेश्वरप्रकरणा द्बलवत्॥

नच जीवस्याऽप्रस्तुतत्वम्। "हन्त तदिदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनं। यथाच मरणं प्राप्य आत्मा भवति गौतम। योनि मन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणु मन्येऽनुसंयान्ति यथा कर्म यथाश्रुत" मित्यव्यवहितप्रस्तुतत्वा दितिभावः॥

सूत्रार्थस्तु—एनमेव जीवं निर्मातारम्। स्वप्नाना मर्थानां निर्मातार मेके शाखिनोऽधीयते। पुत्रादयश्च य एषु सुप्तेषु जागर्ति कामंकाम मितिकामशब्दनिर्दिष्टाः पुत्रादय एवेति। इतिप्राप्तेऽभिधीयत इति। वक्ष्यमाणसिद्धान्तसूत्र मित्यर्थः॥

# पराभिध्यानात्तु तिरोहितम् ततो ह्यस्य बन्धविपर्ययौ

॥ ३-२-४ ॥

जीवस्यानाद्यपचारप्रवाहेण पराभिध्यानात् परमेश्वरसङ्कल्पात् तस्य सत्यसङ्कल्पत्वादिकं तिरोहितम्। तदपचारतदनुवृत्तिकृतात् तस्मादेव परमेश्वरसङ्कल्पा दस्य बन्धमोक्षौ भवतः। तथाहि श्रुतिः- 'यदा ह्येवैष एतस्मिन्नुदरमन्तरम् कुरुते। अथ तस्य भयम् भवति। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयम् प्रतिष्ठाम् विन्दते। अथ सोऽभयम् गतो भवति' इति ॥

# देहयोगाद्वा सोऽपि ॥३-२-५॥

जीवस्य स्वरूपतिरोधानभावोऽपि देवमनुष्यादिदेहाकारचियोगा द्भवति सृष्टिसमये, प्रलये पुनर्नामरूपविभागानर्हसूक्ष्माकारचियोगा

---

यदेति 'यदाख ल्वेष जीवः। एतस्मि न्प्रकृते आनन्दमयरूपे ब्रह्मणि अरम्-छिद्रम् तदनुध्यानविस्मृतिरूप मन्तरं व्यवधानम्। उत्कुरुते=अथ तस्य संसारभयं भवति। यदा त्वेष एतस्मि न्नदृश्ये=प्रत्यक्षागम्ये अनात्म्ये=आत्मसम्बन्धिलिङ्गरहिते अनुमानागम्ये-अनिरुक्ते-शब्देनाऽपि इदन्तया परिच्छेत्तु मशक्ये। अनिलयने=स्वयमाश्रयरहिते अभयम्=सकललौकिकभयपरित्यागपूर्वकम्। प्रतिष्ठां— शरणागति-विन्दते- अथ सोऽभयं= संसारभयनिवृत्तिं प्राप्नोती त्यर्थः। अत्र श्रु॥ "संसारमोक्षस्थितिबन्धहेतु" रिति श्रुतिरपि परमेश्वरस्यैव संसारमोक्षकारणत्व मावेदयति। एतेन आत्मानात्माविवेकविवेकयो र्बन्धमोक्षहेतुत्व माचक्षाणाः परे श्रुतिसूत्राविरोधा त्परास्ताः॥

ननु-मुक्तौ प्राकृतदेहवियोगेसति स्वरूपाऽभिव्यक्ति रिष्यते। अत स्तद्योग स्तस्य तिरोधायक एष्टव्यइति तदभावा त्स्वप्ने स्वरूपाभिव्यक्ति स्स्यादित्याशङ्क्य स परमेश्वर-सङ्कल्पद्वारतया तिरोधायको न साक्षा दिति प्रतिपादयितुं सूत्रम्॥

सोऽपि परमेश्वरसङ्कल्पकृतस्तिरोभावो देहयोगा द्देहयोगं द्वार मपेक्ष्येति सूत्रार्थः॥

दित्येवं तस्य तिरोहितसत्यसङ्कल्पत्वादिकस्य तात्कालिकविचित्रसृष्टि-सामर्थ्यं स्वप्ने न सम्भवति ॥

उपपत्त्यन्तरमाह —

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३–२–६ ॥

'यदा कर्मसु काम्येषु स्त्रियम् स्वप्नेषु पश्यति ।
समृद्धिम् तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥'

'अथ स्वप्नाः पुरुषम् कृष्णम् कृष्णदन्तम् पश्यति स एनम् हन्ति' इत्यादिश्रुतेः शुभाशुभसूचकश्च हि स्वप्नः। स्वप्नाध्यायविदश्च शुभाशुभसूचकान् स्वप्नविशेषानाचक्षते। अतो न जीवसृष्टाः, स्वप्नार्थाः, जीवसृष्टत्वे तदशुभसूचकानां सृष्ट्यभावप्रसङ्गात। तस्मात् परमेश्वरकृता स्वप्नसृष्टिरिति युक्तमेव ॥

इति सन्ध्याऽधिकरणम्

---

तर्हि द्वाराभावात्परमेश्वरसङ्कल्पो न स्वरूपतिरोधायक इत्याशङ्कानिराकरणाय वाशब्दश्चार्थः। अचित्प्रकृतेरपि तिरोधायकत्वसद्भावात्। सा प्रलयइव स्वप्नेऽपि तिरोधायिका भविष्यतीति दर्शयितुं प्रलये तस्याः स्थूलदेहनिरपेक्षायाः स्तिरोधायकत्वं सम्प्रतिपन्नमित्युदाहरति— प्रलयेपुन रिति। स्वाप्नपदार्थसृष्टेः परमेश्वरकर्तृकत्वे उपपत्त्यन्तरप्रदर्शनपरमित्याह— उपपत्त्यन्तर मिति ॥

चकारेण स्वप्नस्य तात्कालिकशुभाशुभकारकत्वं समुच्चीयते। तदपि भाष्योदाहृतश्रुतावेवाम्नातम्। स एनं हन्तीति। आदिशब्देन—वराह एनं हन्ति—मर्कट एन मास्कन्दति-इत्यादिवाक्यान्तराणि गृह्यन्ते स्वप्ने वराहवानरचोराग्निसर्पपिशाचराक्षसादय स्स्वात्मान मभिभवन्तो महद्भयं दुःस्वप्नं जनयन्तो दृश्यन्ते। तेषामशुभसूचकत्व स्यानुसन्धानेऽपि तत्कारकत्व स्यानुसन्धानसत्त्वात् जीवकर्तृकत्वं तेषां सृष्टि र्नस्या दिति भावः ॥

इति सन्ध्याऽधिकरणम्

अथ तद्भावाऽधिकरणम् २

# तद्भावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३–२–७ ॥

स्वप्नभावः सुषुप्तिः। 'तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नम् न विजानाति, आसु तदा नाडीषु सृप्तो भवति' इति 'अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते' इति 'यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति' इति च श्रुतिभिर्जीवस्य सुषुप्तौ नाडीषु पुरीतति ब्रह्मणि च शयनमवगम्यते। तेष्वस्य विकल्पः समुच्चयो वेति संशयः॥

नाड्यादीनि स्थानानि विकल्पितानि भवितुमर्हन्ति, एकप्रयोजनत्वात्। यथा 'व्रीहिभिर्यजेत, यवैर्यजेत' इत्यत्र पुरोडाशनिष्पादनप्रयोजनस्यैकत्वेन विकल्पः स्वीक्रियते, तथा सुषुप्तिप्रयोजनस्यैकत्वात्

---

अथ तद्भावाऽधिकरणम् २

सूत्रगततद्भावपदव्याख्यानेन स्वप्नावस्थाश्रयविचारानन्तरं स्वप्नानन्तरभाविसुषुप्त्याश्रयविचारः क्रियतइति सङ्गतिन्दर्शयति—स्वप्नाभाव इति। तेष्वस्येति। कार्यैक्यतद्भेदाभ्यां संशयः। हितानाम नाड्यः पुरीतद्ब्रह्म च सुषुप्तिस्थानत्वेन श्रूयन्ते किमेषां विकल्पः, उत समुच्चय इति संशयः। आसु तदा नाडीषु सृप्तो भवति। ताभिः प्रत्यवसृप्य पुरीतति शेते। सति सम्पद्य नविदुः। इति त्रयाणां नैरपेक्ष्यप्रतीतेः विकल्पइति पूर्वः पक्षः॥

समुच्चयइति सिद्धान्त इति। प्रासादखट्वापर्यङ्कवत्समुच्चये सम्भवति दोषाष्टकयुतस्य विकल्पस्याऽन्याय्यत्वा दित्यर्थः। समुच्चय मुपपादयति—तथाहीति॥ अत्राऽयम्भावः॥ ताभिः प्रत्यवसृप्येति हृदया त्प्रत्यागमनं नोच्यते। किन्तु स्वप्नावरोहनाडीभ्यः पूर्वं हि "स यत्रैतत्स्वप्न माचरति। तेहाऽस्यलोका तद्धुतेव महाराजो भवति। उतेव महाब्राह्मणः। उते वोच्चावचं निर्गच्छती" त्यादिना स्वप्नावस्थां निरूप्य "अथ यदा सुषुप्तोभवती" त्यादिना सुषुप्त्यवस्थानिरूपयितु मुपक्रान्ता। स्वप्नावस्थायाञ्च

कदाचित् पुरीतति शेते कदाचिन्नाडीषु कदाचित ब्रह्मणीति विकल्पेनात्र समुचित इति पूर्वः पक्षः ॥

समुच्चय इति सिद्धान्तः। कुतः? नैकप्रयोजनत्वात्। तथा हि—जीवस्य हृदयनिष्ठब्रह्मगमनमार्गतया नाडीनां साधनत्वं पुरीतति ब्रह्मणि च प्रासादपर्यङ्कवदविरोधः। अतो नाडीभिरुपसृप्य पुरीतति ब्रह्मणि जीवः शेत इत्युपकारभेदात् समुच्चय एव ॥

---

स्वप्नवहनाडी व्यवस्थान मन्यत्र प्रसिद्धम्। तथाहि—"हृदयस्य सुषुम्नां परितो दशनाड्यो दशेन्द्रियव्यापारहेतवो दशप्राणाधिष्ठिताः। तासाञ्च वृक्षाणामिव प्रत्येकं दशदशशाखारूपनाड्यः। तासां शतस्य शाखानाडीनां मेकैकस्य द्वासप्ततिर्द्वासप्ततिरित्येव द्विशतोत्तराणि सप्तसहस्राण्युपशाखानाड्यः। तासा मवान्तरशाखानाड्यो द्वासप्ततिसहस्रसङ्ख्याः स्सहस्रधा भिन्नकेशाग्रवदतिसूक्ष्माः यासा मुदाहृतबृहदारण्यवाक्ये हिता इति नामोपन्यस्तम्। तत्र प्रधानभूतासु दशसु नाडीषु यदा प्राणेन स युज्यते जीवः तदा स्वप्ने नदीनगरहर्म्यप्राकारादीनां दर्शनम्भवति। यदा व्यानेन तदा देवर्षीणाम्। यदापानेन तदा यक्षराक्षसगन्धर्वाणाम्। यदोदानेन देवलोकानां देवानां स्कन्दजयन्तयोश्च। यदा समानेन तदा देवानलोकानां वनानाञ्च दर्शनम् भवतीत्येतत्सुबालोपनिषदि प्रतिपादितम्। तस्मा त्प्रत्यक्षसृष्ट्यत्र प्रत्युपसर्गश्च प्रतिसुषुप्तिहितनाडीमार्गेण निवृत्तिरस्तीत्यभिप्रायकः। ननु पुरीतते नाडीमार्गेण हृदयम्प्रविष्टस्य पुनर्हृदया त्पुरीततप्रवेशार्थं प्रतिनिवृत्त्यभिप्रायकः। अत प्रासादे शेत इति वचनस्य प्रासादान्तर्वर्तिपर्यङ्के शयानइव हृदयान्तर्वर्तिनि ब्रह्मणि शयानं पुरीतति शेतइतिवचनस्य न काचि दनुपपत्तिः। नाडीषु सुप्तोभवती त्यस्याऽपि नाऽनुपपत्तिः। हृदयाकाशरूपे ब्रह्मणि स्वप्तुं यानाडीः प्रविशति। सतु नाडीषु सुप्तएव भवति। श्रावयतिच तत्र वाक्यशेषएव ब्रह्मसम्पत्तिम्। "त नकश्चनपाप्मा स्पृशति तेजसा हि तदा सम्पन्नोभवती"ति एवं प्रयोजनभेदेन नाडीपुरीतद्ब्रह्मणां समुच्चये समर्थयितुं शक्ये वक्ष्यमाणाष्टदोषदुष्टो विकल्पो नाश्रीकर्तव्य इति ॥

सूत्रार्थस्तु—तदभावः=स्वप्नाभाव स्सुषुप्ति रित्यर्थः। नाडी ष्वात्मनिच चकारा त्पुरीतति च। तच्छ्रुतेः त्रयाणां सुषुप्तिस्थानत्वश्रुतेः। उक्तेन न्यायेन समुच्चयो युक्त इति ॥

## अतः प्रबोधोऽस्मात् ॥ ३–१–८ ॥

'सत आगम्य न विदुः सत आगच्छामहे' इति ब्रह्मणः सकाशादस्य प्रबोधं श्रुतिराह। अतः समुच्चयः। विकल्पेऽङ्गीकृते ह्यष्टदोषप्रसङ्गः। यदा जीवो नाडीषु शेते तदा पुरीतद्ब्रह्मवाक्ययोः प्रामाण्यं प्राप्तं परित्यज्येत। अप्राप्तश्चाप्रामाण्यं स्वीक्रियेत। यदा पुरीतद्ब्रह्मणोः शेते तदा पुरीतद्ब्रह्मवाक्ययोः पूर्वं त्यक्तं प्रामाण्यं स्वीक्रियेत। पूर्वं स्वीकृतश्चाप्रामाण्यं परित्यज्येत। इति प्राप्तपरित्यागोऽप्राप्तस्वीकारः परित्यक्तस्वीकारः स्वीकृतपरित्यागश्चेति दोषचतुष्टयं पुरीतद्ब्रह्मवाक्यकोटौ। तथा नाडीवाक्यकोटौ च दोषचतुष्टये योजिते सत्यष्टौ दोषा भवन्ति। ततो न विकल्पः समुच्चयोपपत्ताविति समाधिः॥

इति तदभावाऽधिकरणम्

---

अथ कर्मानुस्मृत्यधिकरणम् ३

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३–२–९ ॥

अत्र 'सता सोम्य तदा सम्पन्नो भवति' इति विषयः॥

---

एव मुपपादितायां सुषुप्ते ब्रह्माधिकरणत्वस्य नियततायामुपपत्त्यन्तरप्रदर्शनार्थं सूत्रम्॥

अत समुच्चय इति। अन्यथा "सत आगत्ये"ति नित्यवच्छ्रवणविरोधइतिभावः। अस्माद्ब्रह्मणः प्रबोधश्रुति रत तएवोपपद्यत इति सूत्रार्थः। "सर्वे पाप्मानोऽतो निवर्तन्त"इति दहरविद्यायां ब्रह्मसम्पन्नस्य सर्वपापाऽसंस्पर्शः प्रसिद्धः। एवं सुषुप्तौ यस्य दहराकाशरूपस्य सम्पत्त्या जीवस्य सकलपाप्माऽस्पर्शः। तद्ब्रह्म महामहिमेत्यनेनाऽधिकरणेन ख्याप्यत इत्युक्तरूपमहिमसिद्धि रस्याऽधिकरणस्य फल मिति भावः॥

इति तदभावाऽधिकरणम्

पूर्वत्र जीवस्य सुषुप्तयवस्था निरूपिता। तत्र ब्रह्मणि सुप्त ए प्रतिबुध्यते, उतान्य इति संशयः॥

इहान्य इति प्राप्तम्, ब्रह्मप्रामस्यावृत्तेरनुचितत्वात्। निरतिशया नन्दे ब्रह्मणि साम्यं प्राप्तस्य जीवस्य पुन र्न दुःखमयसंसारावृत्ति रुपपद्यते। सता सम्पन्नः कथमुत्तिष्ठेत, को वाऽत्र विभागः॥

इति प्राप्ते ब्रूमः— सता सम्पन्नोऽपि सुप्त एव प्रतिबुद्ध उत्तिष्ठति, ज्ञानवैधुर्येण कृतस्य कर्मण स्तेनानुभाव्यत्वात्, पूर्वानुभूत प्रत्यभिज्ञानाच्च, 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो व कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति

## अथ कर्मानुस्मृत्यधिकरणम् २

इति संशय इति । पूर्वाधिकरणफलत्वेन विवक्षितस्य सुषुप्तौ सर्वपापाऽस्पर्शस्य मुक्ताविव सर्वोपाधिविमोक्षादिप्रयोजकत्वाऽप्रयोजकत्वाभ्यां संशय इत्यर्थः। ब्रह्मप्राप्तस्येति मुक्तस्येव सुषुप्तस्याऽपि ब्रह्मप्राप्त्या सकलपाप्मोत्तीर्णत्व तेन सर्वदुःखोत्तरणञ्च बृहदारण्यके श्रूयते। "अनन्वागतम् पुण्येन अनन्वागतम् पापेन तीर्णोहि तदा सर्वा न्पाप्मनः शोकान् हृदयस्य भवती" ति । सर्वपाप्मोत्तरणपूर्वकं निरतिशयानन्दरूपब्रह्मसम्पत्त्या स्वरूपानान्दाभिव्यक्तिरपि जीवस्य तत्रैव श्रूयते "स यथा कुमारो वा महाराजो वा महाब्राह्मणोवाऽतिघ्नी मानन्दस्य गत्वा शयीत । एव मेवैष एतच्छेतइति तद्वा अस्मै तदतिच्छन्दाः अपहतपाप्माऽभयम् रूपम् तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यम् किञ्चन वेद नान्तरम् तद्वा अस्यै तदाप्तकाम मात्मकाम मकामं रूपं शोकान्तर" मिति। अतिघ्नी मतिशयेन दुःखहन्त्रीं दशाम् । अतिच्छन्दा—अतिच्छन्द मिच्छावर्जित मकामम्—काम्यविषयरहितम् । शोकान्तरम्— शोकतिरोधायक मित्यर्थः । एवञ्च— सुषुप्ते मुक्ता द्विभागस्य पुनरावृत्तिहेतो वैलक्षण्यस्याऽभावा दन्यएवोत्तिष्ठतीति वक्तव्यम्। उपायसहस्रेणाऽपि मुक्तव द्ब्रह्मप्राप्तस्य पुनरावृत्ते रुपपादयितु मशक्यत्वात्॥

इति पूर्वपक्षे प्राप्ते सिद्धान्त माह —

सुप्तएव प्रतिबुद्ध उत्तिष्ठतीति। तत्र हेतवः कर्मानुस्मृतिशब्दविधयः। कर्मतावत्— सुषुप्ते न पूर्वकृत म्पुण्यपापरूपं कर्माऽवश्यमनुभोक्तव्यम् । तस्मात् अनुस्मृतिरपि

इति तद्भावश्रुतेश्च, मोक्षोपायविधिवाक्यानर्थक्यप्रसङ्गाच्च । 'मन आगम्य न विदुः' इति सम्पन्नस्य ब्रह्मानन्दज्ञानाभावोक्तेर्मुक्ताविव न तल्लयः । अतः सुप्त एव पुनः समुत्तिष्ठतीति युक्तम् ॥

इति कर्मानुस्मृत्यधिकरणम्

---

अथ मुग्धाऽधिकरणम् ४

## मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥ ३–२–१० ॥

मूर्छितः पुरुष इति व्यवहारान्मूर्छेति काचिदवस्थानुभूयते । सैषा सुषुप्त्यादिभ्यो भिन्ना न वेति सन्देहः ॥

जाग्रत्स्वप्नसुषुप्तिभ्यो भिन्नाया अवस्थाया अप्रसिद्धत्वान्मूर्छा जागरादिष्वन्तर्भूता ॥

इति पूर्वपक्षे प्राप्त उच्यते— मूर्छिते पुरुषे यावस्था सा मरणार्धसम्पत्तिः इति परिशेषात् भिन्ना सुषुप्त्यादेः । प्रपञ्चप्रतीतेरभावा

---

" यएवाऽहं सुप्तः सएव प्रबुद्धोऽस्मी"ति । ततश्च । " त इह व्याघ्रोवा सिंहोवा यद्य द्भवन्ति तदाभवन्ती " ति । विषयश्च–मोक्षफला न्सुषुप्तस्यैव मुक्तिभाक्त्वे विफलानन्यु न्नत्स्मा त्स स्सुषुप्तएव प्रबुद्ध उत्तिष्ठती त्यवश्यमेष्टव्य मितिभावः ॥

इति कर्मानुस्मृत्यधिकरणम्

---

अथ मुग्धाऽधिकरणम् ४

जीवावस्थाविचारप्रसङ्गा दिद मधिकरणम् । मूर्छावस्था उक्तावस्थाभ्यो भिन्ना नवेति तद्भेदकसद्भावाऽसद्भावाभ्यांसंशये विशेषविज्ञानाऽभावसाम्यात् । सासुषुप्तिः कराळवदनत्वादि साम्या त्क्रोधदशेव जागरावस्था भीषणस्वप्नदर्शनदशेववा स्वप्नावस्था वृक्षाग्रपतनादिकारणकत्वाद्वा मरणावस्था नतु सुषुप्त्यादिभ्यो भिन्ना ; अवस्थान्तरश्रुत्यभावादिति पूर्वपक्षः ।

स जागरस्वप्नयोरन्तर्भावः। सुषुप्तेः प्रसन्नवदनादिलक्षणाया विकृतमुखादिलक्षणाया अस्याश्च विशेषात् ततोऽप्यन्यावस्था मूर्छेति सिद्धम्॥

इति मुग्धाधिकरणम्

---

अथोभयलिङ्गाऽधिकरणम् ५

## न स्थानतोऽपि परस्योभयलिङ्गम् सर्वत्र हि ॥३-२-११॥

पूर्वेष्वधिकरणेषु त्वम्पदार्थस्य जीवस्य स्वरूपधर्मगत्यागत्यवस्थाविशेषनिरूपणं कृतम्। अतः परं तत्पदार्थस्य परमेश्वरस्य स्वरूपधर्मादिकं निरूप्यते। 'सोऽन्तरादन्तरम् प्राविशत् दिशश्चान्तरम् स प्राविशत्'

---

विशेषविज्ञानाऽभावा न जागरः स्वप्नो वेयम्। प्रसन्नवदनत्वश्वासपूर्णत्वाद्यभावात् न सुषुप्तिः। सूक्ष्मश्वासवत्त्वात् न मरणम्। किन्तु वृक्षाग्रपतनाद्यभिघातनिमित्तमौक्ष्म्यापन्नप्राणयुता। तच्चिकित्साद्यभावे मरणपर्यवसायिनी मरणावस्थार्धसम्पत्तिरूपा सुषुप्त्यादिभ्यो विलक्षणेति सिद्धान्तः॥

इति मुग्धाऽधिकरणम्

---

अथोभयलिङ्गाऽधिकरणम् ५

पेटिकासङ्गतिं दर्शयितुं वृत्तानुकीर्तनपूर्वकं मापादसमाप्ते रुत्तराधिकरणानामर्थमाह— पूर्वेष्विति। प्रथमाऽधिकरणे स्वप्नावस्थाविषयश्रुतिवाक्यार्थविचारेण जीवस्य स्वप्रकाशज्ञानात्मकं स्वरूपं निरूपितम्। तत्रैव संसारदशायां गुणाष्टकतिरोधानरूपो धर्मो निरूपितः॥

तदनन्तराऽधिकरणे सुषुप्तौ ब्रह्मगतिः प्रबोधे तत आगमश्चेत्युभयं निरूपितम्। तृतीयाऽधिकरणे तत आगतिः राक्षेपसमाधानाभ्यां व्यवस्थापिता। चतुर्थाऽधिकरणे मूर्छाया मरणार्धसम्पत्तिरूपो विशेषो निरूपित इत्यर्थः। स्वरूपधर्मादिकमिति प्रकाशश्चेति सूत्रे परमेश्वरस्य ज्ञानात्मकं स्वरूपमुभयलिङ्गादिसूत्रैः दोषाभावकल्याणगुणात्मका धर्माः

'यः पृथिव्यां तिष्ठन्' इत्यादिषु परमेश्वरस्य सर्वात्मकतयानुप्रवेशः श्रूयते। तस्य सर्वावस्थासु सर्वान्तर्यामितयावस्थितौ तत्तद्दोषकलङ्कः प्रसज्यते न वा॥

इति संशये प्रसज्यत इति पूर्वः पक्षः। तथा हि—'अस्थूलमनण्वह्रस्वम्' 'निष्कलम् निष्क्रियम् शान्तं निरवद्यं निरञ्जनम्' इत्यादिना च परमेश्वरस्य रूपादिकं निषिध्यते। तद्दोषस्पर्शभयादेव 'सत्यं ज्ञान मनन्तं ब्रह्म' इति च तस्यापरिच्छिन्नसत्यज्ञानमात्ररूपत्वमुच्यते। यदि प्रकृतिविकारसम्बन्धोऽप्यस्याभ्युपगम्येत, जीववदसावपि सकलविकारदोषास्पदं भवेदिति॥

---

ततउपरि समाभ्यधिकप्रतिषेधः फलदातृत्व श्चेत्येत त्सर्वं निरूप्यत इत्यर्थः। तथाच जीवस्वरूपादिनिरूपणपर्यवसायिभि विचारै स्तन्महिमाविष्करणं क्रियतइति पेटिकासङ्गतिरितिभावः। परब्रह्मज्ञानमात्रस्वरूपं निर्विशेषं तस्य "सोन्तरादित्यादि" श्रुतिभिः प्रतीयमानं सर्वानुप्रवेशसर्वनियन्तृत्वादिक मतात्त्विकम्? उत - यथा परम्ब्रह्म ज्ञानस्वरूपम्? एवं सर्वानुप्रवेशादिधर्मवदपीति ? संशये तदर्थंसंशयं दर्शयति—तस्य सर्वावस्था स्विति। सर्वावस्थास्वित्यनेन यथा लोकद्वयगतागतव्रीहियवादिपितृवीर्यान्तसंश्लेषमात्रगर्भस्थितिजननजातव्यपाररूपायां जागरावस्थायाम् स्वप्नसुषुप्तिमूर्छामरणावस्थासुच सूक्ष्मस्थूलशरीरावस्थितिनिबन्धना जीवस्य दोषा स्तथा ब्रह्मणोऽपि स्युः। शरीरावस्थिते रविशेषात्। देहयोगाद्वा सोपीति सूत्रे संसारदोषाणां शरीरसम्बन्धनिबन्धनत्व स्योक्तत्वात्। मलमूत्रपूयमांसशोणितादिकर्दमितेषु शरीरेषु रौरवादिष्विवाऽवस्था नस्यादिति हेतुतया सर्वसंप्रतिपत्त्यर्हत्वा च्चेति पूर्वपक्षबीज मधिकरणसङ्गतिश्च त्युभयं सूचितम्। अन्तर्यामितये त्यनेन सैद्धान्तिकं तत्प्रत्याख्यानबीजं सूचितम्॥

ननु—यथवाऽस्थूलादिवाक्यजातं श्रुति स्तथा सर्वशरीरित्वप्रतिपादकवाक्यजातमपि श्रुतिरेव। तयाच तदविरोधाय कर्माधीनशरीरनिषेधपरमस्थूलादिवचनजातमि त्युपपादनीयम्। तथात्वे श्रुत्यन्तरस्य निर्विषयत्वापातात् कर्माधीनशरीरयोगस्यैव दोषावहत्वेन स्वेच्छाधीनतया नियन्तृतया तत्राऽवस्थानस्य दोषावहत्वाऽभावाच्च। नहि राज्ञो विषये वसतां राजाज्ञया सुखदुःखभाक्त्व मस्तीति तत्र वासा विशेषा द्राज्ञोऽपि तद्भवति। श्रुतिरपि शरीरस्थित्यविशेषेऽपि पारतन्त्र्यमेव शरीरित्वप्रयुक्तसुखदुःखभाक्त्वे निमित्तं दर्शयति— "समाने वृक्षे पुरुषो निमग्नोऽनीशया" इत्यादिकेत्याशङ्क्याह— यदि प्रकृतिविकारसम्बन्ध इति। अत्राऽय माशयः। राजविषयवासमात्रं न राजाज्ञाऽननुवृत्तिप्रयुक्तसुखदुःखभाक्त्वे निमित्त किन्तु राजाज्ञाविषयत्वविशेषितम्॥

नेति सिद्धान्तः । सर्वावस्थासु सर्वान्तर्यामितया स्थितिमतोपि परमेश्वरस्य न कश्चिद्दोषकलङ्कप्रसङ्गः । कुतः ? सर्वत्र श्रुतिषु चास्य निरस्तदोषकलङ्कत्वं निरतिशयमङ्गलाकरत्वं ह्युभयं लिङ्गं हि प्रसिद्धम् ' एष आत्मापहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः॥ '

' अस्ति कश्चिदपर्यन्तरमणीयगुणाश्रयः ।
सर्वलोकविनिर्माता पशुपाशविलक्षणः ॥ '

इत्यादिषु । अतः पृथिव्यादिष्वन्तर्यामितयावस्थानतोऽपि न दोषः॥

राजा नहि राजाज्ञाविषयः । अतो युक्तं राज्ञः स्वविषयवासित्वेऽपि स्वाज्ञाऽननुवृत्तिप्रयुक्तदुःखास्पृष्टत्वम् । शरीरप्रयुक्तदुःखभाक्त्वेतु शरीरित्वमात्रं निमित्तम् । अतो यथा पूतिगन्धादियुक्तकारागृहप्रयुक्तदुःखभाक्त्वे कारागृहावस्थितिमात्रं निमित्त मिति । तत्कारागृहे निक्षिप्तस्येव स्वेच्छया तन्नियन्तृत्वेन तत्राऽवस्थितस्याऽपि भवति । एवं देहे प्रयुक्तं दुःख देहबद्धस्येव तत्र तन्नियन्तृतया स्थितस्याऽपि भवेदेव । तस्मा ल्लोकवत्पस्यधिकरणगतं लोकवदित्युदाहरण मयुक्तम् । गुहाधिकरणगतम् " समाने वृक्ष" इति श्रुत्युदाहरणम प्ययुक्तम् । श्रुतिरपि हि न दृष्टविरुद्ध मर्थं बोधयितु मीष्टे ईश्वरो जीवव द्देहकारागृहेऽतिजुगुप्सितेऽवतिष्ठन्तं जीवव त्सम्प्रयुक्तदुःखेन स्पृश्यत इति । तस्मा दस्थूलत्वादिवचनानि जुगुप्सितशरीरप्रयुक्तदोषभियैव परमेश्वरस्य तथाभूतं शरीरं प्रतिषेधन्ति । तस्य पृथिव्यादिशरीरकत्वतन्नियन्तृत्वादिवचनानि त्वतात्त्विकं तत्तच्छरीरकत्वादिक मर्थवादविषया कल्पयन्तीत्येव व्यवस्थोपपादनीयेति ॥

स्थानतोऽपीति सूत्रभागं प्रतिषेध्याऽध्याहारेण योजयति—नकश्चिद्दोषकलङ्कप्रसङ्ग इति । उभयलिङ्गंहि प्रसिद्ध मिति । दोषाभावश्रवणमिव दोषविरोधिगुणश्रवणमपि दोषप्रतिक्षेपक मित्युभयलिङ्गोपन्यासः ॥

पृथिव्यादि ष्वन्तर्यामितया स्थितस्याऽपि परमेश्वरस्य तत्रतत्र स्थितस्य जीवस्येव दोषा नसम्भवन्ति । कुतः उभयलिङ्गम् सर्वत्रहि— हि=हेतौ यत स्सर्वत्र श्रुतिस्मृतिषु निरस्तसकलदोषत्वसमस्तकल्याणगुणाकरत्वरूपोभयलिङ्ग मुभयलक्षणं परब्रह्म त्यवगम्यत इति सूत्रार्थः ॥

ननु यद्यपि दहरविद्यादि ष्वीश्वरस्येव प्रजापतिविद्यायाम् जीवस्याऽप्युभयलिङ्गत्व मुपन्यस्तम् । तथाऽपि तत्तद्देहसम्बन्धे जीव स्तत्तच्छरीरप्रयुक्तं दुःख मनुभवं दीश्वरस्तु नाऽनुभव दित्यत्र विशेषो नोपलभ्यते तस्मा ज्जीवस्येश्वरेऽपि तत्तदवस्थासु दुःख मनुभवे दित्याशङ्का निराकरणार्थं सूत्रम् ॥

## भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥३-२-१२॥

यथा जीवस्य स्वतोऽपहतपाप्मत्वादिगुणस्यापि देवादिशरीरसम्बन्धित्वावस्थाभेदादुक्तदोषवत्वं तथा परमेश्वरस्यापि 'यस्य पृथिवी शरीरम्' इति शरीरसम्बन्धित्वावस्थाभेदात्तद्दोषाः स्युः इति चेत्—न, प्रत्येकं प्रतिपर्यायमतद्वचनात् दोषासम्बन्धित्ववचनात्। 'यस्य पृथिवी शरीरम्' इत्यादिषु 'एष त आत्मान्तर्याम्यमृतः' इत्यन्तर्यामिणो हि निर्दोषत्वमुच्यते। जीवस्य तु पराभिध्यानात् तत्स्वरूपं तिरोहितमित्युक्तम्॥

## अपि चैवमेके ॥ ३-२-१३ ॥

अपि च—एकस्मिन् शरीरे शरीरित्वेनावस्थितयोरपि जीवेश्वरयो र्दोषसम्बन्धित्वतद्विपरीतत्वलक्षणो विशेषो यथा प्रसिद्ध्यत्येवमेके स्वशब्दे नाधीयते—

---

अतद्वचना दित्यस्य दोषाभाववचनादित्यर्थ मभिप्रेत्य व्याचष्टे—— निर्दोषत्व मुच्यत इति। भेदात् - यथा जीवस्यापहतपाप्मत्वेन श्रुतस्याऽप्यवस्थाभेदा दुक्तदोषसम्बन्धित्वं तथा परमेश्वरस्याऽपि स्यादितिचे न्न प्रत्येकम्— प्रतिपर्यायम्। "यस्य पृथिवी शरीर" मित्यादिषु अन्तर्याम्यमृतइति दोषाभाववचना त्परमेश्वरस्य दोषसम्बन्धित्वं नंविद्यत इतिसूत्रार्थः ॥

ननु—— प्रतिपर्याय मुच्यनामिति शरीरप्रयुक्तदोषाऽस्पर्शित्वं प्रयत्नेन कथं तच्छरीरित्वस्य पारमार्थिकताया मुपपादनीयम। दोषास्पर्शवचनादेव तस्याऽपारमार्थिकतया विवक्षितेत्युन्नीयत इत्याशङ्क्याह — जीवस्य त्विति। जीवस्याऽपहतपाप्मत्वादिकं तिरोहितमिति पराभिध्यानादितिसूत्रे दर्शित मीश्वरस्य तन्नित्याविर्भूत मित्युत्तराचे दाविर्भूतस्वरूपस्त्विति सूत्रे दर्शितम्। अस्मादेव उभयलिङ्गत्वाविर्भावाऽनाविर्भावविशेषा ज्जीवेश्वरयो श्शरीरप्रयुक्तदुःखस्पर्शास्पर्शविशेषोपपत्तौ श्रुतिप्रतिपन्न मीश्वरस्य सर्वशरीरत्वादिक मविवक्षित मिति कल्पयितुं न युक्तमिति भावः। अमुमेव विशेष मभिप्रेत्य जीवेश्वरयोरेकशरीरस्थितावपि भोक्तृत्वाऽभोक्तृत्वविशेषं प्रतिपादय न्मन्त्रो दृश्यतइति प्रतिपादनार्थं सूत्रम् ॥

अपिच एकस्मिन् शरीरे शरीरित्वेनाऽवस्थितयो जीवेश्वरयो र्यो विशेष उक्तः एव मेके शाखिनः "द्वासुपर्णे"त्यादिनाऽधीयत इति सूत्रार्थः ॥

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥"

अतो न जीववदीश्वरे दोषप्रसङ्गः ॥

जीवेश्वरयोः शरीरस्थितिसाम्येऽपि स्थितिवैषम्यमाह—

## अरूपवदेव हि तत्प्रधानत्वात् ॥ ३–२–१४ ॥

तद्ब्रह्म परमेश्वरो देवादिशरीरेषु शरीरितया स्थितोऽपि रूपरहित-वस्तुवदेववर्तते । कुतः ? नामरूपनिर्वोढृत्वप्रधानत्वात् । तथा हि श्रुतिः 'आकाशो वै नाम नामरूपयो र्निर्वहिता ते यदन्तरा तद्ब्रह्म' इति ।

---

ननु मनुष्यादिशरीरेषु शरीरित्वमेव जीवस्य कर्मवश्यताहेतुः । तत्परमेश्वरस्याऽप्यविशिष्टमेवे त्कथं तस्याऽकर्मवश्यत्वेन तत्फलानशन मुपपद्यत इत्याशङ्कानिराकरणार्थं सूत्र मित्यवतारयति — जीवेश्वरयोरिति ॥

अरूपवदितिवतिप्रत्ययान्तम् । शरीररहितं वस्तु यथा शरीरित्वप्रयुक्तदुःखभाजनं न भवति तथा ब्रह्माऽपीत्यर्थः ॥

ननु— नामरूपनिर्वोढृत्वेन तत्र स्वातन्त्र्यलक्षणं नामरूपकार्यापेक्षया प्राधान्यं ब्रह्मणो भवतुनाम । तथाऽपि तदनुप्रवेशे पूतिगन्धकारागृहनिरोद्धु स्तत्प्रवेशइव तदन्तःस्थितिप्रयुक्तं कार्यं केन वार्यते । इत्याशङ्क्य नामरूपनिर्वोढृत्वलक्षणप्रधानहेतूक्तिसूचितां श्रुति मुदाहरति — तथा हीति— उदाहृतश्रुतौ नामरूपनिर्वोढु स्तत्सम्बन्धाभाव उक्तः । सच बाधितः । निर्वाह्यनिर्वाहक-रूपस्यैव सम्बन्धस्य सत्त्वात् । अत स्तत्कार्यदुःखेर्ष्यादिसम्बन्धाभावपरा तदुक्तिरिति भावः । कर्मफलभोगार्थं मिति । कर्माधीनमेवार्थानां दुःखकरत्वं न वस्तुस्वभावप्रयुक्तम् । पुत्रदारा-दीनां शीतोष्णादिविषयाणाञ्च समयभेदेन दुःखकरत्वतदभावयो र्दर्शनात् । स्मरन्तिच—" तदेव प्रीतये भूत्वा पुन र्दुःखाय जायते । तदेव कोपाय यतः प्रसादायच जायते । तस्मा द्दुःखात्मकं नास्ति नच किञ्चि त्सुखात्मक"मिति । तस्मा त्सिद्याविर्भूतापहतपाप्मत्वादिगुणकत्वेन श्रुतस्य

नामरूपयोरन्तराले तत्कार्यस्पर्शरहित एव वर्तते । मध्य इति स्वातन्त्र्यमुक्तम् । कर्मफलभोगार्थं हि जीवस्य शरीरे स्थितिः । अत उभयोर्वैधर्म्यम् ॥

**प्रकाशवच्चावैयर्थ्यात्** ॥ ३—२—१५ ॥

यथा 'सत्यम् ज्ञान मनन्तम् ब्रह्म' इति वाक्यावैयर्थ्यात् स्वप्रकाशा रूपतया ज्ञानरूपं ब्रह्म तथा 'निष्कलम् निष्क्रियम् शान्तम्' 'अपहत-पाप्मा' 'सत्यात्म प्रणारामम् मनआनन्दम्' 'यः सर्वज्ञः सर्ववित्' 'प्रधानक्षेत्रज्ञपतिर्गुणेशः 'परास्य शक्ति र्विविधैव श्रूयते' 'अथ कस्मा दुच्यते महादेवो यः सर्वान् भावान् परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः' इत्यादीनां परश्शतानां वाक्याना मवैयर्थ्यात् निरवद्यञ्च कल्याणगुणास्पदं च ब्रह्म इत्युभयलिङ्गमेव ॥

---

परमेश्वरस्य कर्मलेशोऽपि नाऽस्तीति तस्याऽस्मदादिशरीरेषु स्थितस्याऽपि न कारागृहप्रविष्टाधिकारिपुरुषन्यायेन दुःखादिकं प्रसज्यत इति भावः ॥

मनुष्यादिशरीरेषु शरीरित्वेन स्थितमपि तत्परम्ब्रह्म अरूपवदेव रूपरहितवस्तुवत् दुःखभाजनं नभवतीति । प्रधानत्वात् = निर्वाहकत्वात् । जीवस्य नामरूपभाक्त्वेन कर्मफलाशनं निर्वोढुं परमेश्वरस्य तत्तच्छरीरित्वेनाऽवस्थानम् । तदुक्तम् । "यस्य पृथिवी शरीरम् । यस्यात्मा शरीरम् । य आत्मान मन्तरो यमयति । आकाशोहवै नाम नामरूपयो र्निर्वहिता ।" इत्यादि । तस्मा दुभयलिङ्ग म्परब्रह्मेति सूत्रार्थः ॥

सत्यज्ञानादिवाक्यैरपि ब्रह्मणो न ज्ञानमात्रत्वसिद्धि रिति प्रतिपादनार्थं सूत्रम् ॥

प्रकाशः = स्वप्रकाशं ज्ञानम् सत्यज्ञानादिश्रुतिप्राप्तम् ज्ञानरूपत्वमिव "य स्सर्वज्ञ"-इत्यादिश्रुतिप्राप्तम् - सर्वज्ञत्वादिकम् प्यङ्गीकरणीयम् । उभयोः प्रामाण्याऽविशेषात् । तुल्यञ्च साम्प्रदायिक मिति न्यायात् ॥

यथा "सत्यंज्ञान"मितिवाक्याऽवैयर्थ्याय प्रकाशो ब्रह्मण स्वरूपमित्यवगम्यते । तथा निरवद्यम् । "य स्सर्वज्ञः— पराऽस्य शक्ति र्विविधैव श्रूयते" -इति वाक्याऽवैयर्थ्यात् । कल्याण-गुणाकरत्वं निर्दोषत्वञ्चाऽवगम्यत इत्युभयलिङ्गमेव परम्ब्रह्मेति सूत्राऽर्थः ॥

ननु — सत्यज्ञानादिश्रुते र्ज्ञानमात्रे तात्पर्यस्य विद्यमानत्वा द्विरोध इत्याशङ्कापरिहारार्थं सूत्रम् ॥

## आह च तन्मात्रम् ॥ ३–२–१६ ॥

'सत्यम् ज्ञान मनन्तम् ब्रह्म' इति श्रुति रनवच्छिन्नज्ञानरूपतामात्रम् ब्रह्मण आह। नान्यम् निवारयति, विशेषाभावादविरोधाच्च। यथा स्वर्णरूपं किरीटमित्येतत् स्वर्णरूपतामात्रकथनपरं, न तत्स्वचितरत्नादिनिषेधपरं, तद्वदिति। अत्र हि 'सत्यम् ज्ञान मनन्तम्' इति स्वत एव महाप्रकाशरूपतया परब्रह्मणः परमज्ञानाकारमात्र मभिदधतो श्रुति रनन्तर मुच्यमानं ब्रह्मणो विपश्चित्त्वं सर्वज्ञत्व निवारयितुं कथं क्षमते। विविधं वस्तुजातं पश्यन्ती विमृशन्तो विद्यस्य स विपश्चित्। अतो न विरोधः॥

## दर्शयति चाथो अपि स्मर्यते ॥ ३–१–१७ ॥

हेयगुणराहित्येन कल्याणगुणसाहित्येन चोभयलिङ्गं ब्रह्म दर्शयति

---

नहि सत्यज्ञानादिश्रुतिः ज्ञानमात्रं ब्रह्म त्याह। किन्तु ज्ञानं ब्रह्म त्येतावदाह - तत्तु गुणवत्त्वेऽपि नविरुध्यत इति भावः॥

ननु— ज्ञानत्वोक्तिसामर्थ्या त्परब्रह्मणि ज्ञातृत्वाद्यभावः कल्प्यतइत्याशङ्क्याह — अत्र हीति। अत्राऽयम्भावः॥

ज्ञानत्वोक्तिसामर्थ्या त्पुरुषबुद्ध्या हि ज्ञातृत्वाद्यभावः कल्पनीयः। तत्कल्पनां शीघ्रप्रवृत्तिकं श्रुत्यन्तरमेव वारयति। तदनपेक्ष्य "विपश्चितेति" तदनन्तरश्रवणमपि वारयति। शर्कराञ्जनविधिसामर्थ्या त्पुरुषबुद्ध्या तत्साधनत्वेन द्रव्यसामान्यकल्पनामेव वाक्यशेषे घृतश्रवणमिति। विपश्चित्पदम् विवक्षितेऽर्थे पृषोदरादित्वा त्साधुः। एवं सत्यज्ञानादिश्रुत्यवलम्बनेन निर्विशेषज्ञानरूपं ब्रह्मेत्यभ्युपगम्य परमेश्वरस्य सर्वशरीरत्वश्रवणस्य तदुपपादकत्वेनोपन्यस्तस्य सर्वेषु वेदान्ते षूभयलिङ्गत्वश्रवणस्य चान्यथासिद्धिः कर्तुं नशक्यतइत्युपपादितम्। अथ सर्वोऽपि वेदान्तगण स्तदीयोभयलिङ्गत्वपरःत्वसाधी त्यतोऽपि हेतो स्तदन्यथासिद्धिः कर्तुं नशक्यत इति प्रतिपादनार्थं सूत्रम्॥

अथो— इतिनिपातो वेदान्तवाक्यकात्स्न्यर्थपर। मङ्गळाऽनन्तरारम्भप्रश्नकात्स्न्यर्थेऽथथो-अपइति तस्य कात्स्न्यार्थत्वाऽनुशासनात्। न तादृशः कश्चिद्वेदान्तेषु ब्रह्मणि प्रवृत्तः शब्दोऽस्ति।

सर्वत्र श्रुतिरेव भगवती । 'आकाशशरीरम् ब्रह्म । सत्यात्म प्राणारामम् मनआनन्दम् । शान्तिसमृद्धममृतम् । इति प्राचीनयोग्योपास्स्व' इति । आ काशत इत्याकाशः प्रकाशस्तद्रूपं चिदम्बरस्वरूपम । सत्यात्म सत्तारूपम् । प्राणारामं प्राणे आत्मन्येवारामो न बहिरस्येति । मनस्येवानन्दोऽस्य न बाह्यकरणेष्विति मनआनन्दम् । मन इति ज्ञानमन्तःकरणमुच्यते, येनानपेक्षितबाह्यकरणेनापरोक्षितसकलबाह्यवस्तुविलासेन नित्यनिष्कलङ्केन प्रमाविशेषेण सर्वज्ञं ब्रह्मोच्यते । तेनापरिमितस्वरूपानन्दमनुभवतीति मनआनन्दम् । शान्तिसमृद्धं रागद्वेषादीनां हेयगुणानामत्यन्तराहित्यं शान्तिः तत्समृद्धं निरवशेषनिर्धूतनिखिलदोषकलङ्कम् । अमृतमनादिमुक्तमिति सत्यज्ञानरूपं सर्वज्ञं निरतिशयात्मानन्दशक्तिविलासं निरस्तसमस्तदोषं परं ब्रह्मेत्युभयलिङ्गमिति दर्शयति । तथा 'निष्कलं निष्क्रियं शान्तम्' 'धर्मावहम् पापनुदम् भगेशम्' 'तमीश्वराणाम् परमम् महेश्वरम्' इत्यादिश्रुतिश्चोभयलिङ्गं ब्रह्माह—

अनादिमलसंश्लेषप्रागभावाद्विशेषतः ।
अत्यन्तपरिशुद्धात्मा शिव इत्युच्यते विभुः ॥

अनन्तानन्दकल्याणगुणैकघन ईश्वरः ।
शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः ॥'

इति स्मर्यते च शिवशब्दवाच्यं ब्रह्मोभयलिङ्गमिति । परमविशुद्धिमङ्गलगुणवाचकेन शिवशब्देन निरस्तनिखिलदोषकलङ्कं निरतिशयपुरुषार्थ

---

यः प्रवृत्तिनिमित्ततया कस्यचित् दोषस्याऽभावं कञ्चन कल्याणगुणञ्च वा नापेक्षेत । अत स्सर्वोऽपि वेदान्ततदुपबृंहणगणगतब्रह्मपरशब्दराशि स्तस्योभयलिङ्गत्वं समर्पयन्ती त्यर्थः ॥

गुणपरिपूर्णं ब्रह्माभिधीयत इति ब्रह्मणः शिवशब्दवाच्यतया चोभयलिङ्गसिद्धिः ॥

## अत एव चोपमा सूर्यकादिवत् ॥ ३–१–१८ ॥

यतः पृथिव्यादिषु सर्वत्र स्थितस्याऽपि परमेश्वरस्य निर्दोषत्वं कल्याणगुणाकरत्वञ्च अत एव शास्त्रेषु जलसूर्यादिवदित्यस्योपमा क्रियते।

''आकाशमेकं हि यथा घटादिषु पृथग्भवेत्।
तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥''

इति। अत्र वस्तुतः स्थितमाकाशं वस्तुतोऽनवस्थितञ्च सूर्यमुपमानमुपादत्ते अनेनाभिप्रायेण—यथैकमेवाकाशं घटादिषु पृथक्पृथगेव वस्तुतः स्थितम्, तथैक एव परमेश्वरः पृथिव्यादिषु पृथक्पृथगात्मतया वस्तुत एव तिष्ठतीति परमेश्वरस्यैकस्याऽपि बहुषु वस्तुतः स्थितिरुपपद्यते इत्याकाशोपमानम्। जलाधारेषु वस्तुतोऽनवस्थितस्य सूर्यस्य यथा न तद्विकारादिदोषस्पर्शः तथा पृथिव्यादिषु वस्तुतः स्थितस्याऽपि परमेश्वरस्य न तद्विकारादिदोषस्पर्श इति सर्वान्तर्यामिणः परमेश्वरस्य निर्दोषत्वं स्वरूप-

एव मुभयलिङ्गत्वसमर्थनपूर्वकं पृथिव्यादिस्थितावपि तत्प्रयुक्तदोषाप्रसङ्गः स्समर्थितः। अथ श्रुत्युदाहृतदृष्टान्तसामर्थ्येन तं समर्थयितु सूत्रम्॥

आकाश मेकंहि यथेत्यादिश्रुतौ प्रथमदृष्टान्तेन ''यः पृथिव्या न्तिष्ठन्नि''त्यादिश्रुतिसिद्धा''नस्थानतोऽपी''ति सूत्रेऽनूदिता सर्वत्रस्थिति रुपपादिता। तेन कथमेकस्याऽमूर्तस्य बहुषु स्थितिः कृत्स्नैकदेशविकल्पपराहतत्वा दिति शङ्का निरवकाशीकृता ॥

द्वितीयदृष्टान्तेन तेषु स्थितस्याऽपि तेषु वस्तुतो स्थितस्येव तत्प्रयुक्तदोषाऽस्पर्शः ''ते यदन्तरे''त्यादिश्रुतिसिद्धः सूत्रेऽप्यरूपवदेवही त्यनूदित उपपादितः। तेन तच्छरीरकः कथ

गुणाहानिश्चेति सूर्योपमानम्। अत आकाशाद्युपमयाऽपि सर्वात्मनः परमेश्वरस्य सिद्धमुभयलिङ्गत्वम् ॥

अत्राशङ्कते—

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ ३–२–१९ ॥

अम्बुनि यथा सूर्योऽपरमार्थो गृह्यते, न तथा परमेश्वरः पृथिव्यादौ। किन्तु परमार्थत स्तत्र स्थित एव गृह्यते। अतः कथमस्य निर्दोषत्वम् ? ॥

इति शङ्कायाः परिहार उच्यते—

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्या देवं दर्शनाच्च ॥ ३–२–२० ॥

नेत्यनुवर्तते। वस्तुनः पृथिव्यादिष्वन्तर्भावादपि परमेश्वरस्य तद्गतवृद्धिह्रासभाक्त्वं न सम्भवति। पूर्वोक्तोभयदृष्टान्तग्रहणसामञ्जस्या देव-

न्तत्प्रयुक्तदोषभाङ् नभवेदिति शङ्का निरवकाशीकृता। कर्मवश्यत्वतदभावाभ्यां जीवेश्वरयो र्विशेष इतिश्रुते रभिप्रायः ॥

इद माशङ्कासूत्रम्। अत्रेय माशङ्का—अम्बुनीवाऽग्रहणात् यथाऽम्बुनि सूर्यः तत्राऽनवस्थितएव भ्रान्त्या तत्र स्थितइव गृह्यते। न तथा परमेश्वरः पृथिव्यादौ गृह्यते। "यः पृथिव्यान्तिष्ठन्नि"ति परमार्थतः स्थितो गृह्यते। अतो न तथात्वम्। न सूर्यस्येव तत्प्रयुक्तदोषास्पर्शः परमेश्वरस्य तत्र वस्तुतः स्थितत्वात्। अत श्श्रुति रित्थं व्याख्येया— पृथिव्यादिषु स्थितौ कथं तत्प्रयुक्तदोषाऽप्रसङ्गइत्याशङ्काया माकाशदृष्टान्तः। प्रसिद्धो ह्याकाशस्य तत्र स्थितस्याऽपि दोषाऽप्रसङ्गः। "जीवितात्यय मापन्नो योऽन्न मत्ति यत स्ततः। आकाशइव पङ्केन न स पापेन लिप्यत" इत्यादौ निर्विशेषज्ञानमात्ररूपस्य ब्रह्मणः पृथिव्यादिनियन्तृतया तत्रतत्राऽवस्थिति रयुक्तेत्याशङ्कायां द्वितीयदृष्टान्तः। तेन वस्तुतो नतिष्ठत्येव पृथिव्यादौ ब्रह्म जल इव सूर्यः। सन्घट इत्यादिप्रतिभासमात्रावलम्बनेन तत्रतत्र स्थिति रुपन्यस्ता। अतः प्रतिसूर्यस्य चलनादिकमिव तत्स्थित्यवभासप्रयुक्तं दोषवत्त्वं गुणवत्त्वं वा प्रतिभासमात्रं न पारमार्थिक मिति ॥

मवगम्यते। उक्तं हि वस्तुतोऽनवस्थितस्य सूर्यस्य स्थितस्य चाकाशस्योपमानत्वेन ग्रहणं सर्वत्रावस्थितस्याऽपि परमेश्वरस्यानवस्थितस्येव न तद्दोषस्पर्श इति ज्ञापयितुमिति। तथा हि दृश्यते विवक्षितधर्मसाम्यज्ञापनमात्रेण चन्द्रवन्मुखमिति दृष्टान्तः। तस्मादुभयलिङ्गसिद्धि रीश्वरस्य पारमार्थ्यात् पृथिव्यादिषु स्थितस्यापि। अथवा—श्रुतावपि दृश्यते विवक्षितधर्मसाम्येन

---

नेत्यनुवर्तते। पृथिव्यादिषु स्थितस्याऽपि परमेश्वरस्य तदन्तर्भावा त्तत्राऽवस्थानतः तत्प्रयुक्तवृद्धिह्रासभाक्त्वं नविद्यते। कुतोऽवगम्यत इतिचे दुभयसामञ्जस्या देव दृष्टान्तद्वयोपादानसामञ्जस्या देव मवगम्यते। इति सूत्रार्थः॥

अत्रायम्भावः। यथा—जलसूर्यस्य जलोपाधिप्रयुक्तवृद्धिह्रासादिभाक्त्वं वस्तुतो नभवति एवम्ब्रह्मणः पृथिव्याद्यवस्थितिप्रयुक्त गुणदोषभाक्त्वं नभवतीति तत्प्रयुक्तगुणदोषाभावमात्रे द्वितीयदृष्टान्तः। तथासत्येव दृष्टान्तद्वयीसामञ्जस्यात्। प्रतिसूर्यव दुपाध्यनवस्थितिपर्यन्तविवक्षायाम् प्रथमश्रुतदृष्टान्तोपमर्दापत्तेः। तथासत्येव सत्यज्ञानादिश्रुत्युभयलिङ्गत्वश्रुतिरूपोभयसामञ्जस्याच्च। अन्यथा सर्वशरीरत्वसर्वनियन्तृत्वादिप्रतिपादकानेकश्रुतिविरोधापत्तेः। नहि सर्वात्मना दृष्टान्तदार्ष्टान्तिकयोः स्साम्येन भाव्य मिति नियमः। लोकवेदयो विवक्षितांशसाम्यमात्रेण दृष्टान्तोपादानदर्शना दिति॥

अथ ये इद मधिकरण मुभयलिङ्गत्वनिषेधपरतया विवृण्वते ते निरर्थीकुर्वन्ति। तथाहि ब्रह्मण स्सविशेषत्वेहि सिद्धे पृथिव्यादिषु स्थितिवशा त्प्रसक्तं तत्तच्छरीरसम्बन्धिदोषवत्त्वं परिहर्तु मिद मधिकरणं प्रवृत्तमिति युक्तम्। परैस्तु निर्विशेषत्वस्यैवाऽङ्गीकृतत्वेन तादृशस्य वस्तुन श्शरीरदोषस्पर्शप्रसक्तस्यैव दुर्निरूपत्वेनाऽयुक्तत्वात्॥

तस्मा दिद मधिकरण मानर्थक्यमेव नीतं परै रतएव "अरूपवदेव हि तत्प्रधानत्वादि"ति सूत्रे अरूपवदिति पदं न रूपादिमदिति मतुबन्ततया व्याख्यानम्। अरूपमित्यनेनैव विवक्षितेऽर्थे सिद्धे वति मतुप्तया कृतं व्याख्यानं नैरर्थक्य मावेदयती त्यल मधिकेन॥

अथाऽपि येऽनीश्वरकारणत्ववादिन स्तेषामपीदमधिकरण मनर्थकमेव। तथाहि ते स्वाभिप्रेतायां सुबालोपनिषदि प्रकृतार्थोपपादकमन्त्राऽलाभा च्छैकान्तिकीं श्वेताश्वतरोपनिषद मेवाऽवशात श्शरणीकुर्वते। किञ्च कारणतया स्वाभिप्रेतस्य देवस्योभयलिङ्गत्वप्रवृत्तिनिमित्तकवाचकशब्दाऽभावादपि तथा मिद मधिकरण मननुकूलमेव॥ परमेश्वराऽसाधारणं शिवपद मुभयलिङ्गत्वप्रवृत्तिनिमित्तक मिति प्रसिद्धम्॥

दृष्टान्तः 'अश्व इव रोमाणि विधूय पापम्' इत्यादौ। अतो विवक्षित-धर्मसाम्येनोभयदृष्टान्तसामञ्जस्या दुभयलिङ्गमेव ब्रह्मेतिसिद्धम् ॥

इत्युभयलिङ्गाऽधिकरणम्

---

अथ प्रकृतैतावत्त्वाऽधिकरणम् ६

उभयलिङ्गासम्भवमाशङ्क्याह —

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः

॥ ३—२—२१ ॥

पूर्वत्र ब्रह्मण उभयलिङ्गत्वं साधितम्। तद्बाधोऽस्ति न वेति सन्दिह्यते ॥

'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च' इति पृथिव्यप्तेजोवाय्वा-काशात्मकमूर्तामूर्तप्रपञ्चरूपत्वं ब्रह्मण उक्त्वा, 'अथात आदेशो नेति नेति' इति श्रूयते। अत्रेतिशब्दस्य पूर्वप्रकृतपरामर्शित्वात् ब्रह्मणः पूर्वप्रतिपादितं मूर्तामूर्तप्रपञ्चरूपत्वं निषिध्यते ॥

---

तथाच — शिवा न्यखिलमाङ्गल्यगुणरत्ना न्यस्यसन्ती त्यर्थ आद्यच्प्रत्ययान्ततयाऽनन्त-कल्याणसाहित्यं निगमयति— किञ्च शाम्यन्त्यस्मि न्दोषा इत्यर्थे "सर्वनीघृष्वरिष्वलष्वशिव-पद्वप्रह्वेष्वा" इत्यौणादिकसूत्रे शमिधातो र्वन् प्रत्ययेन इत्त्वमलोभ्याञ्च शिवशब्दो निपातितः। निरस्तसमस्तदोषकळङ्कत्व माचष्टे। एवञ्चोभयलिङ्गत्वं शिवैकान्तिकमिति विशदम्। तस्मा दिदमप्यधिकरणं हठाद्ब्रह्मीमीमांसा मशिवसात्कुर्वतां चौर्यस्य प्रख्यापनक्षममि त्यलमधिकेन ॥

इत्युभयलिङ्गाऽधिकरणम्

---

अथ प्रकृतैतावत्त्वाऽधिकरणम् ६

एतदधिकरणसिद्धार्थविषयाक्षेपसमाधानत्वे नोत्तराऽधिकरण मवतारयति— उभयलिङ्गेति ॥

इति प्राप्ते ब्रूमः— ‘नेति नेति’ इति पूर्वसिद्धं ब्रह्मणः प्रपञ्च-रूपत्वं न निषिध्यते, अप्रज्ञातत्वेन विहितस्यास्य प्रतिषेधायोगात्। किन्तु, प्रकृतैतावन्मात्रं ब्रह्म न भवतीति प्रकृतेयत्तामेव ‘नेति नेति’ इति

पूर्वत्रेति। “अथात आदेशो नेति नेती”ति निषेधस्य पूर्वप्रकृतमूर्तामूर्तप्रपञ्चात्मकब्रह्मरूप-विषयताया मुभयलिङ्गत्वबाधः? प्रकृतेयत्ताविषयतायां न तद्बाध? इति तद्विषयानवधारणा त्संशय.। अत्रेति। नेतिनेतीत्यत्र तिशब्दपरामृष्टस्य नञा निषेधइति तात्पर्यविशदम्। इतिशब्दः प्रकारवाची। पूर्वप्रकृतम्प्रकारं परामृशेत्। पूर्वञ्च “द्वे वाव ब्रह्मणो रूपे” इत्यादौ मूर्तामूर्तप्रपञ्चा-त्मकं ब्रह्मणः प्रकारद्वयं प्रकृतम्। अत स्तन्निषिध्यत इति युक्तम्। नेतिनेतीति वीप्सायां द्विरुक्ति. पूर्वप्रकृतस्य रूपद्वयस्य साकल्येन निषेधप्रत्यायनायां। अथ वै केन मूर्तप्रपञ्चस्य निषेधोऽपरेणाऽमूर्तप्रपञ्चस्येति द्विर्वचनसाफल्यम्। प्रकृतेयत्ता निषिध्यत इतितु नयुक्तम। रूप-द्वयव त्तस्याः प्रकृतत्वाभावा द्रूपद्वयनिषेधइव तन्निषेधे द्विर्वचनस्य साफल्याभावाच्च। नच वाक्य-शेषे अधिकगुणजातविधानं प्रकृतेयत्तानिषेधानुगुणं दृश्यतइति शङ्क्यम्। तदसिद्धेः। न ह्येतस्मा दिति वाक्ये प्रकृतब्रह्मापेक्षयोत्कृष्टं निषिध्यतइति ब्रह्मण स्सर्वोत्तरत्वगुणप्रतिपादकवाक्यशेष इतिचेन्न। तस्य पूर्ववाक्यार्थानुगुण्येन ब्रह्मान्यसर्वनिषेधकत्वोपपत्तेः। तत्राऽन्यत्पर मित्यत्र पर-शब्दस्याऽपि व्यतिरिक्तार्थत्व मङ्गीकृत्य प्रतिभासतः केवलं ब्रह्मणः पर मास्त वस्तुतस्तु ततोऽन्यत्तु परं नास्तीत्येवमर्थकत्वात्। अतएव “प्राणा वै सत्यम् तेषा मेष सत्यमिति तदनन्तरं श्रूयते, तत्र प्राणशब्देनेन्द्रियवाचिना तद्विषया लक्ष्यन्ते। ते तावत् सन्घटइत्याद्यनुभवदर्शना त्केवलं प्रतिभासत स्सत्यभूताः। ब्रह्मतु वस्तुतोऽपि सत्यम्। तदपेक्षयोत्कृष्टं सत्यमिति॥

अथवा— सन्मृत्पिण्डः सन्घटः सत्कपालम् सच्चूर्ण मित्यादिप्रत्ययविषया मृत्पिण्डघटकपालादयो व्यावर्तमानसत्याः। ब्रह्मतु सर्वेष्वप्येतेषु प्रत्ययेष्वनुगत सत्यम्। व्यावर्तमाना ह्यनुवर्तमाने कल्पिता दृष्टा रज्ज्वादंशे स्रक्सर्पभूदलनादय.। अतो व्यावर्तमाना घटादयः केवलं प्रतिभासत स्सत्याइति तेषा मुत्कृष्टं सत्यं पारमार्थिकम्ब्रह्मेति। एवं प्रपञ्चनिषेधा न्निर्विशेषं परम्ब्रह्म नोभयलिङ्ग मिति पूर्वः पक्षः॥

सिद्धान्तस्तु —

प्रमाणान्तराऽप्रतिपन्नतया पूर्ववाक्ये श्रुत्यैव विहितम्। ब्रह्मणो मूर्तामूर्तप्रपञ्चवैशिष्ट्यं तदनन्तरवाक्येन प्रतिषेद्धुं नशक्यते पूर्वापरग्रन्थव्याहतिप्रसङ्गात्। षोडशिग्रहाग्रहवद्वस्तुनि विकल्पाऽसम्भवात। अतः पूर्व मूर्तामूर्तप्रपञ्चवैशिष्ट्यात्तथा बुद्धिस्थः प्रकृतेयत्तारूपः प्रकारो निषिध्यतइति युक्तम्। मूर्तामूर्तप्रपञ्चविशिष्टं ब्रह्मास्येतावन्मात्रं नभवति। किन्तु अधिकमपि

प्रतिषेधतीति युक्तम्। यतश्च पश्चात् पूर्वमनुक्तं भूयो गुणजातं ब्रवीति। 'न ह्येतस्मादिति नेत्यन्यत् परमस्ति अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यम् तेषामेष सत्यम्' इत्यादिना। अत्र 'न ह्येतस्मात्' इति वाक्येन 'नेति नेति' इति निर्दिष्टात् ब्रह्मणोऽन्यन्नास्त्युत्कृष्टमित्युच्यते। अथ नामधेयमुच्यते – सत्यस्य सत्यमिति। तदर्थनिर्वचनन्तु – "प्राणा वै सत्यम् तेषामेष सत्यम" इति। प्राणा जीवात्मानः सत्यं वियदादिव दुत्पत्त्यभावात्। तेभ्यः सत्येभ्यो ह्येष सत्यम्; तद्वत् ज्ञानसङ्कोचा द्यभावात्। अतः प्रकृतधर्मेयत्ताप्रतिषेधपरत्वात् 'नेति नेति' इति वाक्यस्य ब्रह्मणः पूर्वसिद्धमुभयलिङ्गत्वं न हीयत एव॥

ननु सन् घटः सन् पट इत्यादिष्वनुवृत्तं सद्रूपं ब्रह्म सत्यम्। अन्यत् व्यावर्तमानं घटादिकं 'नेति नेति' इति प्रतिषेधति श्रुति रित्यत आह—

---

गुणान्तरवत्त्व मस्तीति। वीप्सा त्वादरार्थत्वेन योजनीया। तदेकगुणान्तरम् "न ह्येतस्मा" दिति वाक्यशेषेण प्रतिपाद्यते। रूपतया विशेषणभूता न्मूर्तामूर्ता द्चेतनप्रपञ्चा त्पर मुत्कृष्टं ब्रह्मैव ततोऽन्य दस्मा त्प्रपञ्चा दुत्कृष्टं नास्तीति तस्यार्थः। तेन समनिषेधः फलितः। अतो नान्यपदवैयर्थ्यम्। ननु कथमयं समनिषेधः। अस्त्येव हि भूतवशिनां योगसिद्धानां मुक्तानाञ्च ब्रह्मवदेव मूर्तामूर्तप्रपञ्चरूपत्वेन प्रपञ्चा दुत्कृष्टत्व मित्याशङ्कानिराकरणार्थं नामधेयोक्तिपुरस्सरं तन्निर्वचनम्। तत्र प्राणशब्देन प्राणाधिष्ठितारो जीवा लक्ष्यन्ते। ते तावत् सत्यभूता अविकाराः। वियदादिवत्स्वरूपान्यथाभावरूपोत्प त्त्यभावात्। तेषाम प्युत्कृष्टं सत्य मविकारात्मकं ब्रह्म। जीवव ज्ज्ञानसङ्कोचविकासात्मिकाया धर्मान्यथाभावरूपाया अप्युत्पत्ते रभावात्। ततो योगिना म्मुक्तानाञ्च ज्ञानविकासानन्तरं मूर्तामूर्तात्मकप्रपञ्चरूपत्वसद्भावेऽपि प्राग्ज्ञानसङ्कोचकाले तन्नास्तीति सार्वदिकमूर्तामूर्तत्वशालि ब्रह्म यथा प्रपञ्चा दुत्कृष्टं न तथा जीवा इत्यभिप्रायः। एव मर्थवर्णनएव "द्वे वाव ब्रह्मणो रूपे" इत्याद्युपक्रमानुगुण्यम्। "नित्यो नित्यानाम् चेतन श्चेतनाना" मित्यादिश्रुत्यन्त रानुगुण्यञ्च लभ्यत इति॥

अथ "प्राणा वै सत्य" मित्यादिवाक्यशेषस्य पूर्वपक्ष्यभिमतार्थनिराकरणार्थत्वे नोत्तरसूत्र मवतारयति—नन्विति॥

## तदव्यक्तमाह हि ॥ ३—२—२२ ॥

ब्रह्मस्वरूपं प्रत्यक्षादिना प्रमाणान्तरेण नाभिव्यज्यते। 'न सन्दृशे तिष्ठति रूपमस्य। न चक्षुषा पश्यति कश्चनैनम्। हृदा' इत्यादिना यतः श्रुतिराह अतः प्रत्यक्षादिना सिद्धा सत्ता न ब्रह्मेति॥

ब्रह्मस्वरूपग्रहणे हेतुमाह —

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३—२—२३ ॥

अपि तु ध्यानरूपज्ञानेन सम्यगाराधने ब्रह्मस्वरूपं गृह्यते। ये ब्रह्मभाविता ब्रह्मोपमते, तेषां ब्रह्मस्वरूपं ग्रहणयोग्यं भवतीति श्रुतिस्मृतिभ्यामवगम्यते -

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूम् स्वाम्॥

इति।

तदंपक्षयास्थिष्ट सत्या॥

न ब्रह्मेति। घटादिष्वनुवृत्तं सन्मात्रं प्रत्यक्षंपालम् ग्घटग्रहमेवेत्यादिना भाष्यकारएव विमतं सहेतुकं निराकरिष्यति। * एवं भाष्यकृता कण्ठतः निराकृतमेव घटस्स न्पटस्स मित्यादौ प्रत्यक्षं सन्मात्रमेव ब्रह्मेतिमतं भाष्येऽसकृत्प्राक्षिप्य तेन भाष्यकृतां शुद्धाद्वैतएव परमं तात्पर्यमिति मिसाधयिषा शिवाद्वैतनिर्णयकृतां महतामपि श्रीदीक्षितवर्याणां स्वमते घन मभिमानमेव पुष्णातीति ब्रह्मपथे प्रपञ्चित मिति नेह पुनः॥

अपिस्त्विति शब्दो न चक्षुषा पश्यतीति व्यावर्तिता त्साधनान्तरा त्संराधनस्य विशेषप्रदर्शनार्थः। ध्यानयज्ञ नाराधनस्य सम्यक्त्वं परमेश्वरप्रसादलभ्यतद्विषयदृढभक्तिपूर्वकत्वम्। ब्रह्मभाविता =ब्रह्मणैव भावयन्तः स्वविषयदृढभक्तिमन्तः कृताः। नायमात्मेति। प्रवचनम्-बहुवेदपरिश्रमः। मेधा—बहुविद्याधारणसमर्था धीः। बहुश्रुतम्—तर्कमीमांसादिपरिश्रमः। एतै र्नलभ्यइत्यर्थः। अपितु एषः— परमात्मा। यं मत्प्रसादवशेन शुद्धान्तःकरणं—वृणुते—

'ततस्तु तम् पश्यते निष्कलं ध्यायमानः' इत्यादिका श्रुतिः। स्मृतिरपि - 'नासौ प्रत्यक्षविषयः' इत्यादिका ॥

## प्रकाशादिवच्चावैशेष्यम् प्रकाशश्च कर्मण्यभ्यासात्

॥ ३–२–२४ ॥

अविच्छिन्नानुध्यानसंराधनेन येषां ब्रह्म प्रकाशते तेषां तेन ब्रह्मदर्शनेन विषयीकरणे तज्ज्ञानानन्दादेर्जगदैश्वर्यस्य च वैशेष्यं नास्ति तथा हि दृश्यते। 'अहम् मनुरभवम् सूर्यश्च' 'तम् मामायुरस्मृत-मित्युपास्स्व' इत्यादिषु ब्रह्मोपसकानां तेन भावनैक्येन तदसाधारण. गुणप्राप्तिः। 'दिव्यम् ददामि ते चक्षुः पश्य मे योगमैश्वरम्' इत्यादिषु हि कृष्णादीनां तदैक्यभावनया तदैश्वर्यप्रकाशनं दृश्यते, ब्रह्मभावनाभ्यासेन च विश्वामित्रागस्त्यादीनां स्वर्गान्तरकरणजलधिकबलनादिसामर्थ्यम्। लोके च मन्त्रिणां गरुडभावनया गरुडासाधारणधर्मप्राप्तिः। तस्मात्

---

स्वकीयत्वेन परिगृह्णाति–मद्भक्त्या कृतार्थोऽयं भवत्विति कटाक्षयति। तेनैव लभ्यः दृढभक्तिविषयत्वेन प्राप्यः। तस्यैव पुरुषधौरेयस्य–स्वां तनुं सच्चिदानन्दलक्षणां विवृणुते–प्रकाशयतीत्यर्थः ॥

अपितु सम्यगाराधने परमेश्वरस्वरूपं गृह्यत इति श्रुतिस्मृतिभ्यामवगम्यत इति सूत्रार्थः ॥

प्रकाशादिवत् ब्रह्मोपासनया साक्षात्कृतब्रह्मणां ज्ञानानन्दादेरिव जगदैश्वर्यस्याऽप्यवैशेष्य म्भवति। यथा तेषां ज्ञानानन्दादेः ब्रह्मज्ञानानन्दादितो विशेषाऽभावः तथा तेषां जगदैश्वर्यस्याऽपि ब्रह्मणो जगदैश्वर्या द्विशेषाऽभावो भवति। येषां वामदेवादीनां संराधनकर्म ण्यभ्यासात् प्रकाशो ब्रह्म दर्शनं सञ्जातं तेषां ज्ञानानन्दादेरिव जगदैश्वर्यस्याऽप्यवैशेष्यम्-विशेषाऽभावः। इति सूत्रार्थः। अतएव भगवतः कृष्णस्योपासनाकर्मे ण्यभ्यासात् निरन्तरैकाग्र्या ब्रह्मसाक्षात्कारेण तद्व जगदैश्वर्यप्राप्त्याऽर्जुनाय तत्प्रकाशनं गीतासु दृश्यते। अगस्त्यविश्वामित्रादीनाञ्च जलधिपान–स्वर्गान्तरकरणादिसामर्थ्यप्रकाशनं पुराणेषु दृश्यते ॥

ब्रह्माहन्तायाः प्रौढभावे सति ब्रह्मासाधारणधर्मांशवैशिष्ट्य मुपासकाना मसाधारणमित्यनवद्यम्। अतो घटादिष्वनुवृत्तं सन्मात्रं प्रत्यक्षं ब्रह्मेति विरुद्धमेव। तास्मत् साक्षात्कारहेतूनां निदिध्यासनादीनां वैयर्थ्यप्रसङ्गात् अप्रत्यक्षेऽपि तादृशि तल्लिङ्गादर्शनाच्च अतः सन्मात्रं प्रत्यक्षं ब्रह्म तदन्यत् सर्वं निषेधति नेति नेतीति न युक्तमेव ॥

## अतोऽनन्तेन तथा हि लिङ्गम् ॥ ३–२–२५ ॥

यतो ब्रह्मोपासीनानामपि तदसाधारणज्ञानानन्दपरमैश्वर्यादिकं प्रकाशते, अतो 'द्वे वाव ब्रह्मणो रूपे' इत्यादिनाभिहितेनानन्तेन कल्यणगुणेन योगो ब्रह्मणः सिद्ध एव। तस्मादुभयलिङ्गम् ब्रह्मेति ॥

ननु 'द्वे वाव ब्रह्मणो रूपे' इत्यादिनोक्तं प्रपञ्चस्य ब्रह्मरूपत्वं ब्रह्मप्रपञ्चयोराध्यासिकसम्बन्धेनैव निर्वाह्यम्, विधान्तरेण तन्निर्वाहा-सम्भवात्। ततश्च 'अथात अदेशो नेति नेति' इत्यस्य अध्यस्त-

---

ननु पूर्वसूत्रे ब्रह्मसाक्षात्कारस्य कारण मुक्त मस्मि न्सूत्रे कार्यं मुक्तं नानयो स्सयोगः प्रकृते दृश्यतइत्याशङ्क्य अव्यक्तत्वहेतुना ब्रह्मण स्सन्घटइत्यादिप्रत्यक्षविषयत्वं निराकृते तत्र हेत्वन्तरप्रदर्शनपरत्वेनोपयोगं दर्शय न्सूत्रद्वयार्थं मुपसंहरति– अत इति । यतः पामराणामपि भवतः सन्घटइत्यादिप्रत्यक्षस्य ब्रह्मसाक्षात्कारे कॢप्त मुपासनारूपं कारणं नास्ति। यतश्च सर्वज्ञानानन्दैश्वर्यविशेषाविर्भावरूपं कार्यञ्च नास्ति । अतोऽपि हेतो र्न ब्रह्मण स्तद्विषयत्व मित्यर्थः ॥

इत्यादिनेत्यादिशब्देन ब्रह्मणः कल्याणगुणजातप्रतिपादकं सर्वं वचनजातं गृह्यते.। अनन्तेनेत्यस्य कल्याणगुणेनेति विशेष्योपादानेन "अथवाऽनन्तकल्याणगुणैकनिधि रीश्वरः। शिव इत्युच्यते सद्भि शिवतत्त्वार्थवेदिभि"रिति वचनार्थं मनसि निधाय सूत्रकृताऽनन्त-शब्दःप्रयुक्तइति द्योतितम् भवति। तथाहि लिङ्गमिति सूत्रशेषं व्याचष्टे – तस्मा दिति। अनेन तथाहीत्यस्य तथासति हीत्यर्थो लिङ्गमित्यस्य "पीता गावो मुक्त ब्रह्मणा" इतिव

प्रपञ्चनिषेधपरत्वमेव युक्तमित्याशङ्क्य विनाप्यध्यासमसम्बन्धं स्वाभिमतेन प्रकारेण तन्निर्वाहं वक्ष्यन् प्रथमं पक्षान्तरमाह ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३—२—२६ ॥

'सर्वो वै रुद्रः' 'द्यावापृथिवी जनयन् देव एकः' इत्येकत्वबहुत्वव्यपदेशादहेः कुण्डलभावर्जुभाववत् परमेश्वरस्यैव 'द्वे वाव ब्रह्मणो रूपे' इत्यादिनोक्तः पृथिव्यादिभावसंस्थानविशेषः ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ३—२—२७ ॥

प्रकाशतदाश्रययोर्यथा स्वरूपभेदेऽपि तेजस्त्वयोगेनैक्यम्, एवमचिद्ब्रह्मणोरेकजातियोगेनेति वा तस्य पृथिव्यादिभावः ॥

---

दर्शआद्यक्तप्रत्ययान्तत्वेनोभयलिङ्गमि त्यर्थश्च दर्शितो भवति। निर्विशेषब्रह्मवादेऽपि निर्दोषत्वांश स्सम्प्रतिपन्नइति गुणवत्त्वप्रसाधनमुखेनोभयलिङ्गत्वोपसंहारः कृतः।

उत्तरसूत्र मवतारयितु माशङ्कते — नन्विति।

अहेरिति। यथा ह्यहे रहित्वेनाऽभेदेऽपि कुण्डलभावर्जुभावरूपसंस्थानविशेषापत्त्या भेदः एवं ब्रह्मण स्स्वरूपेणाऽभेदेऽपि कार्यप्रपञ्चरूपापत्त्या भेद इत्यर्थः। नचाहे र्विश्रान्तिसञ्चारादिप्रयुक्तभोगविशेषार्थं कुण्डलभावऋजुभावापत्ति र्भवतीति युक्तम्। ब्रह्मणस्तु सर्वज्ञस्य सर्वेशस्य ज्ञानानन्दरहिता चित्प्रपञ्चतापत्ति र्नयुक्तेति वाच्यम्। न ह्यहिव द्ब्रह्म स्वप्रयोजनार्थं म्प्रवर्तते। किन्तु प्राणिना मनुग्रहार्थम्। तदनुग्रहश्च भोगानुष्ठानाद्युपयुक्ताचित्प्रपञ्चतापत्तावेव भवती त्यभिसन्धाय तदात्मता मापद्यत इतिभावः ॥

यथा—प्रभावतो र्भेदेऽपि एकजातियोगा त्सर्वमिदं तेजइति व्यवहार स्तथा "सर्वम् खल्विदम् ब्रह्म" त्यादिव्यवहार इत्यर्थः ॥

## पूर्ववद्वा ॥ ३—२—२८ ॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः । यथा पूर्वत्र प्रकाशजातिगुणशरीरवद्विशेषणतैकस्वभावतया विशिष्टैकदेशत्वेनांशत्वमुक्तं चिद्वस्तुनः, एवमचिद्वस्तुनोऽपि । 'सर्वो वै रुद्रः' इति चिदचिद्वस्तुनोरेकेन शब्देनाभिधानं हि शक्यमेकरूपभूतयोः पूर्वोक्तसम्बन्धे सत्येव । इतरपक्षद्वये ब्रह्मणः सदोषत्वं दुर्वारम् । 'यस्य पृथिवी शरीरम्, यस्यात्मा शरीरम्' इत्यादिश्रुतेः,

'विद्येति चेतनाम् प्राहु स्तथाऽविद्या मचेतनाम् ।
विद्याविद्यात्मकम् सर्वम् विश्वम् विश्वगुरो र्विभोः ।
रूपमेव न सन्देहो विश्वं तस्य वशे यतः ॥'

इत्यादिपुराणवचनप्रामाण्याच्च चिदचिद्वस्तुनो रष्टमूर्तेर्ब्रह्मणः शरीरता च सिद्धा ।

## प्रतिषेधाच्च ॥ ३—२—२९ ॥

'नास्य जरयैतज्जीर्यति' 'अस्थूलमनण्वह्रस्वम्' इत्यादिषु चिदचिदात्मत्वेऽपि ब्रह्मण स्तद्धर्मप्रतिषेधाच्च चिदचिद्विशिष्टमपि ब्रह्म निर्दोषं निखिलमङ्गलगुणास्पदञ्च । एतदुक्तं भवति — चिदचितोः कारणत्वेऽपि

इतरपक्षद्वय इति । आद्यपक्षे ब्रह्मणः परिणामित्वं जडत्वञ्चेति दोषद्वयम् । द्वितीयपक्षे ब्रह्मत्वजात्याश्रयत्वेन प्रपञ्चोऽपि ब्रह्मेति तत्राऽपि तद्दोषद्वय म्प्रादुष्यात् ॥

तथाच — ब्रह्म निर्दोषत्वप्रतिपादकसकलश्रुतिविरोध इत्यर्थः । शरीरशारीरिभावस्तु ब्रह्मप्रपञ्चयो स्सकलश्रुतिपुराणाद्यनुगुण इत्याह — यस्य पृथिवीति ॥

तद्विशिष्टत्वेऽपि ब्रह्मणः शिवस्य विकाराज्ञत्वाद्यपुरुषार्थधर्मरहितत्वं सर्वज्ञत्वनित्यतृप्तत्वानादिबोधत्वस्वतन्त्रत्वालुप्तशक्तित्वानन्तशक्तित्वादिपरम - पुरुषार्थधर्मवत्त्वञ्च नित्यसिद्धमेवेति ॥

इति प्रकृतैतावत्त्वाऽधिकरणम्

---

अथ पराऽधिकरणम् ७

तदिह सकलचिदचिदाकारपरमशक्तिविलाससमरसात्मनः सर्वदोष-वासनाकलङ्करहितात् सर्वज्ञतादिसकलमङ्गलगुणरत्नाकरात् परब्रह्मणो विरूपाक्षाच्छिवादेतस्मात् परं किञ्चिदपि वस्त्वन्तरं नास्तीति वक्तुं प्रथममाशङ्कते--

---

प्रपञ्चशरीरकत्वे सत्येवहि ब्रह्मण स्तत्प्रयुक्तदोषप्रसक्तौ तत्प्रतिषेधश्रावण मुपपद्यते। अत स्तत्प्रतिषेधश्रावणा त्सर्वप्रपञ्चशरीरकं ब्रह्म तत्प्रयुक्तदोषरहितञ्च । गुणविरोधिदोषराहित्या त्सकलमङ्गलगुणास्पदञ्चेति सूत्राऽभिप्राय माह—नास्त्येति ॥

इति प्रकृतैतावत्त्वाऽधिकरणम्

---

अथ पराऽधिकरणम् ७

उत्तरोऽधिकरण न्तत्प्रतिपाद्य प्रदर्शनपूर्वक मवतारयति—तदिहेति । "न स्यानतोपीति" सूत्रे परशब्देन ब्रह्म सर्वोत्कृष्टत्वेनाऽनूदितम् ॥ तदधिकरणप्रतिपाद्योभयलिङ्गत्वबाधाबाध-विचारार्थत्वेनाऽन्तरङ्गतया तदनन्तरं प्रकृतैवत्त्वाऽधिकरण म्प्रवृत्तम् । तत्सूत्रेऽपि परस्ये त्यनुवृत्ते स्तस्य सर्वोत्कृष्टत्वप्रसङ्गोऽनुवृत्तः । तेन समराहित्यम प्यर्थसिद्धम् । अन्यथा तस्य स्वव्यतिरिक्तसर्वोत्कृष्टत्वाऽसिद्धेः । तद्विषयवाक्ये नह्येतस्मादिति नेत्यस्मा त्पर मस्तीति तस्य समराहित्यं प्रतिपादितम् । ततः कैमुतिकन्याया दधिकराहित्य मर्थसिद्धम् । एव म्प्रसक्त मुभयमपि सम्भावितसकलशङ्कापरिहारेण न्यायतः स्थिरीकर्तु मुत्तराऽधिकरणद्वयम् । तत्राऽ प्यधिकराहित्ये निर्णीते माभू दधिकः समः कश्चि त्स्यादितिशङ्काप्रवर्तितु मुचितेति प्रथम मधिकराहित्यं निर्णीयतइति सङ्गति रिह विवक्षिता ॥

## परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥ ३–२–३० ॥

'जन्माद्यस्य यतः' इत्यादिना 'प्रतिषेधाच्च' इत्यन्तेन यः परमकारणतया प्रतिपादितः परमेश्वरः इतः परमपि वस्त्वस्ति न वा।

इति संशयोऽस्तीति पूर्वः पक्षः । तथा हि– 'अथ य आत्मा स सेतु र्विधृति;' 'एतम् सेतुम् तीर्त्वा अन्धः सन्ननन्धो भवति' इति 'चतुष्पाद्ब्रह्म' 'अमृतस्यैष सेतुः' इत्यादिभिरस्य परब्रह्मणः सेतुत्व-तरितव्यत्वपरिमितत्वप्रापकत्वादीनि व्यपदिश्यन्ते । अतोऽस्मादपि परं किञ्चिद्वस्त्वस्तीति ॥

सिद्धान्त उच्यते—

न न्वेतत्पर्यन्तेन सूत्रसन्दर्भेण सकलजगत्कारणत्वेन तदुपपादकसकलकल्याणगुण-विशिष्टत्वेन मुक्तोपास्यत्वेन मुक्तोपसृप्यत्वेन च प्रतिपादिता त्परमेश्वरा त्परोऽस्तीतिशङ्का नावकाशंलभते । इत्याशङ्क्य सम्यगालोचयतां तथैव–तयाऽपि सेत्वादिव्यपदेशा न्निरीक्ष-माणानां मन्दधियां तदाशङ्का भवेदिति तदपाकरणाय तेषां गतिप्रदर्शनार्थोऽयमारम्भ इत्याशयेनाह—जन्मा द्यस्येति । सेत्वादिव्यपदेशानां गत्यन्तरासम्भवासम्भवाभ्यां संशये पूर्वपक्षः भवतु जगत्कारणत्वादियुक्त म्परम्ब्रह्म मुक्तप्राप्यन्तु वस्तु ततोऽन्यदेव । तस्मादपि परमिति सेत्वादिव्यपदेशतोवगम्यते । तथाहि– "अमृत स्यैषसेतु" रित्यादिना सेतुव्यपदेश स्ताव ब्रह्मणि सर्वेषु वेदान्तेषु दृश्यते । प्रसिद्धसेतु स्ताव त्परपारप्रापकत्वेन प्रसिद्धः । अत स्सेतुव्यपदेशा द्ब्रह्मणोऽपि प्राप्यान्तरप्रापकत्व मवसीयते । किञ्च तदेतद्ब्रह्म चतुष्पादिति चत्वारश्च पादा निरूपिताः । एव म्परिमितं ब्रह्म त्वपरिमितं यत्प्राप्यं मोक्षशास्त्रे प्रसिद्धं तद्ब्रह्मणोऽन्य त्प्राप्य मित्यवसीयते । साक्षादेव मुक्तप्राप्यस्य ब्रह्मणश्च प्राप्यप्रापकभाव-सम्बन्धस्याऽपि व्यपदेशो दृश्यते । तस्यैष सोमः— "अमृतस्य परंसेतु"मिति । तथाच "अमृतस्यैष सेतु"रित्यस्याऽपि तदैकार्थ्य मुक्तम् । साक्षाच्च वेदान्तेषु परशब्देन प्रसिद्धाद् ब्रह्मणः परंप्राप्य मिति भेदस्याऽपि व्यपदेशो दृश्यते । "परात्परं पुरुष मुपैति दिव्य"मिति । तस्मा त्परम्ब्रह्माऽप्यातिवाहिकविशेष इत्यर्थः ॥

सेतुत्वादिहेतुभ्यः अतः ब्रह्मणः परमन्य त्प्राप्य मिति सूत्रार्थः । इदम्पूर्वपक्षसूत्रम् ॥ एवं प्राप्ते सिद्धान्तमाह—

## सामान्यात्तु ॥३–२–३१ ॥

तुशब्दः पूर्वपक्षनिवर्तकः। अत स्तस्मात् सर्वेत्तराच्छिवात् परमस्तीति वादो न युक्तः, 'विश्वाधिको रुद्रो महर्षिः' इत्यादिश्रुतिभि स्तस्य विश्वाधिकत्वसिद्धेः। अत्र च सेतुत्वादिव्यपदेश स्तत्सामान्यादेव सर्वलोकासङ्करकरत्वेन 'अथ य आत्मा स सेतु र्विधृति रेषाम् लोकाना मसम्भेदाय' इति श्रूयते। 'सर्वं खल्विदम् ब्रह्म' इति प्रतिपादितजगन्निमित्तोपादानभावस्य ब्रह्मण एव 'एतमितः प्रेत्याभिसम्भवितास्मि' इति प्राप्यत्व मवगम्यते। अन्यत्र च—

'त्रिलोचनम् नीलकण्ठम् प्रशान्तम्। ध्यात्वा मुनि र्गच्छति भूतयोनिम्। समस्तसाक्षिम् तमसः परस्तात्'॥

इति तमसः परस्य सकलकारणस्य सर्वज्ञस्य त्रिलोचनत्वादिलक्षणस्य ब्रह्मण एव सर्वोत्तरतः प्राप्यत्वमुच्यते। तस्मा दत्र तरतिः प्राप्तिवचनः। अन्यथा परमप्राप्याद्विश्वाधिकात् परमकारणादुपरि वस्तुसद्भावे तदुपर्यपि वस्तुसद्भावप्रसङ्गेनानवस्था वेदान्तवाक्यानां भवेत्। अतः सर्वातीतः परमशिव इति सर्वोत्कृष्टत्वं ब्रह्मण एव ॥

यदुक्तं परिमितत्वमपि तत्राह —

---

परमतइत्यादिपूर्वपक्षसूत्रा दतइति—अम्बुव दग्रहणा दिति पूर्वाऽधिकरणसूत्रा चेतिचाऽनुवर्तते। अतः परमेश्वरा त्परं नाऽस्ति। सेतुव्यपदेशस्याऽनेन गतिरुच्यते। सामान्यात् सेतुशब्दः "एषांलोकाना मसम्भेदा" येति वाक्यशेषावगताऽसङ्करकारित्वसामान्या त्प्रयुक्त इत्यर्थः। तरतिश्च प्राप्त्यर्थः। तरणस्य-देशान्तरप्राप्तिफलकत्वग्रहणे वेदान्तवाक्याना मनवस्थाप्रसङ्गेन तरतेः प्राप्तिलक्षकत्वोपपत्ते रित्यर्थः। एतच्च—अत्र शास्त्र उक्त म्ब्रह्म परमशिवएव सर्वोत्कृष्टं वस्तु न ततः परं वस्त्वस्ति। सएवच मुक्तप्राप्य इतिच सर्ववेदान्तानां परमं तात्पर्यमिति भावः। एवं सेतुव्यपदेश स्यानेन सूत्रेण गतिरुक्ता ॥

अथ परिमितत्वव्यपदेशस्य गतिप्रतिपादकं सूत्रम्॥

## बुद्ध्यर्थः पादवत् ॥ ३–२–३२ ॥

'चतुष्पात्' इत्युन्मानव्यपदेशो 'वाक्पादश्चतुष्पादः' इतिव दुपासनार्थः ॥

## स्थानविशेषात् प्रकाशादिवत् ॥ ३–२–३३ ॥

अपरिमित एव यद्यपि परमेश्वरः । तथाप्यस्य स्थानविशेषा दवच्छिद्यानुसन्धानं युज्यते, यथा वातायनादिस्थानसम्बन्धात् प्रकाशादेः ॥

प्राप्यस्याऽपि प्रापकत्वं चास्तीत्याह —

## उपपत्तेश्च ॥ ३–२–३४ ॥

प्राप्यस्यैव परमेश्वरस्य प्रापकत्वञ्चोपपद्यते, यथाह 'यमेवैष वृणुते तेन लभ्यः' इति । अतः परमेश्वरान्नास्तिपर मिति सिद्धम् ॥

इति पराऽधिकरणम्

---

बुद्ध्यर्थः=उपासनार्थः । पादवत्=वाक्पाद इत्यादिवदिति सूत्रार्थः । उन्मानव्यपदेश उपासनार्थः । " य एत मेवं विद्वां श्चतुष्कलं पादं ब्रह्मण उपास्ते " इति वाक्यशेषा दिति भावः । ननु परिमितस्य मनस श्चतुष्पात्त्वानुसन्धानं युज्यताम् कथं तदपरिमितस्य ब्रह्मण इत्याशङ्कानिराकरणार्थ मिदं सूत्रम् ॥

अपरिमितस्याऽपि स्थानविशेषसम्बन्धा दवच्छिद्याऽनुसन्धानं युज्यते । विततस्य प्रकाशादेः वातायनादिस्थानसम्बन्धादिवेति सूत्रार्थः ॥

प्रापकत्वञ्चाऽस्तीति । प्रापकत्वञ्चाऽस्य श्रुत मस्ती त्यर्थः ॥

प्राप्यस्यैव परमेश्वरस्य प्रापकत्वोपपत्ते रिति सूत्रार्थः । तदुपपादकश्रुति माह— 'यमेवैष वृणुते' इति ॥

इति पराऽधिकरणम्

अथ अन्यप्रतिषेधाऽधिकरणम् ८

## तथान्यप्रतिषेधात् ॥ ३–२–३५ ॥

पूर्वत्र विरूपाक्षात् परब्रह्मणः शिवाच्चास्ति परमिति निरूपितम्। पुनरिह तत्सदृशोऽस्ति न वा। .

इति संशये पूर्वः पक्षः। परमेश्वरादुत्कृष्टवस्त्वभावेऽपि जगत्कारणत्वेनेश्वरत्वादिना तत्सदृशोऽस्त्येव। तथा हि श्रूयते – 'सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्' इत्यत्र कश्चित् पुरुषः। तस्य हि 'सहस्रशीर्षा पुरुषः' इत्यादिना बहुमुखपादादित्वम्, 'पादोस्य विश्वा भूतानि' इति जगद्विशिष्टत्वम्, 'त्रिपादस्यामृतम् दिवि' इति परमाकाशवर्तित्वम्, 'तस्माद्विराडजायत विराजो अधिपूरुषः' इत्यव्यक्तहिरण्यगर्भोपादानत्वम् 'अदित्यवर्णम् तमसस्तु पारे' इति तमः परत्वम् 'तमेवम् विद्वा नमृत इह भवति' इति मोक्षहेतुत्वञ्चावगम्यते। तस्य पुनः 'सहस्रशीर्षम् देवम्' इत्यारभ्य 'पतिम् विश्वस्य' इति विश्वपतित्वम् 'नारायणपरम्ब्रह्म' इति नारायणशब्दवाच्यत्वं परब्रह्मत्वम् 'परमात्मा व्यवस्थितः' इति दहराकाशोपास्यत्वञ्चावगम्यते। अतो नारायणोऽसौ परमेश्वरसमानधर्मा। एतएव हि परमेश्वरस्य धर्माः–

---

अथ अन्यप्रतिषेधाऽधिकरणम् ८

परमेश्वरसदृशोऽस्ति वा नवेतिसंशये पूर्वपक्षः–आत्मप्रबोधोपनिषदि "यदिदं ब्रह्मपुरमिदम्पुण्डरीकम् तस्य य आत्मा हृत्पुण्डरीकमध्ये" इत्युपक्रम्य "ओम् नमो नारायणाये"ति मन्त्रोपासनं "वैकुण्ठम् भगवल्लोकम् गमिष्यती" ति तदीयमन्त्र स्तत्फलञ्चे त्युभय न्दर्शितम्। नारायणोपासनया तल्लोके तत्सायुज्यप्राप्तिश्च शिवसायुज्यप्राप्तिवदेवाऽनावृत्तिफला। अतएव महाभारते शिववचनम्– "सायुज्यानाम् विशेषे द्वे मामकम् वैष्णव न्तथा। माम् प्राप्य ननिवर्तन्ते विष्णुं वा शुभलोचने"। इति। एव मुभयो र्भजनस्य मुक्तिफलकत्वाऽविशेषादेव शैवानि वैष्णवानिच मुक्तिक्षेत्राणि पुराणेषु प्रसिद्धानि। तेषु तयो रुभयोऽप्यविशेषेण पूजाविशेषाः प्रवर्तन्ते। तयो र्जगत्कारणत्वजगदीश्वरत्वमुक्तोपास्यत्वमुक्तप्राप्यत्वादिप्रतिपादकाश्च श्रुतिस्मृतिपुराणागमा स्समनेवोपलभ्यन्ते। यद्यपि शिवादाधिक्यं न कस्यचिदपि सम्भवति।

'सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवां स्तस्मा त्सर्वगतः शिवः ॥'

इति मन्त्रोपनिषदि । 'विश्वतश्चक्षु रुत विश्वतोमुखः' इति महोपनिषदि । शिवसङ्कल्पे च 'सर्वतोमुखः' इति । अथर्वशिरसि बहुमुखपादादिमत्त्वं परमेश्वरस्य श्रूयते ॥

'मायान्तु प्रकृतिं विद्या न्मायिनन्तु महेश्वरम् ।
तस्यावयवभूतेन व्याप्तं सर्वमिदं जगत् ॥'

इति जगदशविशिष्टत्वम्, 'हिरण्यगर्भम् पश्यत' इत्यादिषु हिरण्यगर्भकारणत्वम् 'समस्तसाक्षिम् तमसः परस्तात्' इत्यादिषु तमःपरत्वम् 'दहरम् विपाप्मम' इत्यादिषु दहरोपास्यत्वम् 'ज्ञात्वा शिवम् शान्ति मत्यन्त मेति' इत्यादिषु मोक्षहेतुत्वम् । 'सर्वैश्वर्यसम्पन्नः' इत्यादिषु

---

तथाऽप्यपक्षपातेन श्रुतिस्मृतिपुराणागमा न्विमृशतां शिवेन नारायणस्य साम्यं न प्रत्याख्यातुं शक्यम् । जगत्स्रष्टृत्वादिक मुभयोरपि कल्पभेदेनोपपादनीय मित्यधिकाशङ्कालम्बनोऽत्र पूर्वपक्षः । तन्निराकरणाय प्रवर्तते सूत्रकार । तथाऽन्यप्रतिषेधा दिति । तत्र तथाशब्दसूचितस्य प्रतिज्ञांशस्याऽनुवृत्त्यध्याहाराभ्या मपेक्षितं पूरय न्सूत्रं व्याचष्टे—यथेति । न न्वैश्वर्यकारणत्वादिविषये अन्यप्रतिषेधो दृश्यतां नाम । किमतः । नारायणस्याऽपि तत्प्रतिपादनं दृश्यतएवेत्याशङ्क्य तस्यगतिं वक्तुमुपक्रमते । परमशक्तिमत्त्वादिना नन्विदं सर्वं स्वकल्पितप्रक्रियामात्रं स्पष्ट मिदं नप्रतीयतइत्याशङ्क्य नारायणस्य चिच्छक्त्यंशत्वे श्वेताश्वतरमन्त्र मुदाहरति—मायान्त्विति । यद्यपि प्रकृत्यधिकरणे शिवस्योपादानत्वे निर्विकारश्रुतिविरोधपरिहाराय परिणामिप्रकृतिद्वारकं तस्योपादानत्व मित्येतावत्प्रदर्शयितुं परिणामा दिति सूत्रं प्रवृत्तम् । तथाऽपि प्रकृतं रुपादानत्वं कथं नारायणस्योपादानत्वश्रावणमिति बुद्धिस्थशङ्कानिराकरणाय तत्र भाष्यकृता "मायान्त्वि"ति मन्त्र मुदाहृत्य तत्र तात्पर्यमुक्तम् । नारयणस्य मायाशब्दोक्तचिच्छक्तिरूपत्व माश्वलायनस्मृतावपि यज्ञोपवीतप्रशंसाप्रकरणे वर्णितम् । "सिसृक्षु रेकएवाग्रे समासीन शिव स्स्वयम् । सृष्ट्वा गुणमयीं मायां सूत्ररूपा मुपाकरोत् । तया तदात्मकं विष्णुं सृष्ट्वा पालं दिवौकसाम् । स्वयं ब्रह्मा मभ [illegible] रुद्रश्चास्य क्षयाय चे"ति ॥

जगदीश्वरत्वञ्चावगम्यते । एवं विश्वरूपत्वादिधर्मेनास्य मनये नारायण-परमेश्वरयोः । स्मृत्यादिषु पूजाविधाने 'शिवम् वा विष्णुमेव वा' इति समानतया विकल्पः श्रूयते । समानमेव च तयोर्लोके पूजास्थानादिकम् तत्प्रतिपादकपुराणागमादिकञ्च । तस्मात् परमेश्वरसदृशः पुरुषो नारायणः ।

इति प्राप्ते ब्रूमः— परमेश्वरादुत्कृष्टं नास्ति यथा, तथा सदृशमपि नास्त्येव, जगत्कारणत्वेश्वरत्वादौ तदन्यप्रतिषेधात् । तथा हि —

'एक एव रुद्रो न द्वितीयाय तस्थुः य इमाँल्लोकानीशत ईशानीयुः जननीयुः' 'द्यावापृथिवी जनयन् देव एकः' 'य एको रुद्र उच्यते' 'हरः क्षरात्मानावीशते देव एकः'

'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः'
'तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥'
'शिव एको ध्येयः शिवङ्करः सर्वमन्यत्परित्यज्य'
'यदा तम स्तन्न दिवा न रात्रिः नसन्नचासच्छिव एव केवलः ॥'

इत्यादिभिः परमेश्वरादन्यस्य जगत्कारणत्वादौ निषेधः क्रियते । अतः परमेश्वरेण सदृशः कश्चिन्नास्ति । परमशक्तिमत्त्वान्निमित्तभूतः परमेश्वर एव । पुरुष उपादानमिति पुरुषस्य हिरण्यगर्भकारणत्वम् । तस्य उपादानत्वात् । ईश्वरस्य निमित्तत्वादुच्यते उभयोरपि जगत्कारणत्वम् ।

---

ननु निमित्तस्य स्वातन्त्र्यात्तस्य तत्परतन्त्रादुपादानादाधिक्येनभाव्यमुक्त-का तर्हि उपादानस्य नारायणस्य परमैश्वर्यपरब्रह्मभावादिश्रावणस्यगति रित्याशङ्क्य तस्योपचारिकत्व माह—उपादानस्येति । परमेश्वरैक्यभावनादार्ढ्यनिमित्तत्वमपि तत्रतत्रोक्त मनुसन्धेयम् । यत्तु दहरविद्योपास्यत्वं श्रुतमिति तत्तु मध्यमाधिकारिविषयतया तस्य-

अत एव प्रतीयते ‘ तस्माद्विराट् ’ । इति हि पुरुषस्योपादानत्वम् ‘ हिरण्य गर्भम् पश्यत जायमानम् ’ ‘ द्यावाभूमी जनयन् देव एकः ’ इति परमेश्वरस्य निमित्तत्वञ्च प्रतिपाद्यते । सर्वज्ञात् सर्वशक्तिमतः परब्रह्मणः शिवाद्विश्वाधिकात् प्रथमं परप्रकृतिभूता परा शक्तिः प्रादुर्भवति । सा प्रथमभोक्तृत्वदशायां पुरुषः उच्यते, यः ‘ सहस्रशीर्षा पुरुषः ’ । इति श्रूयते । तदात्मान एव शिवात् सकलचेतनप्रपञ्चपरिणामः । अत एव ‘ सर्वो वै रुद्रः ’ इति परमेश्वरस्य सर्वात्मताभिधानमुपक्रम्य ,पुरुषस्य नारायणस्य सर्वात्मत्वमुपादानत्वात् । ’ कथमस्य सर्वात्मत्वमित्याशङ्कायाम् ‘ पुरुषो वै रुद्रः ’ इति ‘ पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि ’ इति च पुरुषोऽपि परमेश्वरस्य महाविभूत्यात्मा जगदाकार इति निरूपितम् । सर्वज्ञं सर्वशक्तिकं नित्यतृप्तं स्वतन्त्रं विश्वाधिकं निमित्तभूतमेव परं ब्रह्म सर्गसमये बहु स्यामिति सङ्कल्प्य स्वात्मनोऽमुं पुरुषं विभजति । स्वविभक्तस्वांशभूतेन सकलजग द्भवतीति ॥

‘ तत्सृष्ट्वा तदेवानुप्रविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवात् ’ । इत्यादिना ।

‘ मायान्तु प्रकृतिम् विद्या न्मायिनन्तु महेश्वरम् ।
तस्यावयवभूतेन व्याप्तम् सर्व मिदम् जगत् ॥ ’

---

तदुपासकस्य मविरुद्धम् । नारायणोपासना तु साक्षान्नानावृत्तिफला । किन्तु तत्पदप्राप्तिद्वारा शिवपदप्रापकत्वेन । यत शिवसायुज्यमेव मोक्षः । अतएव महाभारतेऽपि— “ धर्मान्वेषी तपः कर्तुम् यतेत सततम् प्रिये । अमरत्वम् शिवत्वञ्च तपसा प्रापये त्सदे ” ति । तपस स्स्वर्गमोक्षहेतुत्वकथने मोक्ष शिवत्व मित्यनेन व्यपदिष्टः ॥

अथ यत्पुराणागमेषु नारायणस्य कारणत्वादिकं निगदित न्तत्कल्पान्तरविषयम् । यदपि तस्य पूजनीयत्वादिकं प्रपञ्चित न्तत्पुराकृतमूलपारमेश्वरोपासनानवच्छिन्नकतिपयजनविषयम् । यस्य नारायणस्य मुक्तिक्लेशादिकम प्यस्तीति निगदितम् तच्च नारायणकृततपश्चर्योपरिपूत- प्रवेशरूपम् । अतएव आनुशासनिके “ रुद्रभक्त्यात्तु कृष्णेन जगद्व्याप्तम् महात्मना ।

इत्यादिना च श्रुतिवाक्येनावगम्यते। निमित्तसङ्कल्पमूलत्वा दुपादानभावस्य निमित्तस्योपादानाधिक्यम्, उपादानस्य निमित्तासंक्रमाविभागा न्निमित्तधर्माणा मुपादाने श्रवणम्। अतः परमेश्वरेण सदृशमुत्कृष्टं वा वस्तु नास्त्येव॥

अतोऽपि परमेश्वरेण सदृशं तदुत्कृष्टञ्च किञ्चिदपि वस्तु नास्तीत्याह—

## अनेन सर्वगतत्व मायामशब्दादिभ्यः ॥ ३–२–३६ ॥

आयामो महाव्याप्तिः। 'सर्वाननशिरोग्रीवः' 'विश्वतश्चक्षु रुत विश्वतोमुखः' इत्यादिभिः, अणोरणीयान्' इत्यारभ्य 'सर्वो ह्येष रुद्रः' इत्येतत्पर्यन्तै र्महोपनिषद्वाक्यैः 'यो वै रुद्रः स भगवान्' इत्यारभ्य 'यच्च सत्यम्' इत्यन्तैराथर्ववाक्यैश्च सकलजगद्व्याप्तिप्रतिपादनपरैः। अनेन

---

तम् प्रसाद्य तया देवम् बदर्याम् किल भारत। अर्था त्प्रियनरत्वञ्च सर्वलोकेषु वै तथा। प्राप्तवानेव राजेन्द्र सुपर्णाक्षा न्महेश्वरात्। इति॥

अरण्यपर्वणि तीर्थयात्राविधौ—"ततो गच्छे त्सुपर्णाक्षं त्रिषु लोकेषु विश्रुतम्। यत्र विष्णुः प्रसादार्थं रुद्रमाराधय न्पुरा। वरांश्च सुबहून् लेभे दैवैरपि सुदुर्लभान्" इति॥

उत्तरसूत्र मवतारयति—अतोऽपीति॥

आयाम स्त्रिविधव्याप्तिरूपा महाव्याप्तिः। तत्प्रतिपादक श्शब्दः "सर्वाननशिरोग्रीव" इत्यादिमन्त्राः। तत्राहि—सर्वव्यापीत्यने नाकाशव त्केवलं विभुत्वरूपाव्याप्ति र्गृह्यते। "सर्वभूतगुहाशय" इत्यनेन नियमनार्थसर्वप्राणिहृदयगुहासन्निधानरूपा। तत "स्सर्वाननशिरोग्रीव" इत्यनेन उपादानभावप्रयुक्तसर्वकार्यानुस्यूतिरूपा व्याप्ति रुच्यते। आयामशब्दादिभ्य स्सर्वाननशिरोग्रीव इत्यादिमन्त्रोक्तहेतुभ्यः अनेन "तस्याऽवयवभूतेने"ति स्वशक्त्यंशभूतेन नारायणेन द्वारेण चोपादानतया सर्वगतत्व मवगम्यते। तस्मादपि परमेश्वरेण सदृशो नास्तीति सूत्रार्थः। सम्भावितसाम्यस्य नारायणस्य तद्धर्मांशभावेन तदुपादानपरक्तया तदुपसर्जनत्वादन्यस्यच तत्साम्यसम्भावनास्वारस्याभावा दिति पूर्वसूत्रेणान्यप्रतिषेधा दिति समनिषेधहेतुनाऽस्य हेतो स्समुच्चयः प्रागतोपीति सूत्राऽवतारिकाभाष्येण दर्शितः। एतेन केचि दद्वैतमाश्रित्य बिद्वाल्मतिनो

स्वधर्मांशभूतेनोपादानपुरुषेण सर्वगतत्व मवगम्यते निमित्तस्य परब्रह्मणः। तस्मात् परमेश्वरस्य विभूतिमयं विश्वमिति तत्सादृश स्तदुत्कृष्टश्च नास्त्येव॥

इति अन्यप्रतिषेधाऽधिकरणम्

---

अथ फलाऽधिकरणम् ९.

एवं सर्वेश्वरतया सर्वात्मकतया स एव परमेश्वरः सर्वकर्मणां तत्तद्देवतारूपेण स्वरूपेण च फलदाता भवतीति निरूपयितु माह—

## फलमत उपपत्तेः ॥ ३—२—३७ ॥

इह पूर्वत्र सर्वेश्वरतया प्रतिपादितस्य परब्रह्मण एव सर्वानुष्ठातॄणामनुष्ठानफलदातृत्व मुतान्यस्येति संशयः॥

अनुक्षणाविनाशिनोऽपि कर्मणोऽपूर्वव्यवधानेन कालान्तरभाविफलदाने सामर्थ्यमस्त्येव। ततः कर्मणः फलदातृत्वे सिद्धे तदतिरिक्ताप्रसिद्धपरमेश्वरकल्पने गौरवप्रसङ्गात् तस्य न फलदातृत्वमिति पूर्वः पक्षः॥

---

नराः। " रुद्रेण साम्य मन्येषां प्रवदन्ति विमोहिता"इति सूतसंहिताया मनूदितम्। यत् हरे रुद्रेण साम्यं तन्निराकृतम्। तत्र यद्यपि "खद्योतो यत्रि चण्डभानुसदृश स्तुल्यो हरि दशमखुने"ति निराकृत स्तयाऽप्याचार्यैः पृथगनेनाऽधिकरणेन निराचकारेत्यवगम्यते॥

इत्यन्यप्रतिषेधाऽधिकरणम्

---

अथ फलाऽधिकरणम् ९

सङ्गतिं सूचय न्नुत्तराऽधिकरण मवतारयति—एव मिति। यथा निरस्तसमस्तदोष स्सकलमङ्गलगुणनिधि स्सर्वकारणत्वसर्वेश्वरत्वविषये समानाधिकरहितश्च परमेश्वरः एवं सर्वेषां-

सिद्धान्तस्तु — परमेश्वरादेवाराधितात् सर्वेषां कर्मफलसिद्धिः। उपपत्तेः, सेवितराजादिव दुपासितात् परमेश्वरा दुपासकानां फलसिद्ध्युपपत्तेः। न हि अचेतनस्य कर्मणोऽपूर्वस्य वा तारतम्येन प्रतिनियतं फलं ज्ञातुं दातुं सामर्थ्यमस्ति, सेवाक्रियाया मचेतनायां तथा दर्शनात्। इह शास्त्रसिद्धस्य परमेश्वरस्याकल्प्यत्वा न्न कल्पनागौरवम्। तथा हि — 'एष ह्येव साधुकर्म कारयति तम् यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति यमधो निनीषति' इति श्रुति रीश्वरस्यैव धर्माधर्मफलदातृत्वं तत्कारयितृत्वञ्च वदति। प्रत्युत अपूर्वस्यैवाश्रुतस्य कल्पने

---

कर्मोपासनानां स्वर्गाऽपवर्गादिफलप्रदोऽपि स एवेति तस्य महिमान्तरं निरूपयितु मधिकरण मारभ्यत इत्यर्थः। अनेन महाप्रभु र्महावदान्यश्च फलेप्सुभि स्सर्वै स्सेव्यो नाऽन्यः। तत्रोत्तरपादप्रतिपादनीयाभि रुपासनाभि रुपासनीयत्वसिद्ध्यर्थं परमेश्वरस्याऽनन्यसामान्यं महाप्रभुत्वं निरूपितम्। इदानीं कर्मभि रुपासनैश्च प्रीतो महाफलं प्रयच्छतीति तस्य महावदान्यत्वं प्रतिपाद्यत इति सङ्गति स्सूचिता॥

विधिश्रुते 'र्यमेभ्यो लोकेभ्य उन्निनीषत' इति श्रुतेश्च संशय माह—पूर्वत्रेति। अन्यस्येति। कर्मण इत्यर्थः। ननु तत्कालविनाशिनः कर्मणः कथं फलजनकत्वम्। तस्मा दीश्वरस्यैव फलदातृत्वकल्पना युक्तेति पूर्वपक्षस्य नावकाशइत्याशङ्क्याह—अनुक्षणेति। केवलः परमेश्वरः फलदातेति वक्तुं नशक्यते। अदृष्टव त्तस्य विपाकापेक्षत्वाभावेन स्वर्गादेः कालान्तरभावित्वभङ्गप्रसङ्गात्। कर्मोपासनाभि राराधितस्य प्रसन्नस्य परमेश्वरस्य फलदातृत्वपक्षेऽपि कर्मानुष्ठानानन्तरमेव प्रसादो वक्तुं शक्यते। परमस्वतन्त्रस्य प्रसादेसति फले विलम्बायोगात्। प्रयाजादिभि रङ्गै स्तदनुष्ठानानन्तरमेव प्रसादेसति प्रधानानुष्ठानेऽपि अङ्गान्तरवैकल्येऽपि फलनिष्पत्तिप्रसङ्गाच्च। तस्मा त्कर्मभि रपूर्वे निष्पादिते तस्य परिपक्वतया फलजननौन्मुख्यदशाया म्परमेश्वरस्य प्रसादो वक्तव्यः। तथाचाऽवाश्याभ्युपगन्तव्याऽपूर्वव्यापारेण कर्मणएव फलजनकत्वोपपत्तौ किमीश्वरस्याऽपि तत्फलदातृत्वकल्पनया तत्प्रसादकल्पनया वेतिभावः। उपपत्तेरिति। राजसेवान्यायप्रदर्शनेन केवलस्य कर्मणः फलदातृत्वं नोपपद्यत इति सूचितम्। तदुपपादयति—नहीति॥

अतः अस्मा त्परमेश्वरादेव सर्वकर्मोपासनादीनां फलं जन्तो र्भवति। उपपत्ते.—अचेतनस्य कर्मणोऽपूर्वस्य वा तारतम्येन फलं ज्ञातुं दातुञ्चानुपपन्नत्वेन कर्मोपासनाभि राराधितस्य परमेश्वरस्यैव फलदातृत्वस्योपपन्नत्वा दिति सूत्रार्थः॥

गौरवम्। तस्मात् कर्मभिराराधितः परमेश्वरः फलदाता न कर्मेति निर्णयः ॥

## श्रुतत्वाच्च ॥ ३—२—३८ ॥

श्रूयते हि सर्वकर्मणामधिपतिः परमेश्वरः, तदाराध्यत्वात् तत्फलदातृत्वाच्च — 'गाथपतिम् मेधपतिम् रुद्रम् जलाषभेषजम्। "आ वो राजान मध्वरस्य रुद्रम्।' इत्यादिषु ॥

एतन्मूला स्मृतिरपि परमेश्वरस्य सर्वयज्ञाधिपत्यं वदति —

'सोमेनाराधयेद्देवम् सोमम् सोमविभूषणम्'। इति ॥ 'नाश्वमेधात्परो यज्ञो रुद्रस्याराधनम् प्रति ॥ इति च रामायणम्।

चमकेषु 'वाजश्च मे प्रसवश्च मे धाता च मे विष्णुश्च मे' इत्यादिषु च वाजादीनां वस्तूनां विष्ण्वादीनां देवतानां देयत्वप्रतीतेः परिशेषादीश्वरस्य सर्वकर्मफलदातृत्वसिद्धिः। अतः परमेश्वर एव सर्वयज्ञाराध्यः सर्वफलदाता ॥

---

एवं कर्मणा मीश्वराराधनत्वकल्पना माश्रित्य तस्य कर्मफलदातृत्व मुपपादितम्। अथ कर्मणा मीश्वराराधनत्वपत्व मपि श्रुतमेवेति प्रतिपादनार्थं सूत्रम् ॥

गाथाःस्तोत्राणि-मेधा यज्ञाः— जलाषशब्द स्सुखवाची वैदिकनिघण्टुप्रसिद्धः। जायन्त इति जाः प्राणिनः। तै र्लभ्यतेऽभिलभ्यत इति व्युत्पत्तेः। तद्यर्थम् भेषजं तद्रूपम् भेषजमिति वा। शिवस्य यज्ञाधिपतित्वे उदाहृतांश्रुति मुपबृंहणप्रदर्शनेनोपपादयति— स्मृतिरपीति। "आ वो राजान"मिति मन्त्रस्याऽप्येवमेवोपबृंहणं शिवपुराणे दृश्यते ॥ "किं मेभि रमरै रन्यै रध्वरे पूजितैः फलम्। राजाध्वरस्यास्य न रुद्रःपूज्यते त्वये"ति। एवं सर्वकर्मणा माराध्यं तत्फलप्रदानधुरन्धरश्च परम्ब्रह्मेति व्यवस्थापितम्। तत्र 'मेधपतिम् रुद्र' मित्यादि श्रुत्युदाहरणेन ब्रह्मा नारायणो वा कर्मणा माराध्यः फलप्रदाताचेति कल्प्यतां निरवकाशत्वमपि प्रसक्ता त्सिद्धम्। तस्मि न्प्रसक्तसिद्धेऽर्थे हेत्वन्तरमाह—चमकेष्विति। वाजादीनामिति

पक्षान्तरमाह —

## धर्मम् जैमिनि रत एव ॥ ३–२–३९ ॥

धर्ममेवोपपत्तेः श्रुतत्वाच्च फलदायिनं जैमिनिर्मेने । उपपत्तिः कृष्यादे र्मर्दनादेश्च कर्मणः साक्षात् परम्परया वा फलसिद्धिनिदर्शनम् । श्रुतश्च कामिनः कर्तव्यतया कर्मविधानान्यथानुपपत्त्या कर्मैवापूर्वरूपेण तत्तत्फलसाधनमिति ॥

---

दृष्टान्तार्थम् । वाज मन्नम् । विष्ण्वादीनां देयत्वम् " सर्वेस्मै देवा बलिमावहन्ती"ति श्रुत्युक्तरीत्या तद्वश्यतापादनम् । निरूपितोऽय मर्थ स्सुदर्शनाचार्यैः " विष्णुप्रजापतिपुरन्दर-पूर्वकेषु वाजादितुल्य मखिलेष्वपि दैवतेषु । आशंशितेषु चमकाः परिशिष्यमाणं दातार मीश्वर भवन्त मशाब्द माहु"रितिप्रपञ्चेन तै शिवस्य सर्वकर्माराध्यत्वं श्रुतिसूक्तमुक्तावळ्यां व्यवस्थापित मनुसन्धेयम् । एवं दृढीकृतेऽपि सिद्धान्ते न्यायमिद्धमर्थं पूर्वपक्षिणां तद्रीत्यैवाऽङ्गीकारयितुं पूर्वपक्ष मुद्भावयति ॥

अतएवे त्युपपत्तिश्रुतत्वरूपपूर्वोक्तहेतुद्वयपरामर्शीत्याशयेनाह— उपपत्ते रित्यादिना । तत्र मर्दनादीनां यथा तात्कालिकफलसाधनत्वं दृष्टं तथा कृष्यादीना मुत्तरकालफल-साधनत्वमपि दृष्टमेव । नहि कृष्यादिभि राराधितः कश्चि च्चेतन स्तत्फलं प्रयच्छति । तथैव यागादिकर्मणामपि स्वयमेव फलसाधनत्व मुपपद्यत इत्युपपत्तिः । " यजेत स्वर्गकाम " इत्यादिश्रावणम् । तत्राहि यागादिकं कामिनः कर्तव्यतया बोध्यते । नतु यागादिभिः कस्यचि त्प्रसादनीयत्वम् । ननु— " वायुमेव स्वेन भागधेये नोपधावति सएवैनं भूतिं गमयति । तृप्तएवैन मिन्द्रः प्रजया पशुभि स्समर्पयते " त्यादिवाक्यशेषेण बोध्यतइतिचे न्न । तस्य बाधितार्थत्वात् । एतत्कल्पवर्तिना मिन्द्रादीनां कल्पान्तरभोग्यफलदातृत्वासम्भवात् । तस्मा त्तत्तद्दैवत्यकर्मफलमेव तत्तद्देवतादेयत्वे नारोप्य देवतास्तुतिपरो वाक्यशेषः । तथैव " यमेभ्यो लोकेभ्य उन्निनीषते " " अन्नादो वसुदान " इत्यादिवेदान्तगतार्थवादजातम् । इदमुपपादनीयञ्चे त्तदप्यसङ्करेण सकललोकपालकस्य प्रशंसापरम् दृश्यते ह्यसङ्करेण राज्यं पालयतो राज्ञः प्रशंसावचन मय मत्र राज्ये कृष्यादिकर्मणां फलदाता स्वामीचेति । तस्मा त्कर्मैव स्वर्गादिफलसाधन मिति जैमिने र्मतम् ॥

# पूर्वं न्तु बादरायणो हेतुव्यपदेशात् ॥ ३–२–४० ॥

पूर्वोक्तं परमेश्वरस्यैव कर्मफलदातृत्वं भगवान् बादरायणो मन्यते, 'वायव्यम् श्वेतमालभेत भूतिकामः' 'स एवैनम् भूतिम् गमयति' इत्यादिषु परमेश्वरात्मकतया वाय्वादीनां कर्मविधिष्वेव फलहेतुत्वव्यपदेशात्। तदभावे हि क्षणिकस्यकर्मण: फलसाधनत्वनिर्वाहार्थं मपूर्वत्वं कल्प्येत। वाक्यशेषोपपादित विध्यपेक्षित फलसाधनत्वप्रकारसद्भावे तु स एव स्वीकर्तव्यः। यथा वाक्यशेषस्थं विध्यपेक्षितम् 'प्रतितिष्ठन्ति ह वा एता रात्री रुपयन्ति' इत्यादिषु फलं स्वीक्रियते। 'यो वै रुद्रः स भगवान्' इत्यादिना वाय्वादि सर्वदेवतारूपत्वमीश्वरस्यावगम्यते अथर्वशिरसि

---

तुशब्दः पूर्वपक्षं व्यावर्तयति—पूर्वं=पूर्वोक्तं, परमेश्वरस्यैव कर्मफलदातृत्वं शुक्लं बादरायणो मन्यते। स एवैनं भूतिंगमयतीत्यादिषु परमेश्वरात्मकतया वाय्वादीनां फलहेतुत्वव्यपदेशा दितिसूत्रार्थः। तदभावे= परमेश्वरस्य फलादातृत्वाभावे। अपूर्वं कल्प्यतेति। परमेश्वराप्रसादाऽनपेक्षमितिशेषः। "प्रतितिष्ठन्ति हवा एते य एता रात्री रुपयन्ती"ति श्रूयते। अत्र य एता रात्री रुपयन्तीति रात्रिसत्रविधिः प्रतितिष्ठन्ति हवा इति वाक्यशेषस्थं फलं स्वीक्रियते। तत्र क्षणिकस्य कर्मणः फलसाधनत्वनिर्वाहार्थ मपूर्वं स्वीक्रियते॥

वस्तुतस्तु "यश्च वायुः यो वै रुद्रस्स भगवानि"त्यादिना वाय्वादिसर्वदेवतारूपत्व स्येश्वरस्य श्रुतत्वात्। "यो मां वेद स सर्वान्देवान्वेदे"ति सर्वदेवतात्मकत्व स्योपपादितत्वाच्च। सर्वदेवतान्तर्यामी सर्वकर्मोपासनाराध्य शिवएव सर्वफलदातेति सिध्यतीत्यर्थः। अत इति-यश्च वायु रित्यादिना परमेश्वरस्य सर्वदेवतात्मकतया फलदातृत्वस्य श्रुतत्वेन तत्परित्यज्याऽपूर्वकल्पनस्य श्रुतहानाऽश्रुतकल्पनरूपदोषप्रसक्त्या दित्यर्थः॥

ननु मन्त्रार्थवादयो रनुष्ठेयार्थप्रकाशनस्तुत्यो रन्यपरत्वा न्न स्वार्थे प्रामाण्य मित्यत्राह—विध्यपेक्षित मित्यादि। मन्त्रार्थवादयोः प्रतीयमानार्थे तात्पर्याभावेऽपि रात्रिसत्रप्रतिष्ठाऽपगोरणाशतयातनाफलविशेषादि रर्थवादायुक्तो व्यर्थो विध्यपेक्षिततया भवद्भिरेव स्वीकृत इतिभावः॥

तत्रैव परमेश्वरेण 'यो माम् वेद स सर्वान् देवान् वेद' इति स्वज्ञानात् स्वात्मकसकलदेवताज्ञानमुपपादितम्। अतः सकलदेवतारूपः सर्वकर्माराध्यः सर्वफलदाता परमेश्वरः परम्ब्रह्म शिवः साक्षादुमापतिरिति सिद्धम् ॥

इति फलाऽधिकरणम्

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
तृतीयाध्यायस्य द्वितीयः पादः

---

तस्मा दविकलं कर्मानुष्ठाय तत्सूक्ष्मावस्थारूप मपूर्वं सम्पाद्य तस्य यावद्विपाकं सङ्कीर्तनादिभ्यो नाशकेभ्य स्संरक्षणेसति प्रसन्नः परमेश्वर स्तत्फलं प्रयच्छतीति निरवद्यम् ॥

प्रकृताऽधिकरणोक्तं सर्वकर्माराध्यत्वफलप्रदत्वादिकं निर्गुणस्य ब्रह्मणोऽसम्भावितत्वा न्निर्विशेषत्वपक्षे इद मधिकरण मसङ्गतमिति विदितमेव। एवं वाय्वादिसर्वदेवान्तरात्मतया निगदितं सर्वकर्मफलप्रदत्व मष्टमूर्त्यसाधारणत्वेन देवतान्तरपरत्ववादिनामप्यसङ्गतमेवेति विशदमेव ॥

इति फलाऽधिकरणम्

इति श्री नागलिङ्गशिवाराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां
श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीय
ब्रह्मसूत्रभाष्यव्याख्यायां तृतीयाध्यायस्य द्वितीयः पादः

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाराध्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ तृतीयाध्यायस्य

## तृतीय पादः

---

### अथ सर्ववेदान्तप्रत्ययाऽधिकरणम् १

पूर्वत्र निरूपितो नित्यत्वादिगुणकस्त्वम्पदार्थः पशु रुपासकः, सर्वज्ञत्वादिगुणकस्तत्पदार्थः पति रुपास्यः शिवश्च। तदिह कथमुपासन मित्याकाङ्क्षायां तन्निरूपणमुत्तरत्राभिवर्तते—

---

### अथ सर्ववेदान्तप्रत्ययाऽधिकरणम् १

सङ्गतिसूचनार्थं पूर्वदशपादीसिद्धार्थे ष्वपेक्षिताऽर्थानुवादपूर्वक मुत्तरपादप्रतिपाद्य मर्थं दर्शयति—पूर्वत्रेति ॥ जीवस्य नित्यत्वे ह्युपासनासाध्यशाश्वतफलप्राप्तौ वाञ्छा भवेत् स्वय मनित्यस्य किन्तेन। अतो 'नात्माश्रुते' रित्यधिकरणसिद्ध नित्यत्वं स्मारितम्। आदिशब्देन संसारे जिह्रासोत्पत्त्यर्थ. मवस्थात्रयेऽपि हेयास्पदत्वं पूर्वपादद्वयोक्तं सङ्गृहीतम्। चिरमुपासितस्याऽपि शिवस्य कदाचिदुपासकप्रयासाननुसन्धानेन तदनुगुणफलदातृत्वे किमतिदुष्कराऽनेकनियमघटितेनोपासनाप्रयत्नेन। अत श्शास्त्रयोनित्वाऽधिकरणसिद्ध सर्वज्ञत्वं स्मारितम्। आदिशब्देन सर्वशक्तिमत्त्वनिरतिशयदयाशालित्वमहावदान्यत्वादिकं पूर्वाऽधिकरणपर्यन्ततत्तदधिकरणोदाहृतविषयवाक्यै शब्दतोऽर्थतश्च सिद्ध मुपास्यत्वोपयुक्तकल्याणगुणजातं गृह्यते। कथ मुपासन मिति। किं मेक स्योपासनस्य कस्याञ्चि च्छाखायाम् यावन्तो गुणा आम्नाता स्तावदुपसंहारेणैव तदुपासनं कार्यम्? उत शाखान्तरगततदुपासनप्रकरणाम्नातगुणान्तरोपसंहारेणे त्याकाङ्क्षायां तन्निरूपणं प्रवर्तते। तदर्थं शाखाभेदेऽपि चोदनाद्यविशेषेसति नोपासनं भिद्यत इति तदभेदनिरूपणं तद्भेदनिरूपणन्तु तदपवादत्वेनेतिभावः॥

## सर्ववेदान्तप्रत्ययम् चोदनाद्यविशेषात् ॥ ३–३–१ ॥

सर्वेषु वेदान्तेषु दहराद्युपासनं श्रूयते। तदेकम् उत शाखाभेदादिना भिन्नमेव इति सन्देहः॥

शाखाभेदेन प्रकरणभेदात् प्रतिशाखामुपासनं भिद्यते।

तथा छान्दोग्ये तैत्तिरीयके च दहरोपासनाम्नमायते। एकत्र 'य आत्माऽपहतपाप्मा विजरो विमृत्युः' इत्यारभ्य अपहतपाप्मत्वादयो गुणा अम्नाताः। अन्यत्र 'ऋतम् सत्यम्' इत्यारम्य कृष्णपिङ्गलत्वादयो गुणाः। तत्र गुणभेदेनोपासनं भिद्यते। छान्दोग्ये पञ्चाग्निविद्यायां कौथुममिति नाम, बृहदारण्यके वाजसनेयमिति नाम। तत्र नामभेदादुपासनं भिद्यते। मुण्डकशाखायां शिरोव्रताख्यो धर्मः श्रूयते 'तेषामेवैताम् ब्रह्मविद्याम् वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति। शिरोव्रतं नाम वेदव्रतविशेषः आथर्वणिकान्प्रति विहितो नेतरान्प्रति।

अतो धर्मभेदा दुपासनाभेदः। ततः शाखादिभेदा दुपासनाभेद इति पूर्वः पक्षः॥

---

चोदनाद्यविशेषेणाऽभेदप्रत्यभिज्ञाना नामरूपादिभेदेन भेदप्रतीतेश्च संशयं दर्शयति— प्रकरणभेदा दिति। प्रकरणान्तरोक्ति रभ्यासस्याऽप्युपलक्षणम्। अस्तिहि मासाग्निहोत्र-नित्याग्निहोत्रन्यायेन दहरविद्यादीनां छान्दोग्यतैत्तिरीयादिषु प्रकरणभेदेन द्विधा दुपासीतेत्यादि रविशेषिततत्तदुपास्तिश्रावणरूपोऽभ्यासः। तथा छान्दोग्य इति। यथा—"तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा। वाजिभ्यो वाजिन"मित्यत्रोत्पत्तिविशिष्टामिक्षा-द्रव्याक्रान्ते वैश्वदेवयागे द्रव्यतया निवेशितत्वेनामिक्षाविरोधा तत्र निवेश मलभमानेन वाजिनगुणेन वाजिनयागस्य ततो भेदः। "उत्पत्तिवाक्यसंसिद्धं कर्म सर्वं मनूद्यते। नचाक्रान्तगुणे शक्यं तद्विरोधिगुणान्तर" मितिन्यायात्। एव मपहतपाप्मत्वादिगुणनिरूपणान्तर "मथ य इहात्मान मनुविद्य" त्यादिना प्रकृतापहतपाप्मत्वादिगुणकात्मविषयतया विधीयमानायां छान्दोग्याम्नात दहरविद्यायाम्—देहसम्बन्धे पाप्मादिस्पर्शानवश्यम्भावेनापहत-

सिद्धान्तस्तु — सर्ववेदान्तप्रत्ययं दहराद्युपासनमेकमेव, कर्मविधिष्विव चोदनाफलसंयोगरूपाख्याना मविशेषात्। 'विद्यात्' 'उपासीत' इति चोदना तावात् शाखाभेदेऽप्यविशिष्टा। फलसंयोगो ब्रह्मप्राप्तिरूपोऽविषिष्टः। वेद्यमपि वैश्वानरादिरूपं ब्रह्माविशिष्टम्। आख्याऽपि वैश्वानरविद्येत्येवमादि रविशिष्टेत्येकमेवोपासनम्। विद्यादिभेदेऽप्युपासनं न भिद्यते। 'तस्मिन्यदन्त स्तदन्वेष्टव्यम्' इति छान्दोग्ये दहरविद्याविधिः। 'तस्मिन्यदन्त स्तदुपासितव्यम्' इति तैत्तिरीयके च। तत्र स्थानाद्यभेदा दुपास्यस्य ब्रह्मणोऽप्यभेदात् उभयत्रोक्तानां धर्माणा मविरोधाद्विद्यैक्यमेव। छान्दोग्यबृहदारण्यकशाखयो र्द्युपर्जन्यपृथिवीपुरुषयोषिदाख्यस्याग्निपञ्चकस्य वेद्यतया यत्स्वरूपमाम्नातं तदुभयत्राऽपि समानम्। अतो न विद्याभेदः।

## भेदान्नेतिचे न्नैकस्यामपि ॥ ३–३–२ ॥

अविशेषपुनःश्रुतिः प्रकरणान्तरसहिता भेदापादिका। अतो न विद्यैक्यमितिचेत्—विद्यैक्येऽपि शाखान्तरेऽपि प्रतिपत्तृभेदा दुपपन्ना सा न भेदावहा ॥

---

पाप्मत्वादिविरोधा त्तस्यांनिवेश मलभमानेन कृष्णपिङ्गलत्वादिगुणेन तैत्तिरीयाम्नातायादहरविद्याया स्ततो भेद इत्यर्थः। पूर्वपक्ष मुपसंहरति—तत इति ॥

सू॥ 'सर्ववेदान्तप्रत्यय ञ्चोदनाद्यविशेषात्'। प्रतीयत इति प्रत्ययम्। सर्ववेदान्तप्रतिपाद्यमेकमेवेतिसाध्यं हेतुसामयर्चा दध्याहृनम्। चोदनाद्यविशेषा दिति हेतुं विवृणोति—कर्मविधिष्विवेत्यादिना। गुणभेदा द्भेद माशङ्कितं निराकरोति। तस्मि न्यदन्तरि'ति। शाखद्वयाम्नातायां पञ्चाग्निविद्याया मभिसङ्ख्यारूपगुणभेदा द्भेदशङ्कां निराचष्टे-छान्दोग्येति वेद्यतयेति — उपासनीयतये त्यर्थः ॥

अभ्यासप्रकरणान्तराभ्यां विद्याभेदशङ्कानिराकरणार्थं सूत्रम् ॥

सर्ववेदान्तप्रत्ययं दहराद्युपासनं नैकं विधिश्रुतेः प्रकरणस्यच भेदा दितिशङ्काभागं तात्पर्यतो व्याचष्टे—अविशेषेति। प्रतिपत्तृभेदा दिति। सर्वस्याऽपि स्वशाखाध्ययनं प्रथम

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३–३–३ ॥

अथर्ववेदे 'तेषामेवैताम् ब्रह्मविद्याम् वदेत' इति शिरोव्रत-नियमः स्वाध्यायाङ्गत्वेन न तु विद्याङ्गत्वेन । 'नैतदचीर्णव्रतोऽधीते'

मावश्यकमिति तंप्रति तात्वप्रमितिजनकत्वेनाऽर्थवत्त्व मस्ति । अतो नानर्थक्य मूलोऽभ्यासन्यायः प्रकरणान्तरन्यायोवाऽत्र प्रवर्तेत इतिभावः ॥

स्वाध्यायस्य तथात्वेनस्वाध्यायम्प्रत्यङ्गत्वेन शिरोव्रतविधिः नतु विद्याम्प्रत्यङ्गत्वेन । कुतः । समाचारेऽधिकारात् । आथर्वणिकानां वेदव्रतोपदेशार्थे समाचाराख्ये ग्रन्थे तथा प्रतिपादनात् । चकारेण "नैत दचीर्णव्रतोऽधीत" इत्यग्रिमवाक्ये तथैव स्पष्टत्वाच्चेति सूत्रार्थं दर्शय न्धर्मविशेषा द्विद्याभेद इतिशङ्कां निराचष्टे—अथ र्वेति । सववच्चेति दृष्टान्तभागं व्याचष्टे–तस्मा द्यथेति । यथा-सप्तसूर्याख्यहोम प्रभृतिशतौदनाख्यहोमपर्यन्त स्सवहोमगण स्तेषामेवाथर्वणिकानाम् । तदीयैकाग्निसम्बन्धात् । एवं शिरोव्रतमपि स्वाध्यायस्यैव । तदीयाध्ययनसम्बन्धा दित्यर्थः । एव मिह शिरोव्रतंनामाऽथर्वणिकानां वेदव्रतत्वेन प्रसिद्ध शिरस्यङ्गारपात्रधारणरूपं व्रतम् । तस्यच स्वाध्यायाङ्गत्वमेव प्रतिपाद्यते नतु विद्याङ्गत्व मित्युपपादितम् । एवं सूत्रकारेण न्यायव्युत्पादनार्थंकृत्वा चिन्तया परिगृहीत मर्थान्तरं व्याख्याय यथार्थ माह—वस्तुत स्त्विति । अतएव पुराणेष्वपि सौरसंहितादिषु शिरोव्रत मथर्वशिरसि प्रसिद्धम् पाशुपतव्रतम् । तस्यच विद्यापेक्षितत्वमेव प्रतिपाद्यते । तदपि न प्रकृताक्षरब्रह्मविद्यामात्रापेक्षितत्वम् । किन्तु वैश्वानरविद्यासाधारण्येन सकलब्रह्म-विद्यापेक्षितत्व मित्यङ्गीकृत्य तथैवोपबृंहितम् । सौरसंहितायाम्— "ब्रह्मविद्योपदेशस्य योग्यं वक्ष्यामि सुव्रते" । इत्युपक्रम्य "विधिव च्छ्रद्धया सार्धं नचीर्णं यै शिरोव्रतम् । ब्रह्मविद्या मिमां तेषां नवदेत कदाचन । इदं शिरोव्रतं चीर्णं विधिव च्छ्रद्धया यदि । तेषामेव परां विद्यां वदे दज्ञानबाधिकाम् । शिरोव्रतमिदंनाम शिरस्याथर्वणश्रुतेः । यदुक्तं तद्धि नैषाऽन्य त्पाशुपतसंज्ञिकम् । शाखाभेदेषु नामानि व्रतस्याऽस्य विभेदतः । पठ्यन्ते मुनिशार्दूल शाखा स्वेकं व्रतं हि तत् । अग्निरित्यादिभि र्मन्त्रै ष्षड्भि श्शुभ्रेन भस्मना । सर्वाङ्गो-द्धूळनं कुर्या च्छिरोव्रतसमाह्वय"मिति ॥

इति तस्याध्ययनसम्बन्धावगमात्, समाचारग्रन्थे 'इदमपि वेदव्रतेन व्याख्यातम्' इति तस्य वेदव्रतत्वप्रतिपादनाच्च। 'ब्रह्मविद्याम्' इत्यत्र ब्रह्मशब्दो वेदविषयः।

---

ब्रह्मोत्तरखण्डेऽपि ॥ "अथ मत्याश्रमो धर्मो ये स्समाचरितो मुदा। प्राप्तं तैः परमं ज्ञानं संसारच्छेदकारणम्। उद्धूळनं त्रिपुण्ड्रञ्च मुमुक्षु स्सम्यगाचरे"दित्यादि। न्याय्यश्चैतत् ॥

मुण्डकेहि="ब्रह्मा देवानां प्रथम स्सम्बभूव। विश्वस्य कर्ता भुवनस्य गोप्ता। स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठा मथर्वाय ज्येष्ठपुत्राय प्राह" इति परमोपक्रमोपक्षिप्ता ब्रह्मविद्या ब्रह्मोपासनारूपैव नतु तत्प्रतिपादकोपनिषद्रूपा। तदनन्तर मथर्वप्रभृत्यङ्गिरःपर्यन्तां गुरुपरंपरा मुक्त्वा "शौनको ह वै महाशालोऽङ्गिरसम् विधिवदुपसन्नः पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम् भवती"ति शौनकस्य ब्रह्मोपासनाविषयं प्रश्न मुपन्यस्य "तस्मै सहोवाचे" त्यादिना तदुत्तरत्वेनैव मुण्डकोपनिषत्परिसमाप्तिः। तत्परिसमाप्तौच "शिरोव्रतम् विधिव द्यैस्तु चीर्ण" मित्येतदनन्तरम् "तदे तत्सत्यमृषि रङ्गिराः पुरोवाचे"ति ब्रह्मोपासनाविषयशौनकाङ्गिरस्संवादरूपाख्यायिकात्मत्वेनैव समापनात्। तदनन्तरम् "नैतदचीर्णव्रतोऽधीते नमः परमऋषिभ्यो नमः परमऋषिभ्य" इति श्रुतिवाक्यमध्यएवाचीर्णव्रतस्यैतदुपनिषदध्ययननिषेधश्रावणात्। यद्यपि "कस्मिन्नु भगवो विज्ञाते" इत्यत्र ब्रह्म विषयज्ञानमात्रसाधारणो विज्ञानशब्दः। तथाऽपि "येनाश्रुतं श्रुतम्भव त्यमतम् मत मविज्ञातम् विज्ञातमि" "त्यात्मनिखल्वरे दृष्टे श्रुते मते विज्ञाते वा इदम् सर्वम् विदित मात्मनो वा अरे दर्शनेन श्रावणेन मत्या विज्ञानेनदम् सर्वम् विदितमि"ति श्रुत्यन्तरगतसर्वविज्ञानप्रतिज्ञावाक्येषु विज्ञानशब्दस्य स्थानप्रमाणेनोपासनापरत्वनिर्णया दत्राऽपि तस्य तथात्व मवमीयते। एवञ्चोपक्रमे ब्रह्मविद्याशब्द स्योपासनापरत्वा त्समाप्तावपि "स योह वै तत्परम्ब्रह्मवेद ब्रह्मैवभवति नास्याब्रह्मवित्कुले भवति। तरतिशोकम् तरतिपाप्मानम् गुहाग्रन्थिभ्यो विमुक्तो भवती"ति मुक्तिफला मुपासनारूपामेव ब्रह्मविद्यां प्रस्तुत्य "तदेतदृचाभ्युक्तम्। क्रियावन्त श्श्रोत्रिया ब्रह्मनिष्ठा स्वयं जुह्वत-एकऋषिं श्रद्धयन्तः तेषामे वैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिव द्यैस्तु चीर्णमि" ति प्रकृतोपासनारूपब्रह्मविद्याविषयत्वेनैवाऽस्य श्लोकस्याऽवतरणाच्च। नचाऽत्र ब्रह्मविद्याशब्द स्याकस्मा दुपासनारूपार्थपरित्यागो युक्तः। "एकर्षि मुरुत्यर्षि द्दिशवः। विश्वाधिको रुद्रो महर्षि"रिति श्रावणात्। ईशावास्यबृहदारण्यकयोः "पूषन्नेकर्षे यमसूर्यप्राजापत्यव्यूहरश्मि न्समूहतेजः। यत्ते कल्याणतमम् रूपम् पश्यामि" "योसा वसौ

तस्मा यथा सवहोम स्तेषामेव, तथा शिरोव्रतमपि। अत स्त च विध्याभेदे लिङ्गम्। वस्तुतस्तु बहुषु वेदान्तेषु शाम्भव पाशुपतावि-

---

पुरुष स्सोऽहमस्मी" ति सूर्यान्तर्वर्तिनि शिवे साक्षादेकर्षिशब्दस्यैव श्रावणाच्च । "तम् श्रद्धयन्त श्श्रद्धधाना: सएवस्मा नूक्षिष्यतीति दृढनिश्चयवन्त इत्यर्थ: । "द्वे विद्ये वेदितव्ये" इत्यादौ विद्याशब्दो वेदसामानाधिकरण्या च्छन्दपरोऽस्तु । वेदादिशब्दा वा विद्यासामानाधिकरण्या तत्तज्जन्यविषया स्सन्तु । इहतु ब्रह्मविद्याशब्दस्योपासनापरत्व मुक्तन्यायै स्सुदृढम् । एवञ्च शिरोव्रतशब्दस्याऽपि नाथर्वणिकमात्राधिकारिकव्रतविशेषपरत्वं युक्तम् । कथंहि बहुचत्वेन प्रसिद्धाय शौनकायाङ्गिरा स्स्वय मिमां विद्या मुपदिश्याऽनाथर्वणिका यैतदुपदेशं निषेधेत् । "नैत दचीर्णव्रतोऽधीत " इत्यत्र स्वाध्यायाङ्गत्वेन वर्ण्यमानं व्रत मिदं वा व्रतं भवत्वाथर्वणिकप्रसिद्धम् । व्रतान्तरं वा भवत्वित्यन्यदेतत् । समाचारग्रन्थस्याऽप्याथर्वणिकप्रसिद्धं व्रतान्तर वेदव्रतत्वेन कीर्तयतो नाऽत्र कश्चि द्विरोधोऽनुरोधो वा । तस्मात्सर्वसाधारणं पाशुपतव्रतमेवेह शिरोव्रतम् । तस्यैवेतामिति प्रकृतान्तरविद्यापरामर्शेनैव ब्रह्मविषयत्वविद्याया स्सिद्धेऽपि ब्रह्मविशेषणं हि सेतुसूचनार्थं हेतुगर्भविशेषणम् । यस्मा देषा ब्रह्मविषया विद्या तस्मा दचीर्णशिरोव्रताय नप्रदेयेति हेतुसाधारण्येच हेतु मति सर्वत्र विधेयं सिध्यति। न ब्रह्माऽनूयाजा इज्यन्त इति हेतुसाधारण्या दातिथ्याव्यतिरिक्तास्व प्यनुयाजरहिता स्विष्टि ष्वौपभृताष्टगृहीताभावः । एवम् ब्रह्मविद्याप्रदानस्य शिरोव्रतापेक्षत्वा देव, श्वेताश्वतरोपनिषदि "तप:प्रभावा द्देवप्रसादाच्च ब्रह्मवि च्छ्वेताश्वतरोऽथ विद्वान् । अत्याश्रमिभ्य: परमं पवित्रं प्रोवाच सम्य गृषिसङ्घजुष्ट" मिति पाशुपतव्रतवद्भ्योऽत्याश्रमिभ्य एव ब्रह्मविद्याप्रदान मुक्तम् । तेभ्यो ब्रह्मविद्या मुपदिष्टवत श्श्वेताश्वतरस्याऽपि महर्षेः पाशुपतव्रतानुष्ठातृत्व मुक्तम् । कूर्मपुराणे " अथाऽस्मि न्नन्तरे पश्य त्समायान्तम् महामुनिम् । श्वेताश्वतरनामानं महापाशुपतोत्तम"मिति । एवं दहरविद्यानुष्ठानेऽपि पाशुपतव्रतस्याऽधिकारिविशेषणत्व मुक्तम् । कैवल्योपनिषदि " अत्याश्रमस्थ स्सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य " । इति ॥ कैवल्योपनिषदि ब्रह्मविद्याधिगमार्थं परमेष्ठिन मुपसन्नस्य स्याश्वलायनस्य पाशुपतव्रतस्त्वन्तु तदीयधर्मशास्त्रपर्यालोचनयैव स्पष्टम् । एवं न्यायोपबृंहणाभ्यां सुप्रतिष्ठितं शिरोव्रतम् । एवमपि " विधिव द्यैस्तु चीर्णमि " त्यस्यार्थान्तरं सूत्रकारेण किमर्थं परिगृहीत मिति चेत् कृत्वा चिन्तयै वेति वक्तव्यम् । यदि शिरोव्रत मित्यस्याथर्वणिकवेदप्रसिद्धवेदव्रतातिरेकेणाऽर्थान्तरं नस्या त्तदा यदा कथञ्चि च्छिरोव्रतस्य स्वाध्यायधर्मप्रतिपादनएव तात्पर्यं वक्तव्यम् । अन्यथा चोदनाद्यविशेषप्राप्ताभेदप्रत्यभिज्ञानविरोधा त्तद्भेदकल्पने गौरवाच्चेति। एव मर्थान्तरस्याऽपिवाक्यस्य न्यायव्युत्पादनार्थं कृत्वा चिन्तयाऽर्थान्तराश्रयेण सिद्धान्तवर्णनं

संज्ञकतया विहितं शिरोव्रतं ब्रह्मविद्याधिकारप्रदतया तस्यव्रतस्य नियमः। नियतमनुष्ठानम्।

## दर्शयति च ॥ ३–३–४ ॥

श्रुतिरेव विद्यैक्यं दर्शयति महोपनिषत्कैवल्योपनिषदो दहर-विद्यायाम्—

'ऋतम् सत्यम् परम्ब्रह्म पुरुषम् कृष्णपिङ्गलम्। ऊर्ध्वरेतम् विरूपाक्षम्' 'उमासहायम् परमेश्वरम् प्रभुम् त्रिलोचनम् नीलकण्ठम् प्रशान्तम्।'

इत्यादिना निर्दिष्ट मीश्वरस्य रूप मपेक्ष्य रूपवत्त्वात् पाप्मजरा-मरणादिप्रसक्तौ छान्दोग्ये 'अथ यदिद मस्मिन्' इत्यारभ्य तस्य

---

मन्यत्राऽपि दृश्यते। तदत्र शास्त्रे प्राणादयोवाक्यशेषा दित्यत्र। एवमेवार्थाऽन्तरपरस्याऽपि वाक्यस्य न्यायव्युत्पादनार्थं मर्थान्तराश्रयणेन सिद्धान्तवर्णनं पूर्वतन्त्रेपि दृश्यते। अधिकं शिवार्कमणिदीपिकायां न्द्रष्टव्यम् तस्मा न्न्यायोपबृंहाणानुगृहीतवाक्यार्थनिर्णयानुरोधा त्सूत्रकाराभिप्रायाविरोधा च्चाथर्वशिरःप्रसिद्धात्याश्रमसञ्ज्ञिकपाशुपतव्रतानुष्ठानवद्भिरेव ब्रह्मविद्याऽनु-ष्ठेया ग्राह्याच तेभ्य एव प्रदेयेति निर्णयः। अङ्गावबद्धाऽधिकरणेऽधिकंप्रतिपादयिष्यते। शरीरित्वाऽपहतपाप्मत्वादिगुणभेदो विद्याभेदकत्वेन यः पूर्वपक्षिण श्शङ्काविषय स्स न तद्भेदकः प्रत्युत तदभेदस्यै वोपपादक इति प्रतिपादनार्थम् सूत्रम् ॥

शरीरित्वेन पाप्मादिप्रसक्तौ हि तन्निषेधोऽर्थवान्। अतः कैवल्योपनिषदादिप्रतिपादित-शरीरित्वप्राप्ति मपेक्षमाण छान्दोग्ये पाप्मादिनिषेधो विद्यैक्यस्यैव गमक इति भावः। दहरविद्याया श्शाखाभेदेन पुनश्श्रुतिः विरुद्धधर्माणामपि प्रापयित्रीति ततो विद्याभेदो नशङ्कनीयः। शक्तिमत्तु तद्विरोधासिद्ध रित्याशयेनाह—तत्र धर्मविशेषेति। शब्दान्तरा द्यदर्शनादिति। शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयानि कर्मभेदप्रमाणानि पूर्वतन्त्रे प्रसिद्धानि। इहापि नानाशब्दादिभेदा दित्यादिषु विभावयिष्यन्ते। तेषा मिहाऽदर्शन मभेदसाधक मित्यर्थः ॥

गुणाष्टकविशिष्टत्वं केवलमुच्यते । तत्र तत्र धर्मविशेषापादिका पुनःश्रुतिः विद्याभेदिकेति शङ्काया अपि नावकाशः । तत श्चोदनाद्यविशेषात् सकलवेदान्तप्रत्ययमेकमेवोपासनम् तद्भेदकशब्दान्तराद्यदर्शनात् इति सिद्धम् ॥

इति सर्ववेदान्तप्रत्ययाऽधिकरणम्

---

अथोपसंहाराऽधिकरणम् २

सर्ववेदान्तचोदितानां विधाना मैक्यप्रतिपादनफल माह—

## उपसंहारोऽर्थाभेदा द्विधिशेषवत्समाने च ॥ ३—३—५ ॥

इह विध्यैक्ये सत्यपि शाखान्तरसिद्धानां गुणानां शाखान्तर उपसंहारो न कर्तव्यः कर्तव्यो वा ।

---

* इद मधिकरणं शुद्धाद्वैतिनां पक्षेऽसङ्गतम् । तथाहि—तैः ज्ञाने न चोदनातन्त्रं तद्विषये लिङादय श्श्रूयमाणा अप्यनियोज्यविषयत्वा त्कुण्ठीभव न्त्युपलादिषु प्रयुक्तक्षुरतैक्ष्ण्या-दिव दित्याद्युक्तं तस्य प्रकृते चोदनाद्यविशेषा दिति कण्ठत आचार्येण सर्ववेदान्तविषय-ज्ञानानामपि चोदनाविषयत्वं प्रतिपादयता निराकृतत्वात् ॥

ननु—परैः प्रकृताधिकरणे " ब्रह्मविज्ञानस्याचोदनालक्षणत्वात् । अविधिप्रधानैर्हि वस्तुपर्यवसायिभि र्ब्रह्मवाक्यै र्ब्रह्मविज्ञानं जन्यतइत्यवोच दाचार्य स्तत्तु समन्वया दित्यत्र । तत्कथ मिमां भेदाभेदचिन्ता मारभतइति । तदुच्यते ॥

सगुणब्रह्मविषया प्राणादिविषया चेयं विज्ञानभेदाभेदचिन्ते त्यदोष इति समर्थित मिति चे न । प्रकृताधिकरणे सर्ववेदान्तविषयज्ञानानां चोदनाविषयत्व माचक्षाणेन आचार्येण " तत्तु समन्वया " दित्यत्र स्ववचनव्याघात मनादृत्य तथावक्तु मनुचितत्वेन परै रेव ज्ञानस्याविधिविषयत्व मुद्घाट्याचार्यशिरसि प्रलिप्तत्वावगमा त्सगुणविषये त्युक्त्याऽपि सर्ववेदान्तज्ञानानामपि सगुणब्रह्मप्रमाकत्वावगमेन निर्गुणस्य ब्रह्मणो वेदान्ताविषयत्वासिद्धेश्च कृत्स्नस्याऽपि वेदान्तशास्त्रस्य परपक्षप्रतिपक्षत्वसिद्धे श्चेत्यल मधिकेन ॥

इति सर्ववेदान्तप्रत्ययाऽधिकरणम्

---

इति संशये न कर्तव्य इति पूर्वः पक्षः। तथा हि — छान्दोग्ये दहरविद्याया मपहतपाप्मत्वादयो गुणा आम्नाताः। न तैत्तिरीये। न तत्र तेषामुपसंहारः कर्तव्यः, तत्रानुक्तत्वात्। विद्योपकार स्तत्रोक्तैरेव कृष्णपिङ्गलत्वादिगुणै र्भविष्यति, किमुपसंहारेणाचोदितेन॥

इति प्राप्तेऽभिधीयते — सर्वत्र विद्यैक्ये छान्दोग्यादिपूक्तानां दहराद्युपासनधर्माणा मपहतपाप्मत्वादीनामन्यत्र तैत्तिरीयकदहरादिपूपसंहारः कार्यः, विद्योपकाररूपस्यार्थस्यैकत्वात्। यथैकविधिशेषतया विहिताना मङ्गाना मग्निहोत्रादिषु तथैव चोदनादिभिः समाने दहराद्युपासने गुणानां प्राप्तिरिति गुणोपसंहारो युक्त एव॥

इत्युपसंहाराऽधिकरणम्

---

अथोपसंहाराऽधिकरणम् २

पूर्वाऽधिकरणप्रयोजनसमर्थनार्थत्वेन सङ्गतिं सूचय न्नेकैकस्यां शाखायां सर्वगुणाना मनाम्नाना द्विद्यैक्याच्च संशयं दर्शयति—इहेति छान्दोग्ये दहरविद्याया माम्नातानां गुणानां तैत्तिरीये अनाम्नानात्। तत्रोक्तैरेव गुणै र्विद्योपकारस्य भाव्यत्वेन अन्यत्रोक्तौ गुणा नोपसंहार्या इति पूर्वपक्षे प्राप्ते सिद्धान्तः—सर्ववेदान्तेषु दहराद्युपासने समाने एकस्मि न्सति वेदान्तान्तरे विहितस्य गुणस्य वेदान्तान्तरे उपसंहारः कर्तव्यः। कुतः? अर्थाऽभेदात्। तद्विद्याङ्गत्वेन तदुपकाराऽभेदात्। विधिशेषवत्—यथा एकविधिशेषतया विहिताना मङ्गाना मग्निहोत्रादि ष्वुपसंहार स्तथेति सूत्रार्थः। एतेन छान्दोग्यतैत्तिरीयादिषु विहितानां दहरविद्याना म्पूर्वाऽधिकरणे एकत्वप्रतिपादनस्य छान्दोग्योक्ताना मपहतपाप्मत्वादीनां तैत्तिरीयोक्तानां कृष्णपिङ्गलत्वादीनाञ्च गुणाना मखण्डोपकाररूपमेव प्रयोजन मिति फलितम्॥

इत्युपसंहाराऽधिकरणम्

अथाऽन्यथात्वाऽधिकरणम् ३

## अन्यथात्वम् शब्दादिति चे न्नाऽविशेषात् ॥ ३-३-६ ॥

वाजिनां छान्दोगानां चोद्गीथे प्राणदृष्ट्योपासनं शत्रुपरीभव-फलं विधीयते। तत्र विध्यैक्य मस्ति न वा।

इति सन्देहे चोनाद्यविशेषा द्विध्यैक्यमस्तीति पूर्वः पक्षः॥

ननु वाजिनां प्राणदृष्ट्योपासन मुद्गानकर्तृविषयमिति 'अथ हेममासन्यम् प्राणमूचु स्त्वम् न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' इति शब्दात् प्रतीयते। छान्दोगानान्तु तदुद्गानकर्म-विषयमिति 'य एवायम् मुख्यप्राण स्तमुद्गीथ मुपासाञ्चक्रिरे' इति शब्दात् प्रतीयते। तस्मादन्यथात्वं विधयो नैक्य मितिचेत्—न, उपक्रमाविशेषात्। 'द्वया ह प्राजापत्या देवा श्चासुराश्च। ततः कानीयसा एव देवा ज्यायसा असुरा स्त एषु लोके ष्वस्पर्धन्त ते ह देवा ऊचुः

अथाऽन्यथात्वाऽधिकरणम् ३

चोदनाद्यविशेषा द्विध्यैक्यम् विध्यैक्ये गुणोपसंहारश्चेत्युभयं निरूपितम्। तदपवादः क्रियते इति सङ्गतिः॥

देवासुरसङ्ग्रामाद्यैकरूप्या त्क्वचि दुद्गातरि प्राणदृष्टि रन्य त्रोद्गात्रा गातव्यस्य स्तोत्रसामद्वितीयभक्तिरूप स्योद्गीथ स्याऽवयवे प्रणवे प्राणदृष्टि रिति रूपविशेषमेवाव विध्यैक्यमेवदर्शयते पूर्वपक्षः॥ अन्यथात्वं शब्दा दितिचे दिति सिद्धान्तच्छायया आशङ्क्य नाऽविशेषा दिति पूर्ववादी परिहरति —

ननु—"अथ हेममासन्यं प्राण मूचु स्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगाय" दिति वाजिनां शब्दा त्प्राणदृष्ट्या उपासन मुद्गानकर्तृविषय मिति प्रतीयते। "य एवाऽयं मुख्यप्राण स्त मुद्गीथ मुपासाञ्चक्रु" रिति छन्दोगानान्तु शब्दात् तदुद्गानकर्म-विषय मिति प्रतीयते। तस्मा द्विधयो रन्यथात्वं भेदः नैक्य मितिचे न—

हन्तासुरान् यज्ञ उद्गीथेनात्ययाम' इत्येकत्र 'देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्या स्तद्ध देवा उद्गीथमाजहु रनेनैनानभिभविष्याम:' इत्याद्यन्यत्र । तस्मादुपक्रमाविशेषा दुभयत्र विद्यैक्यमिति ॥

सिद्धान्तमाह—

## न वा प्रकरणभेदा त्परोवरीयस्त्वादिवत् ॥ ३-३-७ ॥

नोभयत्र विद्यैक्यम् , प्रकरणभेदात् । तथा हि—'ओमित्येत-दक्षरमुद्गीथमुपासीत' इत्युद्गीथावयवभूतप्रणवविषयम् प्रकरणम् छन्दोगा-नाम् । वाजिनान्तु कृत्स्नोद्गीथविषयमिति प्रक्रमभेदेन रूपभेदा द्विद्या-भेदः । यथैकस्यामपि शाखाया मुद्गीथोपासनेषु हिरण्मयदृष्टेः परोवरीय-स्त्वादिदृष्टि र्भिद्यते, तथात्राऽपीति ॥

आशङ्क्य परिहरति—

## संज्ञातश्चेत् तदुक्त मस्ति तु तदपि ॥ ३-३-८ ॥

उद्गीथविद्येति संज्ञैक्या दुभयत्राभेद इति न वाच्यम् । अस्ति हि विधेयभेदेऽपि संज्ञैक्यम् । यथा नैयमिकाग्निहोत्रे

---

अविशेषात । उपक्रमाऽविशेषात् । तथाहि "द्वयाह प्राजापत्या देवाश्चाऽसुराश्च" इत्या द्येकत्र । "देवासुरा हवै" इत्याद्य न्यत्रच । तस्मा दुभयत्रोपक्रमे विशेषाऽभावा द्विद्ययो र्भेदो नास्तीति । अत्र सिद्धान्त उच्यते ॥

नवा=नयुक्त मेतत् । कुतः—प्रकरणभेदात् । छान्दोग्ये " ओ मित्येत दक्षर मुद्गीथ उपासीत " इत्युद्गीथाऽवयवभूतं प्रणव मुपास्यं प्रकृत्य " उद्गीथ माजह्रु " रिति शब्दा दुद्गीथावयवभूतः प्रणवएवोद्गीथशब्देनोच्यत इत्यवगम्यते ॥

बृहदारण्यके तु " उद्गीथेनाऽत्ययामे " त्यविशेषेण कृत्स्नोद्गीथ उपास्यः प्रकृतः । एवं प्रक्रमभेदेन रूपभेदा द्विद्ययो र्भेदएव । परोवरीयस्त्वादिव द्यथैकस्यामपि शाखाया मुद्गीथावयवभूते प्रणवे हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशेषदृष्टिविधानं रूपभेदा द्भिद्यते तथैवात्राऽपीति । अशङ्केति ॥ शङ्कान्तरपरिहारार्थं सूत्रम् ॥

कुण्डपायिनामयनाग्निहोत्रे च नामैक्येऽपि कर्मभेदः। तद्वत्त्राऽपि न विरोधः ॥

इत्यन्यथात्वाऽधिकरणम्

---

अथ व्याप्त्यधिकरणम् ४

## व्याप्तेश्च समञ्जसम् ॥ ३–३–९ ॥

छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति श्रूयते। इह प्रणवोद्गीथयो स्तन्त्रमुपासन मुतैकविषयम्।

इति संशये पूर्वः पक्षः – यद्यपि प्रणवोद्गीथयो रिह सामानाधिकरण्य मवगम्यते। तच्च विशेषणविशेष्यतया सम्भवति। तथाप्युद्गीथेन प्रणवो

---

छान्दोग्यबृहदारण्यकगतयोः प्राणविद्ययो र्द्वयोरपि उद्गीथविद्येति संज्ञैक्या दभेद इतिचे न। विधेयभेदे प्येकसंज्ञाकत्वस्य विद्यमानत्वात् यथा नित्याग्निहोत्रे कुण्डपायिना मग्निहोत्रेच नामैक्येपि कर्मभेद स्तथा। तदुक्तम्। परोवरीयस्त्वादिगुणकविद्याभेदेपि छान्दोग्यप्रथमप्रपाठकाम्नातानां सर्वासां विद्याना मुद्गीथविद्येति संज्ञैक्यसत्त्वा न तद्विद्यैक्य-साधकमित्येतत्पूर्वसूत्रएव परोवरीयस्त्वादिवदिति दृष्टान्तोपन्यासेनोक्तप्राय मित्यर्थः ॥

इत्यन्यथात्वाऽधिकरणम्

---

अथ व्याप्त्यधिकरणम् ४

छान्दोग्यगतउद्गीथशब्द उद्गीथाऽवयवप्रणवपरइति सिद्धवत्कृत्य तन्निबन्धनो विद्याभेदः पूर्वाऽधिकरणे निरूपितः। तदिदानीं साध्यत इति सङ्गतिः ॥

प्रणवोद्गीथोभयविषय मुपासन मुतोद्गीथविशिष्टप्रणवविषय मित्योमित्येतदक्षर मुद्गीथमिति श्रुतयो रक्षरोद्गीथशब्दयो स्सामानाधिकरण्यसम्भवाऽसम्भवाभ्यां संशये पूर्वपक्षः ॥

विशेष्यते प्रणवेन चोद्गीथ इत्यत्र नियामकाभावात् तन्त्रमुपासन मिति ॥

एवं प्राप्ते ब्रूमः— न तन्त्रमुद्गीथप्रणवयोरुपासनम् । छान्दोग्ये प्रथमप्रपाठके 'ओमित्येतदक्षरमुद्गीथमुपासीत ओमित्युद्गायति' इति तस्योपक्रमत्र दुत्तरत्राऽपि 'खल्वेतस्यैवाक्षरस्योपव्याख्यानम् भवति' इति प्रणवस्योपास्यत्वव्याप्ते रुद्गीथेन प्रणवो विशेष्यत इति प्राणविषयत्वमेव समञ्जसम् । अतः प्रणव एवोपास्यः ॥

इति व्याप्त्यधिकरणम्

---

अथ सर्वाऽभेदाऽधिकरणम् ५

## सर्वाऽभेदा दन्यत्रेमे ॥ ३—३—१० ॥

'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इति छन्दोगा वाजिनश्च प्राणविद्यायां ज्येष्ठत्वादिक.

---

भिन्नार्थवाचिनो रनयो स्स्वस्वार्थपरतया सामानाधिकरण्यं नसम्भवति । अन्यतरलक्षणया विशेषणविशेष्यभावकल्पनायाञ्च किमुद्गीथशब्देनोद्गीथाऽवयव ओङ्कारो लक्षणीयः । ओमित्येतदक्षरमित्यनेन वा तद्वा नुद्गीथो लक्षणीय इत्यत्र विनिगमकाभावा दुद्गीथविशिष्टप्रणवविषय मिति । अत्र सिद्धान्तः— विशेषणविशेष्यभावे विनिगमकाभाव स्ताव दसिद्धः । ओमिति ह्युद्गायतो त्यनन्तरवाक्यएव ओमित्यक्षरे उद्गीथशब्दस्य लक्षणया प्रवृत्तौ निमित्तस्य सम्बन्ध स्योच्यमानत्वा तस्योपव्याख्यान मिति प्रकृत स्योङ्कारस्यैव गुणोपासनफलप्रपञ्चनार्थ उत्तरः प्रपञ्च इत्युक्तत्वेन प्रणवस्योपास्यत्वे व्याप्ते रुद्गीथेन प्रणवो विशिष्यत इति उद्गीथविशिष्टप्रणवविषय मुपासन मिति ॥

इति व्याप्त्यधिकरणम्

---

मधीयते कौषीतकिनश्च। त्रिभिरपि वागादिकरणग्रामस्थिते स्तत्कार्यस्य च प्राणहेतुत्वेनैकरूपेण प्राणस्य ज्येष्ठ्य मुपपादितम्। वागादिगत-वसिष्ठत्वादिसम्बन्धित्वं प्राणस्योभयेषामुक्तम् 'अथ हैनम् वागुवाच यदहम् वसिष्ठोस्मि त्वम् तत् वसिष्ठोसीति अथ हैनम् चक्षुरुवाच यदहम् प्रतिष्ठास्मि त्वम् तत् प्रतिष्ठासीति अथ हैनम् श्रोत्रमुवाच यदहम् सम्पदस्मि त्वम् तत् सम्पदसीति अथ हैनम् मन उवाच यदह मायतनमस्मि त्वम् तदायतनमसीति'। कौषीतकिनान्तु अनुक्तमपि वसिष्ठत्वादिक मुपसंहार्यम् न वा।

इति संशये 'य एवम् विद्वान्' इत्येवंशब्देन तच्छाखोक्तगुणाना-मेवावधारणा च्चोपसंहार्यम्॥

इति प्राप्ते ब्रूमः— अनुक्तमपि वसिष्ठत्वादिक मुपसंहार्यमेव, एवं शब्देनानुक्तगुणानाम प्युक्तगुणवत् परामर्शात्, प्राणस्य गुणिन एकत्वेन गुणानामपि बुद्धिस्थत्वात्। यथा देवदत्तो मधुरायां मध्यापयन्

---

अथ सर्वाऽभेदाऽधिकरणम् ५

प्राणविद्यायां विचारं प्रवर्तयिष्यन् विषयशुद्ध्यर्थं विषयवाक्य मुपन्यस्य तत्प्रतिपाद्यं दर्शयति—यो हवा इति। ज्येष्ठयम्—वयःकृतम्। मुख्यप्राणो हि सर्वेषां प्राणानां मध्ये वयसाऽधिकः। गर्भस्थे पुरुषे प्राणस्य वृत्ति श्चक्षुरादिभ्यः पूर्वं लब्धात्मिका भवति यया गर्भो वर्धते। चक्षुरादीनान्तु गोळकनिष्पत्तौ सत्यां वृत्तिलाभइति श्रेष्ठो गुणै रधिकः। चक्षुरादिभ्यो गुणै राधिक्य मस्युक्त भाष्यकारएवाऽनुपद मुपपादयति— "ज्येष्ठश्च हवै श्रेष्ठश्च स्वानां भवती"ति वाजसनेयकपाठइति विशेषः। स्वाः—ज्ञातयः। कौषीतकिनश्चाऽधीयत इत्यनुषङ्गः। वसिष्ठत्वादिसम्बन्धित्व मिति वागादिभि र्वसिष्ठत्वादि-गुणानां यत्प्राणे समर्पण मुक्तम् तेन प्राणस्य तद्गुणसम्बन्धित्व मुक्तंभवतीति भावः। उभयेषां छन्दोगवाजसनेयिनां शाखाया मिति शेषः। यै र्वाक्यै रुक्तं तानि वाक्यानि दर्शयति— "अथ हैन" मित्यादिना। कौषीतकिना न्त्विति। कौषीतकिनां शाखायां वागादीनां वसिष्ठत्वादिक तस्य प्राणे समर्पणञ्च त्युभयमपि नोक्त मित्यर्थः। अनुक्तमपीति।

दृष्टः पुनर्माहिष्मत्या मनध्यापयन्न प्यध्यापकत्वेन प्रत्यभिज्ञायते, तथा छान्दोग्यादिषु वसिष्ठत्वादिनोक्तः पुनरन्यत्र केवल उच्यमानोऽपि तद्गुणविशिष्टतया बुद्धिस्थो भवति । तत एवंशब्देन परामर्शाद्वसिष्ठ-त्वादिक मुपसंहार्यमिति ॥

इति सर्वाऽभेदाऽधिकरणम्

---

अथानन्दाद्यधिकरणम् ६

## आनन्दादयः प्रधानस्य ॥ ३–३–११ ॥

अभेदादिति शेषः। 'सत्यम् ज्ञान मनन्तम् ब्रह्म' 'आनन्दो ब्रह्म' 'ऋतम् सत्यम् परम् ब्रह्म पुरुषम् कृष्णपिङ्गलम्' 'आकाश-शरीरम् ब्रह्म, सत्यात्म प्राणारामम् मनआनन्दम्, शान्तिसमृद्धम्'

---

कौषीतकिशाखागतैवंशब्दा द्विद्यैक्याच्च संशयः । पूर्वपक्ष मुपपादयति– "य एवं विद्वा" निति । इति प्राप्त इति । अत्राऽय मभावः । फलपरवाक्याम्नात स्यैवंशब्दस्य शाखान्तराम्नातगुणनिवारणपरत्वमपि कल्पयितुं नयुक्तम् । अत स्सर्वास्वपि शाखा स्वेवंशब्दोऽनुवादइति तस्य स्वशाखाप्राप्तगुणमात्राऽनुवादकत्वेऽपि गुणान्तरनिवारकत्वाऽभावा न्न विद्यैक्यप्रयुक्ते सर्वशाखाम्नातगुणोपसंहारे न काचि दनुपपत्ति रिति ॥

सूत्रार्थस्तु–इमे वसिष्ठत्वादयः । अन्यत्र कौषीतकिशाखायाम प्युपसंहार्याः । कुतः सर्वासु शाखासु प्राणविद्याया अभेदात् । अभेदेन तया बुद्धिसन्निधापितस्य तस्या प्येवंशब्देन परामर्शयोग्यस्य प्रहाणे कारणाऽभावा दिति ॥

इति सर्वाऽभेदाऽधिकरणम्

---

अथ आनन्दाद्यधिकरणम् ६

पूर्वसूत्रा दपेक्षितांशानुवृत्तिं दर्शयति– अभेदादिति । आनन्दादीनां ब्रह्मगुणानां सकलेतरविलक्षणत्वेन प्रतीता वुपयोगाऽनुपयोगाभ्यां संशये पूर्वपक्षः ॥

इत्यादिष्वानन्दादयो गुणाः परविद्यासु प्रधानस्य ब्रह्मणः श्रूयन्ते। ते सर्वासु परविद्यासूपसंहार्या न वा॥

इति संशये नोपसंहार्याः, ब्रह्मण एकस्यानन्दाद्यनेकगुणविशिष्टत्वेऽनेकत्वप्रसङ्गात, विशेष्यभेदकत्वात, अथवा तत्रतत्रोक्तगुणमात्रेणाऽपि तदुपासनसम्भवात्।

इत्येवं प्राप्तोऽभिधीयते। गुणिनो ब्रह्मण एकत्वात् सर्वासु परविद्यासूपसंहार्या आनन्दादयः। नीलो धवलो रक्तः खण्डः पूर्णश्रृङ्ग इत्यादीनां विरुद्धधर्माणामेव धर्मिभेदावहत्वम्, न तु नीलं सुगन्धि महदुत्पल मित्यत्र नीलिमादीनाम्। अतो ब्रह्मणो गुणाना मविरोधान्न भेदावहत्वम्। तस्माद्गुणिनो ब्रह्मणः सर्वत्राभेदा दुपसंहार्या आनन्दादय इति॥

इत्यानन्दाद्यधिकरणम्

---

आनन्दादय स्सर्वासु विद्यासु किमर्थ मुपसंहार्याः किमेते सकलेतरविलक्षणब्रह्मस्वरूपप्रतीत्यनुबन्धिन इति तत्प्रतीत्यर्थं मुपसंहार्याः, उत विद्योपकारार्थम्? नाद्यः। घटत्वादिव देकस्यैव स्वरूपकनिरूपकधर्मस्य सकलेतरविलक्षणधर्मिस्वरूपप्रतीतिसाधनत्वेन ताव द्गुणोपसंहारस्य वैयर्थ्यात्। नच ब्रह्मण स्तावन्तोऽपि गुणा स्स्वरूपनिरूपकाः। स्वरूपनिरूपकधर्मानेकत्वे घटपटादिरीत्या ब्रह्मणोऽप्यनेकत्वप्रसङ्गात्। लोकवेदयो रेकस्मिन्धर्मिण्यनेकधर्मसमावेशस्य बहुल मुपलम्भेऽपि स्वरूपनिरूपकासाधारणधर्मभेदे धर्मिभेदस्य नियतत्वात्॥

न द्वितीयःतत्तद्विद्याप्रकरणाम्नातगुणैरेव विद्योपकारसिद्धेः। अन्यथा विद्याभेदेऽपि केषाञ्चि द्गुणाना मुपसंहारे विनिगमनाविरहा त्सर्वगुणानामपि पारिप्लवत्वप्रसङ्गा दिति। सिद्धान्तस्तु—नित्यानपायिज्ञानानन्दादिगुणविग्रहविशेषवत्त्वं ब्रह्मण स्स्वरूपलक्षण मित्युक्तं जन्माद्यधिसूत्रे। नहि ब्रह्मविष्ण्वादिसकलेतरविलक्षण न्ब्रह्म शृङ्गग्राहिकयाऽनुभवारूढं भवति। यथाप्रकृष्टप्रकाशेन सकलग्रहनक्षत्रतारकादि विलक्षण श्चन्द्र स्तथा भूतस्वरूपलक्षणशालि ब्रह्मैकमेव सर्वासुविद्या सुपास्यमिति। चन्द्रदर्शने सर्वत्र प्रकृष्टप्रकाशाऽनुवृत्तिव ज्ज्ञानानन्दादिगुणविग्रहविशेषाऽनुवृत्ति स्सर्वासु ब्रह्मविद्यासु भवेदेव। नच स्वरूपनिरूपकधर्मभेदा

प्रियशिरस्त्वाऽधिकरणम् ७

## प्रियशिरस्त्वाद्यप्राप्ति रुपचयापचयौ हि भेदे ॥ ३–३–१२ ॥

'तस्य प्रियमेव शिरः' इत्यादौ प्रियशिरस्त्वादयो ब्रह्मधर्मत्वेन श्रूयन्ते। तेऽप्यानन्दादय इव परविद्यासूपसंहार्या न वा ॥

इति संशये तेषामपि सत्यसङ्कल्पत्वादिवदुपसंहारे को विरोधः ॥

इति प्राप्ते ब्रूमः– नास्ति प्रियशिरस्त्वादीनामुपसंहारः परविद्यासु, सत्यसङ्कल्पत्वादिवत् तेषां ब्रह्मगुणत्वाभावात्। उपसंहारे तेषां ब्रह्मणः सावयवत्वेनोपचयापचयप्रसक्तिः। भेदो हि प्रियशिरस्त्वादीनां स्वाभाविकत्वे ब्रह्मणो भवति। अत स्तेषां नोपसंहारः ॥

---

द्धर्मिभेद इशङ्कनीयः। नहि स्वरूपनिरूपकत्वं धर्माणां भेदकत्वे प्रयोजकम्। किन्तु विरुद्धधर्मत्वं नीलत्वधवलत्वादिषु तथा दृश्यमानत्वात्। अत स्सर्वास्वपि विद्या स्वेतेषा मुपसंहारः कार्य इति ॥

इति आनन्दाद्यधिकरणम्

अथ प्रियशिरस्त्वाऽधिकरणम् ७

प्रियादीना मानन्दविशेषत्वा त्तेषां शिरःप्रभृतिरूपत्व स्योपचयापचयाद्यापादकत्वाच्च संशये पूर्वपक्षः ॥

ज्ञानावान्तरविशेषसत्यसङ्कल्पादिव दानन्दावान्तरविशेषाः प्रियशिरस्त्वादयोऽप्युपसंहर्तव्याः। नच प्रियादीना मानन्दभेदत्वेऽपि तेषां शिरस्त्वात्मत्वादिकं विद्याविशेषे ब्रह्मणो निरतिशयानन्दरूपत्वप्रतिपत्तिसौकर्यार्थं कल्पितम् नतु तात्त्विकम् ब्रह्मानन्दस्य तत्त्वतः शिरःप्रभृतिरूपत्वे क्वचित् स्थौल्यं क्वचि त्कार्श्यञ्च मिति तस्योपचयापचय-प्रसङ्गा दिति वाच्यम् ॥

ब्रह्मानन्दरूपायाः परिणामिन्या श्चिच्छक्ते रुपचयापचययोः परिणामविशेषत्वेनास्यो रदोषावहत्वा दिति ॥

आनन्दादीनामिव सर्वज्ञत्वादीनां ब्रह्मस्वरूपान्तर्भूतगुणत्वादविशेष इत्याह—

## इतरे त्वर्थसामान्यात् ॥ ३–३–१३ ॥

इतरे सर्वज्ञत्वनित्यतृप्तत्वादयो ब्रह्मस्वरूपान्तर्गततया अर्थसामान्यात् सर्वत्रोपसंहार्याः । प्रियशिरस्त्वादीनामनन्तभावात्रा त्रोपसंहार इति ॥

इति प्रियशिरस्त्वाऽधिकरणम्

—•—

सिद्धान्तस्तु— उपचयापचयौ शिरःपक्षपुच्छादिरूपतया स्थूलत्वकृशत्वरूपौ प्रसज्येयाताम् । तौहि जडपरिणामेष्वेवसम्भवतो नाऽऽनन्दभेदेषु प्रियादिषु । आनन्दमयस्य पुच्छत्वेन निरूपिता ब्रह्मणो भेदश्च प्रसज्यते । अ ाऽन्नमयादीनामिवानन्दस्याऽपि शिरःप्रभृतिकल्पनामात्रमिति न तेषा मुपसंहार इति । आनन्दादीनां प्राप्तावपि "तस्य प्रियमेव शिर"इत्यादीना मप्राप्तिः । ब्रह्मस्वरूपगुणत्वाभावा त्तेषाम् । भेदे ब्रह्मणः शिरः पक्षादि भेदे सति ब्रह्मण उपचयापचयौ स्थौल्यकार्श्ये च प्रसज्येता मिति सूत्रार्थः सर्वज्ञत्व-नित्यतृप्तत्वादिकं ज्ञानानन्दविशेषत्वेऽपि यदुपसंहार्य मभिमतं तत्र हेतुं प्रियशिरस्त्वादिवैषम्यं दर्शयितु मुत्तरसूत्र मवतारयति—आनन्दादीना मिवेति ॥

स्वरूपान्तर्गततया यथा ब्रह्मस्वरूपलक्षणतया तथा अर्थसामान्यात् अनपायित्वेन ब्रह्मस्वरूपधर्मसादृश्यात् । ननु- किं यावदनपायि ब्रह्मणि धर्मजातम् तत्सर्वं सर्वविद्या सुपसंहार्यम् ? नेति ब्रूमः । यद्ब्रह्मस्वरूपप्रतीत्यनुबन्धि ज्ञानानन्दादिकं यच्च मुक्ता बुपासकेन प्राप्यं सर्वज्ञत्वसत्यकामत्वसत्यसङ्कल्पत्वाप्तकामत्वादिकं तत्सर्वमुपसंहार्यम् । तत्र प्रतीत्यनुबन्धिगुणजात स्योपसंहार्यत्वं पूर्वाऽधिकरणे वर्णितम् । इह मुक्तप्राप्यगुणजात स्योपसंहार्यत्वं वर्णितम् । तदेव दर्थसामान्या दित्यस्य मुक्तानां ब्रह्मणासह गुणाष्टकाविर्भावादिफलसाम्या दित्यर्थान्तरगर्भीकारेण विवक्षितम् । इदञ्चाग्रिमाऽधिकरणे तद्नुसन्धाननैरन्तर्याद्धि तत्सारूप्यापत्ति र्मुक्तिः । अतो यथोपासनं फलमिति भाष्यकृदेव स्पष्टयिष्यति ॥

इति प्रियशिरस्त्वाऽधिकरणम्

—•—

अथाध्यानाऽधिकरणम् ८

## आध्यानाय प्रयोजनाभावात् ॥ ३—३—१४ ॥

इह पूर्वोक्तानन्दमयात्मानुसन्धानव दन्नमयादीनामप्यनुसन्धानं नियतमस्ति न वेति संशयः ॥

अन्नमयादिसर्वान्तर स्यानन्दमय स्यान्नमयाद्यनुसन्धानक्रममन्तरेण तदन्तरत्वेनानुसन्धानायोगात् तेषा मनुसन्धानं नियतम् ॥

इति प्राप्तेऽभिधीयते— अन्नमयादीना मनुसन्धानं न नियतम्, प्रयोजनाभावात् । तस्यानन्दमयब्रह्मसिद्धि र्हि प्रयोजनम् । अत स्तत्सिद्धि-पर्यन्तमेवान्नमयादीना मनुसन्धानमिति तेषा मनियतमनुसन्धानम् ॥

---

अथाध्यानाऽधिकरणम् ८

सङ्गतिसूचनपूर्वकं संशयं दर्शयति—इहेति । 'स एको ब्रह्मण आनन्द' इत्यानन्दवल्ल्याम् श्रुतस्य निरतिशयानन्दस्य सर्वविद्या स्वनुसन्धेयत्वव्यवस्थापना दानन्दमय आत्मा सर्वविद्या स्वनुसन्धेय इति फलितम् । तदनुसन्धाने तदीयप्रियशिरस्त्वादिकमपि सर्वत्राऽनु सन्धातव्य मितिशङ्का पूर्वाऽधिकरणे निराकृता । माभू दानन्दमयसम्बन्धि शिरःपक्षादिक मनुसन्धेयम् । आनन्दमयस्य यस्मि न्नन्नमयादिकोशचतुष्टये निगूढत्वमुक्त न्तदनुसन्धेय मेव । तस्याः कल्पितत्वा दिति शङ्कानिराकरणार्थ मेतदधिकरण मिति सङ्गतिः । अन्नमयादिकीर्तन स्यानन्दमयगतान्नमयादिसर्वान्तरत्वरूपगुणानुसन्धानार्थत्वानन्दमयप्रतिपत्ति सौकर्यार्थत्वाऽन्यतरानवधारणा त्संशय इति भावः । अन्नमयादीति । अत्राऽयम्भावः । अन्नमयादि षूत्तरोत्तरस्य पूर्वपूर्वान्तरत्वप्रतिपादन मानन्दमयस्य सर्वान्तरत्वरूपानुसन्धेय-गुणप्रतिपादनार्थम् । अन्नमयाद्यान्तरत्ववेदनञ्च नाऽन्नमया द्यनुसन्धानंविना शक्यते कर्तुम् । अतो यथा दहरविद्यायां ब्रह्मपुरमध्यवर्ति दहरपुण्डरीकाभ्यन्तरत्वेन ब्रह्मानुसन्धानार्थं म्ब्रह्मपुरदहरपुण्डरीकानुसन्धानं नियतम् तथाऽन्नमयाद्यनुसन्धानं नियत मिति । आनन्दमयब्रह्मसिद्धि रिति । अन्नमयादिभ्य उत्कृष्टत्वेनानन्दमयब्रह्मसिद्धि रित्यर्थः ॥

आध्यानाय—आभिमुख्येनाऽनुध्यानाय । "प्रयोजनाऽभावात् — निष्प्रयोजनत्वा दानन्दमयाद्या नानुसन्धेया इत्यर्थः । एतेनानन्दमयाद्याः प्रतिपत्तिसौकर्यार्थमेव कीर्तिता इति भावः

## आत्मशब्दाच्च ॥ ३-३-१५ ॥

'एतमन्नमयमात्मान मुपसङ्क्रम्य' इत्यादिषु प्रत्येकमात्मशब्दादन्नमयादीना मन्नाद्यधिष्ठातृचेतनत्व मवगम्यते । ब्रह्मव्यतिरिक्तानां चेतनानां मुमुक्षुध्येयत्वनिषेधात् ध्यानकाले तेषां नानुसन्धानम् । तथाऽथर्वशिखायाम् 'शिव एको ध्येयः शिवङ्करः सर्वमन्यत् परित्यज्य' इति शिवव्यतिरिक्तानां मुमुक्षुध्येयत्वं निषिध्यते । ततोऽन्नमयादीना मननुसन्धाना-नियमः ॥

## आत्मगृहीति रितरवदुत्तरात् ॥ ३-३-१६ ॥

इह 'अन्योऽन्तर आत्मानन्दमयः' इत्यात्मगृहीतिः परमात्मविषया, न प्रत्यगात्मविषया, 'आत्मन आकाशः सम्भूतः' इत्यत्रात्मशब्दवत् । तदिद मुत्तरात् 'आनन्दमयमात्मान मुपसङ्क्रम्य'

ननु किमिति प्रतिपत्तिसौकर्यार्थत्व मुच्यते ? मुणाऽनुसन्धानार्थत्वमपि किमिति नस्यात् ? इति शङ्कानिराकरणार्थं सूत्रम् ॥

ध्यानकाल इति ध्याना त्पूर्वं शिवस्य ब्रह्मानिपरत्वदृढीकरणार्थं मन्नमयाद्यनुसन्धान मस्तुनाम । निरन्तरशिवैकविषयचिन्तासन्ततिरूपध्यानकाले तु तदयुक्त मित्यर्थः ॥

नन्वात्मशब्दयोगेऽपि "येऽन्नम् ब्रह्मोपासते" इत्यादिषु ब्रह्मशब्दश्रवणेऽपि उपासनाप्राप्यदेवताविशेषत्वेऽपि यथाऽन्नमयादीना मब्रह्मत्वम् तथानन्दमयस्याऽपि स्यादिति मन्दशङ्कानिराकरणार्थं सूत्रम् ॥

'आनन्दमय मात्मान' मिति । तदनन्तर मुपसङ्क्रमणीयाऽन्तराऽनिर्देशा न्मुक्तिफलस्य तत्प्राप्त्यैव पर्यवसाना त्तस्य परब्रह्मताऽवसीयत इति भावः ॥

आत्मगृहीतिः—अन्योन्तरआत्मा इत्यत्र आत्मशब्देन परमेश्वरस्यैव ग्रहणम् । 'आत्मन आकाश स्सम्भूत' इत्य त्रात्मशब्दवत् । तदिदम् उत्तरात् — "आनन्दमय मात्मानमि" त्युत्तरसन्दर्भा दवगम्यत इति सूत्रार्थः ॥

इत्येतस्मादवगम्यते । तस्मादानन्दमयात्मानुसन्धानं मुख्यं ब्रह्मानुसन्धानमिति ॥

## अन्वयादिति चेत् स्यादवधारणात् ॥ ३–३–१७ ॥

अन्नमयादीनामप्यात्मशब्दान्वया त्परमात्मत्वेन तेषामप्यनुसन्धान मविरुद्ध मिति चेत्–न, 'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यानन्दमयस्य परमात्मनः शिवस्यान्नमयादिभ्यो भिन्नत्वावगमात् 'शिव एको ध्येयः शिवङ्करः सर्वमन्यत् परित्यज्य' इति सकलेतरपरित्यागपूर्वकं शिवस्यैकस्यैव । ध्येयत्वावधारणात् । अत्र हि निरस्तसमस्तकलङ्कतया निखिलमङ्गलभाजनतया च शिवशब्देन परंब्रह्मोच्यते । यद्विरूपाक्षं कृष्णपिङ्गलं तदनुसन्धाननैरन्तर्याद्धि तत्सारूप्यापत्ति र्मुक्तिः । अतो यथोपासनं

तर्हि–आत्मब्रह्मशब्दादिश्रावणा दन्नमयादीनामपि ब्रह्मताऽस्तु । 'अन्योऽन्तर' इति भेदनिर्देशस्य "ब्रह्मपुच्छम् प्रतिष्ठे"ति पुच्छपुच्छवद्भावनिर्देशव दौपाधिकत्वोपपत्तेः । अन्नमयाद्युपासनाभिः क्रमप्राप्यस्यानभेदश्रावणस्यच परमशिवलोकान्तर्गतस्थानभेदविषयत्वोपपत्ते रित्याशङ्कानिराकरणार्थं सूत्रम ॥

आत्मशब्दान्वया दित्येत द्ब्रह्मशब्दान्वयस्याऽप्युपलक्षणम् । अवधारणा दित्येतत् भिन्नत्वनिश्चयपर मिति व्याचष्ट—भिन्नत्वाऽवगमा दिति । आनन्दमयस्य ब्रह्मणश्च परब्रह्मत्व मानन्दमयाऽधिकरणोक्तन्याये रविचलमिति पुच्छपुच्छवद्भावनिर्देशः कथञ्चि दौपाधिकविषयत्वेन योज्यते । नाऽत्र तथा 'अन्योन्तरआत्मे' त्यस्य मुख्यार्थपरिग्रह प्रमाणमस्ति । आत्मशब्दस्य देवताविशेषत्वा दुपपत्तेः । ब्रह्मशब्दस्य पञ्चब्रह्ममन्त्रप्रसिद्धेषु ब्रह्मविष्णुरुद्रेन्द्रमहेश्वरे ष्वुपपत्ते रिति भावः । प्रयोजनाऽभावा दिति प्रथमसूत्रोक्त मर्थं प्रपञ्चयति– 'शिव एको ध्येय' इत्यादिना न शिवत्वापादक मित्यन्तेन ।

अन्वयात्– अन्नमयादीनाम प्यात्मशब्दान्वया त्परमात्मत्वेन तेषामप्यनुसन्धान मविरुद्धमितिचे न्न । अवधारणात्–'शिव एको ध्येय' इति शिवस्यैकस्यैव ध्येयत्वावधारणेन

फलमिति तद्व्यतिरिक्तानां शिवताशून्याना मनुसन्धानं न शिव-त्वापादकम् । अथ आनन्दमयः शिव एक एवानुसन्धेय इति ॥

इत्याध्यानाऽधिकरणम्

अथ कार्याख्याऽधिकरणम् ९.

## कार्याख्याना दपूर्वम् ॥ ३—३—१८ ॥

'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद' इत्यारभ्य 'किम् मे वासः' इति वागादीन् प्रति प्राणप्रश्नस्योत्तरमपां प्राणवासस्त्वमुक्त्वा 'तस्मादेतमवि दशिष्य आचामे दशित्वा चाचामे तैतमेव तदनमनग्नम् कुरुते' इति श्रूयते । अत्राचमनं प्राणवासस्त्व ञ्चेतुभयं विधीयते उत प्राणवासस्त्वमेव?॥

परब्रह्मण शिवस्य अन्नमयादिभ्यो भिन्नत्वावगमात् तथा मनुसन्धानं विरुद्धमेवेति सूत्रार्थः ।

इत्याध्यानाऽधिकरणम्

अथ कार्याख्यानाऽधिकरणम् ९.

## कार्याख्याना दपूर्वम् ॥ ३—३—१८ ॥

छान्दोग्ये काण्वमाध्यन्दिनसंज्ञयोर्वाजसनेयकशाखयोश्च प्राणविद्यायां मल वासश्च पृच्छते 'प्राणाय वागादीना मुत्तरे' श्वपश्व्यादिपर्यन्त प्राणिजात मन्न मुक्तम् । तत्रतावद्दृष्टिविधि रसन्दिग्धः । सर्वप्राण्योदनत्वस्याऽशक्यत्वा दशक्यत्वाच्च । तदनन्तर माचमनीयाना मपां प्राणवासस्त्व मुक्तम् । तत्राऽपि 'दृष्टिविधिरेव' दृष्टिविधिसाहचर्यात् । एवम् काण्वशाखायाम प्याचमनीयाना मपां प्राणवासस्त्वमात्र मुक्तम् । माध्यन्दिनशाखायान्तु 'तस्मा देवंवि दशिष्य आचामे' दित्याद्यधिकं श्रूयते ॥

अत्र किमाचमनं प्राणवासस्त्वञ्चे त्युभयं विधीयते ? उत प्राणवासस्त्वमेव ? इतिसंशये विशेषाऽभावा दुभयमपि विधीयत इति पूर्वपक्षेप्राप्ते सिद्धान्तः— अपूर्वं अप्राप्तं

इति संशये विशेषाभावा दुभयमपीति प्राप्ते — आचमनस्य स्मृत्याचारेण प्राप्तत्वा दप्राप्तं प्राणवासस्त्वमेवापूर्वं विधीयते। अप्राप्तस्यैव विधेयत्वाख्यानादनुवादस्वरूपे विधिकल्पना। तस्मा दपूर्वं प्राणवासस्त्वानुसन्धानमेव विधेयमिति युक्तम्॥

इति कार्याख्यानाऽधिकरणम्

---

अथ समानाऽधिकरणम् १०

## समान एवञ्चाभेदात् ॥ ३-३-१९ ॥

अग्निरहस्ये बृहदारण्यके च शाण्डिल्यविद्याऽऽम्नायते। एकत्र 'आत्मानमुपासीत मनोमयं प्राणशरीरम् भारूपम् सत्यसङ्कल्प माकाशात्मानम्' इति। इतरत्र 'मनोमयोऽयं पुरुषो भास्सत्य स्तस्मिन्नन्तर्हृदये यथा व्रीहि र्वा यवो वा स एष सर्वस्य वशी सर्वस्येशानः सर्वस्याऽधिपतिः सर्वमिदम् प्रशास्ति' इति। उभयत्र विद्या भिन्ना न वेति संशयः॥

---

प्राणवासस्त्वमेव विधीयते स्मृत्याचारेण प्राप्तत्वा दाचमनं नविधीयते। कुतः कार्याख्यानात्। कार्यशब्दो कार्यत्वपरः। कार्यत्वाख्यापनात्— विधेयत्वप्रतिपादना दित्यर्थः॥

इति कार्याख्यानाऽधिकरणम्

---

अथ समानाऽधिकरणम् १०

वाजसनेयिनां शतपथब्राह्मणे प्रथमं मग्निरहस्ये "स आत्मान मुपासीत मनोमयं प्राणशरीरं भारूप माकाशात्मानं कामरूपिण म्मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धम् सर्वरसं - सर्वा अनुदिशः प्रभूतं सर्वं मिद मभ्यात्त मवाक्य मनादर" मिति शाण्डिल्यविद्या श्रूयते॥

बृहदारण्यकेऽपि—" मनोमयोऽयं पुरुषो भारूप स्सत्य स्तस्मि मन्तर्हृदये यथा व्रीहि र्वा यवो वा स एष सर्वस्येशानः सर्वस्याऽधिपति स्सर्वमिदं प्रशास्ति यदिदं किञ्च"ति श्रूयते।

एकत्राकाशात्मकत्वेन महत्त्वम्, इतरत्र यवसादृश्येनाल्पत्वम्, एकत्र सत्यसङ्कल्पत्वम्, इतरत्र वशित्वादिकम्, इति धर्मभेदा द्विद्या ॥

इति प्राप्ते ब्रूमः— सर्वत्र मनोमयत्वादिके समाने आकाशात्मेत्यस्याकाशवत् स्वच्छतापरत्वेन माहात्म्यपरतया स्तावकत्वेन वोपपत्तेः वशित्वादेः सत्यसङ्कल्पत्वविशेषरूपत्वेन तदभेदाच्च विद्यैक्यम् ॥

इति समानाऽधिकरणम्

---

अथ सम्बन्धाऽधिकरणम् ११

## सम्बन्धा देव मन्यत्राऽपि ॥ ३–३–२० ॥

बृहदारण्यके 'य एष एतस्मिन् मण्डले पुरुषो यश्चाऽयम् दक्षिणेऽक्षन्' इत्युपक्रम्य सत्यस्य ब्रह्मणो व्याहृतिशरीरत्वेनादित्यमण्डलेऽक्षिणि

---

किं शुभयत्र विद्या भिद्यते न वेति संशये महत्त्वाऽणीयस्त्वादिभेदाऽभेदा त्संशये पूर्वपक्षः—एकत्राऽऽकाशसाम्यरूपं महत्त्व मीशानत्वादिकञ्च श्रूयते । अन्यत्राऽणीयस्त्वं सत्यसङ्कल्पत्वादिकञ्च श्रूयते । अतो रूपभेदा द्विद्याभेदः । इति ॥

सिद्धान्तस्तु—समाने— मनोमयत्वादिके समानेसति विद्यैक्यं सिद्धम् । एकत्वाऽभेदात् वशित्वादे स्सत्यसङ्कल्पविशेषरूपत्वेन विद्यैक्यं सिद्धमिति ॥

इति समानाऽधिकरणम्

---

अथ सम्बन्धाऽधिकरणम् ११

## सम्बन्धा देव मन्यत्राऽपि ॥ ३–३–२० ॥

अहरह मित्यौपनिषदौ रहस्यनामनी आदित्यमण्डले दक्षिणेऽक्षिणि च अनियता नकल्पेन समुच्चयेन वा उपसंहार्यौ ? उत यथानिर्देशं व्यवस्थिते ? इति नामविधानवाक्यश्रुतयो स्तस्येति शब्दयोः केवलपुरुषपरामर्शित्वस्याविशेषविशिष्टपुरुषपरामर्शित्वाऽन्यतराऽनवधारणा त्संशये पूर्वपक्षः ॥

चोपास्यत्व मुक्त्वा 'तस्योपनिषदहः इत्यधिदैवतम्' 'तस्योपनिषदहम् इत्यध्यात्मम्' इति द्वे रहस्यनामनी आम्नायते । ते उभयत्रोपसंहार्ये न वा॥

इति संशयेसत्युपास्यैक्या द्विद्यैक्यम । अत उभयत्राऽपि द्वे नामनी इति पूर्वः पक्षः ॥

सिद्धान्त उच्यते—

## न वा विशेषात् ॥ ३—३—२१ ॥

नाऽत्र विद्यैक्यम्, आदित्याक्षिस्थानविशेषसम्बन्धित्वेनोपास्यभेदात् । अत स्तत्र नियते नामनी ॥

इति सम्बन्धाऽधिकरणम्

---

व्याहृतिशरीरत्वविशिष्टब्रह्मरूपोपास्यैक्या द्विद्यैक्ये सति विद्यैक्या दुभयत्रोपसंहार्ये इति ।

सूत्रार्थस्तु—एवं शाण्डिल्यविद्याया मेकविद्यासम्बन्धा त्परस्परगुणोपसंहार इव सत्यविद्याया मपीति । अनेनाऽस्याऽधिकरणस्य पूर्वाऽधिकरणेन प्रत्युदाहरणसङ्गतिरपि दर्शिता ॥

सिद्धान्तप्रतिपादकम् सूत्रम् ॥

बृहदारण्यके— "तद्य त्तत्सत्य मसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चाऽयं दक्षिणेऽक्षि" न्नित्युपक्रमात् यद्यपि "सत्यम्ब्रह्मे"त्युपक्रान्त मेकमेव सत्यम्ब्रह्म आदित्यमण्डले अक्षिणि चोपास्यम् । तस्यादित्यमण्डलस्थस्य 'भूरिति शिर' इत्यादिना अहरितिनामोपदिष्टम् । तस्यैवाऽक्षिस्थस्य योऽयमित्यादिना अहमिति नामोपदिष्टम् । तथाऽपि स्थानात्मकरूपभेदा दादित्येऽक्षिणिच नैकासत्यविद्या । एवं विद्याभेदा न्नोपसंहार इति । विशेषात्— स्थानात्मकरूपभेदात् नवा आदित्यमण्डले दक्षिणेऽक्षिणिच उपास्या सत्यविद्या नैका भवती त्यर्थः ॥

इति सम्बन्धाऽधिकरणम्

अथ मण्डलविद्याऽधिकरणम् १२

## दर्शयति च ॥ ३-३-२२ ॥

छान्दोग्ये तैत्तिरीये च मण्डलविद्याम्नाऽऽता । सैका भिन्ना वा ॥

इति संशये पूर्वः पक्षः । एकत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु र्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः' इत्यादि श्रूयते । अन्यत्र 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति त्रयीमयमण्डलान्तर्वर्तिपुरुषान्तर्वर्तितया हिरण्मयं पुरुषं प्रस्तुत्य तस्योपसंहारे 'सर्वो वै रुद्रः' इत्यारभ्य 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः' इत्यन्तेन सर्वात्मत्वं हिरण्यबाहुत्व मुमापतित्वञ्चाम्नायते । तत्रैकत्र सर्वाङ्गसुवर्णत्व मन्यत्र बाहुमात्रसुवर्णत्व मिति रूपभेदः । एकत्र 'सर्वो वै रुद्रः' इति सर्वात्मत्वं अन्यत्र 'सर्वेषां लोकाना मीष्टे' इति सर्वाधिपत्य मिति धर्मभेदः, तस्मा न्न विद्यैक्यम् ॥

---

अथ मण्डलविद्याऽधिकरणम् १२

एकस्याऽपि वेद्यस्य स्थानभेदा द्विद्याभेदः उक्तः । स्थानैक्ये तु न विद्याभेद इति प्रत्युदाहरणसङ्गत्या अधिकरणान्तरम् ॥

रूपभेदा द्धर्मभेदाच्च विद्याभेदाभेदसंशये पूर्वपक्षः । एकत्र सर्वावयवसुवर्णत्वं सर्वेश्वरत्व ञ्चाऽन्यत्र बाहुमात्रसुवर्णत्वं सर्वात्मत्व मिति रूपभेदा द्विद्याभेदो युक्तः । रूपभेदे सति स्थानैक्यमात्रस्य रूपादिभेदरहितदहरशाण्डिल्यविद्ययोरिवैकत्वाऽप्रयोजकत्वा दिति । सिद्धान्तस्तु—इह स्थानैक्यं विद्यैक्ये गमक मेव । तदपवादस्य रूपभेदस्याऽभावात् । तैत्तिरीयकेऽपि—'हिरण्मयः पुरुष' इत्युपक्रमानुसारेण उपसंहारे बाहुग्रहण स्योपलक्षणत्वा त्सर्वात्मत्वस्य सर्वशरीरकात्मत्वे तदेव सर्वेश्वरत्वमि त्यभेदा त्सर्वोपादानात्मकत्वे तस्य सर्वेश्वरत्वनियतत्वेन तदनुगुणतया विरोधशङ्काभावेनोपसंहार्यत्वा दिति ॥

इति प्राप्ते ब्रूमः — न भिन्ना विद्या । 'अन्तरादित्ये' इति स्थानैक्यमेव विद्यैक्यं दर्शयति । तैत्तिरीये 'हिरण्मयः पुरुषः' इत्युपक्रमेण बाहुग्रहणस्योपलक्षणत्वा दुपसंहारेऽपि सर्वाङ्गसुवर्णत्वमेव विवक्षितम् । जगदीश्वरस्याऽपि तनुप्रवेशात् तदात्मत्वं युक्तमिति निरूपितम् । तस्मादुभयत्रैकस्य प्रतिपाद्यत्वा दुभयत्राऽप्युमापतित्वादिक मुपसंहार्यम् ॥

इति मण्डलविद्याऽधिकरणम्

---

अथ सम्भृत्यधिकरणम् १२

## सम्भृतिद्युव्याप्त्यपि चातः ॥ ३–३–२३ ॥

राणायणीयानां खिलेषु श्रूयते । 'ब्रह्म ज्येष्ठा वीर्या सम्भृतानि । ब्रह्माग्रे ज्येष्ठम् दिवमाततान । ऋतस्य ब्रह्म प्रथमोत जज्ञे । तेनार्हति ब्रह्मणा स्पर्धितुम् कः' इति । यानि लोके त्रिपुरदहनकालकूटकबल-नादीनि, तानि निरतिशयानि ज्येष्ठान्यनन्यसुकराणि श्रीकण्ठमूर्त्यादिभिः

---

स्यानैक्यमेव विद्यैक्यं दर्शयतीति सूत्राऽर्थः । श्रीभाष्यकृतस्तु—इद मधिकरणं सम्बन्धाऽधिकरणशेषत्वेन योजयन्ति । तेन अन्तरादित्यविद्या स्वपक्षस्य प्रतिपक्षैवेति प्रकटितमेवेति विशदम् ॥

इति मण्डलविद्याऽधिकरणम्

---

अथ सम्भृत्यधिकरणम् १३

विद्यैक्यभेदावनपेक्ष्य स्वतन्त्रोपसंहाराऽनुपसंहारनिरूपणप्रसङ्गा दिद मधिकरणान्तरम् ॥

वेदान्तेष्वक्रियाशेषस्य ब्रह्मविभूतिगुणवर्णनस्य तदुपासनैकफलत्वा दनारभ्य तदाम्नान स्याऽपि तत्तत्प्रकरणश्रुतोपासनार्थत्वं सम्भवति तत्र तत्रोपासनान्तरविधिकल्पनागौरवाऽ योगाच्च तत्तत्प्रकरणश्रुतोपासनासु । सम्भृत्यादे रुपसंहारे कर्तव्ये किं सर्वासूपासना सूपसंहारः,

सम्भृतानि परंब्रह्म आततान सम्पादितवत् , ज्येष्ठं हरिहरहिरण्य- गर्भादिभ्यो,प्युत्कृष्टं ब्रह्मेति। अग्रे तेषामपि सृष्टेःप्रा ग्दिवं परमाकाशपद मातताम व्याप्याध्यास्तेति। तेषां महतां वीर्याणां सम्भृति र्द्युव्याप्तिश्च सर्वासु परविद्यासूपसंहार्या न वा ॥

इति संशये ब्रह्मगुणत्वाविशेषा दनारभ्याधीतत्वाच्च सर्वासु परविद्या सूपसंहार्या ॥

इति प्राप्तेऽभिधीयते — न सर्वासूपसंहार्या व्याप्तिः। सामर्थ्या दल्पस्थानव्यतिरिक्तेषूपसंहार्या। 'देवा ह वै स्वर्गम् लोकमगमं स्ते देवा रुद्रमपृच्छन् को भवानिति' इति निरतिशयसुखास्पदतया स्वर्गशब्द- वाच्यं ब्रह्मादिपदेभ्योऽपि महत्तरं महास्थानं हि श्रूयते। ततः स्वल्प- स्थानव्यतिरिक्तेषु वैश्वानराद्युपासनेषु द्युव्याप्ति रुपसंहार्येति। तत्सहचारा न्महावीर्यसम्भृतिरपि तत्रैवोपसंहार्या ॥

इति सम्भृत्यऽधिकरणम

---

उत कासुचिदेव ? इति संशये विशेषाऽभावा त्सर्वा सूपसंहारः। इति पूर्वपक्षः। वस्तु सामर्थ्यरूपा द्विशेषा दल्पस्थानव्यतिरिक्तासु वैश्वानरादिविद्या सूपसंहार्या। इति सिद्धान्तः। सम्भृतिद्युव्याप्तीतिसमाहारद्वन्द्वैकवद्भावः। सम्यग्भरण प्रकाशव्याप्ती न सर्वोपास्ये। किन्तु देवाद्युपास्य एव। कुतः ? अतएव अधिकारिगोग्यतायां विशेषसद्भावत एवेति सूत्रार्थः।

श्रीभाष्यकृद्भिरप्यत्राऽधिकरणे विषयवाक्य मेतद्व्याख्योदाहृतमेवाऽत्रशा त्पर्गिगृह्य विषयवाक्यार्थविवरणे सिद्धान्तनिरूपणेच स्वाभिमतदेवतापरत्वम् प्रतिपादयितु मनीशत्वं प्रकटित मिति विदितम् ॥

इति सम्भृत्यधिकरणम्

---

अथ पुरुषविद्याऽधिकरणम् १४

## पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ ३-३-२४ ॥

छान्दोग्यतैत्तिरीयकयोः पुरुषविद्याऽऽम्नाता। 'पुरुषो वाव यज्ञ स्तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातःसवनम्' इत्यादिरेकत्र। 'तस्यैवम् विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीर मिध्म मुरो वेदिः' इत्यादिरन्यत्र। सोभयत्राभिन्ना भिन्ना वेति संशयः॥

उभयत्र पुरुषविद्येति नामाभेदा यज्ञावयवकल्पनासाम्याच्च अभिन्ना॥

इति प्राप्तेऽभिधीयते — तैत्तिरीये समाम्नातानां यजमानपत्न्यादीनां यज्ञावयवानां सवनत्रयादीनाञ्च छान्दोग्येऽनाम्नानात, तत्रान्यथैव सवनत्रयादिकल्पनाच्च भिन्नैवोभयत्र पुरुषविद्या। तैत्तिरीयके हि 'यत् सायम् प्रातर्मध्यन्दिनञ्च तानि सवनानि' इति सवनत्रयकल्पनम्। छान्दोग्ये पुरुषायुषं त्रेधा विभज्य सवनत्रयकल्पनम्। तैत्तिरीये फलाश्रवणात्

---

अथ पुरुषविद्याऽधिकरणम् १४

देशभेदसम्बन्धिविद्यासु गुणानुपसंहारनिरूपणप्रसङ्गेन चतुर्विंशतिवर्षादिकालभेदसम्बन्धिविद्यायां गुणानुपसंहारं दर्शयितु मधिकरणाऽन्तरम्॥

छान्दोग्ये—पुरुषस्य यज्ञत्वकल्पना मुपक्रम्य यज्ञावयवा स्सम्पादिताः। षोडशोत्तरवर्षशतमिते पुरुषायुषे चतुर्विंशतिवर्षाणि प्रातस्सवनं चतुश्चत्वारिंशद्वर्षाणि माध्यन्दिनं सवन मष्टाचत्वारिंशद्वर्षाणि तृतीयसवनम्। यदशिशिषति पिपासति नरमते ता दीक्षाः। यदश्नाति पिबति रमते ता उपसदः। यद्धसति भक्षयति मिथुनीभवति तानि स्तुतशस्त्राणि। य त्तपो दान मार्जव महिंसा सत्यवचनं ता दक्षिणाः। यन्मरणं तदवभृथ इति। 'प्र ह षोडशं वर्षशतं जीवती' त्यस्या आयु प्राप्तिः पुरुषविद्यायाः फल मुक्तम्। इमां विद्या माङ्गिरसोऽघोरनामा ऋषिः कृष्णाय देवकीपुत्राय योपदिदेश। स इमां विद्यां लब्ध्वा विद्यान्तरवितृष्णएवैतद्विद्यानिष्ठो बभूवेति विद्याप्रशंसाच कृता॥

'ब्रह्मणे त्वा महस ओमित्यात्मानम् युञ्जीत' इति ब्रह्मविद्यामभिधाय 'ब्रह्मणो महिमानमाप्नोति' इति तत्फलञ्चाभिधाय 'तस्यैवम् विदुषः' इत्यादिनाऽऽम्नाता पुरुषविद्या प्रस्तुतब्रह्मविद्याङ्गमिति तत्फलं ब्रह्मप्राप्तिरेव। छान्दोग्ये 'प्र ह षोडशम् वर्षशतम् जीवति' इति फलं श्रुतम्। ततः फलभेदा दवयवभेदाच्च न विद्यैक्यमिति ॥

इति पुरुषविद्याऽधिकरणम्

---

अथ वेधाद्यधिकरणम् १५

## वेधाद्यर्थभेदात् ॥ ३-३-२५ ॥

तैत्तिरीयाणामुपनिषदुपक्रमे श्रुतौ 'शम् नो मित्रः शम् वरुणः' 'सह नाववतु' इति मन्त्रौ विद्याङ्गभूतौ न वा ॥

तैत्तिरीयकेतु – 'स्वात्मा यजमानः श्रद्धा पत्नी शरीर मिध्म मुरो वेदि र्लोमानि बर्हि' रित्यादिना 'यन्मरणं तदवभृथ' इत्यन्तेन यज्ञावयवा निरूपिताः। एव मुभय त्राम्नाता पुरुषविद्या भिन्ना अभिन्ना वेति संशयः। उभयत्र पुरुषविद्येति नामैक्यात् यज्ञावयवकल्पनासाम्याच्च अभिन्नेति पूर्वपक्षः ॥

सिद्धान्तस्तु– तैत्तिरीये श्रुतानां यजमानपत्न्यादीनां यज्ञावयवानां सवनत्रयादीनाञ्च छान्दोग्ये अश्रवणा त्तत्रसवनत्रयादिकल्पनाया अन्यविधत्वाच्च उभयत्र पुरुषविद्या भिन्नैवेति ॥

इति पुरुषविद्याऽधिकरणम्

---

अथ वेधाद्यधिकरणम् १५

अथ तैत्तिरीयके ब्रह्मविद्याप्रकरणपाठात् 'तस्यैवंविदुषो यजमानस्ये'ति विद्यामभिव्याहाररूपा द्वाक्याच्च पुरुषविद्याया इव 'शम् नो मित्र'इत्यादिमन्त्रयो र्ब्रह्मविद्यासन्निधिपाठा द्विद्याविषयब्रह्मप्रकाशनरूपा ल्लिङ्गाच्च ब्रह्मविद्याङ्गत्वं स्यादिति शङ्कानिराकरणार्थ मधिकरणाऽन्तरम् ॥

इति संशये विद्यासन्निधिवशाद्विद्याङ्गभूताविति प्राप्ते उच्यते— यथा आथर्वणिकानामुपनिषदारम्भे पठितः 'शुक्रं प्रविध्य हृदयम् प्रविध्य' इत्यादिमन्त्रो हृदयवेधादिप्रकाशनसामर्थ्यरूपाल्लिङ्गा दभिचारशेषः। यथा वा ऐतरेयिणां वाजसनेयिनाञ्चोपनिषदारम्भे पठितं महाव्रतं प्रवर्ग्यरूपञ्च कर्म श्रुत्यादिविनियोगात् क्रतुशेषः। तथेमावपि मन्त्रौ 'ऋतम् वदिष्यामि...तेजस्विनावधीतमस्तु' इत्यादिलिङ्गा दध्ययनशेषभूतावेव न विद्याङ्गभूतौ, प्रयोजनभेदात्, श्रुतिलिङ्गवाक्येभ्यः सन्निधेर्दुर्बलत्वात्।

इति वेधाद्यधिकरणम्

---

अथ मत्र पूर्वपक्षसङ्ग्रहः 'वदिष्यामि—अधीतमस्त्वि त्यध्ययनप्रकाशनसामर्थ्यरूपा ल्लिङ्गा दध्ययनइव विद्यासन्निधिपाठरूपात् स्थानप्रमाणा दमे विद्यास्यमानासु विद्यास्वपि विनियोगस्स्यात्। क्वचि द्विनियुक्तानां म्मन्त्राणा मन्यत्राऽपि विनियोगस्य बहुल मुपलम्भेन विरोधाऽभावात्। अस्ति च सन्निध्यनुगुणं लिङ्गमपि विद्यासम्बन्धिब्रह्मप्रकाशन-सामर्थ्यरूपम्। तस्मा दुदाहृतमन्त्रयोः विद्यास्वपि विनियोग इति। सिद्धान्तसङ्ग्रहस्तु साक्षा दध्ययनप्रकाशनसामर्थ्यरूपा ल्लिङ्गा द्विनियोजकश्रुतिमात्रकल्पनया शीघ्र मध्ययन-विनियोगे सति तत एव मन्त्रयो र्नैराकाङ्क्ष्या त्सन्निधानेन स्वस्वप्रकरणाम्नाताङ्ग-निराकाङ्क्षाणामपि विद्याना माकाङ्क्षा मुत्पाद्य तया मन्त्रयो र्विद्याभिरेकवाक्यतां परिकल्प्यैकवाक्यतानिर्वाहाय मन्त्रयो र्ब्रह्मप्रकाशनद्वारा तद्विद्याप्रकाशनसामर्थ्यमपि कल्पयित्वा तद्विनियोजकश्रुतिकल्पनापूर्वकं विद्यासु विनियोगः कार्य इत्येवं विलम्बित-प्रतीतिकेन विनियोगान्तरं न कर्तव्यम्। आकाङ्क्षामूलत्वा देवंविधकल्पनायाः। मन्त्रयो र्विद्यासन्निध्याम्नानन्तु विद्याभागवदरण्येऽनुवाक्यत्वलाभार्थं भविष्यतीति॥

सूत्रार्थस्तु— वेधाद्यर्थभेदात्—शुक्रं प्रविध्य हृदयं प्रविध्य इत्यादिमन्त्रो हृदयवेधादि-प्रकाशनसामर्थ्यरूपा ल्लिङ्गा द्यथा अभिचार स्तथा इमौ मन्त्रावपि "ऋतम् वदिष्यामि" "अधीत मस्तु" इत्यादिलिङ्गा दध्ययनशेषभूतावेव। प्रयोजनभेदा च्छ्रुतिलिङ्गवाक्येभ्य स्सन्निधे र्दुर्बलत्वा च्चेति॥

इति वेधाद्यधिकरणम्

अथ हानोपायनाऽधिकरणम् १८

# हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम्

॥ ३—३—२६ ॥

विदुषो ब्रह्म प्राप्नुवतः पुण्यपापयोर्विमोचन मेकस्यां शाखाया माम्नातम्। विमुक्तयोः पुण्यस्य प्रवेशस्थानं सुहृदः, पापस्य प्रवेशस्थानं शत्रव इति एकस्यां शाखाया माम्नातम् । अन्यस्यां विमोचनं प्रवेशस्थान ञ्चेत्युभयमाम्नातम् । सर्वं चिन्तनार्थमेव । इह विमोचनं प्रवेशस्थान ञ्चेत्यनयोः समुच्चयेन सर्वत्र चिन्तनम् ? उत विकल्पेनेति संशयः ॥

किं तावत् प्राप्तम् ? 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्याम् द्विषन्तः पापकृत्याम्' इति शाठ्यायनके श्रूयते। ताण्डिशाखायाम् 'अश्व इव रोमाणि विधूय पापम् चन्द्र इव राहोर्मुखात् प्रमुच्य' इतिश्रूयते 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमम् साम्यमुपैति' इति चाथर्वणे । अत्र विदुषः पापपरित्यागप्रतिपादकश्रुतौ परित्यक्तयोः पुण्यपापयोः प्रवेशस्थानं नोपसंहार्यम्, परित्यागश्रुता वश्रुतत्वात् ॥

अथ हानोपायनाऽधिकरणम्

ताण्डिशाखाया माथर्वणिकशाखायाञ्च पुण्यपापयोः केवलं हानं श्रुतम् । कौषीतकिशाखाया मुभयमपि श्रुतम्। सर्वमिदं मनुचिन्तनार्थं न केवलं विद्यामहिमप्रख्यापनार्थम् । विद्याप्रकरणपाठस्य स्थानगुणादिपाठवदनुचिन्तनार्थत्वस्यैवोचितत्वात्। किञ्चाऽश्व इव रोमाणीति ताण्डिशाखाया मन्ते ब्रह्मप्राप्त्या सह हानस्याऽनुचिन्तनीयत्व मुच्यते । तत्समानार्थतया कौषीतकिशाखायामपि हानस्याऽनुचिन्तनीयत्वसिद्धौ तत्साहचर्या त्सिध्यति । एवं हानोपायनयो रनुचिन्तनीयत्वसिद्धौ किन्तयो रेकैक मुभयञ्च विकल्पेनाऽनुचिन्तनीय मुतोभयमपि सर्वत्रोपसंहरणीय मित्युपायनस्य हानंप्रत्यशेषत्वशेषत्वाभ्यां संशये पूर्वपक्षः ॥

इति प्राप्ते ब्रूमः— हानिर्विमोचनं उपायनं प्रवेशः । केवलहानावाम्नातायां केवलोपायने चाम्नाते इतरेतरसमुच्चय एव न्याय्यो न विकल्पः । उपायनशब्दस्य हानिवाक्यशेषत्वात् तच्छेषत्वम्, त्यक्तयोः प्रवेशस्थानवाचित्वेन तदपेक्षत्वात् । प्रदेशान्तराम्नातवाक्यस्य प्रदेशान्तरवाक्यं कथं शेषभूत मितिचेत् – यथा 'वानस्पत्याः कुशाः' इत्येतद्वाक्यशेषभूतं 'औदुम्बर्यः कुशाः' इत्येतत् तद्विशेषकं प्रदेशान्तरस्थम् । यथा 'देवासुराणां छन्दोभिः' इत्येतच्छेषभूतम् 'देवच्छन्दांसि पूर्वम्' इति प्रदेशान्तरस्थम् । यथा 'षोडशिनः स्तोत्रमुपाकरोति' इत्येतच्छेषभूत 'समयाविषिते सूर्ये षोडशिनः स्तोत्रम्' इति । यथा 'ऋत्विज उपगायन्ति' इत्येतच्छेषभूतम् 'नाध्वर्युरुपगायेत्' इति पर्युदासवाक्यम् । एवमुपायनवाक्यस्य हानिवाक्यशेषतया सम्भवन्त्यां गतौ न विकल्पो न्याय्यः । तदुक्तं प्रथमतन्त्रे 'अपि तु वाक्यशेषः स्यादन्याय्यत्वा-

---

यथा विद्यासन्निधौ श्रुतं वेदमन्त्रादिकं विद्यासु नोपसंहार्यम् । तथा क्वचिच्छाखायां हानसन्निधौ श्रुत मुपायन मन्यत्र केवलहानश्रुतौ नोपसंहार्यम् । एवं केवलोपायनश्रुतौ हानमपि नोपसंहार्यम् । उपसंहारप्रयोजकस्य विध्यैक्यस्याऽभावात् । अनुचिन्तनन्तु एकैकस्योभयस्यच विकल्पेनैव कर्तव्यम् । न समुच्चयेन । समुच्चयस्य सर्वत्र कौषीतकिवाक्येनैव प्राप्तिसम्भवे शाखान्तरेष्वेकैकस्योभयस्य च श्रावण मुदितानुदितहोमश्रावणव द्विकल्पार्थ मित्येवन्याय्यमिति ।

सिद्धान्तस्तु— एकैकश्रुतावप्यन्यद प्युपसंहार्यम् । शाट्यायनिशाखायां दायसङ्क्रमणदृष्टान्तेन ह्येवमवगम्यते । यथा मुच्यमानस्य धने तम्प्रति यथेष्टविनियोगार्हता हीयते पुत्रान्प्रति च सा सम्पद्यते । एवं तस्य पुण्यपापयों स्तम्प्रति फलजननार्हता हीयते । प्रियाप्रियान्प्रति च सम्पद्यत इति श्रुतिषु हानोपायनशब्दाभ्यां विवक्षित मिति तत्र हानं ब्रह्मप्रेप्सो मुच्यमानस्य फलरूपत्वा द्यथोपासनं फल मिति तत्क्रतुन्यायत स्सर्वासु विद्या स्वनुचिन्तनीयत योपसंहर्तव्यम् । एवञ्च तस्य फलस्योपपादकतया तच्छेषत्वेन फलभूत मुपायनमपि सर्वत्रोपसंहार्यम् । पुण्यपापयोः फलजननार्हत्व स्याऽन्यविषयसङ्क्रान्तौहि हान मुपपन्नं भवति । सङ्कीर्तनप्रायश्चित्तादिभिरनष्टतया विद्यमानयो स्तयोः फलजनकत्वाऽवश्यम्भावा दिति ।

द्विकल्पस्य ' इति स्तुत्यर्थं प्रकर्षार्थं वेति। नन्वर्थवादः कथं देशान्तरस्थार्थवादसापेक्ष इति चेत — न, सामोपास्तिस्तावकत्वेन श्रुतस्य 'एकविंशो वा इतोऽसावादित्यः' इत्यर्थवादस्यैकविंशत्वनिर्णयाय तैत्तिरीयकगतसत्रप्रकरणस्थार्थवादापेक्षत्वदर्शनात् 'द्वादशमासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः, इति हि तत्र सङ्ख्यानिर्वाह उक्तः। ततोऽर्थवादत्वेऽप्युपायनमुपसंहार्यम्। हानोपायनयो रेकत्राप्यवगतिरस्ति कौषीतकिश्रुतौ 'तत् सुकृतदुष्कृते विधुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्' इति। अतस्तयोः समुच्चयः।

इति हानोपायनाऽधिकरणम्

---

सूत्रार्थस्तु— हानौत्विति तुशब्दः पक्षव्यावृत्त्यर्थः। हानाविन्त्युपलक्षणम्। केवलविमोचने केवले चोपायने श्रूयमाणं तयो रितरेतरसमुच्चयो ग्राह्यः। कुतः? उपायनशब्दशेषत्वात्। उपायनवाक्यस्य हानिवाक्यशेषत्वा दित्यर्थः। त्यत्रायं। पुण्यपापयोः प्रवेशस्यानवाधित्वा दुपायनवाक्यस्य हानिवाक्यशेषत्व मवगम्यते। प्रदेशान्तराम्नातवाक्यस्य प्रदेशान्तराम्नातवाक्यशेषत्वे दृष्टान्ता नाह—कुशाच्छन्देत्यादि। कुशाः-उद्गातॄणां प्रस्तावकर्मणि विनियुक्ता उदुम्बरदारुशलाकाः। छन्दांसि - देवप्रकाशका असुरप्रकाशकाश्च कर्मविशेषे क्रमेण विनियोक्तव्या मन्त्राः। स्तुतिस्तवघस्तोत्राऽनन्तरं सूर्यास्तमयसन्निहितकाले समारम्भणीयं स्तोत्रम्। उपगान मुद्गातृषु स्तुवत्सु अध्वर्युव्यतिरिक्तैः कैश्चनर्त्विग्भिः कर्तव्यं हो इति शब्दोच्चारणम्। तदुक्तं पूर्वस्मिन्काण्डे "अपितु वाक्यशेषस्त्वा दन्याय्यत्वा द्विकल्पस्येत्यादिना इति।

* इद मधिकरणं शुद्धाद्वैतवादिनाम्प्रतिपक्षभूतम्। तथाहि — तैर्जिज्ञासाऽधिकरणे अथशब्दस्य धर्मविचारानन्तरार्थत्व मनङ्गीकृत्य धर्मजिज्ञासायाः प्रागपिब्रह्मजिज्ञासोपपत्ते रिति तत्र हेतु र्निगदितः। अत्राऽधिकरणे तदुक्तमिति पूर्वकाण्डोक्तस्याऽर्थस्य दृष्टान्ततया ग्रहणेन धर्मजिज्ञासायाःप्राक् पूर्वकाण्डोक्ताऽर्थाऽनवबोधेन प्रकृताऽधिकरणज्ञानस्याऽनुपपन्नतया तदुक्तस्य हेतो रसिद्धेरिति दिक्॥

इति हानोपायनाऽधिकरणम्

अथ साम्परायाऽधिकरणम् १७

## साम्पराये तर्तव्याभावात् तथा ह्यन्ये ॥ ३–३–२७ ॥

पूर्वोक्तं पुण्यपापविमोचनं देहवियोगकाल एव चिन्तनीयं उत मार्गे वा ॥

इति संदिह्य पूर्वपक्षं प्रवर्तयति । तथा हि—'अश्व इव रोमाणि विधूय पापम्—धूत्वा शरीरम्' इति कुत्रचिद्देहवियोगकाल एव श्रुता सुकृतदुष्कृतहानिः । कुत्रचित् 'स आगच्छति विरजाम् नदीम् ताम् मनसाऽत्येति तत् सुकृतदुष्कृते विधूनुते' इत्यध्वनि श्रुता । एवमुभयश्रुतिसद्भावेऽपि साम्पराये देहवियोगकाल एव चिन्तनीया, तदूर्ध्वं ब्रह्मप्राप्तिव्यतिरेकेण प्राप्तव्यस्य कर्मसाध्यस्य सुखदुःखभोगस्याभावात् । तथा ह्यधीयतेऽन्ये 'तस्य तावदेव चिरम् यावन्नविमोक्ष्ये अथ सम्पत्स्ये' इति देहवियोगादूर्ध्वं ब्रह्म प्राप्तमेव ॥

## छन्दत उभयाविरोधात् ॥ ३–३–२८ ॥

देहवियोगकाले पुण्यपापविमोचनश्रुते स्तदूर्ध्वं ब्रह्मप्राप्तिश्रुतेः उभयत्र श्रुत्यविरोधाद्धेतोः 'तत् सुकृतदुष्कृते विधूनुते' इति श्रुतिखण्डश्छन्दतो

---

अथ साम्परायाऽधिकरणम् १७

प्रासङ्गिकीं सङ्गतिं सूचयितुं विशेषयति—पूर्वोक्तमिति । देहवियोगानन्तरं कर्मसाध्यफलाऽभावा द्विविधश्रुतिदर्शनाच्च संशयः । प्राप्तव्यस्येत्यनेन तर्तव्यपदं व्याख्यातम् । तरतिरिह प्राप्त्यर्थः ॥

नन्वेवंसति तत्सुकृतेत्यादिश्रुतेः कागतिरित्याशङ्कानिवारणार्थं सूत्रम् ॥

पापं विधूय धूत्वा शरीरमिति "यावन्नविमोक्ष्ये" "अथ सम्पत्स्ये" इति च श्रुतिद्वयस्याऽविरोधमपेक्ष्य तत्सुकृतेत्यत्र तत्पदं सन्निहितस्य विरजानद्यतिक्रमणस्य हेतुत्वं

नेतव्यः । 'एतम् देवयानम पन्थानमापद्य' इति वाक्यखण्डात् प्रागुपनेतव्यः ॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३–३–२९ ॥

देहवियोगकाले सर्वकर्मक्षयेऽपि गतिविधिरुपपन्न एव ब्रह्मोपासकानाम्, तत्र तत्र विहाररूपार्थोपलब्धेः । 'स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति' इति दृश्यते । लोकवत्, यथा लोके राजाश्रितानां पुरुषाणामितरपुरुषसाधारणसर्वार्थसिद्धिः । अतो मार्गश्रुतिरपि न बाध्यते, देहवियोगकाले सकलकर्मक्षयेऽपि विद्यामाहात्म्याल्लिङ्गशरीरावस्थानेन मार्गगतिः, तत्तद्देशविहारचन्द्रसंवादादिसर्वार्थसिद्धिसम्भवादिति ॥

एवं प्राप्ते सिद्धान्त उच्यते—

---

नब्रवीति । किन्तु पर्यङ्कविद्याप्रकरणाद्विद्यासामर्थ्यादेव पुण्यपापविधूननस्य श्रुत्यन्तरेषु प्रसिद्धत्वाच्च प्रकृताया विद्यायाः कारणत्वं ब्रवीतीत्यङ्गीकर्तव्यम् । एवञ्च— सर्वनामश्रुतिप्राप्तहेतुहेतुमद्भावविरोधाभावात्सुकृतेत्यादिवाक्यं यथेष्टं योजयितुं शक्यमिति देवयानपथप्राप्तिवचनात्प्रागेवोचितस्थले तद्वचनं योजनीयमिति भावः ॥

ननु देहवियोगकाल एव सर्वकर्मक्षये कर्ममूलसूक्ष्मशरीराऽनुवृत्त्यसम्भवादर्चिरादिगतिविधिरनुपपन्नः । जीवस्याऽणुत्वेन स्वतो गतिमात्रसम्भवेऽपि शरीरेन्द्रियराहित्ये चन्द्रसंवादाद्यसम्भवादित्याशङ्कानिराकरणार्थं सूत्रम् ॥

मार्गे यथा चन्द्रसंवाद शरीरेन्द्रियसाध्य स्तथा ब्रह्मप्राप्त्यनन्तरमपि शरीरेन्द्रियसाध्य एव विहारादाय आम्नायन्ते । ते ब्रह्मविद्यासामर्थ्यलब्धैरप्राकृतैः शरीरेन्द्रियैरुपपादनीयाः । एवं सर्वकर्मक्षयेऽपि ब्रह्मविद्यासामर्थ्यादेव मार्गगतिपर्यन्तं सूक्ष्मशरीरस्याऽनुवृत्त्या चन्द्रसंवादादिरुपपन्नः । लोके राजाश्रितपुरुषाणामपि अभिमतार्थसिद्धिसम्पादक-सकलसाधनसम्पत्तिर्दृश्यते । किमुत परब्रह्मैव शरणम् प्राप्तानामिति भावः ॥

सिद्धान्तार्थप्रतिपादनपरं सूत्रम् —

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ ३-३-३० ॥

देहवियोगकाले विरजानद्यतिक्रमणकाले च इत्युभयथा कर्मक्षये सत्येव देवयानगतेः प्रयोजनवत्त्वम् । अन्यथा देहवियोगकाल एव सर्वकर्मक्षये तदनन्तरमेवासौ मुक्त इति देवयानगतेर्निष्प्रयोजनत्वात् देवयानगतिश्रवणस्य 'परम् ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति देवयानेन ब्रह्मप्राप्त्यनन्तरमेव धीविकासादिरूपस्वरूपाविर्भावश्रवणस्य च विरोधः स्यात् । एवञ्च यद्यपि विद्यासामर्थ्याद् देवयानेन गति स्तत्तद्देश-विहारचन्द्रसंवादादिकमग्रिमविरजादिवदुपपद्यते । तथाऽपि यावद्ब्रह्मप्राप्ति

---

धीसङ्कोचाऽनुवृत्त्यर्थं तन्मूलकर्मलेशाऽनुवृत्ति रवश्यमभ्युपगन्तव्येति विद्यासामर्थ्या द्भवदपि कर्मणो हानं कस्यचि द्देहवियोगकाले कस्यचि द्विरजानद्यतिक्रमणाऽनन्तरमिति व्यवस्थापनीयम् । अतस्तत्सुकृतेत्यादिश्रुतिरपि न पाठक्रमा त्प्रच्यावनीया । न हि देहवियोग-कालएव सर्वकर्महानमिति पूर्वपक्षिणाऽपि वक्तुं शक्यम् । केषाञ्चित्कर्मणां विद्योदयेसत्येव हानस्य । तदधिगम उत्तरपूर्वाघयो रित्यधिकरणे वक्ष्यमाणत्वादिति भाव । प्राकृतप्रपञ्च-सीमावधि रिति । प्राकृतग्रहण मुपलक्षणम् । प्रकृतिमायाबिन्दूपादानकस्य मलिनमिश्रा-शुद्धात्मकस्य सांसारिकभोगस्थानविशेषभूतलोकसङ्घातात्मकस्य प्रपञ्चस्य सीमाया अवधि स्समाप्तिभूमिः । ततः परं परमानन्दमयो मुक्तप्राप्यः परमशिवलोकः ॥

ननु परमशिवलोकेऽपि किञ्चिद्दूरंगत्वा विरजां प्राप्येति श्रुतिपर्यालोचनया प्रतीयते । कौषीतकिना मुपनिषदि हि पर्यङ्कविद्याम्नाता । तत्रैवं श्रूयते । "तं पञ्चशतान्यप्सरसः प्रतियन्ति, शतं मालाहस्ता श्शतमाञ्जनहस्ता श्शतं वासोहस्ता श्शतं चूर्णहस्ता स्तं ब्रह्मालङ्कारेणाऽलङ्कुर्वन्ति स ब्रह्माऽलङ्कारेणालङ्कृतो ब्रह्मविद्वान् ब्रह्माऽभिप्रयाति । स आगच्छ-त्यारं ह्रदन्तर्मनसाऽत्येति स आगच्छति मुहूर्तान् य्येष्टिहा स्तस्मा दपद्रवन्ति । स आगच्छति विरजानदीं तां मनसैवाऽत्येती"ति । परब्रह्मणा प्रेषिताभि रप्सरोभि र्ब्रह्मालङ्कारै रलङ्कृतस्यैव ब्रह्मविदो ह्रदविशेषस्य यष्टिर्मुहूर्तानाञ्च प्राप्तिपूर्वकमेव विरजानदीप्राप्ति र्वर्ण्यते । कथम्प्राकृतप्रपञ्चसीमावधिरित्युक्तम् ? उच्यते ॥

धीसङ्कोचरूपसंसारानुवृत्तिः विद्यासामर्थ्यान्नोपपद्यत इति तन्मूलभूतकर्मलेशानुवृत्तिरवश्यमेष्टव्या । न च परमेश्वरसङ्कल्पविशेषादेव तदनुवृत्तिः स्यादिति वाच्यम्, तस्यैवास्माभिः कर्म [मू.उ] तयोच्यमानत्वात्, न ह्यस्मन्मते विहितनिषिद्धाचरणप्रयुक्तपरमेश्वरसङ्कल्पव्यतिरेकेण पुण्यपापे स्तः॥

ननु ब्रह्मप्राप्त्यनन्तरधीविकासादिस्वरूपाविर्भावश्चेत् तावत्पर्यन्तं धीसङ्कोचहेतुकर्मानुवृत्त्या भाव्यम् । कथं विरजानद्यतिक्रमणानन्तरमेव कर्मक्षयः ॥

"हृदयमिहा स्सीमासन्धिस्थिता नतु परमानन्दमयशिवलोकान्तर्गता: । विरजानद्यतिक्रमणाऽनन्तरभाविकर्मलेशनिवृत्तेः प्राक्तत्प्रवेशाऽसम्भवात् । अप्सरसां नियोगार्थे परब्रह्मवचने अभिवावत मम यशसा विरजां वा अयं नदीं प्राप मया जरिष्यती"ति विरजानदीप्राप्तिगीतेनेन तस्याः स्सीमासन्धित्वाऽवगमाच्चेति भाष्याऽभिप्रायः । अत्र नया जरिष्यतीति वचनानुसारेण विजरेत्येवनामेति प्रतीयते । उपनिषद्ग्रन्थेषु साम्प्रदायिकतदध्येतृषु च विजरा नीत्येव पाठो दृश्यते । विरजेति लोकैर्व्यवह्रियमाणनाम प्रसिद्धम् । विष्णुपदा दूर्ध्व मिति । विष्णुलोकः परमशिवलोका दव्यवहित इति भावः । ननु कर्मयोगेन शिवमुपासीनानां प्राप्यादपरशिवलोका दव्यवहिताऽवरलोको विष्णुलोकः । ननु मुक्तप्राप्या त्परमशिवलोकात् ॥

शिवधर्मोत्तरे— "ज्ञेयं विष्णुपदा दूर्ध्वं दिव्यं शिवपदं महत् । भोगसंस्थान मतुलं कर्मयोगरतात्मनाम् । अप्रमेयगुणैर्दिव्यै र्विमानै स्सार्वकामिकैः । असङ्ख्यै स्तत्पुरं व्याप्तं सर्वप्राण्युपकारकैः । सहस्रभूमिविस्तीर्णै स्सूर्यकोटिसमप्रभैः । रुद्रलोक इति प्रोक्त मशेषगुणसंयुतम् । सर्वेषां शिवभक्तानां तत्पुरं परिकीर्तितम् । रुद्रक्षेत्रमृतानाञ्च जङ्गमस्थावरात्मना" मित्यादिवचनै रपरशिवलोकं वर्णयित्वा "इत्येत दपरंप्रोक्तम् श्रीमच्छिवपुरम् महत् । देहिनाम् कर्मनिष्ठानाम् पुनरावर्तनं स्मृत" मिति तद्गुणं समाप्य "ऊर्ध्वं शिवपुरा ज्ज्ञेयं स्थानत्रय मनुत्तमम् । नित्यं परमशुद्धञ्च स्कन्दोमाशङ्करात्मक" मिति तदनन्तरं स्कन्दलोकादुमालोकाच्च परस्य परमशिवलोकस्य वर्णन मुपक्रम्य " ये सम्प्राप्ताः परंस्थानम् ध्यानयोगरता नराः । न तेषां पुनरावृत्ति र्घोरे संसारमण्डले ।" इत्यादिना तं प्राप्तानामेवा नाऽवृत्तिप्रतिपादनात् ॥

उच्यते— प्राकृतप्रपञ्चसीमावध्यतिक्रमणमेव परमाकाशरूपपरमशिवपदप्राप्तिरिति सैव 'परम् ज्योतिरुपसम्पद्य' इत्यनेन ब्रह्मप्राप्ति र्विवक्षिता । विष्णुपदसम्बन्धिनो विरजानदी प्राकृतप्रपञ्चसीमावधिः । तदनुप्रवेशतः प्रक्षीणसर्वकर्मलेपायोगिनो विष्णुपदादूर्ध्वमप्राकृतशिवपदं परमानन्दमयमनुविशन्ति । तथा हि श्रूयते 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम् पदम्' इति । अतो न विरोधः ॥

इति साम्परायाऽधिकरणम्

---

तत्रोक्त उमालोकएव वायुसंहितायां मुन्मनालोक इत्युक्तः । "तदूर्ध्वं मुन्मनालोका त्सोमलोक मलौकिकम् । सोम स्सगुणमया यत्र नित्यं निवसतीश्वरः" । इति । उच्यते - उमालोकसन्निधौ शिवधर्मोत्तरादिप्रतिपादितोऽस्ति गोमातृलोकः । स ताव दुमालोकान्तर्गतएव । तत्रैवोमाया अंशभूतस्य परनारायणस्य स्थानम् । तदेतन्मन्त्रवर्णेनावगम्यते । "ता वाम् वास्तू न्युश्मसिगमध्यैगावो यत्र भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमम् पद मवभाति भूरेरि" ति ॥

अस्याऽर्थः हेविष्णो ते-तानि स्थानानि । तच्छब्दा द्बहुवचनस्य सुपांसुलुगित्यादिना शआदेशः । ते-तव । धामानि—स्थानानि । गमध्यै - गन्तुमुश्मसि—इच्छामः । गमेर्धातो स्तुमर्थे सेसेत्यादिसूत्रेण तुमुन्प्रत्ययार्थे अध्य इति प्रत्ययः । उश्मसीति- वशकान्ताविति धातो रुत्तमपुरुषबहुवचने "इदन्तोमसी"रिति सूत्रेणान्तिमइकारादेशः । सांहितो दीर्घः । तान्येवधामानि विशिष्यन्ते । यत्र-एषु स्थानेषु । अयासः- अनपायिन्यः । यातेरसुन्प्रत्यये नञ्समासः । भूरिशृङ्गा गावः । नन्द्यादयो गोमातर स्सन्ति । अत्राह—अस्मि न्नेव स्थाने अहेतिनिपातएवकारार्थः । तत्प्रसिद्धम् । उरुगायस्य—उरुभि र्महद्भिःगीयमानस्य । भूरे-र्महतो वृष्णः—विष्णो स्तव । परम मवस्तनविष्णुलोकापेक्षया उत्कृष्टमवभाति - अवर्येभाति । परमशिवलोकस्याधस्ताद्भातीति । तस्मादुमालोकान्तर्गतवैष्णवपरमपदाऽभिप्रायम् । विष्णुसम्बन्धीति विष्णुपदादूर्ध्वमितिच युज्यतएव ॥

* यत्तु शुद्धाद्वैतभाष्यकारैः गतेरर्थवत्त्वमित्यादिसूत्रं पृथगधिकरणीकृत्य गतेः—देवयानस्य पथः अर्थवत्त्व मुभयथा विभागेन भवितु मर्हति । क्वचित्सगुणविद्यायां देवयानमार्गोऽस्ति । क्वचिन्निर्गुणविद्यायां नास्तीत्यर्थो वर्णितः । तत्त्वसङ्गतमेवेति विदितमेव । तत्र उभयथा

अथ आधिकारिकाऽधिकरणम् १८

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३-३-३१ ॥

पूर्वत्राभिहितमुपासकानां पुण्यपापविमोचनम्, ब्रह्मप्राप्तिश्च । तदिहाधिकारिकाणामधिकारभोगमन्तरेण मुक्तिरस्ति न वेति संशयः ॥

किं तावत् प्राप्तम्? वसिष्ठादीनामधिकारिणां तत्र तत्र पुराणादिषु जन्मान्तरश्रवणात् तेषां मुक्तिर्नास्त्येव । अतस्तत्त्वविदां पाक्षिको मोक्षप्राप्तिरिति ॥

अत्रोच्यते—अधिकारिपुरुषाणां देहपातादूर्ध्वमपि फलान्तरानुभव एव आप्रारब्धाधिकारहेतुकर्मविनाशात् । एवञ्च यावदधिकारसमाप्ति स्तावात् तद्धेतुकर्मानुभवाय तत्रैव तेषामवस्थिति र्नार्चिरादिप्राप्तिः ।

---

गतेः स्वार्थक्यरूपार्थस्य सूत्रस्वरसत्वेन तै निर्गुणविद्यायां नैरर्थक्यस्य प्रतिपादितत्वेन विरुद्धत्वात् । अथ य त्परैः भूयश्चैनं विभागं चतुर्थाध्याये निपुणतर मुपपादयिष्यामि इति यदुक्तन्तदसाङ्गत्यं चतुर्थाध्याय एव भविष्यति ॥

इति साम्परायाऽधिकरणम्

---

अथ आधिकारिकाऽधिकरणम् १८

सङ्गति सूचनार्थं वृत्त मनुवदति पूर्वत्रेति । विदुषो देहवियोगकाले विद्यया सर्वकर्मक्षयः यावद्विरजानदीतरणम् । क्षीसङ्कोचादिव्यवस्थापककर्मलेशमात्रस्याऽनुवृत्ति रित्युक्तम् । तदिद मनुपपन्नम् । विदुषामपि पुनर्जन्माऽन्तरश्रावणेन विद्यया मुक्तेः सर्वकर्मक्षयस्य चानियतत्वा दित्याक्षेपिकी सङ्गति रिति भावः । विद्यया मुक्ति र्नियता नवेति संशये तदर्थसंशयो भाष्ये दर्शितः । आप्रारब्धेति । अनेकदेहारम्भकेन्यंकं कर्माऽस्ति । "श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् । चण्डालपुल्कसानाञ्च ब्रह्महा योनि मृच्छति" । इत्यादिस्मरणात् । अतो वसिष्ठादीना माधिकारिकपदप्रापकं कर्माऽनेकदेहाऽनुभाव्य मिति तेषां चरमदेहे विद्यया सर्वकर्मक्षयपूर्विका मुक्तिः । अतो नास्ति नियमभङ्ग इति भाव ॥

ज्ञानिनामपि प्रारब्धं कर्मानुभवादेव नश्यति । अतोऽधिकारिणामधिकार-निवृत्तेरनन्तरं मुक्तिरिति तत्त्वविदां न पाक्षिकी मोक्षप्राप्तिरिति ॥

इति आधिकारिकाऽधिकरणम्

अथ अनियमाऽधिकरणम् १९.

## अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥ ३—३—३२ ॥

उपकोसलाद्युपासनेष्वर्चिरादिगतिराम्नायते । सा किं तन्निष्ठानामेव, उत सर्वोपासकानामिति संशयः ॥

छान्दोग्ये पञ्चाग्निविद्यायामुपकोसलविद्याया अर्चिरादिगतिः पठिता, पाशुपतविद्यायामथर्वशिरसि सूचिता, शाण्डिल्यविद्यादिषु न पठिता । प्रकरणवशात् यासु श्रुता तास्वेव नियता नापरासु ॥

इति पूर्वपक्षे प्राप्ते ब्रूमः—यासु श्रुता तास्वेवेति न नियमः, अपि तु सर्वासूपासनासु भवति । तथा सत्येव श्रुतिस्मृतिभ्यामविरोधः ।

---

वसिष्ठादीनामाधिकारिकाणां यावदधिकारमधिकाराऽनिवृत्तिपर्यन्तम् । अवस्थितिः—प्रारब्धकर्माऽवस्थितिः । अधिकारनिवृत्त्यनन्तरं मुक्तिप्राप्तिरिति सूत्रार्थः ॥

इति आधिकारिकाऽधिकरणम्

अथ अनियमाऽधिकरणम् १९

विदुषो मुक्तिरिव अर्चिरादिगतिरपि नियतेति समर्थ्यत इति सङ्गतिः । उपकोसलविद्या पञ्चाग्निविद्या पर्यङ्कविद्यादिषु सा समाम्नाता । कासुचित्सूचिता । यथा पाशुपतविद्यायामथर्वशिरसि "अयम् पन्था विततः उत्तरेण येन देवा येन ऋषयो येन पितरः प्राप्नुवन्ति परमपदं परायणञ्चेति । शाण्डिल्यविद्यादिषु न स्पष्टा । सा सर्वासु भवति नवेति सर्वविद्यासम्बन्धप्रतिपादकवाक्यभावाऽभावाभ्यां संशये पूर्वपक्षः ॥

पञ्चाग्निविद्यायां ' ये चेमेऽरण्ये श्रद्धा तप इत्युपासते ' तेऽर्चिषमभि-सम्भवन्ति ' इत्यविशेषणश्रुतिः । स्मृतिरपि ' अग्निर्ज्योतिरहः शुक्लः ' इत्यविशेषका । ततः सर्वेषामुपासकानामर्चिरादिगतिर्नियतैव । केचिदाहुः— अनियमः , सर्वेषामुपासकानामर्चिरादिगतौ नियमाभावः , तथा सति श्रुतिस्मृतिभ्यामविरोध इति । तत्राऽपि न दोषः । निरन्वयोपासकानां तदपेक्षाऽभावादिति ॥

इति अनियमाऽधिकरणम् १९

—— * ——

अथ अक्षरध्यधिकरणम् २०

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसवत्तदुक्तम्

॥ ३–३–३३ ॥

गार्गिब्राह्मणे— ' अस्थूलमनण्वह्रस्वम ' इत्यादौ ब्रह्मबोधाय केचन निषेधाः श्रुताः । आथर्वणे च ' यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम् ' इत्यादौ श्रुताः । तेषामानन्दादिवदुपसंहारोऽस्ति न वेति संशयः ।

---

यथा प्रकरणं व्यवतिष्ठते । सर्वविद्यासम्बन्धप्रतिपादकवाक्याऽभावा दिति ॥

सिद्धान्तस्तु—यासु श्रुता तास्वेवेति न नियमः । किन्तु सर्वासूपासनासु भवति । तथासत्येव श्रुतिस्मृतिभ्या मविरोधः । "तेऽर्चिष मभिसम्भवन्ती" त्यविशेषेण श्रूयतेऽर्चि-रादिगतिः । " अग्नि र्ज्योति रह शुक्ल " इत्यादिकया स्मृत्याऽपि ब्रह्मविन्मात्रस्य अर्चिरादिगतिप्रतिपादकश्रुति रुपबृंहिता । अन्यथा एतेश्रुतिस्मृती विरुध्येयातामित्यर्थः । अत्र केचिदाहुरित्यादिकं गत्यभावप्रतिपादकं भाष्यं प्रक्षिप्तमेव । गते स्सर्वविद्याविषयत्व-प्रतिपादकपूर्वभाष्यविरोधात् ॥

* इदमप्यधिकरणम् शुद्धाद्वैतिना मसङ्गतमेव । तथाहि-प्रकृताऽधिकरणे अर्चिरादिगते स्सर्वविद्यासमनियतत्वव्यवस्थापनेन स्वाभिमतस्य दुरुद्धरत्वात् । एतेन निर्गुणविद्याया औपनिषदसर्वविद्याऽनन्तर्भूतत्वपर्यवसानेन अविद्यात्वापत्तश्चेतिदिक् ॥

इति अनियमाऽधिकरणम्

किं प्राप्नोति ? तेषां निषेधाना मानन्दादिवत् गुणत्वभावा न्न सर्वासु परविद्यासूपसंहारः ॥

इति प्राप्ते ब्रूमः—अक्षरसम्बन्धिनीनां निषेधधियां सर्वासु परविद्यासूपसंहारो युक्तः, गुणिनो ब्रह्मणः सर्वत्रैकत्वात् । एतैर्हि गुणैः सकलेतरव्यावृत्तब्रह्मानुसन्धानोपपत्ति र्नान्यथा, हेयगुणसम्बन्धानर्हा आनन्दादयो हि प्रत्यगात्मनः सकाशात् ब्रह्मणो व्यावर्तकाः, प्रधानानुवृत्तित्वं गुणस्य स्वभावः । यथा जामदग्न्यचतूरात्रपुरोडाशाद्युपसद्गुणभूतस्य 'अग्निहोत्रम् वेत्यध्वरम्' इत्यादिमन्त्रस्य सामवेदपठितत्वेन सामवेदस्वरस्योच्चैस्त्वस्य प्राप्तावपि याजुर्वेदिकप्रधानोपसदनुवृत्तित्वादुपांशु.

अथ अक्षरध्यधिकरणम् २०

अर्चिरादिगतिवदस्थूलत्वादीनामपि सर्वविद्यासाधारण्यं प्रतिपाद्यत इति दृष्टान्तसङ्गतिः । अस्थूलत्वादीनां सर्वासुविद्यासुपसंहारोऽस्ति नवेति तदपेक्षाऽनपेक्षाभ्यां संशये पूर्वपक्षः—

प्रकरणविशेषाम्नाताना मेतेषां नोपपसंहारः । आनन्दादिवत्स्वरूपप्रतिपत्त्यर्थत्वाऽभावात् । निरवद्यं निरञ्जन मित्यादौ सामान्यतश्श्रुतस्य निर्दोषत्वमात्र स्योपसंहारेणाऽपि चारितार्थ्या द्दोषविशेषाणां सर्वेषामप्युपसंहाराऽपेक्षायां नानाशाखाम्नातानां तेषामानन्त्येनोपसंहार स्याऽशक्यत्वा दिति ।

सिद्धान्तस्तु— ज्ञानानन्दादीनां जीवेष्वपि सत्त्वेन तद्वैलक्षण्यदृढीकरणार्थं दोषाऽभावरूपाणां तेषामप्युपसंहारः कार्यः । सामान्यतो दोषाभावाऽनुसन्धानादपि जीवेषु सम्भावितानां दोषविशेषाणां विशिष्याऽभावाऽनुसन्धाने तद्वैलक्षण्यदार्ढ्यलाभात् । नचाऽनन्त्या दुपसंहाराऽसम्भवः । अस्थूलमित्याद्यदीर्घमित्यन्तेन अस्नाय्वनाकाश मित्यन्तेनच दोषावहशरीरनिषेधः । अचक्षुरित्यादिना इन्द्रियनिषेधः । अतम इत्यविद्यानिषेधः । इत्यादिरूपेण दोषाऽभावाना मवच्छिद्य ग्रहणसम्भवा दिति । तुशब्दः पूर्वपक्षनिराकरणार्थः । अवरोध स्सङ्ग्रहः । सामान्यतद्भावाभ्याम् सर्वासु विद्या सूपास्यस्य ब्रह्मणएकत्वा त्तेषा मस्थूलत्वादीना मितरवैलक्षण्यार्थं ब्रह्मस्वरूपप्रतीतिदार्ढ्यसम्पादनोपयोगसद्भावा च्चेत्यर्थः । औपसदः-उपसत्सम्बन्धः

गुणत्वम्। तदुक्तं प्रथमे काण्डे ‘गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः’ इति॥

नैतावता सर्वेषामुपसंहार्यत्वप्रसक्तिरित्याह—

इयदामननात् ॥ ३–३–३४ ॥

आमननमाभिमुख्येन मननम्, इयदेव गुणजातं सर्वत्रोपसंहार्यम्, येन गुणजातेन सकलेतरव्यावृत्तब्रह्ममननं भवति। अतोऽक्षरब्रह्मसम्बन्धिनीनामस्थूलत्वादिनिषेधधियामेव सकलेतरव्यावर्तकधर्मरूपत्वादुपसंहारः परविद्यासु, नतु ‘सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः’ इत्यादीनामपीति॥

इति अक्षरध्यधिकरणम्

---

सामवेदोत्पन्नस्तद्गुणभूतो मन्त्रः। तदुक्तम्। सामवेदोत्पन्नस्य मन्त्रस्य उच्चैस्साम्नेति विहितस्ववेदस्वरमपहाय “उपांशु यजुषेति” याजुर्वेदिकस्वरपरिग्रहेण याजुर्वेदिकप्रधानोपसन्नवर्तित्वं तद्गुणमुख्यादिसूत्रेणोक्तमित्यर्थः। एवं यथाकथञ्चिदुपयोगवर्णनेन अस्थूलत्वाद्युपसंहारसमर्थने सर्वविद्याम्नातानां सर्वेषामपि ब्रह्मगुणानां सर्वत्रोपसंहारकल्पना प्रसज्येतेत्यतिप्रसक्तिशङ्कापरिहारार्थत्वेनेत्तरसूत्रमवतारयति—नैतावतेति।

आभिमुख्येन मननमिति। आदरेण चिन्तनमित्यर्थः। आदरो निर्दोषत्वस्य प्राप्यफलरूपत्वप्रयुक्तः। एवञ्च फलरूपतयाऽवश्यानुसन्धेयस्य लोपाऽभावाऽनुसन्धानस्यैव प्रपञ्चेनाऽनुसन्धानतः परब्रह्मणस्सर्वेतरवैलक्षण्येनाऽर्थसिद्धत्वादन्यथा दशाकर्योपसंहाराणाम सर्वेषां गुणानां सर्वत्रोपसंहारो नप्रसज्यत इतिभावः। इदमप्यधिकरणं माध्याधिकरणमलायशब्दस्य धर्मविचारानन्तरार्थकत्वमनङ्गीकुर्वता मतमसङ्गतमेवेति दिक्॥

इति अक्षरध्यधिकरणम्

---

अथ अन्तराभूतग्रामाऽधिकरणम् २१

## अन्तरा भूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चे न्नेपदेशवत्* ॥ ३-३-३५ ॥

बृहदारण्यके 'यत् साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः तम् मे व्याचक्ष्व' इत्युषस्तिप्रश्ने प्रतिवचनमेवमाम्नायते 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरः' इत्यादि 'अतोऽन्यदार्तम्' इत्यन्तम्। तदनन्तरं 'यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तर स्तं मे व्याचक्ष्व' इति कहोलप्रश्ने तु प्रतिवचन मेवमाम्नायते 'योऽशनायापिपासे शोकम् मोहम् जराम् मृत्युमत्येत्येतं वै तमात्मानम् विदित्वा' इत्यादि 'अतोऽन्यदार्तम्' इत्यन्तम्। इहोभयत्र विद्यैक्यं न वेति संशयः॥

तथा सति 'य आत्मा' इत्युषस्तिप्रश्नः भूतग्रामवत्प्रत्यगात्मविषयः। अन्यथा 'यः प्राणेन प्राणिति स त आत्मा' इति तत्प्रतिवचनविषयस्य कहोलप्रश्नप्रतिवचनविषयस्याशनायाद्यतीतत्वादेश्च भेदानुपपत्तिरितिचेत्॥

---

अथ अन्तराभूतग्रामाऽधिकरणम्, २१.

दोषाऽभावरूप मस्थूलत्वादिकं जीवव्यावर्तकमित्युक्तम्। पूर्वाऽधिकरणे तद्वदशनायाद्यतीतमेव जीवव्यावर्तकं निर्दोषत्वा ब्रह्म स्यात्। प्राणितृत्वादिविशिष्टस्तु जीवएवेत्युत्थानात्मसङ्गतिः। उषस्तिकहोलयो र्याज्ञवल्क्यस्यच प्रश्नप्रतिवचनसन्दर्भयो र्विद्या भिद्यते नवे त्युषस्तिप्रश्नतत्प्रतिवचनयो जीवविषयत्वब्रह्मविषयत्वाऽनवधारणात्संशये पूर्वपक्षः—

प्रश्नप्रतिवचनावृत्ते रुषस्तिप्रश्नप्रतिवचनं प्राणितृत्वादिलिङ्गा ज्जीवविषयम्॥

कहोलप्रश्नप्रतिवचन मशनायाद्यतीतत्वलिङ्गा द्ब्रह्मविषयमि त्युपास्यभेदाच्च विद्या भिद्यते। इति। तत्र प्रथमपूर्वपक्ष उद्भाव्य प्रथमसूत्रेण निराकृतः। तत्र भूतग्रामवत्त्वं

---

* देशान्तरवदिति. शां. भा. पाठः.

सिद्धान्तयति—नोपदेशवदिति । 'य आत्मा सर्वन्तरः' इत्युभयत्र प्रश्नैकरूप्यात् परमेश्वर एवोभयत्र प्रश्नविषयः । प्रतिवचनगतं निरुपाधिकं प्राणनादिहेतुत्वमशनायाद्यतीतत्व ञ्च तत्रैव समुपपद्यते । सद्विद्योपदेशवत् प्रश्नप्रतिवचनावृत्तिरेकविषया । प्रष्टृभेदो रूपभेदश्च न विद्याभेदावहः ॥

तथा ह्याह—

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३—३—३६ ॥

अर्थैक्ये निश्चिते सति प्रष्ट्रोर्बुद्धिव्यतिहारः कर्तव्यः । उषस्तिनाऽप्यशनायाद्यतीतत्वधीः, कहोलेनाऽपि प्राणनादिहेतुत्वधीः कार्या । उभयप्रकरणगतानि हि वाक्यानि परमेश्वरं विशिंषन्ति,

स्वात्ममनश्शरीरेन्द्रियप्राणादिमत्त्वं तद्विशेषणं प्राणितृत्वादे र्जीवलिङ्गत्वोपपादनार्थं शरीराद्यान्तरत्वविषयतया सर्वान्तरत्वोपपादनार्थञ्च अन्तरा-अन्तरे प्राथमिके सर्वान्तरवाक्ये । तस्मिन्भूतग्रामवत· । स्वात्मनो निर्देश इति शेषः । उभयत्र प्रश्नस्य परब्रह्मविषयत्वा देकरूपत्वाच्च न विद्याभेदः ॥

सूत्रार्थस्तु— "अन्तरा ॱय आत्मा सर्वन्तर" इत्युपस्तिप्रश्नः भूतग्रामवत्स्वात्मनः- प्रत्यगात्मन इत्यवगन्तव्यः । अन्यथा प्रतिवचनभेदाऽनुपपत्ति रितिचेत् नाऽत्र प्रत्यगात्म-परमात्मविषयं प्रश्नद्वयम् । किन्तु प्रश्नद्वयमपि .परमेश्वर एकस्मिन्नेव सम्भवतीत्यर्थः । उपदेशवत्–" स्तब्धो स्युत तमादेश मप्राक्ष्य " इत्याद्युपदेशवदिति ।

द्वितीयपूर्वपक्षोत्तरत्वेन द्वितीयसूत्र मवतारयति–प्रष्टृभेदो रूपभेदश्चेति । तथाह्याहेति । यथा न विद्याभेदावह स्तथैवोपपादयतीत्यर्थः ॥

"यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः " इति द्वयोः प्रष्ट्रोः प्रश्नस्यैकरूपत्वेन .एकविषयत्वे निश्चितेसत्युषस्तिकहोलयोः प्रतिवचनगतबुद्धिव्यवहारः कार्यः । यथा प्राणनादिहेतुत्वबुद्धिः सर्वान्तरत्वविषया कहोलेनाऽपि कार्या तथा अशनायाद्यतीतत्वबुद्धिः उषस्तिनाऽपि कार्या । विशिंषन्तिहि—याज्ञवल्क्यवचना न्येकं सर्वान्तरमेवोपास्यम् । इतरवत् यथाऽन्यत्र सद्विद्यायां " भगवां स्त्वेव मेतद्ब्रवीतु भूयएव मा भगवान्विज्ञापय" इति

यथेतरत्र सद्विद्यायाम् । तस्मादेकस्यैव प्रश्नप्रतिवचनगतत्वा न्न विद्याभेदः । पुनरुक्तिस्तु शङ्कानिरासाय 'तत्त्वमसि' इतिवत् ॥

इति अन्तराभूतग्रामाऽधिकरणम्

---

अथ सत्याऽधिकरणम् २२

## सैव हि सत्यादयः ॥ ३–३–३७ ॥

यद्दृष्टान्तेन पूर्वेऽधिकरणनिर्णयः तत्राऽपि सद्विद्यायां संशयः भिन्नेयमभिन्ना वेति ॥

प्रश्नावृत्तिदर्शनात् प्रतिवचनभेददर्शनाच्च प्रत्यावृत्तिभिन्ना ॥

इति प्राप्ते ब्रूमः न भिन्नेयं सद्विद्या। 'सेयम् देवता' इति प्रस्तुताया एव महादेवतायाः प्रश्नप्रतिवचनेष्वनुवृत्तेः । यतः

---

प्रश्नभेदेपि "तत्सत्यम् स आत्मा तत्त्वमसि श्वेतकेतो" इति प्रतिप्रश्न मुपसंहारैक्या देकैव सद्विद्या । तद्वदित्यर्थः ॥

इति अन्तराभूतग्रामाऽधिकरणम्

---

अथ सत्याऽधिकरणम् २२

पूर्वाऽधिकरणोदाहृतदृष्टान्ताक्षेपेण सङ्गतिसूचनपूर्वक मेकरूपप्रश्नस्य विद्याभेदकत्वाऽभेदकत्वाभ्यां संशयं दर्शयति—तद्दृष्टान्तेनेति । पृष्टार्थस्योत्तरे निवृत्ते तथैव पुनः प्रश्नो नयुक्तः । शङ्कान्तरनिराकरणार्थश्चेत् प्रश्नएव शङ्कान्तरोत्कीर्तनेन भाव्यम् । अतश्च उषस्तिब्राह्मणे "यत्साक्षा दपरोक्षा" दित्यादिना सर्वान्तरप्रश्नानन्तरं "एष त आत्मा सर्वान्तर" इति याज्ञवल्क्यस्योत्तरे सति नाऽनेन स्पष्टं सर्वान्तरो दर्शितो भवतीतिनिर्धार्य शृङ्गग्राहिकया दर्शनीय इत्यभिप्रायेण "कतमो याज्ञवल्क्य सर्वान्तर" इति पुनः पृष्टे "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः" इत्यादौच याज्ञवल्क्येनोपन्यस्तेन

'तत्सत्यम् स आत्मा तत्त्वमसि' इति पुनःपुनः सत्यादीनामावृत्ति र्गम्यते, अतो वस्त्वैक्या दभिन्नेयं विद्येति ॥

इति सत्याऽधिकरणम्

---

"यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैत द्व्यपदिष्टं भवती"ति शङ्कोद्भावनपूर्वकमेव "यदेव साक्षा दपरोक्षाद्ब्रह्म तन्मे ब्रूही"त्यादिना प्रश्नावृत्तिः कृता। अत्राहि विशिष्य सर्वान्तरो वक्तव्य इति द्वितीयप्रश्नानन्तरं तद्वचनार्थं प्रवृत्तेन त्वया प्राणितृलिङ्गेन सर्वान्तरत्वप्रदर्शनम् "गां मध्यम् वा शृङ्गग्राहिकया प्रदर्शयिष्यामी"ति प्रतिज्ञाय "मास्नादिमान्गौः । केसरादिमानश्व"इति वचनेन तुल्यं ज्ञातमिति शङ्कोद्भावनं कृतम्। न तथाऽत्र शङ्कोद्भावनं दृश्यते। तस्मा देकरूपप्रश्नभेदा त्प्रष्टव्यभेदोऽवसीयते। अतोऽत्र "भूयएव मा भगवान्विज्ञापय" इत्यस्य सन्निपातेन पुनर्विद्यान्तर मुपदिशेत्यर्थः। तस्मादिह विद्याभेदो युक्तइति पूर्वपक्षमाह—प्रश्नावृत्तेति ॥

सिद्धान्तयति—न भिन्नेयमिति। तथाहि— सर्वेष्वपि प्रतिवचनेषु सत्यत्वात्मत्वादि-गुणवृत्त्या विद्यैक्यप्रत्यभिज्ञानात्। प्रश्नावृत्तिस्तु तत्रतत्र प्रसक्तानां शङ्काविशेषाणा मुपाकरणार्थेति प्रश्नेषु शङ्कोद्भावनाभावेऽपि तत्तच्छङ्काविशेषापाकरणार्थं दृष्टान्तविशेषोपन्यास-पूर्वकप्रतिवचनपर्यालोचनयै वाऽवगम्यते। तथाच— सुषुप्तौ जीवाः "यत्राऽपियन्ति तत्स"दिति नवखण्डमध्ये प्रथमखण्डेन बोधिते सति सुषुप्तौ सत्संपन्ना जीवाः किमिति सत्संपत्ति नविदु रिति शङ्काभिप्रायेण प्रश्नइत्येतत् "यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ती"त्यादि। एवं द्वितीयादिप्रश्नानामपि प्रश्नाभिप्राय स्तदनन्तरखण्डगतदृष्टान्तविशेषोपयुक्तप्रतिवचनसन्दर्भ-वोद्धेयः। एवं प्रतिवचनसन्दर्भोन्नेतुम् शक्यः शङ्काभिप्राय इति न प्रश्नवाक्येषु श्रुत्या निर्दिष्टः। तस्माद्युक्तं सदुपदेशो विद्यैक्यमिति भावः ॥

सद्विद्यायाम् प्रश्नप्रतिवचनावृत्तौ सत्यां विद्यैक्यं कथमवगम्यत इति चेत् ॥

"सेयं देवतैक्षत" इत्यादिषु सर्वत्र सैव महादेवताऽनुवर्तते। "ऐतदात्म्यमिदं सर्वम् तत्सत्यम् स आत्मा तत्त्वमसी"ति सत्यादयस्सर्वेषुप्रतिवचनेषूपसंह्रियन्ते। ततश्च रूपैक्या न्न विद्याभेदशङ्काऽवकाश इत्यर्थः ॥

इति सत्याऽधिकरणम्

---

अथ कामाऽधिकरणम् २३

## कामाद्य स्तत्र तत्र चायतनादिभ्यः ॥ ३-३-३८ ॥

छान्दोग्ये तैत्तिरीयके वाजिशाखायां कैवल्योपनिषदि च दहरविद्या श्रुता। सेयमभिन्ना भिन्ना वा इति संशये पूर्वः पक्षः— 'यदिद मस्मिन् पुरे दहरम् पुण्डरीकम् वेश्म दहरोऽस्मिन्नन्तर आकाशः' इत्यारभ्य दहराकाशशब्दोक्तस्य दहरपुण्डरीकवर्तिनोऽप हतपाप्मत्वादिगुणाष्टकं मुख्यमाम्नातम्। तैत्तिरीयके 'दहरम् विपाप्मम्' इत्यारभ्य दहरपुण्डरीकवर्तिनः प्रणवप्रकृत्यात्मनादवाच्यत्वमहेश्वरशब्द-वाच्यत्वकृष्णपिङ्गलत्वविरूपाक्षत्वाद्यो धर्माः प्रदर्शिताः। वाजिशाखायां 'य एषोऽन्तर्हृदय आकाश स्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इति वशित्वादयः। कैवल्योपनिषदि 'हृत्पुण्डरीकम् विरजम्' इत्यारभ्य 'विभुम् चिदानन्द मरूप मद्भुतम्। उमासहायं परमेश्वरम् प्रभुम् त्रिलोचनम् नीलकण्ठं प्रशान्तम्' इत्यन्तेन हृदयपुण्डरीक-वर्तिनः परस्य त्रिलोचनत्वनीलकण्ठत्वचिदानन्दरूपत्वोमासहायत्वाद्यो धर्माः। तत्र नीलकण्ठत्वादीनां शरीरधर्मत्वेन सत्यत्वादीना मात्मधर्मत्वेन विरोधा दुपसंहारो न न्याय्यः। तस्माद्विद्या भिन्नेति ॥

एवं प्राप्त उच्यते—तत्र तत्र हृदयपुण्डरीकायतनादिभ्यो विद्यैक्यमेव। अतः सत्यकामादयः सर्वत्रोपसंहार्याः। छान्दोग्यगता

---

अथ कामाऽधिकरणम्

प्राणितृत्वाशनायानीतत्वादीना मविरोधेन धर्मिभेदावहत्वाऽभावा द्विद्यैक्यं समर्थितम्। इह विग्रहधर्माणा मतयात्वा द्विद्याभेद इत्युत्थानात्मङ्गतिः ॥

ननु विशिष्य विरूपाक्षत्वनीलकण्ठत्वादीना मपहतपाप्मत्वादीनाञ्च विद्याभेदात्मकत्वाभाव स्सर्ववेदान्तप्रत्ययाऽधिकरणे समर्थितः। अतोऽत्र पूर्वपक्षो नसम्भवतीत्याशङ्क्य तमुपपादयति— तत्र नीलकण्ठत्वादीना मिति। नीलकण्ठ मित्यनेन कण्ठमात्रनैल्यं प्रतीयते।

अपहृतपाप्मत्वादयो वाजिशाखागताः वशित्वादयः तैत्तिरीयगताः प्रणववाच्यत्वादयः कैवल्यगताश्चिदानन्दरूपादयश्च सर्वे एते गुणा दहरविद्यायां ब्रह्मणोऽनुसन्धेयाः। कैवल्योपनिषद्गतमुमासहायत्वं त्रिलोचनत्वं अन्यत्र कृष्णपिङ्गलत्वं विरूपाक्षत्वञ्चैकार्थम् । आवृत्तिरादरार्था। सर्वत्र गुणानामावृत्तौ तथा द्रष्टव्यम्। अत्र गुणित्वेन ब्रह्मण एकस्यैवोपास्यत्वा दपहृतपाप्मत्वादियोगि सर्वेश्वरमोङ्कारवाच्य मुमासहायं त्रिलोचनं नीलकण्ठं चिदानन्दरूपमनन्तममृतमद्भुतं परं ब्रह्म दहरपुण्डरीकमध्येऽनुसन्धेयमिति परविद्यास्वियमेव प्रधानभूता। छान्दोग्ये कैवल्योपनिषदि चैतद्विद्यानिष्ठस्य।

---

कृष्णपिङ्गलमित्यनेनार्धनैल्यं प्रतीयते। "समम् स्या दश्रुतत्वा" दितिन्यायात । तथा त्रिलोचन मित्यनेन लोचनानां त्रित्वसङ्ख्योच्यते । नतु वैरूप्यम् । विरूपाक्षमित्यनेनतु तद्वैरूप्य मुच्यते । एवं विग्रहधर्माणां तावत्परस्परं विरोधः । तथा आत्मधर्माणामपि क्वचि त्सत्यकामत्व मुच्यते । क्वचित्प्रशान्तमिति निष्कामत्व मुच्यते इत्यादि ॥

एवं धर्मवैलक्षण्या त्प्रतिशाखं दहरविद्या भिन्नेत्युपसंहारनि— तस्मादिति । तत्रतत्रेति वीप्सायां द्विरुक्तिः । चस्त्वर्थः पूर्वपक्षनिरासार्थः। हृदयेति । हृदयपुण्डरीकायतनत्वं तावत्सर्वास्वपि शाखासु तुल्यम् । विशोकत्वं छान्दोग्यकैवल्यतैत्तिरीयकेषु तुल्यम् । मुक्तिफलश्रावणमपि तेषु तुल्यम । इदंमर्वमादिशब्देन गृह्यते । शरीरधर्माणां परस्परविरोधं परिहरति । कैवल्येति । उमासहायत्वं कृष्णपिङ्गलशब्देनोच्यते । त्रिलोचनत्वं विरूपाक्षशब्देनोच्यते । सङ्ख्यावैषम्यमेव तत्र वैरूप्य मविवक्षितम् । कण्ठमात्रनैल्यं वामेतरभागे विवक्षितम् । प्रशान्तमिति नित्यतृप्तत्वेन स्वय भोगतृष्णाराहित्य मुच्यते ॥

परविद्यास्विति । दहरविद्यासु उमासहायत्वादिविशिष्टपरब्रह्मपरमशिवविषयैव दहरविद्या प्रधानभूतेत्यर्थः। तेनेयं शङ्का व्यावर्त्यते । आत्मबोधोपनिषदि नारायणोपास्या दहरविद्या श्रूयते । सा परमेश्वरोपास्यायाः कैवल्यतैत्तिरीयकोपनिषदाम्नाताया दहरविद्याया भिन्नैव । उपास्यभेदात् । एवं द्विविधदहरविद्यासत्त्वे सति बृहदारण्यकाम्नाता गुणा कस्यां दहरविद्यां प्रतिपाद्यन्ते । तत्र "सर्वस्येशान इति, एष भूताधिपति रेषभूतपाल इति, एष सर्वेश्वर" इतिच लोकवेदप्रसिद्धशिवरूढिभावाना मीशानभूताधिपतिसर्वेश्वरनाम्नां श्रावणात्।

'परम्ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते' 'ध्यात्वा मुनिर्गच्छति भूतयोनिम् समस्तसाक्षिम् तमसः परस्तात्' इति साक्षात् तस्यैवोपास्यस्य परब्रह्मणः प्रकृतिमण्डलातीतस्य प्राप्तिर्हि फलमवगम्यते। अत एव नीलकण्ठत्वादिधर्मस्याऽपहतपाप्मत्वादिगुणानाञ्च ब्रह्मणि नित्यत्वादन्योन्य-सापेक्षत्वाच्चोपसंहारे न विरोधः, अप्रसक्तस्य प्रतिषेधायोगात्। त्रिलोचनत्वादिलक्षणशरीरवीशिष्टे परब्रह्मणि प्रसक्तानां शरीरधर्माणां पापजरामरणक्षुत्तृडसत्यकामासत्यसङ्कल्पानां निषेधाय हि अपहतपाप्मत्वादयः प्रतिपादिताः। त्रिलोचनत्वादिलक्षणशरीरकमपि परंब्रह्माऽपहतपाप्मकं जरारहितमशोकमविजिघत्समपिपासं सत्यकामं सत्यसङ्कल्पं चिदानन्दरूपं भवतीति न विरोधः॥

इति कामाऽधिकरणम्

---

तथाऽपि—छान्दोग्याम्नातानामपहतपाप्मत्वादीनां कस्यां दहरविद्यायामन्वय इत्यत्र नाऽस्ति विनिगमकमितिशङ्का भवति। तत्समाधानप्रकारस्त्वयम्। शैवदहरविद्या तावत्प्रधानभूता कैवल्यशाखायां मुक्तिफलश्रावणात्। तत्र हि—तमसः परस्तादिति विशेषितम्। अत श्छान्दोग्येऽपि मुक्तिफलश्रावणात्तदाम्नाता गुणा श्शैवीं दहरविद्यां प्राप्नुवन्तीति युक्तम्। वैष्णवी तदुपसर्जनभूता। वैकुण्ठं भगवल्लोकं गमिष्यतीति श्रावणेन तस्य वैकुण्ठप्राप्तिद्वारा मुक्तिहेतुत्वात्। मुक्तिस्थानस्य वैकुण्ठस्य चोर्ध्वाधरभावः। परापरभावश्च प्रागव्यवस्थापितः। वैकुण्ठंप्राप्तानां क्रममुक्तिं भाष्यकारो वक्ष्यति। एवञ्च यद्यपि त्रिलोचनत्वविरूपाक्षत्वादीनामविरोधस्स्पष्टइति विरोधनिरासेन नैतदधिकरणं सप्रयोजनं भवेत्। तथाऽप्युक्तशङ्कानिरासेन प्रयोजनमिति भाष्यकारस्याशयः॥

तत्र तत्र छान्दोग्ये बृहदारण्यके च आयतनादिभ्यः हृदयपुण्डरीकायतनादिभ्यः विद्यैक्यमेव। तस्मात् कामादयस्सत्यकामत्वादयस्सर्वत्र उपसंहार्या इति सूत्रार्थः॥

इति कामाऽधिकरणम्

अथ अलोपाऽधिकरणम् २४

ननु प्रियशिरस्त्वादीनामिव नीलकण्ठत्वादीनामवयवानां ब्रह्मस्वरूपान्तर्भावे तस्योपचयाऽपचयप्रसक्तिरित्यतो नीलकण्ठत्वादिकं लुप्यत इत्यत आह—

## आदरादलोपः ॥ ३–३–३९ ॥

पूर्वत्र नीलकण्ठत्वादिविशिष्टं रूप मुमाभिधानपरमशक्तिसाहित्यं सत्यसङ्कल्पत्वादिगुणजातञ्च निरूपितम् । इह तेषां परब्रह्मणि लोपोऽस्ति कदाचित्, अथ वा कदाचिदपि न लोप इति संशयः । किं तावत् प्राप्तम् ? उपासनार्थं परब्रह्मणि कल्पितत्वात् तेषां कदाचिल्लोप इति प्राप्ते ब्रूमः—परब्रह्मण उमासहितत्वादीनां सर्वत्र श्रुतिष्वभ्यासादादरादलोप एव । अतएवाऽलुप्तशक्तिकमुच्यते परं ब्रह्म । कुत्रादरादभ्यास इति चेत्—सर्वत्रैव । कृष्णपिङ्गलं विरूपाक्षं इति शक्तिसाहित्ये त्रिलोचनत्वे च सिद्धेऽपि पुनरादरार्थं हि ‘ उमासहायम् परमेश्वरम् प्रभुम् त्रिलोचनम् ’ इत्यभ्यस्तम् । सवितृमण्डलविद्यायाञ्च ‘नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये ’ इति ह्यादरार्थ मुमापतित्वमभ्यस्तम् । अन्यत्र

---

अथ अलोपाऽधिकरणम् २४

पूर्वाऽधिकरणेन प्रसङ्गसङ्गत्या उत्तराऽधिकरण मवतारयति—नन्विति ॥

नीलकण्ठत्वादिविशिष्टो विशिष्टविग्रहस्सत्यसङ्कल्पत्वादिगुणगणश्च लुप्यते नवेति कल्पितत्वाऽकल्पितत्वाभ्यां संशये पूर्वपक्षः—

आनन्दरूप शिवस्य विग्रह इति– “आकाशशरीरम्ब्रह्म । आनन्दरूप ममृतम् यद्विभाती”त्यादिश्रुत्यनुसारा दिष्यते । न चानन्दस्य वक्षःकण्ठहस्ताङ्गुल्यादिरूपेण स्थौल्यकार्श्ये सम्भवतः । ततश्च तत्सम्भवे प्रियशिरस्त्वादिकमपि तात्त्विकं स्यात् अतो विग्रहस्तावत्कल्पितः । तत्सहपाठाद्गुणगणश्च कल्पित इति ॥

'नीलग्रीवो विलोहितः....नीलग्रीवाय च शितिकण्ठाय च' इत्यादिषु नीलग्रीवत्वमीश्वरस्यादरादभ्यस्तम्। सत्यसङ्कल्पत्वादीना मेकत्र सिद्धाना मन्यत्र पुनर्वचनमादारार्थमेव। तस्मादुमापतित्वादीनामभ्यासा दादरादलोप एव परब्रह्मण इति। धर्मब्रह्मणोः प्रमाणान्तरागम्ययो र्यादृशं स्वरूप मभिधत्ते भगवती श्रुतिस्तादृशमेवाभ्युपेयं श्रुतिप्रामाण्यावलम्बिनाम्। अन्यथा तद्विरुद्धतर्कावलम्बने जगदुपादानत्वादिकं न सिद्ध्येत्। अतः श्रुतिरेव च 'सत्यम् ज्ञानमनन्तम् ब्रह्म' इति सत्यज्ञानाकारमपरिच्छिन्नं ब्रह्मेत्युक्त्वा,

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
ऊर्ध्वरेतं विरूपाक्षम् .................... ॥

इत्यादिना तस्यैव त्रिलोचनत्वपरमशक्त्युमाशबलितत्वरूपं विशिष्ट मभिधत्ते। पुनश्च तस्य 'स एको ब्रह्मण आनन्दः' इति निरतिशयानन्दवत्त्वमाह। तस्यैव च 'आकाशशरीरम् ब्रह्म। सत्यात्म प्राणारामम्

---

सिद्धान्तस्तु — अभ्यस्तत्वेनादरातिशयविषयतया तयोस्तात्त्विकत्व मवसीयते। श्रुतिशरणैः खलु यथाश्रुत्येवाऽभ्युपगन्तव्यम्। श्रुतिप्रामाण्या दानन्दात्मनैव परमाकाश स्योपचयापचयवान्परिणामो युज्यते। प्रियशिरस्त्वादिकन्तु तथा तात्पर्यग्राहकप्रमाणाभावा दन्नमयादिषु कल्पितैः पक्षपुच्छादिभिस्सहपाठा च कल्पित मित्यभ्युपगम्यत इति॥

* इद मधिकरणद्वयमपि निर्गुणब्रह्मवादिना मसङ्गतमेव। अतएव पूर्वाऽधिकरणे वशित्वादितु तत्स्तुत्यर्थमेव गुणजातं वाजसनेयके सङ्कीर्त्यतइति परैरुक्तम् तद्विवृतौ। रत्नप्रभायामपि भिन्नविद्यास्थानामपि गुणाना मायतनादिसाम्येन निर्गुणस्थले बुद्धिस्थानां स्तुत्यर्थं मुपसंहारो युक्त इत्युक्तम्। निर्गुणस्य गुणवत्त्वेन स्तुतेः निर्वनस्य धनिकत्वेनेव निरर्थकत्वमेव तेनावेदित मिति विशदमेव। अतएव सर्ववेदान्तप्रत्ययाऽधिकरणे सगुणविषया चेयं विज्ञानभेदाभेदचिन्तेत्युक्त्वा साधनाध्यायस्य स्वपक्षेऽसाङ्गत्यं परैः कण्ठतएवोरीकृतम्। किञ्च तै रलोपाऽधिकरण मिदम प्राणाग्निहोत्रविषयतया व्याख्यातम्। अस्य प्राणाहुतिमात्रविषयत्वे दिचारस्य विद्यातदुपयोगिविषयत्वाऽभावेन पादसङ्गत्यभावा दसङ्गतमेवेति विदितमेव॥

मुक्तस्य परब्रह्मसादृश्यप्राप्त्यभिधानाच्च । अतः साक्षान्मुक्तप्राप्यमेव पूर्वोक्तं नीलकण्ठत्वादिलक्षणं परब्रह्मस्वरूपम्, न सांसारिकम् । तस्य 'अपहतपाप्मा' इत्यादिना सांसारिकधर्मनिषेधात् । सगुणैवाऽतः परविद्या । 'निष्कलम् निष्क्रियम्' इत्यादिषु हेयगुणनिषेधः क्रियते न कल्याणगुणनिषेधः । तथा हि—

'निष्कलम् निष्क्रियम्' इत्यादिना 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इत्यादिना च निर्गुणत्वे सगुणत्वे च सामान्येन प्राप्ते 'अपहतपाप्मा' 'यः सर्वज्ञः सर्ववित्' इत्यादिभि र्विशेषश्रुतिभि र्निऽर्गुणश्रुते र्हेयगुणराहित्य मर्थः, सगुणश्रुतेः कल्याणगुणसाहित्यं इति विज्ञायते । किञ्च वचनमेव सगुणं मोक्षफलं प्रकाशयति, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । विपश्चिता सर्वज्ञेन ब्रह्मणा सर्वानपि कामान् मुक्तः सह प्राप्नोतीति ।

---

"ब्रह्मवेद ब्रह्मैव भवती" त्येवकारश्च साम्यश्रुत्यनुरोधा दिवार्थः । "वैष्णवं वामन मालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोका नभिजयति । विनाश मेवापीतो भवतीति" । इत्यादिश्रुतिष्वेवकार स्येवार्थत्वदर्शना दिति ॥

सूत्रस्याऽयमर्थः — उपस्थिते=उपासकेन ब्रह्मणि शिवे प्राप्तेसति — अतः—ब्रह्मप्राप्त्यधीनविकासादिस्वरूपाविर्भावाद्धेतोः जक्षणक्रीडनरममाणादिस्वाच्छन्द्यतत्साम्यापत्तिवचना त्सएव परम्ब्रह्म— तत्साम्यापत्तिरेव परममुक्ति रिति ॥

निर्गुणब्रह्मवादिभि रिदमपिसूत्रं प्राणाहुतिविषयपूर्वोऽधिकरणशेषतयैवाऽधिकृत्य भोजने उपस्थित इत्यादिना व्याख्यातम् । तदपि स्वाभिमतस्य ब्रह्मणो नैर्गुण्यात् उपासनाया अनावश्यकतया भोजनमात्रपरत्व मावेदयतीति न किमपिचित्रम् ॥

एवं यद्यपि कैश्चि न्निर्विशेषवादसिसाधयिषयावा पाञ्चरात्रमतोद्दिधीर्षयावा श्रुतिसूत्राणा मन्यथानयनं न किमप्याश्चर्य माकलयति । तथाऽपि प्रकृतेऽधिकरणे भाष्यकारै र्निर्विशेषवाद-निराकरणार्थतया स्पष्टं व्याख्यातेऽपि समग्रेण भाष्येण सह प्रकृताऽधिकरणार्थं मतिविशदं व्याख्याय भाष्यकाराशयं विजानद्भिरपि दीक्षितवर्यैः य द्भाष्यकाराणां निर्विशेषवादएव

अथ तद्वचनाऽधिकरणम् २५

## उपस्थितेऽतस्तद्वचनात् ॥ ३–३–४० ॥

इह पूर्वाऽधिकरणोक्तं ब्रह्मस्वरूपमेव मुक्तप्राप्यमुतान्यदिति संशयः। किं तावत् प्राप्तं ? 'निष्कलम् निष्क्रियम् शान्तम् निरवद्यम् निरञ्जनम्' इत्यादिषु ब्रह्म निर्विशेषमेव श्रूयते। 'ब्रह्म वेद ब्रह्मैव भवति' इति मुक्तस्य तत्स्वरूपापत्तिरेव मुक्तिः। अतो निर्विशेषमेव ब्रह्म मुक्तप्राप्यं नान्यदिति प्राप्ते, ब्रूमः— पूर्वोक्तं सविशेषमेव ब्रह्मस्वरूपं मुक्तप्राप्यम्। , दहरकमलान्तर्भावनीयतया प्रतिपादिते विरूपाक्षे परब्रह्मणि 'परम् ज्योतिरुपसम्पद्य' इति मुक्तेन प्राप्ते 'स्वेन रूपेणाऽभिनिष्पद्यते' इति स्वरूपाभिनिष्पत्तेरेव हेतोः, 'जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा ज्ञातिभिर्वा' इत्यादिना स्वच्छन्दतो ज्ञात्यादिप्राप्त्यभिधानात्, 'परमम् साम्यमुपैति' इति श्रुत्या, 'मुक्तः शिवसमो भवेत्' इति स्मृत्या च,

---

अथ तद्वचनाऽधिकरणम् २९

यदि शिवस्य रूपं गुणजातञ्च तात्त्विकं तदा मुक्तप्राप्यं ब्रह्म ततोऽन्यत्स्या दित्युत्थानात्सङ्गतिः। मुक्तप्राप्यम्ब्रह्म शिवादन्यदुत शिवएवेति किं मुक्ति निर्विशेषब्रह्मभावापत्ति रुत सविशेषब्रह्मसादृश्यापत्तिरित्यनवधारणात्संशये पूर्वपक्षः ॥

नीरूपं निर्विशेषं परम्ब्रह्मेति परश्शताश्श्रुतयः प्रतिपादयन्ति। तद्भावापत्ति र्मुक्तिरितिच "ब्रह्मवि ब्रह्मैव भवती"ति सावधारणा श्रुतिः प्रतिपादयति। अतो रूपवान् सगुण शिवो न परंब्रह्म नाऽपि तत्सादृश्यापत्तिः परममुक्तिरिति ॥

सिद्धान्तस्तु— उक्तरूप शिवएव परम्ब्रह्म तत्सादृश्यापत्तिरेवच परममुक्तिः। दहरपुण्डरीकादिषु तदुपासनेन लब्धया तत्प्राप्त्यैव स्वरूपाभिनिष्पत्त्यादिप्रतिपादनात्। "निरञ्जनः परमम् साम्य मुपैति दिव्य" मिति श्रुत्या "मुक्त शिवसमो भवेदि" ति स्मृत्यनुगृहीतया निरञ्जनं इति शब्दोदितस्य संसारान्मुक्तस्यैव तत्साम्यापत्तिप्रतिपादना च। परब्रह्मणो रूपगुणनिषेधश्रुतयः प्राकृतरूपहेयगुणनिषेधपराः मुक्तप्राप्ये "सहब्रह्मणा विपश्चिते" ति साङ्गचगुणश्रावणेन मुक्तप्राप्यं परम्ब्रह्म निर्गुणमिति कल्पनाऽयोगात्।

एवं प्राप्ते ब्रूमः— गोदोहनादिव दनियता उपास्तयः । यथा— ' चमसेनाऽपः प्रणयेत् गोदोहनेन पशुकामस्य ' इत्यपां प्रणयनमाश्रित्य विधीयमानं गोदोहनमक्रत्वर्थत्वा दैच्छिकमेव, न त्वप्प्रणयनादिवन्नियतम् । तथा कर्माण्याश्रित्य विधीयमाना उपास्तयः क्रत्वर्था न भवन्ति ' ' तेनोभौ कुरुतो यश्चैतदेवम् वेद यश्च न वेद ' इत्युद्गीथाद्युपासनरहितस्याऽपि क्रत्वनुष्ठानदर्शनात् ' ' यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरम् भवति ' इति वर्तमाननिर्देशेऽपि क्रतुवीर्यवत्तरत्वसाधनतयो-पासनाविधिः कल्प्यते । वीर्यवत्तरत्वं नाम प्रबलकर्मान्तराप्रतिबन्धेनाविल-म्बितफलत्वमेव । तथा कामवृष्ट्यादिपृथक्फलश्रवणाच्च न नियता उपास्तयः ॥

इति तन्निर्धारणानियमाऽधिकरणम्

---

छान्दोग्ये " ओमित्येतदक्षर मुद्गीथ मुपासीत " इति कर्माङ्गाश्रयमुद्गीथाद्युपासनं श्रूयते । तत्किम् तस्मिन्कर्मणि पर्णतादिवन्नियमेनोपादेयम् , उत गोदोहनादिव दनियमेनेति संशयः । कर्माऽङ्गाश्रयत्वेन पर्णतादिव त्तद्द्वारेण निरूढकार्यतया " यदेव विद्यया करोति श्राद्धयोपनिषदा तदेव वीर्यवत्तरम् भवती " ति वर्तमाननिर्देशस्य पृथक्फलप्रति-पादनाऽयोगा त्क्रत्वर्थतया कर्मसु नियता उद्गीथाद्युपास्तय इति ॥

सिद्धान्तस्तु—" तेनोभौ कुरुतो यश्चैत देवम्वेद यश्च नवेद " इत्युद्गीथोपासनरहितत्वस्याऽपि क्रत्वनुष्ठानदर्शना त्क्रतुफलात्स्वर्गादेः पृथग्भूतवीर्यवत्तरत्वफल मिदमुपासन मिति गोदोहनादिव दनियमः । वर्तमाननिर्देशेसत्यप्यधिकाराऽन्तरनिश्चयेसति रात्रिसत्रव त्क्रतो वीर्यवत्तरत्व मस्योपासनस्य फलमिति कल्पनीय मिति ॥

सूत्राऽर्थस्तु— तन्निर्धारणाऽनियमः । निर्धारणं—निश्चलेन चेतसाऽवधारणम् । उपासन-मित्यर्थः । तस्य अनियमः । कुतः—तद्दृष्टेः । तेनोभौकुरुत इत्यनियमदृष्टेः । पृथग्भूतं ह्यस्यफलम् तच्चाऽप्रतिबन्धरूपम् । वीर्यवत्तरत्वं नाम प्रबलकर्मान्तरफलेनैतस्य कर्मफलस्याऽप्रतिबन्धः । अविलम्बितत्वं फल मिति ॥

इति तन्निर्धारणानियमाऽधिकरणम्

---

सहशब्दो ब्रह्मणाऽऽनन्दभोगस्य च यौगपद्याऽभिप्रायः। अतः सगुणमेव ब्रह्मस्वरूपं मुक्तप्राप्यं फलमिति ॥

इति तद्वचनाऽधिकरणम्

---

अथ तन्निर्धारणानियमाऽधिकरणम् २६

## तन्निर्धारणानियमास्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्

॥ ३–३–४१ ॥

उद्गीथादिकर्माङ्गावबद्धा उपास्तयः कर्मसु नियता उताऽनियता इति संशयः। किं तावत् प्राप्नोति? कर्मानुष्ठाने कर्माङ्गत्वात् नियमेनाऽनुष्ठेयाः। कर्मप्रकरणमनारभ्याधीतत्वेऽपि वाक्यादेव क्रतुसम्बन्धोपपत्तिः। यथा 'यस्य पर्णमयी जुहूर्भवति' इत्यनारभ्याधीतस्य पर्णमयत्वस्याव्यभिचरितक्रतुसम्बन्धिजुहूद्वारा वाक्यतः क्रतुसम्बन्धः, तथा 'य एवम् विद्वा नुद्गायति' 'य एवम् विद्वान् साम गायति' इत्यव्यभिचरितक्रतुसम्बन्धिसामोद्गीथादिद्वारा तदुपासनानां क्रतुसम्बन्धः। अतः कर्मसु नियता उद्गीथाद्युपास्तय इति ॥

---

परमं तात्पर्य मिति शिवाद्वैतनिर्णये निगदितुं यत्साहस मवलम्बितं तदत्याश्चर्य माकलय तीति व्यक्त मिदं सर्वं प्रकृतभाष्येण वा तदीयेन स्वोपज्ञेन विवरणेन वा निर्विशेषवादो निर्मूलित इति मन्वता मापातत स्तत्र विश्वासोपजननायैवेत्यास्ताम् ॥

इति तद्वचनाऽधिकरणम्

---

अथ तन्निर्धारणानियमाऽधिकरणम् २६

यथा शिवोपासनाफलमेव मुक्तिफल मेवं क्रतुफलमेवोद्गीथविद्याफलं नान्यदस्तीति शङ्कया सङ्गतिः ॥

यदुक्तमेकस्य राज्ञ इति, तत्राऽपि राजस्वरूपाभेदेऽपि स्थानगुणादिभेदा दुपासनप्रकारो भिन्न एव सेवकानामिति ॥

इति प्रदानाऽधिकरणम्

---

अथ लिङ्गभूयस्त्वाऽधिकरणम् २८

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ३-३-४३ ॥

पूर्वं सर्वासूपविद्यासु ब्रह्मोपास्यमिति स्थितम् । तस्योपास्यस्य ब्रह्मणो विशिष्य निर्धारणार्थ मिदमधिकरणम् । तैत्तिरीये—

'सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु नमो अस्तु ।
पुरुषो वै रुद्रः सन्महो वै रुद्रः सन्महो नमो नमः ॥
विश्वं भूतं भुवनं चित्रं बहुधा जातम् जायमानञ्च यत् ।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥
कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शन्तमं हृदे ।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥
नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये नमो नमः'

---

सूत्रार्थस्तु— प्रदानवत् "इन्द्राय राज्ञे पुरोडाशम् इन्द्रायाऽधिराजायेन्द्राय स्वराज्ञे" इतीन्द्रस्यैकत्वेऽपि राजत्वादिविशिष्टाकारभेदा दुपासनभेद उक्त स्सङ्कर्षणकाण्डे इति ॥

इति प्रदानाऽधिकरणम्

---

अथ लिङ्गभूयस्त्वाऽधिकरणम् २८

सङ्गति माह— पूर्वमिति । पूर्वाऽधिकरणे सर्वासु साक्षान्मोक्षफलासु विद्यासु शिवरूपम्परम्ब्रह्म एकमेवोपास्य मिति सिद्धंकृत्वा उपास्यैक्येऽपि न विद्यैक्यमिति समर्थितम् । इदानीं तदेवोपास्यैक्यं समर्थ्यत इति सङ्गतिः ॥

अथ प्रदानाऽधिकरणम् २७

## प्रदानवदेव तदुक्तम् ॥ ३–३–४२ ॥

एकस्यैव शिवस्य परब्रह्मणः परविद्यासु सर्वासु तत्तद्गुणविशिष्टतया पृथक्चिन्तनीयत्वमुक्तम् । तदिह सम्भवति न वेति संशयः । किं तावत् प्राप्तम् ? गुणभेदेऽपि गुणिनो ब्रह्मण एकत्वा दुपासनं न भिद्यते । यथैकस्य राज्ञ स्तत्तद्भूषणादिविशेषणभेदेन युक्तस्याऽपि कार्यदर्शनव्यायाम-भोजनासनमृगयासमरादिव्यापारेषु सिंहासनादिस्थानभेदेऽपि भेदो न दृश्यते तथा दहरादिस्थानभेदेऽपि तत्तद्गुणभेदविशिष्टस्याऽपि ब्रह्मण एकत्वात् तदनुसन्धानमेकमेवेत्येवं प्राप्ते ब्रूमः—एकस्यैव परब्रह्मणः शिवस्य स्वरूपाभेदेऽपि तत्तद्गुणविशिष्टस्वरूपतया गुणविशेषणभेदेन भेदा द्विशिष्टगुण्यावृत्त्या पृथक् तदुपासनप्रयोगः, इन्द्रप्रदानवत् । यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इति गुणभेदात् पृथक्पुरोडाशप्रदानम् 'नाना देवतापृथक्त्वात्' इति सङ्कर्षे तथोक्तत्वात्, तथैकस्याऽपि परब्रह्मणो गुणभेदा दुपासनपृथक्त्वमिति ।

---

अथ प्रदानाऽधिकरणम् २७

कर्मणां तदङ्गाश्रितोपासनानाञ्च फलभेदनिरूपणप्रसङ्गा द्विद्याभेदनिरूपण मिति सङ्गतिः । धर्मैक्यात् स्थानगुणभेदात् संशयः ॥

ननु—स्थानगुणभेदा द्धर्मिणोऽपि भेदस्स्या दित्याशङ्क्य तद्भेदेऽपि धर्म्यभेदं दृष्टान्ते नोपपादयति—यथैकस्येति । सत्यम् स्थानगुणभेदेन वस्तुतो धर्मी नभिद्यत इति । तथाऽपि तद्भेदेसत्यौपाधिको भेदो हविःप्रदानाख्ययागभेद इति ॥

सिद्धान्तयति— एकस्यैवेति । उपासनाप्रकारो भिन्न इति । राज्ञो यानासनव्याया-मादिषु छत्रचामरव्यजनादिप्रधानस्सेवकानां सेवाप्रकारो भिन्नएवेत्यर्थः ॥

इति तद्ब्रह्म स आत्मा अङ्गान्यन्या देवता ' इति व्याहृतिविद्योपास्य-लिङ्गम् । ' शन्तमम् हृदे ' इति हृदयद्योतनात् दहरविद्योपास्यलिङ्गम् । ' हिरण्यबाहवे ' इति हिरण्यरूपत्वं सवितृमण्डलोपास्यलिङ्गम् । ' उमापतये ' इति सर्वपरविद्योपास्यलिङ्गम् । संसाररुग्द्रावकत्वात् रुद्र इत्युच्यते परमात्मा शिवः । एवमुमापतेः परब्रह्मणः शिवस्य सर्वपरविद्योपास्यत्वं वाक्यैरवसीयते । वाक्यं हि प्रकरणाद्बलीयः । तदप्युक्तम्— ' श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौ-र्बल्यमर्थविप्रकर्षात् ' इति । तस्मादुमासहितं संसाररुग्द्रावकं परं वस्तु सकलपरविद्योपास्यमिति सिद्धम् ॥

इति लिङ्गभूयस्त्वाऽधिकरणम्

---

श्रीशैलो मुक्तिद " इत्यादिप्रयोगेषु श्रीशब्दः मुख्यत्वप्रख्यापनार्थः "कद्रुद्राये"ति मन्त्रस्याऽय मर्थः । मीढुष्टमाय—सेक्तृतमाय सर्वेषामपि पित्रे । तव्यसे—तवो वृद्धिः तदस्यास्तीति णिनिः । तवस्वि—तदतिशायिने ईयसुन्प्रत्यये "विन्मतोर्लुगिति" विनोलुकि टेरिति टिलोपेचसति छान्दसे इकारलोपे सति तव्यस इति रूपसिद्धिः । वृद्धिमत्तमायेत्यर्थः । हृदे—हृदयस्थाय । एवम्भूताय रुद्राय । शंतमं—सुखावहतमं सर्वदुःखानां शमयितृतमम् । कद्—वाक् । श्लाघनं—स्तोत्रम् । कत्थ—श्लाघायामितिधातो र्भावेक्विपितिसंयोगान्तलोपः । एवम्भूतं स्तोत्रम् । वोचेम लिङ्चाशिष्यामित्याङ्नि, वचउमित्युमागमेच सत्याशिषि बहुवचनम् । अत्र यद्यपि हृदयस्थत्व मन्यार्थत्वेनोपात्तम् तथाऽपि दहरविद्योपास्यसूचनार्थम् भवत्येव । कैवल्योप-निषदि विशिष्य शिवस्य दहरविद्योपास्यत्वेन प्रसिद्धत्वात् । तद्धि बलीय इति सूत्रांशं व्याचष्टे—वाक्यंहीति । तदप्युक्तमिति । पूर्वसूत्रादुक्तमित्यस्याऽनुषङ्ग इत्यर्थः ॥

अन्येतु लिङ्गभूयस्त्वा दिति सूत्र मुत्तराऽधिकरणशेषं सिद्धान्तोपक्रमं व्यचक्षते । "तान्हैता नेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपत"इत्यादीनि भूयांसि लिङ्गानि । लिङ्गञ्च प्रकरणा द्बलीय इति । पूर्वविकल्पइत्यादिपूर्वपक्षसूत्रद्वयम् । तद्युक्तम् । लिङ्गउपन्यस्ते दुर्बलेन प्रकरणेन पूर्वपक्षोत्थानाऽयोगादिति ॥

इति । अत्र सर्वात्मत्वादिभिरुमापतित्वेन च श्रूयमाणं परं ब्रह्म प्रकृते सवितृमण्डलविद्यामात्र उपास्य मुत सर्वासु परविद्यास्विति संशयः । किं तावत् प्राप्तम् ? प्रकरणबाधायोगात् प्रकृतसवितृमण्डलविद्यायामेवोपास्यम् ॥

इति प्राप्ते ब्रूमः । इदमुमासहितं परं ब्रह्म सर्वास्वपि परविद्यासूपास्यम् । तत्तल्लिङ्गसम्बन्धिवाक्यभूयस्त्वात् । तथा हि 'सर्वो वै रुद्र' इत्यादिवाक्ये 'सर्वम् खल्विदम् ब्रह्म तज्जलानिति शान्त उपासीते' ति शाण्डिल्यविद्योपास्यलिङ्गम् । 'पुरुषो वै रुद्र' इति वाक्ये पुरुषसूक्तोपकोसलविद्याद्युपास्यलिङ्गम् । 'सत्' इत्यत्र 'सदेव सोम्येद मग्र आसीत्' इति सद्विद्योपास्यलिङ्गम् । 'महः' इत्यत्र 'मह

---

प्रकृते सवितृमण्डले विद्यामात्रे इति । "सर्वो वै रुद्र" इत्यनुवाके रुद्रस्य सर्वासु परविद्यासूपास्यत्वे विनियोजकस्य वाक्यस्य सद्भावे वाक्येन प्रकरणस्य बाधा त्सर्वासु परविद्यासु रुद्राख्यं मरम्ब्रह्म उपास्यम् भवेत् । तदसद्भावे प्रकरणेन सवितृमण्डलविद्याया मेवैतदुपास्यं भवेत् । विद्यान्तरेषुतूपास्यं तत्तत्प्रकरणालोचनया निर्धारणीयं स्यादिति तथाभूतवाक्यसदसद्भावाभ्या मयं संशयः । प्रकरणबाधाऽयोगा दिति ॥

अयमाशयः— रुद्रनमस्कारार्था इमे मन्त्राः । नतु तत्तद्विद्योपास्यलिङ्गवद्भि श्शब्दै स्तत्तद्विद्योपास्यं प्रत्यभिज्ञाप्य तस्य रुद्रत्वप्रतिपादनाऽर्थाः । तथासति नमस्कारानन्वयप्रसङ्गात् । नमस्कारैः नमस्कार्यस्य स्तुतिमात्रत्वप्रतीतेश्च । सर्वपरविद्योपास्य शिवत्वइत्यभिमतं नसिद्ध्येदितिपूर्वपक्षसारः ॥

सिद्धान्तयति— लिङ्गभूयस्त्वा दिति तत्तल्लिङ्गसम्बन्धीति । सूत्रे लिङ्गभूयस्त्वा दितिपदं तत्तदुपास्यलिङ्गसमर्पकपदघटितवाक्यभूयस्त्वपर मितिभावः । शाण्डिल्यविद्याग्रहण मन्यत्राऽपि यत्रयत्र "इदम् सर्वम् यदयमात्मा" इत्यादौ ब्रह्मणस्सर्वात्मत्व मुक्तं तस्या स्तस्याश्चापि विद्याया उपलक्षणम् । एव मुत्तरत्राऽपि द्रष्टव्यम् । सर्वपरविद्येति । 'तस्मा त्सहतया शक्त्येऽति श्रुतेः परशक्तिवैशिष्ट्यस्य सर्वविद्यासाधारण्य मिति भावः । नमश्शब्दयोगस्तु—"सर्वम् रुद्रेति वै प्राहु र्मुनयस्तत्त्वदर्शिनः । नमस्कारेण सहितं गौरवात्परमेशितुः ॥" इति लिङ्गपुराणोक्तरीत्या नमश्शेपित्वरूपगौरवप्रख्यापनार्थः "यथा श्रीरुद्राः पावमाः ।

भूता उत क्रियामयक्रत्वङ्गभूता इति संशये पूर्वपक्षः प्रवर्तते । 'मनश्चितो वाक्चित' इत्यादीनां साम्पादिकाग्नीनाम् 'असद्वा इद मग्र आसीत्' इत्यादिना पूर्वप्रकृतेष्टकचिनाग्निशेषिभूतक्रियामयक्रत्वनुप्रवेशः स्यात् । ततश्च तेषामग्नीनां इष्टकचिनाग्निना विकल्पो मानसवत् । यथा द्वादशाहेह्येदशमेऽहन्यविवाक्ये पृथिवीपात्रस्य प्रजापतिदेवताकस्य समुद्र-द्रव्यस्य मानसग्रहस्य मनःसम्पाद्यग्रहणसादनस्तोत्रशस्त्रहवनप्रत्याहरणभक्ष-णत्वेनमानसस्याऽपि क्रियामयक्रत्वङ्गत्वम् , एवमेषां मानसानामपि क्रियमय-क्रत्वत्वङ्गम् ॥

ध्यातव्याः । ''आत्मनोऽग्नी नर्कानि''ति प्रतिपर्यायं श्रावणात् । अर्का नर्चनीया नित्यर्थः । ते मनश्चिदादयो विद्यामयक्रत्वङ्गभूता उत क्रियामयक्रत्वङ्गभूता इति संशयः । यदि तत्र विद्यामयःक्रतुरपि विहितस्स्या त्तदा तदङ्गभूतास्स्युः ॥

यदि नस्या त्तदा प्रकृतेनाव्यभिचरितक्रतुसम्बन्धिनेष्टकचिताग्निनोपस्थापितस्य क्रियामयस्य क्रतो रङ्गभूतास्स्यु रिति भेदः । क्रियामयः क्रत्वनुप्रवेश स्स्यादिति । " मनसैषु ग्रहा अगृह्यन्त " इत्यादिष्वग्निषु क्रियामयानि क्रत्वङ्गान्येव श्रूयन्ते । नतु विद्यामयः क्रतुरिति भावः ॥

अस्मिन्प्रकरणे विद्यामयक्रत्वनुबन्धिग्रहस्तोत्रादिदर्शनेऽपि क्रतो र्विधानाऽभावात् फलान्तराप्रतीतेश्च । " असद्वा इद मग्र आसी " दित्यादिना इष्टकचितस्याऽग्नेः प्रकृतत्वाच्च क्रियामयक्रत्वङ्गभूता इति ॥

सूत्रार्थऽस्तु— मनश्चिदादिः क्रिया स्यात् । क्रियामयक्रत्वङ्गभूत इत्यर्थः । कुतः प्रकरणात् पूर्वप्रकृतेनेष्टककचितेनाऽव्यभिचरितक्रतुसम्बन्धिनोपस्थितक्रतुगृहीतत्वेन तदङ्गभूतानामेषाञ्चाग्नित्वा त्तेनेष्टेकचिते न विकल्पः । विद्यारूपाणामप्येषां क्रियामयक्रत्वङ्ग-भावो नविरुध्यते द्वादशाहाङ्गभूतमानसग्रहव दिति ॥

ननु— मानसग्रहः कस्यचिदृष्टकार्यस्याऽङ्गस्यस्थाने न निवेशनीय इति युक्तम् । तस्याऽदृष्टद्वाराक्रियामयक्रत्वङ्गत्व मिह मनश्चिदादयोऽग्निधारणं कुर्वत इष्टकचितस्याग्नेः स्थाने निवेशनीया इति कथं तेषामग्निधारणाऽसमर्थानां तदङ्गत्व मित्याशङ्कानिराकरणार्थं सूत्रम् ॥

अथ पूर्वविकल्पाऽधिकरणम् २९

# पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत

॥ ३—३—४४ ॥

अग्निरहस्यब्राह्मणे श्रूयते 'षट्त्रिंशतम् सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान् मनश्चितः' इति। तथा 'वाक्चितः प्राणचित श्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित' इति पुरुषस्य शतसंवत्सरमिते आयुषि षट्त्रिंशत्सहस्राणिदिनानि। तत्रैकस्मिन् दिने यावती मनोवृत्तिः तस्यैकैकाग्नित्वे सत्यग्नयः षट्त्रिंशत्सहस्राणि सम्पद्यन्ते। ते च प्रत्यगात्मस्वरूपेण ध्यातव्याः। एवं वाक्चितादयोऽपि। ते विद्यामयक्रत्वङ्ग-

श्रीभाष्यकारैरपि अत्र लिङ्गशब्दश्चिह्नपर्यायइति मीमांसकमर्यादायै जलाञ्जलि र्दत्ता। अतएव तद्विवृतौ श्रुतप्रकाशिकायामपि चिह्नपर्यायइतिप्रतीक मुपादाय "नतु श्रुतिलिङ्गादिषु लिङ्गमित्यर्थ" इत्युक्तम्। एतत्सर्वं परेषां स्वोद्विघर्षितवेदविरुद्धमते तात्पर्यं मावेदयतीति विशदम्॥

इति लिङ्गभूयस्त्वाऽधिकरणम्

अथ पूर्वविकल्पाऽधिकरणम् २९

यथा सवितृमण्डलविद्याप्रकरणस्य बलीयसा प्रमाणेन बाधः एवं क्रियामयक्रतुप्रकरणस्याऽपीति दृष्टान्तसङ्गतिः। शतपथब्राह्मणे अग्निरहस्ये क्रियामयक्रत्वङ्गभूत इष्टकचितोऽग्निः प्रकृतः। "तद्ध तन्मनएवासी" दिति। प्रथमोत्पन्नं मनः प्रस्तुत्य तत्षट्त्रिंशत्सहस्राण्यपश्य दित्यादिना मनश्चिदादयोऽग्नय स्समाम्नाताः। पुरुषायुषान्तर्गतैकैकदिनप्रभवमानसवृत्तिसङ्घाता अग्नित्वदृष्ट्या उपास्यमाना मनश्चितः। एवमेव वाक्चिदादयोऽपि प्रत्येकं षट्त्रिंशत्सहस्रसङ्ख्याकाः। तत्र कर्मचितो वागिन्द्रियातिरिक्तकर्मेन्द्रियव्यापारा देहव्यापारावा। अग्निचितो जाठराग्निव्यापाराः। तेचाऽग्नित्वदृष्टिविशिष्टा मनोवृत्त्यादयः प्रत्यगात्मरूपेण-

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ३—३—४७ ॥

'ते हैते विद्याचित एव तान् हैतानेवम्विदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते विद्यया हैवैत एवंविदश्चिता भवन्ति' इति श्रुत्या वाक्येन लिङ्गेन चावगतस्य विद्यामयक्रत्वन्वयस्य दुर्बलेन प्रकरणेन न बाधः ॥ ननु 'मन्त्रसेषु ग्रहा अगृह्यन्त' इत्यादिषु विधिप्रत्ययाश्रवणात् क्रियामयात् क्रतोरन्यो विद्यामयः क्रतुर्नास्तीत्यत आह—

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम्

॥ ३—३—४८ ॥

'ग्रहा अगृह्यन्त' इत्यादिक्रत्वनुबन्धैः ते 'हैते विद्याचित एव' इति श्रुत्यादिभिश्च विद्यामयक्रतुविधिः कल्पनीयः। दहरविद्यादीनां

---

न "त्वैन्द्रवायवं गृह्णाती"त्यादिवाक्येषु श्रुताना मिन्द्रवाय्वाद्युद्देशेन सोमरसग्रहणानां यागान्वयापेक्षाणां श्रुतसोमयागान्वयेन चारितार्थ्ये सम्भवति न यागान्तरकल्पनेति पशुसोमाधिकरणे व्यवस्थापितम्। एवमिहाऽपि ग्रहणादिसंस्काराणा मिष्टकचिताग्न्युपस्थापितक्रियामयक्रत्वन्वये सम्भवति न विद्यामयः क्रतुः कल्पनीय इति शङ्कानिराकरणार्थं सूत्रम् ॥

"तद्धैते विद्याचित एवे" त्यादौ श्रुत्या लिङ्गेन वाक्येनच्च अवगतस्य विद्यामयक्रत्वन्वयस्य श्रुतिलिङ्गवाक्येभ्यो दुर्बलेन प्रकरणेन नबाध इत्यर्थः ॥

नन्विति। ग्रहग्रहणादिषु विधिसद्भावेहि विहिते र्विद्यामयैस्संस्कारै रुचितो विद्यामयः क्रतुः कल्प्येत—नतु तच्छ्रवण मस्तीति ॥

ग्रहा अगृह्यन्तेत्यादीना मनुवादरूपत्वेऽपि "वचनानित्यपूर्वत्वादि"ति न्यायेन मनश्चिदादीनामिव ग्रहग्रहणादीनामपि विधिकल्पनं भव न्निवारयितुं शक्यम्। तथाच ग्रहग्रहणादिभिः क्रत्वनुबन्धैः पूर्वसूत्रोदाहृतश्रुत्यादिभि, स्सहितैः क्रतुविधिः कल्पनीयइति न विद्यामयक्रतुविध्यभाव श्शङ्कनीय इति भावः ॥

## अतिदेशाच्च ॥ ३–३–४५ ॥

'तेषामेकैक एव तावान् यावानसौ पूर्व' इति तेष्विष्टकचिताग्निकार्यातिदेशाच्च तदङ्गत्वमिति ॥

एवं प्राप्ते सिद्धान्त उच्यते —

## विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ३–३–४६ ॥

विद्यैव विद्यामयक्रत्वङ्गभूता इत्यर्थः । साम्पादिकाग्नित्वेन विद्यामयत्वे सिद्धेऽपि 'ते हैते विद्याचित एव' । इति निर्धारणं हि विद्यामयक्रत्वङ्गत्वख्यापनाय । दृश्यते च विद्यामयक्रतुः अत्रैव 'मनसाऽधीयन्त मनसैषु ग्रहा अगृह्यन्त मनसाऽस्तुवन् मनसाऽशंसन् यत् किञ्च यज्ञे कर्म क्रियते यत् किञ्च यज्ञीयम् कर्म मनसैव तेषु मनोमयेषु मनश्चित्सु मनोमयमाक्रियत ' इति । अतस्तेषां विद्यामयक्रत्वङ्गत्वमेव ॥

---

तेषा मेकैक एवेत्यादिना इष्टकचिताऽग्निकार्यातिदेशा च । तेनैषां विकल्पः प्रतीयते । तेन सविकल्पोहि तच्छेषिभूतक्रत्वङ्गत्वेन विनैतेषां नोपपद्यते । अतश्च क्रियामयक्रत्वङ्गभूता इत्यर्थः ॥

अथ सिद्धान्तप्रतिपादकं सूत्रम् ॥

पूर्वपक्षसूत्रे क्रियाशब्दइवाऽत्र विद्याशब्दोऽपि लाक्षणिकइति व्याचष्टे—विद्यैवेति । तेहैतइति । सर्वनामभ्यां सप्तविधाना मग्नीनां परामर्शः । तेषां विद्याचितत्वे सिद्धेऽपि यद्विद्याचित एवेति निर्धारणम् यच्च तदनन्तरम् "विद्यया हैव त एवंविद श्चिता भवन्ती"ति तद्विवरणवाक्ये निर्धारणं तद्विद्यामयक्रत्वनुप्रवेशिनः एवैते नतु क्रियामयक्रत्वनुप्रवेशिन इति ज्ञापनार्थ मित्यर्थः । 'मनसैषु ग्रहा अगृह्यन्त' इत्यादौ विद्यामयक्रतुदर्शनाच्च विद्यामयक्रत्वङ्गभूताएवेत्यर्थः ॥

# परेण च शब्दस्य ताद्विध्यम् भूयस्त्वात्त्वनुबन्धः

॥ ३–३–५० ॥

परेण च ब्राह्मणेनास्य मनश्चिदादिवाचिनः शब्दस्य विद्यामयत्वप्रतिपादकत्वमवगम्यते । तथा हि 'अयम् वाव लोक एषोऽग्निश्चितस्तस्याप' इत्यादिना पृथक्फला विद्या विधीयते । क्रियाप्रकरणे मनश्चिदादीना मनुबन्धस्तु सम्पादनीयानामग्न्यङ्गानां भूयस्त्वात् । तत एतेषां विद्यामयकत्वङ्गत्वम् ॥

इति पूर्वविकल्पाऽधिकरणम्

---

अथ शरीरे भावाऽधिकरणम् ३०

## एक आत्मनः शरीरे भावात् ॥ ३–३–५१ ॥

इह पूर्वोक्तब्रह्मस्वरूपानुसन्धानं सर्वासु परविद्यासु युज्यते न वेति संशयः । तत्रैके मन्यन्ते । शरीरे वर्तमानत्वादुपासितुः कर्तृत्वभोक्तृत्व-

---

न ह्यतिदेशेनेष्टकचिताग्नितुल्यदेशत्व माश्रयणीयम् । येनकेनचित्सामान्येन अतिदेशोपलब्धेः । "स वा एष एव मृत्यु र्य एष एतस्मिन्मण्डले पुरु॰"इतिव त्फलसामान्येन भविष्यत्यतिदेशः । नखलु तत्र मण्डलपुरुषे मृत्युलोकापत्ति रतिदिश्यते । किन्तु संहर्तृत्व मेवेति सूत्रार्थः ॥

हेत्वन्तरमिति– मनश्चिदादिब्राह्मणस्य विद्याप्राधान्य इति शेषः ॥

परेणच ब्राह्मणेनाऽस्यमनश्चिदाद्यभिधायिन श्शब्दस्य ताद्विध्यम्–तद्विधत्व मवगम्यते । परेण-ब्राह्मणेन "अयंवावलोक एषोऽग्निश्चित स्तस्याप" इत्यादिना पृथक्फला विद्या विधीयते । अग्निरहस्ये क्रियामयाएव विधीयन्तइतिनियमो नाऽस्ति । क्रियाप्रकरणे त्वेषा मनश्चिदादीना मनुबन्धस्तु सम्पादनीयाना मग्न्यङ्गानां भूयस्त्वा त्क्रियते । तस्मा न्मनश्चिदादयोऽग्नयः विद्यामयकत्वङ्गभूता एवेतिसूत्राऽर्थः ॥

इति पूर्वविकल्पाऽधिकरणम्

क्रियामयात् पृथक्त्ववदस्याऽपि विद्यामयक्रतोः सानुबन्धैः श्रुत्यादिभिः पृथक्त्वमवगम्यते । दृष्टश्चानुवादसरूपे विधिः 'यदेव विद्यया करोति' इत्यादौ । तदुक्तम् 'वचनानि त्वपूर्वत्वात्' इति । अतो विद्यामयक्रत्वङ्गत्वमेव युक्तम् ॥ आशङ्क्य परिहरति —

## न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः

॥ ३–३–४९ ॥

'तेषामेकैक एव तावान् यावानसौ पूर्वः' इतीष्टकचिताग्निचित-फलसामान्येनातिदेशः, इष्टकचिताग्नेः स्वक्रतुद्वारेण यत् फलं तदेषां विद्यामयक्रतुप्रवेशेन फलमिति । न पुनरिष्टकचिताग्नितुल्यदेशत्वमेषामिति । केनाऽपि सामान्येनातिदेशोपलब्धेः 'स वा एष एव मृत्युर्य एष एतस्मिन् मण्डले पुरुष' इति संहर्तृत्वमात्रेण । न हि तत्र मण्डलपुरुषस्य मृत्युतुल्यदेशत्वम् । अतः केनचित् सामान्येनातिदेशे न विरोधः । हेत्वन्तरमाह ॥

---

ग्रहस्तोत्रादिभ्यः क्रतवनुबन्धेभ्य श्रुत्यादिभिश्च दहरविद्यादीनां क्रियामयक्रतोः पृथक्त्ववदस्याऽपि विद्यामयक्रतोः पृथक्त्वमवगम्यते । अनुवादसरूपे "यदेव विद्यया करोती" त्यादौ विधि र्दृष्टः तद्वचनानि त्वपूर्वत्वा दित्यनेनोक्तम् । तस्मा द्विद्यामय-क्रत्वङ्गत्वमेव युक्तमिति सूत्रार्थः ॥

आशङ्क्येति—मनश्चिदादीना मतिदेशेनेष्टकचिताग्निभि स्तुल्यकार्यत्वावगमा त्तेषां क्रियामयक्रत्वनुप्रवेशोऽवगम्यतइति पूर्वपक्षोक्तमाशङ्क्येत्यर्थः ॥

इष्टकाचिताग्नेरिव स्वप्रधानद्वारा फलवत्त्वमस्तीत्येतावता सादृश्येनाऽतिदेशः । न तुल्यदेशत्वपर्यन्तेन । यथा मनश्चिदादिब्राह्मणात्पूर्वब्राह्मणावसानश्रुतेः "स एष मृत्यु"रित्यादौ मण्डलपुरुषे संहर्तृत्वमस्तीत्येतावता सादृश्येन मृत्युरिति व्यपदेशः । नतु मृत्युलोकाऽव-स्थितिलक्षणतुल्यदेशत्वपर्यन्तेनेत्यर्थः ॥

सांसारिकस्वभावनिर्मुक्ताऽपहतपाप्मत्वादिस्वरूपतयोपासितु र्नुसन्धेयत्वात् तदात्मतयाऽनुसन्धेयस्य परमेश्वरस्य त्रिलोचनत्वादिलक्षणस्वरूपानुसन्धाने नाऽस्ति विरोधः ॥

इति शारीरेभावाऽधिकरणम्

---

शरीरे—कर्माधीनशरीरे भावात् —वर्तमानत्वात् । आत्मनः—जीवस्य कर्तृत्वादि-रूपापन्नत्वा त्तादृशस्यात्मतया परमेश्वरस्याऽनुसन्धानं नयुज्यतइति एके मन्यन्त इति सूत्राऽर्थः ॥

अथ सिद्धान्तप्रतिपादनपरं सूत्रम् ॥

नत्विति सूत्रांशं व्याचष्टे— नैवमिति । अपहतपाप्मत्वादिगुणरूपइति व्यतिरेकपद-व्याख्यानेन प्रजापतिविद्यावाक्यं व्यतिरेकस्यानुसन्धेयत्वे प्रमाणं सूचितम् । तत्र ह्यपहतपाप्मत्वादिरूपविशिष्टम् प्रत्यगात्मानं प्रस्तुत्य "सोऽन्वेष्टव्य" इति प्रकृतरूप-विशिष्टमेव तच्छब्देन परामृश्य तस्याऽनुसन्धेयत्वमुक्तम् ॥

एवञ्च यथाविधिविहितविद्यानुष्ठानम् । नतु लौकिकप्रमाणोपस्थित्यनुगुणमिति । तदानीं प्रत्यक्षोपस्थितैरपि सांसारिकैर्धर्मैः प्रत्यगात्मनोऽनुसन्धानं नकार्यम् । किन्तु तदानीं तिरोहितैरप्यपहतपाप्मत्वादिभिरेवेति भावः ॥

ननु—ब्रह्मोपलब्धिः यथाऽवस्थितब्रह्मविषया कार्येति नियमो "यथाक्रतु" रिति श्रुते रित्याशङ्क्य साश्रुति जीवयाथात्म्यसाधारिणी तस्याअपि प्राप्यकोटिनिविष्टत्वात् । "तम् यथायथोपासत" इति श्रुतेरपि जीवात्मभूतपरमात्मविषयत्वा दित्यभिप्रेत्याह— यथाक्रतुरिति ॥

नहि—कर्तृत्वादिविशिष्ट मात्मन स्स्वरूपमनुसन्धेयम् । किन्तु सांसारिकस्वरूपा न्मुक्तस्वरूपस्य यो व्यतिरेक स्सोऽनुसन्धेयः । कुतः—तथाविधोपासनाभावभावित्वा न्मुक्त-स्वरूपप्राप्तेः । "यथा क्रतु रस्मिन् लोके पुरुषो भवती" ति हि श्रुति राह— उपलब्धिवत्— यथा ब्रह्मस्वरूपोपलब्धि र्यथावस्थितब्रह्मानुसन्धानयुक्तस्यैव तथा आत्मोपलब्धि-रपीति सूत्रार्थः ॥

*यद्यपि शुद्धाद्वैतभाष्यकारै रिदमधिकरणम् शरीरात्मभेदसमर्थनपरतया व्याख्यातम् तदसत्—पादसङ्गत्यभावात् । उपासने गुणोपसंहाराऽनुपसंहारौ हि पादविषयः । प्रासङ्गिकचिन्तनमपि

रूपापन्नत्वात् तथाऽत्रस्थितस्याऽऽत्मतया परविद्यासु परमेश्वरस्य त्रिलोचनत्वादि-लक्षणस्वरूपानुसन्धानम् न युज्यत इति ॥ सिद्धान्त उच्यते ॥

**व्यतिरेकस्तद्भावभावित्वा न्न तूपलब्धिवत** ॥ ३–३–५२ ॥

नैवम् यत्कर्तृत्वभोक्तृत्वादिरूपापन्नस्योपासितुरात्मतया परमात्माऽनु-सन्धेय इति । अपितु सांसारिकस्वभावान्मुक्ते यो व्यतिरेक अपहत-पाप्मत्वादिगुणरूपः सोऽनुसन्धेयः । तथाऽनुसन्धानसद्भावभावित्वात स्वरूपोपलब्धेः । यथा यथाऽत्रऽस्थितस्वरूपब्रह्मानुसन्धानभाविनी ब्रह्मोप-लब्धिः तद्वत्, 'यथाक्रतुरस्मिँल्लोके पुरुषः' इत्यादिश्रुतेः । अतः

अथ शारीरेभावाऽधिकरणम् ३०

पूर्वाऽधिकरणविषयवाक्ये मनश्चिदादयः प्रत्यगात्मत्वेन ध्यातव्या इत्युक्तम् । एवं शिवोऽपि प्रत्यगात्मतया ध्यातव्यः । "त्वम् वा अहमस्मि भगवोदेवत अहम् वै त्वमसी"ति शिवजीवयोः परस्परैक्यभावनाया विहितत्वात् । "आत्मेति तूपगच्छन्ती"त्यधिकरणे तथा वक्ष्यमाणत्वा च्चेत्येत दनुस्मृत्य लिङ्गभूयस्त्वाऽधिकरणोक्त माक्षिप्यतइति सङ्गतिं सूचयति— पूर्वोक्त मिति । युज्यते नवेति संशयः । इति ॥

किं प्रत्यगात्मा तदानीन्तनैः कर्माधीनशरीरबन्धककर्तृत्वभोक्तृत्वधर्मै र्विशिष्टः परविद्यासु शिवधर्मिकैक्यप्रतियोगित्वेनाऽनुसन्धेयः । किंवा मुक्तिदशायामाविर्भविष्यद्भि रपहतपाप्मत्वादि-विशिष्ट इत्यनवधारणा त्संशय इति भावः । यथा शुक्तिरजतैक्यानुभव स्तदानीं दृश्यमानै श्चाकचक्यादिभिर्धर्मै र्विशिष्टतया शुक्त्यैक्यविषयः । नतु तदानी मदृश्यमानै र्नील-भागादिविशिष्टतया । एवं शिवजीवैक्यभावानमपि तदानी मनुभूयमानैर्धर्मै र्विशिष्टेन जीवेनैक्यविषयम् । नतु तदानीं तिरोहितैरितियुक्तम् । नच तत्क्रतुन्यायानुसारा दनेवंभाव श्शङ्कनीयः । "तम् यथायथोपासत"इतिश्रुत्यन्तरानुसारेण तस्य प्राप्यपरब्रह्मविषयत्वात् । एवञ्च यदुक्तम् लिङ्गभूयस्त्वाऽधिकरणे निरस्तसमस्तदोषस्य निखिलमङ्गळगुणाकरस्य चिदानन्दरूप-कर्माऽनधीनदिव्यविग्रहविशिष्टस्य शिवस्य सर्वासु परविद्यासु ध्येयत्वं तन्नोपपद्यते । कर्माधीन-शरीरबन्ध तदधीनविहितनिषिद्धकर्तृत्व तत्फलसुखदुःखभोक्तृत्वविशिष्टप्रत्यगात्मरूपतयाऽनु सन्धीयमाने तस्मि न्तद्विरोधिगुणाऽनुसन्धानाऽयोगात् । अहमनुभवरूपप्रत्यगात्मगुणेभ्यः श्रुत्युपस्थापितगुणानां दुर्बलत्वा दिति पूर्वः पक्षः ॥

भावप्राणेष्टाख्यमहालिङ्गत्रयम् बिभृया' दितिभावादिलिङ्गत्रयधारणविधि श्श्रूयते । तस्य शिवसायुज्यमितिफलश्रवणात्परविद्याङ्गत्वम् । तदेवं विद्याङ्गावबद्धाः यासुशाखासु श्रुता स्तासु विहितेपूपासनेषूपासकैः कार्याः-सन्निधानात् न सर्वत्र इतिप्राप्ते ब्रूमः । भस्मत्रिपुण्ड्ररुद्राक्षेष्टलिङ्गधारणादय उपासनाङ्गावबद्धा यासुशाखासु श्रुता स्तास्वेवेति न नियमः । किन्तु प्रतिवेदं सर्वासु शाखासु सर्वैरपि ब्रह्मोपासकैः कार्याएवेति श्रुत्या सन्निधे र्बाधः ॥

## मन्त्रादिवद्वाऽविरोधः ॥ ३–३–५४ ॥

यथा क्रत्वङ्गभूतानां मन्त्राणा मेकैकशाखागतानामपि सर्वशाखागतक्रत्वन्वये न विरोधः तथाऽत्रापीति ॥

इति अङ्गावबद्धाऽधिकरणम्

---

तत्समाचरन् मुमुक्षु रपुनर्भवायेति त्रिपुण्ड्रधारणस्य मुक्तिफलकत्व मुक्तम् । उपनिषदन्तेच "एतत्त्रिपुण्ड्रम् भस्मनाकरोति यो विद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स समस्तपातकोपपातकेभ्यः पूतोभवती" त्युपक्रम्य"देहंत्यक्त्वा शिवसायुज्य माप्नोति न स पुनरावर्तते" इत्युपसंहृतम् । नच विद्याङ्गभावं विना तस्य साक्षान्मुक्तिफलकत्वं सम्भवतीति तस्य मुक्तिफलकविद्याङ्गत्व मवसीयतइति भावः । इत्थं विषयं संशोध्य पूर्वपक्षमाह– एवमिति । विद्याविशेषप्रकरणाम्नातानां प्रणवाभ्यासभस्मोद्धूलन महालिङ्गधारणानां प्रकरणा न्नियम स्स्पष्टः । त्रिपुण्ड्रधारणस्यतु तच्छाखाम्नातविद्यासु सन्निधाना न्नियमः । यथा वेधाद्यधिकरण-पूर्वपक्षे "शन्नोमित्रा"दि मन्त्रस्येतिभावः । श्रुत्या सन्निधे र्बाधइति सन्निधिग्रहणम् प्रकरणस्या प्युपलक्षणम् ॥

उपासनाङ्गावबद्धाः–भस्मोद्धूलनमहालिङ्गधारणादयः यासु शाखासु श्रुता स्तास्वेवेति न नियमः । किन्तु प्रतिवेदं सर्वासु शाखासु सर्वैरपि ब्रह्मोपासकैः कार्या एवेति सूत्राऽर्थः ॥

एवं ब्रह्ममीमांसकमर्यादया प्रणवाऽनुसन्धानादीनां सर्वविद्यासाधारण्य मुपपादितम् । कर्ममीमांसकमर्यादयाऽपि तदुपपादनार्थं सूत्र म् ॥

यथा क्रत्वङ्गभूतानामिति । अत्राऽय माशयः । कर्ममीमांसकैः गुणमुख्यव्यतिक्रमाऽधिकरणे सामवेदोत्पन्नानि सामवेदक्रतुषु विनियुक्तानि " य एवंविद्वान्वारवन्तीयं साम

अथ अङ्गावबद्धाऽधिकरणम् ३१

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ३–३–५३ ॥

कासुचिच्छाखासु श्रूयमाणा उपासनाङ्गावबद्धा स्सर्वासूपासना स्वङ्गत्वेनोपसंहार्या न वेति संशयः ॥ तथा हि— "आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम् । ध्याननिर्मथनादेव पाशम् दहति पण्डितः ॥" इति कैवल्योपनिषदि दहरोपासनायां प्रणवाभ्यास श्श्रूयते । 'अग्नि' रित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् । 'तस्माद्व्रतमेतत पाशुपतम् पशुपाशविमोक्षाय' इति अथर्वशिरसि पाशुपतविद्यायां 'इषमूर्जम् तपसा नियच्छेते'त्यादिना इष्टलिङ्गधारणं भस्मधारणञ्च श्रूयते । रुद्राक्षजाबाले "रुद्राक्षान् श्वेतानेवबिभृया"दिति रुद्राक्षधरणं श्रूयते । कालाग्निरुद्रोपनिषदि 'तिर्यक्तिस्रो रेखाः प्रकुर्वीते'ति भस्मत्रिपुण्ड्रधारण-विधिश्श्रूयते । महालिङ्गजाबाले 'वेधामनुक्रियादीक्षाभिः कारणादितनुत्रये

---

शास्त्रारम्भे करणीयम् । देहस्यैवात्मत्वे शास्त्रस्याऽनारम्भणीयत्वात् । तथापीदमुपासन-वैमुख्यमूलमित्यास्ताम् ॥

इति शरीरेभावाऽधिकरणम्

---

अथ अङ्गावबद्धाऽधिकरणम् ३१

एवं परब्रह्मण शिवत्वस्य उपास्यस्य सकलपरविद्यासु साधारण्यं लिङ्गभूयस्त्वाऽधिकरणोक्त माक्षिप्य समाहितम् । तत्प्रसङ्गा त्तदसाधारणमन्त्रभूतप्रणवाभ्यासस्य तद्भक्ताऽसाधारणचिह्न-भस्मोद्धूळनत्रिपुण्ड्रमहालिङ्गधारणानाञ्च असाधारण्य मुच्यत इति सङ्गतिः । उपासनाङ्गाव-बद्धा इति 'उपासन'ङ्गत्वेन निबद्धा इत्यर्थः । ननु प्रणवाभ्यासभस्मोद्धूळनमहालिङ्गधारणाना मुपासनाङ्गत्वेन निबन्धनं दहरपाशुपतविद्याप्रकरणाम्नाना दवगम्यते । कालाग्निरुद्रोपनिषदि— विद्याविशेषमनारभ्याम्नातस्य त्रिपुण्ड्रधारणस्य तत्कुतोऽवगम्यत इत्याकाङ्क्षायामाह तस्येति । तिर्यक्तिस्रो रेखाः प्रकुर्वीत—व्रतमेतच्छाम्भवम् । सर्वेषु वेदेषु वेदवादिभि रुक्तम्

वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्म स्वन्नमत्ति' इति ब्रह्मानुभवः फलञ्चाऽभिहितम् । तत्र मूर्धाद्यवयवोपासनात् भूम्नः समस्तोपासनस्य ज्यायस्त्वं प्रामाणिकत्वम्, तत्रैव ब्रह्मानुभवफलाभिधानात्। तत्रावयवोपासनं फलकीर्तनञ्च क्रतुवदविवक्षितम। 'वैश्वानरम् द्वादशकपालम् निर्वपेत् पुत्रे जाते' इत्युक्त्वा 'यदष्टाकपालो भवति गायत्र्यैवैनम् ब्रह्मवर्चसेन पुनाति' इत्यादिनोच्यमानमष्टाकपालादिकं तत्फलञ्च यथा न विवक्षितं तद्वत् । तथा हि समस्तोपासनस्यैव ज्यैष्ठ्यं दर्शयति श्रुतिः—तत्र हि 'औपमन्यव कम् त्व मात्मानमुपास्से'....'प्राचीनयोग्य कम् त्व मात्मान मुपास्से' इत्यादिप्रश्नानन्तरम् 'दिवमेव भगवो राजन्'.... 'आदित्य मेव भगवो राजन्' इत्यादिप्रतिवचनै रवयवोपासनेऽभिहिते 'अत्त्यन्नम् पश्यति प्रियम्' इत्यादिना तत्रतत्र फलनिर्देशं कृत्वाऽपि 'मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्यः' इत्यादिराजवचनै रनर्थं ब्रवीति। अतः समस्तोपासनमेव मुख्यम् ॥

इति क्रतुज्यायस्त्वाऽधिकरणम्

---

व्यस्तोपासनेषु प्रत्येक माख्यातम् फलञ्च द्युमूर्धादिषु प्रत्येकं वैश्वानरत्वञ्च श्रूयते। व्यस्तोपासननिन्दापूर्वकं समस्तोपासनञ्च श्रूयते। तयो स्समबलत्वे व्यस्तोपासनञ्च कार्यम्। न्यूनाधिकबलत्वे समस्तोपासनमेव कार्यमिति तदनवधारणात्संशयः। समस्तोपासनं सिद्धान्तिनोऽप्यभिमतं नोपपादनीय मिति। प्रत्येक माख्यातश्रावणादिभि र्व्यस्तोपासन मुपपादयन्पूर्वपक्षयति—तथाहीति । अत्त्यन्न मिति । अन्न मत्ती त्यन्वयः । एव मुत्तरत्राऽपि । फलवचनस्य चेति चकारेण प्रत्येकं वैश्वानरत्वश्रावणं समुच्चीयते। अंशोपासन मिति । यथा समस्तस्य वैश्वानरत्वश्रावणा तदुपासनतत्फलश्रवणाच्च समस्तोपासन मुचितम्। एव मवयवोपासनमपीत्यर्थः । समस्तोपासनव द्व्यस्तोपासनान्यपि नामाद्युपासनव द्विधेयान्येवेति भावः ॥

सिद्धान्तमुपसंहरति— अत इति ॥

अथ क्रतुज्यायस्त्वाऽधिकरणम् ३२

# भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति

॥ ३—३—५५ ॥

इह वैश्वानरविद्यायामुपासनमंशेन समस्तेन वेति सन्दिह्यते। तथा हि—तत्र द्युलोकसूर्यवाय्वाकाशोदकपृथिव्यो वैश्वानरस्य मूर्धचक्षुःप्राणमध्यशरीरमूत्रस्थानपादरूपा ध्यातव्या इति निरूपितम्। तेषामङ्गानामपि प्रत्येकमुपासनमभिहितम् 'अत्त्यन्नम् पश्यति प्रियम् भवत्यस्य ब्रह्मवर्चसम् कुले य एतमेवमात्मानम् वैश्वानरमुपास्ते' इति पृथक्-पृथग्दिवादिपर्यायगतैर्वाक्यैः। एवं सत्युपास्तिशब्दस्य फलवचनस्य च प्रत्येकमुपलभ्यमानत्वा दंशोपासनमुचितमिति पूर्वः पक्षः॥

सिद्धान्ते तु—समस्तोपासनमेव मुख्यमित्युच्यते। तथा हि—तत्र त्रैलोक्यशरीरतयोपास्यस्य वैश्वानरात्मनः स्वर्लोकादिपृथिव्यन्तानां मूर्धादि-पादान्तावयवत्वमभिधाय 'यस्त्वेतमेवम् प्रादेशमात्रमभिविमानमात्मानम्

---

गायति यज्ञायज्ञियम् सामगायति वामदेव्यम् साम गायती"त्यादिभिः। याजुर्वेदिकै राधानं शिनियुक्तानि वारवन्तीयादीनि सामान्युदाहृत्य तेषा मुच्चैस्साम्ने त्युत्पत्तिवेदविहित-स्वरप्राप्तौ प्रधानभूतविध्यनुसारेण "उपांशु यजुषेति विहितः याजुर्वेदिकएव स्वरः" इति सिद्धान्तितम्। अत्र शाखान्तरे किञ्चित्कर्मप्रकरणाम्नातानां विनियोजकप्रमाणबल्य च्छाखान्तराम्नातकर्मान्तराङ्गत्वमप्यस्तीत्यत्र दृष्टान्तः स्पष्टः॥

सूत्रार्थस्तु—यथा क्रत्वङ्गभूतानामित्यादिना भाष्यएव स्पष्टीकृतः॥

इति अङ्गावबद्धाऽधिकरणम्

---

अथ क्रतुज्यायस्त्वाऽधिकरणम् ३२

किञ्चिद्विद्यान्वितानामेव प्रणवचिन्तनादीनां विद्यान्तरेष्वप्यन्वयवत्समस्तो-पासनान्वितानामेव द्युमूर्धादीनां व्यस्तोपासनास्वप्यन्वयइति शङ्काया पूर्वपक्षोत्थानात्सङ्गतिः।

उपपन्न इति निरूपितम् । अतो नानाप्रकारा विद्या शब्दाद्यनुबन्ध-भेदात् इति निर्णयः । पुनरधिकरणारम्भोऽयं ज्ञानस्याविधेयतानिरासार्थः ॥

इति नानाशब्दाद्यधिकरणम्

---

अथ विकल्पाऽधिकरणम् ३४

## विकल्पोऽविशिष्टफलत्वात् ॥ ३-३-५७ ॥

एवं नानाप्रकाराः परविद्या निरूपिताः । तासूपासकस्य विकल्पः समुच्चयो वेति संशयः ॥ किं प्राप्नोति ? दहरविद्यासद्विद्यादीनां समुच्चयेनानुष्ठान मुचितम् , कर्मभूयस्त्वेन फलभूयस्त्वसम्भवात् । विकल्पे तु किञ्चिन्नियामकं नास्ति ॥ इति प्राप्ते ब्रूमः—एकस्मिन्नुपासके सर्वासां परविद्यानां विकल्प एव । कुतः ? निरतिशयब्रह्मानन्दानुभवस्य ब्रह्मसाक्षात्कारफलस्याऽविशिष्टत्वात् । प्रयोजनमेकेनोपासनेन यदि सिद्ध्यति किमन्यैरप्रयोजनैः । किञ्च, एकेनोपासनेन ब्रह्मस्वरूपाऽपरोक्षं निरतिशयभावनया सिध्यति ।

---

निराकर्तु मिदमधिकरण मारब्धमित्यर्थः । "सर्ववेदान्तप्रत्यय ञ्चोदनाद्यविशेषा" दिति सूत्रेण चोदनाग्रहणेनाऽविधेयज्ञानासङ्गतिसूचनं लब्धम् । तथाऽपि तद्दृढीकरण मस्यफलमिति-भावइति विवृण्वद्भिरपि दीक्षितेन्द्रै र्भगवतोभाष्यकारस्य ज्ञानाविधेयत्वपरशुद्धाद्वैतवादेऽस्ति तात्पर्यमिति शिवाद्वैतनिर्णये कथनमत्यन्तविरुद्धमिति दिक् ॥

अथ नानाशब्दाद्यधिकरणम्

---

इति विकल्पाऽधिकरणम् ३४

विद्यानां विकल्पसमुच्चयचिन्तानिद्याभेदसिद्ध्यपेक्षत्वा त्तदनन्तरम्प्रवर्ततइति सङ्गतिं दर्शयन् किमासां विकल्पएव उत समुच्चयोऽपि सम्भवतीति, समुच्चये फलभूयस्त्व सम्भवाऽसम्भवाभ्यां संशयं दर्शयति— एवमिति । फलभूयस्त्वसम्भवादिति । यद्यपि निरतिशय-

अथ नानाशब्दाद्यधिकरणम् ३३

## नाना शब्दादि भेदात् ॥ ३-३-५६ ॥

इह परविद्यायामेकीकरणेनोपासन मुत भेदेनेति संशये नाना-शाखाश्रुतानामपि विद्यानां वेद्यस्य ब्रह्मण एकत्वादेकीकरणेनोपासनम् । इति प्राप्ते उच्यते—अनन्तश्रुतिबोध्यानामनन्तानां विद्यानामेकीकृत्याऽनुष्ठानायोगात् स्वरूपैक्येऽपि ब्रह्मणो गुणभेदात् विद्याभेदः । यत्र गुणभेदो नास्ति तत्र स्थानादिभेदाद्विद्याभेदः । राजादिगुणभेदादिन्द्रस्य पुरोडाशदानभेदवत् गार्हपत्यस्थानादिभेदादग्नेरुपचारभेदवच्च विद्याभेद

---

सूत्राऽर्थस्तु:—भूम्नः—समस्तोपासनस्य । ज्यायस्त्वम् – श्रैष्ठ्यम् । प्रामाणिकत्व मित्यर्थः । तत्रैव ब्रह्मानुभवफलविधानात् । तत्राऽवयवोपासनं फलकीर्तनश्चाऽविवक्षितम् । 'क्रतुवद्वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति क्रताविवेत्यर्थः । तथाहि—समस्तोपासनस्य ज्यायस्त्वमेव दर्शयति श्रुतिः— "मूर्धा ते व्यपतिष्य द्यन्मांनागमिष्य" इत्यादिना व्यस्तोपासने अनर्थं ब्रुवन्ती इति ॥

इति क्रतुवज्ज्यायस्त्वाऽधिकरणम्

---

अथ नानाशब्दाद्यधिकरणम् ३३

सद्विद्या—दहरविद्या—शाण्डिल्यविद्यादिका विद्यन्ते । तासामेकीकरणेनोपासनमुचितम् ? उत भेदेन?इति संशये नानाशाखाश्रुतानामपि विद्यानां वेद्यस्य ब्रह्मणएकत्वा देकीकरणेनैवोपासन मुचितमिति पूर्वपक्षः ॥

सिद्धान्तस्तु— अनन्तश्रुतिसिद्धाना मनन्तानां विद्याना मेकीकृत्याऽनुष्ठानस्याऽसम्भावितत्वा ब्रह्मणस्स्वरूपैक्येऽपि गुणभेदाद्भेदेनैवोपासन मुचितम् । यत्र सत्यविद्यादौ "स यो हैवै तन्महद्यक्षम् प्रथमजम् वेदे''त्यादौ गुणभेदो नाम्नातः तत्र अक्ष्यादित्यादिविद्यासु स्थानभेदा द्विद्याभेदः । शब्दाद्यनुबन्धभेदादिति ॥

सूत्राऽर्थस्तु— सद्विद्यादयो नाना पृथग्भूताः ब्रह्मणएकत्वेऽपि सद्भूमाऽपहतपाप्मादि-शब्दभेदा दिति । पुनरधिकरणारम्भोऽयं ज्ञानस्याऽविधेयतानिरासार्थइति । अत्र ज्ञानस्याऽविधेयत्वं

द्देवभावसाक्षात्कारप्राप्तिरवागम्यते परविद्यास्वहंग्रहवतीषु । न तथा नाम-ब्रह्माद्युपासनासु काम्यासु साक्षात्कारफलत्वे किञ्चिन्मानमस्ति । तत्फलत्वा-भावे च तत्र तत्र भोगभूयस्त्वापेक्षया समुच्चय एव युक्तः, ब्रह्मफलवदेकत्वा-भावात् । तत एकं वा बहु वा समाश्रित्यानुष्ठेयमिति निर्णयः ॥

इति यथाकामाऽधिकरणम्

---

अथ यथाश्रयाऽधिकरणम् ३६

## अङ्गेषु यथाश्रयभावः ॥ ३-३-५९ ॥

इह पुनरुद्गीथाद्यङ्गावबद्धानां क्रत्वङ्गभावः स्वातन्त्र्यं वा ॥ इति संशये पूर्वपक्षन्यायः प्रवर्तते । उद्गीथादिष्वङ्गेषु श्रुतानामुपासनानामुद्गीथादि-वत् क्रत्वङ्गभाव एव । गोदोहनादिवत् स्ववाक्ये फलाश्रवणात् ॥

---

तादात्म्यभावनाप्रकर्षवशात् तथाभूतसाक्षात्कारकृतोपास्यदेवभावापत्ति ब्रह्मविषयास्वहङ्ग्रहोपासना सूच्यते । न काम्यासु । अतः काम्यविद्यानाम् यथाकाल मनुष्ठितानां कालान्तरे चित्तविक्षेपेऽ प्यपूर्वद्वारा फलजनकत्वाऽविरोधात्समुच्चयोपपत्तिरिति भावः ॥

इति यथाकामाऽधिकरणम्

---

अथ यथाश्रयाऽधिकरण ३६

अभ्युदयार्थोपासनवदङ्गाश्रयोपासनानामपि यथाकाम्यं प्रतिपाद्यतइति सङ्गति मभिप्रेत्य संशयं दर्शयति—इहपुनरिति । पुनश्शब्दस्तन्निर्धारणानियम इत्यधिकरणे निर्णीत एवार्थे कैश्चन हेतुभिः पुनश्शङ्कोत्थान मित्यगतार्थतां सूचयति—यथाश्रयभाव इत्येत द्व्याचष्टे—उद्गीथव दिति । यथा—उद्गीथादीना मुपासनाश्रयाणां क्रत्वङ्गस्तोत्रसम्बन्धेन क्रत्वङ्गभाव स्तयो-पासनानामपि क्रत्वङ्गोद्गीथादिसम्बन्धेनेत्यर्थः ॥

ननु गोदोहनादीनां प्रणयनाद्याश्रितानामपि प्रणयनादिवत् क्रत्वङ्गभावो नाऽस्ति । तथा किंनस्यादित्याशङ्क्य, यथाश्रयभाव इत्यनेन विवक्षितं तद्वैषम्य माह—स्ववाक्य इति ।

ध्येयतादात्म्याभिमानात् । तदेकं परित्यज्याऽन्यत्र गमने चित्तविक्षेपः स्यात् । अतो विकल्प एव ॥

इति विकल्पाऽधिकरणम्

---

अथ यथाकामाऽधिकरणम् ३९

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्

॥ ३—३—५८ ॥

इह ब्रह्मसाक्षात्कारव्यतिरिक्तफलानामपि विद्यानां पूर्वाऽधिकरणन्याय इति सन्देहे प्राप्तेऽभिधीयते—न पूर्वाऽधिकरणन्याय इह सम्भवति, वैषम्यात् । 'देवोभूत्वा देवानप्येति' इति जीवत एव भावनाप्रकर्षवशा

---

ब्रह्मानन्दानुभवरूपे मोक्षे भूयस्त्वाल्पत्वविशेषो नसम्भवति । तथाऽपि कासुचिद्विद्यासु लोकविशेषप्राप्तिपूर्विका ब्रह्मप्राप्तिः । यथा मधुविद्यायाम् वस्वादिलोकप्राप्तिपूर्विका । उपकोसलविद्याया मग्निलोकप्राप्तिपूर्विका इत्येवमन्तराळप्राप्यफलविशेषस्य विद्यमानत्वा त्तल्लिप्सायास्समुच्चयोऽप्युपपद्यत इति भावः । अविशिष्टत्वा दिति । सकलविषयभोगविरक्तानां मुमुक्षूणां ब्रह्मानुभवएकएव उद्देश्यं फलम् । नत्वन्तराळे भवदपि वसुभावादिकम् । अत उद्देश्यफलस्यैकत्वा द्विद्यानां विकल्पएवेत्यर्थः । चित्तविक्षेपस्स्यादिति । एकस्यां विद्याया मभिरतस्य तत्रैकाग्र्यसिद्धये चित्तविक्षेपसमाधानाऽर्थमुपासनाऽनुष्ठानकालव्यतिरिक्तकालेष्वनुष्ठेयं मौनं सहकार्यन्तरविध्यधिकरणे प्रदर्शयिष्यते । अतो नाऽस्ति विद्यान्तरावकाश इति भावः ॥

इति विकल्पाऽधिकरणम्

---

अथ यथाकामाऽधिकरणम् ३५

प्रत्युदाहरणसङ्गत्या इदमधिकरणम् । पूर्वाऽधिकरणन्याय इति । अभ्युदयफलानाम प्युपासनानां मोक्षफलकोपासानावदुपासनात्वा दुपास्यसाक्षात्कारापेक्षत्व मविशिष्टमिति भावः । न तथा नाम-ब्रह्माद्युपासनास्विति । "देवोभूत्वा देवानप्येती" ति जीवतएवोपास्य

## गुणसाधारण्यश्रुतेश्च ॥ ३–३–६२ ॥

'तेनेयं त्रयीविद्या वर्तते ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति' इति सर्वतः सञ्चरतः प्रणवस्य गुणत्वेनोपासनस्य सञ्चारादप्युपासनोपादाननियमोऽवगम्यते । तेनेति हि प्रकृतपरामर्शशब्दः, प्रकृतं सोपासनमेव प्रणवं परामृशति । अतः पूर्वोक्त उद्गीथाद्युपासनाना मनियमो न सम्भवति ॥ इति प्राप्ते सिद्धान्त उच्यते ॥

## न वा तत्सहभावाश्रुतेः ॥ ३—३—६३ ॥

अङ्गभावो हि सहभावः । तदश्रवणादेषां न तद्भावः । 'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' इति फलान्तरसाधनतयाऽवगतानामुपासनाना मङ्गभावाभावात् । 'उद्गीथमुपासीत' इत्युद्गीथाश्रयतामात्रप्रतिपादना न तेषामङ्गावबद्धानां क्रत्वङ्गभावः ॥

## दर्शनाच्च ॥ ३—३—६४ ॥

'एवंविद्ध वै ब्रह्मा यज्ञम् यजमानम् सर्वांश्चर्त्विजोऽभिरक्षति' इति ब्रह्मणो वेदनेन सर्वरक्षणं वदन्ती श्रुतिरुद्गातृप्रभृतीनां वेदनस्या-

---

प्रणवगुणत्वेनाऽवगतस्योपासनस्य साधारण्यं हि श्रूयते । ततोऽप्यङ्गभाव एवेति सूत्रार्थः ॥

नवोपादाननियमः । तत्सहभावाऽश्रुतेः क्रत्वङ्गभावाश्रुतेरित्यर्थः ॥

## शिष्टेश्च ॥ ३–३–६० ॥

'उद्गीथमुपासीत' इति विधेः 'यदेव विद्यया करोति' इत्यत्र विध्यभावाच्चाङ्गभाव एव ॥

## समाहारात् ॥ ३–३–६१ ॥

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरन्ति' इत्युपासनस्य समाहारे नियमो दृश्यते। अतोऽपि क्रत्वङ्गभावः। दुरुद्गीथो वेदनहीन उद्गीथः। वेदनहानौ अन्येन समाधानं ब्रुवद्वाक्यं हि तस्य नियमेनोपादानं दर्शयति। नियमाच्चाङ्गभावः ॥

---

गोदोहनवाक्ये पशुकामपदसमभिव्याहारा तृतीयया फले गोदोहनं विनियुङ्क्तइति युक्तम्। तस्य फलार्थत्वात्। इह तु स्ववाक्ये फलाश्रावणेन तादर्थ्याप्रतीतेः। प्रत्युत द्वितीयया क्रत्वङ्गसंस्कारस्यैव च प्रतीते रुत्पत्तिवाक्येन क्रत्वङ्गत्वावधारणेसति विद्ययेति वाक्यान्तरे फलश्रावण मकिञ्चित्करमिति भावः ॥

अङ्गेषूद्गीथादिष्वाश्रिताना मुपासनानां यथाश्रयभावः उद्गीथादिवदङ्गभावः। गोदोहनादिव तस्मिन्वाक्ये फलाश्रावणा दङ्गभावो नविरुद्ध्यत इति सूत्रार्थः ॥

उद्गीथाङ्गत्वे विधिश्रावणमस्ति न फलार्थत्वइति वैषम्याऽन्तरम्। यदितु विधिश्रावणाभावेऽपि "यदेव विद्यये" ति तृतीयाश्रावणमस्तीति तत्फलाविरुद्धत्वे विधिः कल्प्येत तयाऽपि न तत्प्रथमप्रतीतिक्रत्वङ्गत्वबाधकम्। यथा प्रस्तरप्रहरणस्य सूक्तवाक्येन प्रस्तरं प्रहरतीति विहितस्य दर्शपूर्णमासप्रकरणावगते तदङ्गभावे सत्येव मान्त्रवर्णिकेन फलेनाऽप्यन्वय स्तथाऽत्राऽप्युपपत्तिरिति भावः ॥

शिष्टिः–शासनं विधानम्। उद्गीथमुपासीत इति विधानाच्च वर्तमाननिर्देशावगतफलसम्बन्धात्प्रागेवोद्गीथसम्बन्धोऽवगत इति, तदङ्गभावो नविरुद्ध्यत इति सूत्राऽर्थः ॥

यमुद्गीथ मनुसमाहरन्तीति उद्गीथवेदनहानावन्येन समाधानं ब्रुवत् वेदनस्योपादाननियमं दर्शयति–दुरुद्गीथमुद्गीथम् ॥

नियमेनानङ्गतां दर्शयति । अतः पूर्वोक्तउपासनानामनियमो युक्त एव ॥

इति यथाश्रयाऽधिकरणम्



इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये

तृतीयाध्यायस्य तृतीयः पादः

' एवंविद्ध वै ब्रह्म यजमानं सर्वांश्चर्त्विजोऽभिरक्षती' ति ब्रह्मणो वेदनेन सर्वरक्षणं वदन्ती श्रुतिः उद्गातृप्रभृतीनां वेदनस्याऽनियमेनाऽनङ्गतां दर्शयति ॥

इति यथाश्रयाऽधिकरणम्



इति श्री नागलिङ्गशिवाराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां

श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीय

ब्रह्मसूत्रभाष्यव्याख्यायां तृतीयाध्यायस्य

तृतीयः पादः



# शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः

॥ ३—४—२ ॥

न विद्यातः पुरुषार्थः कुतः ? ' तत्त्वमसि ' इत्यादिसामानाधिकरण्येन कर्मसु कर्तुरेव ब्रह्मत्वावगमात् । तद्वेदनस्य तत्संस्कारतया कर्मशेषत्वात् । फलश्रुतिस्तु 'द्रव्यसंस्कारकर्मसु' इति न्यायेनार्थवाद एव । अतो न विद्यातः पुरुषार्थ इति जैमिनिराचार्यो मन्यते ॥

# आचारदर्शनात् ॥ ३—४—३ ॥

आचारोऽपि दृश्यते । अश्वपतिः केकयो ब्रह्मावेत् ' यक्ष्यमाणो ह्वै

---

शेषत्वादिति हेतुमुपपादयन्व्याचष्टे—तत्त्वमसीति । "द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादस्स्या " दिति जैमिनिसूत्रे

"यस्य पर्णमयी जुहूर्भवति न स पापगम् श्लोकम् शृणोति ।
यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते " ।

इत्यादिविधिविधेयेषु वाक्यप्रकरणाऽवगतक्रत्वङ्गभावेषु पर्णादिद्रव्येष्वञ्जनादिसंस्कारेषु फलश्रावण मर्थवाद इति निर्णीतम् । तन्न्यायेनेत्यर्थः । तत्र ह्यव्यभिचरितक्रतुसम्बन्धिजुहूद्वारा वाक्येन पर्णतायाः क्रतुशेषत्व मुक्तम् । स न्याय इहाऽपि समानः । जीवएव हि ब्रह्म तत्त्वमसीत्यादि सामानाधिकरण्यात् ॥

स यद्यपि लौकिकेष्वपि कर्मसु कर्ता भवति तथाऽपि तत्कर्तृत्वस्य देहाद्व्यतिरेकेऽप्युपपत्तेः देहातिरिक्त आत्मा पारलौकिकफलैः क्रतुभिरेवापेक्ष्यतइति स तावत्क्रत्वव्यभिचारी । अत "आत्मानमुपासिते"त्यादिषु द्वितीया श्रुत्या तत्संस्कारतयाऽवगता विद्या तद्द्वाराक्रतुशेषभूतैवेत्यर्थः । तत्त्वमसीत्यादिसामानाधिकरण्येन ब्रह्मणः कर्मसु कर्तृत्वावगमा द्विद्यायाः कर्तृसंस्कारद्वारा कर्मशेषत्वा त्तत्र पुरुषार्थवादो अर्थवादमात्रम् । यथा " अन्येषु द्रव्यसंस्कारादिष्विति जैमिनिराचार्यो मन्यत इति सूत्राऽर्थः ॥

ननु—तत्त्वमसीत्यादिसामानाधिकरण्यम् शरीरशरीरिभावनिबन्धनमित्यसकृदुपपादितम् कथ मिह तदपह्नवेन पूर्वपक्ष इत्याशङ्क्य विद्यायाः क्रतुशेषत्वप्रत्यायकं श्रुतिलिङ्गादिकं तदुपोद्बलकमस्तीतिदर्शयतु मुत्तरसूत्राणि ॥

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाराध्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ तृतीयाध्यायस्य

## चतुर्थः पादः

### अथ पुरुषार्थाऽधिकरणम् १

पूर्वत्रोपपादितः परविद्याप्रकारः । इह तु विद्यासहकारिण आश्रमधर्मादीन् निरूपयितुं विद्यात एव पुरुषार्थ इति दर्शयति —

**पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ ३—४—१ ॥**

अतो विद्यात एव पुरुषार्थः 'ब्रह्मविदाप्नोति परम्' 'ज्ञात्वा शिवम् शान्तिमत्यन्तमेति' इत्यादिशब्दादिति भगवान् बादरायणो मन्यते ॥ तत् सम्भवति न वेत्युभयश्रुतिदर्शनात् संशये सति पूर्वपक्षः प्रवर्तते—

### अथ पुरुषार्थाऽधिकरणम् १

प्रधानभूतविद्याप्रकारनिरूपणाऽनन्तरन्तदङ्गभूताश्रमधर्मादिनिरूपण मिति पूर्वपाद-सङ्गतपादार्थप्रदर्शनपूर्वकं विद्यायाः स्वातन्त्र्येण फलसाधनत्वे सिद्धएव तदङ्गकर्मविशेषचिन्तनं युक्तमिति विद्यायाः कर्माङ्गत्वशङ्कानिराकरणार्थम् प्रथमाऽधिकरणं तदुपोद्घातत्वेनाऽवतारयति-पूर्वत्रेति । सिद्धान्तोपक्रममिदमधिकरणमिति सिद्धान्तप्रतिज्ञापरतया सूत्रं व्याचष्टे—अत इति ॥

नानाशब्दादिभेदादित्याद्यधिकरणेषु [ ब्र. अ. ३—पा. ३—सू, ५६ ] प्रस्तुता विद्या सर्वनाम्ना परामृश्यत इति भावः । तदिति । विद्यातः पुरुषार्थ इत्येतत् सम्भवति नवेति विद्या-स्वातन्त्र्यतत्कर्माऽङ्गभावपर्यवसाय्युभयविधश्रुतिदर्शनात्संशय इत्यर्थः ॥

इत्यादावर्थज्ञानपर्यन्ताध्ययनवतः कर्म विधीयते । अतश्च ज्ञानस्य कर्माङ्गत्वम् ॥

## नियमात् ॥ ३—४—७ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इत्यात्मविदो जीवनस्य कर्मसु विनियोगो नियम्यते । अतश्च विद्या कर्माङ्गमिति । नातः पुरुषार्थ इति ॥ अथ सिद्धान्त उच्यते—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ३—४—८ ॥

न विद्यायाः कर्मशेषत्वम्, अपितु विद्ययैव पुरुषार्थ इति बादरायणस्य मतमेव युक्तम् । कर्तुः प्रत्यगात्मनोऽर्थान्तरभूतस्यैव वेद्यतयोपदेशात् । तथाहि 'बहु स्याम् प्रजायेयेति' 'स कारणं करणाधिपाधिपः' 'विश्वाधिको रुद्रो महर्षिः' इत्यादिवाक्येषु वेद्यस्य ब्रह्मण आधिक्यं दृश्यते । अतो न विद्यायाः कर्मशेषत्वम् ॥ यदुक्तमाचारदर्शनं तत्राह—

---

आचार्यकुलवासी सन् वेदमधीत्य यथाविधानं श्रुत्युक्तनियमैर्युक्तस्सन्नित्यर्थः । एवं तद्वतः—विद्यावतः । विधानात्—कर्मविधानादपि विद्या कर्माङ्गमेवेत्यर्थः ॥

"ईशावास्य मिदं सर्वं" मित्यात्मोपदेशपूर्वकं "कुर्वन्नेवे" ति श्रावण मात्मविदो जीवनस्य कर्मसु विनियोगपरमिति विद्यायाः कर्माङ्गत्वसिद्धिरिति भावः ॥

एव मौपनिषदस्यात्मज्ञानस्य कर्मसु विनियोगसिद्धौ तदुपोद्बलितं तत्त्वमस्यादिवाक्यं जीवस्वरूपमेव ब्रह्म नान्यदिति प्रतिपादनपरम् । तत्रच जगत्कारणत्वाऽपहतपाप्मत्वादिवर्णनं स्तुत्यर्थमिति पूर्वपक्षाऽभिप्रायः ॥

तुशब्देन पक्षो व्यावर्त्यते । एवं विद्यातएव पुरुषार्थइति बादरायणस्य मतमेव युक्तम् । कुतः ? अधिकोपदेशात्—कर्तुः जीवादर्थान्तरभूतस्य ब्रह्मणःवेद्यतया उपदेशात् । तद्दर्शनात्—"विश्वाधिको रुद्रो महर्षि" रित्यादिना वेद्यस्य ब्रह्मणः आधिक्यस्य दृश्यमानत्वादित्यर्थः । "अधिकन्तु भेदनिर्देशा"दित्यादिसूत्रैः प्राग्व्यवस्थापितएव जीवाधिकब्रह्मोपदेशोऽनेन सूत्रेण स्मार्यते ॥

भगवन्तोऽहमस्मि ' इत्याह । एवं केकयप्रभृतीनां ब्रह्मविदामपि कर्म प्राधान्येनावगम्यते । अतोऽपि विद्या कर्माङ्गमेव ॥

## तच्छ्रुतेः ॥ ३–४–४ ॥

'यदेव विद्यया करोति' इति श्रुत्यैव विद्यायाः कर्मसु विनियोगादपि कर्माङ्गत्वम् । यत् करोति तद्विद्यया इति हि श्रुतेरर्थः ॥

## समन्वारम्भणात् ॥ ३—४—५

' तम् विद्याकर्मणी समन्वारभेते ' इति विद्याकर्मणोरेकस्मिन् पुरुषे साहित्यं दृश्यते । अतश्च तदङ्गत्वमेव विद्यायाः ॥

## तद्वतो विधानात् ॥ ३—४—६ ॥

' आचार्यकुलाद्वेदमधीत्य यथाविधानम् गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत् '

---

इह यद्यपि विद्यानिष्ठानां केकयप्रभृतीनां कर्मानुष्ठानं कर्मणो विद्याङ्गत्वेऽपि सम्भवति तथाप्युभयथोपपन्नम् । " तदात्मानमुपासीते " ति द्वितीया श्रुतिप्रत्ययाऽवगतविद्यासंस्कार्यभावपारलौकिकात्मरूपकर्तृपस्थापितक्रतुशेषत्वाऽवगतिस्वारस्याऽनुरोधात्कर्मप्राधान्ये तल्लिङ्गं भवतीति भावः ॥

विद्ययेति तृतीया श्रुतेश्चैवमित्याह—

"यदेव विद्यया करोती"त्यादिश्रुत्यैव विद्यायाः कर्मसु विनियोगादपि तस्याः कर्माङ्गत्वम् प्रतीयते । नच प्रकरणेन श्रुते विद्याविशेषोद्गीथविषयोपासने विनियोगइति शङ्क्यम् , श्रुतेः प्रकरणस्य दुर्बलत्वात् ॥

"तम् परलोकम्प्रयान्तम् पुरुषम् विद्याकर्मणी समन्वारभेते–अनुवर्तेते " इति द्वन्द्वाऽवगतसाहित्ययोः विद्याकर्मणोः फलदानायाऽनुवृत्तिवचनमपि कर्तु रात्मनः कर्मशेषत्वमित्यादिन्यायेन विद्यायाः कर्माङ्गत्वसाधकमेवेति भावः ॥

## अध्ययनमात्रवतः ॥ ३-४-१२ ॥

'वेदमधीत्य' इत्यध्ययनमात्रवत एव कर्मविधानान्न विद्या कर्माङ्गम्। अध्ययनविधिर्ह्यक्षरग्रहणमात्रे पर्यवस्यति। अर्थावबोधपर्यन्तत्वेऽप्यर्थज्ञानादर्थान्तरभूता विद्या। उपासीतेति विहिता विद्या प्रत्ययावृत्तिरूपा। अतोऽस्याः क्वापि न विशेषणभावः ॥

## नाविशेषात् ॥ ३-४-१३ ॥

'कुर्वन्नेवेह कर्माणि' इत्यत्र स्वतन्त्रे कर्मणि विद्वदायुषो विनियोग इति विशेषहेतुर्न दृश्यते। 'ईशावास्यमिदं सर्वम्' इति विद्याप्रकरणाच्च विद्याङ्गभूतमेतत् कर्मेति विज्ञायते। अतो न विद्यायाः कर्माङ्गत्वम् ॥

## स्तुतयेऽनुमतिर्वा ॥ ३-३-१४ ॥

विद्यामाहात्म्यात् सर्वदा कर्माणि कुर्वन्नपि तैर्न लिप्यत इति हि वाक्यशेषः। अतश्च विद्याया एव प्राधान्यम् ॥

---

"तम् विद्याकर्मणी समन्वारभेते विद्या स्वस्मैफलाय कर्मच स्वस्मैफलायाऽन्वारभत" इति विभागो द्रष्टव्यः। यथा क्षेत्ररत्नविक्रयणे च शतद्वयमिति विनियुक्तमित्यत्र क्षेत्रार्थम् शतम्, रत्नार्थम् शतमिति विभाग इत्यर्थः॥

वेदमधीत्येत्यध्ययनमात्रवतएव कर्मविधानान्न विद्या कर्माङ्गम्। अध्ययनमक्षरावाप्तिफलकमितिपक्षे विद्यायाः कर्माङ्गत्वशङ्काया एवाऽनवकाशः। अथ तस्य अर्थज्ञानपरत्वमिति पक्षेऽपि उपासीतेति विहितायाः प्रत्ययावृत्तिरूपाया विद्यायाः अर्थज्ञानादतिरिक्तत्वेन न तस्याः कर्माङ्गत्वं कथमपि प्रसज्यतइति भावः॥

'कुर्वन्नेवेहकर्माणी' त्यत्र स्वतन्त्रे कर्मणि विद्वदायुषो विनियोगइति विशेषहेतुर्नविद्यते। कर्मणो विद्याङ्गत्वेनाऽप्यविरोधात्। ईशावास्यमिति विद्यायाः प्रकरणाच्च विद्याङ्गमेव कर्मेति निर्णीयते॥

## तुल्यन्तु दर्शनम् ॥ ३-४-९ ॥

विद्यायाः प्राधान्येऽपि तुल्यमाचारदर्शनम्, न केवलं कर्मण एव। 'एतद्ध स्म वै तद्विद्वांस आहु ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे किम् प्रजया करिष्याम' इत्यादौ ब्रह्मविदां कर्मत्यागो हि दृश्यते। अनुष्ठानन्तु फलाभिसन्धानरहितस्य कर्मणो विद्याङ्गत्वेन। त्यागस्तु फलाभिसन्धानयुक्तस्येति विरोधाभावात् कर्मण एव विद्याङ्गत्वमिति विद्यायाः प्राधान्यमेव॥ 'यदेव विद्यया' इति यदुक्तं तत्राह—

## असार्वत्रिकी ॥ ३-४-१० ॥

'यदेव विद्यया करोति' इति न सार्वत्रिकी विद्योच्यते, यदेव विद्ययेति प्रसिद्धवन्निर्देशात्। प्रसिद्धिरप्युद्गीथविद्याया एव। 'यदेव विद्यया करोति तदेव वीर्यवत्तरम्' इति प्रकृतोद्गीथविद्यायास्तद्युक्तस्य कर्मणो वीर्यवत्तरत्वसाधनभावो विधीयत इति न विद्या कर्माङ्गम्॥ यदुक्तं 'तम् विद्याकर्मणी' इति तत्राह—

## विभागः शतवत् ॥ ३-४-११ ॥

'तम् विद्याकर्मणी समन्वारभेते' इत्यत्र विद्याकर्मणोर्भिन्नफलत्वेन विद्या च स्वस्मै फलायान्वेति, कर्म च स्वस्मै फलायान्वेति इति विभागः, यथा क्षेत्ररत्नविक्रयणेन शतद्वयमित्यत्र क्षेत्रार्थं शतं रत्नार्थं शतमिति विभागः॥

---

विद्यायाः प्रधानत्वेऽपि ब्रह्मविदामाचारदर्शनस्तुल्यमेव। "ऋषयः कावषेया" इत्यादौ कर्मणामननुष्ठानमपि दृश्यते। कर्मानुष्ठानन्तु फलाभिसन्धिरहितस्य कर्मणो विद्याङ्गत्वात्। तत्त्यागस्तु फलाभिसन्धियुक्तस्य विद्याविरोधित्वादिति भावः॥

"यदेव विद्यया करोती" ति श्रुतिर्न सर्वविद्याविषया। किन्तु उद्गीथविद्यामात्रविषया। तस्मा द्विद्या कर्माङ्गमिति नयुक्तमित्यर्थः॥

अथ परामर्शाऽधिकरणम् २

## परामर्शम् जैमिनिरचोदनाच्चापवदति हि ॥ ३–४–१८ ॥

पूर्वत्र 'त्रयो धर्मस्कन्धाः' इति त्रयाणामेवाश्रमाणां धर्माधारत्व मुक्तम्। अत एवात्र चतुर्थाश्रमधर्मसद्भावे सन्देहे सति पूर्वः पक्षः—'त्रयो धर्मस्कन्धाः' इत्यादौ चतुर्थाश्रमाचोदनात् "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इत्यादि चतुर्थाश्रमवचनमुपासनस्तुत्यर्थवादमेव जैमिनिर्मन्यते। अपवदति हि 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इति श्रुतिः चतुर्थाश्रमम्। अतोऽग्निहोत्रपरित्यागे महान् दोष इति नास्ति तत्परित्यागेनाश्रमान्तरमिति ॥ अथ सिद्धान्तः—

## अनुष्ठेयम् बादरायणः साम्यश्रुतेः ॥ ३–४–१९ ॥

गृहस्थाश्रमादिवदाश्रमान्तरमप्यनुष्ठेयमिति भगवतो बादरायणस्य

---

अथ परामर्शाऽधिकरणम् २

उपमर्दञ्चेति सूत्रेणाऽनेनच तत्र बाधक मुक्तम्। तत्रैतत्सूत्रोक्तम्बाधक माक्षिप्य समर्थयितु मधिकरणाऽन्तर मारभते ॥

त्रयो धर्मस्कन्धा इति ब्रह्मचर्यगार्हस्थ्यवानप्रस्थरूपा स्त्रयएव आश्रमा धर्माधारतया विहिताः। चतुर्थाश्रमस्य अचोदनात्—अविधाना च्चतुर्थाश्रमोऽस्ति वा न वेति संशये "एतमेव प्रव्राजिनो लोक मिच्छन्तः प्रव्रजन्ती"ति वचनम् परामर्शम् अनुवादरूपं उपासनस्तुतिवादमि त्यर्थमिति जैमिनि राचार्यो मन्यते। चतुर्थाश्रमे न केवलं विध्यभावः। अपितु निषेधोऽ प्यस्तीत्याह— "वीरहा वा एष देवानाम्प्रियः योऽग्निमुद्वासयते" इतिश्रुतिः तुरीयाश्राम मपवदति — प्रतिषेधतीति पूर्वः पक्षः ॥

एवञ्च—चतुर्थाश्रमस्यैवाऽभावात् कर्मानुष्ठानरहिते तत्र विद्यासद्भावेन विद्यायाः कर्माङ्गत्वम् प्रतिक्षेप्तुं नशक्यतइति भावः ॥

## कामकारेण चैके ॥ ३-४-१५ ॥

'किम् प्रजया करिष्याम' इत्यादिना कामकारेण विदुषो गार्हस्थ्यस्य त्यागमधीयत एके। अतोऽपि विद्या प्रधानभूता लक्ष्यते ॥

## उपमर्दं च ॥ ३-४-१६ ॥

विद्याया सर्वकर्मोपमर्दं चाधीयत एके—'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति। अतो न कर्मप्राधान्यम् ॥

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ ३-४-१७ ॥

ऊर्ध्वरेतस्सु चाश्रमेषु विद्यादर्शनात् तेष्वग्निहोत्राद्यसम्भवाच्च न विद्या कर्माङ्गम्। तथाहि—'त्रयो धर्मस्कन्धाः' इति वैदिके दृश्यन्ते त्रय आश्रमधर्माश्रयाः। अतो विद्यैव प्रधानभूता पुरुषार्थहेतुः। तस्यास्त्वङ्गतया प्रधानफलाभिसन्धिरहितस्य विहितकर्मणोऽनुवृत्तिरिति सिद्धम् ॥

इति पुरुषार्थोऽधिकरणम्

---

वाशब्दोऽवधारणे विद्याप्रकरणाद्विद्यास्तुतये कर्मानुमतिरेव। विद्यामाहात्म्यात्सर्वदा कर्माणि कुर्वन्नपि तैर्नलिप्यत इति "न कर्मणा लिप्यते नर" इति वाक्यशेषाद्विज्ञायते। ततश्च विद्याङ्गमेव कर्म ॥

"किं प्रजया करिष्याम" इत्यादिना एके शाखिनः कामकारेण गार्हस्थ्यस्य त्यागमधीयते। अतोऽपि विद्येति। नहि कर्मणः प्राधान्ये बुद्धिपूर्वम् प्रधानं त्यक्त्वा अङ्गानुष्ठानं युज्यते। तस्माद्विद्यैव प्रधानमिति भावः ॥

सर्वकर्मेति। विद्योदयात्प्राचीनं विद्याविरोधिफलं यत्कर्म तस्य सर्वस्याऽप्युपमर्दमित्यर्थः ॥

ऊर्ध्वरेतस्सु चाश्रमेषु ब्रह्मविद्याया दर्शनात्तेषु चाऽग्निहोत्रादिकर्मणोऽभावादपि न विद्या कर्माङ्गमित्यर्थः। एतेन सिद्धमर्थमाह—अत इति ॥

इति पुरुषार्थोऽधिकरणम्

## विधिर्वा धारणवत् ॥ ३-४-२० ॥

'उपरि हि देवेभ्यो धारयति' इत्यत्राप्राप्तत्वेन यथा विधिः। तद्वदत्रापि विधिरेव। अथवा। जाबालश्रुतौ प्रत्यक्षविधिरप्यस्ति 'ब्रह्मचर्यम् समाप्य गृही भवेत् गृही वा वनी भूत्वा प्रव्रजेत' इति। नात्र क्रमे नियमः। 'उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत तदहरेव प्रव्रजेत्' इति श्रुतेः। जन्मान्तरसुकृतपरिपाकेन विशुद्धान्तःकरणस्य ब्रह्मचर्यादेव पारिव्राज्यम् भवति॥ "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत। अनपाकृत्य मोक्षन्तु भजमानो व्रजत्यधः॥" इत्यादिनिषेधस्त्वविरक्तविषयः। 'वीरहा वा एष देवानाम् योऽग्निमुद्वासयते' इत्यग्न्युद्वासननिषेधात् ब्रह्मचर्यादेव पारिव्राज्यम न गार्हस्थ्यात्परमिति केचित्। तथा सति 'वनी भूत्वा प्रव्रजेत्...उत्सन्नाग्निरनाग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इत्यादिविधिवैयर्थ्यं स्यात्। अतो ब्रह्मचर्यादेव प्रव्रजेदिति वा, वनी भूत्वा प्रव्रजेदिति वा न निर्बन्धः कार्यः। ब्रह्मचर्यादेव प्रव्रजेदिति वदतामयमभिप्रायः— साग्निरनग्निकश्चेति द्वावेवाश्रमौ। तत्र ब्रह्मचारी परिव्राट् च अनग्निः, गृहस्थो वानप्रस्थश्च साग्निः। अग्निमाधायोद्वास्य पारिव्राज्यात् ब्रह्मचर्यात् पारिव्राज्य

" अधस्तात्समिधंधारयन्ननुद्रवे दुपरि हि देवेभ्यो धारयती"ति मृताग्निहोत्रप्रकरणगतश्रुतौ लिङ्विभक्तियोगा दधोधारणइवाऽप्राप्तत्वा दुपरिधारणेपि विधिराश्रीयते "विधिस्तु धारणेऽपूर्वत्वा"दिति पूर्वतन्त्राधिकरणे। सोऽत्र दृष्टान्तीकृतः॥

अवधारणार्थो वाकारः। एवं जाबालोपनिषदि श्रुतानाश्रमविधीन्करेणपिधाय प्रत्यक्षविध्यभावेपि गार्हस्थ्यादिवत्सन्न्यासस्याऽपि विधिकल्पने नानुष्ठेयत्वसिद्धिरप्रत्यूहेति समर्थितम्। इदानीं विधिं सिद्धंकृत्वा चिन्तामुद्धाटयति— अथवेति॥

वाशब्दोऽवधारणार्थः। सर्वेषामाश्रमाणां विधिरेवाऽयम् धारणवत् यथा— "अधस्तात्समिधंधारयन्ननुद्रवेत् उपरिहि देवेभ्योधारयती"त्यनुवादरूपे प्युपरिधारण स्याप्राप्तत्वेन विधि

मतम् । तत्र 'त्रयो धर्मस्कन्धाः' 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इति सर्वाश्रमसाम्यश्रुतेः । अग्न्युद्वासनदोषो गृहस्थविषय एव । अतश्चतुर्थाश्रमधर्मसद्भावः ॥

गृहस्थाश्रमवत् ब्रह्मचर्यवानप्रस्थसन्न्यासरूप माश्रमत्रयमप्यनुष्ठेयम् बादरायण आचार्यो मन्यते । कुतः ? त्रयोधर्मस्कन्धाः, एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति चतुर्णामप्याश्रमाणां साम्यस्य श्रूयमाणत्वादित्यर्थः ॥

ननु— अग्न्युद्वासने दोषश्रवणम् सन्न्यासस्याऽनुष्ठेयत्वकल्पनाविरोधीत्याशङ्क्याह— अग्न्युद्वासनं दोष इति । गृहस्थस्याऽपिहि निमित्तेसति विधित उत्सर्गेष्टिपूर्वकेत्यागे न दोषः । तस्मादवैधत्यागविषया दोषश्रुतिरिति प्रविव्रजिषोः त्यागविधिसद्भावा त्तस्याऽपि विधित स्त्यागो न दोषावह इति भाव ॥

किञ्च— विधितस्त्यागइव निषेधतस्त्यागोपि न दोषाऽवहः । अतएव— "अग्निहोत्रं गवालम्भं सन्न्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिः कलौ पञ्च विसर्जये" दिति । "चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानिच । कलौ यदा गमिष्यन्ति तदा त्रेतापरिग्रहः । सन्न्यासश्च नकर्तव्यो ब्राह्मणेन विजानते"ति कलौ निषेधादपि प्राप्तोऽग्निपरिग्रहाऽभावोपि न दोषाऽवहः ॥

ननु— निर्णयसिन्धौ अग्निहोत्रप्रतिषेधस्याऽर्थाधानपरता मङ्गीकृत्य चत्वार्यब्दसहस्रा णीत्यादिसामान्यवचनम् "यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते । सन्यासञ्चाग्निहोत्रञ्च ताव त्कुर्यात्कलौ युग" इति विशेषवचनेन बाधितमिति सन्यासाग्निहोत्रयोः कलावनुष्ठेयत्वं प्रमाधित मितिचे त्तत्सर्वमभिमानमात्रमेव ॥

अग्निहोत्रपरस्यार्थाधानपरत्वस्याऽप्रमितत्वात् । चत्वार्यब्दसहस्राणीति सङ्ख्याविशेष घटितवचनस्यैव विशेषवचनत्वेन यावत्पदघटितवचनस्यैव सामान्यवचनत्वेन च सामान्यविशेष वचनयोः व्यत्यासितत्वेन च तदुक्तस्य दुरुक्तत्वात् ॥

किञ्च— वैयाकरणसिद्धान्तमञ्जूषायाम् तत्कर्तृभिर्नागेशभट्टैः स्ववर्णविरुद्धाचारानुष्ठानाद्बहि- ष्करणसम्भावितवर्णविभागाऽभावेन प्रकृते वर्णव्यवहारमात्रस्यैव विद्यमानत्वव्यवस्थापनेन वर्ण- विभागस्यापि शशशृङ्गकल्पतया तद्वचनस्य विशेषवचनत्वाभ्युपगमेप्यग्निहोत्रसन्यासयोः परिग्रहासिद्धेश्चेत्यलम् ॥

ननु – त्रयो धर्मस्कन्धा इत्यत्रैतमेव प्रव्राजिन इत्यत्र च विधिविभक्त्यभावे कथ माश्रमाणामनुष्ठेयत्वसिद्धिरित्याशङ्क्य सार्वत्रिकीं गति माह —

जुहूरित्यादिन्यायावतारः, जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानात् । अतो रसतमत्वादिदृष्टिविधिरेव ॥

**भावशब्दाच्च** ॥ ३—४—२२ ॥

'उद्गीथमुपासीत' इति विधिप्रत्ययश्चात्र श्रूयते । अतोऽपि रसतमत्वदिदृष्टिविधिरिति ॥

इति स्तुतिमात्राऽधिकरणम्

अथ पारिप्लवाऽधिकरणम् ४

**पारिप्लवार्था इतिचेन्न विशेषितत्वात्** ॥ ३—४—२३ ॥

वेदान्तेषु विद्यारम्भे— 'प्रतर्दनो ह वै दैवोदासिः' इत्याद्याख्यायिका आम्नाताः । ताः पारिप्लवार्था उत विद्यास्तुत्यर्था इति संशयः ॥ किम्

"ओमित्येतदक्षरमुद्गीथमुपासीत । स एष रसानां रसतमः । परार्ध्योऽष्टमो यदुद्गीथ" इत्येतज्जातीयके किम् कर्माङ्गाश्रयाणां दृष्टिविधिराश्रयणीयः, उतोद्गीथादिस्तुतिमात्रम् ? इति संशये "इयमेवजुहूः स्वर्गो लोक आहवनीय" इतिवत्कर्माङ्गभूतोद्गीथादिसम्बन्धितयोपादाना द्रसतमत्वादेः तत्स्तुतिमात्रत्वमेव न रसतमत्वादिदृष्टिविधिरिति पूर्वःपक्षः ॥

राद्धान्तस्तु— जुह्वादिविधिवदुद्गीथादिविधेरत्राऽसन्निधाना द्रसतमत्वादेरप्राप्तत्वाच्च न स्तुतिमात्रं किन्तु दृष्टिविधिरेवेति ॥

नकेवलमुद्गीथादिविध्यसन्निधानमात्रं स्तुत्यर्थत्वं प्रक्षिपति — किन्तु दृष्टिविधित्वोपपादक मुपासनाविधिसन्निधानञ्चेत्यनेनसूत्रेणोक्तम् ॥

इति स्तुतिमात्राऽधिकरणम्

मेवातीव मुख्यमिति । अन्यथा श्रुतिविरोधापत्तेः । अतः सर्वाश्रमधर्मसिद्धिः ॥

इति परामर्शाऽधिकरणम्

---

अथ स्तुतिमात्राऽधिकरणम् ३

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३–४–२१ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्युपक्रम्य 'स एष रसानां रसतमः परमः पराध्योऽष्टमो य उद्गीथः' इत्येवंजातीयकोदाहरणे उद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयते न वेति संशयः ॥ किं तावत् प्राप्तम् ? नोद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयते, किन्तु, 'इयमेव जुहूः स्वर्गो लोक आहवनीयः' इतिवत् कर्माङ्गभूतोद्गीथाद्युपादाय तस्य रसतमत्वादिवचनं स्तुतिमात्रमिति चेदिति पूर्वपक्षसमाप्तिः ॥ सिद्धान्त उच्यते—नापूर्वत्वादिति । न स्तुतिमात्रं किन्तूद्गीथादिषु रसतमत्वादिदृष्टिर्विधीयत एव, अपूर्वत्वात् । न चैवं

---

राश्रीयते । एव मन्त्राश्रमाणामपि । अत ऊर्ध्वरेतस्स्वपि विद्यासद्भावा द्विज्ञातः पुरुषार्थ इति सूत्रार्थः ॥

इति परामर्शाऽधिकरणम्

---

अथ स्तुतिमात्राऽधिकरणम् ३

स्तुतिविधिप्रसङ्गादिदमधिकरणम् । इत्युपक्रम्येति । श्रूयतइतिशेषः । स एष इति । एषाम् भूतानां पृथ्वीरसइत्यारभ्य साम्नउद्गीथोरसइत्यनुक्रान्तानां पृथिव्यादीनां रसानां रसतमः । अतिशयितोरसः । परमउत्कृष्टः । उत्कृष्टत्वेहेतुः परार्ध्यः—परस्यब्रह्मणः अर्धं स्थानमर्हतीति परमात्मोपासनास्थानभूत इत्यर्थः । अष्टमः पृथिव्यादिरसापेक्षया । कोऽसावेवंभूतः यदुद्गीथः उद्गीथावयवप्रणव एवंभूतइत्यर्थः । इयमेवजुहूरित्यादिनिर्देशसाम्या दुद्गीथादिविधिसमभिव्याहाराच्च संशयंदर्शयति— किमिति । पूर्वपक्षमाह— नोद्गीथादिष्विति ॥

अथ अग्नीन्धनाऽधिकरणम् ९

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ३–४–२५ ॥

पूर्वत्रोपपादितोऽन्त्याश्रमसद्भावः । तस्य विद्यार्थमाधानाद्यपेक्षाऽस्ति न वेति संशयः॥ किं तावत् प्राप्तम् । ? विद्याङ्गत्वेन कर्मणो विधानात् विद्यावतामूर्ध्वरेतसां विद्याङ्गत्वेनाधानाद्यनुष्ठेयम् । इति प्राप्ते ब्रूमः । न तेषामाधानाद्यपेक्षा विद्या । 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति'

एकवाक्यतयाऽन्वयः — एकवाक्यतोपबन्धः । यथा "सोऽरोदी" दिति । तत्राऽपि समानोऽयं सिद्धान्तन्याय इतिभावः ॥

नचाऽऽख्यायिकानां स्तुतिमात्रप्रयोजनत्वेन व्यर्थप्रायता । विद्याप्रतिपत्तिसौकर्यस्याऽपि तत्प्रतिपत्तिसौकर्यत्वात् । आख्यायिकाश्रावणेह्यनवहिताअप्यवधानं लभन्ते । यथा — "उपायेन तु यच्छक्यम् नतच्छक्यम् पराक्रमैः" । इति नीतिशास्त्रोपदेशे "काकः कनकसूत्रेण कृष्णसर्पममारय" दित्याख्यायिकया आर्थवादिकालिङ्गदर्शनैश्च बहवोविध्यर्थाः पूर्वतन्त्रे निर्णीयन्ते । तत्सर्वमर्थवादानाम्प्रयोजनमिति नात्यन्तवैयर्थ्यमिति समभिव्याहृतविध्येकवाक्यत्वमख्यानानां युक्त मितिभावः ॥

इति पारिप्लवाऽधिकरणम्

---

अथ अग्नीन्धनाऽधिकरणम् ९

स्तुतिविधिप्रसङ्गागततदधिकरणद्वयमपहाय "परामर्शं जैमिनि" रित्यधिकरणेन सङ्गति न्दर्शयति— पूर्वत्रेति । यज्ञादिश्रुतेः कर्मत्यागश्रुतेश्च संशयः । आधानाद्यपेक्षायामूर्ध्वरेतस्सु चेति पुरुषार्थाऽधिकरणगुणसूत्रोक्तार्थाक्षेपात्सङ्गतिरनुसन्धेया । ऊर्ध्वरेतसामपीति । यद्यपि सन्न्यासिना विधिबलात्त्यक्ताः पूर्वं दाराग्निहोत्रादयः तथाऽपि निरङ्गेन विद्यामात्रेण फलाऽनिष्पत्तेरङ्गभूतयज्ञाद्यनुष्ठानस्यावश्यकत्वात् । तदर्थं दारान्तरंपरिगृह्य अग्न्याधानंकार्यम् । नच दारपरिग्रहेणसन्न्यूर्ध्वरेतस्त्वविरोधापत्तिः । विद्याङ्गकर्मार्थं दारपरिग्रहेऽपि भीष्मवदूर्ध्वरेतस्त्वोपपत्तेरितिच शब्देन द्योत्यते ॥

तावत्प्राप्तम् ? पारिप्लवार्था इति । अश्वमेधयागे राजानं सकुटुम्बमुपवेश्य तत्पुरतो वैदिकान्याख्यानान्यध्वर्युणा वक्तव्यानि । तदिदं पारिप्लवाख्यं कर्म ' पारिप्लवमाचक्षीत ' इति वाक्येन विहितम् । तत्र 'सर्वाण्याख्यानानि पारिप्लवे शंसन्ति ' इति विनियोगादुपनिषदारम्भगता अप्याख्यायिका स्तदर्था इति चेदिति पूर्वः पक्षः ॥ तत्रोत्तरम— न विशेषितत्वादिति । न पारिप्लवार्थास्ताः । ' प्रथमेऽहनि मनुर्वैवस्वतो राजा....द्वितीयेऽहनि यमो वैवस्वतो राजा ' इत्यादिना पारिप्लवार्थानामाख्यायिकानां विशेषितत्वात् ॥ औपनिषदाख्यायिकाः संनिहितविद्याविधिभिरेकवाक्यत्वात् विद्यार्था इत्याह—

## तथाचैकवाक्यतोपबन्धात् ॥ ३—३—२४ ॥

यथा ' सोऽरोदीत् ' इत्याद्याख्यानानां कर्मविधिभिरेकवाक्यता, तथा विद्याविधिभिरेकवाक्यतोपसम्बन्धाच्च विद्यास्तुत्यर्था एवेति ॥

इति पारिप्लवाऽधिकरणम्

---

अथ पारिप्लवाऽधिकरणम् ४

रसतमत्वादीना मुपास्यविषयसमर्पकत्ववदाख्यानानाम्पारिप्लवप्रयोगविधिशेषत्वं स्तुत्यर्थत्वाऽपेक्षया ज्यायः प्रवृत्तिविशेषकत्वादिति पूर्वपक्षोत्थानात्सङ्गतिः । सर्वाण्याख्यानानीत्यविशेषश्रावणा द्वाक्यशेषेविशेषसङ्कीर्तनाच्च संशयः ॥

उपक्रमश्रुतस्य सर्वाण्याख्यानानीत्यस्य वाक्यशेषगतेनाख्यानविशेषसङ्कीर्तनेन सङ्कोचो नयुक्तः । उपक्रमस्योपसंहारतः सर्वाख्यानश्रुतेराख्यानविशेषसन्निधानतश्च प्रबलत्वात् । इति पूर्वपक्षयति— तत्रेति ॥

विशेषितत्वादिति । अनन्तशाखागतसर्वाख्यानशंसनस्याऽशक्यत्वात् । सत्याञ्च तदाकाङ्क्षायां वाक्यशेषश्रुतेष्वेवाख्यानविशेषेषु सङ्कोचो युक्तइतिभावः ॥

एवं सर्वाख्यानानीत्यस्य सङ्कोचेसत्यौपनिषदानामाख्यानानां विद्याविधिसमभिव्याहारात् स्तुत्यर्थतया तदन्वयएवस्यादित्युत्तरसूत्राऽभिप्रायंदर्शयन्नवतारयति— औपनिषदेति ॥

अतो न विद्याङ्गत्वं कर्मणः। तस्मात् गृहिणामपि विद्या कर्मानपेक्षेति पूर्वः पक्षः ॥ सिद्धान्तस्तु—कर्मवत्सु गृहस्थेषु विद्याऽग्निहोत्रादिसर्वकर्मापेक्षा। 'यज्ञेन दानेन' इति श्रुतेः, यज्ञादीनां पारमेश्वरनियोगसिद्धत्वाच्च। यथाऽश्वो गमनसाधनभूतोऽपि स्वपरिकरबन्धापेक्षो गमने, तथा विद्याऽपीति। कर्मणः फलाभिसन्धिरहितत्वेन विद्यास्वरूपोपकार्यङ्गत्वा न्न तज्जन्यत्वं मोक्षफलस्य। किन्तु साक्षात् ज्ञानफलमेव मोक्षः। अतो गृहस्थानां यज्ञादिसापेक्षाविद्या। सर्वेषामाश्रमिणां स्वाश्रमविहितकर्मापेक्षेति युक्तं विद्यायाः कर्मापेक्षत्वम् ॥

इति सर्वापेक्षाऽधिकरणम्



स्वनियोगानुवर्तनेन प्रसन्नस्सन्नाप्रायिणमहरहरविच्छेदेनाऽनुष्ठेयां विद्यां चित्तकाग्र्यादिप्रदानद्वारा निर्वर्तयेदिति विद्यास्वरूपोपकारकाणि यज्ञादीनीत्येवं यज्ञादिश्रुतेरर्थवत्त्वसम्भवेनाऽनर्थकमर्थवादत्वमाश्रयणीयमितिभावः। यज्ञादीनाम् विद्याव्यभिचारं परिहरति— सर्वेषामाश्रमिणामिति। "यस्मिन्नाश्रमेस्थित्वा यो विद्यामनुतिष्ठति। तस्य तदाश्रमधर्मैर्विद्यास्वरूपोपकार" इतिनियमे नास्तिव्यभिचारः। "तमेतम् ब्राह्मणा विविदिषन्ती"ति श्रुतेरप्ययमेव तात्पर्यम्। तत्र वेदानुवचनेनेति ब्रह्मचारिधर्मजातम् लक्ष्यते। यज्ञेन दानेनेत्यनेन यज्ञदानप्रधानं गृहस्थधर्मजातं लक्ष्यते। तपसेत्यनेन कृच्छ्रचान्द्रायणपञ्चाग्निमध्यतपश्चर्याप्रधानम् वैखानसधर्मजातम्। अनाशकेनेत्यनेन अनशनप्रायाहृग्रासनियमप्रधानं यतिधर्मजातं लक्ष्यते। एवमाश्रमधर्मभेदेऽपि तदुपकार्यविद्याभेदो नप्रसज्यते। "यस्य यावत्स्वगृह्योक्तम् बहुवा स्वल्पमेववा। तस्य तावति शास्त्रार्थे कृते सर्वम् कृतम् भवेदि"ति स्मृत्युक्तरीत्या वर्णाश्रमकुलविशेषादिप्रयुक्तपारमेश्वरनियोगानुवर्तनस्यैकरूपफलत्वोपपत्तेरितिभावः ॥

इति सर्वापेक्षाऽधिकरणम्



इत्यादिश्रुतेस्तेषां कर्मत्यागेनैव विद्यावत्त्वावगमात्। किन्तु स्वाश्रमधर्मापेक्षा सा। तेषामाधानाद्यनुपपत्तेरिति ॥

इति अग्निन्धनाऽधिकरणम्

---

अथ सर्वापेक्षाऽधिकरणम् ६

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३-४-२६ ॥

पूर्वाधिकरणे निरूपितमन्त्याश्रमिणामनुपपत्तेराधानाद्यनपेक्षा विद्येति। तदिह गृहिणां विद्या तदपेक्षा न वेति संशयः ॥ एवं सति गृहस्थानामपि विद्याऽग्नीन्धनादिकर्मानपेक्षिणीति ब्रूमः। तस्य व्यभिचारेण विद्याङ्गत्वानुपपत्तेः। यत्तु विमता विद्या स्वाङ्गभूतकर्मापेक्षा अङ्गित्वात् प्रयाजाद्यपेक्षदर्शपूर्णमासवत्, इत्यनुमानम। तत्राधानादेः कीदृशमङ्गत्वं साध्यम्? प्रयाजादिवत् फलोपकारित्वं वा, अवघातादिवत् स्वरूपोपकारित्वं वा। नाद्यः। तज्जन्यत्वे मुक्तेरनित्यत्वं स्यात्। द्वितीये साध्यविकलो दृष्टान्तः।

---

नचाश्रमधर्मैरेव विद्यायास्साङ्गत्वसिद्धेः यज्ञाद्यनुष्ठानार्थमाधानदारसङ्ग्रहयोराक्षेपो नप्राप्नोतीतिवाच्यम्। यज्ञेनेत्यादितृतीयाश्रुत्या विशिष्ययज्ञादीनामपि विद्याङ्गत्वविधानात्। कर्मत्यागश्रुतिस्तु विद्यानङ्गकर्मविषयास्यादितिभावः। कर्मत्यागेनैवेति। तथाच विशेषविध्यनुसारेण यज्ञादिश्रुति गृहस्थविषयेतिभावः। सन्न्यासिनस्स्वाश्रमविशेषधर्मा स्त्रिषवणस्नानममधिकशौचाष्टग्रासादयः ॥ अग्नीन्धनमग्न्याधानम् ॥

इति अग्नीन्धनाऽधिकरणम्

---

अथ सर्वापेक्षाऽधिकरणम् ६

सन्न्यासिनामिव गृहस्थानामपि विद्याकर्मानपेक्षेति पूर्वपक्षोत्थानात्सङ्गतिः। यज्ञाद्यभावेऽपि विद्यादर्शनात् यज्ञादिश्रुतेश्च संशयः। पारमेश्वरनियोगसिद्धत्वाच्चेति। तथाच परमेश्वरः

शास्त्रपराङ्मुखी परविद्यामयपरमात्मतन्त्रोपनिषद्गोष्ठीसमुत्कण्ठारूपा सत्त्वकला श्रद्धा। विनिर्मुक्तसकलेतरदेवताराधना त्रिविधकरणसम्पाद्या विशिष्टाष्टाङ्गयोगिनी परमशिवपरिचर्यामयी वैदिकी क्रिया भक्तिः। परमानन्दावेशमयमहामोक्षलक्ष्मीदर्शनत्वरा मुमुक्षा। ऐहिकामुष्मिकसकलभोगपराङ्मुखत्वरूपेण वैराग्येण नित्यानित्यवस्तुनिर्धारणाकारेण विवेकेन च विशिष्टस्य शमादिसम्पत्क्रमेण सम्भवति मुमुक्षा। एते विवेकादयो मुमुक्षापर्यन्ताः परमधर्माः सर्वेषामाश्रमिणां विद्यार्थमविशेषेणानुष्ठेया इति ॥

इति शमदमाद्यधिकरणम्

अथ सर्वान्नानुमत्यधिकरणम् ८

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३-४-२८ ॥

प्राणविद्यायां पठ्यते 'न ह वा एवंविदि किञ्चनानन्नं भवति' इति। इह प्राणविद्यानिष्ठस्य सर्वान्नानुमतिः प्रतीयते। तदेषा युक्ता न वेति

---

विशेषणरूपां मुमुक्षामुपायमुखेन सम्भावयति—ऐहिकेति। नित्यानित्यवस्तुनिर्धारणादनित्येषु विषयेषु वैराग्यम्। ततश्शमादिसम्पत्त्या मुमुक्षेति क्रमः ॥

सूत्रार्थस्तु—यद्यपि गृहस्थो यज्ञादिकर्मसु विनियुक्तः तथाऽपि तु शमदमाद्युपेत स्स्यात्। कुतः? "शान्तो दान्त" इत्यादिना। तद्विधेः—शमादिविधेः। तदङ्गतया—विद्याङ्गतया विद्यानिष्पत्तये तेषामवश्यानुष्ठेयत्वाच्चेति। एकाग्रतासाध्यत्वाच्छमादिभिरेव विद्यासिद्धिरिति भावः। यज्ञादिकर्माण्यपि पापनिर्हरणद्वारा एकाग्रतासाधकानीत्याशयः ॥

इति शमदमाद्यधिकरणम्

अथ सर्वान्नानुमत्यधिकरणम् ८

यज्ञादीनाम् शमादीनाञ्च ब्रह्मविद्याशेषत्वमुक्तम्। तत्प्रसङ्गात्सर्वान्नानुमतेः प्राणविद्याशेषत्वमस्ति नवेति विचार्यते। "नहवा" इत्यादिविधिस्स्तुत्यर्थत्वानवधारणात्संशयः। प्राणविद्यानिष्ठस्य "किञ्चनानन्नम्भवती" ति सर्वान्नानुमतिः किम् सर्वदा? उत

अथ शमदमाद्यधिकरणम् ७

## शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ ३–४–२७ ॥

'शान्तो दान्त उपारतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानम् पश्येत्' 'श्रद्धाभक्तिध्यानयोगादवेहि' इत्यादिना विद्यायाः शमादिसम्पत्त्यपेक्षा श्रूयते। सा शमादिसम्पत्तिर्गृहिणां सम्भवति न वेति संशयः॥ यज्ञादिमत्तया बहुव्यापारव्याकुलानां तेषां तदुपरतिरूपा शमदमादिसम्पत्तिर्नसम्भवति इति प्राप्ते उच्यते—गृहस्थो विहितकर्मव्यापृतोऽपि निषिद्धकाम्यादिकर्मसु व्यापाररहितः शमाद्युपेतः स्यात्, 'शन्तो दान्तः' इत्यादिना 'श्रद्धाभक्तिध्यानयोगादवेहि' इत्यादिना च शमादेर्विहितत्वात्, विद्यानिष्पत्तये तदङ्गत्वेन तेषामवश्यानुष्ठेयत्वात्। आन्तराणां रागद्वेषादीनामानाविर्भूतिः शमः। सर्वेषामिन्द्रियाणामविहितव्यापारेभ्यो निवर्तनं दमः। निषिद्धकाम्यकर्मव्यापारोपरम उपरतिः। द्वन्द्वसहिष्णुत्वं तितिक्षा। विसृष्टतन्द्रादिव्याक्षेपस्य चित्तस्य परतत्त्वाभिमुख्यं समाधानम्। अपुरुषार्थसकलेतर-

---

अथ शमदमाद्यधिकरणम् ७

पूर्वाऽधिकरणे विद्याङ्गत्वेन गृहस्थानुष्ठेयतया व्यवस्थापितैर्यज्ञादिभिः शमादीनां विरोधाऽविरोधाभ्यां संशयः। शमादीनां सर्वव्यापारोपरतिरूपतया यज्ञादिभिर्विरोधोऽस्तीति पूर्वपक्षः॥

तेषां तदाश्रमविहितेतरव्यापारोपरतिरूपतया नास्तिविरोध इति सिद्धान्तः॥

विद्याविरोधिना मन्तरिन्द्रियव्यापाराणा मुपरमश्शमः। ज्ञानेन्द्रियव्यापाराणा मुपरमो दमः। कर्मेन्द्रियव्यापाराणामुपरम उपरितिः। परमात्मतन्त्रम्—परमाप्तेन शिवेन प्रणीतं सर्वज्ञानोत्तरादिशिवशास्त्रम्। तत्र विशिष्टानि भक्तेरष्टाङ्गानि। "मद्भक्तजनवात्सल्यम् पूजायाञ्चानुमोदनम्। स्वयमभ्यर्चनञ्चैव मदर्थेचाऽङ्गचेष्टनम्। मत्कथाश्रवणे प्रीतिः स्वरनेत्राङ्गविक्रिया। मन्नामकीर्तनं नित्यम् मयि कैतववर्जन" मिति शिवेनैव निरूपितानि। वैदिकी-क्रियेति। नतु तन्त्रोक्तप्रकारेति भावः। "मुमुक्षुर्वै शरणमहम् प्रपद्ये" इत्यादिश्रुत्युक्ताधिकारि-

## अबाधाच्च ॥ ३-४-२९ ॥

" आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः । स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ॥ " इत्याहारशुद्धेरबाधाच्च प्राणसंशय एव सर्वान्नानुमतिः ॥

## अपि च स्मर्यते ॥ ३-४-३० ॥

प्राणसंशय एव सर्वान्नानुमतिः स्मर्यतेऽपि— " प्राणसंशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ "

## शब्दश्चातोऽकामकारे ॥ ३-४-३१ ॥

तस्मात् ' ब्राह्मणः सुरां न पिबेत् ' इति कामकारनिवृत्तौ शब्दश्च भवति । अतश्च प्राणसंशय एव विदुषोऽपि सर्वान्नानुमतिः । अन्यथा निषिद्धाचरणेन परमेश्वरस्याज्ञाद्रोही स्यादिति भावः ॥

इति सर्वान्नानुमत्यधिकरणम्

---

स्योच्छिष्टस्य ग्रहणं मन्यलभ्यस्योदकस्य परिहरणञ्च दृष्टमिति अन्येषाञ्च सर्वान्नानुमतिरत्यन्तकष्टावस्थायामेवेति कैमुत्यन्यायसिद्धमित्युपसंहरति—अत इति ॥

सत्त्वशुद्धि रन्तःकरणशुद्धिः । ध्रुवा स्मृतिः । निरन्तरस्मृतिसन्तानरूपध्यानलाभः । आहारशुद्धेरबाधाच्च सर्वान्नानुमतिः प्राणसंशयएवेत्यर्थः ॥

सर्वसाधारणस्मृतिबलादप्येवमेवेति भावः ॥

सर्वान्नानुमतिबाधनक्षमप्रत्यक्षश्रुतिप्रदर्शनार्थमिदं सूत्रम् । कामकारनिवृत्ताविति प्रयोजनस्य निमित्तत्वविवक्षायां सप्तमी । ब्राह्मणस्सुरां नपिबति पाप्मना नसंस्पृशामि—पाप्मना संस्पृष्टो नभावामीति मत्वा सुरां नपिबतीत्यर्थः ॥

इति सर्वान्नानुमत्यधिकरणम्

संशयः ॥ किम् तावत् प्राप्तम् ? मानान्तरप्राप्तस्य भोजनस्याविधेयत्वादिह सर्वान्नानुमतिरप्राप्ता विधीयते । इति प्राप्ते समाधीयते । प्राणविद्यानिष्ठस्यापि सर्वान्नानुमतिं न सर्वदा, किन्तु प्राणात्यय एव । अधिकशक्तेरुषस्तेर्ब्रह्मविदोऽपि हि प्राणात्यय एवोच्छिष्टभक्षणादौ श्रुतिर्दृश्यते—' मटचीहतेषु कुरुष्वाटक्या सह जायया उषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास । स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे । स होवाच, नेतोऽन्ये विद्यन्ते यच्च ये म इमा उपनिहिता इति । एतेषां मे देहीति होवाच । तानस्मै प्रददौ । हन्तानुपानमिति । उच्छिष्टं मे पीतं स्यादिति होवाच । न स्विदेतेऽप्युच्छिष्टा इति ? न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानम् ॥ ' इत्यादिरूपा । अतः प्राणात्यय एव सर्वान्नानुमतिः परविद्यावतोऽपीति ॥

---

प्राणात्ययापत्ताविति संशयः । तत्र विशेषाऽनुपादानात्सर्वदेति पूर्वःपक्षः । न सर्वदा किन्तु प्राणात्ययापत्तावेव । तद्दर्शनादितिसूत्रशेषं व्याचष्टे—अधिकशक्तेरित्यादिना । मटच्यः—शलभादयः । ताभिर्हतेषु-कुरुषु-कुरुमस्येषु । आटक्या—अनुपजातस्तनादिव्यञ्जनया जायया सह उषस्तिर्ह —उषस्तिरिति नाम्ना प्रसिद्धः । चाक्रायणः—चक्रस्यापत्यम् । इभ्यग्रामे — इभमर्हतः हस्त्यारोहस्य ग्रामे । प्रद्राणकः—अन्नालाभात्कुत्सितां गतिं गतः । अत्यन्तकष्टावस्थां प्राप्तस्सन्नुवास । मार्गवशकात्मस्मिंश्चिद्दिवसे उषितवान् । सह—सकिल । कुल्माषान्—कुत्सितान्माषान् । जलपक्वकुळुत्थादिकान्वा खादन्तं इभ्यं बिभिक्षे । स इभ्यः किल उवाच । इतोऽस्मान्मया भक्ष्यमाणादुच्छिष्टकुल्माषराशेः अन्ये कुल्माषा नविद्यन्ते । यच्च ये—यस्मिन् राशौ । मे—मदर्थमुपनिहिताः भक्षणार्थं प्रक्षिप्ताः । इमे कुल्माषाः । इतोऽन्ये नविद्यन्तइति पूर्वेण सम्बन्धः । इत्युक्त उषस्तिरुवाच । एतेषां मे देहि-एतान्मह्यं देहीति । तानस्मैऋषये प्रददौ । पानाय समीपस्थमुदकं गृहीत्वोवाच । हन्तेति हर्षे । अनुपानं—इदमनुपानमपि गृहाण इत्युक्तः । ऋषिः प्रत्युवाच । उच्छिष्टं वै मे—मयापीतं स्यात् यदीद मुदकं पिबेयमित्युक्तः । इभ्यः प्रत्युवाच— नस्विदेतेप्युच्छिष्टाः— किमिते कुल्माषाअपि नोच्छिष्टा इति । एवमुक्त उषस्तिरुवाच " नवा अजीविष्यं नैव जीविष्यामीमानखादन् कामो म उदपानम् " इच्छातो ममोदपानं लभ्यत इति । एवम् ब्रह्मविदोप्यत्यन्तकष्टावस्थायामप्यनन्यलभ्यस्य कुल्माषमात्र

## सर्वथापि त एवोभयलिङ्गात् ॥ ३–४–३४ ॥

उभयत्र विनियोगेनोभयाकारत्वेऽपि त एव यज्ञादयः, सर्वत्र प्रत्यभिज्ञानात्। एवञ्च कर्मस्वरूपैक्ये सति संयोगपृथक्त्वन्यायेन न विरोधः। सकृत्प्रयोगेऽपि वचनद्वयबलेन कर्मण एकस्याप्याकारद्वयोपपत्तेः। यथा 'खादिरो यूपो भवति– खादिरम् वीर्यकामस्य यूपम् कुर्वन्ति' इत्यत्र वचनद्वयबलेन नित्यत्वम् काम्यत्वञ्चैकस्य खादिरत्वस्य, तद्वत्। ततो विदुषोऽप्यविदुषोऽपि विद्याङ्गतया विद्याहेतुतया विहिततया च सकृदेवानुष्ठेयम् यज्ञादिकमिति ॥

## अनभिभवञ्च दर्शयति ॥ ३–४–३५ ॥

'धर्मेण पापमपनुदति' इति श्रुतिर्विद्योत्पत्तिप्रतिबन्धकदुरितनिवर्तनेन विद्याया अनभिभवम् कर्मानुष्ठानकार्यञ्च दर्शयति। अतो न पूर्वोक्तविरोधः ॥

इति आश्रमकर्माऽधिकरणम्

---

उभयलिङ्गादित्यस्योभयत्र कर्मैक्ये प्रत्यभिज्ञानरूपाल्लिङ्गादित्यर्थमाह— सर्वत्रप्रत्यभिज्ञानादिति ॥

कर्मैक्ये प्रमाणान्तरसमुच्चयार्थं सूत्रम् ॥

"कषाये कर्मभिः पक्वे ततो ज्ञानम्प्रवर्तते," इत्यादिभिः कर्मणां विद्यासाधनत्वे विद्योत्पत्तिप्रतिबन्धकदुरितनिवृत्तिद्वारमित्यवगन्तव्यम्। तदेवचाश्रमधर्माणां कार्यमिति "धर्मेण पापमपनुदती"ति श्रुतिर्दर्शयति—अतो विद्यापेक्षितद्वारजनकत्वेन सिद्धस्यैवकर्मणो वद्यासाधनत्वं युक्तमित्यपीतोऽपि कर्मैक्यमवसीयत इतिभावः ॥

"विद्याञ्चाऽविद्याञ्च यस्तद्वेदोभयंसह। अविद्यया मृत्युंतीर्त्वा विद्ययाऽमृतमश्नुत" इति मन्त्रस्याऽयमर्थः। विद्या– ब्रह्मोपासनां अविद्या–तत्सहकारिकर्मबृन्दञ्चेति तदुभयं यस्सहवेद–सहकारिसहकार्यभावेन युगपदनुष्ठेयं वेद सविद्वानहरहरनुष्ठीयमानेन तेनकर्मणा मृत्युंतीर्त्वा–

अथ आश्रमकर्माऽधिकरणम् ९

## विहितत्वाच्चाश्रमकर्मापि ॥ ३–४–३२ ॥

विद्याहीनस्य गृहस्थस्याश्रमकर्म यज्ञादिकम् 'यावज्जीवमग्निहोत्रम् जुहोति' इति विहिततया च 'यज्ञेन दानेन' इति श्रुतेर्विद्यासाधनतया चानुष्ठेयमवगम्यते ॥

## सहकारित्वेन च ॥ ३–४–३३ ॥

विद्यावतोऽपि 'विद्याञ्चाविद्याञ्च' इति श्रुतेर्विद्याङ्गतया विहिततया चानुष्ठेयमवगम्यते। तदिह विद्याहीनेन विद्यावता च यज्ञादिकं विद्यायास्साधनत्वेन अङ्गत्वेन विहितत्वेन च द्विरनुष्ठेयं सकृदनुष्ठेयं वेति संशये सत्युभयविधिबलात् द्विरनुष्ठेयमिति प्राप्ते सिद्धान्त उच्यते —

---

अथ आश्रमकर्माऽधिकरणम् ९

विद्यानुष्ठानारम्भात्प्रक्तदारम्भप्रभृतिच यज्ञादीनां द्विरनुष्ठानं सकृद्वेति विचारम्प्रवर्तयिष्यन् विचारप्रसञ्जकं विहितत्वादित्यादिसूत्रद्वयेन दर्शयति— यज्ञादिकर्माश्रमकर्माऽपि भवति। अपिशब्दाद्विद्यासाधनञ्च। "यावज्जीवमग्निहोत्रञ्जुहोती" ति श्रुत्याश्रमधर्मत्वेन विहितत्वात् चकाराद्यज्ञेनदानेनेत्यादिश्रुत्या विद्यासाधनत्वेन बोधितत्वाच्चेत्यस्य सूत्रस्याऽर्थः ॥

विहितत्वाच्चेत्यनुवर्तते। विद्यारम्भप्रभृतियज्ञादिकं विद्यासहकारित्वेनाऽनुष्ठेयम्। चकाराद्आश्रमधर्मत्वेनाऽप्यनुष्ठेयम्। "विद्याञ्चाविद्यञ्चे" ति श्रुत्या विद्यासहकारित्वेन बोधितत्वात्। यावज्जीवादिश्रुत्याश्रमधर्मत्वेन विहितत्वाच्चेत्यर्थः। एवं मुमुक्षोर्विद्यारम्भात्प्राक् विद्यारम्भप्रभृतिच यज्ञादिष्वधिकारित्वे सिद्धे संशयं प्रवर्तयति – तदिहेति। किम् विद्याहीनेन विद्यायास्साधनत्वेन विहितत्वेनच द्विरनुष्ठेयम्? उत विद्यावताच विद्याङ्गत्वेन विहितत्वेनच द्विरनुष्ठेयम्? अथवा विद्याहीनेन विद्यावताच सकृत्सकृदनुष्ठेयम्? इति संशयप्रकारः। उभयविधिबलाद्द्विरनुष्ठेयमिति पूर्वपक्षेप्राप्ते सिद्धान्तप्रतिपादकं सूत्रम्—

## अपि च स्मर्यते ॥ ३–४–३७ ॥

अनाश्रमिणामपि जपादिना विद्यानुग्रहः स्मर्यते 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥' इति ॥

## विशेषानुग्रहश्च ॥ ३–४–३८ ॥

आश्रमनियतधर्मविशेषेणापि विद्यानुग्रहः श्रूयते। 'तपसा ब्रह्मचर्येण श्रद्धया विद्यया चात्मानमन्विष्य' इति ॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३–४–३९ ।

अनाश्रमित्वादितरदाश्रमित्वम् ज्यायः, धर्मभूयस्त्वात्, 'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः' इतिस्मृतेश्च। एवमनाश्रमित्वादाश्रमित्वम् वरमेव; तथाऽप्यापद्विषयेऽनाश्रमिणामपि जप्यादिसाधनेन विद्या सम्पद्यत एवेति ॥

इति अन्तराधिकरणम्

---

संसिध्येत्— मुक्तोभवतीत्यर्थः। मैत्रो ब्राह्मणइति। पश्वालभनाद्यभावेन सर्वजीवमैत्रीयुतस्स्यादितिभावः। एतेन कालवशाद्यज्ञादीनाम् प्रतिषेधेऽपि विद्यनुग्रहसाधनं स्मर्तृभिरुपदिष्टमिति ज्ञेयम् ॥

अनाश्रमनियतै धर्मविशेषैः विद्यानुग्रहे श्रुतिप्रमाणप्रदर्शनार्थम् सूत्रम् ॥

विद्यार्थाश्रमधर्मविधिवैयर्थ्यपरिहारार्थं सूत्रम् ॥

आपद्विषय इति। आश्रमान्तरप्राप्त्युपाया सम्पत्तिविषय इत्यर्थः ॥

इति अन्तराधिकरणम्

अथ अन्तराधिकरणम् १०

## अन्तरा चापि तु तद्दृष्टेः ॥ ३–४–३६ ॥

उक्तमाश्रमिणाम् विद्या सम्पद्यत इति । इहानाश्रमिणाम् विद्या सम्पद्यते न वेति सन्देहः ॥ अनाश्रमिणः स्नातका विधुराश्च, तेषाम् ब्रह्मविद्या न सम्भवति, विद्यासाधनभूतानामाश्रमधर्माणामभावात् ॥ इति प्राप्ते वदामः— रैकादिषु विद्यादर्शनादनाश्रमिणामपि विद्या सम्भवत्येव ॥ यदुक्तम् विद्यासाधनाश्रमधर्माभावादिति, तत्राह—

---

विद्यानुवृत्तिनद्वैशद्यादिप्रतिबन्धकदुरितजातमभिभूय । विद्यया— साक्षात्कारपर्यन्तया मुक्तिम्प्राप्नोतीति ॥

इति आश्रमधर्माऽधिकरणम्

अथ अन्तराधिकरणम् १०

विहितत्वाच्चाश्रमकर्मापीत्याश्रमकर्मणाम् विद्यासाधनत्वं विद्यासहकारित्वञ्चोक्तम् ॥

तर्ह्यनाश्रमिणामाश्रमकर्माभावाद्विद्यानसम्पद्यतइति पूर्वपक्षोत्थानात्सङ्गतिः । अनाश्रमिणां विद्यासाधनसहकारिकर्मासम्भवसम्भवाभ्यां संशयः ॥

ये गुरुकुलात्समावृत्तौ सत्या मकृतदारसङ्ग्रहाः स्नातकाः, येच मृतपत्नीका विधुरास्तेषां विद्या नसम्पद्यते । विविदिषन्ति यज्ञेनेत्यादिश्रुतावाश्रमधर्माणामेव विद्यासाधनत्वेन वर्णितत्वात् । विद्याञ्चाविद्याञ्चेतिश्रुतावविद्याशब्दस्याऽपि तत्समानन्यायत्वेन आश्रमधर्मपरत्वात् । आश्रमानियतजपादिमात्रेण तेषां विद्यानुग्रहाङ्गीकारे भूयसामाश्रमधर्माणामेव विद्यासाधनत्वेन विधानस्य वैयर्थ्यप्रसङ्गादिति पूर्वपक्षः ॥

आश्रमान् अन्तरावर्तमानानामपि स्नातकविधुराणां विद्या सम्पद्यतएव । रैक्वादिषु संवर्गविद्यादिदृष्टेरिति सिद्धान्तः ॥

नन्वन्यार्थदर्शनरूपलिङ्गमात्रं नसाधकमिति प्रतिपादकप्रमाणप्रदर्शनाऽर्थं सूत्रम् ॥

आश्रमविशेषधर्माभावेऽपि सर्वसाधारणधर्मेण विद्यानुग्रहप्रदर्शनार्थं सूत्रम् ॥

## न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ३—४—४१ ॥

यदवकीर्णिनो गर्दभपश्वालम्भनम् 'अवकीर्णिपशुश्च तद्वत्' इत्याधिकारिलक्षणोक्तम् प्रायश्चित्ताम् , तदप्यारूढपतितस्य न सम्भवति— 'आरूढो नैष्ठिकम् धर्मम् यस्तु प्रच्यवते नरः। प्रायश्चित्तम् न पश्यामि येन शुद्धयेत्स आत्महा ॥' इति तस्य प्रायश्चित्तानधिकारस्मृतेस्तदसम्भवात् ॥

## उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥ ३—४—४२ ॥

उपपातकत्वात् प्रायश्चित्तमप्येके मन्यन्ते, मध्वशनप्रायश्चित्तवत् । तदुक्तम्—— 'उत्तरेषाञ्चैतदविरोधि' इति । उपकुर्वाणस्य यदुक्तं तत् स्वाश्रमाविरोध्यन्येषामप्याश्रमिणां भवतीत्यर्थः ॥

---

प्राप्तस्य । अतद्भावः- तदाश्रमपरित्यागो नास्ति । तद्रूपाभावेभ्यः—तेषां नैष्ठिकादीनां रूपाणि । तद्रूपाणि—वेषाः धर्माइत्यर्थः । तेषामभावेभ्यो नियमनात् । इतिसूत्रार्थः ॥

ननु—तर्ह्येवरुद्ध कृतप्रायश्चित्तानां तत्राऽधिकारोस्त्विति शङ्कानिराकरणार्थम् सूत्रम् ॥

अवकीर्णिपशुश्च तद्वदिति । पूर्वतन्त्रे अधिकाराध्याये अवकीर्णिप्रायश्चित्तरूपपशुबन्धप्रकारश्चिन्तितः । अवकीर्णिपशुः स्थपतीष्टिवल्लौकिकाग्नौ कर्तव्यः । निषादस्थपतेरिव ब्रह्मचारिणोप्याधानाभावदिति । एवम्भूतम्प्रायश्चित्तमपि तेषां नास्ति । आरूढो नैष्ठिकंधर्ममिति व्रतभ्रष्टानां पतितत्वस्मरणेन प्रायश्चित्ताऽनर्हत्वादित्यर्थः । अतोऽवकीर्णिप्रायश्चित्तस्मरणमुपकुर्वाणब्रह्मचारिविषयमितिभाव: । अवकीर्णिपशुः—गर्दभः । ब्रह्मचार्यवकीर्णीनैरृतंगर्दभमालभेतेत्युक्तम् । ब्रह्मचर्यभ्रष्टोऽवकीर्णी । ब्रह्मचर्यं स्त्रीनियतिः । सा गृहस्थव्यतिरिक्तानां त्रयाणामपि तुल्या । तस्मात्तेषामवकीर्णिप्रायश्चित्तं कर्तव्यमितिपूर्वपक्षिणोऽभिप्रायः । अधिकारलक्षणोक्तमपि प्रायश्चित्तं तेषां व्रतभ्रष्टानां नास्ति । पतनानुमानात्—पतितत्वस्मृतेस्तदयोगात्—प्रायश्चित्ताऽसम्भवादिति सूत्रार्थः ॥

एके आचार्याः नैष्ठिकादीनाम् ब्रह्मचर्यप्रच्यवनमुपपातकं नतु महापातकम् । तदपरिगणनादिति मन्यमाना मध्वशनस्येव प्रायश्चित्तमङ्गारं मन्यन्ते । एवञ्च कृतप्रायश्चित्तानां तेषां विद्याधिकारोऽस्त्वितिशङ्कानिराकरणर्थं सूत्रमेतत् ॥

अथ तद्भूताऽधिकरणम् ११

# तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्यः

॥ ३–४–४० ॥

इहोर्ध्वरेतसां पूर्वाश्रमावरोहोऽस्ति न वेति सन्देहः। 'ब्रह्मचर्यं समाप्य गृहीभवेत् गृहाद्वा वनी भूत्वा प्रव्रजेत्' इत्याश्रमारोहो यथा स्वेच्छाधीनस्तथाऽवरोहोऽपि ॥ इति प्राप्ते सिद्धान्तयामः — नैष्ठिकादिभूतस्यातद्भावः ततः प्रच्युतिर्नसम्भवति । कुतः ? नियमात् तद्रूपाभावेभ्यः । नियच्छन्ति हि 'अत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' इति । 'अरण्यमियात् ततो न पुनरेयात्' इति सन्न्यस्याग्नीन् न पुनरावर्तयेत्' इति च शास्त्राणि नियच्छन्ति । न चारोहरूपशास्त्रवदवरोहरूपशास्त्राणि सन्ति । अतस्तेषामप्रच्युतिनियमश्रुतेः प्रच्युतौ श्रुत्याद्यभावाच्च न तेषां विद्याऽधिकारः । जैमिनेरप्येवमेव मतम् ॥ आरूढपतितस्य प्रायश्चित्तादिना विद्याऽधिकारो नास्तीत्याह—

---

अथ तद्भूताऽधिकरणम् ११

ऊर्ध्वरेतसामाश्रमम्प्राप्य पुनर्दारपरिग्रहं कृतवतां विद्याधिकारोऽस्ति नवेति विद्याधिकारप्रतिषेधाऽप्रतिषेधाभ्यां संशये पूर्वःपक्षः ॥

आश्रमाणामारोहवदवरोहोऽप्यस्तुनाम वृक्षाणामिव । ततश्च दारपरिग्रहेण गार्हस्थ्येसति विद्याङ्गकर्मभूयस्त्वमपि लभ्यतइति अतस्त्वितरज्ज्यायो लिङ्गाच्चेति न्यायः प्रवर्तेत । यदितु ब्रह्मचर्यंसमाप्य गृहीभवेदिति क्रमस्योक्तत्वाद्व्युत्क्रमे गृहस्थाश्रमप्राप्तिर्नस्यात् , तदानीं तेषाम् स्वाश्रमप्रच्युतानामनाश्रमित्वेऽप्यन्तराचापितु तद्दृष्टेरितिन्यायः प्रवर्तेत । तस्मादुभयथाऽपि तेषां विद्याधिकारोऽस्तीति ॥

नेतिसिद्धान्तः—यतस्तद्भूतस्य-ऊर्ध्वरेतसामाश्रमम्प्राप्तस्य । नाऽतद्भावः—तदाश्रमपरित्यागो नास्ति "अत्यन्तमात्मान" मित्यादिशास्त्रैस्तथानियमनात्—अतद्रूपापत्तौ शास्त्राभावाच्च । तथाच नियमोल्लङ्घनेन शास्त्रप्रतिषिद्धानां नास्ति विद्याऽधिकार इति । तद्भूतस्य— ऊर्ध्वरेतसामाश्रमम्

# आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ३-४-४५ ॥

'एवंविदुद्गाता ब्रूयात' इति वाक्यशेषे उद्गातुरुपासकत्वं स्फुटं श्रूयते। आर्त्विज्यमेव तदनुष्ठानमित्यौडुलोमिमतम्। कथमन्यकर्तृकमन्यगामिफलं स्यादितिचेत, ऋत्विजां कर्मस्वरूपवदशेषाङ्गानुष्ठानाय यजमानेन क्रीतत्वात्। साङ्गकर्मानुष्ठानाय हि ऋत्विजो यजमानेन परिक्रियन्ते। तस्मादृत्विक्कृतं यजमानकृतमेवेति, फलञ्च तस्य स्वामिन एवेति न विरोधः॥

इति स्वाम्यधिकरणम्

---

यजमानेनैवोपासनं कार्यम्। गोदोहनादेः पृथक्फलत्वेऽपि ऋत्विक्कर्तृकप्रणयनादित्याश्रितस्य पृथक्कृत्य यजमानेनोपादातुमशक्यत्वात्तयाजमानत्वम्। उपासनानान्तु क्रियारूपाणामुद्गीथादिभ्यः पृथक्कृत्य यजमानेन कर्तुं शक्यत्वात् प्रधानत्वाच्च याजमानत्वमेव युक्तम्। औद्गात्रसमाख्यादिकन्तु "शास्त्रफलम् प्रयोक्तरी" ति न्यायविरोधात्त्वादरणीयमितिभावः॥

"एवमुविदुद्गाता ब्रूयात्। कम् ते काममागायानीत्येषह्येव कामागानस्येष्टे य एवम् विद्वांत्सामगायती" ति। "यएषोन्तरादित्ये अन्तरक्षिणच" उपदिष्टम् परमेश्वरस्वरूपम् सर्वपापोदितत्वादिधर्मैः देवलोककामावाप्तिमनुष्यलोककामावाप्तिफलाभ्याञ्च सह विद्वानुद्गाता यजमानं प्रतिब्रूयात्। "कम् ते काममैहिकमामुष्मिकम् वा किम्फलमुद्दिश्य आगायानि तत्फलानुकूलोपासनासहितं गानम् करवाणी"ति। हि यस्मदेषएवोद्गाता कामागानस्याभिमतफलसाधनोपासनासहितागानस्येष्टे। कः य एवं विद्वान् अधिदैवताध्यात्मोपदिष्टपरमेश्वरस्वरूपं विद्वान् सामगायतीत्यर्थः। अत्रोद्गातृकर्तृकमेव वेदनमिति स्पष्टम् नच यागदानादीनाम् फलवतां यजमानकर्तृकत्वे प्राधान्यम् प्रयोजकम्। किन्तु यजमानस्य द्रव्ये स्वत्वत्यागो नाऽन्येन कर्तुम् शक्यत इत्येतत्प्रयोजकम्। अतएवाऽङ्गत्वेऽपि दक्षिणादानम्। याजमानम्। एवञ्च यदृत्विग्भिः कारयितुंशक्यम् तस्य सर्वस्याऽप्यर्थे ऋत्विजाम् परिक्रीतत्वादौद्गात्रादिसमाख्याऽनुसाराच्च उद्गीथाद्युपासनमुद्गातृभिरेव कर्तव्यम्। तदिदम् हेत्वन्तरं तस्मै परिक्रियतइति सूत्रशेषेण कण्ठोक्तम्। तत्सूत्रशेषं शङ्कोत्तरत्वेनाऽपि योजयति—कथमन्यकर्तृकमिति॥

इति स्वाम्यधिकरणम्

---

## बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ३-४-४३ ॥

उपपातकत्वे महापातकत्वेऽपि कर्माधिकारादिबहिष्कृता एते, 'प्रायश्चित्तम् नपश्यामि येन शुद्ध्येत् स आत्महा ' इति स्मृतेः, शिष्टबहिष्काराच्च । अतः सर्वथैवारूढपतितानां न विद्याऽधिकारः ॥

इति तद्भूताऽधिकरणम्

---

अथ स्वाम्यधिकरणम् १२

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३-४-४४ ॥

उक्तमुद्गीथाद्युपासनम् । तदनुष्ठानम् यजमानस्य, उत ऋत्विजामिति संशयः ॥ किं प्राप्तम् ? उद्गीथाद्युपासनं यजमानस्यैवानुष्ठेयम्, तस्यैव वीर्यवत्तरत्वफलश्रवणात्, नर्त्विजामित्यात्रेयमतम् ॥ सिद्धान्त उच्यते—

---

पापानां द्वे शक्ती । इह कर्माधिकारशिष्टसंसर्गविरोधिनी, परत्र नरकापादिनी च । नैष्ठिकानाम् प्रायश्चित्तसद्भावेऽपि तेन परत्र नरकापादिन्येव पापशक्तिर्हीयते नत्विह प्रत्यापत्त्यापादिनी । " नाऽस्याऽस्मिन् लोके प्रत्यापत्तिर्विद्यते । कल्मषन्तु निर्हण्यते । प्रायश्चित्तैरपैत्येनो यदज्ञानकृतम् भवेत् । कामतो व्यवहार्यवचनादिह जायते " इति स्मरणात् । अतः प्रायश्चित्तं नपश्यामीत्यादिस्मरणमप्यैहिकप्रत्यापत्त्यापादकप्रायश्चित्ताभिप्रायमिति भावः ॥

उभयथाऽपि-उपपातकत्वे महापातकत्वेऽपि नैष्ठिकात्प्रच्युतो बहिः—बहिर्भूतएव कर्माधिकारात् । प्रायश्चित्तं नपश्यामीति स्मृतेश्शिष्टबहिष्काररूपाचाराच्चेति सूत्रार्थः ॥

इति तद्भूताऽधिकरणम्

---

अथ स्वाम्यधिकरणम् १२

उपासनानुष्ठातृप्रसङ्गागतमिदमधिकरणम् । फलस्य कर्तृगामित्वात् । ऋत्विक्परिक्रयाच्च संशयः । तस्यैवेति । ऋत्विक्परिक्रयस्याङ्गानुष्ठानार्थत्वात्पृथक्फलत्वदुपासनं प्रधानमिति फलार्थिना

निष्पत्त्यर्थमुपास्यविषयाभ्यासरूपमिदम् प्रकृष्टमननम् तिष्ठासेदिति पदानुवृत्त्या विधीयते । मननप्रकर्षश्च निरन्तर शिवाहम्भावसाधनषट्स्थलोपासनारूपो लिङ्गाङ्गसंयोगरूपस्सर्वाङ्गलिङ्ग साहित्यरूपश्च विज्ञेयः । ततो मौनविधिः सम्भवति विद्यावत इति ॥

इति सहकार्यन्तरविध्यधिकरणम्

---

विधीयतइतिविधिर्यज्ञादिश्शमादिश्च । आदिशब्देन विधिसरूपवाक्याभ्यामनूदितं श्रवणं मननञ्च गृह्यते ॥

तृतीयशब्दस्याऽवध्यपेक्षापूरणम् पाण्डित्यबाल्ययोरिति । तृतीयशब्दसामानाधिकरण्येन सहकार्यन्तरविधिपदव्याख्यानम्। सहकार्यन्तरं मौनमिति। विधीयतइतिविधिः ।सहकार्यन्तरञ्चासौ विधिश्चेति समानाधिकरणसमासः । पक्षेणेतिपदं साध्याहारं व्याचष्टे—प्रकृष्टेति । मननमात्रं न मुनिशब्दस्य प्रवृत्तिनिमित्तम्। किन्तु प्रकृष्टं मननम् । प्रकर्षश्च मननस्य स्नेहपूर्वकतया चिरविरहिताया नायिकाया नायकविषयस्येव निरन्तरमनुवर्तमानत्वरूप इह पक्षेणेत्यनेन अध्याहार्यपदयुक्तेन विवक्षितइति भावः । तमेवम् प्रकर्षं दर्शयति—विद्यानिष्पत्त्यर्थमिति। तदेव विवृणोति— षट्स्थलोपासनारूप इति । एतत्त्रिविधमपि प्रकृष्टमननं महालिङ्गजाबालआम्नातमनुसन्धेयम् । यस्योपासनानुष्ठानकालव्यतिरिक्तकालेष्वपि गच्छतस्तिष्ठतश्शयानस्य वा उपास्यविषयाचिन्ताऽनुवर्तते ।तस्यैवोपासनाकालेऽपि तद्विषयचित्तैकाग्र्याद्विद्या दृढीभवति ॥

यस्यतूपासनाकाले यथाकथञ्चिद्विद्यानुष्ठानेऽपि समयान्तरेषु चिन्तान्तरावेशः तस्योपासनाऽनुष्ठानकालेऽपि चेतसि समयान्तरचिन्तितविषयान्तरानुप्रवेशाद्विद्या नदृढीभवेदित्युपास्यविषयाभ्यासोऽपि विद्यासहकारीत्येवंरूपम् प्रकृष्टमननमेव । अथ मुनिरितिविधीयते । श्रवणप्रतिष्ठार्थस्य मननमात्रस्य प्रागेवनिर्वृत्तत्वेन तत्राऽथशब्दाननन्वया त्तिष्ठासेदितिपदानुवृत्त्या मननस्य विधेयत्वसम्भवाच्चेतिभावः ॥

इति सहकार्यन्तरविध्यधिकरणम्

---

अथ सहकार्यन्तरविध्यधिकरणम् १३

## सहकार्यन्तरविधिः पक्षेण तृतीयम् तद्वतो विध्यादिवत्

॥ ३–४–४६ ॥

कहोलब्राह्मणे श्रूयते— 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनिः' इति बहूपनिषत्तात्पर्यनिर्णयरूपम् पाण्डित्यम् निश्शेषेण सम्पाद्य बाल्येन रागद्वेषादिरहितत्वात् बाल्यसदृशेनावस्थान्तरेणावतिष्ठेत । ततः पाण्डित्यबाल्ये निश्शेषम् सम्पाद्याथ मुनिः इति । अत्र पाण्डित्यबाल्यवन्मौनमपि विधीयते न वा । इति संशये मुनिरित्यत्र भवेदित्यादिविधिप्रयोगाभावान्न विधीयते ॥ इति प्राप्तेऽभिधीयते— विद्यावतो यज्ञादिवत् पाण्डित्यबाल्ययोस्तृतीयम् सहकार्यन्तरम् मौनम् विधीयत एव, प्रकृष्टमननशीले मुनिशब्दस्य प्रसिद्धेः । विद्या-

---

अथ सहकार्यन्तरविध्यधिकरणम् १३

यज्ञादीनां शमादीनाञ्च विद्यासहकारिणां निरूपणाऽनन्तरं सङ्गनिविशेषप्राप्तां सर्वान्नानुमत्यादिचिन्तां कृत्वा पुनरपि विद्यायामेव सहकार्यन्तरं निरूप्यतइति सङ्गतिः । रागप्राप्तत्वेन श्रावणमननयोरविधेयत्वस्य प्रथमाऽधिकरणभाष्ये निरूपितत्वादिह तयोर्विधिश्रावणम् तेनविरुध्येतेत्याशङ्क्य पाण्डित्यबाल्यशब्दयोरर्थान्तरमाह—बहूपनिषदिति ॥

ऊहापोहक्षमादिः पण्डा साऽस्यसञ्जातेतिपण्डितः । तस्य कर्म पाण्डित्यम् । श्रावणमननानन्तरं तदभ्यासपाटववशाल्लब्धया ऊहापोहक्षमया नवनवोन्मेषशालिन्या प्रतिभया श्रुतमतार्थानुकूल्येन सकलोपनिषत्तात्पर्यप्रतिष्ठापनम् पाण्डित्यम् । तदनुकूलप्रतिभाशक्तौ सत्यामपि बालवद्रागद्वेषस्वमाहात्म्यप्रख्यापनाऽहङ्कारादिराहित्यम् बाल्यम् तदुभयं श्रावणमननानन्तरभाविविद्यासहकारित्वेन विधेयमिति सम्प्रतिपन्नमेव ॥

इह पुनरथमुनिरित्युक्त तृतीयमपि सहकार्यन्तरं विधीयते नवेति विध्यर्हत्वानर्हत्वाभ्यां संशये श्रावणमननबाल्यपाण्डित्येभ्योऽन्यस्य विध्यर्हस्य कस्यचिददर्शनाद्विधिशब्दाश्रवणाच्च नविधीयते । किन्तु मननमेवाऽनूद्यतइति पूर्वपक्षेप्राप्ते सौत्रपदानि व्याचक्षाणएव सिद्धान्तयति— विद्यावतइति तद्वतइत्यस्य व्याख्यानमिदम् । विध्यादिवदित्यस्य व्याख्यानम् - यज्ञादिवदिति ।

सर्वेषाम् प्रदर्शनार्थः । एवमन्त्याश्रमवचनमपि सर्वेषामाश्रमाणाम् प्रदर्शनार्थम् । अतः सर्वेषामाश्रमिणाम् विद्याऽस्त्येव । फलत्यागः सन्न्यासः । यतित्वम् जितेन्द्रियत्वम् । सर्वमिदम् सर्वेषां सम्भवत्येव ॥

इति कृत्स्नभावाऽधिकरणम्

अथ मौनवदधिकरणम् १९

## मौनवदितरेषामप्युपदेशात् ॥ ३–४–४८ ॥

अथर्वशिरसि श्रूयते—‘ तृष्णाम् छित्वा हेतुजालस्य मूलम् बुद्ध्या सञ्चिन्त्य स्थापयित्वा च रुद्रे । रुद्र एकत्वमाहुः । रुद्रम् शाश्वतम् वै पुराण मिषमूर्जम् तपसा नियच्छत व्रतमेतत् पाशुपतम् ’ इति । प्राणेष्वन्तर्मनसो

---

सद्भावात्सर्वेषामाश्रमिणां स्वस्वाश्रमविहितकर्मानुष्ठानार्थनैयग्रचग्रस्तकालव्यतिरिक्तकालेषूपास्य-विषयचेतस्समाधानसम्भवाच्च कर्मानुष्ठानवैयग्रचस्य चेतस्समाधानविरोधिदुरितनिवृत्त्यर्थत्वेन तस्योपासनाकालापेक्षितचेतस्समाधानविरोधित्वाप्रसङ्गाच्चेतिभावः । एवमन्त्याश्रमवचनमपीति ॥

यथा— “ जायमानो वै ब्राह्मणस्त्रिभिःऋणवान् जायते । तस्माद्ब्राह्मणः पाण्डित्यम् निर्विद्य—तमेवम् वेदानुवचनेन ब्राह्मणा विविदिषन्ती ” त्यादिषु ब्राह्मणग्रहणमधिकारिविशेष-वत्त्वाऽविशेषात् क्षत्रियवैश्ययोरप्युपलक्षणम । एवमिहापीतिभावः । “ सन्न्यासयोगाद्यतय ” इत्यत्रतु नाश्रमान्तरव्यवच्छेदशङ्केत्याह—फलत्याग इति । “ काम्यानाम् कर्मणाम् न्यासम् सन्न्यासम् कवयो विदु ” रिति गीतावचनात् । “ ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ” इति कोशवचनाच्चेतिभावः ॥

इति कृत्स्नभावाऽधिकरणम्

अथ मौनवदधिकरणम् १९

व्यवहितपूर्वाधिकरणे सर्वाङ्गलिङ्गसाहित्यादितिरूपम् प्रकृष्टमननं चिन्तितमिह तदधिकार प्रदम् पाशुपतव्रतं चिन्त्यतइति सङ्गतिः ॥

अथ कृत्स्नभावाऽधिकरणम् १४

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ३–४–४७ ॥

इह सर्वेषामाश्रमाणां विद्या साधारणी, उत विशेषोऽस्तीति संशयः ॥ ब्रह्मचारिणो वेदाभ्यासे आचार्यपरवशत्वात् गृहस्थस्य कुटुम्बभरणायासित्वात् वनस्थस्य वैखानसधर्मव्यापृतत्वाच्च तेषां ज्ञानध्याने सम्भवतः । 'वेदान्तविज्ञानसुनिश्चितार्थास्सन्न्यासयोगाद्यतयश्शुद्धसत्त्वाः' इति वेदान्तार्थज्ञानवतां सन्न्यासयोगश्रवणात् 'अन्याश्रमस्थः' इति ध्यानविधौ दर्शनाच्चान्त्याश्रमिणामेव ज्ञानध्याने, नापरेषामिति पूर्वः पक्षः ॥ सर्वेष्वाश्रमेषु विद्या सम्भवत्येव । छान्दोग्ये 'कुटुम्बे शुचौदेशे स्वाध्यायमधीयानः' इत्यारभ्य 'स खल्वेवम् वर्तयन् यावदायुषम् ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते' इति कृत्स्नाश्रमेषु विद्यासद्भावप्रदर्शनात् । तत्र गृहिणोपसंहारः

---

अथ कृत्स्नभावाधिकरणम् १४

यदि विद्यादार्ढ्यार्थमुपासकानां चेतसस्सर्ववेदोपास्यप्रावीण्येन भाव्यन्तर्हि सन्न्यासिनामेव विद्यास्वधिकारस्स्यात् नेतरेषामिति पूर्वपक्षोत्थानात्सङ्गतिः । इतरेषां सार्ववेदिकोपास्यप्रावीण्यसम्भवाऽसम्भवाभ्यां संशयः । इतरेषां तत्तदाश्रमविहितकर्मानुष्ठानमावश्यकमिति तदसम्भवेन पूर्वपक्षः ॥ सन्न्यासयोगादित्यादिश्रवणञ्च तदुपोद्बलकम् ॥

" अत्याश्रमस्थस्सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुम् प्रणम्ये " ति कैवल्योपनिषत्पाठः प्रसिद्धः । नत्वन्त्याश्रमस्थ इति । अत्याश्रमस्तु " अग्निरित्यादिभिर्मन्त्रैर्भस्मनोद्धूळनन्तथा । त्रिपुण्ड्रधारणञ्चैव वदन्त्यत्याश्रमम् बुधा" इति पुराणोक्तस्सर्वाश्रमसाधारणः । एवं जाबालशाखायाम्-"भस्मरुद्राक्षलिङ्गानामेकैकस्य त्रयस्यवा । साधारणम् स्यात्पाशुपतम् व्रतमत्याश्रमाह्वय"मित्येतदपि सर्वाश्रमसाधारणमेव । तस्मादन्त्याश्रमस्थ इति ध्यानविधौ दर्शनाच्चेति भाष्यं शाखान्तरपाठाभिप्रायं द्रष्टव्यम् ॥

ननु छान्दोग्ये–गृहिणामेव फलद्वारा विद्यासद्भावः प्रदर्शितो नतु नैष्ठिकवनस्थयोरित्याशङ्क्याह—तत्राहीति । यज्ञादिबहुव्यापारव्यग्रेण गृहिणोपसंहारः कैमुतिकन्यायेन सर्वेषामधिकारप्रदर्शनार्थः । सर्वेष्वाश्रमेषु मुमुक्षादिविद्याधिकारिविशेषणसम्भवेन विद्याधिकार-

जाबाले श्रूयते— तत्र भस्मरुद्राक्षमहालिङ्गधारणात्मकं वेध - मनु - क्रियाख्यत्रिविधमहादीक्षाविशिष्टमुत्तममिति ॥

अथर्वशिरस्यपि— "इषमूर्जम् तपसा नियच्छत" । ऊर्जम्— ऊर्वै अन्नमितिविवरणात्पार्थिवम् । इषमिष्टलिङ्गम् । तपसा— दीक्षया नियच्छत— बिभृतेतीष्टलिङ्गधारणं विहितम् ॥

एवम् बृहज्जाबालादिषु "मृत्युतारकम् गुरुणालब्धं कण्ठे बाहौ शिखायां वा बध्नीते"ति । मृत्युमयसंसारसागरात्तारकं महालिङ्गमेवभवति नान्यत् । अतएव सर्वेषु वेदेषु वेदवादिभिरुक्तं तत्समाचरेन्मुमुक्षुरित्याम्नायते । वेदेषुचाखिलेषु महालिङ्गधारणं स्पष्टमाम्नायते । एवं देहत्रयानुस्यूतमलत्रयप्लोषक दीक्षात्रयग्रहणपूर्वकमिष्ट — प्राण — भावाख्यमहालिङ्गत्रयानुसन्धानमन्तरेण कथंमुच्येतानादिः पाशमन्ततिः । नहि तेन विना जातुचिदपि सम्पद्येत । सर्वाङ्गलिङ्गसाहित्यानुसन्धानरूपशिवाहम्भावः ॥

नाऽपि गार्हस्थ्यम्— कैश्चित्पारमहंस्यधर्मैर्योगादेव । नाऽपि वानप्रस्थ्यम्— ग्रामे निवासात् । आश्रमाऽनन्तर्भावेच नाश्रमधर्मा विद्यासहकारिणस्सम्भवन्ति । आश्रमाऽनियतधर्मैर्जपादिभिर्विद्योपकारश्चापद्विषयो न बुद्धिपूर्वं परिग्राह्य इति "अतस्त्वितरज्ज्यायो लिङ्गाच्चे"ति सूत्रे दर्शितः । अतो न यावज्जीविकस्य मुक्तिफलकत्वं सम्भवति ॥

नाऽपि द्वादशाब्दावधियुक्तस्य । तस्याप्रायणानुष्ठेयविद्याङ्गत्वाऽयोगात् । तस्य पुत्रार्थं श्रीकृष्णादिभिरनुष्ठितत्वेनाऽनुशासनिकवायुसंहितादिषूक्ततया काम्यत्वसम्प्रतिपत्तेः । किञ्च— पाशुपतव्रतस्य मुक्तिफलकत्वम् । साक्षाद्वा विद्याङ्गत्वेन वा ? नाद्यः विद्यासाध्यायामुक्तेः व्रतमात्रेणाऽसम्भवात् । द्वितीये सकलविद्याङ्गत्वेन मुक्तिफलकत्वम् ? उत विद्याविशेषाङ्गत्वेनवा ? नाद्यः गृहस्थादीनां सकलविद्यानुष्ठानाऽसम्भवेन अनधिकारप्रसङ्गात् । न द्वितीयः । तथाभूतविद्याविशेषाऽदर्शनादिति । एवंप्राप्ते सिद्धान्तः ॥

यावज्जीविकस्याऽस्य विद्याङ्गत्वेन युक्तम् मुक्तिफलकत्वम् 'मौनवदितरेषा'मपि विद्याङ्गताभिहोपदेशात् । अत्रहि सहकार्यन्तरविध्यधिकरणे— विद्याङ्गत्वेन निर्णीतम् प्रकृष्टमननाख्यपदस्यत्वोपासनारूपं लिङ्गाङ्गसंयोगरूपं सर्वाङ्गलिङ्गसाहित्यरूपञ्च मौनमुपदिष्टम् ॥

लिङ्गमाहुर्यस्मिन्क्रोधो याच तृष्णा क्षमा च" । तत् पाशुपतव्रतमथर्वशिरसि श्रुतम् । महालिङ्गजाबालादिषु प्रपञ्चितम् । पुराणेषु च प्रसिद्धमेव । तन्निष्ठानां विद्याप्राप्तिर्मुक्तिश्च सम्भवति न वेति संशयः ॥ किम् प्राप्तम् ? आश्रमेष्वनन्तर्भावात्, अवसानदर्शनात्, पुत्राद्यर्थम् कृष्णादिभिरनुष्ठितत्वात् अवान्तरफलसिद्धिमन्तरेण तेषां न मोक्षसिद्धिरस्ति । इतिप्राप्ते ब्रूमः— तेषामत्यन्तव्रतधारिणां मुक्तिरेव फलम् सम्भवति ॥

ननु— कालाग्निरुद्रोपनिषदि "तिर्यक्तिस्रो रेखाः प्रकुर्वीत । व्रत मेतच्छाम्भवमि" त्याम्नातम् । अथर्वशिरस्यपि - "अग्निरितिभस्म - वायुरिति भस्म-जलमितिभस्म - स्थलमितिभस्म - व्योमेतिभस्म - सर्वंह्या इदम भस्म - मन एतानि चक्षूंषि करणानि भस्मानि । व्रतमिदं पाशुपतम् । पशुपाशविमोक्षाये"ति श्रूयते । तस्मादिदं पाशुपताख्यव्रतं भस्मधारणात्मकमितिचेन्न । अत्र भस्मपदस्य महालिङ्गरुद्राक्षयोरप्युपलक्षणत्वात् । तथाहि— महालिङ्ग-

विविधम् पाशुपतव्रतम् । भस्मरुद्राक्षमहालिङ्गधारणात्मकं मुख्यमेकम् । भस्मरुद्राक्षधारणात्मकमन्यत् । भस्मोध्धूलनत्रिपुण्ड्रधारणात्मकमेकमिति ॥

तत्र भस्मरुद्राक्षमहालिङ्गधारणात्मकं महालिङ्गजाबालादिष्वाम्नायते । तत्सर्वविद्याङ्गत्वेन सर्वाश्रमसाधारणमिति प्रागङ्गावबद्धाधिकरणे व्यवस्थापितम् । तदेतत्पुनर्द्विविधम् । द्वादशाब्दावधिकम् । यावज्जीविकञ्चेति । तदधिकृत्य चिन्ता प्रवर्तते सर्वेषामाश्रमाणां ब्रह्मविद्यामुक्तिश्च सम्भवतीतिवर्णितम । इहाश्रमानन्तर्गतत्वेन प्रतीयमाने पाशुपते स्थितानां तदुभयं सम्भवति नवेति ॥

मुक्त्यर्थमहालिङ्गधारणादिविद्याङ्गयोगात् पुत्रादिफलश्रवणाच्च संशये पूर्वपक्षः ॥

किमेतत्पाशुपतव्रतं यावज्जीविकं मुक्तिफलम् ? उत द्वादशाब्दावधिकम् ? नाद्यः— तस्याश्रमेष्वनन्तर्भावात् । तथाहि— तद्धि नतावद्ब्रह्मचर्यम् । कैश्चित्पारमहंस्यधर्मैरुपासनादिभिर्योगात् ॥

नाऽपि सन्न्यासः— अग्नीन्धनादियोगात् ॥

रूपसम्पन्नस्यैव स्वस्वरूपाऽभिनिष्पत्तिरूपपरममुक्तिरिति। अतो मूलं मुक्तेः परमेश्वरपरमप्रसादकरं भस्मरुद्राक्षाशिवलिङ्गधारणात्मकं पाशुपतव्रतमिति ॥

अतएव महाभारतेऽपि— "गतान्तैरध्यवसितमत्याश्रममिदंव्रतम्। मया पाशुपतं दक्ष शुभमुत्पादितं पुरे"ति प्रशंसितम्। तस्माद्भस्मरुद्राक्षमहा. लिङ्गधारणात्मकमेव पाशुपतव्रतमुत्तममिति युक्तम् ॥

---

शाश्वतं = नित्यम्। पुराणं = अनादिम्। इषं=इष्टलिङ्गरूपम्। रुद्रं=परशिवम्। ऊर्जं = ऊर्वैअन्नमितिविवरणात् पार्थिवम्। शिलादीनामपि पार्थिवत्वाऽविशेषाच्छिलादिमयमित्यर्थः। तपसा = दीक्षया। नियच्छत = कण्ठादौबध्नीत बिभृयादित्यर्थः। अत एव "मृत्युतारकं गुरुणादत्तं कण्ठे बाहौ शिखायांवा बध्नीते"ति बृहज्जाबालादिषु श्रूयते। एतत्पाशुपतम् = पशूनां संसारिणां पाशस्य मलमायादिबन्धस्य मोक्षाय असाधारणकारणम्भवतीत्यर्थः ॥

पाशुपतव्रतस्यास्य स्वरूपं निर्णेतुमाशङ्कते— नन्विति। बृहज्जाबालादिष्विति। आदि-शब्देन भस्मजाबालादयो गृह्यन्ते। वेदेषु चाखिलेष्विति। तथाहि— यजुषि—"सर्वलिङ्गगंस्थाप-यती"त्यादिनाभ्यासेन विधीयते ॥

एवं ऋग्वेदेऽपि— "पवित्रं ते विततं ब्रह्मणस्पते। अतप्ततनूर्नतदामो अश्नुते। श्रुतासइद्वहन्तस्तत्समासते" इति। तथा सामवेदेऽपि जैगीपव्यशाखायाम् — सदानन्दोपनिषदि- "अन्तर्धारणशक्तोवा ह्यशक्तोवा द्विजोत्तमः। संस्कृत्य गुरुणादत्तमिष्टलिङ्गमुरस्थले। धार्यं विप्रेण मुक्त्यर्थं" मिति वेदान्तविदो वदन्ति। अथर्ववेदेऽपि — ऐश्वरशाखायाम् — "यो वामहस्तार्पितलिङ्गमेकं परात्परं धारयते विप्रः क्षत्रियोवा। तस्यैवलभ्यः परमेश्वरोऽसौ निरञ्जनः परमंसाम्यमुपैति दिव्य" मिति ॥

एषां वाक्यानामर्थः लिङ्गधारणचन्द्रिकादिषु सविस्तरइति नेहपुनः। महालिङ्गधारणस्य प्रयोजनं विवृणोति— एवमिति। देहत्रयेति। तथाहि वातूले— "देहत्रयगतानादिपाशत्रय मसौगुरुः। दीक्षात्रयेण निर्दग्ध्वा लिङ्गत्रयमुपादिशे" दितिस्मर्यते। एतन स्थूलसूक्ष्मकारणा-त्मकदेहत्रयानुस्यूतं कार्मिकमायिकाणवाख्यमलत्रयं क्रियामन्त्रवेधाख्यमहादीक्षाभिर्विशोध्य देह-त्रयेपीष्टप्राणभावाख्यमहालिङ्गत्रयं गुरुस्संयोजयति— शिष्यश्चैनं लिङ्गाङ्गसंयोगं निरन्तरमनुसंद-धानएव भ्रमरकीटन्यायेन शिवत्वरूपां परममुक्तिं प्राप्नोतीत्यर्थः। एवं लिङ्गाङ्गसंयोगानुसन्धान-नैरन्तर्येणैवानादिः पाशसन्ततिर्विमुच्यते नाऽन्यथेत्याशयः। एवमन्वयेन लिङ्गधारणस्य मुक्ति-हेतुत्वमुपपाद्य व्यतिरेकेणाऽपि तदुपपादयति— अपिचेति। अस्याऽयम्भावः। "स एष सम्प्रसा-

नचापि तेनविना सिद्धिर्वा विद्यायालब्धिर्वा शिवत्वरूपायामुक्तेः ॥

अपिच नार्चिरादिगतिमन्तरेण ज्योतिषः परस्योपसम्पत्तिः । नापि मूर्धन्यनाड्या निष्क्रमणमपहाय सिद्ध्यत्यर्चिरादिगतिः । नैव बहिरन्त-श्चेष्टादिरूपेण ध्रियमाणस्योपास्यमानस्यच महेशितुः प्रसारमन्तरेण मूर्धन्य-नाडीद्वारस्य प्रकाशनञ्चोपलभ्यते ॥

किमुक्तम् भवति । कल्याणगुरुकरुणोपलब्धस्येष्टादिरूपस्य परमेश्व-रस्य परमप्रसादेन मूर्धन्यनाडीद्वारेण निष्क्रम्य देवयानेनाथा परञ्ज्योति

---

तद्यथा— महालिङ्गजाबाले " षट्स्थलोपासनया लिङ्गाङ्गसंयोगेन सर्वाङ्गलिङ्गसाहित्येनच सततं शिवाहम्भावमभ्यसेदिति । वायुसंहितायामपि — "यः कृत्वाऽऽत्यन्तिकीं दीक्षामादेहान्त मनाकुलः । सुव्रतं तत्प्रकुर्वीत सतुवै नैष्ठिकस्स्मृतः । सोऽत्याश्रमीच विज्ञेयो महापाशुपतस्तथा । सएव तपतांश्रेष्ठ स्सएवतु महाव्रती । न तेन सदृशः कश्चित् कृतकृत्यो मुमुक्षुषु"त्युपक्रम्य शिवार्पितात्मा सततमिति प्रकृष्टमननाख्यम् मौनमेवोक्तम् । तथा मौनवदन्येषामपि विद्याङ्गाना मुपदेशो दृश्यते । "पयोव्रती वा भिक्षाशी भवेदेकाशनस्तथा । नक्तयुक्ताशनो नित्यम् भूशय्याभिरतश्शुचिः । भस्मशायी तृणशायी चीराजिनशयोऽथवा । ब्रह्मचर्यरतो नित्यं व्रतमेत-त्समाचरेत् । क्षमादानदयासत्याऽहिंसाशीलस्सदाभवेत् । सन्तुष्टश्च प्रशान्तश्च जपध्यानरत स्तथा " इति ॥

पाशुपतव्रतस्याऽङ्गभूता विद्याप्यथर्वशिरस्येव श्रूयत इत्याह— तन्निष्ठानामिति । "वालाग्रमात्रं हृदयस्यमध्ये विश्वेदेवं जातवेदसं वरेण्यम् । तमात्मस्थं येऽनुपश्यन्ति धीरा स्तेषां शान्तिश्शाश्वती नेतरेषा" मिति हृदयपुण्डरीकान्तरस्थभावलिङ्गसाक्षात्कारान्मुक्तिमुक्त्वा तत्साक्षात्कारसाधनम् प्राणलिङ्गानुसन्धानं विधीयते— प्राणेष्वन्तरित्यादिना । प्राणेषु अन्त-र्मनसश्च तत्तत्प्रेरकतया स्थितम् प्राणानां ग्रन्थिरसीति । "केनेषितम्....पतति प्रेषितम् मनः केन प्राणः प्रथमः प्रैति युक्त " इत्यादिनाच मनःप्राणादीनां परमेश्वरनियम्यत्वाम्नानात् तेषां प्रेरकत्वेन सूक्ष्मशरीरे प्राणलिङ्गरूपेण स्थितमित्यर्थः । यस्मिन्मनसि क्रोधतृष्णादीनि संसारकार-णानि जायन्ते तन्मनो रुद्रेस्थापयित्वेत्युत्तरेणाऽन्वयः ॥

तृष्णां—विषयरागं निरस्य हेतुजालस्य = रागद्वेषमदमात्सर्यादिसंसारकारणजातस्य तामेव निरसनीयां मूलकारणं बुद्ध्या सञ्छिन्त्य बुद्धिं रुद्रेस्थापयित्वा स्वस्यैकत्वं लिङ्गाङ्गसंयोगेन तादात्म्यं आहुः = शिवोहमिति भावनामभ्यसनीयामाहु'रित्यर्थः । एवं प्राणलिङ्गाऽनुसन्धानं विधाय अथ इष्टलिङ्गधारणं विधीयते— रुद्रं शाश्वतमित्यादिना ॥

विमोक्षाय ' इति रुद्रध्यानस्य पाशविच्छेदरूपस्य मोक्षफलस्य सम्बन्धावगमाच्च । अतो यावदायुषं पाशुपतव्रतधारिणां मुक्तिरेव फलम् ॥
यदुक्तमाश्रमेष्वनन्तर्भाव इति तत्राह —

अनाविष्कुर्वन्नन्वयात् ॥ ३–४–४९ ॥

आश्रमान्तररूपेणात्मानमनाविष्कुर्वन् अव्यक्तीभवन्नपि पाशुपताश्रमो विद्यासाधनब्रह्मचर्यादियतिधर्मसमन्वयादत्याश्रमसंज्ञकोऽयमाश्रमभेदः स्वतन्त्रः परमशिवप्राप्तिहेतुः । ' यावच्छरीरपातम् वा द्वादशाब्दमथापि वा ' इत्युक्तेरात्यन्तिकसावधित्वेन पाशुपतव्रतस्य विकल्पः । तत्रात्यन्तिक

---

ननु—तासां ब्रह्मविद्यायामधिकार ऊरीक्रियतएव । किन्तु ऐतासां बहिर्लिङ्गधारणाधिकारएव दूरीक्रियते – इतिचेत्तदपि मोहविजृम्भितम् । " आङ्गवबद्धास्त्वि " त्यधिकरणे तेषामेवैताम् ब्रह्मविद्यां वदेत 'शिरोव्रतं विधिवद्यैस्तु चीर्णमि'त्यादिश्रुति प्रामाण्याऽनुरोधेन पाशुपतव्रतस्य सकलब्रह्मविद्याङ्गत्वस्य सुनिरूपितत्वेन पाशुपतव्रतं प्रतिषिध्य ब्रह्मविद्यायामधिकारं प्रसाधयितुरुपनयनेऽधिकारं प्रतिषिध्य अध्वरेऽधिकारमभ्युपगच्छता तुल्यत्वेन हासावहत्वात् ॥

ननु योषितां लिङ्गधारणेऽभ्युपगम्यमाने रजोदूषितमन्नं तदीयलिङ्गस्यानिवेदनीयं स्यादिति तासां बहिर्लिङ्गधारणमेव नेष्यते । अपितु पाशुपतव्रते ब्रह्मविद्यायामप्यधिकार इष्यतएवेति चेत्तदप्यसमञ्जसमेव । मण्डलदिनावधिके स्वार्ये-पौण्डरीके रजस्वलासम्पर्कदूषितमन्नं ऋत्विजामपिभोज्यमभ्युपगच्छतां मोक्षफलके लिङ्गधारणे रजस्वलास्पृष्टमन्नं तदीयदेवताया अप्यनिवेद्यमितिवादस्य मोक्षविषयमहाविद्वेषमूलत्वेनाऽसम्बद्धत्वात् । ततस्सर्वेषामपि मुमुक्षूणां भस्म-रुद्राक्ष-महालिङ्गधारणात्मकम् पाशुपतव्रतमनुष्ठेयमित्यलमधिकेन ॥

महाभारतेऽपीति । मोक्षधर्मपर्वणि – नवत्यधिकशततमेऽध्याये दक्षंप्रतीश्वरेणोक्तमित्यर्थः । उक्तमर्थमुपसंहरति— तस्मादिति ॥

आत्मानमित्यध्याहृतपदयुक्तस्यानाविष्कुर्वन्निति सौत्रपदस्यार्थतो विवरणम् । अव्यक्तीभवन्नपीति ॥

स्वतन्त्रः परशिवप्राप्तिहेतुरिति । अयमाश्रमविशेषस्संवर्तादिषु महायोगिषु प्रसिद्धः । तथाह्याश्वमेधिकपर्वणि संवर्तचरितमेवम् प्रसिद्धम् ॥

विद्यासम्पत्तिश्च परब्रह्मणो रुद्रस्यानुसन्धानरूपा । मुनिधर्मैर्वदिन्- रेषामपि भिक्षाचर्यशमदमादीनां परधर्माणां पाशुपताख्ये व्रतेऽप्युपदेशात् तन्निष्ठानामपि ' रुद्र एकत्वमाहुः । रुद्रम् शाश्वतम् वै पुराणमिषमूर्जम् तपसा नियच्छत व्रतमेतत् पाशुपतम् ........ अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् तस्माद्व्रतमेतत् पाशुपतम् पशुपाशा-

दोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेनरूपेणाऽभिनिष्पद्यत " इतिश्रुतिः परममुक्तिं स्वस्वरूपाभिनिष्पत्तिरूपामावेदयति । परञ्ज्योतिष उपसम्पत्तिश्च "तेऽर्चिषमभिसम्भवन्ती"ति देव- यानेनपथा गमनमन्तरेण नसम्भवति । देवयानपथोऽपि " शतञ्चैकाच हृदयस्य नाड्यस्तासां मूर्धान मभिनिसृतैका । तयोर्ध्वमायन्नमृतत्वमेती " ति श्रुत्या मूर्धन्यनाड्या निष्क्रमणमपहाय नसम्प- द्यते । अथ मूर्धन्यनाडीतो निष्क्रमणमपि " तदोकोग्रज्वलनं तत्प्रकाशितद्वारा विद्यासामर्थ्यात् हार्दानुगृहीतश्शताधिकया " ति सूत्रेण हृदये निरन्तरमाराधितस्य परमेश्वरस्य प्रसादेन नाडीद्वारे प्रकाशितएव सम्भवतीत्यवगम्यमानतया बहिरन्तश्चेष्टादिरूपेणावस्थितस्य परमेश्वरस्यानुसन्धानं मुमुक्षूणामत्यावश्यकमिति ॥

ननु– बहिर्लिङ्गधारणस्य विहितत्वेऽपि शरीरस्याऽशुचित्वेन तत्रधारणं नयुज्यत इति चेन्न । अशुचिभूतस्यापि शरीरस्य पञ्चगव्यशोधनेन शुचित्वसम्प्रतिपत्त्या तत्रधारणस्य युक्त- तरत्वात् ॥

नच— तथाऽपि वपुषो मलविमोकादिमूलाऽशुचित्वस्य अनिवार्यतया तत्राधारणं नयुज्यतइतिशङ्क्यम् । शौचविधेस्तादृशाऽशुचित्वापनोदकतया आस्तिकानान्तादृशाऽशुचित्व- स्यानाशङ्क्यत्वात् ॥

किञ्च– "सर्वत्र देवता वेदविदि ब्राह्मणे वसन्ती " ति श्रुत्या सर्वदेवतावासयोग्येन ब्राह्मणेन नित्यशुचिनैव भाव्यत्वेन तादृशस्यैव बाह्यलिङ्गधारणेऽधिकृतत्वेन चाऽशुचिस्मन्य स्याऽत्राऽनधिकृतत्वेनेष्टापत्तेः ॥

नन्वेवमपि रजोदूषितत्वपुष्पवतीनाम् योषितां बहिर्लिङ्गधारणं नयुज्यत इतिचेन्न —योषिता मपि मोक्षेऽधिकारस्याऽवार्यतया तासामपि बहिर्लिङ्गधारणस्याऽऽवश्यकत्वात् । अतएव कारणा- न्तरे– 'दीक्षापवित्रिताङ्गस्या लिङ्गस्पर्शो नदुष्यत'इति नारीणां लिङ्गधारणं विहितम् सङ्गच्छते ॥

अथ यद्यशुचित्वसम्भावनया नारीणां बहिर्लिङ्गधारणं प्रतिषिध्येत तर्हि तासां संसारान्ध- कूपावासएव स्थिरीक्रियेत । तद्धि नविमर्शसहम् । गार्गिप्रभृतीनाम् बह्वीनां योषितां ब्रह्म- विद्यापरिनिष्ठितत्वस्य वेदसिद्धत्वात् ॥

अथ ऐहिकाऽधिकरणम् १६

# ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३—४—५० ॥

उक्तक्रमोपासननिष्ठानामैहिकं मुक्तिफलम्, उत जन्मान्तरे वा भवति। इति संशये विचार्यते—इहैव मे जन्मनि मुक्तिर्जायतामित्यभिसन्धाय पुरुष उपासने प्रवर्तते, न तु जन्मान्तर इति। कः प्रयोजनस्य विलम्बनमीहते। तस्मादैहिकमेव मुक्तिफलं यदि भवति। न चेत्, कदाचिदपि न भवति। इति प्राप्ते वदामः- प्रबलकर्मान्तरप्रतिबन्धाभावे परोपासनफलमिह जन्मनि भवति; तत्सद्भावे तु जन्मान्तरे। यथाऽभ्युदयफलं स्वसाधनभूतपुण्यकर्मानन्तरमेव सम्पद्यत इति न नियमः, किन्तु प्रतिबन्धक-

---

नह्यखिलानाश्रमान्परित्यज्य दिगम्बरतया उत्पथं प्रतिपन्नस्यैवंविधोमहिमा सम्भावयितुमपि शक्यते। तथाजैगिषव्यचरितमप्येवंविधम् मोक्षधर्मे प्रसिद्धम्। एवमन्येषामपि महायोगिनां श्वेतादिलकुलीशान्तानां पाशुपताश्रमनिषेवणं पुराणेषु प्रपञ्चितमनुसन्धेयम् ॥

इति मौनवदधिकरणम्

अथ ऐहिकाधिकरणम् १६

विद्याया मुक्तिःफलमित्येतदुपपद्यतेवा नवेति तस्यास्तत्फलकत्वे विद्योदयदेहावसानएव मुक्त्यवश्यम्भावतदनवश्यम्भावाभ्यां संशये पूर्वपक्षः ॥

विद्याया मुक्तिःफलमित्येतन्नोपपद्यते। तथासति इहैव जन्मनि मुक्तःस्यामित्युपासककामनानुरोधा द्विद्योदयदेहावसानएव मुक्त्यवश्यम्भावेन विदुषां जन्मान्तरश्रवणविरोधापत्तेः। जन्मप्रवाहोद्विग्नाना मिहैवजन्मनि मुक्तस्स्यामित्येवहि कामना नतु परस्मिन्जन्मनि जन्मान्तरसहस्रेवेति ॥

नच— "भोगेनत्वितरे" (ब्र॥ ४—१—१९) इत्यधिकरणन्यायेन यावत्प्रारब्धप्रतिबन्धकर्मक्षयं विद्याफलविलम्बं प्रतिपादयन्ती "तस्य तावदेवचिरमि"ति श्रुतिः प्रारब्धस्य विद्याफलप्रतिबन्धकत्वकल्पनायाम् प्रमाणंस्यादिति वाच्यम् ॥

मत्याश्रमसंज्ञकमपवर्गहेतुः, तदन्यद्भोगहेतुरिति व्यावस्था । एवं भुक्तिमुक्ति-हेतुतयोभयात्मकमिदं व्रतं शिवप्रसादकरं श्रुतिरेव विदधाति । यथा नाप्रा-माण्यापातोऽस्या भवति तथा योजनीयम् ॥

इति मौनवदधिकरणम्

---

तत्रहि— "बृहस्पतिस्तु संवर्तम् बाधतेस्म पुनः पुनः । स बाध्यमानस्संवर्तो भ्रात्रा ज्येष्ठेन भारत । अर्थानुत्सृज्य दिग्वासा वनवासमरोचय" दिति । दिग्वासस्त्वलिङ्गेन संवर्तस्य पाशुपताश्रमपरिग्रहस्सूचितः । यतस्तत्र दिग्वासस्त्वमुक्तम् ॥

शिवपुराणे "ततस्तु जटिलो मुण्डः शिख्येकजटएववा । भूत्वा स्नातः पुनर्वीत-लज्जश्चेत्स्याद्दिगम्बरः" इति ॥

तथा— "उन्मत्तवेषम् बिभ्रत्सचङ्क्रमीति यथासुखम् । वाराणसीन्तु नगरीमभिक्ष्मुपसेवते" । इत्युक्तम् । शिवक्षेत्रसमाश्रयणमपि तत्र लिङ्गम् । "यस्य नित्यम् विदुः स्थानम् मोक्षमध्यात्मचिन्तकाः । योगिनस्तत्त्वमार्गस्थाः कैवल्यं परमंपदम् । यं विदुस्सङ्ग-निर्मुक्ता स्सामान्यम् समदर्शिनः । तं प्रपद्ये जगद्योनिमयोनिं निर्गुणात्मकम् । असृजद्यस्तु भूतादीन् सप्तलोकान् सनातनान् । स्थितस्सत्योपरिस्थाणुस्तम्प्रपद्ये सनातनम् । भक्तानां सुलभं तंहि दुर्लभं दूरपातिनां । अदूरस्थमजं देवं प्रकृतेःपरतःस्थित" मिति ॥

संवर्तेन मरुत्तायोपदिष्टे शिवस्तोत्रे शिवस्याध्यस्यानमेव मोक्षस्थानं परमम्पदमित्यादि-प्रतिपादनञ्च संवर्तस्य शिवपदार्थितया पाशुपताश्रमपरिग्रहे लिङ्गम् ॥

तथा— "मास्मैवम् त्वम् पुनरागाः कथञ्चिद्बृहस्पतिम् परिधातुम् मरुत्तमत्वाधक्ष्ये चक्षुषा दारुणेन सङ्क्रुद्धोहं पावकं तम् निबोधे" ति मरुत्तस्य यज्ञे वितते तद्दीयं यज्ञम् प्रवर्त-यता संवर्तेन सक्रोधमुक्तस्य बृहस्पतिमरुत्तयोस्सन्धानार्थमिन्द्रेण प्रेषितस्याऽग्नेः "ततो नाक मगमद्धूमकेतु र्दाहाद्भीतो व्यथितोऽश्वत्थपर्णवदि" ति संवर्तकोपभीत्या प्रत्यावृत्तिमुक्त्वा— "गन्धर्वाराध्यत्वयम् तत्र दूतो बिभेम्यहं वासव तत्र गन्तुम् । संरम्भान्मामुक्तवांस्तत्र तीक्ष्णं संवर्तो वाक्यम् चरितब्रह्मचर्य" इत्यग्निवाक्ये यत्संवर्तस्य ब्रह्मचर्यानुष्ठानप्रयुक्तमहामहिमत्ववर्णनं कृतं तदपि तत्र लिङ्गम् ॥

नियमोऽस्ति न वेति संशयः ॥ किं तावत् प्राप्तम् ? कर्मफलवन्मुक्तिफलमपि सातिशयम् — 'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यादिभिः कर्मफलस्य सातिशयत्वमवगम्यते। तद्वदुपासनज्ञानफलस्यापि। इति प्राप्तेऽभिधीयते— कर्मफलस्येव ज्ञानोपासनफलस्य न सातिशयत्वनियमः। ब्रह्मस्वरूपावस्थाया एव फलत्वावधृतेः। सर्वेषामपि विद्यावतां ब्रह्मस्वरूपास्यैकत्वान्न वैषम्यकथाऽत्र सम्भवति।

---

अथ मुक्तिफलाऽधिकरणम् १७

ब्रह्मविद्यायाः कर्मप्रतिबध्यत्वेन कर्माविशेषा त्तद्वदेव सातिशयफलत्वमप्यस्त्विति प्रत्यवस्यानात्सङ्गतिः ॥

न्यूनाधिकगुणाना मव्यवस्थितकालप्रायणपर्यन्तानुष्ठेयानाञ्च विद्यानां वैषम्यात् फलवैषम्यमवश्यं कल्पनीयम् ॥

मुक्तानां ब्रह्मणा परमसाम्यश्रुतिस्तु— यथा जगद्व्यापाराद्व्यावर्तिता तथा सर्वात्मना ब्रह्मानन्दभोगादपि व्यावर्तनीया। यथार्हम् ब्रह्मानन्दभोगमात्रेण ब्रह्मसाम्यावलम्बना योजनीयेति पूर्वपक्षः ॥

सिद्धान्तस्तु— उपासनावैषम्येण फलवैषम्यकल्पने फलवैषम्यमनन्तविधं कल्पनीयम्। उपास्यगुणतारतम्येन अहरहरुपासनाकालतारतम्येन तदुपासकजीवनकालतारतम्येनच उपासनावैषम्यस्याऽनन्तविषयत्वात् ॥

आनन्दमीमांसायामुत्तमपर्यायगतस्य "श्रोत्रियस्यचाकामहतस्ये" ति वाक्यस्य मुक्तविषयतयाऽवश्याभ्युपगन्तव्यत्वेन तस्य सर्वमुक्तसाधारण्यात्परब्रह्मणो यावान्प्राजापत्यानन्दापेक्षया शतगुणत्वेन श्रुतआनन्दभोगस्तावान् सर्वेषामिति सिद्धौ परमसाम्यश्रुतिरपि तदेकार्थास्यादिति श्रुतिबाधितमिह फलवैषम्यं न्यायसहस्रेणाऽपि न कल्पयितुं शक्यम्। नहि— "सप्तदशप्राजापत्यान् पशूनालभत" इत्यत्र सप्तदशश्रुतिबाधितं कपिञ्जलाधिकरणन्यायेन बहुवचनस्य त्रित्वे पर्यवसानं कल्पयितुं युक्तम्, तस्मात् कर्मभूयस्त्वात् फलभूयस्त्वमिति पूर्वतन्त्रोक्तन्यायः, यत्र सत्यपिकर्मतारतम्ये फलाविशेष्यं तद्व्यतिरिक्तविषय इत्यवश्यमभ्युपेयम् ॥

सद्भावे जन्मान्तरे भवति, तद्वत्, वामदेवादिषु जन्मान्तरश्रवणादिबलेन तत्फलदर्शनात्। ततोऽनैहिकत्वे मुक्तिफलस्य नियम इति ॥

इति ऐहिकाऽधिकरणम्

---

अथ मुक्तिफलाऽधिकरणम् १७

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः

॥ ३–४–५१ ॥

केवलकर्मफलाभ्युदयवन्मुक्तिफलमपि प्रबलकर्मान्तरप्रतिबन्धाभावे भवतीति निरूपितम्। तन्न्यायेन कर्मफलवत् ज्ञानफलस्यापि सातिशयत्व-

उद्गीयविद्यादिसहकृतत्वमात्रेण यागादीनाम्प्रबलकर्मान्तरप्रतिबध्यत्वश्रुतिसामर्थ्याद्विद्या-जातेः कर्मजात्यपेक्षया प्राबल्यनिर्धारणेन कर्मणो विद्याप्रतिबन्धकत्वकल्पनस्याऽयुक्तत्वात्। "तस्य तावदेवे" ति श्रुतेः शरीरावसानं मुक्तिफलकतया स्तावकत्वोपपत्तेः। तस्माद्विद्यायाः मुक्तिफलकत्वे विद्योदयदेहावसाने मुक्त्यवश्यम्भावेन विदुषां जन्मान्तरश्रावणविरोधापत्तेः विद्यायाः मुक्तिफलमित्येतन्नोपपद्यत इति ॥

सिद्धान्तस्तु— सर्वेषु वेदान्तेषु क्षयिष्णुत्वसातिशयत्वाभ्यां सकलकर्मफलनिन्दापुरस्सरं ब्रह्मविद्यानां मुक्तिफलश्रवणानि तावत्तासामप्रतिबन्धेन कर्मफलोत्पत्त्यर्थे ततस्तावक्तया नेतु मयुक्तानि। विरोधात्। अतस्तानि फलविधिपराण्येव। विदुषां जन्मान्तरश्रावणन्तु प्रारब्धस्य विद्याफलप्रतिबन्धकतयोपपादनीयम्। विद्याया कर्मान्तरापेक्षया प्राबल्येऽपि प्राबल्यप्रतिबध्यत्व-कल्पनायां नकश्चिद्विरोधः। प्राबल्यदौर्बल्ययोः फलबलकल्प्यत्वेन जातिभेदकल्प्यत्वाभावात्। जलविजातीयस्याऽपि वडवाग्नेर्जलवासित्वदर्शनात्।

एवञ्च— प्रारब्धावसाने मुक्तःस्यामित्येव कामना ब्रह्मविद्याधिकारविधिषुकमिश्रुतीना मर्थइति कल्पनीयमिति ॥

इति ऐहिकाऽधिकरणम्

---

न चोपासनतारतम्यान्मुक्तिरूपस्य तत्फलस्य तारतम्यं स्यादितिवाच्यम्। उपासनकर्मणां मुक्तिफलव्यतिरेकेण फलान्तराभावात्। ब्रह्मण एकत्वेन तद्रूपस्य मुक्तिफलस्याप्येकत्वात्। अतो न मोक्षफलवैषम्यमिति॥

इति मुक्तिफलाऽधिकरणम्

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये

तृतीयाध्यायस्य चतुर्थः पादः

---

अन्यथा दूरात् समीपाच्चागत्य तटाके तृष्णया पानीयंपिबतामविशिष्टातृप्तिरनुभवसिद्धा विरुद्ध्येत। अतएव धीशक्तिपाटवान्मान्द्याद्वा वेदमभ्यस्य तां वेदाक्षरावाप्तिरविदिष्टाच सङ्गच्छते। नैतादृशेषु स्थलेषु कर्मभूयस्त्वात् फलभूयस्त्वमिति न्यायेन प्रवर्ततइति॥

इति मुक्तिफलाऽधिकरणम्

इति श्री नागलिङ्गशिवराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां

श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीय

ब्रह्मसूत्रभाष्यव्याख्यायां तृतीयाध्यायस्य

चतुर्थः पादः

विहितं वेदनमसकृदावर्तनीयम् । 'मनो ब्रह्मेत्युपासीत—भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवम् वेद यत्स वेद स मयैतदुक्तः' 'अनु म एताम् भगवो देवताम् शाधि याम् देवतामुपास्से' इत्यादि-श्रुतिषूपक्रमोपसंहारयोर्विद्युपास्त्योर्व्यतिकरोपदेशेन मोक्षसाधनरूपस्य वेदन-स्योपासनारूपत्वावगमात् । उपासनशब्दस्य च स्मृतिसन्तानवाचित्वात् ।

इह चतुर्थाध्यायस्य प्रथमपादे आवृत्त्यादिरूप उपासनाप्रकारो निरूपितः । तस्य साधनान्तर्गतत्वेऽपि फलार्थावस्त्युपज्ञत्वादुपासनायाः प्रीतिपूर्वकचिन्तानुवृत्तिरूपत्वेन फलान्तर्भाव स्याऽपि सत्वाच्च फलाध्याये निरूपणम् ॥

द्वितीयपादादिषूत्क्रान्त्यादयो निरूप्यन्ते । विदुषां मूर्धन्यनाड्योत्क्रान्तिरर्चिरादिगतिः। ब्रह्मप्राप्त्यनन्तरभाविगुणाविर्भावश्चेत्येते क्रमभाविनो विद्याफलविशेषाइति फलक्रमात्पादक्रमः। यद्यपि प्रथमपादे "तदधिगम उत्तरपूर्वाघयो" [ब्र॥ अ ४—पा १—सू १३] रित्यधिकरण मारभ्य पापक्षयस्य निरूप्यमाणत्वात्सर्वपूर्वभाविकर्मक्षयरूपं फलं प्रथमपादे निरूप्यते विद्यायाः कर्मक्षयहेतुसाक्षात्कारपर्यन्तत्वोपयोगिदार्ढ्यसिध्यर्थं मावृत्त्यादिनिरूपण मित्यपि वक्तुंशक्यम् । तथाऽपि कर्मक्षयापेक्षयाऽप्युपासनाचिरविरहोत्कण्ठितनायिकाया नायकविषय-चिन्ताऽनुवृत्तिव त्तात्कालिकानन्दाविर्भावपर्यवसायित्वेनाऽतिशयितफलरूपेत्यभिप्रेत्योपासनाप्रकार एव भाष्ये प्रथमपादार्थत्वेन वर्णितः । अतएव शिवभाववतामानन्दविशेषोपलब्धि श्शिवेनैव वर्णिता । "कम्पस्स्वेदोऽश्रुपातश्च कण्ठेच स्वरविक्रिया । आनन्दाद्युपलब्धिश्च भवेदाकस्मिकी मुहुः । एतैर्व्यस्तैस्समस्तैर्वा लिङ्गैरव्यभिचारिभिः। मन्दमध्योत्तमैर्भावैर्विज्ञेयास्ते नरोत्तमाः। यथाऽयोऽग्नि-समावेशान्नायो भवति केवलम् । तथैव ममसान्निध्या न्नते केवलमानुवाः" इति ॥ एवं साक्षात्कार-पर्यन्तोपासनाप्रकारनिरूपणेनैव प्रथमपादस्य फलाध्यायाऽन्तर्भावः इत्यभिप्रेत्याऽग्रेऽपि भाष्यकारः पापक्षयप्रतिपादकाऽधिकरणानां सङ्गत्यन्तरं वक्ष्यति । विदेर्ज्ञानमात्रपरत्वोपासनापरत्वानवधारणा त्संशये पूर्वपक्षमाह— सकृदिति । दृष्टान्तमाह— प्रयाजादिवदिति ॥

ननु — मनोब्रह्मेत्यादिब्रह्मदृष्टिप्रकरणे प्रक्रान्तोपासना "य एवंवेदे" ति विदिनोप-संहृता । संवर्गविद्याप्रकरणे "यत्सवेदे" ति हंसवचने श्रुतम् रैक्वस्यवेदनं रैक्वंप्रतिजानश्रुतिवचने उपासिनोपसंहृतमित्यस्तुनाम । एवंविद्युपास्त्योः व्यतिकरेणोपदेशस्य सर्वविद्यासाधारण्याभावा द्विद्यान्तरेषु प्रयाजवत्सकृदेवाऽनुष्ठानं स्यादित्याशङ्कामनूद्य निराकरोति— यदुक्तमिति । अयमाशयः । यासांविद्यानां साक्षात्कारपर्यन्तत्वं श्रुतम् तासामावर्तमानतयोपासनारूपत्वमवघात-न्यायेन सिद्ध्यतीतितावन्निर्विवादम् । तस्याऽऽवर्तमानत्वात्मकस्योपासना रूपत्वस्य विद्यान्तर-

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाराध्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ चतुर्थाध्यायस्य

## प्रथमः पादः

---

अथ आवृत्त्यधिकरणम् १

### आवृत्तिरसकृदुपदेशात् ॥ ४–१–१ ॥

विचारिताः खलूपासकोपास्योपासनभेदाश्रमधर्मादयस्तृतीयाध्याये। इह पुनश्चतुर्थाध्याये प्रथमे पादे उपासनाप्रकारः, द्वितीये जीवस्योपासकस्योत्क्रान्तिदशा, तृतीयेऽर्चिरादिगतिः, चतुर्थे ब्रह्मप्राप्तस्यावस्था च निरूप्यते। प्रथमाऽधिकरणेऽत्र 'ब्रह्मविदाप्नोति परम्' 'ज्ञात्वा शिवम् शान्तिमत्यन्तमेति' इत्यादिषु मोक्षसाधनतया विहितं वेदनं सकृदनुष्ठेयम्? उतावर्तनीयम्? इति संशयः॥ किंतावत् प्राप्तम्? सकृदनुष्ठेयम्, 'सकृत्कृते कृतः शास्त्रार्थः' इति न्यायात्। प्रयाजादिवत् सकृदनुष्ठानेऽपि वेदनज्ञानशब्दार्थसिद्धेः॥ इति प्राप्ते ब्रूमः। 'ब्रह्मविदाप्नोति परम्' इत्यादिषु मोक्षसाधनतया

---

अथ आवृत्त्यधिकरणम् १

श्रोतृबुद्धिसौकर्याय वृत्तवर्तिष्यमाणपदार्थाननुकीर्तयन् सङ्गतिमाविष्करोति—विचारिताइति। साधननिरूपणाऽनन्तरं तदधीनंफलं निरूप्यत इत्यध्याययोस्सङ्गतिर्विवक्षिता। तत्र तृतीयाध्यायस्य प्रथमेपादे संसारवैतृष्ण्यजननयेह परत्रच परिभ्रमणरूपमुपासकस्यस्वरूपं निरूपितम्। द्वितीयपादे परब्रह्मप्राप्तितृष्णाजननाय निर्दोषाऽसङ्कुचमङ्गळगुणाकरत्वादिस्तन्महिमा निरूपितः। तृतीयपादे मुमुक्षुकर्तव्योपासनाभेदा निरूपिताः। चतुर्थपादे उपासनाङ्गान्याश्रमधर्मशमदमादीनि निरूपितानि। निरन्तरोपासनाप्राबण्यपरमसाधनतया मुमुक्षुसमाचरणीयम्प्राशुपतव्रतं निरूपितम्॥

समभ्यसेत् । अध्यात्मिकान् योगाननुतिष्ठेत् ॥ रुक्माभम् स्वप्नधीगम्यम् विद्यात्तु पुरुषम् परम् । ' इत्यादि । अतश्च ब्रह्मवेदनस्यावृत्तिरिति ॥

इति आवृत्त्यधिकरणम्

---

अथ आत्मत्वोपासनाऽधिकरणम् २

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४–१–३ ॥

पूर्वत्र ब्रह्मण उपासनमावृत्तिमदभिहितम् । तदात्मनस्तद्भावेनोपासनमुत तदर्थान्तरत्वेनेति विचारः ॥ एवं सति ' विश्वाधिको रुद्रो महर्षिः ' ' अधिकन्तु भेदनिर्देशात ' इत्यादिश्रुतिसूत्रेषु प्रत्यगात्मनः पशोर्जीवात् पत्युः परब्रह्मणोऽर्थान्तरत्वेन निरूपितत्वात सर्वज्ञत्वादिना* जीवस्य ब्रह्मभावाघटनाच्च ब्रह्मोपासनं जीवस्य तद्भि [ स्वभि ] न्नत्वेनैव युज्यत इति पूर्वः पक्षः । सिद्धान्तस्तु । यद्यपि जीवादधिकमेव शिवाख्यं परं ब्रह्म,

---

ध्यानयोगवेद्यत्वमावेदयति । ततएवच महाभारतेमोक्षधर्मपर्वणि "एवंहिपरिसङ्ख्याय ततो ध्यायन्ति केवलमि " ति ध्यानयोगमुपदिश्य " स्वयुक्तः पश्यतेब्रह्म यत्तत्परममव्ययम् । महतस्तमसो मध्ये स्थितं ज्वलनसन्निभमि " ति ब्रह्मसाक्षात्कारो ध्यानयोगैकलभ्य उपदिष्टः वेदान्तार्थपरिष्कारे सविस्तरमुपपादितइतिनेह ॥

इति आवृत्त्यधिकरणम्

---

अथ आत्मत्वोपासनाऽधिकरणम् २

विद्यायास्साक्षात्कारफलार्थापत्तिप्रसूतमावृत्तिगुणकत्वमावेदितम् । इदानीं पशुत्वनिवृत्तिरूपफलार्थापत्तिरूपं शिवोऽहमितिभावनारूपत्वमुपपाद्यतइति सङ्गतिं दर्शयति— पूर्वत्रेति । तदात्मन इति । तदुक्तं ब्रह्मकर्मकोपासनमात्मनो जीवस्य कर्तुस्तद्भावेन जीवभावेनोत तदर्थान्तरत्वेन जीवभिन्नत्वेनेति जीवाधिकत्वोपपत्त्यनुपपत्तिभ्यां संशय इत्यर्थः । भेदनिर्देशादित्यादिशब्देन

---

* ' अज्ञत्वसर्वज्ञत्वादिगुणैर्न्यूनाधिकभावस्य संप्रतिपन्नत्वाच्च ' इति पाठान्तरम् ।

यदुक्तम् ‘प्रयाजादिवत्’ इति, तस्यादृष्टफलत्वाद्युक्तम् सकृदनुष्ठानम्। वेदनफलस्य साक्षात्कारस्य दृष्टत्वात् तस्याफलोदयमावृत्तिः- अवघातादिवदिति ॥

## लिङ्गाच्च ॥ ४-१-२ ॥

अस्मिन् विषये लिङ्गञ्चास्ति। ‘क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता। महापातकयुक्तो वा युक्तो वाऽप्युपपातकैः ॥ प्रविश्य रजनीपादम् ब्रह्मध्यानम्

---

साधारण्यमप्यवघातन्यायेनैव सिद्धयति। व्रीह्युद्देशेन विहितस्याऽप्यवहननस्य यवसाधारण्य मपेक्षासामर्थ्यादुपपादनीयम्। नोपायान्तरेण। तथाहि— यवानां पुरोडाशप्रकृतिद्रव्यत्वाऽविशेषेण व्रीहिवत्तण्डुलभावादिसाधनापेक्षासत्त्वेन तदपेक्षासामर्थ्यादेवाऽवहननविधे र्यवसाधारण्यमुपपादनीयम्। एवमेवोपासनारूपत्वस्य विद्यान्तरसाधारण्यम्। तथाहि— विद्या साक्षात्कारद्वारा मुक्तिफलेति कासुचिद्विद्यासु श्रुतत्वा दितरासामपिविद्यानां तथैव दृष्टद्वारत्वे सम्भवति नाऽदृष्टद्वारत्वं कल्पयितुं युक्तम् ॥

एवञ्च दृष्टार्थत्वलोभादवघातस्य वितुषीभावद्वारकत्वसिद्धयेव विद्यान्तराणां साक्षात्कारद्वारत्वसिद्ध्या तन्निर्वाहार्थमावृत्तिः कल्पनीयेति तासामावृत्तिविशिष्टत्वरूपोपासनात्मकत्वसिद्धिरिति। एवमपेक्षावशादेव यज्ञादीनां शमादीना मुद्धूलनत्रिपुण्ड्रयो राप्रायणविद्यानुष्ठानस्याशेषपापविनाशयोरन्येषाञ्चैवंविधानां सर्वविद्यासाधारण्यमवगन्तव्यम् ॥

अत्रावृत्तिरित्यनेनैव साध्यार्थसिद्धावसकृदितिविशेषणं यावत्फलोदयमावृत्तिदृष्टफलत्वादिति प्रधानहेतुसूचनार्थमुक्तम्। उपदेशादिति तदुपोद्बलकं कासुचिद्विद्यासूपासनारूपत्वप्रतिपादनंलिङ्गमुक्तम् ॥

सूत्रार्थस्तु— आवृत्तिरसकृद्ब्रह्मप्राप्तिसाधनं वेदनमसकृदावृत्तमेवशास्त्रार्थः। वेदनं ध्यानशब्दवाच्यमित्यर्थः। कुतः? उपदेशात्। “आत्मानमेवलोकमुपासीत। आत्मावारे द्रष्टव्य” इत्यादिना उपासनोपसंहारोपदेशात्। उपासनमविच्छिन्नस्मृतिसन्तानरूपमिति ॥

लिङ्गम्=स्मृतिः। श्रुत्यनुरूपकत्वात्। क्षेत्रज्ञस्येति। स्मृतावीश्वरज्ञानम् सकलपापप्रायश्चित्तमुक्तम्। स्मृत्यन्तरे तस्य यामपर्यन्ताऽनुवर्तनीयध्यानरूपत्वमुक्तम्। तथैव स्मृत्यन्तरे तस्य ज्ञानस्य योगशब्दवाच्यसमाधिरूपत्वमुक्तम्। सकलबाह्येन्द्रियव्यापारोपरमपूर्वकत्वसाम्यात्समाधिरेव हि स्वप्नधीशब्देन निर्दिष्टः। अतएव “अध्यात्मयोगाधिगमेन देवं मत्वे”ति श्रुतिरपि परमेश्वरस्य

उपासकः शिव एव भवति । निरस्तसमस्तदोषकलङ्कशङ्कानिरतिशयमङ्गलास्पदं हि शिवत्वम् । परं ब्रह्म च तादृगेव । तद्भावनयोपासकश्च तथैव भवति । अत एव तदन्यस्य मुमुक्षुध्येयत्वं निषिध्यते । ' शिव एको ध्येयः शिवङ्करः सर्वमन्यत् परित्यज्य ' इत्यादिश्रुतिषु । निवृत्तब्राह्मणादिदेहाभिमानमयपशुभावस्य निरतिशयस्वरूपानन्दमाक्षिस्वप्रकाशशिवरूपपराहंभावापत्तिर्मुक्तिरिति

---

विहितायाम द्वितीयादिखण्डेषु शङ्काविशेषनिराकरणपूर्वकं तदनुवादइति सैवहि सत्यादयइत्यधिकरणे समर्थितत्वात् । अनुवादश्च सद्रूपं ब्रह्मास्मीति भावनया तत्राऽपि ब्रह्मात्मता स्फुटाभविष्यतीत्येतद्वादर्थोऽर्थः ॥

ननु जीवब्रह्मणोर्भेदात् "अहंब्रह्मास्मि" "शिवोहमस्मि"इत्यादि भावना भ्रमरूपास्यात् । सा कथं मुक्तिहेतुरित्याशङ्कानिराकरणायाह — निरवधिकेति । यथा कीटस्य कीटत्वनिवृत्तिपूर्वकभ्रमरत्वप्राप्तिः भ्रमराऽहम्भावनामाध्या एवं पशोः पशुत्वनिवृत्तिपूर्वकनिरस्तसमस्तदोषकल्याणगुणाविर्भावरूपशिवत्वप्राप्तिः शिवाहंभावसाध्येति "देवोभूत्वा देवानप्येती" ति श्रुतेरवसीयते । नच श्रुतिप्रतिपन्नेऽर्थे काचिदनुपपत्तिरितिभावः । तथैवभवतीति अनादिशिववत्तभेदभावनया तद्वत्स्वयमपि शिवएवभवतीत्यर्थः । अतएवेति । यतश्शिवाऽभेदभावनयैव शिवत्वप्राप्तिः नतु शिवेतरभावनया । अतएवेत्यर्थः ॥

* शुद्धाद्वैतिनस्त्वत्र जीवेश्वरयोरैक्यम सिद्धान्तयन्ति तस्मिन्पक्षे विरुद्धधर्मयोगाज्जीवेशयोरैक्यं नोपपद्यते । किञ्च—ईश्वरस्यैव जीवत्वे ईश्वरस्याऽभावः प्रसज्यते । जीवस्येश्वरत्वे च शास्त्राधिकारी नोपलभ्येत । अहंदुःखीत्यादिप्रत्यक्षविरोधश्चेत्याशङ्क्य तस्यप्रामाणिकत्वादितिईश्वराभावस्तैःपरिह्रियते । तन्नयुज्यते । प्रामाणिकस्येश्वरस्य परित्यागः प्रसज्यतइति शङ्कायाः प्रामाणिकत्वादिति परिहर्तुमयुक्तत्वात् । तत्त्वाऽबोधात्प्रागधिकारीसिद्ध्यतीति शास्त्राधिकारिणं साधयन्ति । तदप्ययुक्तम् । ईश्वरस्य सर्वज्ञत्वान्निर्विशेषचिन्मात्रस्य ज्ञातृत्वाभावाच्च । ज्ञातुश्च स्वनाशस्याऽपुरुषार्थत्वात्त्रयाणामप्यधिकाराऽनुपपत्तेः । नच श्रावणात्पूर्वं स्वनाशाऽनभिज्ञत्वा द्दम्युभूयिष्ठमार्गे मार्गाऽनभिज्ञवद्वतरतीतिशङ्क्यम् । अश्रुतेऽपिशास्त्रे सौगतानां सर्वक्षणिकत्ववत् केवलाद्वैतिनां मुक्तेः ज्ञातृनाशरूपत्वस्य प्रसिद्धिप्राचुर्येण तच्छास्त्रभीरुत्वाल्लोकस्य । अतएव " अधिकन्तु भेदनिर्देशादि" त्यादिसूत्रे जीवेश्वराऽभेदः प्रत्याख्यातः । तस्मादस्याऽधिकरणस्य जीवेश्वरैक्योपपादनपरत्वमयुक्तमितिदिक् । अथात्र यत्परैरुक्तम् । " गरुडोऽहमितिवदीश्वरोऽहमितिज्ञानस्यातत्त्वविषयत्वादतत्त्वज्ञानान्मोक्षस्स्याद्यथोपासनं फलमिति

तथाऽप्युपासिताऽहंब्रह्मास्मीति तदुपासीत । यतः पूर्वेऽप्युपासितारः ' त्वम् वा अहमस्मि भगवो देवते अहम् वै त्वमसि ' इत्यात्मेत्येवावगच्छन्ति । उपासितुरर्थान्तरत्वेऽपि तानुपासितॄननुगृह्णाति स्वस्वरूपतया परं ब्रह्म । ते च पुनः स्वात्मतया ग्राहयन्ति परानपि शिष्यान् ' तत्त्वमसि ' इत्यादिना । निरवधिकपरमानन्दमयनिष्कलङ्कशिवत्वप्राप्तिर्हि मुक्तिः । शिवत्वप्राप्तिरात्मनः पशुत्वनिवृत्तिमन्तरेण न सम्भवति । पशुत्वनिवृत्तिश्च न तद्भावनां विना । अतो निरन्तरं शिवोऽहमिति भावनाप्रवाहेण शिथिलितपाशतयाऽपगतपशुभाव-

---

" अधिकोपदेशात्तु बादरायणस्यैवम् " (ब्र॥ ३–४–८१) " सुषुप्त्युत्क्रान्त्योर्भेदेन " (ब्र॥ १–३–४२) इत्यादिसूत्राणि गृह्यन्ते । तद्भिन्नत्वेनैवेति एवकारेण " त्ववा अहमस्मि " "तत्त्वमसि" । इत्यादिसामानाधिकरण्यनिबन्धनं पशुत्वनिवृत्तिफलार्थापत्तिनिबन्धनञ्चाभेदेनोपासनं व्यावर्त्यते । सामानाधिकरण्यं शरीरशरीरिभावेनोपपद्यते । पशुत्वनिवृत्तिफलकत्वं स्वशरीरकशिवोपासनायास्तादर्थ्यविधिबलेनोपपद्यतइतिभावः । "त्वंवा अहमस्मी" ति । यदि शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यं तदानीमहं त्वमसीति निर्देशएवोपपद्यते । त्वंशब्दनिर्दिष्टे परमेश्वरे स्वशरीरकत्वपर्यन्तस्याऽहंशब्दस्य वृत्त्युपपत्तेः । "त्वंवा अहमस्मी"ति निर्देशस्तु नोपपद्यते । अहंशब्दनिर्दिष्टे परमेश्वरशरीररूपे स्वस्मिन् परमेश्वरवाचिनस्त्वंशब्दस्य प्रवृत्त्यनुपपत्तेः । शरीरवाचिनां हि शरीरिपर्यन्तत्वं व्युत्पत्तिसिद्धम् । नतु शरीरिवाचिनां शरीरपर्यन्तत्वम् । अतः कर्मव्यतिहारेण स्वस्मिन्परमेश्वरदृष्टिः परमेश्वरे स्वदृष्टिश्च विवित्सिताऽत्रेत्यवसीयते । उपासितुरिति । यद्यप्युपासितुर्भिन्नएवपरमेश्वरस्तथाऽपि मान्त्रिकाद्भिन्नोगरुडइव चिरनिरन्तरसेविताभेदभावनादार्ढ्यसम्बन्धेन प्रातीतिकेन स्वस्वरूपत्वेनाऽनुगृह्णाति । यथा गरुडः विषसंहरणसामर्थ्यविशेषप्रदानेन मन्त्रिणोऽनुगृह्णाति तथा परमेश्वरः पशुत्वनिवृत्तिरूपफलप्रदानेनोपासकाननुगृह्णातीत्यर्थः । तत्त्वमसीत्यादिनेति । तत्त्वमसीत्यत्र त्वंशब्दनिर्दिष्टप्राग्वर्णितजगत्कारणत्वादिविशिष्टपरमेश्वराऽभेदो बोध्यत इत्यसिशब्दयोगादवसीयते । अतस्तत्र त्वंशब्दस्सम्बोध्यजीवमात्रपरः । नतु तदन्तर्यामिपर इत्यभ्युपगन्तव्यम् । सम्बोध्यं प्रतिस्वात्मनइव स्वान्तर्यामिणः स्वाऽनुभवेनवा प्राचीनोपदेशेनवा प्रसिद्धत्वाभावेन तस्य तंप्रत्युद्देश्यताऽनर्हत्वात्प्रकृतस्य सद्रूपस्य परमेश्वरस्य कथञ्चित्स्वान्तर्यामितया प्रागुपदिष्टत्वसमर्थने तत्र तद्भेदशङ्काऽनुदयेन तदभेदबोधनाऽनपेक्षणात् । अतस्तत्त्वमसीतिवाक्यं स्वात्मनि ब्रह्मदृष्टिविधिपरमित्येवाऽभ्युपगन्तव्यम् । नच तस्य विद्याविधिपरत्वे प्रतिखण्डमभ्यासेन विद्याभेदस्स्यादिति शङ्कनीयम् । प्रथमखण्डएव स्वात्मनि ब्रह्मदृष्टौ

उच्यते । नात्मग्रहणं प्रतीकेषु हि न परं ब्रह्मोपास्यम्, किन्तु ब्रह्मदृष्ट्या मनःप्रभृतिकमुपास्यम् । तत्र मनआदिविशिष्टस्य ब्रह्मण एवोपास्यत्वेपि मनआदेर्ब्रह्मगुणत्वाभावात् विकारत्वेन तद्विशिष्टे ब्रह्मणि नात्मग्रहणम् । किन्तु सत्यसङ्कल्पत्वादिविशिष्टे । अन्यथाह्यात्मनोऽपि विकारास्पदत्वं स्यात । अतः प्रतीके नात्मग्रहणमुपासकानाम् । न हि तत्र परमेश्वरः साक्षादुपास्य इति ॥

इति प्रतीकाऽधिकरणम्

अथ ब्रह्मदृष्ट्यधिकरणम ४

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ३-४-५ ॥

प्रतीकोपासने मनआदिन्यादिप्रतीके ब्रह्मदृष्टिरुपासकेन कर्तव्या, उत ब्रह्मणि तद्दृष्टिः । इति सन्देहे पूर्वः पक्षः । मनआदिदृष्टिं ब्रह्मणि कृत्वा

पूर्वाऽधिकरणेहि ब्रह्मदृष्ट्योपास्यमानस्स्वात्माउपासकम्प्रति ब्रह्मत्वेनाऽवभासत इत्युक्तम् । एवम्ब्रह्मदृष्ट्या उपास्यमाना मनआदयोऽपि ब्रह्मत्वेनाऽवभासेरन् । तथाऽवभासमानेषुच स्वात्मदृष्टिः कर्तुमुचिता यथाब्रह्मणि । तस्मात्प्रतीकोपासनेष्वपि स्वात्मदृष्टिः प्रवर्ततइति ॥

सिद्धान्तस्तु— ब्रह्माहमितिव न्मनआदिकमहमित्याहत्य नश्रूयते । अर्थान्मनआदौ ब्रह्मत्वेनाभासमानात्स्वात्मदृष्टिरापततीतिचे दापततुनाम । नैतावता तेषु ब्रह्मदृष्टिविधिः स्पष्टो भवति । नहि तपस्यतोऽर्थात्क्लेशोभवतीति सोऽपि विधेयः । तस्माद्यथाविधि ब्रह्मदृष्टिमात्रेण मनआदिप्रतीकोपासना कार्या । इति ॥

उपासकानाम्प्रतीकेआत्मग्रहणं नास्ति । कुतः ? परमेश्वरः प्रतीकेनहि साक्षादुपास्य इति सूत्रार्थः ॥

इति प्रतीकाऽधिकरणम्

अथ ब्रह्मदृष्ट्यधिकरणम् ४

ननु— मनआदेस्साक्षादुपास्यत्वमसिद्धम् । " मनोब्रह्मे "त्यादिसामानाधिकरण्स्योभयथाऽपि सम्भवात् । उभयथा सम्भवेच फलप्रदानसमर्थनस्य ब्रह्मणएवोपासनाभिराराधनीयत्वे विधि-

सर्वश्रुतितात्पर्यात् । ब्रह्मभावेनोपासनमुपासकस्य मुक्तिकरम् , अन्यथा संसारानिवृत्तिरिति ॥

इति आत्मत्वोपासनाऽधिकरणम्

---

अथ प्रतीकाऽधिकरणम् ३

विशेषमाह—

## न प्रतीके न हि सः ॥ ४–१–४ ॥

‘ मनो ब्रह्मेत्युपासीत ’ इत्यादिश्रुतिषु मनःप्रभृतिषु ब्रह्मोपासनमवगम्यते । तेष्वप्यात्मत्वेनोपासनमुत भिन्नत्वेन, इति संशये पूर्वपक्षः । ‘ मनो ब्रह्मेत्युपासीत’ ‘ आदित्यो ब्रह्मेत्युपासीत ’ इत्यादिना सिद्धेषु प्रतीकोपासनेषु ब्रह्मदृष्ट्या संस्कृतं मनःप्रभृतिकमुपास्यमवगम्यते । अतः प्रतीकमुपासकेन ब्रह्मतया भावितमित्यात्मतया तदुपासने को विरोध इति प्राप्त

---

मुक्तावपि भ्रान्त्यनुगमस्स्यादिति तच्छ्रुत्यर्थाऽविवेकनिबन्धनम् । यथा कीटस्य कीटत्वनिवृत्तिपूर्वकभ्रमरत्वप्राप्तिः भ्रमराहम्भावसाध्या एवं पशोः पशुत्वनिवृत्तिपूर्वकनिरस्तसमस्तदोषकल्याणगुणाविर्भावरूपशिवत्वप्राप्तिः शिवाहम्भावसाध्येति “देवो भूत्वा देवानप्येती ” ति श्रुतिसिद्धत्वेन श्रुतिप्रतिपन्नेऽर्थे नकाचिदनुपपत्तिरित्युपपादितत्वात् ॥

इति आत्मत्वोपासनाऽधिकरणम्

---

अथ प्रतीकाऽधिकरणम् ३

उत्तराऽधिकरणमवतारयति— विशेषमाहेति । कासुचिद्विद्यासु शिवाभेदभावनाया अपवादमाहेत्यर्थः ॥

मनोब्रह्मेत्यादिवाक्ये मनआदिषु ब्रह्मदृष्टिर्विधीयते । नतु ब्रह्मणि मनआदिदृष्टिरित्युत्तराधिकरणे वक्ष्यते । तत्र किं मनआदिषु प्रतीकेषु ब्रह्मबुद्धिविषयत्वा ब्रह्मणीव स्वात्मदृष्ट्याऽप्युपासनंकार्य मुत यथाविधि ब्रह्मदृष्टिमात्रेणेति संशये पूर्वपक्षः ॥

त्वम् भूतानाम् श्रेष्ठोऽसि ' इत्यस्यैव सर्वभूतविषयमाधिपत्यं श्रेष्ठत्व ञ्चोक्त्वा ' नमस्ते नमः सर्वं ते नमः' इति सकलभूतोत्कृष्टत्वात् सिद्धमखिल-नमस्कारपर्यवसानभूमित्वमुक्तम् । सर्वत्र च ' नमस्ते रुद्र मन्यवे ' इत्या-दिषु सर्वोत्कृष्टतयैव पुनः पुनरस्मै नमः प्रयुज्यते । ऐश्वर्यादिना हि लोकेऽ धिकम् नमन्ति । ततः सर्वनमस्कारविषयतया सर्वोत्कृष्टमुमासहितं विरूपाक्ष मीश्वरशब्दैकविषयभूतं परंब्रह्म । अस्य सर्वोत्कृष्टस्य सर्वनमस्कार्यस्य व्याप्ति-दृष्ट्या सर्वेषां मनआदित्यदीनां प्रतीकानामुपास्यत्वम् । अत एव ' श्वभ्यः श्वपतिभ्यश्च वो नमः' इत्यादिषु श्वादिष्वत्यन्तनिकृष्टेष्वपि सर्वोत्कृष्टब्रह्मव्याप्ति

शिवस्तु नमस्कारविषयत्वेनधर्मेण निर्दिष्टः । तेन नमस्कारविषयत्वं शिवस्याऽसाधारणलक्षणं विव-क्षितमित्युन्नीयतइतिभावः ॥

ननु— नमस्कारविषयत्वेन निर्दिश्य शिरोरूपप्रधानावयवत्वेन निरूपितश्शिवइति कथं ज्ञायते । येन तस्य तल्लक्षणं विवक्षितमित्युन्नीयेतेत्याशङ्कायामाह— अवसानेचेति । उपसंहारे भूतपतित्वेन " श्रेष्ठोजातस्य रुद्रश्रियासीदि " त्यादि मन्त्रपदेन श्रेष्ठत्वेनच लिङ्गेन शिवम्प्रस्तुत्य " नमस्त " इतिनमस्कारसामान्यस्य तदीयत्वमुक्त्वा तद्विवरणेनोक्तार्थदृढीकरणाय "नमस्सर्वंत" इति सर्वस्याऽपि नमस्कारस्य तदीयत्वमुक्तम् । तेन प्रागपि नमस्कारविषयत्वेननिर्दिष्टश्शिवएवेति निश्चीयते । " नमस्सर्वंत " इत्युपसंहारे यस्य सर्वनमस्कारपर्यवसानभूमित्वं वक्ष्यते— तच्छिर इति । एतदर्थपरत्वादुपक्रमवाक्यस्य शङ्कितशिवसमानोत्कर्षयोर्विष्णुप्रजापत्योः " विष्णुर्हृदय मग्निःपुच्छस्यप्रथमंकाण्डम् ततइन्द्रस्ततःप्रजापति " रितिपृथग्ग्रहणेनच तथानिश्चीयतइतिभावः । शिशुमाराकृतिस्तु सर्वोपादानभूता शैवीचिच्छक्तिः । तदाधारत्वेन प्रधानतया शिवस्यशिरस्त्वेन निरूपण मस्मेनमस्कारश्च वैदिकेषु शिवमन्त्रेषु नमस्कारभूयस्त्वमपि तस्य सर्वोत्कर्षे लिङ्गमि त्याह— सर्वत्रचेति । ननूत्कर्षादिव भयादपि लोके नमस्कारो दृश्यते । श्रुतावपि दृश्यते— " नमस्तेअस्तु मामाहिंसी " रिति । अत शिवे नमस्कारभूयस्त्वं तस्योग्रत्वेन भयभूयस्त्वा दुपपन्नमित्याशङ्क्याह ऐश्वर्यादिनेति ॥

भयादपिनमस्कारश्रुतौ नोत्कर्षंविना प्रवर्तते। "नमस्तेहरसे शोचिषे नमस्तेअस्त्वर्चिषे। अन्यम् ते अस्मत्तपन्तुहेतयः । पावको अस्मभ्यम् शिवोभवे" ति मन्त्रो "नमस्तेअस्तु मामा हिंसीरि " त्येतत्समानविषयएव श्रुतस्य नमस्कारस्य " नमस्तेहरसे शोचिषइत्याह " नम-स्कृत्यहिंसीयांसमुपचरन्ती "ति तन्मन्त्रब्राह्मणेन औत्सर्गिकस्यविषयोत्कर्षप्रयुक्तत्वात्स्यागोक्तेः

ब्रह्मोपासनीयम् , तस्यैव फलदातृत्वात् ॥ इत्येवं प्राप्त उच्यते । 'विश्वाधिको रुद्र' इत्यादिषु ब्रह्मण उत्कृष्टत्वावगमात् तद्दृष्टिरेव निकृष्टेषु मनआदिषु कर्तव्या । लोके हि निकृष्टे भृत्यादौ राजदृष्टिं कृत्वा राजवत् तमुपासते । न तु भृत्यदृष्टिं कृत्वा राजानमुपासते केचिदपि । इदमेव च परमौचित्यं यदुत्कृष्टं वस्तु तदेव सर्वे नमन्ति । अतः परं ब्रह्म सर्वोत्कृष्टतयैव सर्वनमस्कारविषयोऽवगम्यते । 'ऋतम् सत्यम्' इति मन्त्रे उक्तविशेषणविशिष्टं यत् परं ब्रह्म, 'विश्वरूपाय तस्मा एव नमः' सर्वोऽपि नमस्कारः, नान्यस्मै क्वचिदपीति ॥ किञ्चास्य परब्रह्मण उत्कृष्टतयैव नमस्कारविषयत्वं लक्षणमुक्तम् । तथा हि तैत्तिरीयश्रुतौ 'यस्मै नमस्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तरा हनुर्यज्ञोऽधरा विष्णुर्हृदयम् संवत्सरः प्रजननम्' इत्यादिना शिशुमारात्मनिरूपणे हृदयादिरूपेभ्यो विष्ण्वादिभ्यः पार्थक्येन सर्वोत्कृष्टत्वादेवास्य परब्रह्मणः शिवस्य प्रधानशिरोरूपत्वं 'यस्मै नमस्तच्छिरः' इति नमस्कारविषयत्वेन लक्षणेनैवानूद्याभिहितम् । अवसाने च 'त्वम् भूतानामधिपतिरसि

तात्पर्यकल्पनं युक्तम् । ननु तदसमर्थस्य मनआदेः । तथाच "मनोब्रह्म" त्यादिषु ब्रह्मणएव साक्षादुपास्यत्वात्तत्र मनआद्यभेदभावनाप्रकर्षाभावेनविकारत्वाऽप्रसक्तेश्च स्वात्मदृष्टिःकार्यैवेति पूर्वाधिकरणाक्षेपसमाधानार्थ मधिकरणान्तरं प्रवर्तते ॥

प्रकृताऽधिकरणभाष्यार्थस्स्पष्टएव । ननु प्रतीकोपासनं मनआदिविषयमिव विरिञ्चिनारायणादिविषयमपि श्रुतिस्मृतीतिहासादिषु प्रसिद्धम् । तत्र किं विरिञ्च्यादयःउत्कृष्टाः किंवा परब्रह्मत्वाभिमतः परमशिव ? इत्यनवधारणादुपास्याऽनिर्धारणं प्राप्नुयादित्याशङ्क्य स्थापितेऽपि बहुभिःप्रकारैः शिवस्यसर्वोत्कृष्टत्वे प्रकारान्तरेणाऽपि तस्य तद्व्यवस्थापयितुमुपक्रमते— इदमेवच परमौचित्यमिति । नान्यस्मै क्वचिदपीति । "यथाखल्विमारुद्राय स्थिरधन्वने गिर" इति मन्त्रश्शिवस्य सकलश्रुतिस्मृतीतिहासपुराणादिपरतत्त्वविषयशब्दजालतात्पर्यपर्यवसानभूमित्वम् प्रतिपादयती त्यन्यत्रैव पर्यवसितः कोऽपिनमस्कारो नास्तीत्यर्थः । किञ्चेति "तैत्तिरीयारण्यके ध्यानार्थं शिशुमारशरीरकतया परमेश्वरप्रतिपादने कासाञ्चिद्देवतानां तदीयशिरोमूर्धहनुद्वयमध्यचरणचतुष्टयपुच्छरूपमसावयवतया निरूपणं कृतम् । तत्र विष्ण्वादयस्स्वस्वनामभिर्निर्दिष्टाः ।

दवगम्यते । एवञ्च ब्रह्मात्मत्वादिसाम्येऽप्युद्गीथादिक्रियाचोदनादुद्गीथादेः क्रियमाणत्वेन फलसाधनत्वात् तद्विपरीतसिद्धस्वभावादादित्यादेस्तथा फलसाधनत्वाभावादादित्यादिदृष्टिरुद्गीथादिष्वङ्गेष्विति निर्णयः ॥

इति आदित्यादिमत्यधिकरणम्

अथ आसीनाऽधिकरणम् ६

## आसीनः सम्भवात् ॥ ४—१—७ ॥

उपपादितमुपासनाव्यवस्थापनम् । तदिहोपासनस्यासननियमोऽस्ति नवेति संशयः ॥ क्विचिदपि 'आसीन उपासीत' इति नियमाश्रवणान्मानसव्यापाररूपस्योपासनस्य सर्वावस्थायामपि सम्भवान्नास्त्यासननियम उपासकस्येति पूर्वः पक्षः ॥

प्राथम्याऽनुसरणेत्वादित्यादिदृष्टिरेव उद्गीथादिषु कार्येति विपर्यासेनोपासना स्यादित्याक्षिप्यतइति सङ्गतिरितिभावः ॥

" यएवासौ तपति तमुद्गीथमुपासीते " त्यादिकर्माङ्गोपासनेषु किमुद्गीथादावादित्यदृष्टिः कार्या ? उताऽदित्यादावुद्गीथदृष्टिरितिसंशयः । कर्मणः फलसाधनतयोत्कर्षादादित्यादौ देवतात्वेन तद्गुणत्वाच्चादित्यादावुद्गीथदृष्टिःकार्येति पूर्वपक्षः ॥

राद्धान्तस्तु— कर्मणोऽपि फलसाधनत्वमादित्यादिदेवताराधनद्वारेणेति आदित्यादेरेवोत्कर्षोपपत्तेः आदित्यादिमतयएव कर्माङ्गभूतेषूद्गीथादिषु कार्या इति ॥

इति आदित्यादिमत्यधिकरणम्

अथ आसीनाऽधिकरणम् ६

अवसितमङ्गङ्गप्रसक्ताऽनुप्रसक्तम् । परविद्याविषयएवविचारोऽनुवर्तते । परविद्यानां प्रधानफलार्थापत्तिमूलावावृत्त्यङ्गङ्गगुणौ विचारितौ । इदानीमङ्गफलरूपप्रधानोपकारार्थापत्तिमूलोऽङ्गविशेषश्चिन्त्यते । परविद्यास्वासननियमोऽस्ति नवेति नियामकसदसद्भावाभ्यांसंशये नियमकारिणश्शास्त्रस्याऽभावान्नास्तीति पूर्वःपक्षः ॥

दृष्ट्या श्रुति र्नमः प्रयुङ्क्ते। तस्मादुत्कृष्टसम्बन्धान्निकृष्टेपूपचारदर्शनात् विश्वाधिकब्रह्मदृष्ट्या मनः प्रभृतीनामुपास्यत्वं सिद्धम् ॥

इति ब्रह्मदृष्ट्यधिकरणम्

---

अथ आदित्यादिमत्यधिकरणम् ५

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४–१–६ ॥

पूर्वत्र ब्रह्मण उत्कृष्टत्वादादित्यादिषु तद्दृष्टिरुपासनेऽभिहिता 'य एवासौ तपति तदुद्गीथमुपासीन' इत्यादिषु कर्माङ्गोपासनेपूद्गीथादिदृष्टिरादित्यादिषु कार्या, उत विपर्यासेनैव इति संशयः॥ किं तावत् प्राप्तम्? उद्गीथादीना मादित्यादीनाञ्च कर्माङ्गत्वब्रह्मरूपत्वाविशेषादनियम इति। एवम् प्राप्ते ब्रूमः। आदित्यादेः कर्माराध्यत्वेनोत्कृष्टत्वात् कर्माङ्गे उद्गीथादौ तद्दृष्टिः कार्या तद्दृष्टिसंस्कृतस्योद्गीथादिकर्मणः फलातिशयसम्भवात। यत् खलु स्वतो वीर्यवत् क्रियमाणञ्च, तस्यैव विद्यया संस्कृतस्य वीर्यवत्तरत्वरूपफलातिशयः 'यदेव विद्यया करोति तदेव वीर्यवत्तरम् भवति' इति वाक्या

---

श्रुतौ केवलं भयप्रयुक्तस्य नमस्कारस्य सम्भवेऽपि नमस्कारभूयस्त्वस्य भयभूयस्त्वज्ञापकतयैव सर्वोत्कर्षज्ञापकत्वस्याऽपरिहार्यत्वाच्च। महाभयहेतुत्वंहि परब्रह्मलिङ्गम्। "भीषास्माद्वातःपवते। भीषोदेति सूर्यः" "महद्भयम् वज्रमुद्यत" मित्यादिश्रवणादितिभावः। प्रतीकोपासने आदित्यादिप्रतीके ब्रह्मदृष्टिरुपासकेन कर्तव्या। कुतः? उत्कर्षात्तेष्वपि ब्रह्मव्याप्तिप्रयुक्तस्योत्कर्षस्य सत्वादिति सूत्रार्थः॥

इति ब्रह्मदृष्ट्यधिकरणम्

---

अथ आदित्यादिमत्यधिकरणम् ५

सङ्गतिंदर्शयति—पूर्वत्रेति। उत्कृष्टदृष्ट्या अपकृष्टमुपासनीयमित्युक्तम्। एवंसति "य एवासौ तपती" त्यादौ उत्कर्षप्रयोजकमेकरूपमिति तत्राऽनवधारणंस्यात्। तत्र यद्वृत्तयोग-

धारावदविच्छिन्नस्मृतिसन्तानरूपध्याने चित्तैकाग्र्यावश्यम्भावाच्च ध्यानसिद्ध्येऽवश्यमासननियम आदर्तव्यः ॥

## अचलत्वं चापेक्ष्य ॥ ४–१–९ ॥

पृथिव्यादीनामचलत्वमपेक्ष्य 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षम्' इत्यादिप्रयोगाच्चासीन एवोपासीत । ध्यानसन्ततिर्हि पृथिव्यादिवदचलत्वेनासीनस्यैव सम्भवति ॥

## स्मरन्ति च ॥ ४–१–१० ॥

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥ तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः । उपविश्यासने युञ्ज्यात् योगमात्मविशुद्धये ॥' इत्युपासकानामासननियमादिस्मरणाच्चासीन एव ब्रह्मोपासीतेति सिद्धम् ॥

इति आसीनाऽधिकरणम्

---

ध्यानस्यात्यन्तचित्तैकाग्र्यापेक्षायां लिङ्गप्रदर्शनार्थं सूत्रम् ॥

ध्यानसन्ततेरचलत्वेनासीनस्यैवसम्भवादप्यासननियमआवश्यक इतिभावः ॥

आसननियमश्रुतेः सर्वविद्यासाधारण्येन प्रवृत्तिरपि प्रमाणमितिप्रदर्शनार्थं सूत्रम् ॥

"चेलाजिनकुशोत्तर" मित्यस्य चेलं सर्वोत्तरम् । अजिनं कुशेभ्य उत्तरम् । कुशा भूतलमात्रादुत्तरा इतितात्पर्यम् । एतेन "तत्रैकाग्र्यं मनःकृत्वे"ति वाक्यशेषानुसरणम् "भद्रासने समासीन" इति स्मृत्यन्तराऽनुसरणञ्च लभ्यते ॥

इति आसीनाऽधिकरणम्

सिद्धान्तस्तु । आसीन एव ब्रह्मोपासीत, तस्यैवैकाग्र्यसम्भवात् । अस्ति चासननियमश्रुतिरपि— 'विविक्तदेशे तु सुखासनस्थः शुचिः समग्रीवशिरः शरीरः । अन्त्याश्रमस्थस्सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य । हृत्पुण्डरीकम् विरजम् विशुद्धम् विचिन्त्य मध्ये विशदम् विशोकम् । अनन्तमव्यक्तमचिन्त्यरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् । तथाऽदिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठम् प्रशान्तम् ॥ ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिम् तमसः परस्तात् ' । इति कैवल्योपनिषदि । अत आसीन एव ब्रह्मोपासीतेति ॥

## ध्यानाच्च ॥ ४–१–८ ॥

'ध्यात्वा मुनिर्गच्छति भूतयोनिम्' 'कारणन्तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये' 'ध्याननिर्मथनादेव' इत्यादिश्रुतौ पाशविच्छेदकारणस्योपासनस्य ध्यानरूपत्वावगमात् । ध्यायतेश्च 'ध्यायति बको ध्यायति प्रोषितम् बन्धुः' इत्यादौ च प्रशिथिलाङ्गचेष्टेषु प्रतिष्ठितदृष्टिष्वेकविषयाक्षिप्तचित्तेषु व्यवहारात् । विजातीयप्रत्ययान्तराव्यवहिते तैल-

---

सिद्धान्तस्तु— अस्तिपरविद्यास्वासननियमः । आसीनस्यैव चित्तैकाग्र्यसम्भवात् । केषाञ्चिदनासीनानामपि कथञ्चिच्चित्तैकाग्र्यसम्पादनसम्भवेऽपि दहरविद्यायामासननियमस्य चित्तैकाग्र्यरूपदृष्टार्थत्वेन विद्यान्तराणामपि चित्तैकाग्र्यापेक्षायाम् । "विविक्तदेशेतु सुखासनस्य" इति तत्र क्वचिद्वेदविहितस्यैव तदुपायस्य ग्रहीतुमुचितत्वात् । येषामुपासकानां रोगवार्धकादिभिरासने नशक्तिस्तेषामपि भित्त्याद्याश्रयेण आसननियमनिर्वाह उपपद्यतइति ॥

अथ मौनवदुपासनाप्यासननियममन्तरेण स्यादित्याशङ्कानिराकरणार्थं सूत्रम् ॥

ध्यानरूपोपासना विजातीयप्रत्ययान्तराव्यवहिताऽविच्छिन्नस्मृतिसन्तानरूपा साक्षात्कारफलोत्पत्त्यर्थं तेनाऽनुष्ठेया यावदवसरमुपास्यप्रावण्यरूपान्मौनाद्विलक्षणेति तस्यामत्यन्तचित्तैकाग्र्यमपेक्षितमितिभावः ॥

अथ आप्रायणाऽधिकरणम् ८

## आप्रायणात्तत्रापि हि दृष्टम् ॥ ४–१–१२ ॥

पूर्वत्र ब्रह्मोपासनायां दिगादिनियमाभाव उक्तः। इह पुनस्तस्योपसंहारोऽस्ति न वेति विचारो यावदिच्छा तावदुपासना कर्तव्या। अन्यथा तदुपसंहार इति पूर्वपक्षे प्राप्ते सिद्धान्तः। आप्रायणादहरहरुपासना कार्या। न कदाचिदपि तदुपसंहारः, 'अहरहर्वा एवंवित् स्वर्गं लोकमेति' 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इत्यादावाप्रायणादुपासनश्रवणात्। ब्रह्मस्वरूपत्वापादिन्या ब्रह्मभावनाया मध्ये विच्छेदो न कार्यः। स्वात्मतया नैरन्तर्येण ब्रह्मणि भाविते हि तद्रूपमुपासकेषु प्रकाशते। अतः सर्वज्ञम् नित्यतृप्तम् स्वयम्प्रकाशम् स्वतन्त्रमलुप्तशक्तिकमनन्तशक्तिकम् परम् ब्रह्म नैरन्तर्येण भावनीयम् तत्स्वरूपप्रकाशायेति। तथा श्रूयते ब्रह्मस्वरूपमुपासकेषु प्रकाशत इति। 'या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि॥' इति। अनादिमलकर्मवासनारूढदेवादिशरीराभिमानप्रवाहसिद्धामध्यात्मादिभेदभिन्नामसह्यां संसाररुजं द्रावयत्युपासकानामिति रुद्र इत्युच्यते प ब्रह्म शिवः। तस्यामन्त्रणं रुद्रेति। हे रुद्र! परमेश्वर! या ते तनूः मूर्तिः शिवा नित्यसिद्धापहतपाप्मादित्वेन परमविशुद्धा परममङ्गलमयी परममङ्गलप्रदा

---

कालाऽनियमस्य क्वचिदपवादप्रदर्शनार्थमधिकरणान्तरम् ॥

यथा पूर्वाह्णादिकालेषु मनोनुकूले कर्तव्योपासना तथा मनोनुकूलकालावधिकर्तव्या। ननु यावदायुः अहरहर्वा। एवंविदित्यादित्यादि तु दहरविद्यामात्रविषयम्। नच सर्वासां परविद्यानां साक्षात्कारपर्यन्तत्वाद्यावज्जीवमनुष्ठेयता। अन्तिमदशायामेव साक्षात्कारो भवति न ततःपूर्वमित्यत्र प्रमाणाऽभावादिति पूर्वःपक्षः। देहवियोगकाले मूर्धन्यनाड्योत्क्रान्तिरर्चिरादिगतिः ब्रह्मप्राप्तिस्स्वरूपाविर्भावश्चेत्येवंरूपः विद्याफलपरम्परारम्भः। स यद्यपि विद्याऽनुवृत्त्यभावेऽपि तद्व्यापाराऽनुवृत्तिमात्रेण निर्वहति तत्राऽपि व्यापारो विद्यानां साक्षात्काररूपः। सतु

अथ यत्रैकाग्रताऽधिकरणम् ७

## यत्रैकाग्रता तत्राविशेषात् ॥ ४–१–११ ॥

उक्त उपासकस्यासननियमः । तद्वद्धि देशकालनियमोऽस्ति न वा इति सन्देहे सत्यस्तीति युज्यते । यथा चोदिते कर्मणि 'ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि' इति दिङ्नियमः, 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति देशनियमः 'अपरोह्णे पिण्डपितृयज्ञेन चरन्ति' इति कालनियमः, तथाऽत्रापि चोदितत्वाविशेषादुपासने दिगादिनियमो युक्त इति पूर्वः पक्षः ॥

सिद्धान्तस्तु उपासने नास्ति दिगादिनियमः । ऐकाग्र्यं हि ध्यानस्य प्रधानसाधनम् । न हि तत्र दिगाद्यपेक्षा । यत्र रागद्वेषादिकालुष्यहेतुर्नास्ति, तत्र हि मनस ऐकाग्र्यं भवति । तावदेवापेक्षणीयम् । 'विविक्तदेशे तु सुखासनस्थः' इति श्रवणात् । 'अनन्तं शिवसन्निधौ' इत्यादिकं जपादिविषयम् , न ध्यानविषयम् । तत्राप्यैकाग्र्यं यदि मुख्यतमं भवति । तस्मादैकाग्र्यमात्रसाधनकस्य ध्यानरूपोपासनस्य न दिग्देशकालनियमः ॥

इति यत्रैकाग्रताऽधिकरणम्

---

अथ यत्रैकाग्रताऽधिकरणम् ७

प्रत्युदाहरणसङ्गतिमाह— उक्तइति । विहितत्वान्मानसत्वाच्च संशयः । दिगादिनियमो युक्तइति । दिङ्नियमः प्राङ्मुखत्वादिनियमः । देशनियमः – शिवालयाद्याश्रयणनियमः । कालनियमः – पूर्वाह्णादिनियमः । ऐकाग्र्यम् — ध्यानस्याऽन्तरङ्गसाधनम् । तदविरोधेन सतिसम्भवे सामान्यशास्त्रसिद्धो दिगादिनियमोऽपि ग्राह्यः । असम्भवेतु नग्राह्य इतिसिद्धान्तः ॥ यस्मिन्देशे यस्मिंश्चकाले मनसएकाग्रता तत्रदेशे काले चोपासनं कार्यम् । अविशेषात् – देशकालयोर्विशेषाऽश्रावणादितिसूत्रार्थः ॥

इति यत्रैकाग्रताऽधिकरणम्

अथ तदधिगमाऽधिकरणम् ९

# तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्

॥ ४—१—१३ ॥

पूर्वत्र प्रकर्षेणापापानामुपासकानां ब्रह्मस्वरूपं प्रकाशत इति सोपपत्तिकमुपपादितम् । तदिहोपासकस्य पापक्षयोऽस्ति न वेति संशयः । किं तावत् प्राप्तम् ? उपासकानामपि भोगमन्तरेण पापक्षयो न भवति, 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति वचनात् । भोगाय शरीरापत्तौ पुनरपि कर्मापत्तिरिति न मोक्षावसरः । इत्येवम् प्राप्ते ब्रूमः— क्षीयते पापं कर्मोपासकानामिति । कथम् ? उपासने प्रारब्धे तत्सामर्थ्यादेव पूर्वाघनाशः उत्तराघाश्लेषश्च भवति । तथा हि व्यपदिश्यते, 'तद्यथेषीकातूलमग्नौ प्रोतम् प्रदूयेतैवम् हास्य सर्वे पाप्मानः प्रदूयन्ते' 'तद्यथा पुष्करपलाश आपो न

---

अथ तदधिगमाऽधिकरणम् ९

सङ्गतिमाह— पूर्वत्रेति । पूर्वाधिकरणोपात्त — "यातेरुद्र" ति मन्त्रे — अपापकाशिनीत्यनेनोपासकानाम् पापक्षयउक्तः । स नसम्भवतीत्याक्षिप्य समाधीयत इत्यर्थः ॥

ननु— भोगमन्तरेण यदिकर्मक्षयोनस्यात् तदा भोगार्थं शरीरग्रहणे तत्राऽपि कर्मान्तरार्जनावश्यम्भावा दनिर्मोक्षस्स्यादित्याशङ्क्य मोक्षस्याऽपि विद्याफलत्वमाक्षेप्यमस्मिन्पूर्वपक्षइत्याह— भोगायेति । उपासने प्रारब्धइति । ननूपासना यस्मिन्दिनेप्रारब्धा ततःप्रभृत्युत्तराघाऽश्लेष स्तस्मिन्नेवदिने प्राचीनसकलाघनाशइतिनेष्यते । ततःप्रभृत्येव जीवन्मुक्तत्वप्रसङ्गात् । कालान्तरेचे त्किन्तत्कालान्तरमिति नाऽवसीयते । साक्षात्कारोदयाऽनन्तरकालइतिचे दपापकाशिनीति प्रागुदाहृतमन्त्रविरोध इत्याशङ्क्याह— तत्सामर्थ्यादेवेति । तत्सामर्थ्यम् = दार्ढ्यम् = यत्साक्षात्कारजननोपयोगि ततएवाऽश्लेषविनाशौ नतु विद्याप्रारम्भमात्रा त्नाऽपि साक्षात्कारादित्यर्थः ॥

सूत्रे = तदधिगमइत्यधिगमग्रहणेनाऽयमर्थस्सूचितः । तत्राऽऽवृत्तिरसकृदुपदेशादित्यधिकरणमारभ्य प्रस्तुताविद्या तत्पदेनपरामृश्यतइति तस्याःप्राप्तिर्दार्ढ्यमेव पर्यवस्यति । नखलु विद्या गवादिवत्तटस्था विद्यते येन तस्यास्स्वसम्बन्धरूपाप्राप्तिः पृथग्वक्तव्यास्यात् । उद्यत्येवहि विद्या

अघोरा शिवत्वयोगेनैव सर्वहृदयङ्गमा अपापकाशिनी पापग्रहणस्योपलक्षणत्वात् ज्ञानाग्निदग्धनिखिलपुण्यपापा इहापापा इत्युच्यन्ते मुक्तात्मानः तेषु प्रकाशमानत्वादपापकाशिनी ईदृशी या ते तनूः तया शन्तमया 'स एको ब्रह्मण आनन्दः' इत्यादिश्रुतिसिद्ध निरतिशयानन्दलक्षणया तन्वा नोऽस्माकमपि संसारनिमित्तम् पुण्यपापसंचयमपनीय स्वरूपतया साक्षादतीव प्रकाशस्वेति प्रार्थनेयमुपासकानाम् । अत उपासकानामात्मनि ब्रह्मस्वरूपस्य प्रकाशनात् तत्प्रकाशकारणभूता ब्रह्मभावना यावदायुषं कर्तव्या । न कदाचिदपि विच्छेद्येति ॥

इति आप्रायणाऽधिकरणम्

---

भावनाप्रकर्षाऽनुवृत्तिलभ्यइति तदर्थमपेक्षाऽनुसारेण यावज्जीवमनुवृत्तिस्सर्वविद्यासाधारणीति सिद्धान्तः । प्रायणदशायाम् परमेश्वरसाक्षात्कारोदये तत्प्रार्थनामन्त्राः प्रमाणमित्याह— तथा श्रूयतइति । शिवेत्यस्य निर्दोषत्वं कल्याणगुणाकरत्वं शिवङ्करत्वञ्चार्थं इत्यभिप्रेत्याह— नित्यसिद्धेति । गिरिशन्तेत्यपि सम्बोधनम् । गिरौ=" कैलासशिखरे रम्ये शङ्करस्य शिवालये । देवता स्तत्र मोदन्ती " ति शिवसङ्कल्पमन्त्रप्रतिपादिते दिव्यस्थानमध्यनिविष्ट महाकैलासेपर्वते, शम् = स्वोपासकानां निरतिशयमानन्दं तनोतीति तदर्थः । स्वरूपतयेत्यनेन शिवाहम्भावनाजन्यत्वं साक्षात्कारस्याविष्कृतम् । अभीत्युपसर्गस्यव्याख्यानम् साक्षादिति ॥

प्रार्थनेयमुपासकानामिति । अस्यमन्त्रस्य श्वेताश्वतरोपनिषदि परविद्याप्रकरणे पाठात् " रुद्रंगिरिशन्ते " ति सकलसांसारिकाऽनर्थनिवृत्तिनिरतिशयमहानन्दानुभवप्रदत्वेन सम्बोधनसामर्थ्याच्च मूर्धन्यनाड्युत्क्रमणादिपरम्परया तदुभयकारणभूताऽन्तिमप्रत्ययप्रार्थनाऽनेन मन्त्रेण क्रियत इत्युन्नेयमित्याशयः । अस्यमन्त्रस्य संहितायामाम्नाना दिष्टलिङ्गधारणप्रकाशकत्वम प्यविरुद्धमित्यवगन्तव्यम् ॥

इति आप्रायणाऽधिकरणम्

---

विदुषः पुण्यस्यापि मोक्षविरोधित्वेनानिष्टफलत्वसाम्यादश्लेषविनाशौ । विद्यानुगुणस्यारोग्यादिफलस्य पुण्यस्य शरीरपाते लयः । विद्याङ्गकर्मणस्तु काम्यफलादिसम्बन्धाभावान्न श्लेषः । अतो विदुषः पुण्यलेपोऽपि नास्तीति निर्णयः ॥

इति इतराऽसंश्लेषाऽधिकरणम्

अथ अनारब्धकार्याऽधिकरणम् ११

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४–१–१५ ॥

पूर्वत्र विदुषः पुण्यपापयोरुत्तरपूर्वयोरश्लेषविनाशौ निरूपितौ । इह प्रारब्धकार्ययोस्तयोः स्थितिरस्ति न वेति संशयः । ‘ सर्वे पाप्मानः प्रदूयन्ते ’ इत्यविशेषश्रवणात् विद्याऽधिकृतेः पूर्वत्राविशेषेण तयोरपि विनाश इति प्राप्त

---

पापवत्पुण्यस्याऽपि पाशान्तर्गततया जीवज्ञानशक्त्याच्छादकत्वेन ब्रह्मसाक्षात्कारकाले पुण्याभावस्याऽप्यपेक्षितत्वादित्यपिद्रष्टव्यम् । पातेत्वितिसूत्रभागं व्याचष्टे— विद्यानुगुणस्येति । आरोग्यबलादिफलानां विद्यार्थं यावच्छरीरधारणमपेक्षितत्वेन विद्याविनाश्यत्वाऽभावादितिभावः । तुरवधारणे ॥

शरीरपातएव लयइत्यर्थः । नन्वारोग्याद्यर्थतया विद्याप्रतिबन्धकदुरितनिवर्तकतया चाऽनुष्ठितं विद्यापेक्षितं यत्पुण्यंकर्म तस्य श्लेषोऽस्त्येवेति पुण्याऽश्लेषवचनमेवमप्यनुपपन्नमित्याशङ्क्याह- विद्याङ्गकर्मणस्त्वति । विद्याविरोधिकाम्यकर्मसम्बन्धरूपएवश्लेषो निषिद्धइतिभावः ॥

इतरस्य पुण्यस्याऽप्यनिष्टफलसाम्यादेवमश्लेषविनाशौ भवतः । विद्यानुगुणस्यत्वारोग्यादिफलस्य शरीरपातादूर्ध्वमनिष्टत्वादश्लेषइति सूत्रार्थः ॥

इति इतराऽसंश्लेषाऽधिकरणम्

अथ अनारब्धकार्याऽधिकरणम् ११

विद्ययाविनाशस्य केषुचित्पुण्यपापेष्वपवादप्रदर्शनार्थत्वेन सङ्गतिमाह — पूर्वत्रेति । सर्वे पाप्मान ’ इत्यविशेषश्रावणात् ‘ तस्य तावदेव चिर ’ मिति विलम्बश्रावणाच्च संशयः ।

श्लिष्यन्ते एव मेवंविदि पापं कर्म न श्लिष्यत इति'। तस्मादुपासकानां पूर्वोत्तराघयोरश्लेषविनाशौ भवत एव। यदुक्तम् 'नाभुक्तं क्षीयते' इति, तस्याज्ञानिविषयत्वादविरोधः॥

इति तदधिगमाऽधिकरणम्

---

अथ इतराऽसंश्लेषाऽधिकरणम् १०

## इतरस्याऽप्येवमसंश्लेषः पाते तु ॥ ४–१–१४ ॥

विदुषः पापलेपो न भवतीति निरूपितम्। इह तद्विरोधिपुण्यलेपोऽस्ति न वेति विचारः। किं प्राप्तम्? विद्याविरोधिनः पापस्य क्षयो युक्तः, न तु पुण्यस्य, तस्य विद्याङ्गत्वेनानुवृत्त्यौचित्यात्॥ इत्येवं प्राप्ते निरूप्यते।

---

स्वसम्बन्धिन्युदेति। एवञ्च पापाश्लेषविनाशयोः साक्षात्कारजननोन्मुखविद्यादार्ढ्यसाध्यत्वेसति साक्षात्कारोदयकालएव पूर्वाघविनाशः। ततःप्रभृत्येवोत्तराघाऽश्लेषश्चेति। अतएव साक्षात्कारोदयस्य पुण्यपापविधूननस्य च समकालत्वं प्रतिपादयति—"यदापश्यः पश्यते रुक्मवर्ण" मित्यादि मन्त्रः। तदनुसारेण "क्षीयन्तेचाऽस्यकर्माणि तस्मिन्दृष्टे परावरे" इतिमन्त्रे तस्मिन्दृष्टइति व्यधिकरणे सप्तम्यौ। तथाच परब्रह्मणि यद्दृष्टंदर्शनं तस्मिन्जायमाने कर्माणि क्षीयन्ते। यथा सवितुरुदयत्येव तमांसीति तस्यार्थः। एवञ्च साक्षात्कारोदयकाले तत्समानकालोत्पत्तिकः पापक्षयो प्यस्तीत्यपापकाशिनीत्यस्य नविरोधः। तदधिगमे उपासनेप्रारब्धेसति तत्सामर्थ्यादुत्तरकालिकस्याऽघस्याऽश्लेषः पूर्वाघस्यविनाशश्च सम्भवतः। तद्व्यपदेशात्। "एवंहास्य सर्वेपाप्मानः प्रदूयन्ते — एवमेवंविदि पापंकर्म नश्लिष्यत" इतिश्रावणादितिसूत्रार्थः॥

इति तदधिगमाऽधिकरणम्

---

अथ इतराऽसंश्लेषाऽधिकरणम् १०

आतिदेशिकीं सङ्गतिमाह— विदुषइति। अतिदेशव्यावर्तनीयामधिकाशङ्कां दर्शयति— विद्याविरोधिन इति। अनिर्दिष्टफलत्वसाम्यादित्युपलक्षणम्॥

मन्त्राणां जपावृत्तिः । तथा जाबालोपनिषदि । 'अथ हैवम् ब्रह्मचारिण ऊचुः भगवन् किंजप्येनामृतत्वम् ब्रूहीति । स होवाच याज्ञवल्क्यः शतरुद्रीयेणेति । एतानि ह वा अमृतस्य नामधेयानि एतैर्हवा अमृतो भवति' इति । कैवल्योपनिषदि । 'यः शतरुद्रीयम् ब्राह्मणो नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति सुरापानात् पूतो भवति ब्रह्महत्यायाः पूतो भवति अन्त्याश्रमी सर्वदा सकृद्वा जपेत् परमम् ज्ञानमाप्नोति संसारार्णवनाशनम्' इति । इह शतरुद्रीयसंज्ञानां ब्रह्मबोधकानां मन्त्राणामभ्यासात् संसारनाशनस्य परमज्ञानस्य प्राप्तिः, तद्विरोधिपापक्षयश्चावगम्यते । 'एतानि ह वा अमृतस्य नामधेयानि' इत्यमृतस्यानादिमुक्तस्य शिवस्य नामधेयत्वाद्धेतोः शतरुद्रीयजपात् सकलपापक्षयादिप्रतिपादनात् परमेश्वरस्य शिवादिनामधेयानामभ्यासोऽपिविद्याविरोधिसकलपापक्षयहेतुरवगम्यते । तथैव मुण्डकोपनिषदि श्रूयते । 'अपि वा यश्चाण्डालः शिव इति वाचम् वदेत् तेन सह संवदेत् तेन सह संवसेत् तेन सह भुञ्जीत' इति । अत्र हि शिवशब्दस्य ब्रह्मबोधकस्य समुच्चारणमात्रेणात्यन्ताविशुद्धस्य पातकिनः परमविशुद्धिप्राप्तिरवगम्यत इति । अन्यत्र च 'योऽथर्वशिरसम् ब्राह्मणो नित्यमधीते' इत्यारभ्य तदभ्यासिनः सकलपापक्षयमुक्त्वा 'सकृज्जप्त्वा शुचिः पूतः कर्मण्यो भवति द्वितीयम् जप्त्वा गाणापत्यमाप्नोति तृतीयम् जप्त्वा देवमेवानु-

---

विद्यास्वरूपोपकारित्वेनहि तदङ्गत्वमिष्यते । नत्वनुयाजादिवदारादुपकारकत्वेन येन प्रधानस्वरूपनिष्पत्त्यनन्तरमपि तदनुष्ठानं शक्येत । अतो दृढविद्यायास्साक्षात्कारपर्यन्ताया निष्पत्तौ न तदनुष्ठेयमनपेक्षितफलत्वात्कृतस्याऽश्लेषापत्तेः । तस्मात्साक्षात्कारोदयानन्तरम् विद्यासहकारित्वेन कर्म नाऽनुष्ठेयम् । अनुष्ठानेऽपि पूर्वाधिकरणे काम्यसुकृतानामश्लेषस्यसमर्थितत्वेन तद्वदग्निहोत्रादिसुकृतस्याप्यश्लेषापत्तेश्चेति पूर्वः पक्षः ॥

सिद्धान्तस्तु — साक्षात्कारोदयाऽनन्तरमप्यग्निहोत्रादिकं तावदनुष्ठेयमेव । नित्यत्वात्तदनुष्ठानञ्च विद्याख्यकार्यायैव भवति । अन्यथा प्रत्यवायदूषितान्तःकरणस्य विद्यानिष्ठायाः प्रच्युतिप्रसङ्गादिति ॥

उच्यते विद्याऽधिकृतेः पूर्वकृते पुण्यपापे फलदानायाप्रवृत्ते एव विनश्यतः 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' इति शरीरपातावधिः श्रूयते। अतः प्रारब्धयोर्न विलयः॥

इति अनारब्धकार्याऽधिकरणम्

---

अथ अग्निहोत्राद्यधिकरणम् १२

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥४-१-१६॥

पूर्वत्र विदुषः पुण्यपापाश्लेषविनाशौ निरूपितौ। यावदायुष मुपासनावृत्तिरप्युपपादिता। इह पुनरग्निहोत्राद्यनुष्ठानमपि यावच्छरीरपात मनुवर्तेत उत मध्ये विच्छिद्यत इति विचारः। किं प्राप्तम्? अग्निहोत्रादिक माप्रायणं नानुष्ठेयम्। क्रियमाणेऽपि विनाशाभ्युपगमात्। अप्रयोजने कस्य मनः प्रवर्तेत इति॥ एवं प्राप्ते ब्रूमः। अग्निहोत्रादिकमाप्रायण मनुष्ठेयं विद्याकार्यायैव। तथा हि दृश्यते 'तमेतम् वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'त्यादि। अत्र वेदानुवचनं वेदाभ्यासः। परमेश्वरप्राप्तिसाधनपरमज्ञानहेतूनामध्यात्मवादिनां वेद-

---

तयोरपि विनाश इति। देहधारणन्तु विद्याऽनुगुणकर्मभिरेव भविष्यति। देहधारणंविना विद्यानुष्ठानाऽनुपपत्तेरिति भावः। फलदानायाप्रवृत्ते एवेति। प्रवृत्तयोरपि विनाशे दुःखाद्यनुभवो नस्यात्। तस्य विद्यानपेक्षितत्वादिति भावः॥ यावन्नविमोक्ष्य इति। यावत्प्रारब्धकर्मणा नविमोक्ष्यत इत्यर्थः।

इति अनारब्धकार्याऽधिकरणम्

---

अथ अग्निहोत्राद्यधिकरणम् १२

अग्निहोत्रादिकम् विद्यासहकारित्वेन साक्षात्कारोदयपर्यन्तमेवानुष्ठेयम्? उत विद्याव दाप्रायणम्? इति। सक्षात्कारोदयानन्तरमनुपयोगाश्लेषापत्तिभ्याञ्च संशयः। कर्मण

साधुकृत्याया अन्या प्रबलकर्मान्तरप्रतिबद्धफला विद्याऽनुगुणान्नारोग्याचित्तशुद्ध्यादिजननयोग्यतया विद्याऽनुणफलत्वात् विद्ययाऽप्यविनष्टा। पूर्वोत्तरयो रुभयोरपि कर्मराश्योस्स विषयः ॥

## यदेव विद्ययेति हि ॥ ४—१—१८ ॥

'यदेव विद्यया करोति' इत्यत्र कर्मफलाप्रतिबन्धस्योद्गीथविद्याफलत्वोक्त्या प्रबलकर्मान्तरेणान्यकर्मणां फलप्रतिबन्धसद्भावोऽवगम्यते। अतो विद्यानुगुणकर्मणां फलप्रतिबन्धोच्छेदायाप्यग्निहोत्रादिकमनुष्ठेयमिति भावः ॥

इति अग्निहोत्राद्यधिकरणम्

---

अथ इतरक्षपणाऽधिकरणम् १३

## भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ ४—१—१९ ॥

इह विद्यावतामधिकारपदे स्थितानां तद्व्यतिरेकेण मुक्तफलमस्ति न वेति चिन्तायां प्रारब्धभोगाय बहुजन्मस्वीकारे पूर्वविद्यायां लुप्तायां यत्

---

प्रतिबद्धानि तदप्रतिबद्धानिच। तत्राऽप्रतिबद्धानि स्वस्वफलं दत्वानश्यन्तीति नाऽवशिष्यन्ते। यानितु प्रतिबद्धफलानि तानि सुहृद्धामित्यवचनस्य विषय इतिभावः। प्रबलकर्मान्तरप्रतिबन्धसम्भवे प्रमाणप्रदर्शनार्थं सूत्रम्।

प्रतिबन्धसद्भावोऽवगम्यतइति। ननु सम्भवतु प्रतिबन्धकं कर्म। तद्विद्याऽननुगुणत्वा त्प्राचीनंनश्यत्युत्तरंनश्लिष्यतीति न। तेन प्रतिबन्धसम्भव इतिचे न्न। प्रारब्धस्यैव कस्यचित्प्रतिबन्धकत्वसम्भवादितिभावः। अतो विद्यानुगुणकर्मणामिति विद्यासहकारितया यदग्निहोत्रादिक मनुष्ठीयते तस्य शक्यप्रतिबन्धोच्छेदोऽपि फलमित्याशयः ॥

इति अग्निहोत्राद्यधिकरणम्

---

प्रविशति ' इति मोक्षफलं प्रतिपद्यते। 'आत्मानमरणिं कृत्वा प्रणवञ्चोत्तरारणिम्, इत्यादिषु च प्रणवाद्यभ्यासस्य पाशविच्छेदहेतुत्वमुच्यते। एवमन्यत्रापि द्रष्टव्यम्। अतः परमेश्वरपराणां वेदमन्त्राणां पापक्षयद्वारा परमज्ञानहेतुत्वेन मोक्षसाधनत्वावगमात् तदभ्यासः कर्तव्यो विद्यावताऽपि यावज्जीवम्। एवमग्निहोत्रादीनामपि यज्ञानां परमेश्वरसमर्पितफलानां तदाज्ञासिद्धत्वात् तदाराधनरूपत्वाच्चाभ्यमः कार्यः। एवं दानादीनामपि। तस्माद्विदुषाऽपि विद्यानिष्पत्तिकार्याग्निहोत्रादिकमनुष्ठेयमिति। कर्मतपोजपध्यानज्ञानरूपमीश्वरोपासनम्। कर्माग्निहोत्रादिकम्, तपो नियमः, कायशोषणं वा, जपः पूर्वोक्तप्रणवाद्यभ्यासः, एतेषां पापशोषणद्वारा मोक्षहेतुत्वम्। ज्ञानध्यानयोस्तु साक्षात्, ब्रह्मस्वरूपाप्तिहेतुत्वात्। अतः सर्वेषामेषामनुष्ठानं कार्यम्। ननु यद्यग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्था, तदन्या च पूर्वकृता साधुकृत्या विद्याप्रारम्भे सति विनष्टा, तर्हि 'सुहृदः साधुकृत्याम्' इत्यस्य को विषय इत्याशङ्क्याह—

## अतोऽन्याऽपि ह्येकेषामुभयोः ॥ ४–१–१७ ॥

'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्याम् द्विषन्तः पापकृत्याम्' इत्येकेषां शाट्यायनशाखिनां वचनस्य विद्यानिष्पत्त्यर्थाग्निहोत्रादि-

---

उत्तरसूत्रमवतारयितुमाशङ्कते । नन्विति । द्विविधा साधुकृत्या विद्यारम्भात्प्राचीना तदनन्तरभाविनी चेति। प्राचीनापि द्विविधा—मुक्तफला, अमुक्तफलाच। अमुक्तफलापि द्विविधा- सङ्कीर्तनादिना विनष्टाचाऽविनष्टाच। अविनष्टापि द्विविधा—प्रारब्धफलाचाऽप्रारब्धफलाच। तत्र प्राचीनासु नकाचिदपि सुहृदस्साधुकृत्या मित्यस्यविषयः। मुक्तफलायास्सङ्कीर्तनादिहतायाश्चाऽसत्त्वात्प्रारब्धफलाया विदुषैवभोग्यत्वात्। अप्रारब्धफलाया विद्याया विनाशाद्विद्यारम्भभाविनीत्वग्निहोत्रादिरूपैव। साचेद्विद्योत्पत्त्यर्थत्वेन विद्वदुपयुक्ता तदा "सुहृदस्साधुकृत्या" मित्यस्यविषयएवनास्तीति शङ्कार्थः। एवं प्रागुक्ताक्षेपेण प्रवृत्तायाम् शङ्कायामिदम् सूत्रम् ॥

विद्यारम्भात्प्राक्पश्चाच्च अन्नारोग्यचित्तशुद्ध्यादिजननयोग्यतया विद्यानुगुणफलानि यानि कर्माणि तानि न विद्यामाहात्म्याद्विनश्यन्ति नश्लिष्यन्तिवा तानि द्विविधानि— प्रवचनकर्मान्तर-

धारणप्रामाण्याच्च विदुषां जन्मान्तरस्य स्मृतिप्रमोषानापादकत्वं कल्पनीयम् । तस्मा द्विद्यया फलप्राप्तिर्नियतैवेति ॥

इति व्रतरक्षपणाऽधिकरणम्

इति श्री नागलिङ्गशिवाराध्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां
श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीय
ब्रह्मसूत्रभाष्यव्याख्यायां चतुर्थाध्यायस्य
प्रथमः पादः

कर्म क्रियते, तदपि फलभोगहेतुर्भवति। अतो जन्मपरम्परायाः सम्भवान्न तेषां मुक्तिः। इति प्राप्ते ब्रूमः। प्रारब्धकर्म स्वफलं भोजयितृ केवलम्। न तु तेषां पूर्वार्जितविद्यालोपहेतुः, अतस्तेषां मुक्तिरेव। न जन्मपरम्परा, कारणाभावात् सुषुप्तिव्यवधानवत् जन्ममरणव्यवधानं न तेषां विद्यालोपहेतुरिति॥

**इति इतरक्षपणाऽधिकरणम्**

---

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये

चतुर्थाध्यायस्य प्रथमः पादः

---

**अथ इतरक्षपणाऽधिकरणम् १३**

एवं विदुषा माप्रायणं निरन्तरं परमप्रियशिवचिन्तारूपं तदानुषङ्गिकं पापक्षयरूप मैहिकं फलं चिन्तितम्॥

अथ तदुपरितनं फलपरम्परा मुत्तरपादैश्चिन्तयितुं विदुषां तत्प्राप्तिनियमोऽनेनाऽधिकरणेन व्यवस्थाप्यते॥

विद्यायोनिशरीरावसानं येषां प्रारब्धं तेषां विद्याफलप्राप्तिरस्तुनाम। येषामाधिकारिकाणा मन्येषांवाऽनेकशरीरानुयायिप्रारब्धं न तेषां तत्प्राप्तिस्सम्भवति। जन्मान्तरस्य पूर्वसंस्कारप्रमोषापादकतया विद्याविहीनैस्तैश्शरीरान्तरे क्रियमाणकर्मणां बन्धहेतुत्वेन ततो जन्मपरम्पराया एव प्राप्तिः। नच तेषां जन्मान्तरसंस्कारमोषहेतुर्नभवतीति कल्पनीयम्। दृष्टनियमसङ्कोचकल्पनायां कारणाऽभावात्। तथाच–येषामनेकशरीरानुयायिप्रारब्धानां विद्यायोनिशरीरावसाने मुक्तिर्नभवति तेषां तेषां तथा विद्यया मुक्तिर्नसम्भवत्येव। तथाच प्रारब्धस्य अनेकशरीरानुयायित्वशङ्कया कस्याऽपि विद्यानुष्ठाने प्रवृत्तिश्च नसम्भवतीति पूर्वः पक्षः। सिद्धान्तस्तु – मुक्त्यर्थविद्यानुष्ठानप्रतिपादकबहुशास्त्रप्रामाण्या त्तस्यतावदेवेतिविवक्षितावध्यवसाने मुक्त्यवश्यम्भावप्रतिपादनाऽव-

कार्यस्य ह्युपादाने लयः। मृद्घटादौ व्याप्तिदर्शनात्। वागादीनां ब्रह्मोपादानं न मनः, अतोऽस्मिन्नेव तेषां लयो युक्तः ॥ इति प्राप्तेऽभिधीयते। 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते' इति 'इन्द्रियैर्मनसि सम्पद्यमानैरि'ति च वचनादुत्क्रान्तौ मनसः प्रागेव वागादीनामुपरमदर्शनाच्च वाक् मनसि प्रथमं सम्पद्यते। ततः सर्वाणीन्द्रियाणि मनसि सम्पद्यन्ते। यदुक्तमुपादान एव लय इति तन्न। स्वरूपलयस्यैवोपादानापेक्षा। वागादीनां मनसि न स्वरूपलय उच्यते, किन्तु वृत्तिलय एव। यथा जलमध्ये क्षिप्तस्याङ्गारस्य प्रकाशादिवृत्तिलयः तथा अनुपादानेऽपि मनसि वागादीनां वृत्तिलयो युक्त एव। वृत्तिमतो वागादेर्लयश्रुत्या वृत्तिलयो लक्ष्यते। वृत्तिवृत्तिमतोरभेदोपचारादिति ॥

इति वाक्सम्पत्त्यधिकरणम्

---

र्लयोऽवगम्यतइतिभावः। अप्रकृतित्वात्सम्पत्तिश्रुतेश्च संशयः। अतस्तस्मिन्नेवेति। इह सम्पत्तिशब्देन संयोगमात्रं कथञ्चिद्वाच्यमितिभावः। शब्दादिति हेतुं सूत्रद्वयनिर्दिष्टं सकलबाह्येन्द्रियसाधारण्येन व्याचष्टे। अस्यसोम्येति। दर्शनादितिहेतुमपि व्याचष्टे—उत्क्रान्ताविति। हेतुद्वयस्याऽपि साधारण्ये वाचइन्द्रियान्तराणाञ्च सूत्रद्वयेन पृथङ्निर्देशः किमर्थमित्याकाङ्क्षायां तत् प्रयोजनमाह— प्रथममिति। सर्वेन्द्रियसाधारणे मनस्सम्पत्तिवचने सत्यपि विशिष्यवाक्यान्तरप्रवृत्तिस्तत्सम्पत्तिप्राथम्यविवक्षयेतिभावः। किन्तु वृत्तिलय इति सम्पत्तिशब्दस्य संयोगार्थत्वपक्षेऽपि तस्याऽत्र न संयोगमात्रमर्थः। किन्तु वागादिवृत्तिहेतुसंयोगभिन्नस्तद्वृत्तिलयहेतुसंयोगइति वक्तव्यम्।

मनसि वृत्तिमत्त्वेव वागादिवृत्तीनामुपरमदर्शना तदनुवादित्वाच्चास्य वाङ्मनसीत्यादिशब्दस्य। तथाच—वाग्वृत्तिपरामर्शस्य तल्लयपरामर्शस्यचावश्यम्भावा द्यथादृष्टानुवादिनिवाक्ये—वाक्सम्पद्यत इत्यादेर्दर्शनयोग्यवागादिवृत्तिलयपरत्वमेवाऽङ्गीकर्तुं युक्तम्। ननु तदयोग्यवागादीन्द्रियमनस्संयोगपरत्वम्। दर्शनाच्छब्दाच्चेति पूर्वोक्तहेत्वोरेव चक्षुरादीनीन्द्रियाणि वाचमनु = वाक्सम्पत्त्यनन्तरम् — मनसिसम्पद्यतइति द्वितीयसूत्रार्थः ॥

इति वाक्सम्पत्त्यधिकरणम्

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाराध्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ चतुर्थाध्यायस्य

## द्वितीयः पादः

अथ वाक्सम्पत्त्यधिकरणम्

**वाङ्मनसि दर्शनाच्छब्दाच्च** ॥ ४–२–१ ॥

**अत एव च सर्वाण्यनु** ॥ ४–२–२ ॥

पूर्वमुपासकस्योपासनव्यवस्थानादिकमुक्तम्। इह पादेऽस्य शरीरादुत्क्रान्तिर्निरूप्यते। 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्याम् देवतायाम्' इति श्रुतौ प्रयतो वागादीनां मनसि लयोवगम्यते। अयमुपपन्नो न वेति संशयः। किं प्राप्तम् ?

---

अथ वाक्साम्यत्त्यऽधिकरणम् १

अध्यायादौ पादचतुष्टयार्थाऽनुक्रमेण सूचितां वृत्तवर्तिष्यमाणयोः पादयोस्सङ्गतिं स्मारयति पूर्वत्रेति। उपासनाव्यवस्था आवृत्त्यादिरूपा। आदिशब्देन आसननियमादिकं गृह्यते। अस्यशरीरादुत्क्रान्तिरिति। उपासकेन स्वोत्क्रान्तिप्रकारोऽपि चिन्तनीयः। उत्क्रान्तेर्गत्युपक्रमत्वात्। "नैतेसृती पार्थ जानन्योगी मुह्यति कश्चने"ति स्मृत्याम्, "तच्छेषगत्यनुस्मृतियोगा" च्चेति सूत्रेणच उपासनाकाले गतेरप्यनुस्मरणीयत्वप्रतिपादनात्। अतस्तदर्थमुत्क्रान्तिप्रकारो निरूप्यत इति भावः॥

वागादीनामिति। इन्द्रियर्मनसिसम्पद्यमानैरिति। द्वितीयसूत्रोदाहरणवाक्यनिर्दिष्टानि चक्षुरादीन्यपि सम्मेळ्य आदिग्रहणं कृतम्। लयोऽवगम्यतइति। "सता सोम्य तदा सम्पन्नोभवती"त्युक्तायास्सम्पत्तेः "स्वमपीतोभवती"ति लयार्थेनापीतिना निर्देशा दिहापि सम्पत्ति

किम् तावत् प्राप्तम् ? 'प्राणस्तेजसि' इति श्रुतेः प्राणस्य तेजसि लय इति प्राप्ते ब्रूमः। स प्राणस्ततो जीवेनाध्यक्षेण संयुज्यते, न तस्य तेजसि लयः। 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इत्यादिश्रुतिषु तस्य जीवोपगमनादिश्रवणात् 'प्राणस्तेजसि' इतिश्रुतिक्रमविरोधम् परिहरति—

## भूतेषु तच्छ्रुतेः ॥ ४–२–५ ॥

'प्राणास्तेजसि' इति भूतान्तरसंसृष्टं तेजोऽभिधीयते। ततः प्राणो जीवेन सह भूतेषु संयुज्यत इति न विरोधः ॥

### अथ प्राणसम्पत्त्यधिकरणम् २

विषयवाक्यक्रमादधिकरणक्रमइति सङ्गतिः, "प्राणस्तेजसी" त्यत्र प्राणस्याऽपि वृत्तिलयएव नस्वरूपलयइति पूर्वन्यायेनैव सिद्धम्। तस्य जीवलीनस्य तेजसिलय उत प्रथममेव तेजसिलय इति श्रुतिद्वैविध्यात्संशये पूर्वपक्षः ॥

मध्येजीवो - यथा - "वाङ्मनसि सम्पद्यते— मनःप्राण" इतिवचनाऽनुरोधेन मनःप्राणयोस्सम्पत्तिः तथा प्राणस्तेजसीतिवचनाऽनुरोधेन तेजस्येव प्राणस्सम्पद्यते। न मध्ये जीवोपगतश्शङ्कनीयइति। अत्रोच्यते ॥

सःप्राणः अध्यक्षेण – करणाधिपेन जीवेन सम्पद्यते। कुतः - तदुपगमादिभ्यः "एवमेवेममात्मानमन्तकाले सर्वेप्राणा अभिसमायन्ती" त्यादिश्रुतिषु तस्यप्राणस्य जीवोपगमश्रावणात्। एवं जीवेन संयुज्य—तेनसह तेजस्सम्पत्तिरिह प्राणस्तेजसीत्यनेनोच्यते ॥

यथा— यमुनायां गङ्गयासंयुज्य सागरङ्गतायामपि यमुना सागरंगच्छतीतिवचनं नविरुध्यते तथेति ॥

ननु— प्राणस्तेजसीति श्रुत्यनुसारेण वैपरीत्यंवा किमिति नकल्प्यत इत्याशङ्कायामिदं सूत्रम् ॥

तेजसीति न तृतीयभूतमात्रं नर्निर्दिश्यते। किन्तु भाविदेहारम्भार्थं जीवपरिष्वङ्गकानि सूक्ष्मदेहरूपाणि "तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्त" इत्यत्र निरूपितानि सर्वाणि

अथ मनस्सम्पत्त्यधिकरणम् २

## तन्मनः प्राण उत्तरात् ॥ ४–२–३ ॥

'मनः प्राणे' इति वागादिसर्वेन्द्रिययुक्तस्य मनसः प्राणे लयः श्रूयमाणः कीदृश इति संशयः। वागादीनामनुपादाने मनसि वृत्तिलयोऽस्तु। मनसस्तु प्राणे स्वरूपलय एव, मनसः प्राणोपादानकत्वात्। 'अन्नमयं हि सोम्य मन आपोमयः प्राण' इति श्रुतेरन्नमयत्वेन पार्थिवस्य मनस आपोमयत्वेनोपादाने प्राणे स्वरूपलयस्याविरोधादिति पूर्वपक्षः। सिद्धान्तस्तु। पूर्ववन्मनसोऽपि प्राणे वृत्तिलयएव, 'मनः प्राण' इत्युत्तरा द्वाक्यात् न स्वरूपलयः, प्राणस्य मुख्योपादानत्वाभावान्मनसस्तत्रानुत्पत्तेः अतः प्राणे मनसो वृत्तिलय एव न्याय्यः ॥

इति मनस्सम्पत्त्यधिकरणम् २

---

अथ प्राणसम्पत्त्यधिकरणम् ३

## साऽध्यक्षेण तदुपगमादिभ्यः ॥ ४–२–४ ॥

पूर्वत्र सर्वेन्द्रिययुक्तस्य मनसः प्राणे लयः प्रतिपादितः। इह तस्य प्राणस्य कुत्र लय इति संशयः ॥

---

अथ मनस्सम्पत्त्यधिकरणम् २

अतिदेशाधिकरणमिदमुत्तरवाक्यार्थनिरूपणार्थम्। अन्नजलयोः प्रकृतिविकृतिभावश्रावणात्। प्राणमनसोरन्नप्रकृतिकत्वश्रावणाच्च। प्राणाकारपरिणतास्वप्सु स्वरूपलयस्सम्भवतीत्यधिकाशङ्का अदनीयस्योदनादेः स्साक्षात्पृथिवीप्रकृतिकत्वेन परम्परया प्रकृतिभूतास्वप्सु लयाऽभावात्प्राणरूपविकृत्यन्तराऽवष्टब्धानामपां कथञ्चिदपि मनःप्रकृतिकत्वाऽसम्भवाच्च मनसोऽपि वृत्तिलय एव। मनःप्राण इत्युत्तरवाक्यस्य पूर्ववाक्यसमानार्थत्वस्योचितत्वादिति तत्परिहारः ॥

इति मनस्सम्पत्त्यधिकरणम्

अथ स्मृत्युपक्रमाऽधिकरणम् ४

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४–२–७ ॥

इह निरूप्यमाणोत्क्रान्तिरर्चिरादिगत्युपक्रमात् प्राग्विद्वदविदुषोः समाना उत भिन्नेति संशयः। किं तावत् प्राप्तम्? संसारफलस्य मोक्षफलस्य चातिवैषम्यादज्ञानिनोर्विसदृश्येवोत्क्रान्तिरिति। एवम् प्राप्ते ब्रूमः— अर्चिरादिमार्गोपक्रमात् प्राग्विद्वदविदुषोः समानैवोत्क्रान्तिः। ज्ञानिनस्तु मूर्धन्यनाड्या निष्क्रान्तिरमृतत्वञ्च, नेतरस्य इति वैषम्यम् ॥ "शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥" इति श्रुतेः। अतः प्रागुत्क्रान्तिः समानैव ॥

इति स्मृत्युपक्रमाऽधिकरणम्

---

अथ स्मृत्युपक्रमाधिकरणम् ४

एवं विदुषा मुपासनाकाले चिन्तनीयउत्क्रान्तिप्रकारो निरूपितः। अस्याप्यविद्वत्साधारण्याद्विद्वदुत्क्रान्तौ विशेषेणभाव्यमित्याक्षेपात्सङ्गतिः। फलविशेषसिद्ध्यर्थं कारणविशेषाक्षेपणाद्विशेषाऽश्रवणाच्च संशयः। उत्क्रान्तिर्हि विद्वदविदुषोः फलविशेषाऽवाप्तौ कारणम्। तथाच सम्प्रतिपन्नात्कार्यविशेषादश्रुतोऽपि कारणविशेषः कल्पनीयः। इति पूर्वःपक्षः। गत्युपक्रमपर्यन्तं विशेषाऽभावेऽपि ततःप्रभृति श्रुताद्विशेषादेव फलविशेषोपपत्ते नैततः प्रागुत्क्रान्तावश्रुतो विशेषः कल्पनीय इतिसिद्धान्तः। समानाचेति चकारोऽवधारणार्थः। गत्युपक्रमप्रभृति कारणे विशेषं तत्फलविशेषञ्च दर्शयितु ममृतत्वञ्चेति सूत्रशेषः। मूर्धन्यनाड्यागतिश्चकारेण समुच्चीयते। तथाच मूर्धन्यनाड्यागतिः कारणविशेषः तस्याऽमृततत्वं फलविशेषइत्यर्थः। एवमविदुषामपि नाडीविशेषेण तद्गतिरेव तत्फलविशेषावाप्तौ कारणम्। अतएव महाभारते मोक्षधर्मे निषदन्तरेच फलभेदाऽनुसारेण उत्क्रमणे नाडीभेदाः प्रपञ्चिताः ॥

सूत्रार्थस्तु— सृतिः = गतिः। आसृत्युपक्रमात् = गत्युपक्रमात्पुरतः विदुषोऽविदुषोऽपि उत्क्रान्तिस्समानैव। गत्युपक्रममारभ्यतु मूर्धन्यनाडीतो विद्वान्गच्छति। इतरे इतराभ्य

## नैकस्मिन् दर्शयतो हि ॥ ४—२—६ ॥

न तेजोमात्रे प्राणलयः, त्रिवृत्करणश्रुतिर्हि भूतान्तरसंसृष्टिं दर्शयति । अतो भूतेषु जीवेन सह प्राणः सम्पद्यत इति न श्रुतिविरोधः ॥

इति प्राणसम्पत्त्यधिकरणम्

---

भूतान्युच्यन्ते । तत्सम्पत्तिः प्राणस्य जीवेनसहेति युक्तम् । "सहैतावस्मिन्शरीरे वसत" इत्यादि श्रुत्यनुरोधादितिभावः ॥

ननु— यथा बाह्येन्द्रियव्यापारोपरमाऽनन्तरमपि मनोव्यापारदर्शनात् — "वाङ्मनसि सम्पद्यते — इन्द्रियैर्मनसिसम्पद्यमाने" रितिश्रुतिः । यथा— बाह्याभ्यन्तरज्ञानोपरमानन्तरमपि श्वासव्यापारदर्शना न्मनःप्राणइतिश्रुति स्तथा श्वासरूपप्राणव्यापारोपरमानन्तरमपि देहे कश्चि दौष्ण्यप्रदर्शनात् "प्राणस्तेजसी"ति श्रुति स्तदनुवादिन्यस्तु । अतस्तेजश्शब्दस्य सूक्ष्मदेहापन्नसर्व-भूतलक्षकत्वं नवक्तव्यमित्याशङ्कानिराकरणार्थं सूत्रम् ॥

"तासां त्रिवृतंत्रिवृतमेकैकां करवाणी"ति त्रिवृत्करणश्रुतिः "समेत्याऽन्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता अण्डमुत्पादयन्ति त "इति स्मृतिश्च सर्वेषामपिभूतानां प्रागेव त्रिवृत्कृतत्वं दर्शयतइति तेजसीत्यत्र तावत्केवलतेजःपरत्वं वक्तुं नशक्यते । "जीवस्य सञ्चरतः पृथिवीमय आपोमयो वायुमय आकाशमय स्तेजोमय" इतिश्रुतिः "अण्व्योमात्रा विनाशिन्यो दशार्धानान्तु या स्स्मृताः । ताभिस्सर्वमिदं सर्वं सम्भवत्यनुपूर्वश" इत्याद्यास्मृतिश्च सर्वभूतपरिष्वङ्गं दर्शयतः । इहाऽपि जीवस्य गत्युपपादनाय सर्वभूतपरिष्वङ्गोऽपि प्रदर्शनीयः । अतस्तेजःपदं सूक्ष्मदेहापन्नसर्वभूतपरमिति तेजस्येकस्मिन्नेव लयोऽत्र नविवक्षितः । प्राणस्तेजसी त्यस्य दृष्टानुवादित्वन्तु प्राणव्यापारोपरमाऽनन्तरमप्यनुपरतव्यापारस्य व्यापारोपरमसन्निकर्षा त्सङ्कुचितवृत्ते स्सूक्ष्मदेहस्य तेजस्सङ्कलनप्रयुक्त काचित्कौष्ण्यदर्शनमनुवदतीत्येवमपि समर्थयितुं शक्यत इतिभावः ॥

इति प्राणसम्पत्त्यधिकरणम्

गत्यनुपपत्तेरर्चिरादिगतिर्न मुक्तात्मनामिति प्राप्ते सिद्धान्त उच्यते । अर्चिरादिना ब्रह्मप्राप्तेः प्राक् शरीरसम्बन्धव्यपदेशान्न संसारापगमः । अमृतत्ववचनमासन्नामृतत्वाभिप्रायम् । अत उत्क्रान्तस्यार्चिरादिगतिरुपपन्ना । यदुक्तं वागादिविलयात् तस्य गत्यनुपपत्तिरिति तत्राह—

## सूक्ष्मम् प्रमाणतश्च तथोपलब्धेः ॥ ४—२—९ ॥

शरीरादुत्क्रान्तस्यापि सूक्ष्मशरीरमनुवर्तते । अन्यथा गत्यनुपपत्त्या चन्द्रसंवादाद्यनुपपत्तेः । श्रूयते हि पर्यङ्कविद्यायां देवयाने पथि विदुषश्चन्द्रमसा संवादः । 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इत्युपक्रम्य 'एतद्वै स्वर्गस्य द्वारम् यश्चन्द्रमाः तम् यः प्रत्याह तमतिसृजते । अथ य एनम् न प्रत्याह तमिह वृष्टिर्भूत्वा वर्षाति स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान् वा

---

तत्वफलोक्त्यर्थसिद्धस्याऽनुवादः सन्देहभाष्ये "देहादुत्क्रान्तस्ये"त्येतत्सन्देहकोटिमध्ये निवेशनीयम् । विदुषो देहादुत्क्रान्तस्य सतोऽर्चिरादिगतिरित्येतदुपपद्यते नवेत्यर्थः ॥

सूत्रार्थस्तु— तत् = अमृतत्वम् । देहादुत्क्रान्तस्य सतोऽर्चिरादिगतिपूर्वकमेवेत्यध्याहारः । आपीतेः— विरजानद्यतिक्रमणाऽनन्तरभाविब्रह्मसायुज्यप्राप्त्युपक्रमपर्यन्तमित्यर्थः । संसारो — देहमूलकर्मबन्धस्तस्यव्यपदेशात् — "तत्सुकृतदुष्कृते विधूनुत" इति विधूननप्रतियोगित्वेन निर्देशादित्यर्थः ॥

यद्वा—"तेजः परस्यान्देवतायामि" त्यत्र तेजश्शब्दोक्तम् वागादिकरणजातमनःप्राणभूतान्तसहितं सूक्ष्मदेहरूपं तेजः । आपीतेः — ब्रह्मसायुज्योपक्रमपर्यन्तमनुवर्तेत इत्यध्याहारः । आपीतेः— सूक्ष्मदेहमूलकर्मव्यपदेशादित्यर्थः ॥

पूर्वपक्षशङ्काबीजोत्तरत्वेनोत्तरसूत्रमवतारयति — यदुक्तमिति ॥

शरीरादुत्क्रान्तस्याऽपि सूक्ष्मशरीरमनुवर्तेत इत्यध्याहारः । प्रमाणतश्चन्द्रसंवादादिवाक्यरूपात्तथोपलब्धेः । विदुषउत्क्रान्तस्य चन्द्रसंवादाद्युपयोगिदेहसम्बन्धित्वेनोपलब्धेरित्यर्थः । तं यः प्रत्याहेति । चन्द्रप्रश्नस्य य उत्तरंवदति विद्वान् तं ब्रह्मलोकप्राप्त्यर्थमूर्ध्वदेशागमनाय विमुञ्चति ।

अथ तदापीत्यधिकरणम् ५

## तदापीतेः संसारव्यपदेशात् ॥ ४–२–८ ॥

पूर्वमुपपादिता मूर्धन्यनाड्या विदुष उत्क्रान्तिः, ततोऽर्चिरादिगतिरिति। इह देहादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिरुपपद्यते न वेति सन्देहः। "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत॥" इति देहपातानन्तरमेवामृतत्वं श्रूयते। 'तेऽर्चिषमभिसम्भवन्ति' इत्यर्चिरादिगतिश्च श्रूयते। एवमुभयश्रवणादयं सन्देहः। तत्र ब्रह्मणि लीनानां वागादीनां पुनरुत्पादासम्भवान्मुक्तस्य

---

इतिविवेकः। "अथ मर्त्योऽमृतोभवती"त्युच्यमानममृतत्वमनुपोष्यच अदग्ध्वैव शरीरेन्द्रियादिसम्बन्धम् उपासनारम्भपरिकररूपमित्यर्थः ॥

इति स्मृत्युपक्रमाऽधिकरणम्

---

अथ तदापीत्यधिकरणम् ५

एवं विदुषामुत्क्रान्तिमङ्गीकृत्य तत्र कारणविशेषेण भाव्यमित्याक्षेपस्समाहितः। इह तेषां नोत्क्रान्तिः नैवा तत्पूर्विकागतिरित्याक्षिप्य समाधीयत इतिसङ्गतिः। श्रुतिद्वैविध्यात्संशये पूर्वपक्षः। वागादीनां मनःप्रभृतिष्वप्रकृतित्वाद्वृत्तिलयमात्रमित्यस्त्वेतत्। तेजःपरस्यान्देवताया मित्युक्तिस्तु स्वरूपलयो भवितुमर्हति। अतो विदुषो वागादि मनःप्राणभूतसूक्ष्माणां प्रविलीनत्वेन तदपेक्षार्चिरादिगतिर्नसम्भवतीत्युपपत्तिसहिता "अत्रब्रह्मसमश्नुत" इतिश्रुतिः प्रबलेत्यर्चिरादिगतिश्रवणम्मुक्तिफलकेतरविद्याविषयं योजनीयम्। नचाऽत्र परम्ब्रह्मनास्तीत्यभ्युपगन्तुं शक्यम् येन तत्प्राप्त्यर्थं गत्यपेक्षास्यादिति। सिद्धान्तस्तु— सर्वत्र परविद्यासु परब्रह्मण स्सत्वेऽपि देशविशेषस्थितस्य तस्यप्राप्तौ सत्यामेव देहबन्धाऽपगमः। तत्प्राप्तिपर्यन्तं देहबन्धोऽनुवर्ततएव। विरजानदीमतिक्रम्य परब्रह्मलोकप्राप्तौ सत्यामेव कर्मबन्धक्षयोक्त्या तावत्पर्यन्तं तन्मूलसूक्ष्मदेहाऽनुवृत्त्यवगमात्। अतस्तत्र विद्यायामर्चिरादिश्रावणं मुक्तिफलप्राप्त्यर्थमेव। मुक्तिफलकविद्याप्रकरणाम्नानात्तदपेक्षितत्वाच्च। "अथ मर्त्योऽमृतो भवती"ति वचनं वर्तमानसामीप्याऽभिप्रायमिति। पूर्वाधिकरणार्थानुवादभाष्ये अर्चिरादिगतेरुपपादितत्वोक्ति मूर्धन्यनाड्यानिष्क्रान्तस्याऽमृ-

# प्रतिषेधादिति चेन्न शारीरात्स्पष्टो ह्येकेषाम् ॥ ४ २-१२ ॥

बृहदारण्यके 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तम् सर्वे प्राणा अनूत्क्रामन्ति' इत्यादिवाक्यैरविदुषोऽप्युत्क्रन्त्यादिप्रकारमभिधाय 'इति तु कामायमानः' इत्यविद्वद्विषयं परिसमाप्य 'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' इति विदुष उत्क्रान्तिप्रतिषेधादत्रैव साक्षात् ब्रह्मप्राप्तिरिति चेन्न। विदुष उत्क्रममाणस्यार्चिरादिगमनाय प्रस्थितस्य प्राणास्तस्मान्न विश्लिष्यन्त इति ह्युच्यते 'न तस्य प्राणा उत्क्रामन्ति' इति। अयमर्थो माध्यन्दिनानां शाखायां स्पष्टोऽभिधीयते।

---

बृहदारण्यकइति। अत्राऽयम्भावः। विदुषोऽप्युत्क्रान्तिस्समानेति यदुक्तं तन्नोपपद्यते। बृहदारण्यके। "सएता स्तेजोमात्रास्समभ्याददानो हृदयमेवाऽन्ववक्रामती"त्युपक्रम्य "तेन प्रद्योतेनैषआत्मा निष्क्रामती"त्यविदुषउत्क्रान्तिप्रकारमभिधाय "अन्यन्नवतर"मिति देहान्तरपरिग्रहञ्चाऽभिधाय "प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मैलोकाय कर्मण इतितु कामयमान"इत्यविद्वद्विषयम्परिसमाप्य "अथाऽकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्यप्राणा उत्क्रमन्ति। ब्रह्मैवसन्ब्रह्माप्येती"ति विदुषः प्राणानामुत्क्रान्तिः प्रतिषिध्यते। एवं विदुषः प्राणोत्क्रान्तिप्रतिषेधा दत्रैव ब्रह्मप्राप्तेः "समानाचासृत्युपक्रमा"दिति विद्वदविदुषोरुत्क्रान्तिसामान्यं नयुक्तमितिचे न्न। "न तस्यप्राणाउत्क्रमन्ती"ति श्रुतिवाक्येन तस्यविदुषः अर्चिरादिगमनाय प्रस्थितस्य "प्राणाश्शारीरात्तस्मान्नविश्लिष्यन्त"इत्युक्तत्वेन शरीरात्प्राणोत्क्रान्तिप्रतिषेधस्याऽतदर्थत्वेनाऽत्रैवब्रह्मप्राप्ति र्नसिद्ध्यतीति ॥

ननु "नतस्ये"ति वाक्यस्य "नतस्मात्प्राणा विश्लिष्यन्ती"ति प्राणविश्लेषाऽपादानपरत्वं क्लिष्टमित्याशङ्क्य तत्परिहरति। "स्पष्टोह्येकेषा"मिति सूत्रखण्डेन एकेषां= माध्यन्दिनानां शाखायाम् "योऽकामो निष्काम आप्तकाम आत्मकामो नतस्मात्प्राणाउत्क्रामन्ती" ति पञ्चमीपाठेनाऽयमर्थस्स्पष्टीकृतइत्यर्थः ॥

पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यं तमागतम् पृच्छति कोऽसीति तम् प्रति ब्रूयात्' इत्यादि । अतः शरीरादुत्क्रान्तस्य विदुषोऽर्चिरादिगतिरुपपन्ना ॥

## नोपमर्देनातः ॥ ४–२–१० ॥

अत उक्तन्यायात् 'अथ मर्त्योऽमृतो भवति' इत्यमृतत्ववचनं न देहसम्बन्धोपमर्देन तदानीमेवामृतत्वं वदति ॥

## अस्यैव चोपपत्तेरूष्मा ॥ ४–२–११ ॥

अस्य सूक्ष्मशरीरस्य कश्चिद्विद्यमानत्वोपपत्तेश्च न तदुपमर्देन । उपलभ्यते ह्युत्क्रामतो विदुषोऽपि कश्चित् सूक्ष्मदेहगुण ऊष्मा, न स स्थूलदेहगुणः, अन्यत्रानुपलम्भात् । अतश्च गत्युपपत्तिः ॥

---

यस्त्वविद्वान्नोच्चारंवदति तं यावत्सम्पातमुषितं तदत्यये मेघोभूत्वा वर्षजलेनसह मुञ्चतीत्यर्थः । वृष्टिर्भूत्वेत्युक्तेः वर्षणकालेऽपि चन्द्रस्य मेघानुप्रवेशनव्यापारोऽस्तीत्यवगम्यते । परस्वानारण्यो मृगविशेषः ॥

अतः = उक्तन्यायात् । "अथ मर्त्योऽमृतोभवती"त्यमृतवचनं उपमर्देन = देहसम्बन्धापनयनेन अमृतत्वं न वदतीतिसूत्रार्थः ॥

तदानीमेवेति । किन्तु-पूर्वोक्तप्रकारेण आसन्नाऽमृतत्वं वदतीत्यर्थः ॥

अस्यसूक्ष्मशरीरस्य विद्यमानत्वोपपत्तेरेवच न देहसम्बन्धोपमर्देन तदानीमेवाऽमृतत्वं वदति । "अथ मर्त्य" इत्यादिश्रुतिः । नचाऽत्र हेतोरसिद्धिः । सूक्ष्मदेहगुणस्योष्मणउपलभ्यमानत्वात् । नन्वयमूष्मा स्थूलदेहगुण इत्याशङ्क्य परिहरति — अन्यत्राऽनुपलम्भादिति ॥

यदीदंसूत्रमुत्क्रमणकाले क्वाचित्कोष्मदर्शनेनहेतुना उत्क्रममाणसूक्ष्मदेहसद्भावप्रतिपादनपरमभविष्यत्तर्हि सूक्ष्मम् प्रमाणतश्चेति तत्सङ्गतत्वात् "नोपमर्देनाऽत"इति सूत्रतः प्रागेवाऽकरिष्यत् ॥

यो भित्त्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति पराम् गतिम् ॥"

"अथाऽकामायमान"इतिव्यपदिश्य विद्वांसं यदितद्विषयेऽप्युत्क्रान्तिमेवप्रापये दसमञ्जसएवव्यपदेश स्स्यात् । तस्माद्विद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्यो र्विद्वद्विषये प्रतिषेधइत्येवमेवव्याख्येयम् व्यपदेशाऽर्थवत्त्वाय । नच ब्रह्मविदः सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मण । उत्क्रान्तिर्गतिर्वोपपद्यते निमित्ताऽभावात् । "अत्र ब्रह्म समश्नुत" इतिचैवंजातीयकाश्श्रुतयो गत्युत्क्रान्त्योरभावं सूचयन्तीति ॥ तदयुक्तम् – आर्तभागप्रश्नस्य विद्वद्विषयत्वाऽभावेन तदैकार्थ्यस्यानपेक्षितत्वात् । तस्य विद्वद्विषयत्वाभ्युपगमेऽपि 'अस्मात्प्राणाः क्रामन्ति'उत नेतिप्रश्नो नशारीरादुत्क्रान्तिविषयः किन्तु शारीरादेव । शरीरे प्राणास्थित्यभावेन ततउत्क्रान्तेरसन्दिग्धत्वात् । ततः प्रतिवचनमपि शारीरादनुत्क्रान्तिविषयमेव । अत्रैव जीवएव समवनीयन्ते = संसृज्यन्ते इत्यर्थः ॥

तत्र 'सउच्छ्वयते'त्युच्छ्वयनादीनां देहधर्माणां कीर्तनात् देहएवाऽपादानतया गृह्यत इत्यपि नयुक्तम् । "टुओश्विगतिवृद्ध्योच"रितिस्मरणा दुच्छ्वयतेरूर्ध्वगमनार्थकत्वेन तस्यादेहिधर्मत्वात् तथा शङ्खान्दध्मुरित्यत्रेव ध्माधातोरपि सकर्मकत्वेन आध्मायति देहं शब्दयुक्तं करोतीत्याध्मानकर्तृत्वस्याऽपि देहिधर्मत्वेन देहिनएव तेनाऽपि वाक्येनाऽपादानत्वसिद्धेश्च । अथ देहादुत्क्रान्तिः प्राप्ता न देहिनः पाप्तोत्क्रान्तिप्रतिषेधार्थत्वा दस्यवाक्यस्य देहाऽपादानैव सा प्रतिपिद्धाभवतीति यदुक्तन्तदप्यसङ्गतमेव । अर्थप्राप्तविषयत्वान्निषेधस्य । सर्वशाखाप्रत्ययन्यायेन सर्वासु विद्यासु देहपातसमये सुकृतदुष्कृतप्रहाणमुक्तंभवति । अतो भोक्तव्याऽभावेन लोकान्तरगमनाऽभावात् विदुषो लोकान्तरगत्यौपयिकप्राणादिविश्लेषश्शारीरस्याऽर्थवशात्प्राप्तः । अतश्शारीरा दुत्क्रान्ति रर्थप्राप्ताप्रतिषेध्यास्यादर्चिरादिगत्युपपत्त्यर्थम् । अथाऽपि— "चक्षुषोवा मूर्ध्नोवा अन्येभ्योवा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति । प्राणमनूत्क्रमन्तम् सर्वेप्राणा अनूत्क्रामन्ति" । इत्येवमविद्वद्विषयं सप्रपञ्चमुत्क्रमणं संसारगमनञ्च दर्शयित्वा "इतिनु कामयमान" इत्युपसंहृत्याऽविद्वत्कथां "अथाकामयमान" इतिव्यपदिश्य विद्वांसं यदि तद्विषयेऽप्युत्क्रान्तिमेवप्रापये दसमञ्जसएव व्यपदेशस्स्या त्तस्माद्विद्वद्विषये प्राप्तयोर्गत्युत्क्रान्त्यो र्विद्वद्विषये प्रतिषेध इत्येवमेव व्याख्येयं व्यपदेशाऽर्थवत्त्वाय । इति तदप्यसम्बद्धमेव । कामयमानाऽकामयमानयोस्समानायामप्युत्क्रान्तौ ब्रह्मप्राप्त्यभावतत्सद्भावरूपवैषम्यकृतत्वा द्वाक्यभेदस्याऽसामञ्जस्याऽभावात् । सकामनिष्कामविषयतया प्रकरणभेदस्य उत्क्रान्त्यनुत्क्रान्तिविषयत्वाऽभावाच्च । किञ्च–स्पष्टोह्येकेषामिति सूत्रखण्डेन प्रतिषेधादितिचेन्न शारीरादितिसूत्राभागोक्तशारीरापादानकप्राणोत्क्रन्तिप्रतिषेधरूपाऽर्थग्रहणमप्यसमञ्जसम् । स्पष्टोह्येकेषामितिवाक्येन पूर्ववाक्योक्तार्थस्पष्टीकरणरूपस्यैवाऽर्थस्य स्वरसतः प्रतीतेः । तस्मात्प्रतिषेधा दितिचेन्न शारीरादितिसूत्रभागविषयवाक्यतया गृहीतस्य "न तस्यप्राणा उत्क्रामन्ती" ति

'योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात् प्राणा उत्क्रामन्ति' इति ॥

## स्मर्यते च ॥ ४–२–१३ ॥

विदुषो मूर्धन्यनाड्या गमनं स्मर्यते । "ऊर्ध्वमेकः स्थितस्तेषाम्

---

ननु–मूर्धन्यनाड्या निष्क्रम्याऽर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिरूपममृतत्वमाभूतसंप्लवं स्थानममृतत्वं हि भाष्यत इति स्मृतिप्रसिद्धं मुक्तिफलादन्यदेवाऽमृतत्वमिति वक्तव्यम् । "चक्षुषोवा मूर्ध्नोवे"त्यविद्वद्विषयवाक्यसन्दर्भमध्य एव मूर्धन्यनाड्या निष्क्रमणस्याऽपि पाठादित्याशङ्कानिराकरणार्थं सूत्रम् ॥

यस्सूर्यमण्डलं भित्वा ऊर्ध्वं स्थित इति योजना तेन सूर्यसम्बन्धिनाडीविशेषणान्मध्येऽपि सूर्यमण्डलपर्यन्तप्रसृतनाड्या निष्क्रमणस्य ब्रह्मलोकाऽन्तर्गतदिव्यस्थानप्राप्तिहेतुत्वकीर्तनात् । 'चक्षुषोवा मूर्ध्नोवे"त्यविद्वद्विषये मूर्धग्रहणम् मूर्धसम्बन्धिनाड्यन्तरविषयमवगमीयत इतिभावः ॥

*शुद्धाद्वैतवादिनस्तावत्प्रतिषेधादितिसूत्रम् पूर्वपक्षतयापरिगृह्य यथाश्रुतं व्याख्याय स्पष्टो ह्येकेषामिति सूत्रभागं सिद्धान्ततया वर्णयन्ति । यथा "स्पष्टो ह्येकेषां ॥ नैतदस्ति यदुक्तं परब्रह्मविदोऽपि देहादस्त्युत्क्रान्तिप्रतिषेधस्य देह्यपादानकत्वादिति यतो देहाऽपादान एवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्ट उपलभ्यते । तथाहि– आर्तभागप्रश्ने "यत्रायम् पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो ने"ति इत्यत्र "नेतिहोवाच याज्ञवल्क्यः" इत्यनुत्क्रान्तिपक्षं परिगृह्य नतर्ह्ययमनुत्क्रान्तेषु प्राणेषु म्रियत इत्यस्यामाशङ्कायामत्रैव समवनीयन्त इति प्रविलयं प्राणानां प्रतिज्ञाय तत्सिद्धये "स उच्छ्वयत्याध्मायत्याध्मातो मृतश्शेत" इति सशब्दपरामृष्टस्य प्रकृतस्योत्क्रान्त्यवधेः उच्छ्वयनादीनि समामनन्ति । देहस्यचैतानि स्युर्न देहिनः । तत्सामान्यात् । "न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्त" इत्यत्राऽप्यभेदोपचारेण देहापादानस्यैवोत्क्रमणस्य प्रतिषेधः । यद्यपि प्राधान्यं देहिन इति व्याख्येयम् येषां पञ्चमीपाठः । येषान्तु षष्ठीपाठस्तेषां विद्वत्सम्बन्धिन्युत्क्रान्तिः प्रतिषिध्यत इति प्राप्तोत्क्रान्तिप्रतिषेधार्थत्वाद्दस्य वाक्यस्य देहाऽपादानैव सा प्रतिषिद्धा भवति । देहादुत्क्रान्तिः प्राप्ता न देहिनः । अपिच । "चक्षुषोवा मूर्ध्नोवा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोनूत्क्रमति प्राणमनूत्क्रामन्तं सर्वेप्राणा अनूत्क्रामन्ति" इत्येवमविद्वद्विषयं सप्रपञ्चमुत्क्रमणं संसारगमनञ्च दर्शयित्वा "इतिनु कामयमानः" इत्युपसंहृत्याऽविद्वत्कथां

योपासकानामिह शरीरपात एव मुक्तिरित्यर्चिरादिगतिमनियतामाहुः ॥

इति तदापीत्यधिकरणम्

---

विद्वदविदुषोरुत्क्रान्तिसाम्यं नप्रतिज्ञायेत। विदुषः प्राणोत्क्रान्तेरेवाऽभावे विद्वदविदुषोः प्राणोत्क्रान्तिसाम्यस्याऽयुक्तत्वात् ॥

किञ्च–यदि "न तस्य प्राणा उत्क्रामन्ती" ति वाक्यं विदुषउत्क्रान्तिप्रतिषेधे प्रमाणीक्रियेत तर्हि उत्क्रान्तिसद्भावमाशङ्क्य तन्निराक्रियेत। नहि तथाक्रियते। किन्तु प्रतिषेधादिति- चेन्नेत्युत्क्रान्तिप्रतिषेधमाशङ्क्य स प्रतिषेधश्शारीरादिति शारीरापादानकइति निर्णीयते ॥

अपिच— यदि श्रुत्युक्तउत्क्रान्तिप्रतिषेधश्शारीरापादानकएवस्यात् तर्हि प्रतिषेधादिति चेन्नशारीरादित्येवसूत्रयेत्। लाघवात्। नहि प्रथममुत्क्रान्तिप्रतिषेधं शारीरापादानकं निबध्य ततस्तन्निषिध्य तस्य शारीरापादानकत्वनिर्णये प्रयोजनं दृश्यते ॥

इदञ्च-यदिप्रतिषेधादितिचेन्नशारीरादितिसूत्रं पूर्वपक्षतयैवोक्त्वा ततस्तद्व्यतिरेकेण सिद्धान्तंव्यवक्ष्य तर्हि " स्पष्टोह्येकेषामि " ति पूर्वोक्तमेव स्पष्टीकुर्वन्निव न सामान्यवचनेनाऽसूत्रयिष्यत् ॥

किन्तु-इतिचेन्नशारीरादितिपूर्वोक्तम्प्रतिषिध्यविशेषवचनेनैवाऽसूत्रयिष्यत्। एतच्च-'नतस्मा दुच्चिक्रिमषोर्जीवात्प्राणा अपक्रामन्तीसहैवनैवभवन्ती ' त्यर्थः। एवं प्राप्ते प्रत्युच्यते नैतदस्तीति परोक्तं शारीरापादानकोत्क्रन्तिप्रतिषेधनिराकरणं यदि शास्त्रकर्तु रिष्येत तर्हि प्रतिषेधादितिचेन्न। नाणुरतच्छ्रुतेरितिचेन्न इत्यादाविव शारीरादितिचेन्न शरीरादितिस्पष्टार्थमेव सूत्रयेत् ॥

अन्यच्च– यदि शास्त्रकृत पूर्वपक्षं शारीरापादानकोत्क्रान्तिप्रतिषेधं प्रतिषेधादिति चेन्नशारीरादिति विशिष्य संसूत्र्य परमसिद्धान्तं शारीरापादानकोत्क्रान्तिप्रतिषेधं उक्तार्थस्पष्टीकरणार्थरूपेण " स्पष्टोह्येकेषामि " ति सूत्रेण व्यवक्ष्यत्-तर्हि स्फुटम् प्रतारकोऽभविष्यत्। नहि विशेषवचनेनाऽसंशयं पूर्वपक्षं निबध्य सम्भवदर्थान्तरेण सामान्यवचनेन सिद्धान्ते व्यामोहं जनयन् जनान्वञ्चयितुं प्रावर्तयतेदंशास्त्रमाचार्यः ॥

एवञ्च प्रथमं विद्वदविदुषोरुत्क्रान्तिसामान्यं प्रतिज्ञाय श्रुत्युक्तमुत्क्रान्तिप्रतिषेधं शारीरापादानकं निबध्य "स्पष्टोह्येकेषा " मित्युक्तएवार्थे एकेषांशाखिना म्पञ्चमीपाठा त्स्पष्टइतिवदतो आचार्यस्यमते विदुष उत्क्रान्तिर्नास्तीति तस्योत्क्रान्तिप्रतिषेधश्शारीरापादानक इतिच वक्तुं सुतरामयुक्तमिति गतिपरिष्कारे विस्तरइतिच दिक्। अथाऽत्र यत् "नच ब्रह्मविदः उत्क्रान्तिर्गति

इति । अतोऽर्चिरादिगातिरुपपद्यते विदुष उत्क्रान्तस्य । केचिन्निरन्व-

श्रुतिवाक्यस्य प्रतिषेधादितिचेन्न । शारीरादितिपुरोभागप्रतिपादितशारीरापादनकप्राणोत्क्रान्ति-प्रतिषेधार्थरूपाऽर्थविस्पष्टीकरणरूपं नतस्मादितिपञ्चमीपाठयुक्तमेव श्रुतिवाक्यं विषयतया ग्राह्यम् । नतु तद्विरुद्धाऽर्थभ्रान्तिकरं आर्तभागप्रश्नगतं वाक्यम् ॥

अपिच-प्रतिषेधादितिचेन्न शारीरादित्यत्र विषयवाक्यतया परिगृहीतम् " न तस्यप्राण उत्क्रामन्ती " ति वाक्यम् बृहदारण्यकगतम् । तदर्थविस्पष्टीकरणार्थम् " स्पष्टोह्येकेषामि " त्यत्र एकेषांशाखिनामिति शाखान्तरभूतमाध्यन्दिनशाखीयम् " नतस्मात्प्राणाउत्क्रामन्ती " ति वचनमेव विषयत्वयोग्यं नतु स्वशाखीयम् आर्तभागप्रश्नगतम् । तथाऽपि परैः यतो देहापादानकएवोत्क्रान्तिप्रतिषेध एकेषां समाम्नातॄणां स्पष्टउपलभ्यते । तथाहि— आर्तभागप्रश्नइत्यादिना ततइदमत्यन्तमसमञ्जसम् । अथ यदपि " यद्यपि प्राधान्यंदेहिन " इति व्याख्येयम् । येषां पञ्चमीपाठः । येषान्तु षष्ठीपाठ स्तेषान्तु विद्वत्सम्बन्धिन्युत्क्रान्तिः प्रतिषिध्यते । अत्राऽप्यभेदोपचारेणदेहापादानकएवोत्क्रान्तिप्रतिषेधइति । तदप्यसङ्गतमेव । परपरिगृहीतस्य विषयवाक्यस्य तदीयार्थस्यचाऽसामञ्जस्य निरूपणेन तत्पक्षस्य निर्धूतत्वात् । इदञ्च प्रकृतं विदुषः प्राणोत्क्रान्तिप्रतिषेधस्य शरीरापादानकत्वप्रतिपादनं शास्त्रविरुद्धमेव ॥

तथाहि— " तदोकोग्रज्वलन " मित्युत्तरसूत्रे शताधिकयेति गतिप्रतिपादनेन तद्विरुद्धत्वात् ॥

नच-समाप्ता प्रासङ्गिकी परविद्यागता चिन्ता । सम्प्रतित्वपरविद्याविषयामेवाऽनुवर्तयतीऽति तदोकोग्रज्वलनमिति सूत्रस्याऽपरब्रह्मविषयतयाऽवतारितत्वेन स्पष्टोह्येकेषामितिसूत्रे ब्रह्मविदामुत्क्रान्तिप्रतिषेधपरं विवरणं नविरुद्धमितिशङ्क्यम् । अथाऽपरासु विद्यासु फलप्राप्तये देवयानंपन्थानमवतारयिष्यन् प्रथमन्तावद्यथाशास्त्र मुत्क्रान्तिक्रममन्वाचष्टे । समानाहि विद्वद्विदुषोरुत्क्रान्तिरिति वक्ष्यतीत्यादिना प्रकृतप्रकरणस्य सगुणविषयत्वे नैव अवतारितत्वेन मध्ये निर्गुणविषयतया कृतस्यविवरणस्य प्रकरणविरुद्धत्वाऽनपायात् । निर्गुणविद्याप्रसङ्गस्य दुर्निरूपत्वाच्च । तथाच प्रतिपिपादयिषितस्योत्क्रान्त्यभावस्य शास्त्रे शशशृङ्गायमानत्वेन विशिष्य प्रतिकूलार्थपरे प्रतिषेधादितिचेन्न शारीरादितिसूत्रभागे प्रतिपादयितुमशक्यत्वेनच पूर्वोक्तशारीरापादानकोत्क्रान्तिप्रतिषेधार्थविस्पष्टीकरणार्थमेव सामान्यतोनिबद्धे 'स्पष्टोह्येकेषा'मिति सूत्रशकले उत्क्रान्तिप्रतिषेधं शरीरापादानकं प्रदिदर्शयिषुभिरन्यथा निर्गुणचिन्ताया निष्प्रामाण्यभीरुभिः परैरेव बलान्निर्गुणविद्याप्रसक्तिरवतारितेति स्पष्टंविज्ञायते । नखलु—विदुषउत्क्रान्तिप्रतिषेधे तात्पर्यमणीयोऽप्याचार्यस्य । तथाहि—यदि विदुषउत्क्रान्तिप्रतिषेधएव सूत्रकर्तुरिष्येत तर्हि तेन

एव सकलभूतकारणं परब्रह्म श्रूयते । अतस्तस्मिन्नुपादाने सजीवानां भूतानां स्वरूपलय इत्येव युक्त इति पूर्वः पक्षः ॥ सिद्धान्तस्तु । ब्रह्मण्युपादानेऽपि न स्वरूपलयः । किन्तु अविभागमात्रम्, 'वाङ्मनसि सम्पद्यत' इति सम्पत्तिवचनस्यैकस्यार्थान्तरपरत्वे प्रमाणाभावात् । अतो मनःप्रभृतिवत्' वृत्तिलय एवेति वदति ॥

## अविभागो वचनात् ॥ ४-२-१५ ॥

सम्पत्तिवचनादविभागमात्रं ब्रह्मणि भूतानामिति युक्तमेव ॥

**इति परसम्पत्त्यधिकरणम्**

---

तद्वाक्यमनन्वितार्थं स्यात् । वागादिमनःप्राणजीवसहितसूक्ष्मदेहव्यापारोपरमस्य नित्यसिद्धब्रह्मसम्बन्धाऽधीनत्वाऽभावात् । नच स्थानविशेषाऽवच्छिन्नब्रह्मसम्बन्धः प्रागसिद्धोऽत्राऽभिधीयते । स्थानविशेषाऽनुवादनात् । राज्ञः प्रस्थानोपयुक्तपरिवारमेळनेसति प्रस्थानस्येव जीवस्योत्क्रमणोपयुक्तसूक्ष्मदेहेन्द्रियमनःप्राणमेळने सत्युत्क्रमणस्यैव वक्तव्यत्वेन मध्ये स्थानविशेषाऽवच्छिन्नब्रह्मसम्पत्त्यधीनकियत्कालपर्यन्तव्यापारोपरमोक्तिर्वैयर्थ्यचेति । अविभागमात्रमिति । सुप्तिप्रळययोरिव व्यापारोपरमेण सूक्ष्मरूपतयाऽवस्थानमविभागः । प्रमाणाऽभावादिति । एकस्यपदस्य श्रावणेऽनुषङ्गेऽप्यैकार्थ्यमौत्सर्गिकम् । सूत्रेषु पदान्तरसमभिव्याहाराद्यवगमिततत्क्रमविवक्षारूपेण बलवताप्रमाणेनाऽपोद्यते । नचेह तथा किञ्चित्प्रमाणमस्ति । नचोपादानलयस्स्वरूपलयएवेति नियमस्तत्रप्रमाणम् । सुषुप्तिप्रळययोर्जीवस्य ब्रह्मणिलये व्यभिचारेण नियमाऽसिद्धेः । नच "तेजः परस्यान्देवताया" मिति वाक्यवैयर्थ्यप्रसङ्गोऽत्र प्रमाणम् । वागाद्युत्क्रमणक्लेशापनयनाय कञ्चित्कालं सुषुप्ताविव ब्रह्मसम्पत्तेर्विश्रान्त्यर्थत्वेन तस्य सफलत्वात् । विश्रान्तश्चोत्क्रमणक्लेशप्रयुक्तहृदयक्षोभशमनेन निष्क्रमणाऽर्थनाडीविशेषविवेचनोपयुक्तत्वेन सफलत्वा ब्रह्मणि हृदयाकाशरूपे सम्पत्ति रिहविवक्षिता । "स एतास्तेजोमात्राः समभ्याददानो हृदयमेवाऽन्ववक्रामती" ति श्रुत्यन्तरात् । प्रत्युत बाधकमेव प्रमाणमस्ति जीवांशे सम्पद्यत इति क्रियायाः वैरूप्यापत्तिरूपम् । नच जीवस्य स्वरूपतः कार्यत्वमभ्युपगन्तुं युक्तम् । तथासति मोक्षस्यात्मनाशत्वेनाऽपुरुषार्थत्वापत्तेः । तथा मुक्तिफलकपरब्रह्मविद्याप्रकरणेष्वर्चिरादिगतिश्रावणमपि बाधकं प्रमाणमिति । एवमाचार्यस्स्वयमेव सिद्धान्तं प्रदर्श्य तस्मिन्नर्थे सूत्रमवतारयति —

अथ परसम्पत्त्यधिकरणम् ६

## तानि परे तथा ह्याह ॥ ४–२–१४ ॥

पूर्वत्र प्राणसहितस्य जीवस्य तेजउपलक्षितेषु भूतेषु लय उपपादितः 'तेजः परस्याम् देवतायाम्' इति। तस्य भूतान्तरसंसृष्टस्य जीवयुक्तस्य तेजसः परस्याम् देवतायां लयोऽवगम्यते। स परब्रह्मणि स्वरूपलय उत अविभागापत्तिमात्रमिति संशयः। स्वरूपलय इति युक्तम्। तथाहि 'देवात्तल्' इति देव एव देवतेत्युच्यते। परशब्दो महत्त्ववाची। अतः परो देवो महादेवः। 'सेयम् देवतैक्षत' 'द्यावाभूमी जनयन् देव एक' इति स महादेव

---

वोपपद्यत" इति यदुक्तम् तन्निराकरणं "कार्यम् बादरि" रित्यधिकरणे भविष्यतीति दिक्। यद्यपि दीक्षितेन्द्रैः शिवाद्वैतनिर्णयादौ केवलाद्वैताभिमानवशादर्चिरादिगतिश्रुतिरपरब्रह्मप्राप्तिविषयत्वं प्रसाधितुं प्रदर्शितवागाडम्बरस्स कार्त्स्न्येन वेदान्तार्थपरिष्कारे गतिपरिष्कारे निर्धूतइति ततएवाऽनुसन्धेयः ॥

इति तदापीत्यधिकरणम्

---

अथ परसम्पत्त्यधिकरणम् ६

सङ्गतिन्दर्शयितुं वृत्तमनुवदति–पूर्वत्रेति। "वाङ्मनसि सम्पद्यते मनःप्राणे प्राणस्तेजसी"ति तृतीयवाक्यार्थपर्यन्तं प्राङ्निर्णीतम्। अथ "तेजःपरस्यान्देवताया" मिति चतुर्थवाक्यार्थस्तु विशेषणनिर्णेतुमवशेषित इदानीं निर्णीयत इतिभावः। परस्यान्देवतायामित्यस्य महादेवशब्दार्थविषयतया शिवेपर्यवसानं दर्शयन् पूर्वपक्षमुपपादयति–तथाहीति। जीवस्याऽपि स्वरूपतः कार्यत्वमङ्गीकृत्यैव पूर्वपक्षो निर्वोढव्यः। अन्यथा परस्यान्देवतायामितिवाक्यगतस्यैकस्यैव। सम्पद्यतइति शब्दस्य तेजश्शब्दोपलक्षितविशिष्टार्थमध्ये जीवांशे व्यापारोपरमपरत्वं तदन्येषु स्वरूपलयपरत्वमिति वैरूप्यदोषस्याऽपरिहार्यत्वादित्यभिप्रायेण सजीवनामित्युक्तम्। वागादिवाक्येषु सम्पद्यतइति शब्दस्य वृत्तिलयपरत्वं तेजोवाक्ये स्वरूपलयपरत्वमिति वैरूप्यन्तु नदोषः। सूत्रेष्वनुवृत्तपदानां तत्तत्सूत्रगतपदान्तरसमभिव्याहाराऽनुसारेणाऽर्थभेदस्य दृष्टत्वादितिभावः। इत्येवयुक्तमित्यवधारणस्याऽयमाशयः। "तेजः परस्यान्देवताया" मित्यस्य व्यापारोपरमपरत्वे

मूर्धन्यनाड्या विद्वानुत्क्रामति । न तथा परः । किन्तु इतरनाडीभिरेव । तथा श्रुतिः । ' शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ ' इति । स एष विदुषउत्क्रमणे विशेषः । एतदुक्तं भवति । ' रुद्रो जनानाम् हृदये सन्निविष्टः । हृत्पुण्डरीकम् विरजम् विशुद्धम् ॥ ' इत्यादिश्रुतिषु ' ईश्वरः सर्वभूतानाम् हृद्देशेऽर्जुन तिष्ठति ' इत्यादिस्मृतिषु च सर्वजनहृदयगतो हि परमेश्वरोऽवगम्यते । यत्र सुषुप्तो जीवः स्वेन्द्रियवृत्तिभिः सह विलीय तदेकरसो भवति, यश्च ' विश्वाधिको रुद्रो महर्षिः ' 'सर्वो वै रुद्रः' इत्यादिश्रुतिषु निमित्तत्वाद्विश्वाधिकत्वेनोपादानत्वाद्विश्वात्मकत्वेन चावगम्यते , ' एको हि रुद्रो न द्वितीयाय तस्थुः ' इत्यादिश्रुतिषु यस्य विश्वाधिपत्यं श्रूयते , ' शिव एको ध्येयः ' ' यदा चर्मवदाकाशम् ' इति यमन्तरेण मुमुक्षूणां ज्ञेयं वस्तु नास्तीति विज्ञायते , ' अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा ' इति य उत्क्रान्तिसमये विदुषां स्वरूपप्रकाशकतारकब्रह्मोपदेष्टृत्वेनाम्नायते , ' आ वो राजानम् ' इत्यादिषु यस्याराध्यत्वेन सर्वयज्ञाधिपत्यं वर्ण्यते , ' उग्रो वीराँ

संशयः । विशेषोऽपि तेजःपरस्यान्देवतायामित्येतत्पर्यन्तम् मध्येवाभवेत्पश्चाद्वा । नाद्यः । तावत्पर्यन्तं साम्याऽङ्गीकारात् । न द्वितीयः । तदनन्तरमपि हृदयाग्रप्रज्वलनं ययाकयाचिन्नाड्या निष्क्रमण मित्यविशेषात् । नच विदुषाम् मूर्धन्यनाड्यैव निष्क्रमणमितिविशेषो वक्तुंशक्यते । नाडीना मतिसूक्ष्माणां दुर्विवेचत्वेन तदीयानां मूर्धन्यनाड्याः विदुषोऽपि विविच्याऽवगन्तुमशक्यत्वात् । नच विद्यानुष्ठानदशायां स्वयमीदृशप्रदेशस्थितयैतादृश्यानाड्या निष्क्रम्य ब्रह्मप्राप्नुवानीत्यनुसन्धानाभ्यासपाटवात् तदानीं स्वनिष्क्रमणनाडीपरिज्ञानं भवेत् । उत्क्रमणक्लेशप्रयुक्तस्य क्षोभस्य ब्रह्मणि विश्रान्त्योपशान्तत्वेन तदानीं विवेचनकौशलसत्त्वादितिवाच्यम् । तथाऽपि घनसन्तमसावृतहृदयादरणगतस्य विदुषो निरन्तराऽनेकसूक्ष्मनाडीमध्ये स्वनिष्क्रमणनाडीविशेष स्यावगन्तुमशक्यत्वात् । नच हृदयाऽग्रप्रकाशेन विवेचनं स्यादितिवाच्यम् । अधोमुखहृदयाग्रप्रकाशस्य मूर्धाभिगतोर्ध्वगतावनुपयोगात् ॥

अथ तदोकोग्रा ऽधिकरणम् ७

## तदोकोऽग्रज्वलनम् तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४–२–१६ ॥

पूर्वत्र विद्वदविदुषोरर्चिरादिगत्युपक्रमपर्यन्तमुत्क्रान्तिः समानेत्युक्तम् निष्क्रमणवेलायामुभयोर्विशेषोऽस्ति न वेति विचार्यते । 'तेजः परस्याम् देवतायाम्' इति भूतैः सह परमकारणे परदेवे परे ब्रह्मणि परमाकाशरूपे विद्वानविद्वांश्च विलीयाविभागेन क्षणं विश्रम्य तिष्ठतीति समभिहितम् । अतः समानैवोत्क्रान्तिः, तयोर्हृत्प्रद्योतनादेः समत्वश्रवणात् । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य' इति श्रूयते, अतः समानत्वादुत्क्रान्तेस्तयोरविशेष इति पूर्वपक्षे प्राप्ते विशेषोऽस्तीति सिद्धान्त उच्यते । तथा हि । हार्दस्य हृदयगतस्य परमेश्वरस्याराधनरूपविद्यासामर्थ्यात् तदङ्गगत्यनुसन्धानाच्च प्रीतेन तेन सर्वानुग्राहकेण स्वस्वरूपावरणमलध्वंसनाविदग्धयाऽनुग्रहदृष्ट्या निरीक्षितस्तदनुग्रहप्रकाशितद्वारः शताधिकया

---

भूतानामिति । भूतग्रहणं वागादिमनःप्राणजीवानामप्युपलक्षणम् ॥

इति परसम्पत्त्यधिकरणम्

---

अथ तदोकोग्रा ऽधिकरणम् ७

सङ्गतिन्दर्शयति— पूर्वत्रेति । गत्युपक्रमात्प्राग्ब्रह्मसम्पत्तिपर्यन्तोत्क्रान्तिर्विद्वदविदुषोस्समानेति "समानाचासृत्युपक्रमा" दित्यधिकरणे वर्णितम् । ततःपरमुत्क्रान्तिस्तत्पूर्विकागतिश्च स्वरूपतएवनास्ति यस्यां विशेषमभिप्रेत्य आसृत्युपक्रमादित्यवधिः क्रियेतेत्याशङ्क्य तदुभयसद्भावस्समर्थितः । इहत्वस्तु स्वरूपतस्तदनन्तरमप्युत्क्रान्तिव्यापारः नाडीभिर्निष्क्रमणरूप स्तत्राविदुषाम् विशेषोनास्तीत्याशङ्क्य समाधीयत इति सङ्गतिरित्यर्थः । विशेषसद्भावाऽसद्भावाभ्यां

निदधाति। तदनुग्रहविशेषेणासौ विगलितसांसारिकमलः प्रकाशितात्मद्योतित-मूर्धन्यनाड्या निर्गत्यार्चिरादिना तदीयं परं पदमप्राकृतं निरतिशयानन्द-स्वभावं प्राप्य तदाकारो भूत्वा नित्यनिरतिशयानन्दस्वरूपो भवति। तस्मादविदुषो विदुषश्च गतिवैषम्यमस्तीति युक्तमेव ॥

इति तदोकोग्राऽधिकरणम्

---

अथ रश्म्यनुसार्यधिकरणम् ८

## रश्म्यनुसारी ॥ ४–२–१७ ॥

पूर्वत्र साधकस्य हृदयगतपरमेश्वरानुगृहीतस्य मूर्धन्यनाड्या निर्गम

---

ननु—यस्यैवमुत्क्रान्तिसमये परमेश्वराऽनुग्रहैकलभ्यो हृदयाग्रप्रकाशो नास्ति तस्य कथम् मूर्धन्यनाड्यानिष्क्रमणनियमस्सिद्ध्येदित्याशङ्क्य नियमेन परमेश्वरस्य तदानीमाविर्भूयाऽनुग्राहकत्वं तदीयवैभवप्रख्यापनेन समर्थयते। एतदुक्तमित्यादिना। उज्जेष्यीरानिति। वीराइति देवव्रतादिषु प्रसिद्धा स्सदा परमेश्वरसन्निधावन्तरङ्गसेवां कुर्वन्तो गणनाथाः। तेषुहि वीरशब्दः प्रसिद्धः। "क्षयद्वीराय प्रभरामहेमतिम्। क्षयद्वीराय नमसाविधेमते" "दिव्या गणाः बहुरूपाः पुराणाः। आयुश्छिदो नःप्रथमन्तु वीरा" इत्यादिमन्त्रेषु प्रसिद्धाः। क्षयन्तो वसन्तो वीरा यस्मै तस्मै क्षयद्वीरायेति परमेश्वरस्य विशेषणम्। एवंभूतान् वीरान् सर्वेष्वपिपारमेश्वरेषु सर्वेष्वपिदिव्यस्थानेषु सन्निहितान् प्राप्य कर्मभूतान्। नः—अस्मान्। उदर्पय—ऊर्ध्वदेशे सर्वस्याऽपिप्रपञ्चस्योपरिस्थिते परमपदरूपे दिव्यस्थाने। प्रापय—परमपदे मां तैस्सह संयोजयेत्यर्थः। प्रकाशितात्मद्योतितमूर्धन्यनाड्येति। मलविगळने.पक्वमाद्धृदयाग्र खद्योतवत्सञ्जातप्रकाशो य आत्मा स्वापृथग्भूतधर्मज्ञानप्रभारूपतः तेनद्योतितया मूर्धन्यनाड्ये त्यर्थः। सर्वमिदं प्रस्तुतविद्वदुत्क्रान्त्यनुसारेण वर्णितम्। एवमविद्वदुत्क्रातावपि वर्णाश्रमधर्माराधित-परमेश्वरानुग्रहवशात्प्राप्यलोकानुगुणनाडीप्रवेशार्थं स्तत्तन्नाडीद्वारकप्रकारोऽनुसन्धेयः ॥

इति तदोकोग्राऽधिकरणम्

---

अथ रश्म्यनुसार्यधिकरणम् ८

मूर्धन्यनाड्यनिष्क्रमणे विचारिते तदनन्तरभाविरश्मिभिरूर्ध्वाक्रमणमधिकृत्य विचार्यत इतिसङ्गतिः। विदुष ऊर्ध्वदेशाक्रमणकारणानां सूर्यरश्मीनां रात्रौ सत्वाऽसत्वाभ्यां तस्य

अर्पय भेषजाभिर्भिषक्तमं त्वा भिषजां शृणोमि ' इति यः संसाररोगस्य भिषक्तम इति निरूप्यते। 'मायान्तु प्रकृतिम् विद्यान्मायिनन्तु महेश्वरम् ' इति सकलप्रपञ्चविचित्रकलिकानिकुरम्बावलम्बिनी मायालक्षणा परमशक्ति र्यस्य रूपैकदेशस्वभावनया प्रतिपाद्यते। स खलु हृदयगतो हार्दः परं ब्रह्म परमेश्वरः परममङ्गलस्वरूपउमापतिः परमात्मा स्वाज्ञारूप-श्रुतिचोदितेषु कर्मस्वग्निहोत्रादिषु स्वाराधनरूपेषु नियतं निर्मुक्त-सकलाविहितकर्मत्वं स्वार्पितसकलकर्मफलं स्वायत्तचित्तं स्वज्ञाना-मृतपरिपूर्णं निरस्तसमस्तकाम्यफलं विवेकादिसम्पन्नं स्वभक्ति-मात्रैकनिरतं स्वप्रसादाकाङ्क्षिणं विद्यावन्तं साधकमवलोक्य शरीरपरित्याग-समये तद्विषयसम्पन्नप्रसादः तस्मिन् संसारमलकलङ्कापकर्षिणीमनुग्रहदृष्टिं

नच " तयोर्ध्वमाय"न्निति श्रुति र्विदुषां मूर्धन्यनाड्यैव निष्क्रमणमिति नियच्छति। किन्तु यो मूर्धन्यनाड्या निष्क्रामति सोऽमृतत्वंप्राप्नोतीत्येतावन्मात्रं वदति। तत्तु नाडीस्तुत्यर्थत्वेनोपपद्यतइति पूर्वपक्षः॥

सिद्धान्तस्तु — "तयोर्ध्वमाय"न्निति श्रुतिर्मूर्धन्यनाड्यानिष्क्रान्तानामेवाऽमृतत्वं नान्येषा मिति नियच्छन्त्यर्थाद्विदुषां मूर्धन्यनाड्यैव निष्क्रमणमित्यपि नियच्छत्येव। अन्यथा नाड्यन्तरनिष्क्रान्तानामविदुषामपि मुक्तिलाभप्रसङ्गेन मुक्त्यर्थविद्याविधायिशास्त्राऽप्रामाण्य-प्रसङ्गात्। नच नाडीनां दुर्दर्शत्वम्। विद्याराधितपरमेश्वरप्रसादात्तद्दर्शनोपपत्तेः। नचैवं श्रुत्यर्थोप-पादनं सम्भवत्यसदर्थावलम्बनत्वेन पाक्षिकाऽर्थावलम्बनत्वेनवा ब्रह्मनाडीस्तुत्यर्थत्वकल्पनं युक्त-मिति तमिमं सिद्धान्तम् सूत्रारूढं कुर्वन्नुपपादयति— तथाहीति। सूत्रेण ब्रह्मनाडीदर्शनोपाय-मात्रं दर्शयति। तेन तदपेक्षस्य सिद्धान्तस्याऽर्थात्सिद्धिः। विद्यासामर्थ्या द्विद्याविशेषभूत-गत्यनुसन्धानपरिशीलनाच्च विद्वान् हृदयगतेन परमेश्वरेणाऽनुगृहीतो भवतीति। ततश्च तस्य परमेश्वरस्योकः=स्थानं। हृदयं। तदग्रे ज्वलनं—प्रकाशो भवति। तेनप्रकाशेन ब्रह्मनाडीद्वार-म्प्रकाशितम् भवति। ब्रह्मनाड्याः खलु द्वारं नाभिचक्रे प्रसिद्धम्। नतु हृदयादूर्ध्वप्रदेशे हृदि। नाभ्यादिमूर्धपर्यन्तव्यापित्वात्तस्याः। अतो विद्वान् प्रकाशमानेन हृदयाग्रप्रकाशेन तावद्देशव्यापिना प्रकाशितं ब्रह्मनाडीद्वारम्प्रविष्ट स्तया शताधिकयानाड्या नळीकमुख-निवेशितमीसगुलिकावत् झडिति निष्क्रामतीति सूत्रस्यार्थः॥

गर्हितम् ॥ ' इति निशामरणनिन्दनात् । इतिचेन्न । संसारबन्धस्य याव द्विद्याभावित्वात् । विद्यया अनारब्धकार्येषु बन्धहेतुषु कर्मसु नाशितेषु अनुवर्तमानस्य प्रारब्धस्याऽपि यावच्चरमदेहावसानभावित्वाच्चरमदेहावसाने प्रारब्धेऽपि नष्टे सति पुनर्ब्रह्मप्राप्तिविघ्नहेत्वभावात् । तथा दर्शयति श्रुतिः 'तस्य तावदेव चिरम् यावन्नविमोक्ष्येऽथ सम्पत्स्य ' इति । निश निन्दा त्वितरपुरुषविषया । अतो निश्यपि मृतस्य ब्रह्मप्राप्तौ न विरोधः ॥

इति रश्म्यनुसार्यधिकरणम्

---

अथ दक्षिणायनाऽधिकरणम् ९.

## अतश्चायनेऽपि दक्षिणे ॥ ४—२—१९ ॥

अत एव बन्धहेत्वभावादेव, दक्षिणायनमृतस्यापि विदुषो ब्रह्मप्राप्तिरस्त्येव ॥

---

यावद्विद्याभावित्वादिति । विद्याशब्देन विद्यादेहो विवक्षितः । अतएव यावच्चरमदेहभावित्वा दित्युक्तम् । निशानिन्दात्विति । मुक्त्यर्थविद्याविधायिशास्त्रसामर्थ्यात्तस्याऽविद्वद्विषयत्वं कल्पनीयम् । अविद्वत्स्वपि येषामिष्टापूर्तादिकारिणामतिशिष्टानां निशामरणं दृश्यते तेषां ततोऽपि प्रबलस्य प्राचीनस्य दुष्कर्मणः फलोन्मुखताफलबलात्कल्पनीयेतिभावः ॥

इति रश्म्यनुसार्यधिकरणम्

---

अथ दक्षिणायनाऽधिकरणम् ९.

अतिदेशाधिकरणस्याऽस्येयमधिकाशङ्का । "य एवं विद्वा नुदगयने प्रमीयते देवानामेव महिमानङ्गत्वाऽऽदित्यस्यसायुज्यं गच्छ त्यथ यो दक्षिणेप्रमीयते पितॄणामेव महिमानंगत्वा चन्द्रमसस्सायुज्यं सलोकतामाप्नोती"ति तैत्तिरीयोपनिषदि पुरुषविद्यावसाने पूर्वानुवाकविहित- ब्रह्मविद्यावत उत्तरायणमृतस्य आदित्यप्राप्तिमुक्त्वा दक्षिणायनमृतस्य चन्द्रप्राप्तिरुक्ता । नचेय मर्चिरादिमार्गपर्वभूतचन्द्रप्राप्तिः । तस्योत्तरायणमृतविद्वत्साधारण्येन दक्षिणायनमृताऽविद्वन्मात्र-

उक्तः। निर्गतस्य तदूर्ध्वगमनं निशि दिवा च सम्भवति न वेति संशयः। किं तावत् प्राप्तम्? 'यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व माक्रमत' इति समुत्क्रान्तस्य रश्मिसम्बन्धेनोर्ध्वदेशाक्रमणमवगम्यते। रश्मिसम्बन्धस्तु दिवैव सम्भवति, न तु रात्राविति प्राप्ते ब्रूमः। उत्क्रान्तो विद्वान् रश्मिसम्बन्धादेवोर्ध्वं गच्छतीति सत्यम्। स तु दिवा च रात्रौ च सम्भवति। निदाघेषूष्मदर्शनेन निश्यपि रश्मिसत्त्वात्। तस्माद्दिवा च रात्रौच रश्म्यनुसारी गच्छत्यूर्ध्वमिति निर्णयः॥

अशाङ्क्यपरिहरति —

## निशि नेतिचेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च

॥ ४-२-१८ ॥

निशि मृतस्यापि रश्मिसम्बन्धेन ब्रह्मप्राप्तिरभिहिता। सा न सम्भवति, "दिवा च शुक्लपक्षश्च उत्तरायणमेव च। मुमूर्षताम् प्रशस्तानि विपरीतन्तु

निशामरणनिन्दानिन्दाभ्याञ्च संशयः। विदुषो निशिमृतस्य ऊर्ध्वगतिर्नसम्भवति। तत्कारणानां सूर्यरश्मीनामभावात् निशास्वनुभूयमानस्योष्मणआग्नेयत्वेनाऽप्युपपत्तेः। ज्योतिश्शास्त्रप्रक्रियया चन्द्रमण्डलमनुप्रविष्टाः सूर्यरश्मयएव चन्द्ररश्मयइत्यङ्गीकारेऽपि दर्शादिरात्रिषु तेषामप्यभावात्। नच निशिमृतस्य विदुषो विनापिसूर्यरश्मी नूर्ध्वगतिश्शङ्कनीया। एतैरेवरश्मिभिरित्यवधारणविरोधात्। नाऽपि निशिमृतस्य विदुषो मूर्धन्यनाड्यानिष्क्रान्तस्य यावदुदयं सूर्यरश्मिप्रतीक्षणेनोर्ध्वगतिर्वाच्या। "स यावत्क्षिप्येन्मनस्तावदादित्यंगच्छे" दितिशैघ्र्यवचनविरोधात्। तथा निशामरणनिन्दनस्य विद्वदविद्वत्साधारण्येनप्रवृत्तत्वादपि निशिमृतस्य विदुषो नसम्भवत्यूर्ध्वगतिरितिपूर्वपक्षः॥

सिद्धान्तस्तु–निश्यपि विद्वान् सूर्यरश्म्यनुसारी ऊर्ध्वंगच्छति। ग्रीष्मे दिवासौरातपोष्मप्रकर्षेसत्येवरात्रावूष्मदर्शनेन तस्यसूर्यसम्बन्धित्वावगत्या रात्रावपिसूर्यरश्मीनामनुवृत्त्यवधरणादिति॥

अथ निशामरणनिन्दारूपपूर्वपक्षहेत्वन्तरनिराकरणार्थं सूत्रम्॥

अतः सर्वथा विदुषां ब्रह्मप्राप्तौ निशादक्षिणायनकृष्णपक्षनिषेधो नास्त्येव। यथा देहापगमस्तदानीमेव तत्प्राप्तिरिति ॥

इति दक्षिणायनाऽधिकरणम्

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
चतुर्थाध्यायस्य द्वितीयः पादः

मार्गद्वयपर्वणामुपदेशात्कालशब्दः कालाभिमानिदेवताबहुलातिवाहिकगणपरः । "आवृत्तिश्चैव योगिना" मिति योगिशब्दो न मुमुक्षुमात्रविषयः किन्त्वावृत्त्यनावृत्तिभाजा मैश्वर्यार्थिनां मुमुक्षूणाञ्च योगिनां साधारण इतिपरिहारः ॥

इति दक्षिणायनाऽधिकरणम्

इति श्री नागलिङ्गशिवाख्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकासख्यायां
श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीय
ब्रह्मसूत्रभाष्यव्याख्यायां अथ चतुर्थाध्यायस्य
द्वितीयः पादः

ब्रह्मप्राप्तेरर्चिरादिगतिमन्तरेणाप्युपपत्तिरवगम्यते । तस्मात् ब्रह्मप्राप्तौ नार्चि- रादिनियम इति प्राप्तेऽभिधीयते । विद्वानर्चिरादिनैव ब्रह्म प्राप्नोति पञ्चाग्नि- विद्यादिषु 'तेऽर्चिषमभिसम्भवन्ति' इत्यादिनाऽर्चिरादेः ब्रह्मप्रापकत्वेन

--

प्रथममाद्यपर्वभूताग्निश्रवणेऽपि तदनन्तरं सवायुलोकम् सवरुणलोकम् सआदित्यलोकम सचन्द्र- लोकम् सप्रजापतिलोकमित्यन्यान्येवमार्गपर्वाणि श्रूयन्ते । तत्र वैरूप्यभूयस्त्वात् किञ्चित्प्रत्यभि- ज्ञानं सदप्यसत्कल्पम् ॥

तथा बृहदारण्यके क्वचित्—"यदा वै पुरुषोऽस्माल्लोकात्प्रैति सवायुमागच्छती"ति वायुः प्रथमप्राप्यश्श्रूयते । एवं मार्गपर्वभेदात्तत्क्रमभेदाच्च यथाम्नानं प्रकरणभेदेन विद्याभेदवच्च विद्या- भेदइत्येवयुक्तम् ॥

अन्यथा—स्थानगुणभेदेऽप्युपास्यम्ब्रह्म सर्वत्रैकमिति सर्वासामपि दहरवैश्वानरादिविद्याना मैक्यंप्रसज्येतेति । एवं प्राप्ते सिद्धान्तः ।

प्रसिद्धस्तावदर्चिरादिमार्गस्सर्वविद्यासाधारणइति । छान्दोग्ये पञ्चाग्निविद्यायाम् "तद्य इत्थम् विदु"रिति प्रकृतान्पञ्चाग्निविदस्सङ्कीर्त्य "येचेमेऽरण्ये श्रद्धातपइत्युपासते" इति विद्या- न्तरवतामप्यनुकीर्तनात् ॥

ननु — यासुविद्यासु नकश्चिदपिमार्गश्श्रूयते तद्विषयमिदमनुकीर्तनं भविष्यति । स्यादेत देवं यदि मार्गैक्यमशक्योपपादनं स्यात् । शक्यतेतु तदुपपादयितुं नानाशाखागतनानाविद्यासु श्रुतानां पर्वणामुपसंहारेण लाघवात् बाधकाऽभावात् तत्रतत्रैकदेशप्रत्यभिज्ञानसत्वाच्च । तथाहि— व्याहृतिविद्यायां स्तनाकृतिनेन्द्रस्य जीवस्य परमेश्वरस्य वा स्थानभूतावयवेन निर्गत्य केशान्त- स्थानस्य शिरःकपालस्याऽतिलङ्घनं यदुक्तं तन्मूर्धन्यनाड्या निष्क्रमणमेव । अग्न्यादीनाञ्च मार्गपर्वभूतानामेवकीर्तनम् । तत्र यद्ब्रह्मणोवाग्न्यादिष्वपि प्रतिष्ठितत्वश्रावणन्तु तेषु किय- त्कालंविश्रान्तिरस्तीत्यभिप्रायेण । व्याहृतिविद्यायां हि चतुर्थव्याहृतिरूपस्य ब्रह्मणइव व्याहृतित्रयरूपाणा मग्न्यादीना मस्त्युपास्यत्वम् तद्बलात्तेषां लोकेषु विश्रान्तिवचनं युक्तम् । "स सामभिरुन्नीयते ब्रह्मलोक" मित्यत्र "यः पुनरेतं त्रिमात्रेणोमित्यक्षरेण एतम्पुरुषमभिध्यायीते" त्येकमात्रद्विमात्रत्रिमात्रप्रणवसाधनकोपासनाविधाना तत्र प्रणवमात्राणा मृग्यजुस्सामरूपतया प्रतिपादितत्वाच्च विद्यासाधनप्रणवतृतीयमात्रारूपाण्येव सामानि विद्या- साधनत्वा द्ब्रह्मप्रापकत्वेनाऽनुकीर्तितानि नतु मार्गतया । तत्र तत्र वायुवरुणादिश्रावणन्तु विद्यासु गुणोपसंहारवन्मार्गपर्वोपसंहारेणोपपद्यत इति नमार्गैक्यविरोधि । तत्पाठक्रमोऽपि नतद्विरोधी । श्रुत्यादिबलेनैकरूपक्रमोपपादनसम्भवात् । तस्माल्लाघवाद्बाधकाऽभावाच्चैकएवमार्गः ॥

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाराध्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ चतुर्थाध्यायस्य

## तृतीयः पादः

---

अथ अर्चिराद्यधिकरणम् १

### अर्चिरादिना तत्प्रथितेः ॥ ४–३–१ ॥

पूर्वत्रोपासकस्य हृदयगतपरमेश्वरानुग्रहेण प्रकाशितद्वारस्य मूर्धन्य-नाड्या देहान्निष्क्रान्तिरभिहिता। एवंविधस्य ब्रह्मप्राप्तिरर्चिरादिना मार्गेणैव, उतान्यथाऽपि सम्भवतीति प्रथममिह विचार्यते। तथा हि। एकत्र 'यत्रासौ केशान्तो विवर्तते। व्यपोह्य शीर्षकपाले भूरित्यग्नौ प्रतितिष्ठति। भुव इति वायौ। सुवरित्यादित्ये। मह इति ब्रह्मणि। आप्नोति स्वाराज्यम्' इति

---

अथ अर्चिराद्यधिकरणम् १

पूर्ववृत्ताऽर्थाऽनुवादेन सङ्गतिसूचनपूर्वकमाद्याधिकरणस्य विचार्यं दर्शयति— पूर्वत्रेति। मार्गैक्योपपादकप्रत्यभिज्ञानसत्त्वाऽसत्त्वाभ्यां संशयः ॥

ननु – यथा बह्वीषु शाखासु श्रुताऽपि दहरविद्यैका एवं मार्गोऽप्येकस्स्यादितिपूर्वपक्षइत्या-शङ्क्य पूर्वपक्षमुपपादयति – तथाहीति, स्थानगुणादिप्रत्यभिज्ञानैक्याद्युक्तं विद्यैक्यम्। इह तथा मार्गैक्योपपादिनी प्रत्यभिज्ञा नदृश्यते। नच "स्वन्तरेण तालुके। य एष स्तनइवाऽवलम्बते। सेन्द्रयोनिः। यत्राऽसौ केशान्तो विवर्तते व्यपोह्य शीर्षकपाले" इतिश्रुतानि तालुकान्तर मवलम्बमानावयवकेशान्तशीर्षकपालानि व्याहृतिविद्याया मिव विद्यान्तरेषु मार्गपर्वत्वेन श्रुतानि। तत्राग्न्यादीनान्तु ब्रह्मणइव प्राप्यत्वेनैव श्रावणं न मार्गपर्वत्वेन। शैब्यप्रश्नेच "स सामभिरुन्नीयते ब्रह्मलोक"मिति सामवेदपठितानां साम्नामेव ब्रह्मलोकपर्यन्तप्रापकत्वं श्रूयते। नत्वर्चिरादिपर्वमध्ये किञ्चिदप्याम्नायते। कौषीतकिशाखायाम् "स एतम् देवयानम्पन्थानमापद्याऽग्निलोकमागच्छ"तीति

अथ वाय्वधिकरणम् २

## वायुमब्दादविशेषविशेषाभ्याम् ॥ ४–३–२ ॥

अत्र श्रुतस्यार्चिरादिक्रमस्य मध्ये श्रुत्यन्तरसिद्धक्रमोऽत्र निवेशनीयः अथवा अयमेव क्रम इति सन्दिह्यते। 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसम् चन्द्रमसो विद्युतम् तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इत्यर्चिरादिक्रमश्छान्दोग्यसिद्धः। बृहदारण्यके 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति' इति संवत्सरादित्ययोर्मध्ये वायुः श्रुतः स निवेश्यो न वेति संशये ननिवेश्योऽश्रवणा

गतेरनङ्गीकृततया देवयानगत्युपपादकाऽधिकरणानां स्वपक्षनिराकरणत्वमभिवीक्ष्य तेष्वर्चिरादिनियमभञ्जकं किमपिमतान्तरं निरन्वयोपासकानां नार्चिरादिरिति केचिदित्यसकृत्प्रक्षिप्तमेतैरेव दीक्षितवर्यैः। स्वानभिमतार्चिरादिगतिनियमं निराकर्तुं भगवद्भाष्यकाराणां हृदयं वशीकर्तुञ्चेति विज्ञायते। अतएवैतादृशानि कतिचित्प्रदिशान्येवाऽवलम्ब्य शिवाद्वैतनिर्णये भाष्यकारै निर्विशेषमेव शिवाद्वैतमूरीकृतमिति प्रसाधितुं प्रयतितमतिविशदम्। भाष्ये किलास्मिन् बहून् स्वाऽनभिमतानर्थान् प्रत्याख्य स्वाभिमतानर्थान्प्रक्षिप्य चैतैरेव भूयान्ग्रन्थो व्यत्यासितइतिपीठिकायामनेकानि निदर्शनानि प्रदर्शितानीत्यलम्बहुना ॥

इति अर्चिराद्यधिकरणम्

---

अथ वाय्वधिकरणम् २

यदुक्तं नानाशाखाश्रुतसर्वपर्वयुक्त एकोमार्गइति तन्नयुक्तम्। मार्गैक्ये वायोः क्वचिदपि निवेशासम्भवेन कासुचिच्छाखासु तदाम्नानस्याप्रामाण्यप्रसङ्गादिति पूर्वाधिकरणसिद्धार्थाक्षेपेण प्रत्यवस्थानात्सङ्गतिः। अर्चिरादिक्रमस्य मध्ये इति। अर्चिरादिक्रमप्राप्तस्यातिवाहिकगणस्य मध्ये इत्यर्थः ॥

प्रसिद्धत्वात् 'भूग्निरग्नौ' इत्यादिषु न ब्रह्मप्राप्तिमार्ग उच्यते, किन्तु तत्तद्विभूतिप्राप्तिरेव । ततः परप्राप्तिरर्चिरादिनैव । निरन्वयोपासकानां नार्चिरादिरिति केचित् ॥

इति अर्चिराद्यधिकरणम्

---

नन्वेवं दहरवैश्वानरादिविद्यानामैक्यमभ्युपगन्तुं शक्यम् । गुणानामानन्त्येनाऽशक्यानुष्ठानत्वात् । मार्गपर्वणान्तु नानाशाखासु श्रुतानामुपसंहारेऽपि न द्वादशसङ्ख्यातिलङ्घनमस्तीति वैषम्यम् । ततः परप्राप्तिरर्चिरादिनैवेति भगवतो भाष्यकारस्य निर्णयः । शिवार्कमणिदीपिकायान्तु निरन्वयोपासकानां नार्चिरादिरिति केचिदिति प्रतीकमुपादाय तेषांमते अर्चिरादिना तत्प्रथितेरितीदंसूत्रम् प्रथितिग्रहणात्प्रायोऽभिप्रायं नेतव्यम् । अवश्यञ्च प्रायोऽभिप्रायमिदमिति सर्वैरपि वक्तव्यम् । हिरण्यगर्भपर्यन्तानां देवानां स्वस्वलोकेषु स्थित्वैवमुच्यमानानामर्चिरादिमार्गासम्भवात् । नच भुवि विद्यामनुष्ठाय मुच्यमानानां मनुष्याणामयमेकएवमार्गइति नियमो विवक्षितइतिवाच्यम् । मधुविद्योपासकानां वसुरुद्रादित्यमरुत्साध्यगणपदप्राप्तिपूर्विकायाम् मुक्तौ वस्वादिपदपर्वकमार्गान्तरावश्यम्भावादिति यदर्चिरादिमार्गनियममुल्लङ्घयितुमुत्प्लवितं तत्सर्वं स्वाभिमतनिर्गुणवादाऽनभिमतार्चिरादिगतिविषयविद्वेषमूलम् प्रकृताधिकरणपूर्वपक्षभूत श्रुतिस्मृत्यादिप्रतिपक्षभूतञ्च । तथाहि—प्रथितिपदस्य प्रसिद्धिवाचकतया प्रायोऽभिप्रायकत्वमसङ्गतम् । मनुष्याधिकारत्वाच्छास्त्रस्य हिरण्यगर्भादिदेवतास्वननुगतत्वेऽपि नतावताऽर्चिरादिगतिनियमो भज्येत । अथ मधुविद्योपासकानां वसुरुद्रादित्यमरुत्साध्यगणपदप्राप्तिपूर्विकायामपि मुक्तौ वस्वादिपदपर्वकमार्गान्तरावश्यम्भावेनार्चिरादिमार्गनियमो नाङ्गीकार्यइत्यपि नसाधु । तत्रादित्यपदप्राप्तावादित्यस्य अर्चिरादिपर्वान्तर्भूतत्वेन "आदित्याच्चन्द्रमस" मिति क्रमाद्ब्रह्मप्राप्तिसम्भवा द्वसुरुद्रादिपदप्राप्तावपि वसुरुद्रादिदेवलोकस्य वाय्वधिकरणोक्तन्यायेन वायुरूपपर्वान्तर्गतत्वेन देवलोकादादित्यमित्यादिना अर्चिरादिमार्गान्तर्भूतत्वेन मार्गान्तराभ्युपगमस्याऽनावश्यकत्वाच्च ॥

किंपत्तु धूमादिमर्चिरादिञ्चमार्गमुपदिश्य "य एतौ पन्थानौ नविदु स्ते कीटा पतङ्गा वेति" । अथैतयोः पथो र्नैकतरेण तानीमानिक्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयंस्थानमिति" । "शुक्ले कृष्णे गतीह्येते जगतश्शाश्वते मते" । इत्यादिश्रुतिस्मृतिभ्यां मार्गद्वयभ्रष्टानां कष्टजुगुप्सिततृतीयमार्गश्रावणेन ब्रह्मविदां देवयानमार्गानियमस्वीकरणं श्रुतिस्मृतिविप्रतिषिद्धमिति विदितमेव । एवमपि स्वाभिमतं शुद्धाद्वैतपक्षे अर्चिरादि-

अथ तडिदधिकरणम् ३

## तडितोऽधिवरुणः सम्बन्धात् ॥ ४-३-३ ॥

कौषीतकिनामुपनिषदि श्रूयते । 'स एतम् देवयानम् पन्थानमापद्याग्निलोकमागच्छति स वायुलोकम् स वरुणलोकम् स इन्द्रलोकम् स प्रजापतिलोकम् सब्रह्मलोकम्'इति । तत्राग्निलोकशब्दोदितस्यार्चिषः प्राथम्यमविरुद्धम्, वायोरादित्यस्य च श्रुत्यन्तरसिद्धश्रौतक्रमेणाग्रत्यपाठक्रमबाधात् संवत्सरादूर्ध्वं क्रमेण विनिवेशः । अत्र वरुणादयोऽपि श्रुताः । तेऽर्चिरादिमार्गे निवेशयितुं शक्या उत न शक्या इति संशये नियामकाभावादशक्यसंनिवेशा इति प्राप्ते ब्रूमः । वरुणादीनामपि संनिवेशः कार्यः । तत्र विद्युल्लोकस्योपरि वरुणलोकस्य सम्बन्धवशात् व्यवस्था युक्ता । विद्युत्पूर्वकवृष्टिगतनीरस्य वरुणोऽधिपतिः

देवानां वासस्थानमित्यविशेषेण देवलोकशब्दो वायुमेवाऽभिदधाति । तथा वायुशब्दो विशेषेण वायुमेवाऽभिदधाति । द्वयोः प्रकरणद्वयविहितयोरेकत्वादिति सूत्राऽर्थः ॥

इति वाय्वधिकरणम्

---

अथ तडिदधिकरणम् ३

एवं वायुपठनप्रयुक्ता मार्गभेदशङ्का निराकृता । अथ तदनन्तरश्रुतवरुणेन्द्रप्रजापतिपठनप्रयुक्ता सा निराक्रियतइति सङ्गतिः । अत्राऽपि किमेकएवमार्गः उत भिन्नइति संशयः । मार्गैक्ये वरुणादयो निवेशयितुं शक्याइति तदर्थसंशयः । यथापाठ मादित्यात्पूर्वं वरुणस्यादित्यान्तरमिन्द्रप्रजापत्योश्च निवेशो नसम्भवति । देवलोकादित्यचन्द्राणां श्रौतक्रमेण पाठक्रमस्य बाधात् । अन्यत्राऽपि निवेशो नसम्भवति । अर्चिरादिविद्युत्पर्यन्तानां सर्वेषामपि श्रौतक्रमसत्त्वात् । तदनन्तरममानवपुरुषस्यैव ब्रह्मपर्यन्तं गमयितृत्वश्रावणात् । एवं वरुणेन्द्रप्रजापतिसहितस्य मार्गस्य प्रसिद्धार्चिरादिमार्गाद्भेदावश्यम्भावेनाऽशक्योपपादनं मार्गैक्यमिति पूर्वपक्षः । नियामकाऽभावादिति । सर्वत्राऽपि साधकसत्त्वादितिभावः । विद्युत्पूर्वकेति । श्रुतिक्रमविरोधात्स्वस्थानतः प्रच्युतेषु विद्युतोऽनन्तरं वरुणस्यनिवेशः । विद्युद्वरुणयोर्वृष्टिगतनीरसम्बन्धित्वाद्विद्युतउपरि नीराधिपतेर्वरुणस्य ततउपरि भावौचित्याच्च । तदनन्तरमिन्द्रप्रजापत्यो

दिति प्राप्ते ब्रूमः । गुणोपसंहारन्यायेन संवत्सरादूर्ध्वमादित्यात् पूर्वं वायुर्निवेश्यः । बृहदारण्यक एवान्यत्र 'मासेभ्यो देवलोकम् देवलोकादादित्यम्' इति पठितेऽर्चिरादिक्रमे छान्दोग्यश्रुतित उपसंहार्यात् मासाधिककालरूपत्वेन मासेभ्य उपरि निवेशनीयात् संवत्सरादुपरि देवलोकः श्रुतः, सोऽपि वायुरेव । देवलोकशब्दो देवानां लोक इति व्युत्पत्तेरविशेषेण वायुवाचकः । वायुशब्दस्तस्यैव विशेषेण वाचक इत्यविशेषविशेषाभ्यां देवलोकवायुशब्दाभ्यां वायुरेक एवाभिहित इत्यब्दादूर्ध्वमादित्यात् पूर्वं वायुर्निवेश्यः । 'वायुर्देवानामासनभूतः' इति श्रूयते । 'योऽयं पवत एष देवानां ग्रह' इति ॥

इति वाय्वधिकरणम्



ननु—श्रुतोऽर्चिरादिरातिवाहिकगणस्तन्मध्ये निवेशनीयत्वेन विचारविषयः पर्वविशेषः कइत्याकाङ्क्षायान्तदुभयं विवेचयति—तेऽर्चिषमिति । "स आदित्यमागच्छती" त्यनेन वायुः श्रुतइत्यस्याऽन्वयः । ततस्संवत्सरादित्ययोर्मध्ये वायुर्निवेशनीयो नवा इति संशयवाक्यं द्रष्टव्यम् । वायोस्संवत्सरादित्यमध्यनिवेशनीयदेवलोकरूपत्वतदभावाभ्यां संशयः । अत्रेयं विषयविशुद्धिः । पञ्चाग्निविद्यायामर्चिरादिमार्गमामनन्तश्च छन्दोगाः मासादित्ययोर्मध्ये संवत्सरं पठन्ति ॥

वाजसनेयिनस्तु— मासेभ्यो देवलोकं देवलोकादादित्यमिति तयोर्मध्ये देवलोकं पठन्ति । मार्गैक्यपक्षे तावुभावुभयत्रोपसंहार्यौ । तयोश्च संवत्सरो मासादनन्तरमेव निवेशनीयः । अहश्शुक्लपक्षोत्तरायणमासाना मुत्तरोत्तरमधिकपरिमाणानां कालाना मुपर्युपरिनिवेशनदर्शनात् । परिशेषाद्देवलोकस्तदनन्तरं निवेशनीयः । ततश्च यदि देवलोकएव वायुस्स्यात्तदा संवत्सरादित्ययोर्मध्ये वायोर्निवेशो लभ्यते । तल्लाभेसत्येकएव मार्गइति पूर्वोक्तमुपपद्यते । यदि देवलोकादन्यो वायुस्स्यात्तदा तस्य ननिवेशो लभ्यते । लाभे शाखाविशेषेषु तदाम्नानप्रामाण्योपपादनार्थं मार्गभेदोऽभ्युपगन्तव्यइति पूर्वोक्तं नोपपद्यतइति । तत्र पूर्वपक्षमाह— ननिवेश्योऽश्रवणादिति । सिद्धान्तस्तु — वायुमब्दादिति । अब्दात्संवत्सरादूर्ध्वं आदित्यात्पूर्वं वायुमेकमेव निवेशयेत् । अविशेषविशेषाभ्यां देवलोकवायुशब्दाभ्यां वायोरेकस्यैवनिर्दिष्टत्वात् ।

व्यवहरन्ति । तद्वदर्चिरादयोऽपीति प्राप्तेऽभिधीयते । अर्चिरादयो मार्गाभिमानिनो विदुषां गमयितारो देवताविशेषा एव । 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति विद्युत्पुरुषस्य गमयितृत्वलिङ्गेनार्चिरादीनामविशेषनिर्दिष्टानामपि गमयितृत्वमेव सम्बन्ध इति निश्चय उपपन्नः ।। विद्युत्पुरुषस्य ब्रह्मगमयितृत्वे वरुणादिभिः किम् फलमित्यत आह—

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४–३–५ ॥

वैद्युतपुरुषात् परस्तात् स एव ब्रह्म गमयति 'तत् पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इतिश्रुतेः । वरुणादीनां तदनुग्राहकत्वेन गमयितृत्वमिति न विरोधः ॥

इति आतिवाहिकाऽधिकरणम

---

गत्वा ततो घोषःप्राप्तव्यइति तथाऽर्चिरादयोऽपि मार्गचिह्नभूताएव नतु परमेश्वरेणनियुक्ता गमयितार इति पूर्वपक्षः ।

सिद्धान्तस्तु—"स एनान् ब्रह्मगमयती"ति वैद्युतपुरुषस्य गमयितृत्वदर्शनेन पूर्वेषामर्चिरादीनामपि गमयितृपुरुषत्वाऽवगमात् लोकशब्दस्याऽप्यर्चिरादिशब्दवत्तादभिमानिदेवतायां वर्तितुमर्हत्वेन विरोधाऽभावाच्च अर्चिरादय आतिवाहिकपुरुषाएवेति ।

सूत्रार्थस्तु—अर्चिरादय आतिवाहिकाः उपासकानामतिवाहे—परमेश्वरेणनियुक्ताः पुरुषा एव । "स एनान् ब्रह्मगमयती"ति गमयितृत्वलिङ्गादिति ।

पूर्वपक्षशङ्कोत्तरत्वेनोत्तरसूत्रमवतारयति — विद्युत्पुरुषस्येति ।

विद्युतिभवो वैद्युतः । अमानवः पुरुषः । विद्युल्लोकप्रभृतिश्रुतिबलादमानवपुरुषस्य गमयितृत्वेऽपि । वरुणादीनां तदनुग्राहकत्वेन गमयितृकोटिनिवेशस्सम्भवतीति नतद्वैफल्यमितिभावः ।

ततः=विद्युतउपरि वैद्युतेन पुरुषेण विदुषोगमनम् । तच्छ्रुतेः = "स एनान् ब्रह्मगमयती"ति तस्यैवश्रुतेः वरुणादीनां तदनुग्राहकत्वमिति निश्चीयत इतिसूत्राऽर्थः ॥

इति आतिवाहिकाऽधिकरणम्

---

प्रसिद्ध इति विद्युद्वरुणयोः सम्बन्धः। तदनन्तरमिन्द्रप्रजापतिलोकौ, परिशेषात्, इत्यविरोधः॥

इति तटिदधिकरणम्

---

अथ आतिवाहिकाऽधिकरणम् ४

## आतिवाहिकास्तल्लिङ्गात् ॥ ४–३–४ ॥

किमर्चिरादयो मार्गचिह्नभूताः स्थानभेदा, उत विदुषां गमयितारो देवताविशेषा इति सन्देहः॥ किम् तावत् प्राप्तम्? स्थानभेदाः, तल्लाञ्छनसत्त्वात्। लोके हि ग्रामान्निर्गत्य नदीं गत्वा ततो घोषः प्राप्तव्य इति

---

निवेशः। अत्राऽमानवपुरुषस्य ब्रह्मप्रापकत्वं वरुणादिव्यवधानेन तत्साहित्येनवोपपद्यत इति नविरोधः। एवं वरुणादिनिवेशाऽसम्भवप्रयुक्तमार्गभेदशङ्कानिरासेमति मार्गैक्यनियमस्सम्भवतीति सिद्धान्तः॥

तटितो विद्युतो मेघोदरवर्तित्वेन विद्युद्वरुणयो र्वेदे लोकेच सम्बन्धावगमात्पाठकमा दर्थक्रमस्यबलीयस्त्वेन वरुणस्य विद्युतउपरिनिवेशः कार्यइति सूत्राऽर्थः॥

इति तटिदधिकरणम्

---

अथ आतिवाहिकाऽधिकरणम् ४

अर्चिरादीनांक्रमो निरूपितः। तत्स्वरूपमिहचिन्त्यत इति सङ्गतिः। अर्चिरादिशब्दानां लोकसंस्थानविशेपदेवताविशेषत्वाऽनवधारणात्संशयः। तेर्चिपमित्यादिस्थाने "अग्निलोकमागच्छ" तीत्यादिकौषीतकिशाखावाक्यदर्शना दर्चिरादिशब्दास्सर्वे लोकसंस्थानविशेपपराः। तथाच-मर्गोपदेशवाक्यसारूप्या न्मार्गचिह्नप्रदर्शकान्यर्चिरादिवाक्यानीत्यर्चिरादयो मार्गचिह्नभूताएव नतु मुच्यमानानामतिवहने परमेश्वरेण नियुक्ता देवताविशेपाः। नचाऽमानवपुरुषस्यातिवाहिकत्वं देवता विशेषत्वञ्च सम्प्रतिपन्नमित्यन्यैरपि तथाभाव्यमित्यस्तिनियमः। यथा लोके ग्रामान्निर्गत्य नदीं-

गच्छन्तीति । तथाऽभिधीयते । "ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥" इति श्रुत्या । अतो न विरोधः ॥

## स्मृतेश्च ॥ ४-३-१० ॥

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परंपदम् ॥" इति स्मृतेरप्येवमवगम्यते । अतो हिरण्यगर्भपद मर्चिरादिगणो नयति प्रथमम् । ततः प्रलये परं ब्रह्म प्राप्यते तेन सहेति ॥

## परम् जैमिनिर्मुख्यत्वात् ॥ ४-३-११ ॥

हिरण्यगर्भात् परमुत्कृष्टं नारायणमेव अर्चिरादिर्गमयति । परब्रह्मण एवोपादानावस्थान्तरत्वेन तत्र ब्रह्मव्यपदेशस्य मुख्यत्वादिति जैमिनिः ॥ तत्रोपपत्तिमाह—

## दर्शनाच्च ॥ ४-३-१२ ॥

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम् पदम्' इति तत्पदस्य प्राप्यत्वं दृश्यते । अतश्च तमेव गमयतीति ॥

---

परान्तरकाल इति । परंहि—हिरण्यगर्भस्य तन्मानेन शतवर्षपरिमितमायु स्तदवसानकाल इत्यर्थः । परामृतादितिल्यब्लोपे पञ्चमी । परम्ब्रह्मप्राप्येत्यर्थः ॥

प्रतिसञ्चरः = प्रळयः । अस्मिन्पक्षे फलितार्थमाह—अतइति ॥

कार्यंबादरिरिति प्रकृतहिरण्यगर्भापेक्षमुत्कृष्टत्वं परशब्दार्थइतिव्याचष्टे—हिरण्यगर्भादिति= हिरण्यगर्भापेक्षया प्रत्यासत्त्यतिशयसत्त्वेनमुख्यकल्पत्वादित्यर्थः । तत्रोपपत्तिमिति । पदस्य शिव- परत्वे परममुख्यत्वसम्भवेऽपि तदनादरेण नारायणपरत्वाऽभ्युपगम उपपत्तिमाहेत्यर्थः ॥

नचाऽत्र विष्णुशब्दश्शिवपरइतिशङ्कनीयम् । "तद्विष्णोः परमम्पदम् । सदा पश्यन्ति सूरयः" इति प्रसिद्धवैष्णवमन्त्रैकदेशत्वेन तदर्थप्रत्यभिज्ञाविरोधादितिभावः ॥

अथ कार्याऽधिकरणम् ५

## कार्यम् बादरिरस्य गत्युपपत्तेः ॥ ४–३–६ ॥

किममानवः पुरुषः उपासकान् साक्षादेव ब्रह्म गमयति, उतान्यमिति संशये पूर्वपक्षः । कार्यं हिरण्यगर्भमेव गमयति, अस्य हि गतिरुपपद्यते । न व्यापिनः परब्रह्मणः ॥ पुनरुपपत्तिमाह—

## विशेषितत्वाच्च ॥ ४-३-७ ॥

'प्रजापतेः सभाम् वेश्म प्रपद्य' इति विशेषितत्वाच्च हिरण्यगर्भ-पदमेव गमयति ॥

## सामीप्यात्तु तद्व्यपदेशः ॥ ४–३–८ ॥

'ब्रह्म गमयति' इति ब्रह्मव्यपदेशस्तु हिरण्यगर्भस्य तत्सामीप्यात् 'हिरण्यगर्भम् पश्यत जायमानम्' इति प्रथमकार्यत्वश्रवणादस्य सामीप्यम् ॥

## कार्यात्यये तदध्यक्षेण सहाऽतःपरमभिधानात् ॥ ४–३–९ ॥

प्रथमम् हिरण्यगर्भपदप्राप्तावपि तदनावृत्तिश्रुतिर्न विरुध्यते। हिरण्य-गर्भलोकात्यये तदध्यक्षेण सह अतःपरं कार्यब्रह्मलोकात् परं परमपदम्

---

अथ कार्याऽधिकरणम् ५

गमयितृनिरूपणानन्तरं गन्तव्यंनिरूप्यतइति सङ्गतिः। उताऽन्यमिति । हिरण्यगर्भं नारयणंवेत्यर्थः । गत्युपपत्त्यादिकं मुख्यत्वादिकञ्च संशयबीजम् । व्यापिनइति ॥

प्रजापतेस्सभामिति । "आकाशो हवै नाम नामरूपयोर्निर्वहिते"ति ब्रह्मविद्यां प्रस्तुत्याम्नायते । तस्मादिह ब्रह्मविदएव । ब्रह्मप्राप्त्यभिसन्धिः। प्रजापतेरितिच हिरण्यगर्भएवोच्यते । "प्रजापतिर्वै हिरण्यगर्भ"इतिश्रुतेरितिभावः ॥

हिरण्यगर्भस्य प्रथमापत्यत्वेन परब्रह्मसन्निकृष्टत्वा त्तत्र तद्वाचिशब्दऔपचारिकः। "तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायत"इतिमन्त्र इतिभावः ॥

विरूपाक्षं श्रूयते। साक्षाद्ब्रह्मोपासकस्य 'परंज्योतिरुपसम्पद्य स्वेन रूपेणाभि-निष्पद्यते' 'उमासहायम् परमेश्वरम् प्रभुम् त्रिलोचनम् नीलकण्ठम् प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिम् समस्तसाक्षिम् तमसः परस्तात॥' इत्यादिषु साक्षात् ब्रह्मप्राप्त्यवगमात। पूर्वोक्तपक्षद्वयेऽपि दोषः श्रुतिविरोधाद्भवति। तत्क्रतुः ब्रह्मोपासको ब्रह्मैव गच्छति, न मध्ये विलम्बते प्रयोजनाभावात। सकलकार्यसमष्टिरूपाद्धिरण्यगर्भात् परोनारायणस्तदुपा-दानत्वात, ततोऽपि परं शिवाख्यं निमित्तं विरूपाक्षं परं ब्रह्म सर्वज्ञं सर्व-शक्तिकं नित्यतृप्तं स्वतन्त्रं स्वप्रकाशमिति। तथा शिवसङ्कल्पोपनिषदि 'परात् परतरो ब्रह्मा तत्परात् परतो हरिः। तत्परात् परतोधीशः' इति। रेफश्छान्दसः। अन्यत्र च- 'नारायणपरम् ब्रह्म' इति नारायणात् परत्वेन ब्रह्माभिधाय तत् कीदृशमित्याकाङ्क्षायाम् 'ऋतम् सत्यम्' इति मन्त्रेण सर्वाज्ञतया मनो

---

अङ्गं प्रतीकोऽवयव इति प्रतीकशब्दस्याऽवयववाचित्वस्मरणात्। तस्य यदुपासनासामान्यं तत्सर्वं प्रतीकोपासनमुच्यतइतिभावः। अप्रतीकालम्बनास्त्विति। अप्रतीकशब्देन प्रतीकरूप-प्रपञ्चविलक्षणं विश्वाधिकं ब्रह्माभिधीयत इतिभावः। नयतीत्यस्य प्राप्यकर्माकाङ्क्षायामप्रतीक-शब्दोक्तं तदेवविश्वाधिकं ब्रह्मोपतिष्ठतइतिव्याचष्टे- साक्षाद्ब्रह्मैवेति। श्रुतिविरोधादिति। उदाहृतया कैवल्यश्रुत्या तत्रतत्रोदाहृताभिः श्वेताश्वतरादिश्रुतिभिश्च विरोधादित्यर्थः॥

ननु विलम्बेन परब्रह्मप्राप्त्या तद्विरोधः परिहृतस्स्यादित्याशङ्कोत्तरत्वेन सूत्रशेषं व्याचष्टे— तत्क्रतुरिति। ययाक्रतुवाक्याऽनन्तरं हि सक्रतुंकुर्वीतेत्यारभ्य "एतमितःप्रेत्याऽभि-सम्भविताऽस्मी" त्यन्तेन मनोमयत्वादिगुणकः परमेश्वरः। "तमहम् प्राप्नुवानी" त्येवं रूपक्रतोस्सङ्कल्पस्य विषय उपन्यस्तः। तदनुसारेण तत्क्रतुवाक्यस्यैवमर्थो लभ्यते। इह यद्गुणविशिष्टब्रह्मप्राप्तिसङ्कल्पवानुपासको भवति इतःप्रेत्य तद्गुणविशिष्टब्रह्मप्राप्तिमान्भवतीति। अतस्तत्क्रतुन्यायेनोपास्यब्रह्मनादवस्यचम् प्राप्तव्यम्। तत्प्राप्तावेव तदनुभवरूपोभोगइति न मध्ये-फलप्राप्तिविलम्बः कल्पनीयः। कल्पकाऽभावादितिभावः॥

व्यापिनः परब्रह्मणःप्राप्तौ नास्ति गत्यापेक्षा। इति शङ्काव्यावृत्त्यर्थश्चकारः। देश-विशेषावच्छिन्नब्रह्मप्राप्तौसत्यामेव ब्रह्मानन्दानुभवप्रयोजकस्साकल्येन स्वरूपाविर्भावो भवतीति श्रुतिबलादवसीयत इतिभावः॥

## न च कार्ये प्रत्यभिसन्धिः ॥ ४–३–१३ ॥

'प्रजापतेः सभाम् वेश्म प्रपद्य, इति यदुक्तम्, न तत्र कार्ये हिरण्यगर्भे प्रत्यभिसन्धिः, प्रजापतिशब्दस्य प्रजापालनत्वेन नारायणवाचकत्वसम्भवात् । यदुक्तम् 'ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इति तत्रापि ब्रह्मशब्दो नारायणपरः । तस्य लोके पदे स्थित्वा योगिनः परान्तकाले पश्चिमदेहसमाप्तौ परामृतं विश्वाधिकं ब्रह्म प्राप्य मुक्ता भवन्तीति न विरोधः । 'एतानि ह वा अमृतस्य नामधेयानि' इत्यादौ शिवस्य परब्रह्मणोऽमृतशब्दाभिधेयत्वमनादिमुक्तत्वञ्चावगतम् । अतो विष्णुपदे प्रारब्धकार्यदेहावसाने प्रारब्धभोगपर्यन्तं स्थित्वा योगिनः परामृतं विश्वाधिकं ब्रह्म प्राप्य मुक्ता भवन्तीति । अथ सिद्धान्त उच्यते–

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ ४–३–१४ ॥

प्रतीकालम्बना हि ते, ये चेतनमचेतनं वा ब्रह्मदृष्ट्या केवलमुपासते। अप्रतीकालम्बनास्तु ते, ये विश्वाधिकं ब्रह्म साक्षादुपासते । साक्षाद्ब्रह्मोपासकान् पुरुषः साक्षाद्ब्रह्मैव गमयति, यद्विश्वाधिकं कृष्णपिङ्गलं

---

प्रजापतेस्सभांप्रपद्य इति प्रत्यभिसन्धिः प्रत्यभिसन्धिशब्देन विवक्षितः । प्रजापालकत्वेनेति । पतिशब्दोहि पातेर्धातोर्डतिप्रत्ययेन निष्पन्नः । पालकेस्वरसः । अतस्तद्विष्णोः परमंपदमिति मन्त्रदर्शनात्प्रजापतिशब्दस्य पालके नारायणे योगस्समाश्रयणीय इतिभावः । परान्तकाल इत्यत्र परशब्देन हिरण्यगर्भस्यायुर्नोच्यते । किन्तु विष्णुपदेस्थितस्य विदुषश्चरमदेह इति व्याचष्टे– पश्चिमदेहेति । प्रारब्धकार्येति । विरजानद्युत्तरणपर्यन्तं प्रारब्धशेषानुवृत्तः प्राक्समर्थितत्वा द्विष्णुपदेस्थितस्याऽपि प्रारब्धाऽनुवृत्तिरस्तीतिभावः ॥

अन्यत्राऽन्यदृष्टिरेव प्रतीकोपासनेति प्रसिद्धाऽर्थग्रहणवारणाय व्याचष्टे— प्रतीकालम्बना इति । सकलचिदचित्प्रपञ्चविशिष्टरूपस्य ब्रह्मणः एकदेशश्चिद्रूपोऽचिद्रूपश्च प्रतीकः ।

नकश्चन विरोधः॥ अत्र केचित् 'परान्तकाले परामृतात् परिमुच्यन्ति सर्वे' इति श्रुतेः परब्रह्मणः शिवस्य परमविभूतित्वेन ये विष्णुमुपासते, ते तदवस्थत्वात् ब्रह्मशब्दवाच्यस्य तस्य लोकं प्राप्य प्रादुर्भूततद्विभूतयः परान्तकाले चरमदेहावसाने परामृतं शिवं प्राप्य मुक्ता भवन्तीति

नसंसरति। परमेश्वरवन्नियन्तृमात्ररूपत्वात्। अतो नकश्चनविरोधइति। शिवस्यैव मुक्तप्राप्यत्व इतिशेषः। तत्रब्रह्मलोकेत्वित्यादिकं वैष्णवोपासनाविशेषफलप्रतिपादकत्वेन योजयति—अत्र केचिदिति। हैरण्यगर्भोपासना विशेषफलप्रतिपादकत्वेनाऽन्ये योजयन्तीति मतान्तरसूचनार्थं केचिद्ग्रहणम्। वचनादत्र नविरोधइति। अवश्यंहि तत्र ब्रह्मलोकशब्दश्शिवाऽतिरिक्तलोकपरो वाच्यः। तत्रस्थितस्य कालान्तरे मुक्त्यभिधानात्। अतस्तेषां मतविरुद्धत्वाद्वैष्णवोपासना-फलपरत्वे प्रत्यासत्त्यतिशयलाभाच्च ग्राह्यमित्यर्थः॥

* अत्र शुद्धाद्वैतभाष्यकारैस्तावत् —

"कार्यम् बादरिरस्यगत्युपपत्तेः। कार्यमेवसगुणम्। अपरम्ब्रह्मैनान्गमयत्यमानवः पुरुष" इति बादरिराचार्यो मन्यते। कुतः? अस्य गत्युपपत्तेः। अस्यहि कार्यब्रह्मणो गन्तव्यत्व मुपपद्यते। प्रदेशवत्त्वात्। नतु परस्मिन्ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वोपपद्यते। सर्व-गतत्वात्प्रत्यगात्मत्वाच्च। गन्तृणामितीदमेव सिद्धान्तीकृत्य कं पुनः पूर्वपक्षमाशङ्क्याऽयं सिद्धान्तः "कार्यम् बादरि" रित्युपपादित स्सइदानीं सूत्रैरेव "परम्जैमिनि" रित्याद्यैरुच्यतइति उत्तरसूत्राणि पूर्वपक्षीकृतानि। अत्र पूर्वोत्तरपक्षयोः व्यत्यासीकरणा द्वैयासिकसमयएव व्यत्यासित इति विदितम्। इह यद्यपि सिद्धान्तोपक्रमाण्यप्यधिकरणानि विद्यन्ते तथाऽपि सम्भवति पूर्व-पक्षोपक्रमपरे विवरणे सिद्धान्तोपक्रमपरत्वमन्याय्यमितिविदितम्॥

ननु परब्रह्मविषया गतिश्रुतयइति पक्षाऽन्तरम्। तावेतौपक्षावाचार्येण सूत्रितौ। गत्युप-पत्त्यादिभिरेकः। मुख्यत्वादिभिरपरः। गत्युपपत्त्यादयः प्रभवन्ति मुख्यत्वादीनाभासयितुम्। नतु मुख्यत्वादयो गत्युपपत्त्यादीनित्याद्यएव सिद्धान्तः। द्वितीयः पूर्वपक्षः। नह्यसत्यपिसम्भवं मुख्यस्यैवार्थस्यग्रहणमिति कश्चिदाज्ञापयिता विद्यते। तस्मादाद्यएव सिद्धान्त इतिचेन्न। आद्यपक्षे-गत्युपपत्त्यादिसम्भवस्य वा द्वितीयपक्षे तदसम्भवस्य वा बादरिमतत्वेन कण्ठोक्त्या तत्राचार्यसम्मत्यनवगमात्। सगुणस्यैव श्रुतिसूत्रसिद्धतया तत्र गत्युपपत्त्युभयवादिसम्मतत्वेन प्रकृते सत्यसम्भवे मुख्यस्याऽग्रहणमिति न्यायाप्रवृत्तेश्च। किञ्च परविद्याप्रकरणे गतेराम्नानेन तदन्यथाऽ-नुपपत्त्या सगुणस्यैव परब्रह्मत्वाऽवसायाच्च॥

वाग्विपर्यासरहितं स्वशक्तिमरीचिभिः सकलजगत्पूरकं स्वाविभक्तया पर-प्रकृतिरूपया परमानन्दचिदेकरसपरमाकाशलक्षणया स्वावस्थाभेदपरमचेतन-नारायणारब्धहिरण्यगर्भादिसकलकार्यप्रपञ्चया पराशक्त्योमया शबलितरूपं निर्विकारं त्रिलोचनं परंब्रह्म सर्वोत्तरमिति निरूपितम् । विश्वाधिको रुद्र' इति च विश्वस्मादधिकत्वेन चावगतम् । तस्माद्वैदिकानामतः परं कल्पयितु मन्याय्यमेव ॥

## विशेषञ्च दर्शयति ॥ ४–३–१५ ॥

ब्रह्मणो विश्वाधिकस्य तदवस्थाभेदस्योपादानस्य विष्णोस्तत्कार्य-भूतस्य हिरण्यगर्भस्य च विशेषं दर्शयति श्रुतिरेव ' परात् परतरो ब्रह्मा ' ' हिरण्यगर्भम् पश्यत जायमानम् ' पुरुषो वै रुद्रः ' इत्यादिका । ततश्च ब्रह्मविष्ण्वोः परं परब्रह्मणः शिवस्य पदम् परमाकाशरूपं परमानन्दमयममानवः पुरुषो गमयतीत्येव युक्तम् । यच्छङ्कितम् ' सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम् पदम् ' इति तत्र विष्णुशब्दः परब्रह्मवाचकः । षड्विधस्याध्वनः पारं तद्गतं पदं हि विश्वाधिकस्य शिवस्यैवोपपन्नम् । यद्वा विष्णोः प्रपञ्चाव-स्थितस्य परमुत्कृष्टं पदं स्वरूपं परमाकाशरूपं परमानन्दलक्षणं शिवस्य परब्रह्मणः पदमेव । यत्रासौ निहितात्मा प्रपञ्चाकारोऽपि न संसरति । अतो

---

ननु ब्रह्मोपासको ब्रह्मैवप्राप्नोतीत्येतदस्तु तत्प्राप्यम् हिरण्यगर्भो नारायणो वा किं नस्यादित्याशङ्क्याह—सकलकार्यसमिष्टिरूपादिति । स्वशक्तिमरीचिभिरिति । स्वशक्तेर्मरीचयः तत्कार्याणि जगद्भासकावैपयिकवृत्त्यवच्छिन्ना स्तदंशा वा । वैदिकानामिति । पाञ्चरात्रादिभि स्तदुक्ततत्त्वान्तरं गृहीतेऽपि वेदप्रमाणतत्परैरेतद्विरुद्धतत्त्वाऽन्तरं नग्राह्यमित्यर्थः ॥

वैष्णवमन्त्रैकदेशत्वेन तदर्थप्रत्यभिज्ञानमनुसरन्नाह—यद्वेति । परमाकाशरूपा पराशक्तिरेव हि शिवस्य दिव्यस्थानरूपाऽवतिष्ठते । अतस्तदवस्थाविशेषरूपस्य विष्णोस्स्वरूपं भवितुमर्हति । दिव्यस्थानमितिभावः । यत्राऽसौनिहितात्मा यत्पदंप्राप्ता विद्वान् प्रपञ्चाकारोऽपि प्रपञ्चशरीरकोऽपि

विष्णूपासकानामर्चिरादिना विष्णुपदप्राप्तिपूर्वकं विलम्बेन शिवपदप्राप्तिरिति वचनादत्र न विरोध इति ॥

इति कार्याऽधिकरणम्

---

इति श्रीकण्ठशिवाचार्यविरचिते ब्रह्ममीमांसाभाष्ये
चतुर्थाध्यायस्य तृतीयः पादः

---

एतेन प्रतिषेधाधिकरणे "नच ब्रह्मविदस्सर्वगतब्रह्मात्मभूतस्य प्रक्षीणकामकर्मण उत्क्रान्तिगतिर्वोपपद्यते-निमित्ताऽभावादिति यत्परैरुक्तं तदपि निरस्तम् "अस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेनरूपेणाऽभिनिष्पद्यत" इति श्रुतिबलेन देशविशेषाऽवच्छिन्नब्रह्मप्राप्तौ-सत्यामेव ब्रह्मानन्दानुभवप्रयोजकस्य साकल्येन स्वरूपाविर्भावस्य सिद्धेरवसायादुत्क्रान्तिगत्यादीनां युक्तिबलादपोदितुमशक्यत्वाच्च ॥

एवञ्च हन्त अशेषश्रुतिसारविशेषरत्नाऽपहर्ताचोरो बादरिरिहलब्धः । नकेवलं कार्यं बादरिरित्यनेन, किन्तु अभावं बादरिरित्यादिनाऽपि निर्विशेषवाद्ययमेवेति तदुपज्ञमेव निर्विशेषाऽद्वैतमितिच सिद्धम् ॥

अथाऽपि तदीयमतम् "नाविद्यातोऽप्यवस्तुनाबन्धाऽयोगात् । वस्तुत्वे सिद्धान्तहानि" रित्यादिना साङ्ख्यशास्त्रकर्त्रा कपिलाचार्येण सविस्तरं निराकृतम् । तदनन्तरं भगवता बादरायणेन बादरिमताऽन्नकस्य साङ्ख्याचार्यस्य मतम् "ईक्षतेर्नाशब्द" मित्यादिनाऽसङ्ख्येन सूत्रजातेन निर्धूतम् । एवञ्च देवदत्तस्य हन्तरि हतेमति देवदत्तस्य नपुनरुज्जीवनमिति देवदत्तहन्तृहननन्यायेन बादरेर्मतमपुनरुत्थानमाहतमित्यलम्बहुना ॥

इति कार्याऽधिकरणम्

---

इति श्री नागलिङ्गशिवाख्यकृतिमुख्यायां लघुशिवार्कमणिदीपिकाख्यायां
श्री शिवचिन्तामणिप्रभाख्यायां श्री नीलकण्ठभगवत्पादीय
ब्रह्मसूत्रभाष्यव्याख्यायां अथ चतुर्थाध्यायस्य
तृतीयः पादः

---

स्वरूपं पूर्वं सदेव मलावरणापगमादाविर्भवति, 'स्वेन रूपेण' इति शब्दात् तथाऽवगम्यते, अन्यथा ह्यागन्तुकस्याऽपिरूपस्य स्वासाधारणत्वात् 'स्वेन' इति विशेषणमनर्थकंस्यात्। तत्र सर्वानुग्राहकस्य शिवस्य परब्रह्मणः प्रसादेन स्वावरणे मले विगलिते तत्सदृशगुणमात्मस्वरूपं प्रादुर्भवति, न कर्मफलव

भासमानस्य तिरोधानाऽयोगात्। एतेनाणवमलाख्येनाऽविद्यावरणेन तिरोहितं जीवस्वरूपमिति निरस्तम्। तिरोहितत्वे संसारदशायां जीवस्वरूपस्याऽनवभासप्रसङ्गात्। आणवरूपे तस्मिन् किञ्चिदवच्छेदेन तिरोधानं किञ्चिदवच्छेदेन प्रकाश इति कल्पयितुमशक्यत्वात्। एतेनाऽपहत-पाप्मत्वादिगुणाष्टकं संसारदशायां तिरोहितम् मोक्षदशायामाविर्भविष्यतीत्यपि निरस्तम्। तिरोधानाऽसम्भवा द्योगदशायामपि तदनभिव्यक्तयनङ्गीकाराच्च। तस्मात्कर्मफलवद्विद्याफलमपि लोकविशेषप्राप्त्यनन्तरमुत्पद्यमानं किञ्चिदङ्गीकरणीयमित्युपपत्तिसाहित्येनाऽभिनिष्पत्तिश्रवणस्य प्रबलत्वा त्तदनुसारेण स्वेनेनिविशेषण मर्थसिद्धस्वकीयत्वाऽनुवादकमित्युपपादनीयमिति भावः। मुक्तस्य स्वरूपं चिदानन्दघनं सर्वज्ञत्वादिविशिष्टमाविर्भवतीति। अत्राऽयमाशयः ॥

वस्तुतो निरतिशयानन्दघनएव जीवः। स्वभावतः तस्मिन्निरतिशये स्वरूपानन्दे प्रतियोगिविशेषापेक्षतारतम्यापन्नोत्कर्षरूपा बहवस्सन्ति विशेषाः। ते सर्वे मलमायाकर्मदेहेन्द्रिया-वरणैस्तिरोहिताः। तेषामावरणानि तेष्वस्तित्वप्रकाशमानत्वव्यवहारं निरुन्धाना मलमायादीनां शक्तिविशेषाः। तत्रानन्दत्वसामान्यं कदापि नतिरोहितमिति संसारदशायामपि सर्वदैवात्मनि प्रेमाऽनुवर्तते। सुषुप्तिप्रलययोर्देहेन्द्रियव्यापारोपरमेण तदावरणीयः कियान्विशेषः प्रकाशते। कृतश्रवणमननादिकस्य निदिध्यासनंकुर्वत उपर्युपरि योगभूमिकासु मलमायादिगतानामसङ्ख्याना मावरणशक्तीनां मध्ये काचित्काचित्क्षीयतइति तत्तदावरणीया विशेषाः क्रमेण प्रकाशन्ते। मुक्तौ सर्वासामावरणशक्तीनामपगमा न्निरतिशयस्वरूपानन्दः प्रकाशते। यदाखल्वरोचकव्याधि-परिपूर्णस्य चिकित्साविशेषैः किञ्चित्किञ्चिद्व्याधिशक्त्यपचये जामयाने भोज्यवस्तुरसे तत्तदावर-णीया विशेषाः क्रमेण प्रकाशन्ते। सर्वात्मना व्याध्यपगमेच रसोऽपि सर्वात्मना प्रकाशते। एवमेव योगसिद्ध्यारम्भदशाप्रभृति मुक्तिदशापर्यन्तेषु दशाविशेषेषु सार्वज्ञ्याऽपहतपाप्मत्वाद्याविर्भा वेऽपि विशेषोऽवगन्तव्यः। इयांस्तु विशेषः। स्वरूपानन्दस्याविर्भावः प्रकाशः घनतिरोहितस्येव चन्द्रस्य घनापगमे सार्वज्ञ्याऽपहतपाप्मत्वादीनान्तु शक्तिविशेषरूपाणां स्वस्वकार्यप्रयोजकत्व माविर्भावः। मणिमन्त्रादिप्रतिबद्धानां वह्निगतदाहस्फोटादिशक्तीनामिव प्रतिबन्धकमण्याद्यपाये। एवं प्राक्सिद्धयोरपि स्वरूपानन्दसार्वज्ञ्यादिगुणबृन्दयोराविर्भावस्य समर्थयितुं शक्यत्वेनाऽपि

श्री शिवाभ्यां नमः

# श्री नीलकण्ठभगवत्पादाराध्यविरचिते शारीरकब्रह्ममीमांसा सूत्रभाष्ये अथ चतुर्थाध्यायस्य

## चतुर्थः पादः

अथ सम्पद्याविर्भावाऽधिकरणम् १

### सम्पद्याविर्भावः स्वेन शब्दात् ॥ ४–४–१ ॥

पूर्वत्रार्चिरादिना मार्गेण विद्यावतां हिरण्यगर्भनारायणपदातीतं परब्रह्मणः शिवस्य परमसुखरूपतया स्वर्गशब्दवाच्यं पदं प्राप्यमिति निरूपितम्। इह तत्प्राप्तानां स्वरूपाविर्भावादिप्रकारो निरूप्यते। 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेनरूपेणाभिनिष्पद्यत' इति परंज्योतिरूपं महाप्रकाशं परब्रह्मप्राप्तस्य स्वरूपाविर्भाव उच्यते, तत्स्वरूपं तस्य तात्कालिक मुत पूर्वसिद्धंवेति संशयः। न पूर्वसिद्धम्, किन्त्वभिनिष्पत्तिश्रवणात् स्वर्गवदागन्तुकमेव। पूर्वसिद्धत्वे च कुतोऽस्यसंसारः। अतस्तदुपासनाजन्यं मुक्तिफलरूपमागन्तुकम् इति प्राप्तेऽभिधीयते—ब्रह्मप्राप्तजीवस्य मलतिरोहितं ब्रह्मसदृशगुणं

---

अथ सम्पद्याविर्भावाऽधिकरणम् १

सङ्गतिन्दर्शयति— पूर्वत्रेति। पूर्वपादे दिव्यस्थानस्थितपरब्रह्मप्राप्तिपर्यन्तं निरूपितम्। इह तत्प्राप्तस्य स्वरूपाविर्भावसदेहत्वादिप्रकारो निरूप्यत इति सङ्गतिः। अभिनिष्पत्तिश्रावणं स्वेनेतिविशेषणञ्च संशयबीजम्। अभिनिष्पत्तिश्रावणस्य स्वेनेतिविशेषणापेक्षया प्राबल्यमुपपत्तिसाहित्येन दर्शयति—पूर्वसिद्धत्वेचेति मोक्षदशायां यत्फलरूपतया प्राप्तव्यं रूपं तत्पूर्वमप्यस्तिचेत्पूर्वमप्ययं, मुक्तएव स्यात्। नच पूर्वसिद्धमप्यस्य पुरुषार्थात्मकं रूपं संसारदशायां तिरोहितं परंज्योतिरुपसम्पन्नस्याविर्भवतीति वाच्यम्। स्वप्रकाशचैतन्यरूपस्याऽहमिति सर्वदा

प्रकृत्यैव 'भूयोऽनुव्याख्यास्यामि' इत्युक्तत्वात्। अतः प्रादुर्भूतस्वाभाविकाऽपहतपाप्मत्वादिको मुक्त आत्मा ब्रह्मसदृशगुणस्वरूप इति सिद्धम् ॥

इति सम्पद्याविर्भाऽधिकरणम्

---

अथ अविभागाऽधिकरणम् २

## अविभागेन दृष्टत्वात् ॥ ४-४-४ ॥

पूर्वाधिकरणे ब्रह्मगुणस्वरूपसदृशं मुक्तस्य गुणस्वरूपमिति प्रतिज्ञातम्। तत्सादृश्यं मुक्तस्योपपद्यते न वेति विचारः। किं प्राप्तम्? 'एको रुद्रो न द्वितीयाय तस्थौ' इत्यादिषु ब्रह्मणः सदृशस्य द्वितीयस्य निषेधात् कस्यचिदपि बद्धस्य मुक्तस्य वा तत्सादृश्यमनुपपन्नमिति॥ एवम् प्राप्ते

---

भूयोऽनुव्याख्यास्यामीति प्रकृतआत्मा स्वभावतएवाऽपहतपाप्मत्वादिगुणाष्टकयुक्त इत्यवगम्यते। कुतः? प्रकरणात्।"य आत्माऽपहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सोऽपिपासः सत्यसङ्कल्प" इति प्रजापतिवाक्येन प्रकृतत्वात्। इदं हि प्रकरणं प्रत्यगात्मविषयमेव नतु परमात्मविषयम्। "उत्तराच्चेदाविर्भूतस्वरूपस्त्वि" ति प्रतिपादितत्वादित्यर्थः ॥

इति सम्पद्याविर्भावाऽधिकरणम्

---

अथ अविभागाऽधिकरणम् २

सङ्गतिपूर्वक संशयं दर्शयति—पूर्वाधिकरण इति। चिदानन्दघनं सर्वज्ञत्वादिविशिष्टम् मुक्तस्य यत्स्वरूपमभिहितम् पूर्वाधिकरणे तद्ब्रह्मसाम्यरूपमेव। ब्रह्मणोऽपि हि तथाभूतमेवरूप मत स्तन्नोपपद्यत इत्याक्षेपात्पूर्वाधिकरणसङ्गतिः। तदुपपद्यते नवेति ब्रह्मसाम्यविधिनिषेधाभ्यां संशयः। तत्र पूर्वःपक्षः— "एकएव रुद्रः"। "एकमेवाऽद्वितीयम्।" "न तत्समश्चाऽभ्यधिक" श्चेत्यादिश्रुतिविरोधाद्बद्धइव मुक्तेऽपि ब्रह्मसादृश्यमङ्गीकर्तुमयुक्तम्। "तस्मात्परमंसाम्य मुपैती" त्यादिश्रुतिरर्थवादरूपैवाऽङ्गीकरणीया। अवश्यञ्च "सोऽश्नुते सर्वान्कामान्" "मनसैतान्कामान्पश्यन्रमते" "जक्षन् क्रीडन् रममाणःस्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वे"त्यादिवाक्यानामर्थवादरूपत्वमङ्गीकरणीयम्। सकलवैषयिकसुखवितृष्णं ब्रह्मानन्दानुभवैकप्रेप्सु

दुत्पद्यते, मलस्यानादित्वात् संसारोपपत्तिः। अतः स्वाभाविकमेव मुक्तस्य स्वरूपं चिदानन्दघनं सर्वज्ञत्वादिविशिष्टमाविर्भवति ॥

## मुक्तः प्रतिज्ञानात् ॥ ४–४–२ ॥

आत्मस्वरूपमात्रस्य प्रागेव सिद्धत्वेऽपि मलविनिर्मुक्तस्यापरिच्छिन्नानन्दाद्याविर्भाव उच्यते, 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इति मलप्रयुक्तजागरिताद्यवस्थात्रिनिर्मुक्तस्यैव वक्तव्यतया प्रतिज्ञानात् ॥

किञ्च—

## आत्मा प्रकरणात् ॥ ४–४–३॥

तत्र 'भूयोऽनुव्याख्यास्यामि' इति प्रकृतोऽपहतपाप्मत्वादिगुणक आत्मा वक्तव्यः प्रकरणादवगम्यते। 'य आत्माऽपहतपाप्मा' इत्यादि

अभिनिष्पद्यत इत्यस्य तत्परतयाऽर्थवत्त्वसम्भवात् तत्स्वारस्याऽनुसारेण स्वेनेति विशेषणं सर्वथा वैयर्थ्यमापादनीयमिति ॥

ननु—स्वेनेतिविशेषणसार्थक्यायाऽभिनिष्पत्तिरौपचारिकीत्यस्तुनाम। सा स्वरूपानन्दाविर्भावरूपाऽपहतपाप्मत्वादिरूपाचेति कुतोऽवगम्यत इत्याकाङ्क्षायां तत्रोभयथाऽपि गमकं क्रमेण सूत्रद्वयेनोच्यते ॥

आत्मस्वरूपमात्रस्य प्रागेव सिद्धत्वेऽपि कर्मबन्धविनिर्मुक्ताऽपरिच्छिन्नज्ञानानन्दस्वरूपस्याविर्भाव एव स्वेनेतिशब्देनोच्यते। कुतः इदमवगम्यत इतिचेदात्मविविदिषयोपसन्नायेन्द्राय प्रजापतिना आत्मेतिप्रकृतं प्रत्यगात्मानं जागरिताद्यवस्थात्रयविनिर्मुक्तं प्रियाप्रियहेतुभूतकर्मारब्धशरीरविनिर्मुक्तञ्च प्रतिपादयितुं "एतंत्वेव ते भूयोऽनुव्याख्यास्यामी" ति पुनःपुनरुक्त्वा "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेनरूपेणाऽभिनिष्पद्यत" इति प्रतिज्ञानान्मुक्तः कर्ममूलदेहविनिर्मुक्तएवात्माऽत्रोपदिष्ट इत्यवगम्यत इत्यर्थः। एवमपि स्वरूपमात्राविर्भावस्य पुरुषार्थत्वं नसिध्यतीत्याशङ्क्याह ॥

मुच्यते । तथा श्रूयते–'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । अतो मुक्तस्य ब्रह्मसादृश्यमुपपद्यते ॥

इति अविभागाऽधिकरणम्

---

अथ ब्राह्माऽधिकरणम् ३

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४–४–५ ॥

पूर्वत्र स्वयंप्रकाशमपहतपाप्मत्वादिगुणविशिष्टं ब्रह्मसदृशं मुक्तस्य स्वरूपमाविर्भवतीत्युक्तम् । तदुभयरूपत्वं सम्भवति न वेति संशयः ॥ एवं सति मतान्तरेण पूर्वपक्षः प्रवर्तते । 'स्वेन रूपेण' इति स्वरूपाविर्भावो ब्राह्मेणाऽपहतपाप्मत्वादिकेन । ते हि ब्रह्मगुणाः प्रत्यगात्मनोऽपि स्वाभाविकाः 'य आत्माऽपहतपाप्मा' इत्याद्युपन्यासात् 'जक्षन् क्रीडन् रममाण' इत्यादिश्रवणाच्चावगम्यते । अतो गुणसाम्यमिति जैमिनिः ॥

सूत्रविरुद्धतया "मुक्तः प्रतिज्ञाना"दित्यत्र प्रतिपादितस्यार्थस्य "भोगमात्रसाम्यलिङ्गा"-दित्यादिसूत्रविरुद्धतयाचाऽनुपादेयता स्पष्टैवेतिदिक् ॥

नन्वत्राऽविभागपदस्याऽभेदे स्वरसत्वाल्लक्षणया सादृश्यपरत्वग्रहणमयुक्तमितिचेन्न । अभेदे विभागस्याऽप्रसक्त्या तत्प्रतिषेधाऽयोगेन जीवेश्वरभेदस्याऽनेकश्रुतिसूत्रसिद्धत्वेन वास्तवत्वावसाया द्विनयोरविभागस्सादृश्यनिबन्धनएवेत्यर्थस्यैव तदन्यथानुपपत्तिमूलत्वेन प्रामाणिकत्वादित्यलम् ॥

इति अविभागाऽधिकरणम्

---

अथ ब्राह्माऽधिकरणम् ३

ब्राह्मेण अपहतपाप्मत्वादिना स्वरूपाविर्भावः इति जैमिनिराचार्यो मन्यते । उपन्यासादिभ्यः "य आत्माऽपहतपाप्मा विजरो विमृत्युः" "जक्षन् क्रीडन् रममाणः" इत्यादिना प्रत्यगात्मन्यपि अपहतपाप्मत्वादीनां सत्यसङ्कल्पत्वादीनाञ्च उपन्यासादितिसूत्रार्थः ॥

सिद्धान्त उच्यते। मुक्तस्य ब्रह्मणा सादृश्यमस्ति। कुतः ? 'निरञ्जनः परमम् साम्यमुपैति' 'मुक्तः शिवसमो भवेत्' इति मुक्तस्य ब्रह्मगुण-स्वरूपाविभागेन ब्रह्मसादृशतया दृष्टत्वात्। अतः 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मसादृश्यमेवोच्यते। मुक्त आत्मा सादृश्याद्ब्रह्मस्वरूपाविभागेन स्वस्वरूपमनुभवति। यदुक्तम् 'एको रुद्रो न द्वितीयाय' इत्यादिना सादृश्य-निषेधः क्रियत इति, तत् जीवस्य जगद्व्यापाराद्यभावात्। वक्ष्यति 'भोग-मात्रसाम्यलिङ्गाच्च' इति। अतो ब्रह्मण इव सकलकामावाप्तिरस्य तत्साम्य

मुमुक्षुम्प्रतिकामावाप्त्यादीनां पुरुषार्थत्वाऽसम्भवादपहतपाप्मत्वविजरत्वादीनामपि कामभोगोप-योगिनां ततएव पुरुषार्थत्वाऽसम्भवाच्चेति ॥

सिद्धान्तस्तु— "मुक्तस्य ब्रह्मणासाम्यमस्त्येव "साम्यमुपैतीती" त्यादिश्रुतिस्मृतिभ्यां तस्य तद्वैलक्षण्येन दृष्टत्वात। "ब्रह्मवेद ब्रह्मैवभवती" ति श्रुतिरपि मुक्तस्य ब्रह्मसादृश्य मुपनयति। तत्रह्येवकार इवाऽर्थे। यथा "विनाशमेवापीतो भवती" त्यत्र। नत्वभेदार्थे। "सुषुप्त्युत्क्रान्त्योर्भेद" [ब्र॥ १–३–४३–१२] नेत्यादिसूत्रे जीवब्रह्मणोर्भेदस्य प्रसाधि-तत्वात्। सादृश्यनिषेधश्रुतयस्तु जगद्व्यापारांशे द्रष्टव्याः। अतएव सूत्रकार स्तस्य भोगमात्र-साम्यं वक्ष्यति। नचैकेनाप्यंशेन सादृश्याऽभावे परमसाम्यश्रावणविरोधः। तस्य विवक्षितगुणांश अत्यन्तसाम्यविषयत्वात्। नहि तुलाधृतयोः स्वर्णशिलाशकल्योः परमसाम्योक्तौ वर्णसाम्यमपि सिद्ध्यति। यद्यपि तस्य भोगः स्वतःपुरुषार्थो नभवति। अथाऽपि सविभूतिकब्रह्मानन्दानुभवस्य पुरुषार्थत्वा दितरप्रपञ्चवत्स्वात्मानन्दस्वभोग्यजातादिकं सर्वं ब्रह्मविभूतितयाऽनुभूयमानं भवत्येव तम्प्रतिपुरुषार्थः। "सोऽश्नुते सर्वान्कामा"नित्यादिश्रुतयोऽपि तदभिप्रायाइति ॥

अत्राऽधिकरणं यत्केवलाद्वैतभाष्यकारैः "मुक्तः प्रत्यभिज्ञाना" दितिसूत्रं निर्गुण-मुक्तियोगप्रतिपादकतया व्याख्यातम् तत् स्पष्टोह्येकेषामिति सामान्यवचनपदवटितसूत्रस्य निर्गुणचिन्तापरतया कृतमिव विवरणं तदीयं शास्त्रस्वायत्तीकरणवैशद्यमेव व्यनक्ति। एवं "तत्तु समन्वयात्" "स्पष्टोह्येकेषाम्" "मुक्तः प्रतिज्ञानादि" ति च सूत्रत्रितयमात्रं हि तदीयामाशां परिपूरयतीतिचित्रम्।

"तत्तु समन्वयादि" त्यत्र कृतस्य विवरणस्य सगुणैकविषय कृत्स्नसमन्वयाध्याय-विरुद्धतया "स्पष्टोह्येकेषा" मित्यत्र प्रतिपादितस्यार्थस्य "तदोकोग्रज्वलन" मित्यादि-

ज्ञानरूपत्वेन स्वयंप्रकाशमपहतपाप्मत्वादियोगात् कल्याणगुणविशिष्टञ्च ब्रह्मसदृशं मुक्तस्वरूपमिति युक्तम् ॥

इति ब्रह्माऽधिकरणम्

---

अथ सङ्कल्पाऽधिकरणम् ४

## सङ्कल्पादेव तु तच्छ्रुतेः ॥ ४–४–८ ॥

पूर्वत्र मुक्तस्य स्वयंप्रकाशस्य सत्यसङ्कल्पत्वाद्युक्तम् । तदुपपन्नं न वेति विचिकित्सा ॥ किं प्राप्तम्? मुक्तस्य भोग्यवस्तुविषये न सङ्कल्पमात्रं हेतुः बाह्यहेतुनैरपेक्ष्येण तावता तदसम्भवादिति । एवं प्राप्ते ब्रूमः ' सङ्कल्पमात्रेण सकलभोग्यवस्तुसिद्धिरस्ति । तथाहि श्रूयते । ' स यदि पितृलोक-

---

व्यवस्था नापेक्ष्यत इति सिद्धान्तः—आहच तन्मात्र [ब्र॥ ३-२-१६]मिति सूत्रसिद्ध स्यार्थस्यैव प्रपञ्चस्तद्दृढीकरणाऽर्थः ॥

इति ब्रह्माऽधिकरणम्

---

अथ सङ्कल्पाऽधिकरणम् ४

एवं त्रिभिरधिकरणैः मुक्तानां स्वरूपानन्दस्य गुणबृन्दस्य चाविर्भाव उक्तः । तत्र गुणबृन्दे सत्यसङ्कल्पत्वं सम्भवति नवेति संशयः । नसम्भवति ॥

तद्धि "जक्षन्-क्रीडन्-रममाणः" "सङ्कल्पादेवाऽस्यपितरस्समुत्तिष्ठन्ती" त्यादिश्रुत्युक्त - सङ्कल्पमात्रेण पित्रादिभोगोपकरणस्रष्टृत्वं तन्नसङ्गच्छते । लोके राजादीनां सत्यसङ्कल्पत्वेन व्यवह्रियमाणानामपि कार्ये प्रयत्नान्तरसापेक्षत्वदर्शनेन लोकप्रमाणविरुद्धत्वादिति पूर्वपक्षः ॥

सिद्धान्तस्तु—युक्तम्-विज्ञानघनएवेत्येवकारस्य गुणान्तरव्यवच्छेदकत्वं पटोऽयं शुक्लएवेतिव द्विशेषणसङ्गतत्वेनाऽयोगव्यवच्छेदपरत्वात । इहतु सङ्कल्पादेवेत्येवकारस्सङ्कल्पयितुर्व्यापारान्तर-व्यवच्छेदकएव पार्थएव धनुर्धर इतिव द्विशेष्यसङ्गतत्वेनाऽन्ययोगव्यवच्छेदकत्वात् । श्रुतिविरोधेच

## चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ४–४–६ ॥

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवम् वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' 'विज्ञानघन एव' इत्यवधारणात विज्ञानस्वरूपमात्रेण साम्यमित्यौडुलोमिः। एवमुभयदर्शनात् सविशेषनिर्विशेषत्वे सिद्धे युगपदुभयासम्भवात् कालभेदादिना व्यवस्थेति। अथ सिद्धान्त उच्यते—

## एवमप्युपन्यासात् पूर्वभावादविरोधम् बादरायणः ॥४–४–७ ॥

बादरायणस्तु परस्परविरोधाभावादुभयश्रुत्यवगतोभयस्वरूपमस्य प्रतिपादयति। तथा हि 'विज्ञानघन एव' इत्यादिना स्वप्रकाश इत्यवगतेऽपि 'य आत्माऽपहतपाप्मा' इत्युपन्यासात् पूर्वेषामपहतपाप्मत्वादीनामपि सद्भावोऽवगम्यते। अत उभयप्रमाणसिद्धम् रूपद्वयम् परस्पराविरोधीत्युभयरूपसमुच्चयः समुचितः। विरोधे हि कालभेदाद्यपेक्षा। अतो

विज्ञानघनएवेति तदात्मकत्वामननाच्चैतन्यमात्रेण स्वरूपाविर्भाव इत्यौडुलोमिराचार्यो मन्यते इति सूत्राऽर्थः। स्वप्रकाशानन्दस्वरूपं गुणबृन्दञ्चाविर्भवतीति यदुक्तं तस्योभयस्य युगपदाविर्भावो सम्भवति नवेति विरोधाऽविरोधाभ्यां संशये पूर्वपक्षः ॥

अपहतपाप्मत्वादिनाविर्भाव स्स्वप्रकाशचिन्मात्रस्वरूपेणाविर्भावश्चेति जीवस्य द्विविधमपि रूपं द्विविधश्रुतिसिद्धम् नप्रत्याख्यातुं शक्यम्। नद्युभयं यौगपद्येन सम्भवति। अतः कञ्चित्कालमपहतपाप्मत्वादिना कञ्चित्कालं चैतन्यमात्रेणेति कालभेदनैव व्यवस्थापनीयमिति ॥

एकस्मिन्नेव पूर्वपक्षे ऋषिद्वयसङ्कीर्तनपूर्वकं सूत्रद्वयप्रणयनं परस्परविरुद्धमपि श्रुतिषु श्रूयमाणत्वा दपिसम्प्रतिपन्नत्वाच्चाऽवश्यमङ्गीकरणीयम्। नच तदुभयं युगपदेकस्मिन्नङ्गीकर्तुं युक्तम्। अतः कालभेदादिना व्यवस्थापनीयमिति पूर्वपक्षदृढीकरणाऽयम् ॥

प्रज्ञानघनत्वं हि कात्स्न्र्येन स्वप्रकाशत्वम्। यथा—सैन्धवखिल्यस्य रसघनत्वं कात्स्न्र्येन लवणसारत्व नान्यगुणान्तरव्यवच्छेदकम्। एवं विरोधाऽभावात युगपदुभयंसम्भवति कालभेदादिना

शोकराहित्यम्। अत एव कर्मवश्यत्वाभावात् स्वतन्त्रत्वम्। निरतिशयस्वरूपानन्दानुभवैकरसिकतया स्वात्मारामत्वेन नित्यतृप्तत्वम्। अत एवास्य जिघत्सा पिपासादिराहित्यम्। अलुप्तसर्वशक्तिकत्वादस्य सत्यकामसत्यसङ्कल्पत्वम्। तस्मादसौ परमेश्वरश्च अपहतपाप्मत्वादिगुणाष्टकयुक्तः श्रूयते। अतो मुक्तस्य शिवसदृशस्य स्वातन्त्र्यं युक्तमेव ॥

इति सङ्कल्पाऽधिकरणम्

---

ननु—प्राचीनकर्मणां विनष्टत्वेऽपि परमेश्वराज्ञारूपविधिनिषेधोल्लङ्घनात् पुण्यपापे स्यातामित्याशङ्क्याह—नाऽस्य परमेश्वर इति। श्रुतिस्मृतिरूपस्याज्ञाविषयत्वापादनेन नियामको नभवतीत्यर्थः ॥

हेत्वसिद्धिमाशङ्क्याह— पशुत्वनिवृत्तेरिति। मलमायादिपाशबन्धविषयत्वम्पशुत्वम्। पशुत्वव्यावृत्तौ सत्याम् शिवभावाविर्भावे तदन्तर्गततया सार्वज्ञ्यादिसिद्धिमाह—मलापगमेनहीति ॥

मुक्तिश्शिवत्वरूपेति भारतेऽप्याविष्कृतम्। "धर्मान्वेषी तपःकर्तुम् यतेत सततम् प्रिये। अमरत्वं शिवत्वञ्च तपसैवाप्नुयान्नर"इति। सम्प्रतिपन्नमुक्तधर्माऽन्तरसिद्धिहेतुनैव तदीयसर्वज्ञत्वादिसिद्धिमुपपादयति— आत्मज्ञानेत्यादिना। अस्य सर्वज्ञत्वमिति। अनादिबोधत्वस्याऽपि तदुपलक्षणम्। अतएव ज्ञानस्येति। तत्तद्विषयावरणभूतानामाणवमलस्य शक्तिविशेषाणां समुदाय स्संसारकारणमज्ञानं तस्यसर्वस्याऽपि मूलम्। सर्वज्ञत्वादिकपरमेश्वरशेषत्वादियुक्तनिजस्वरूपावरणभूता तच्छक्तिः तस्य सर्वस्याऽप्यावरणशक्तिसमुदायस्य निवृत्त्यैव हि "शोकम् मोहम् जराम् मृत्युमत्ये" तीत्यस्य मोहशब्दोक्तस्य परिच्छिन्नदेहाद्यभिमानरूपस्य भ्रमस्य निवृत्तिरभ्युपेयते। ततएवाऽस्य सर्वज्ञत्वम् सङ्कुचितस्याऽस्य ज्ञानस्य प्रागपिसत्त्वादनादिबोधत्वञ्च सिद्ध्यतीतिभावः। यतोह्यस्य जरामरणेति। यतः कर्मवश्यत्वाऽभावादस्य जरामरणशोकराहित्यम्। अतएव स्वतन्त्रत्वंसिध्यतीत्यर्थः। अतएवाऽस्यजिघत्सेति। स्वरूपानन्दानुभवादेवास्य जिघत्सापिपासादिराहित्यमुपपादनीयम्। ततएव नित्यतृप्तत्वं सिध्यतीतिभावः। अलुप्तेति। अलुप्तशक्तिकत्व मनन्तशक्तिकत्वञ्च विनासत्यकामत्वञ्च नसिध्यतीति ततएव तदुभयं सिध्यतीत्यर्थः। परमेश्वरश्चेति दृष्टान्तार्थं स्वातन्त्र्यमिति। स्वातन्त्र्योपलक्षितं सर्वज्ञत्वादिषट्कं युक्तमेवेत्यर्थः ॥

इति सङ्कल्पाऽधिकरणम्

---

कामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति ' इत्यादि । अतोऽस्य सङ्कल्पमात्रमेव सकलभोग्यवस्तुसम्पादने हेतुः । न बाह्यहेत्वपेक्षा ॥

## अत एव चानन्याधिपतिः ॥ ४-४-९ ॥

यत एव ब्रह्मस्वरूपापन्नोऽयं अपहतपाप्मत्वादिगुणकः अत एवानन्याधिपतिः स्वतन्त्रः । कदाचिदपि न कर्माधीनः । कर्मणो विनष्टत्वात् । नास्य परमेश्वरो नियामकः । प्रवाहसिद्धतदाज्ञारूपविधिनिषेधशास्त्रपथातीतत्वात् । कुतः ? पशुत्वव्यावृत्तेः । मलापगमेन हि शिवत्वमेवास्य सिद्धम् । शिवत्वं नाम निखिलमलसम्पर्करहितनिरतिशयमङ्गलास्पदत्वरूपम् शिवसदृशस्वभावत्वम् । सर्वज्ञत्वादिरिह शिवस्य स्वभावः । अतोऽस्य मुक्तस्य शिवसदृशस्य सर्वज्ञत्वमनादिबोधत्वं नित्यतृप्तत्वम् स्वतन्त्रत्वं सर्वशक्तिमत्त्व मलुप्तशक्तिकत्व मनन्तशक्तित्व श्चेति । आत्मज्ञानसङ्कोचरूपो हि संसारः । सङ्कोचकारणमलापगमेऽस्य सर्वज्ञत्वम् । अत एवाज्ञानस्य संसारनिदानस्य समूलनिवृत्तिःपरिच्छिन्नापरिच्छिन्नदेहाद्यभिमानरूपभ्रमनिवृत्तिः।यतो ह्यस्य जरामरण-

---

सामान्यतो दृष्टाऽनुमानस्याप्रमाणत्वात् । अतो युक्तम् मुक्तानां सत्यसङ्कल्पत्वमिति । " सम्पद्याविर्भाव " इति सूत्रे स्वरूपानन्दस्य सर्वज्ञत्वादिषट्कस्याऽपहतपाप्मत्वाद्यष्टकस्य चाविर्भावो विवक्षितः।अतएव तत्सूत्रभाष्ये चिदानन्दघनं सर्वज्ञत्वादिविशिष्टमाविर्भवतीत्युक्तम् । तत्राऽपहतपाप्मत्वाद्याविर्भावः प्रागुदाहृतेन प्रजापतिवाक्येनाऽवगम्यते । सर्वज्ञत्वाद्याविर्भाव' । कुतोऽवगम्यत इत्याकाङ्क्षायामपहतपाप्मत्वादित एवेति प्रतिपादयितुं सूत्रम् ॥

अनन्याधिपतिशब्दोक्तं स्वातन्त्र्यमङ्गान्तराणामप्युपलक्षणमित्यभिप्रेत्य मलाद्यावरणनिवृत्तिपूर्वकाऽपहतपाप्मत्वाद्याविर्भावोक्त्यैव सार्वज्ञ्याद्यङ्गाविर्भावसिद्धिमुपपादयन्प्रथममपहतपाप्मत्वोक्त्या स्वातन्त्र्यसिद्धि मुपपादयति—अतएवेति । नन्वन्तर्यामिपारतन्त्र्यं मुक्तिदशायामप्यस्तीति "तस्य च नित्यत्वा "दिति द्वितीयाध्यायसूत्रेणा विष्कृतं कथं स्वातन्त्र्यमित्याशङ्क्याह —' कदाचिदपीति । कर्माधीनत्वरूपं पारतन्त्र्यमत्र व्यावर्त्यते । नत्वन्तर्यामिप्रेरणाऽधीनव्यापारत्वमिति भावः ॥

अतो मुक्तस्य विदेहत्वमेव सदेहत्वस्य तु पुरुषभेदाद्व्यवस्थेति, एवंप्राप्ते सिद्धान्त उच्यते ॥

## द्वादशाहवदुभयविधम् बादरायणोऽतः ॥ ४–४–१२ ॥

उभयश्रुतेः सशरीरत्वमशरीरत्वञ्च स्वेच्छया मुक्तस्येति भगवान् बादरायणो मन्यते, यथा द्वादशाहः उभयश्रुतेः सत्रमहीनञ्च तद्वदिति। अत्र पौराणिकी फणितिः ‘ सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णाः स्वभावतः, शिवतुल्यबलोपेताः परमैश्वर्यसंयुताः। सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः।’ इत्यादिका शिवपदारूढविषया, अत उभयविधत्वं युज्यते। एकस्यैव कालभेदा दुभयव्यवस्थामाह ॥

---

त्रिधाभवती " त्यादेरच्छेद्येजीवे स्वतोऽसम्भवात् शरीरभेदोपाधिकत्वं वक्तव्यमिति यत्सशरीरत्व मापतति तद्विद्याविशेषानुष्ठानादवरमुक्तिंप्राप्तस्य कल्पनीयमिति ॥

" ब्राह्मेण जैमिनि " रित्यधिकरणइव अत्राऽपि ऋषिद्वयसङ्कीर्तनं युक्तम्। सूत्रद्वयं पूर्वपक्षदृढीकरणाऽर्थम्। द्वितीयसूत्रे विकल्पो विविधप्रकार. बहुदेहत्वमित्यर्थः। एवंप्राप्ते सिद्धान्तः —

उभयश्रुतेः सशरीरत्वमशरीरत्वञ्च स्वेच्छया मुक्तस्येति बादरायणो मन्यत इति सूत्राऽर्थः। " यत्र नान्यत्पश्यती " त्यादिवाक्यप्रतिपन्ननिरतिशयात्मकपरब्रह्मविषयायां श्रुतस्य "स एकधा भवती"त्यादे रवरमुक्तिविषयत्वं नयुक्तम्। अतो यथा– "द्वादशाहमृद्धिकामा उपेयुः, द्वादशाहेन प्रजाकामम् याजये " दिति श्रुतिद्वयानुसारेण द्वादशाहस्य सत्राहीनोभयरूपत्वम्। "द्वादशाहमृद्धिकामा उपेयु"रिति सत्रंभवति। "द्वादशाहेन प्रजाकाम"मित्यहीनञ्चेत्यर्थः ॥

तथा मुक्तस्य सदेहविदेहमुक्तवचनुसारेण तदुभयरूपत्वमङ्गीकरणीयम्। तच्च-स्वसङ्कल्पानुसारेणेति-‘सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुन’रित्युपबृंहणादिति। ननु विदेहावस्थायां मनो मात्रेण कथं कामभोगः। यदि स तन्मात्रेणाऽपि मुक्तस्य सम्भवति, तर्हि कदाचिद्देहापेक्षा किमर्थेत्याशङ्कां निराकर्तुं विदेहसदेहावस्थयो र्भोगविशेषप्रतिपादनार्थमुपरितनसूत्रद्वयम् ॥

अथ अभावाऽधिकरणम् ५

## अभावं बादरि राह ह्येवम् ॥ ४-४-१० ॥

पूर्वं मुक्तस्य स्वयंप्रकाशत्वं सत्यसङ्कल्पत्वादिवैशिष्ट्यञ्चोपपादितम् । इह तस्य सशरीरत्वमशरीरत्वमुभयंवेतिविचारः प्रवर्तते । बादरिस्तावत्, मुक्तस्य देहेन्द्रियाद्युपकरणभावं मेने । ' निष्कलम् निष्क्रियम् ' इत्यादिकं ब्रह्मणस्तदभावमाह हि तत्स्वरूपस्य मुक्तस्याऽपि तथात्वमिति ॥

## भावं जैमिनि र्विकल्पाम्नानात् ॥ ४-४-११ ॥

जैमिनिस्तु ' स एकधा भवति त्रिधा भवति ' इत्यादौ देहेन्द्रियादिभिः विविधत्वश्रुतेस्तद्भावमेव मेने । तदेवं सदेहत्वश्रुते र्विदेहत्वश्रुतेश्च किमस्यतात्त्विकमितिसंशये विदेहत्वमेव तात्त्विकम् ' मनसैतान् पश्यन् रमते य एते ब्रह्मलोके' इति बाह्येन्द्रियाद्यभावो हि मुक्तस्य श्रूयते । ब्रह्म च बाह्येन्द्रियादिरहितं श्रूयते ' सत्यात्मप्राणारामम् मन आनन्दम् ' इति । आत्मन्येवारामो न बाह्ये, मनस्येवानन्दो न बाह्येकरण इतिहि तत्र निरुक्तिः ।

अथ अभावाऽधिकरणम् ५

मुक्तस्य स्वरूपगुणविचाराऽनन्तरं देहेन्द्रियविचारइतिसङ्गतिः । मुक्तस्य सशरीरत्व मशरीरत्वञ्च श्रूयमाणं विद्याविशेषाऽनुष्ठातृपुरुषभेदेनोपपादनीय मुतैकस्मिन्नेवपुरुषे सङ्कल्पभेदे नेत्युभयथासम्भवात्संशयः । अत्र पूर्वःपक्षः ॥

मुक्तस्य शरीरं भोगार्थं नापेक्षितम् । ब्रह्मसादृश्यं प्राप्तस्य तस्य ब्रह्मणइव भोगस्य मानसत्वौचित्यात् मनआनन्दमिति ब्रह्मणइव " मनसैतान्कामान्पश्यन्रमत " इति तस्याऽपि भोगस्य मानसत्वश्रवणाच्च । " निष्कलम् निष्क्रिय " मितिमन्त्रे शरीरावयवतत्क्रिययोर्निषेधः शरीरनिषेधः पर्यवस्यन् भोगोपकरणशरीरनिषेधो भवेत् । साधकानुग्रहार्थस्योमासहायत्वादिविशिष्टदिव्यविग्रहस्याऽङ्गीकारात् । नच तद्वन्मुक्तस्य साधकाऽनुग्रहार्थं शरीरमङ्गीकर्तव्यम् । तेन कर्तव्यस्य साधकाऽनुग्रहस्याऽभावात् । तस्मादशरीरएव परममुक्तः । " स एकधा भवति

ज्ञानशक्त्यधिष्ठातृभूतमाप्नोति योगीत्युक्तम् । तदा स किंविशिष्ट इत्याकाङ्क्षायाम् । 'वाक्पति श्चक्षुष्पतिः श्रोत्रपति र्विज्ञानपति' रिति वागादीनां स्वेच्छाधीनत्वेन तदाधिपत्यमुक्तम् । तदेवंविधस्य मुक्तस्य परमाकाशरूपशिवपदाधिरूढस्य स्वेच्छाधीनविशुद्धवागादिकरणस्य ततः तत्पदप्राप्त्यनन्तरम् एतत् विश्वजालम् भवति । किंभवति? आकाशशरीरम् ब्रह्मैव परमानन्दलक्षणपरमाकाश शरीरं ब्रह्मैवभवति । परप्रकृतिरूपा परमसत्ता प्रकाशानन्दसमरसा परशक्तिर्हि ब्रह्मणः स्वरूपतया परमाकाश उच्यते, या मुक्तानां परमेश्वरस्यच साक्षादर्थक्रियाहेतुः, परम्परयाऽन्येषाम् । तथाहि 'कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो नस्यात् एषह्येवानन्दयाति' 'रसो वै सः रसँह्येवायम् लब्ध्वाऽऽनन्दी भवति' इतिसर्वानुभवविषयत्वमस्याः

---

ननु-यदा कश्चिन्मुक्त स्सदेहः अन्यश्च विदेह. तदा तयोः सृष्टासृष्टविषयौ भोगाविति मुक्तिफलेऽप्युत्कर्षापकर्षौ प्रसज्येयाताम् । नैषदोषः । सविभूतिकब्रह्मानुभवस्य सर्वान्प्रत्येकरूपत्वात् ॥

तथाहि— यदा कश्चिद्विदेहस्तदा तस्य स्वप्नदशाइव वासनाभिः सूक्ष्मान् कांश्चनविषया नीश्वरः सृजति । तेच स्थूलप्रपञ्चाऽन्तर्गतविषयाश्चेति द्विविधैरपिविभूतिभेदैर्विशिष्टंब्रह्म सदेहानां विदेहानाञ्च सर्वेषामपिमुक्ताना मास्वाद्यम् । अतो न कस्याऽपि सविभूतिकब्रह्मानुभवे विशेषः । कथन्तर्हि तन्वभावइत्यादिसूत्राभ्यां विदेहत्वाऽवस्थायां सूक्ष्मभोगः । सदेहत्वाऽवस्थायां स्थूलभोग इति विशेष उक्तः । कयञ्चिद्विदेहत्वाऽवस्थायां तदीयवासनामयसूक्ष्मविषयसृष्टिरप्यस्ति । ननु सदेहत्वाऽवस्थायामित्येवविशेषस्सूत्राभ्यामुक्तइति गृहाण । एतेन कश्चिन्मुक्तस्सङ्कल्पेन बहूनि भोगोपकरणानि सृजेत्काश्चिदल्पानीति तयोर्भोगतारतम्यं स्यादित्यपिशङ्का निरस्ता । सर्वान्मुक्तान्प्रति स्वसृष्टपरसृष्टसर्वविधविभूतिविशिष्टब्रह्मानन्दानुभवस्यैकरूपत्वात् । नन्विति । यदि मुक्तस्य सविभूतिकब्रह्मानन्दानुभव स्तदा मुक्ताऽनुभववासनासृष्टभोगोपकरणानां मुक्तमात्रभोग्यानां सुखैकरूपत्वेऽप्यमुक्तसाधारणस्य स्थूलप्रपञ्चस्य सुखदुःखकरभिन्नतया तदनुभवितु र्मुक्तस्याऽमुक्तवद्दुःखानुभवोऽपि स्यात् । द्वयोस्तु विशेषो भवेत् । अमुक्तस्य दुःखहेतुकतिपयविषयाऽनुभव इत्यल्पं दुःखम् । मुक्तस्यतु यद्यावद्दुःखानुभवहेतुभूतं दुर्गन्धादिविषयदुःखजातं तस्यसर्वस्याऽप्यनुभवोऽस्तीत्यधिकं दुःखमिति । तस्मादयुक्त स्सविभूतिकब्रह्मानुभव-

## तन्वभावे सन्ध्यवदुपपत्तेः ॥ ४–४–१३ ॥

मुक्तः स्वेच्छया कदाचित् बहूनि शरीराणि सृष्ट्वा तदनुप्रवेशेन विहरति, कदाचिदुपसंहृतशरीरश्च वर्तते । शरीराद्यभावावस्थायां मुक्तः स्वप्ने परमेश्वरसृष्टं रसादिकं मनसा बद्धपुरुषइव परमेश्वरसृष्टमेव रसं भुङ्क्ते । किमुक्तं भवति । स्वप्ने पुरुषो यथा शरीरेन्द्रियादिनैरपेक्ष्येण केवलेन मनसैवेश्वरसंपादितान् विषयान् भुङ्क्ते, तथा मुक्तोऽपि स्वभूतेन मनसैव ब्रह्मस्वरूपरसमनुभुङ्क्ते इति ॥

## भावे जाग्रद्वत् ॥ ४–४–१४ ॥

स्वेच्छासृष्टशरीराद्युपकरणभावे जाग्रत्पुरुषइव सर्वकामं भुङ्क्ते । ननु यदि मुक्तस्य प्राकृतवस्तुदर्शित्वरूपं भोक्तृत्वम् तर्हि अपुरुषार्थप्रपञ्चदर्शिनो मुक्तस्य न संसारदुःखानुषङ्गाभावसिद्धिरितिचेन्न । मुक्तस्यापुरुषार्थरूपेण प्रपञ्चदर्शनाभावात् । मुक्तेन ब्रह्माकारं हि दृश्यते विश्वमेतत् । तथाहि श्रूयते 'एतत्ततो भवति आकाशशरीरम् ब्रह्म सत्यात्मप्राणारामम् मनआनन्दम् शान्तिसमृद्धममृतम्' इति पूर्वत्र 'आप्नोति स्वाराज्यम् आप्नोति मनसस्पतिम्' इति स्वाराज्यसुखैकरसं शिवस्य परब्रह्मणः पदं मनसस्पतिं

---

सन्ध्ये-स्वप्नइवाशरीरत्वे सूक्ष्मविषयोपभोगइति विशेषण्योपपत्तेरित्यर्थः । शरीरस्यान्तः परमेश्वरसृष्टेषु वासनामयेषु सूक्ष्मेष्वर्थेषु मानसप्रत्ययएव चाक्षुषत्वाद्यभिमानरूपस्स्वप्नइत्यङ्गीकृत्य सन्ध्यवदितिदृष्टान्तः कृतः । तत्र सूक्ष्मत्वांशइव परमेश्वरसृष्टत्वांशोऽपि सन्ध्यदृष्टान्तइति तत्स्वारस्यमनुसरन्नाह—परमेश्वरसृष्टमिति । ब्रह्मस्वरूपरसमिति । सविभूतिकब्रह्मानन्दमित्यर्थः । "मनसैतान्कामान्पश्यन्रमते" इतिश्रुतौ परमेश्वरसृष्टमिति प्राचीनभाष्यवाक्येच केवलमानसानुभवेऽपि विभूत्यनुप्रवेशवर्णनात् ॥

उपपत्तेरित्यनुवर्तते । तथाच मुक्तस्य शरीरादिसद्भावे जाग्रतइव स्थूलविषयभोगोपपत्तेरित्यर्थः ॥

विद्या परमे व्योमन् प्रतिष्ठिता' इति। अतो मुक्तानां परमानन्दरूपपरमाकाश-शरीरकं ब्रह्म जगद्भवतीति परमानन्दानुप्रविष्टानामेषां ब्रह्माण इव दुःखानुषङ्गाभावः ॥

इति अभावाऽधिकरणम्

---

घना परशक्तिर्तर्हि परमाकाशः। सा परब्रह्मण स्स्वरूपतयोक्ष्मत इत्यन्वयः। शरीरपद-व्याख्यानं स्वरूपतयेति। तस्या स्सर्वदा सर्वोपजीव्यत्वमाह – येति। साक्षात्स्युपादानमनपे क्ष्याऽर्थक्रियाहेतुरखण्डानन्दतया स्वादहेतु रास्वादनीयेति यावत्। परम्परयेति। पुण्य-विशेषाऽनुसार्यभिव्यक्तिविशेषहेतुवृत्त्युपधानद्वारेत्यर्थः। एतदेवोपपादयति – तथाहीत्यादिना। अननं प्राणवायुव्यापारः। प्राणनं चक्षुरादिव्यापारः। अनेन लौकिकव्यापारहेतुत्वम प्यस्तीति दर्शितम्। ब्रह्मपर्यन्त मिति। ब्रह्मणः प्रागित्यर्थः। अर्चाणि मुक्तं चेति। अनुभाव्यत्वसम्बन्धो विवक्षितः नाधाराधेयभावः। तस्य मुक्तमाधारण्याऽभावात्। "स एको ब्रह्मण" इति श्रुतावनुभाव्यत्वसम्बन्धएव पष्ठ्यर्थः। तस्य जीवतएवमुक्तस्येति। तथा-भूतश्श्रोत्रियो यदा चरमदेहावसाने मुक्तो भवति तदा तस्य परब्रह्मणश्च तुल्यएव निरतिशयानन्दः। स यदा जीवद्दशायाम् योगमभ्यस्यति तदा तस्य योगभूमिकाभेदाऽनुसा र्यभिव्यक्ति तारतम्यात् क्रमेण मानुषादितुल्यानन्दविर्भावः। एवंसत्यकामहतश्श्रोत्रिय-शब्दोक्तानां मुक्तानामेवानन्दतारतम्यमुक्तमतइतिविरोधो नाशङ्कनीयः। "स एको ब्रह्मण आनन्द" इति पर्यायएवाऽकामहतश्रोत्रियशब्दस्य मुक्तिदशाविषयत्वात्प्राचीनपर्यायेषु तस्य तस्य जीवन्मुक्तिदशाविषयत्वादित्यर्थः। अस्त्वेवंभूतमहिमा परमाकाशः। तथाऽपि कथं ब्रह्मणस्तत्स्वरूपत्वं धर्मिधर्मभावेन भेदसत्त्वादित्याशङ्क्य "अभेदव्यपदेशोऽयमौपचारिकः" "आनन्दोब्रह्मे" ति श्रुत्यन्तरइवेत्यभिप्रेत्याह–अतोऽयमेवेति। यद्यप्याकाशशरीरमित्यत्राऽयुत-सिद्धप्रकारपरः शरीरिशब्द इतिवक्तुंशक्यम्। तथापि तदुपादानकत्वेन तदाभिन्नस्य विश्वजालस्य ब्रह्मसामानाधिकरण्यमभेदेनोपपादयितुं तस्य स्वरूपपरतया व्याख्यानंकृत्वा तदौपचारिकत्वे-नोपपादितम्। वस्तुतस्तस्याऽयुतसिद्धप्रकारपरत्वेऽपि नदोषः। विश्वजालस्याऽप्ययुतसिद्ध-प्रकारत्वादेव सामानाधिकरण्योपपत्तेः। तस्येति तस्यपरमाकाशस्य। अभिव्यक्ति महिमप्रकाशनम्। भृगुवल्ल्यामतएव "सैषाभार्गवी" त्यादिना तस्यास्तत्परत्वमुक्तमित्यर्थः। अवान्तरप्रमेयोप-संहरेणाऽधिकरणाऽर्थं निगमयति– अतोमुक्तानामिति ॥

इति अभावाऽधिकरणम्

---

श्रूयते । तथाच ' स एको मानुषआनन्द ' इत्यारभ्य ' स एको ब्रह्मण आनन्द'इति ब्रह्मपर्यन्तमुपाधितिरोधाना दानन्दाविर्भावस्तारतम्येन श्रूयते। निरुपाधिकतया ब्रह्मणि मुक्तेच परिपूर्णो वर्तते । स आनन्दः ' स एको ब्रह्मण आनन्दः श्रोत्रियस्य चाकामहतस्ये ' ति श्रवणात् ब्रह्मार्पणबुद्ध्या निष्कामानुष्ठिताऽग्निहोत्रादिकर्मा वरविद्वानकामहतः श्रोत्रियः तस्य जीवतएव मुक्तस्य ब्रह्मणश्च तुल्यएवानन्दः । तस्य योगातिशयेन तत्तद्भूमिमधिरूढस्य पूर्वत्र पूर्वत्र भूमावभ्यासः स्वल्पइति तदनुसारेण तत्तद्भूमौ तदीयानन्दा-विर्भावस्य मानुषाद्यानन्दसाम्यकृतिरिति नविरोधः । अतोऽयमेव परमानन्दः परप्रकृतिः परमाकाशः परमेशात् ' आनन्दो ब्रह्मेति व्यजानादि ' ति ब्रह्मत्वेन जगत्कारणत्वेन श्रूयते । तस्याभिव्यक्तिः ' सैषा भार्गवी वारुणी

---

इति शङ्कार्थः । संसारनिदानपुण्यपापदोषाक्रान्तेनाऽमुक्तेन स्वतन्त्रतयाऽनुभूयमाने प्रपञ्चे कतिपयस्य यथाकर्म दुःखरूपत्वेऽपि तद्दोषरहितेन ब्रह्मविभूतितयाऽनुभूयमानस्य तस्य सुखरूपत्व मेव भवति । यथा-पित्तापहनरमनेनास्वाद्यमानस्य शर्करादेर्दुःखरूपत्वेऽपि तद्दोषरहितेन ब्रह्मविभूति-तयानुभूयमानस्य तस्य सुखरूपत्वमेव भवति । यथाच—राजकुमारेण पुरतः स्वतन्त्रतयाऽनुभूयमानस्य महासैन्यस्य दुःखरूपत्वेऽपि ततस्तस्यैव स्वपितृविभूतितयाऽनुभूयमानस्य सुखरूपत्वमिति परिहाराऽर्थः—

मुक्तस्य ब्रह्मविभूतितया प्रपञ्चदर्शने श्रुतिमुदाहरति— तथाहि श्रूयत इति । 'एत द्विश्वजाल माकाशशरीरम् ब्रह्मैवभवती '' त्येतन्मुक्तम्प्रत्युच्यत इति दर्शयतुं मुक्तस्य प्रकृतत्वमाह — पूर्वत्रेति ।

स्वः— स्वर्गः । " देवा हवै स्वर्गमगमन्नि''ति श्रुतिप्रसिद्धनिरतिशयसुखात्मकं ब्रह्मणः पदम् । तत्रराजतीति स्वराट् । तस्य भावःस्वाराज्यम् । तत्प्राप्नोतीत्यस्य ब्रह्मणःपदं प्राप्नोतीत्यर्थे पर्यवसान मभिप्रेत्य व्याचष्टे — मनसस्पतिमिति । मनः ज्ञानशक्तिरूपा पारमेश्वरी तदधिष्ठाता शिवो मनसः पतिरित्यभिप्रेत्य व्याचष्टे — मनसस्पतिमिति । ब्रह्मभिन्नं विश्वजालं कथ म्मुक्तस्य ब्रह्म भवे दित्याकाङ्क्षायां चिच्छक्त्युपादानाकस्य विश्वजालस्य चिच्छक्तिद्वारा ब्रह्माऽ पृथग्भावा त्तस्यच मुक्तेन साक्षात्कृतत्वा दिति दर्शयितुं " आकाशशरीर " मितिश्रुतौ विशेषणम् कृतम् । तत्राकाशशब्दस्य चिच्छक्तिरर्थ इत्येतद्दर्शयति — परप्रकृतिरूपेति । परमसत्तेति । ब्रह्मवत्प्रपञ्चस्याऽपि सैव सत्तेति पारम्यम् । प्रकाशानन्दसमरसा चिदानन्द-

किमुक्तं भवति, बन्धुवज्जनकवत् सकलहितकारिणा परब्रह्मणा महादेवेन प्रसन्नेन दलितपाशबन्धा अमृतभावं गताः मुक्ताः, तृतीये परमव्योमलक्षणे स्वपदे कल्पितानि धामानि प्रकाशमयानि पदानि प्राप्तावर्तन्त इति। अतःपर मेषां व्याप्तिरुच्यते। परिद्यावापृथिवी यन्तीति, मुक्तात्मानः स्वशक्तिमरीचिभिः द्यावापृथिवी परियन्ति व्याप्नुवन्ति। परिलोकान् हिरण्यगर्भादिलोकानपि व्याप्नुवन्ति दिशश्च स्वर्गश्च परियन्ति व्याप्नुवन्ति। एवं सकलजगद्व्यापिनो वर्तन्ते। तथाहि ते सर्वज्ञा ऋतस्य कर्मणो विस्तीर्णं भोगतन्तुं विचृत्य छित्त्वा पुण्यपापविनिर्मुक्ताः सन्तः सर्वप्राणिषु तदेव महादेवाख्यं वस्तु अपश्यन् सर्वात्मतया तदभवत् तत्स्वभावाश्चाभवन्, यत्रेति सम्बन्धः, अतो मुक्तानां शिवैकरसानां व्यापकत्वमस्त्येव। एतेन महादेवसधर्माणो मुक्तस्वभावा जीवा देवशब्दवाच्याः, द्युप्रभृतिव्यापिनो देवव्रताख्ये सामनि श्रूयन्ते 'ये देवा दिविषद' इत्यादिना। पुराणेच 'ते हि साक्षाद्दिविषदस्त्वन्तरिक्षसदस्तथा पृथिवीषद इत्येते देवा देवव्रते स्थिताः' इति। इह पृथिवीति ब्रह्माण्ड-रूपम्, अन्तरिक्षमिति द्वितीयं मायापदम्, द्यौरिति तृतीयं परमाकाशपर्यायं शुद्धशक्तिरूपं शिवपदमुच्यते। अतो मुक्तानां विभुत्वमिति॥

सिद्धान्तस्तु —— क्रमिकतायामेकधा - त्रिधा-पञ्चधेत्यादिपक्षभेदोपन्यासाऽनुपपत्तेर्युगपदेव कदाचित्कदाचिदेकधादिनाऽनेकशरीरपरिग्रहो वाच्यः। सच धर्मज्ञानविकासेनोपपद्यते। अवश्यं हि संसारदशायामपि हस्त्यादिशरीरेषु परिभ्रमतो जीवस्य तत्तद्देहव्याप्त्यनुगुणसङ्कोचविकासशालित्वं धर्मज्ञानस्याऽभ्युपेयम्। तथाच मुक्तिदशायामनेकशरीरव्याप्त्यनुगुणो विकासो नाऽनुपपन्नः। सङ्कोचकापायेच सङ्कुचितस्य प्रजामण्डलस्य व्यापनं दृष्टम्। श्रुतिर्मुक्तौ तद्व्याप्तिं दर्शयति— परिद्यावापृथिवीत्यादिना। सा श्रुतिः पूर्वापरमन्त्रोदाहरणपूर्वकं भाष्ये स्पष्टं व्याख्याता। तत्र धामानि स्थानानि। भाष्ये तेजोरूपत्वेन स्थानविशेषणं वस्तुवृत्तमभिप्रेत्य स्थानवाचिनो धामशब्दस्य तेजोरूपवाचित्वायोगा त्तस्यावृत्तिमभिप्रेत्य वा व्याख्यातम्। तदपश्यत्तदभवदिति बहुत्वेकवचनं छान्दसतया नेयम्। द्वितीयम् मायापरमिति। अनेन परापरमायाकार्यं शुद्ध-मिश्रापदद्वयमपि ग्राह्यम्। अन्यथा परमशिवपदस्य तृतीयत्वाऽयोगात्॥

अथ प्रदीपवदावेशाऽधिकरणम् ६

## प्रदीपवदावेशस्तथा हि दर्शयति ॥ ४-४-१५ ॥

सूचितं हि पूर्वत्र मुक्तात्मनोऽपि स्वेच्छयाऽनन्तशरीरपरिग्रहणसामर्थ्येन विभुत्वम्। तदिह युज्यते नवेति विचार्यते। 'सर्वेषु लोकेषु कामचारो भवति' 'इमां लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिषु मुक्तस्य परिच्छिन्नतया सञ्चारगमनाद्यव्यापकत्वमुचितम्। अतो बहुशरीरपरिग्रहणं क्रमेणैव न युगपदिति पूर्वपक्षः। सिद्धान्तस्तु घटादिपरिच्छिन्नस्य प्रदीपस्य परिच्छेदापाये स्वप्रभया यथा गृहादिव्याप्तिः, तथा मुक्तस्य स्वशक्तितिरोधायकमलापाये स्वशक्त्या विश्वव्याप्तिः आवेशः भवति। तथाहि दर्शयति श्रुतिः 'स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त।' 'परिद्यावापृथिवी यन्ति सद्यः परिलोकान् परिदिशः परिसुवः ऋतस्य तन्तुम् विततम् विचृत्य तदपश्यत्तदभवत्प्रजासु' इति। तत्रहि प्रकरणं 'एषहि देवः' इति जगत्कर्तुः विश्वरूपस्य महादेवस्य, स महादेवो नः अस्माकं बन्धुः, जनिता पिता, स विधाता सकलश्रेयसां कर्ता, धामानि तेजोरूपाण्यप्राकृतानि भुवनानि विश्वान्यपि जानाति। अत्र बन्धुत्वादियोग्यस्य धामवेत्तृत्वस्यच प्रयोजनमुच्यते। यत्र यस्मिन् महादेवे अमृतं कैवल्यलक्ष्मीं आनशानाः प्राप्यानुभवन्तो देवाः तद्भावाद्देवनशिलाः तृतीये द्युसंज्ञके तत्पदे मायातीते धामानि तेजःप्रधानानि स्वाभिमतानि स्थानानि अभ्यैरयन्त स्वीकृतवन्तः।

---

अथ प्रदीपवदावेशाऽधिकरणम् ६

सूचितंहीति। पूर्वाधिकरणे "स एकधा भवती" त्यादिश्रुत्युदाहरणेन मुक्तस्य विभुत्वं सूचितम्। अणुत्वे पुनरनेकशरीरपरिग्रहाऽनुपपत्तिरित्यर्थः। अनेकशरीरपरिग्रहश्रावणादणुत्वश्रावणाच्च संशयः। सञ्चरणादिलिङ्गेन उत्क्रान्त्यागतीनामित्यणुत्वस्य प्रतिष्ठितत्वादनेकशरीरपरिग्रहः क्रमेणैवेत्यङ्गीकरणीयइति पूर्वपक्षः॥

अथ जगद्व्यापाराऽधिकरणम् ७

# जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ ४–४–१७ ॥

उक्तमीश्वरेण साम्यं मुक्तानां स्वप्रकाशत्वव्यापकत्वसर्वज्ञत्वादिभिः। तथा जगत्सृष्ट्यादावपि साम्यं दुर्वारम् 'परमम् साम्यमुपैती' ति निर्विशेषश्रवणात्। जगत्सृष्ट्यादिसाम्याभ्युगमेच बह्वीश्वरत्वादीश्वरस्याद्वितीयत्वभङ्गप्रसङ्गः, अतः कीदृशं साम्य मीश्वरेण मुक्तानां विवक्षितम्, जगत्सृष्ट्यादियुक्तं तद्वर्जं वेति संशयः। किंप्राप्तम्? 'स यदि पितृलोककामो भवती' त्यादिषु सङ्कल्पमात्रात्पितृलोकादिसृष्टिसामर्थ्यश्रवणात्, 'इमां ल्लोकान् कामान्नि कामरूप्यनु सञ्चरन्' इति सर्वत्रव्यापारश्रवणात् परमेश्वरसाम्ये सङ्कोचायोगाच्च मुक्तस्य जगत्सृष्ट्यादिव्यापृतिपर्यस्तिति प्राप्ते ब्रूमः।

अथ जगद्व्यापाराऽधिकरणम् ७

सङ्गतिपूर्वकं परमसाम्यश्रावणात्तत्सदृशतद्वितीयनिषेधश्रावणाच्च संशयम दर्शयति— उक्तमिति ॥ मलतिरोधानाऽपगमात्स्वप्रकाशनिरतिशयानन्दस्वरूपाविर्भावेन धीसङ्कोचाऽपगमात्तद्विकासाविर्भावेन सार्वज्ञ्यादेश्चाविर्भावेन च मुक्तस्य शिवसाम्यं प्राक्समर्थितम्। तद्वज्जगद्व्यापारेणाऽपि साऽम्यंप्राप्तमपाद्यत इति सङ्गतिः॥

तत्रैवं पूर्वपक्षः—

परमसाम्यश्रुतेमुक्तस्य जगत्स्रष्टृत्वादिकमङ्गीकरणीयम्। नच समनिषेधश्रुतिविरोधात्साम्यं केनचिदेवरूपेणेति सङ्कोचनीयमितिवाच्यम्। साम्यश्रुविरोधात्तन्निषेधश्रुतिरेव संसारिषु ब्रह्मसाम्यनिषेधविषयेति सङ्कोचोपपत्तेः। अधिकारवाक्यगतफलविरोधेन "कोहि तद्वेद यद्यमुष्मिन्लोक" इत्यादेरिव साम्यनिषेधश्रुतेरेव स्तावकत्वकल्पनौचित्याच्च। किञ्च मुक्तस्य सर्वेषु लोकेषु कामचारश्श्रूयते। न तस्य तत्तल्लोकगतफलभोगार्थत्वकल्पनं युक्तम्। ब्रह्मानन्दमनुभवतोऽपि विषयान्तरलिप्सया सञ्चाराभ्युपगमे तस्य निरतिशयत्वभङ्गापत्तेः। अतो मुक्तस्य नियमनादिलीलार्थएव लोकसञ्चारः। तस्मात्परमसाम्यसर्वलोकसञ्चारादिप्रतिपादनदर्शनान्मुक्तस्याऽपि परमेश्वरव ज्जगत्स्रष्टृतादिकमङ्गीकरणीयमिति ॥

## स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ४–४–१६ ॥

ननु ब्रह्मप्राप्तस्यान्तरबाह्यज्ञानलोपमाह श्रुतिः 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यम् किञ्चन वेद, नान्तरमि' ति । कथं तस्य शक्तिरूपज्ञानव्याप्तिरुच्यतइति नाशङ्कनीयम् । इदं जीवस्य वेदनाभाववचनं सुषुप्तिमरणयोरन्यतरापेक्षम् 'नाहम् खल्वयमेवं संप्रत्यात्मानम् जानातीत्ययमहमस्मीति नो एवेमानि भूतानि' इति सुषुप्तौ, 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति नप्रेत्यसंज्ञाऽस्ती' ति मरणेच श्रुत्या तथैवाविष्कृतं हि, तद्विलक्षण तया मुक्तेस्तत्र नाज्ञत्वादि, किन्तु मलतिरोधानापायात् सर्वज्ञत्वञ्च सर्वशक्तिकत्वञ्चेति न मुक्तौ ज्ञानादिनिषेधसम्भवः ॥

इति प्रदीपवदावेशाऽधिकरणम्

---

ज्ञानाऽभावश्रुतीनाम्मुक्तिदशाविषयत्वे तदानीं ज्ञानविकासोक्तिरनुपपन्नास्यादिति तासां यथाप्रकरणं सुषुप्तिविषयत्वं मरणविषयत्वंवेति प्रतिपादयितुमिदंसूत्रमिति शङ्कोत्तराभ्यां व्याचष्टे— नन्वित्यादिना । "वाङ्मनसि सम्पद्यत" इति प्रसिद्ध्यनुसारेण सम्पत्तिशब्दो मरणेप्रयुक्तः । यथा सुषुप्तिमरणयोः श्रुत्यन्तरेषु ज्ञानाऽभावप्रसिद्धिः, नैवं मुक्तावस्तीत्याह– तद्विलक्षणतयेति । नकेवलं मुक्तौ वेदनाऽभावप्रसिद्ध्यभावमात्रमपितु "सर्वंहि पश्यः पश्यति सर्वमाप्नोति सर्वशः" इत्यादिश्रुतिषु सर्वज्ञत्वादिप्रसिद्धिरप्यस्तीत्याह–किन्त्विति । यथा प्रदीपस्यैकदेशवर्तिनः स्वप्रभया अनेकदेशप्रवेशः, तद्वदात्मनोऽप्येकदेशस्थस्य स्वप्रभारूपेण ज्ञानेन सर्वदेहेषु यथासङ्कल्पमात्माभिमानाऽनुगुणाव्याप्तिस्सम्भवति । स्वीयज्ञानशक्त्या आवेशः विश्वव्याप्तिस्सम्भवति । तथाहि– "स नो बन्धु" रित्यादिश्रुतिरमुमर्थं दर्शयतीति सूत्राऽर्थः । "न बाह्यम वेद नान्तर"मिति जीवस्य ज्ञानाऽभाववचनं नमुक्तविषयम् । किन्तु-स्वाप्ययसम्पत्त्योस्सुषुप्तिमरणयोरन्यतराऽपेक्षमिति "नाहं खल्वय" मित्यादिश्रुत्या आविष्कृतम् स्पष्टीकृतमितिच सूत्राऽर्थः ॥

इति प्रदीपवदावेशाऽधिकरणम्

---

## विकारावर्ति च तथाहि स्थितिमाह ॥ ४–४–१९ ॥

तस्यानुभाव्यं सुखं विकारभावासंस्पृष्टं विशुद्धं परिपूर्णं ब्रह्मस्वरूपम् । तथाहि खल्वस्य स्थितिमाह श्रुतिः, 'रसो वै सः, रसँह्येवायमल्लब्ध्वाऽऽनन्दीभवती' ति । ब्रह्मस्वरूपं हि 'सत्यम् ज्ञानमनन्तम् ब्रह्म' 'आनन्दो ब्रह्म' इत्यादिष्वविकृतमेव श्रूयते । अतो नविकारि पशुसुखवन्मोक्षसुखम् । किमुक्तं भवति, सदाशिवादीनामधिकरिणां ब्रह्मान्तानाम् मण्डलेषु स्वेच्छया सञ्चरमाणः कामान्नी कामरूपी विगलितमनुष्यादिदेहाभिमानः असङ्कुचितशक्तित्रयव्यापारः परमानन्दप्रकाशविभूतिमयशक्तिशिवमामरस्यपरब्रह्मस्वरूपैकरसप्रपञ्चावगाहिनं परिपूर्णमहंभावं प्रकटमनुभवति । तथाहि 'अहमन्नमहमन्नमहमन्नम् अहमन्नादोऽहमन्नादोऽहमन्नादः' इत्यादिना भोज्यभोक्त्रादिसकलप्रपञ्चात्मभावपरिपूर्णाहंभावनाऽस्यावगम्यते । अत्राहङ्कारो नसांसारिकः, सकलप्रपञ्चावगाहित्वेन परिपूर्णत्वात् । किन्तु मुक्तस्वभावएव कल्पितात् देवोऽहं मनुष्योऽहमिति देवादिदेहमात्रावगाहितया परिच्छिन्नात्सांसारिकाहङ्कारादयंविलक्षणएव । अतोऽत्र नप्राकृताहङ्कारसम्बन्धः ॥

---

विकारेषु जन्मवृद्ध्यादिषु नवर्ततइति विकारावर्ति । परिपूर्णम् ब्रह्मसुखम् चकारएवकारार्थः । तदेवानुभवतिमुक्तइतिशेषः । अविकृतमेवेति । ब्रह्मानन्तशब्दयोरपरिच्छिन्नवाचित्वादितिभावः । ननु तत्तल्लोकगतभोगलिप्सया परिभ्रमति । परिपूर्णं ब्रह्मसुखमेवाऽनुभवतीतिच परस्परविरुद्धम । नच मुक्तौ सनिमूतिकब्रह्मानुभवस्य पुरुषार्थताऽभ्युपगमो ब्रह्मसुखरूपतयैव मुक्तस्य तत्तल्लोकगतकामभोगाऽनुभवोनसंसारिवल्लौकिकसुखरूपतयेतिवाच्यम् । अहमन्नमहमन्नाद' इत्यादिमुक्तगीते भोग्यवर्गस्यात्मीयत्वादौपचारिकेणात्मत्वेन तद्भोक्तृत्वेनचाऽनुभूयमानस्याऽनुवाददर्शनेन प्रपञ्चस्य ब्रह्माकारतयाऽनुभवाऽसिद्धेरित्याशङ्क्य परिहरति—विमुक्तंभवतीति । अयमाशयः । भोग्यभोक्तृरूपं प्रपञ्चं ब्रह्माकारतया पश्यन्नपि मुक्तस्स्वयमपि विगलितमनुष्यादिदेहाभिऽभिमानतया पराहंभावमुपगतइति स्वविशेषणतयाऽप्यनुभवति । अतएव "तदपश्यत्तदभवत्प्रजास्विति" मन्त्रे सर्वत्र शिवात्मकं वस्त्वपश्यत्स्वयमपि सर्वात्मतया तत्सदृशोऽभवदिति । ब्रह्मविभूतितयाऽनुभूयमानस्यैवप्रपञ्चस्य स्वविशेषणतयाऽप्यनुभव उक्तः । एवञ्च

मुक्तस्य परमेश्वरसाम्येऽपि जगत्सृष्ट्यादिव्यापारवर्जमेव स्वातन्त्र्यमस्य-भोगवस्तुषु, 'यतो वा इमानि भूतानि जायन्ते' 'द्यावा पृथिवी जनयन् देव एक' इत्यादिषु श्रुतं जगत्सृष्ट्यादिकं परमेश्वरस्य प्रकरणादवगम्यते। सृष्ट्यादिप्रकरणेष्वसन्निहित एव जीवः, अतो न मुक्तस्य जगत्सृष्ट्यादिकमस्ति ॥

## प्रत्यक्षोपदेशादितिचेन्नाधिकारिकमण्डलस्थोक्तेः

॥ ४–४–१८ ॥

'इमां ल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्' इत्यादिषु मुक्ते जगद्व्यापारस्य प्रत्यक्षोपदेशात्, अस्य तत्सम्बन्धोऽस्तीतिचेन्न। 'कामन्नी' इति कामभोगसम्बन्धादधिकारिणां ब्रह्मादीनां मण्डलेषु स्थितभोगानुषङ्ग एवोच्यते। अतोऽस्य नजगद्व्यापारः। तथासति तस्य भोगनुषङ्गाद्विकारित्वमित्यत आह ॥

सिद्धान्तस्तु — मुक्तानाम ब्रह्मणा साम्यश्रवणेऽपि जगत्सृष्ट्यादिव्यापारवर्जमेव साम्य मास्थेयम्। अन्यथा जगत्कारणत्वस्य ब्रह्मलक्षणत्वोक्त्या जगत्स्रष्टृकत्वश्रुत्याच विरोधापत्तेः। तस्माद्यथाप्रकरणं परमेश्वरासाधारणएव जगद्व्यापारः नत्वसन्निहितमुक्तसाधारणइति ॥

अथ लोकसञ्चारलिङ्गाऽवलम्बनां शङ्कामुद्भाव्य निराकरोति ॥

नियमनार्थों नभाति लोकसञ्चारः। किन्तु तत्तल्लोकगतभोगप्राप्त्यर्थइति कामान्नी, कामरूपविशेषणाभ्यामवमीयतइति भावः ॥

एवं जन्मवृद्ध्यादिविकारवत् क्षुद्रभोगलिप्सया मुक्तस्य लोकपरिभ्रमणाङ्गीकारे तस्य निरतिशयब्रह्मानन्दानुभवनितान्ततृप्तत्वं नस्यात्। अमुक्तसाम्यमेव स्यादितिशङ्कामुद्भाव्य तन्निराकरणार्थत्वेनोत्तरसूत्रमवतारयति — तथासतीति ॥

विकारित्वमिति। भुज्यमाणभोगस्येतिशेषः। यद्वा मुक्तस्यैव सुखाभिलापरूपविकारवत्त्वं स्यादित्यर्थः ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ ४–४–२० ॥

एवमुक्तमर्थं प्रत्यक्षानुमाने श्रुतिस्मृती दर्शयतः ' तस्माद्वा एतस्मा दात्मन आकाशः सम्भूतः ।' इत्यादिका श्रुतिः ' ' आपएव ससर्जादौ ' वित्यादिका स्मृतिश्च । अतो ब्रह्मणएव जगत्कारणत्वादिकमिति । तथासति ' यदापश्यः पश्यते रुक्मवर्णम् कर्तारमीशम् पुरुषम् ब्रह्मयोनिम् तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमम्साम्यमुपैति ' 'मुक्तः शिवसमो भवेत् ' इत्यादिषु मुक्तस्यच ब्रह्मणा शिवेन परमसादृश्यप्रतिपादनात् तस्य जगत्सृष्ट्यादिकं यद्यदस्ति तत्सर्वमसङ्कुचितमस्याऽपि स्यात् – अन्यथा परमसादृश्यहानिरित्यत आह —

## भोगमात्रसाम्यलिङ्गाच्च ॥ ४–४–२१ ॥

मुक्तस्य ब्रह्मणासाम्यं सकलकामभोगमात्रादेव नजगत्सृष्ट्यादिना । तथासति बह्वीश्वरत्वप्रसङ्गात् , तथाहि श्रूयते ' सर्वान् कामान् सहब्रह्मणा विपश्चिता ' इति विविधं पश्यन्त्या चिताज्ञानशक्त्या युक्तंहि ब्रह्म विपश्चि-

तस्माद्वेति । नैवं कात्स्न्र्यश्रुतिः स्मृतिर्वा मुक्तस्य जगद्व्यापारं प्रतिपादयन्ती दृश्यत इत्याशयः । उत्तरसूत्रव्यावर्त्याशङ्कामाह– तथासतीति । यद्यपि मुक्तस्य साक्षाज्जगद्व्यापारं प्रतिपादयन्ती श्रुतिः स्मृतिर्वा नास्ति , तथाऽपि तस्य ब्रह्मसाम्य प्रतिपादयन्ती श्रुति स्स्मृतिश्चास्तीति ततएव तस्य जगद्व्यापारस्सिद्ध्येत् । इत्याशङ्कानिराकरणाऽर्थम् सूत्रम् ॥

मुक्तस्य ब्रह्मणासाम्यं यद्यनन्याधीनत्वादिनाऽपि तदा परमेश्वराऽनधीनया स्वेच्छयैव जगत्सृष्ट्यादिषु प्रवर्तमानानां मुक्ताना मैकमत्यनियमाऽभावा त्कस्यचित्सिसृक्षाया मन्यस्य सञ्जिहीर्षापि कदाचिद्भवेदिति किमपिकार्यं ननिर्वर्त्येत ॥

अथाऽनन्याधीनत्वं सर्वशेषित्वं सैश्वर्यं सर्वप्रपञ्चस्रष्टृत्वं तदुपादानत्वमित्यादिगुणेभ्यो व्यावर्त्य परमसाम्यं तदितरगुणेषु सङ्कोच्येत । तदा जगद्व्यापारसाम्यादपि व्यावर्त्य " सोऽश्नुते सर्वान्कामान् सहब्रह्मणे " ति श्रुतिसिद्धसविभूतिकब्रह्मानुभवरूपे भोगे तत्सङ्कोचयितुं युक्तम् ।

यद्वा— अहमिति शक्तिशिवाद्वयं ब्रह्मोच्यते । तदेवान्नादिकं प्रपञ्च-जालमितिभावना । तथाऽऽप्तवचनम् ‘ अनुत्तरविसर्गान्ता शिवशक्त्यद्वयात्मनः, परामर्शो निर्गुणत्वादहमित्युच्यते विभोः । हृद्यकारो द्वादशान्तेऽहङ्कारस्तदिदं विदुः, अहमात्मकमद्वैतं यत्प्रकाशात्मविश्रमः । ’ इति अत्रानुत्तरब्रह्मानन्दपदानुप्रविष्टस्य मुक्तस्य सकलप्रपञ्चाकारशिवाभिधायकप्रासादाक्षरानुसन्धानपूर्वकं गानं कर्तव्यतया नविधीयते । किन्त्वानन्दास्वादपरमोल्लासद्योतनाय स्तुतिरिति, अतो मुक्तानां ब्रह्मानन्दानुभवव्यापारमन्तरेण सृष्ट्यादिव्यापारः स्वेच्छया नसम्भवति ॥

---

स्वविशेषणतया कामभोगमनुभवन्नपि ब्रह्माकारमेव सुखमनुभवतीति नानुपपन्नमिति । शक्तयः-इच्छाज्ञानक्रियाख्याः ॥

परमानन्देति । परमानन्दात्मको यस्तत्प्रकाशस्तद्भूमिमयं तत्प्राचुर्यात्मकं यच्छिवशक्त्योस्सामरस्यं मेळनं तदात्मकं यत्परब्रह्म तद्रूपैकरसः । तद्विशेषणतैकस्वभावः यः प्रपञ्चस्तद्वगाहितं स्वविशेषणत्वेनाऽव्यवगाहमानमित्यर्थः । अन्नशब्देन भोग्यवर्ग उच्यते । अन्नादशब्देन भोक्तृवर्गः । तदुभयग्रहणं भोगस्यानादेरप्युपलक्षणमित्यभिप्रेत्य व्याचष्टे—भोज्यभोक्त्रादीति । एवञ्च प्राकृताहङ्कारबन्धरूपोऽयमहंभावः कथं मुक्तानामित्यपि नशङ्कनीयामित्याह—अतइति । एवमहमन्नमहमन्नाद इत्यत्राऽहंशब्दस्यात्मपरत्वमङ्गीकृत्य तथाऽपि प्रपञ्चस्य ब्रह्माकारताऽनुभवोऽप्यस्तीत्युपपादितम् । अथ तस्य शिवशक्तिसामरस्यरूपपरब्रह्मपरत्वान्नविरोधशङ्काऽवकाशइति पक्षान्तरमाह-यद्वेति । अनुत्तरस्सर्वादिरकारः । विसर्गान्तोऽहङ्कारइत्याहुः । शिवशक्त्योरद्वयमपृथग्भावः । तस्य योनिगुणत्वात्सत्वरजस्तमोगुणाभावमपेक्ष्य तुरीयात्मना परामर्शः तत्राऽहमितिप्रयुज्यत इत्यर्थः । अहमिति द्वन्द्वकाद्वयः । हृदीति हृदयपुण्डरीके अकारः । हृदयादिद्वादशान्तस्थानावसाने ब्रह्मरन्ध्रस्योपरि हकारइति तयोर्नादस्थाने इमे । यत्प्रकाशात्मविश्रम इति । प्रकाशात्मनः शिवशक्तिमेळनस्य वाचकतया विश्रान्तिस्थानं यदहंपदमित्यर्थः ॥

ननु-किंमुक्तस्याप्येतत्सामगायन्नास्तइति सामगानं विधीयते, उत निरतिशयानन्दास्वादप्रयुक्तंगानमनूद्यत इत्याशङ्क्याह- अत्राऽनुत्तरेति । अनुत्तरं सर्वोत्तरम् । ब्रह्मणश्शिवस्यानन्दरूपम् यत्पदं दिव्यस्थानम् । तदनुप्रविष्टस्येति विधिवश्यत्वाऽभावे हेतुगर्भं विशेषणम् । सकलेति । सकलप्रपञ्चाकारशक्तिविशिष्टतया तदाकारस्य शिवस्याऽभिधायकं वैदिकप्रासादाक्षरमहमितिपदं तदनुसन्धानपूर्वकमित्यर्थः । स्तुतिरिति । आनन्दोद्रेकादित्यंगायन्नास्तइति तदानन्दातिशयस्तुतिरित्यर्थः ॥

अथ अनावृत्त्यधिकरणम् ८

## अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ ४–४–२२ ॥

उक्तं ब्रह्मणा सादृश्यं सायुज्यं मुक्तानाम् , भोगादिसाधर्म्यात् इह तेषां पुनरपि कदाचित् संसारापत्तिरस्तिनवेति संशयः । कर्मविशेषेणेन्द्रादिपदारूढानामावृत्तिदर्शनं संशयकारणम् । किंतावत् प्राप्तम् ? ' कामान्नी कामरूप्यनुसञ्चरन् ' इत्यादिषु बहुशरीरसम्बन्धोऽवगम्यते मुक्तानाम् , तत्सम्बन्धेसति पुनरपि पुण्यपापकर्तृत्वं सम्भाव्यते , पूर्वकृतस्योपासनातिशयस्य बहुधा भोगेन क्षये तात्कालिककर्मवशात् पुनरपि हीनसुखसंसारप्राप्तिः , तथाहि इन्द्रपदाद्यारूढानां पुण्यातिशयक्षये पुनरावृत्तिः , ब्राह्मणादिशरीरप्राप्तिश्च । अतश्च ब्रह्मपदं प्राप्तानां भोग्यद्रष्टृत्वादिसम्बन्धेन भोगस्य पुण्यातिशयक्षयहेतुत्वेन पुनरावृत्तिः संसार इतिप्राप्ते ब्रूमः । साक्षात्कृतब्रह्मज्योतिषां तत्पदानुप्रविष्टानां मुक्तानां नपुनरावृत्तिः संसारे , कुतः ? ' सखल्वेवम् वर्तयन् यावदायुषम् ब्रह्मलोकमभिसम्पद्यते नच-

---

अथ अनावृत्त्यधिकरणम् ८

सङ्गतिन्दर्शयति– उक्तमिति । यदि ब्रह्मसादृश्यं मुक्तानां भोगादिमात्रेण नसर्वात्मना जगद्व्यापाराभावेन तु संसारितुल्यतैव । तर्हि स्वर्गादिप्राप्तसंसारिवदेव पुनरावृत्तिरस्त्विति प्रत्यवस्थानात्सङ्गतिः । सायुज्यमिति । सहयुङ्क्तइतिसयुङ् —सयुजोर्भावस्सायुज्यम् । सहब्रह्मणेति-श्रुत्या विवक्षितं साहित्यमित्यर्थः ॥

नन्वनावृत्तिश्रुतौ जाग्रत्यां कथमित्यं संशय इत्याशङ्क्य पूर्वपक्षकोटेर्बीजमाह — कर्मविशेषेणेति । अत्र पूर्वःपक्षः । पुण्यस्य तावद्बहुकालभोगेन क्षयो दृष्टः । उपासनाऽपि पुण्यविशेषः । अलौकिकश्रेयस्साधनत्वादनुष्ठेयत्वाच्च । अतो बहुकालभोगेन विद्यार्जितपुण्यक्षयेसति तात्कालिककर्मतस्संसारहेतुभूतपुण्यपापे भवतएव । " एवम्विदि पापम्कर्म नश्लिष्यत " इति विद्यासामर्थ्यात्खलुपुण्यपापाऽश्लेष उक्तः । तस्मिन्भोगेन क्षीणे कुतस्तदश्लेषो भवेत् । अत स्तात्कालिकपुण्यपापवशान्मुक्तानामपि स्वर्गिणामिव पुनरावृत्तिरनिवार्या । इयांस्तु विशेषः ।

दित्युच्यते । यथा स्वाभाविक्या हृदयभूतया परमसत्तास्फुरद्रूपया देशकाल-विशेषशून्यस्य ब्रह्मणः शिवस्य सर्वज्ञत्वं सर्वकारणत्वं सर्वात्मत्वं सर्व-शक्तिमत्त्व मलुप्तशक्तित्वं स्वतन्त्रत्वं नित्यतृप्तत्वं निरतिशयैश्वर्यत्वं सर्वानु-ग्राहकत्वं सर्वमुक्तभोग्यरमरूपत्वञ्च सम्भवति ; तादृश्यायुक्तं परम्ब्रह्माऽपि विपश्चित् तेनसह समरसात्मा मुक्तोऽपि सर्वान् कामान् अन्तःकरणेन स्वाभाविकेन मनसा ज्ञानविशेषेण समश्नुते पश्यन् रमते । तथाहि ' मनसै-वैतान् कामान् पश्यन् रमते ' ' मनोऽस्य दैवंचक्षु ' रितिश्रूयते। ' सत्यात्म प्राणारामम् मनआनन्दम् ' इति ब्रह्मणोऽपि मनस्यानन्दभोगः,नबाह्यकरणा-पेक्षा ब्रह्मणो मुक्तस्य च शरीरेन्द्रियादिग्रहण मैच्छिकं विहारार्थमित्यदोषः । अतो यथा ब्रह्म सकलान् कामान् भुङ्क्ते, तथा मुक्तोऽपीति भोगमात्रसाम्यं मुक्तस्य ब्रह्मणेति समीचीनं, लोके कतिपयधर्मसम्बन्धादपि सिंहो देवदत्त इत्यादिषु सादृश्यव्यवहारदर्शना न्नतत्सादृश्यवचनहानिः ॥

इति जगद्व्यापाराऽधिकरणम्

---

एवं कलुसमङ्कोचायामेव साम्यश्रुतौ सङ्कोचकल्पनं श्रुत्यन्तरसिद्धब्रह्मानन्दभोगाद्यतिरिक्तैस्सर्वैरपिगुणै स्साम्यनिषेधविषयतया "न तत्समश्चे" त्यादिश्रुतेराञ्जस्यं लभ्यते । इत्यभिप्रायेण सूत्रं व्याचष्टे– ब्रह्मणासहेति । लोकेकतिपयेति । नच कतिपयधर्मसम्बन्धमात्रेण परमसाम्यव्यवहारो नसम्भवतीति शङ्कनीयम्। परिमाणरूपैकधर्मसाम्येनाऽपि तुलाधृतयो स्सुवर्णशिलाशकलयो रत्यन्तसाम्यव्यवहार-दर्शनादित्यभिप्रायः। अनेनैवाऽभिप्रायेण सूत्रे मात्राशब्दः । साहि साकल्यार्थो नत्ववधारणार्थः । यथा ब्रह्म सकलान् कामान् भुङ्क्ते तथा मुक्तोपीति भाष्यदर्शनात् । भोगमात्रएव साम्यं नान्यत्रेतिश्रुतेरदर्शना त्सत्यसङ्कल्पत्वादिनाऽपि साम्यस्याऽभिमतत्वाच्च । सच साकल्यार्थस्सर्व विभूतिविशिष्टब्रह्मानुभवरूपब्रह्मभोगसाम्यविषयतया परमसाम्यश्रुत्युपपादनार्थइति ॥

एतेन शुद्धाद्वैतभाष्यकारैर्यत् इतश्च ननिरङ्कुशम् विकारालम्बनानामैश्वर्यं यस्माद्भोग-मात्रमेवैषामनादिसिद्धेनेश्वरेणेत्यवधारणार्थकत्वग्रहणेन सगुणमुक्तानां न्यूनत्वमावेदितं तन्निराकृतम् तदीयं दोषोद्धरं भविष्यत्युत्तराधिकरण इत्यास्तान् ॥

इति जगद्व्यापाराऽधिकरणम्

